# ॥ सम्पादकोक्तिः ॥

---

अथेह खलु पञ्चमषष्ठपञ्चिकाद्वयात्मके ऽस्मत्कल्पिते ऐतरेय-तृतीयभागे आदितश्चतुरध्याय्यां द्वादशाहविधिः समाम्नातः; ततोऽध्यायेनैकेन अग्निहोत्रविधिर्बोधितः, प्रसङ्गसङ्गत्यान्ततो ऽत्रैव व्याहृतिब्रह्मत्वविवेकश्चोपदिष्टः; ततः पञ्चभिरध्यायैः प्रधानतो होतृहोत्रकगोचरं शस्त्रादिकं वर्णितम्।

तदेतस्यैतरेयकस्यादितः पञ्चविंशत्यध्यायाः एकाहाहीनसत्र-लक्षणसर्वविधयागविषया इति पञ्चपञ्चिकात्मक आद्यो यागकाण्डः, तत एषा पञ्चाध्यायी षष्ठपञ्चिका तु शस्त्रकाण्ड इति सुवचम्।

इह हि शस्त्रकाण्डे शिल्पविधिप्रकरणे ( ३३८–३७६ पृ० ) वालखिल्याना मसकृच्छ्रुतेः, ततः ( ३८५–४०१ पृ० ) कुन्ता-पादीनां शंसनविधेश्चावगम्यत एवैषां मन्त्राणा मपि ऋक्संहि-तान्तर्गतत्वम्, किञ्चास्मद्दृष्टे ऋक्परिशिष्टे समुपलब्धपाठाना मपि देवनीयपदाना मेतद्ब्राह्मणे प्रपञ्च्य विधानात् ( ४०७ पृ० ) शाखा-न्तरीयत्व मेवेति। अथ पञ्चैकपदाविधावपि ( ३२८ पृ० ) एव मेवास्ति किञ्चिच्चिन्तनीय मिति शम्॥

कलिकाता। }<br>संवत् १९५३। }

सामश्रमी श्रीसत्यव्रतशर्म्मा।<br>( सम्पादकः )

## ॥ अथ सङ्केताक्षरसूची ॥

| | |
|---|---|
| अनु० सू० … अनुपदसूत्रम् । | जु० … जुहोत्यादिः । |
| आप० श्रौ० आपस्तम्बश्रौतम् । | ना० वृ० नारायणकृता वृत्तिः । |
| आर० आ० आरण्यार्चिकः । | प० अ०ख०पञ्चिकायाः अ०ख० । |
| ऋ० अनु० ऋग्वेदानुक्रमणी । | पञ्च० सू० … पञ्चविधसूत्रम् । |
| ऋ० प० … ऋक्परिशिष्टः । | महा० आ० महानाम्न्यार्चिकः । |
| गौ०ध०सू० गौतमधर्मसूत्रम् । | साङ्ख्या०ब्रा०साङ्ख्यायनब्राह्मणम् । |

---

## ॥ अथ परिच्छेदसूची ॥

॥ अथ पञ्चमपञ्चिका ॥



* प्रथमद्वितीयाहयोः प्रस्तादिनिरूपणं चाथाहतं पूर्वाध्याये।

---

॥ अथ षष्ठपञ्चिका ॥

---

## ॥ अथ याज्ञिकशब्दसूची ॥

# ॥ अथेहालोच्यस्थानसूची ॥



## ॥ शुद्धिपत्रम् ॥



| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| आहननं | आहनस्यं | ४१६ | १८ |
| उतेमाद्य | उते माद्य | ४०७ | १० |
| तदेषाभियज्ञगाथा | तदेषाभि यज्ञगाथा | १८३ | ३, ९ |
| " | " | १८६ | ८ |
| " | " | १९२ | १४ |
| नेतपन्न विचे० | नेत पन्नविचे० | ४०७ | ५, ६ |
| यते | उप ते | १५४ | १७ |
| " | " | १६० | ११ |
| पत्ता | पत्त्वा | ४०७ | १० |
| वक्षरासिवणी | वक्षराविणी | ५७ | १२ |
| भिम्भिरं | भिभिरं | २९९ | ६ |
| सूक्तानुवन | सूक्तानुवचन | २५९ | ९ |

अथेह्यापराण्यप्येव मकिञ्चित्कराण्यशुद्धानि पदानि स्युः, तानि त्वादर्श मनपेक्ष्यैव मतिमद्भिरनायासशोध्यानीति शम् ॥



अथ

# ॥ ऐतरेयब्राह्मणम् ॥

## ॥ अथ पञ्चमपञ्चिका ॥

( २१ )

॥ प्रथमाध्यायस्य प्रथमः खण्डः ॥



॥ ॐ ॥ विश्वे वै देवा देवतास्तृतीय महर्वहन्ति सप्तदश स्तोमो वैरूपं साम जगती छन्दो यथादेवत मेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद यद्वै समानोदर्कं* तत्तृतीयस्याह्नो रूपं यदश्ववद्यदन्तवद्यत्पुनरावृत्तं यत्पुनर्निनृत्तं यद्रत-वद्यत्पर्यस्तवद्यत्त्रिवद्यदन्तरूपं यदुत्तमे पदे देवता निरुच्यते यदसौ लोकोऽभ्युदितो यद्द्विरूपं यच्चागतं यत् कृत मेतानि वै तृतीयस्याह्नो रूपाणि युक्ष्वा हि देवहूतमाँ अश्वाँ अग्ने † रथीरिवेति तृतीयस्याह्न आज्यं भवति देवा वै तृतीयेनाह्ना स्वर्गं लोक मायं-स्तानसुरा रक्षांस्यन्ववारयन्त ते विरूपा भवत विरूपा

* 'समानोदर्कं' ख, ङ।

† 'तमो३ अश्वा अग्ने' क, 'तमो अश्वा३ अग्ने' ख, 'तमाँऽ अश्वाँ अग्ने' ग, 'तमाँ३ अश्वाँ३ अग्ने' घ, 'तमा अश्वाँऽ अग्ने' ङ। 'तमा४ अश्वा४' ठ।

भवतेति भवन्त आयंस्ते यद्विरूपा भवत विरूपा भवतेति भवन्त आयंस्तद्वैरूपं सामाभवत्तद्वैरूपस्य वैरूपत्वं विरूपः पाप्मना भूत्वा पाप्मान मप हते य एवं वेद तान् ह स्माश्वेनागच्छन्ति स मेव सृज्यन्ते तानश्वा भूत्वा मश्विरपाघ्नत यदश्वा भूत्वा मश्विरपाघ्नत तदश्वाना मश्वत्वं मश्नुते यद्यत्कामयते य एवं वेद तस्मादश्वः पशूनां जविष्ठस्तस्मादश्वः प्रत्यङ् पदा हिनस्त्यप पाप्मानं हते य एवं वेद तस्मादेतदश्ववदाज्यं भवति तृतीये ऽहनि तृतीयस्याह्नो रूपं वायवायाहि वीतये वायो याहि शिवा दिवं इन्द्रश्च वायवेषां सुतानां मा मित्रे वरुणे वय मश्विना-वेह गच्छत मा याह्यद्रिभिः सुतं सजूर्विश्वेभिर्देवेभि-रुत नः प्रिया प्रियास्विश्वोष्णिहं प्रउगं समानोदर्कं * तृतीये ऽहनि तृतीयस्याह्नो रूपं तं म मिद्राधसे महे त्वय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ निन्दवत् त्रिवत्तृतीये ऽहनि तृतीयस्याह्नो रूप मिन्द्र नेदीय एदिहीत्यच्युतः प्रगाथः प्र नूनं ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यो निन्दवांस्तृतीये ऽहनि तृतीयस्याह्नो रूपं

* समानोदर्के ख, ग।

अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्या अच्युता न किः सुदासो रथं पर्यास न रीरम-दिति मरुत्वतीयः प्रगाथः पर्यस्तवांस्तृतीये ऽहनि तृतीयस्याह्नो रूपं त्र्यर्यमा मनुषो देवतातेति सूक्तं त्रिवत्तृतीये ऽहनि तृतीयस्याह्नो रूपं यद्द्याव इन्द्र ते शतं यदिन्द्र यावतस्त्वमिति वैरूपं पृष्ठं भवति राथन्तरे ऽहनि तृतीये ऽहनि तृतीयस्याह्नो रूपं यद्वा-वानेति धाय्याच्युताभि त्वा शूर नोनुम इति रथ-न्तरस्य योनिमनु निवर्तयति राथन्तरं ह्येतदह-रायतनेनैन्द्र त्रिधातु शरणमिति सामप्रगाथ-स्त्रिवांस्तृतीये ऽहनि तृतीयस्याह्नो रूपं त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यो ऽच्युतः ॥ १ ॥

॥ श्रीगणेशाय नमः ॥

भिन्नान्यहर्देवतास्तोमसामच्छन्दांस्यहस्त्यस्य तस्यापि पञ्चाम् ।
विहृतावयवादुत्तरं स्यात् समाने स्यात्स्वाम्नोकान्वि विकोणेष्वहस्सु ॥
सिद्धानि शस्त्राणि यथैव शैलाप्याख्येन सूक्तप्रभवे तृचाय ।
मरुत्वतीये प्रतिपत्-तृचौ च धाय्याः प्रगाथाश्च तथैव सूक्तम् ॥
निष्केवल्ये स्तोत्रियः पृष्ठयोनिर्योनिस्थाने स्व-स्व-सामप्रगाथः ।
तार्क्ष्यात् सूक्तात् पूर्वं मन्ये तु नित्ये स्यात् स्यात् सूक्तात्सातवे दस्य मन्यत् ॥
छन्दोगानां वैश्वदेवात् पुरस्तादायाह्लोमाहभुसूक्तानि चैव ॥
राथन्तर मयुग्मं स्याद् बृहत्सामेतरद्भवेत् ।
वैरूपादि द्वितीयं स्यात् तृतीयादिष्वनुक्रमात् ॥

अथेन्द्रपूर्वौ निहवः प्रगाथो धाय्याथ तार्क्ष्यं च समान मङ्गाम् ।
स्यात् स्यात् तथा जातवेदस्य मग्रं छन्दोम आदास्त्राहकस्तृतीयः ॥

अथ द्वादशाहान्तर्गतस्य नवरात्रस्य तृतीय महर्निरूपयति— "विश्वे वै देवा देवतास्तृतीय महर्वहन्ति, सप्तदश स्तोमो वैरूपं साम जगतीच्छन्दः"–इति । देवतासु मध्ये विश्वे देवाः, स्तोमानां मध्ये सप्तदशः, साम्नां मध्ये वैरूपं, छन्दसां मध्ये जगती, तान्येतानि तृतीयस्याह्नो निर्वाहकाणि । यद्यपि पृष्ठे षडहे प्रथमतृतीयपञ्चमान्यहानि राथन्तराणि, द्वितीयचतुर्थषष्ठान्यहानि बार्हतानि; तथापि रथन्तर-बृहत्सामसम्बन्धः साधारणो वैरूपादिसामसम्बन्धो विशेषस्तृतीयेऽहनि; सत्यपि हि रथन्तरपृष्ठे वैरूपं साम द्वितीयत्वेन प्रयुज्यते, अतो वैरूपस्यैतस्मिन्नहनि असाधारणत्वान्निर्वाहकत्व मुच्यते ॥ वेदनं प्रशंसति—"यथादेवत मेनेन यथास्तोमं यथासाम यथाच्छन्दसं राध्नोति य एवं वेद"–इति । उक्तदेवतादीनां वेदिता एतान्यतिक्रम्य तत्प्रसादेन समृद्धो भवति ॥

एतस्याह्नः सम्बन्धिषु मन्त्रेषु पूर्ववल्लिङ्गानि निरूपयति— "यद्वै समानोदर्कं तत् तृतीयस्याह्नो रूपं, यदश्ववदन्तवत् पुनरावृत्तं यत् पुनर्निनृत्तं यद्रतवद्यत् पर्यस्तवद्यत् 'त्रिवदन्त' रूपं, यदुत्तमे पदे देवता निरुच्यते, यदसौ लोकोऽभ्युदितो यद्‌'रूपं यज्जागतं यत् क्षत मेतानि वै तृतीयस्याह्नो रूपाणि"–इति । उदर्कः समाप्तिः, समान उदर्कः तुल्या समाप्तिर्यस्य मन्त्रभागस्य तत् 'समानोदर्कम्'; तादृशं यदेवास्ति, तत् तृतीयस्याह्नो 'रूपं' निरूपकम्, लिङ्ग मित्यर्थः । अश्वशब्दोपेतम् 'अश्ववत्'; अन्तशब्दोपेतम् 'अन्तवत्'; पठितस्यैव पुनः पाठः 'पुन-

रावृत्तम्'; पुनरपि नितरां 'वृत्तं' नर्त्तनं 'पुनर्निवृत्तं', स्वरविशेषेणाक्षराणां पुनःपुनरावर्त्तनेन वा नर्त्तनसादृश्यम्। पुनरावृत्तं पठितस्यैव पादस्यावृत्तिः, अत्र तु स्वराक्षरमात्रस्येति विशेषः। 'रत्नवत्'–इति धात्वर्थमात्र मत्र विवक्ष्यते। 'पर्यस्तवत्'–इति पर्य्यासशब्दवत्। 'विवत्'–इति विशब्दोपेतम्। 'अन्तरूपम्'–इति अन्तशब्दोपेतम्; पूर्वं मुक्तस्यैवाय मनुवादः; अथवा पुनर्वचनं प्राधान्यप्रतिपादनार्थं तदीयार्थपरिग्रहार्थं वा। उत्तमे पादे देवताया अभिधानं, स्वर्गलोकस्य कथनं, वैरूपसामसम्बन्धित्वं, जगतीच्छन्दस्सम्बन्धित्वं, भूतार्थप्रत्ययोपेतः करोतिधातुर्धातुमात्रं वा, एतानि सर्वाणि तृतीयस्याह्नो रूपाणि ॥

इदानीं साध्यशस्त्रं विधत्ते—"युक्ष्वा हि देवहूतमाँ अश्वाँ अग्ने रथीरिवेति ( सं० ८.७५. ) तृतीयस्याह्न आज्यं भवति"–इति ॥

तदेतच्छस्त्रं प्रशंसितु माख्यायिका माह—"देवा वै तृतीयेनाह्ना स्वर्गं लोक मायंस्तानसुरा रक्षांस्यन्ववारयन्त; ते विरूपा भवत विरूपा भवतेति भवन्त आयंस्ते यद्विरूपा भवत विरूपा भवतेति भवन्त आयंस्तद्वैरूपं सामाभवत्तद्वैरूपस्य वैरूपत्वम्"–इति। यदा देवाः तृतीय महरनुष्ठाय तेन स्वर्गं लोकं गताः, तदानीमसुरा रक्षांसि च 'तान्' देवान् 'अनु'गम्य स्वर्गप्रवेशो यथा न भवति तथा 'अवारयन्त' निवारितवन्तः। ततः 'ते' देवास्तानसुरान् प्रति 'विरूपाः' विरुद्धरूपोपेता भवतेति शपित्वा 'भवन्तः' स्वेन रूपेणैवाविर्भवन्तः 'आयन्' स्वर्गं प्रत्यागच्छन्। विरूपा भवतेति वीप्सा सर्वदेवोक्तिद्योतनार्था, असुराणापि(?)त्यन्त मादरार्था वा। 'ते' देवाः यस्मात् कारणादसुरान् प्रति विरूपत्वं शापं दत्तवन्तः, तस्मादसुराणां 'तद्' विरुद्धं रूपं वैरूपाख्यं सामाभवत्,—

विरूपोक्तिसम्बन्धादेव तस्य वैरूप्यं नाम सम्पन्नम् ॥ उक्तार्थवेदनं प्रशंसति—"विरूपः पाप्मना भूत्वा पाप्मानमप हते य एवं वेद"—इति। वेदिता पूर्वं केन चित्पाप्मना विरुद्धरूपयुक्तो भूत्वापि यथावेदनसामर्थ्यात्तं पाप्मानम् 'अप हते' विनाशयति ॥

प्रासङ्गिकं वैरूप्यशब्दनिर्वचनं कृत्वा प्रकृतमेवोपाख्यानशेषमाह—"तान् ह्यन्वेवागच्छन्ति, स मेव सन्यसे; तानश्वा भूत्वा पद्भिरपाघ्नत; यदश्वा भूत्वा पद्भिरपाघ्नत, तदश्वानामश्वत्वम्"—इति। देवशापात् कुरूपत्वं प्राप्ता असुराः पुनरपि 'तान्' देवान् 'अनु' पश्चादागच्छन्त्येव, न तु परित्यजन्ति। आगत्य च देवैः 'संगच्छन्त एव', न तु दूरे तिष्ठन्ति। तदानीं देवाः सर्वेऽप्यश्वरूपधारिणो भूत्वा पृष्ठत आगच्छतः तानसुरान् पद्भिः 'अपाघ्नत' स्वकीयपादताडनैर्हतवन्तः। यस्मादेव अश्वा भूत्वा पद्भिर्हतवन्तः, तस्माल्लोकेऽपि पादताडनकुशलानां चतुष्पदानामश्वनाम सम्पन्नम् ॥ उक्तार्थवेदनं प्रशंसति—"अश्नुते यद्यत् कामयते य एवं वेद"—इति ॥

देवैरश्ववेषकृतं व्यापारमिदानीमश्वेष्वपि दर्शयति—"तस्मादश्वः पशूनां जविष्ठस्तस्मादश्वः प्रत्यङ् पदा हिनस्ति"—इति। यस्मादश्वरूपैः देवैर्वेगेन गमनं पद्भिस्ताडनं चाचरितम्, तस्माल्लोकेऽपि पशूनां मध्येऽश्वोऽत्यन्तवेगवान्, 'तस्माद्' तस्मादेव कारणात् लौकिकोऽश्वः 'प्रत्यङ्' पृष्ठतः पादेन पुरुषं 'हिनस्ति' ताडयति ॥ उक्तार्थवेदनं प्रशंसति—"अप पाप्मानं हते य एवं वेद"—इति ॥

गुणान्तरोक्ति सूक्तं प्रशस्याश्वविधिनिगमयति—"तस्मादेतदश्वदाश्व्यं भवति तृतीयेऽहनि तृतीयस्याह्नो रूपम्"—इति।

यस्मादश्वस्य ईदृशो महिमा, तस्मात् 'अश्ववत्' अश्वशब्दोपेतं "युक्ष्वा हि"-इति सूक्तं (सं० ८.७५.) तृतीये ऽहन्याज्यशस्त्रं भवति। यदश्ववदिति पूर्वलक्षणस्योक्तत्वादिद मश्वशब्दोपेतं सूक्तं तृतीयस्याह्नो रूपकम् ॥

अथ प्रउगशस्त्रं विधत्ते—"वायवा याहि वीतये, वायो याहि शिवा दिव, इन्द्रश्च वायवेषां सुतानां, आ मित्रे वरुणे वयं, अश्विनावेह गच्छत, आ याह्यद्रिभिः सुतं, सजूर्विश्वेभिर्देवेभि, उत नः प्रिया प्रियास्वित्यौष्णिहं प्रउगं समानोदर्कं तृतीयेऽहनि तृतीयस्याह्नो रूपम्"–इति। "वायवा याहि वीतये"–इत्येका (सं० ५.५१.५.), "वायो याहि शिवा दिवः"–इत्यादिके द्वे ऋचौ (सं० ८.२६.२३,२४.), मिलित्वा सोऽयं मेकस्तृचः; "इन्द्रश्च वायवेषां सुतानाम्"–इत्यादिके द्वे ऋचौ (सं० ५.५१.६,७.), तृचत्वसम्पादनाय तयोरन्यतरा द्विरावर्त्तनीया; "आ मित्रे वरुणे वयम्"–इत्यादिकस्तृचः (सं० ५.७२.१–३.); "अश्विनावेह गच्छतम्"–इत्यादिकस्तृचः (सं० ५.७५.७–९.); "आ याह्यद्रिभिः सुतम्"–इत्यादिकस्तृचः (सं० ५.४०.१–३.); "सजूर्विश्वेभिर्देवेभिः"–इत्यादिकस्तृचः (सं० ५.५१.८–१०.); "उत नः प्रिया प्रियासु"–इत्यादिकस्तृचः (सं० ६.६१.१०–१२.); त एते सप्त तृचाः उष्णिक्छन्दस्काः। तत्सर्वं मौष्णिहं प्रउगशस्त्रं कुर्यात्। तत्र *समानोदर्कत्वं तृतीयस्याह्नो लिङ्गम्।* आ मित्रे वरुण- इति सूक्ते तिसृष्वृक्षु "नि बर्हिषीत्यादिकोऽन्तिमः पाद एक एव। अश्विनावेहेति सूक्तेऽपि "हंसाविवेत्यादिकोऽन्तिमः पाद एक एव। आ याहीति सूक्तेऽपि "उपन्निन्द्रेत्यन्तिमः पाद एक एव। सजूर्विश्वेभिरिति तृचेऽपि "आ याह्यग्न इत्य-

न्तिमः पाद एक एव । एवं कतिपयेषु समानोदर्कत्वं लिङ्गम् * ॥

अथ मरुत्वतीयशस्त्रस्य तृचद्वयं विधत्ते —"तं त मिद्राधसे मह, त्रय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ, निनृत्तवत् त्रिवत् तृतीयेऽहनि तृतीयस्याह्नो रूपम्"–इति । "तं त मित्यादिकस्तृचो मरुत्वतीयशस्त्रस्य प्रतिपत् ( सं० ८.२२.६–८.) ; तस्योपक्रमे 'तं तं'–इति द्विरावृत्तः शब्दो नृत्तगततालानुकरणसदृशः, अन्ते च 'कष्टोनां नृतुः'–इति नर्तनवाची शब्दः श्रूयते ; तदिदं निनृत्तवल्लिङ्गम् । "त्रय इन्द्रस्य"–इत्ययं मनुचरस्तृचः ( सं० ८.२.७–९. ) ; तस्यादौ त्रिशब्दश्रवणात् त्र्यं त्रिवल्लिङ्गम् ॥

अथ प्रगाथद्वयं विधत्ते— "इन्द्र नेदीय एदिहीत्यच्युतः प्रगाथः ; प्र नूनं ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यो, निनृत्तवांस्तृतीयेऽहनि तृतीयस्याह्नो रूपम्"–इति । "इन्द्र नेदीयः"–इतिप्रगाथस्य ( सं० ८.५३.५,६.) पूर्वयोरप्यह्नोर्विहितत्वादच्युतत्वम् । अथ प्रग्रथनेन द्वयत्वं सम्पादयितुं चतुर्थः पादः षष्ठः पादश्च त्रिरभ्यस्यते, तस्य नृत्तसमानत्वादयं प्रगाथो निनृत्तलिङ्गवान् । एवं ब्राह्मणस्पत्यप्रगाथेऽपि ( सं० १.४०.५,६. ) द्रष्टव्यम् । यद्वा यस्मिन् 'इन्द्रो वरुणो मित्रो अर्यमा'–इत्योकारस्य त्रिरभ्यासो नृत्तसमानः ॥

अन्याभिस्तु ऋचौ विधत्ते —"अग्निर्नेता, त्वं सोम क्रतुभिः, पिन्वन्त्यप इति धाय्या अच्युताः"–इति । यद्यप्यच्युतत्वं द्वितीयस्याह्नो लिङ्गं †, तथाप्यत्र वाचनिकः प्रयोगो द्रष्टव्यः ॥

---

* सायणस्तु नाद्रीयन्ते यदि, इन्द्रेति ह्वयोर्द्वानिमं नामम् 'अभि प्र.'–इति समाम्नम्, एत न, विधीति तपे तु समानोदर्कत्वं वचनादेव ।

† ऐ०ब्रा० ४।३ पृ० १०५० द्रष्टव्यम् ।

अथान्यं प्रगाथं विधत्ते—"न किः सुदासो रथं पर्यास नरीर-मदिति मरुत्वतीयः प्रगाथः, पर्यस्तवांस्तृतीयेऽहनि तृतीयस्याह्नो रूपम्"—इति । अस्मिन् प्रगाथे 'यस्य मरुतः'—इति तृतीयपादे श्रवणादयं मरुत्वतीयः ; अत्र 'पर्यास'—इतिश्रुतत्वादयं पर्यस्त-लिङ्गवान् ( सं० ७.३२.१०,११. ) ॥

सूक्तान्तरं विधत्ते—"अर्यमा मनुषो देवतातेति सूक्तं त्रिवत् तृतीयेऽहनि तृतीयस्याह्नो रूपम्"—इति । आदौ त्रिशब्दस्य श्रुतत्वात् त्रिवल्लिङ्गयुक्त मिदं सूक्तम् ( सं० ५.२९.१,२. ) ॥

अथ निष्केवल्यशस्त्रे स्तोत्रियानुरूपौ प्रगाथौ विधत्ते—"यद् द्याव इन्द्र ते शतं, यदिन्द्र यावतस्त्व मिति वैरूप पृष्ठं भवति राथन्तरेऽहनि तृतीयेऽहनि तृतीयस्याह्नो रूपम्"—इति । वैरूप-साम्ना निष्पाद्यं तृतीयेऽहनि पृष्ठस्तोत्रम् ; तस्य च साम्न आधार-भूतो "यद् द्यावः"—इति ( सं० ८.७०.५,६. ) प्रगाथः स्तोत्रियः, "यदिन्द्र"—इति ( सं० ७.३२.१८,१९. ) प्रगाथोऽनुरूपः । तदुभयं रथन्तरसामसम्बन्धिनि तृतीयेऽहनि युक्तम् । प्रथमतृतीयपञ्चमान्य-हानि राथन्तराणि * ; रथन्तरसाम्ना पृष्ठस्तोत्रस्य गातव्यत्वात् । वैरूपसाम्नाप्यत्र पृष्ठस्तोत्रं गातव्यम् ; वैरूपशाक्वरयोः रथन्तरयुक्त-त्वेन † तदीयेऽहनि युक्तत्वात् । तस्मात् तृतीयेऽहनि एतत् प्रगाथद्वयं शंसनीयम् ; वैरूपसामसम्बन्धस्य तृतीयदिवसलिङ्गस्य विद्यमानत्वात् ॥

सूक्तान्तरं विधत्ते—"यद्वावानेति ( सं० १०.७४.६. ) धाय्या-च्युता"—इति । सर्वेष्वह:स्वच्युतत्वं सर्वस्याप्यह्नो लिङ्गं भवतीति तृतीयेऽहन्यपि तद्युक्तम् ॥

* २भा० १८० पृ० '०' द्रष्टव्यम् । † ३भा० १९९, २९० पृष्ठयो. द्रष्टव्यम् ।

अपरं प्रगाथद्वयं विधत्ते—"अभि त्वा शूर नोनुम इति रथन्तरस्य योनि मनु निवर्त्तयति ; राथन्तरं ह्येतदहरायतनेन"–इति। "अभि त्वा शूर"–इत्येषा ( सं० ७.३२.२२. ) रथन्तरसाम्नो योनिः *; तां पूर्वोक्ताया धाय्याया 'अनु' पश्चात् 'निवर्त्तयति' शंसेदित्यर्थः। एतच्च तृतीय मह्नः 'आयतनेन' स्थानेन 'राथन्तरम्' अयुग्मानां मह्नां रथन्तरसम्बन्धित्वात् ॥

पश्चान्यमगाथं विधत्ते—"इन्द्र त्रिधातु शरण मिति साम-प्रगाथस्त्रिवांस्तृतीयेऽहनि तृतीयस्याह्नो रूपम्"–इति। नवत्यस्य वैरूपसाम्नः सम्बन्धी "इन्द्र त्रिधातु"–इति ( सं० ६.४६.९,१०. ) प्रगाथः ; स च त्रिशब्दयुक्तत्वात् त्रिवान्। अतो लिङ्गसद्भावात् तृतीयेऽहनि योग्यः ॥

सूक्तान्तरं विधत्ते— "त्य मू षु वाजिन देवजूत मिति ( सं० १०.१७८. ) तार्क्ष्योऽच्युत."–इति। तार्क्ष्यनाम्नः सूक्तविशेषस्याच्युतत्वं सर्वदिनसम्बन्धि लिङ्गम् ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां प्रथमाध्याये
( एकविंशाध्याये ) प्रथमः खण्ड ॥ १ ॥

---

॥ अथ द्वितीय खण्डः ॥

यो जात एव प्रथमो मनस्वानिति सूक्तं समानोदर्कं तृतीयेऽहनि तृतीयस्याह्नो रूपं तदु सजनीयं

---

* २भा० २९१ पृ० १८ पं० '०' द्रष्टव्यम्।

मेतद्वा इन्द्रस्येन्द्रियं यत्सजनीय मेतस्मिन् वै शस्य-
मान इन्द्र मिन्द्रिय मा विशति तद्वाप्याहुश्छन्दो-
गास्तृतीये ऽहनि वह्वृचा इन्द्रस्येन्द्रियं शंसन्तीति
तदु गार्त्समद मेतेन वै गृत्समद इन्द्रस्य प्रियं धामो-
पागच्छत्स परमं लोक मजयदुपेन्द्रस्य प्रियं धाम
गच्छति जयति परमं लोकं य एवं वेद तत्सवितुर्-
वृणीमहे ऽद्या नो देव सवितरिति वैश्वदेवस्य प्रति-
पदनुचरौ राथन्तरे ऽहनि तृतीयेऽहनि तृतीयस्याह्नो
रूपम् तद्देवस्य सवितुर्वार्यं महदिति सावित्र मन्तो
वै महदन्तस्तृतीय महस्तृतीये ऽहनि तृतीयस्याह्नो
रूपम् घृतेन द्यावापृथिवी अभीवृते इति द्यावापृथि-
वीयं घृतश्रिया घृतपृचा घृतावृधेति पुनरावृत्तं पुन-
र्निनृत्तं तृतीये ऽहनि तृतीयस्याह्नो रूपं मनश्वो
जाता अनभीशुरुक्थ्यदृत्याभवं रथस्त्रिचक्र इति
त्रिवत् तृतीये ऽहनि तृतीयस्याह्नो रूपम् परावतो ये
दिधिषन्त आप्य मिति वैश्वदेवं मन्तो वै परावतो-
ऽन्तस्तृतीय मह स्तृतीये ऽहनि तृतीयस्याह्नो रूपम्
तदु गाय मेतेन वै गयः प्लातो ⊙ विश्वेषां देवानां
प्रियं धामोपागच्छत्स परमं लोक मजयदुप विश्वेषां

⊙ 'प्लातो' ख, ङ, भाष्यसम्मतश्च ।

देवानां प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद वैश्वानराय धिषणा मृतावृध इत्याग्निमारुतस्य प्रतिपदन्तो वै धिषणान्तस्तृतीय महस्तृतीये ऽहनि तृतीयस्याह्नो रूपम् धारावरा मरुतो धृष्ण्वोजस इति मारुतं वह्वभिव्याहृत्यं मन्तो वै वहुन्तस्तृतीय महस्तृतीये ऽहनि तृतीयस्याह्नो रूपम् जातवेदसे सुनवाम सोम मिति जातवेदस्याच्युता त्व मग्ने प्रथमो अङ्गिरा ऋषिरिति जातवेदस्यं पुरस्तादुदर्कं * तृतीये ऽहनि तृतीयस्याह्नो रूपम् त्वं त्व मित्युत्तरं चाह मभिवदति सन्तत्यै सन्ततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति ॥ २ ॥

अथ निविद्धानीयं सूक्तं विधत्ते—"यो जात एव प्रथमो मनस्वानिति सूक्तं समानोदर्कं तृतीयेऽहनि तृतीयस्याह्नो रूपम्"-इति। अस्मिन् सूक्ते "स जनास इन्द्रः"-इत्यन्तिमः पादः सर्वासूक्षु ( १—१५. ) समानः। तस्मादिदं सूक्तं ( सं० २.१२. ) समानोदर्कलिङ्गोपेतम् ॥

एतत्सूक्तं प्रशंसति—"तद्‍ सजनीय मेतद्वा इन्द्रस्येन्द्रियं यत् सजनीय मेतस्मिन्वै शस्यमान इन्द्र मिन्द्रिय मा विशति"-इति। 'तद्‍' तच सूक्तं 'सजनीयं' सजनशब्दोपेत 'स जनास इन्द्र.'-इति श्रुतत्वात्। यद्‍जनयुक्तत्व मेवैष सुक्तस्य कारणम्। किञ्च यत्

* 'इदर्द' क।

'सजनीयं' सूक्तमस्ति, यत्रैवेन्द्रस्येन्द्रियमुच्यते। कथं तत्? उच्यते— पुरा कदाचिदेतस्मिन्नेव सूक्ते शस्यमाने सति 'इन्द्रियं' चक्षुरादिपाटवम् 'इन्द्र' देव माविशति। तस्मादिन्द्रियप्रवेशे हेतुत्वादिदं प्रशस्तम् ॥

शाखान्तराध्येतृप्रसिद्धया प्रशंसति—"तच्छाखायाइच्छन्दोगास्तृतीये ऽहनि बह्वृचा इन्द्रस्येन्द्रियं शंसन्तीति"-इति। 'तद' तस्मिन्नेव सजनीयसूक्ते 'छन्दोगाः' छन्दांसि गायन्तीति सामवेदिनः, परस्पर मेव माहुः,—षष्ठस्य षडहस्य तृतीयेऽहनि 'बह्वृचाः' ऋग्वेदाध्यायिनो होतारः इन्द्रस्य सम्बन्धीन्द्रियरूपं सजनीयसूक्तं शंसन्तीति। अतोऽस्य सूक्तस्येन्द्रियप्रदत्वमसिद्धिर्भवतीति ॥

ऋषिसम्बन्ध मुपजीव्य प्रशंसति—"तदु गार्त्समद मेतेन वै गृत्समद इन्द्रस्य प्रियं धामोपागच्छत्स परमं लोक मजयत्"-इति। गृत्समदो नाम कश्चिदृषिस्तेन दृष्टत्वादिदं सूक्तं 'गार्त्समदम्'। कथ मिति, तदुच्यते—'एतेनैव' सजनीयसूक्तेन गृत्समदाख्यो महर्षिः इन्द्रं तोषयित्वा, तस्येन्द्रस्य प्रियं स्थानं प्राप्य, ततः च तेनेन्द्रेणानुगृहीत उत्तमं लोकं जितवान् ॥ वेदनं प्रशंसति—"उपेन्द्रस्य प्रियं धाम गच्छति, जयति परमं लोकं य एवं वेद"-इति ॥

वैश्वदेवस्य शस्त्रे तृचद्वयं विधत्ते—"तत्सवितुर्वृणीमहे ऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ, राथन्तरेऽहनि तृतीयेऽहनि तृतीयस्याह्नो रूपम्"-इति। "तत्सवितुः"-इति तृचः (सं० ५.८२.१-३.) प्रतिपत्, स च रथन्तरसाम्नः सम्बन्धी; "अद्या नो देव सवितः"-इति (५.८२.४-६.) अनुचरः। तदेतदुभयं रथन्तरसम्बन्धित्वादस्मिन् योग्यम्॥

सवितृदेवताकं सूक्तान्तरं दर्शयति—"तद्देवस्य सवितुर्वार्यं महदिति सावित्रम्"–इति। 'तत्' एतत् 'सावित्रं' सवितृदेवताकम् (सं० ४.५३.)। तत्र हि सवितुर्देवस्य सम्बन्धि 'वार्यं' वरणीयं 'महत्' अधिकं तेज इत्ययमर्थः श्रूयते; अतः सवितृसम्बन्धश्रवणात् सावित्रम् ॥

पूर्वत्र तृचे रथन्तरसम्बन्धरूपं लिङ्गमुक्तम्, अत्र तु लिङ्गान्तरं दर्शयति—"अन्तो वै महदन्तस्तृतीयमहस्तृतीयेऽहनि तृतीयस्याह्नो रूपम्"–इति। अत्र प्रथमपादे महच्छब्दोऽस्ति; महच्च वस्तु काम्यमानानां वस्तूना मन्तो भवति,—न खलु महतोऽप्यधिकं केनचित् क्वचित् किञ्चिदधिकं काम्यते; तादृशस्याभावात्। तस्मान्महदन्तश्चेवान्तो भवति। इदञ्च तृतीय महः प्रथमस्य त्र्यहस्यान्तः। 'अन्तं' अन्तत्वसाम्यात् तृतीयेऽहनि "तद्देवस्य"–इत्यादिकं योग्यम्। यद्यप्यन्तशब्दोऽत्र नास्ति, तथाप्युक्तरीत्यान्तशब्दार्थस्य सद्भावादन्तवल्लिङ्गमस्ति ॥

तृचान्तरं विधत्ते—"घृतेन द्यावापृथिवी अभि वृते इति (सं० ६.७०.) द्यावापृथिवीयं घृतश्रिया घृतपृचा घृतावृधेति पुनरावृत्तं पुनर्निनृत्तं तृतीयेऽहनि तृतीयस्याह्नो रूपम्"–इति। द्यावापृथिवीदेवताकत्वं विस्पष्टम्। घृतश्रियेत्यादिः द्वितीयः पादः; तत्र घृतशब्दस्य पुनःपुनरावृत्तिरेकं लिङ्गम्; तया चावृत्त्या नृत्तगततालानुकरण प्रतीतं पुनर्निनृत्तं लिङ्गान्तरम् ॥

ऋभुदेवताकं सूक्तान्तरं विधत्ते—"अनश्वो जातो अनभीशु रुक्थ्य इत्यार्भवं (सं० ४.३६.); रथस्त्रिचक्र इति विवृत्, तृतीये ऽहनि तृतीयस्याह्नो रूपम्"–इति। द्वितीयस्या ऋचश्चतुर्थपादे

"ऋभवो वेदयानसि"–इतिश्रवणात् ऋभुदेवताकत्वम् । प्रथमाया ऋचो द्वितीयपादे "रयस्त्रिवन्धुः"–इति त्रिशब्दोपेत लिङ्गम् ॥

बहुदेवताकं सूक्तान्तरं विधत्ते—"परावतो ये दिधिषन्त आप्य मिति ( सं० १०.६३. ) वैश्वदेवम्; अन्तो वै परावतोऽन्तस्तृतीय महस्तृतीयेऽहनि तृतीयस्याह्नो रूपम्"–इति । द्वितीयस्या ऋचः पूर्वार्द्ध एवं पठ्यते—"विश्वा हि वो नमस्यानि वन्द्या नामानि देवा उत यज्ञियानि व"–इति । तत्र देवा इति यद् बहुवचनम्, अत प्रथमाया ऋचश्चतुर्थपादे "देवा आसते"–इति बहुवचनम्; तेन वैश्वदेवं बहुदेवताक मिदम् । परावत इत्यनेन शब्देन दूरदेशोऽभिधीयते; स च निवासदेशापेक्षयान्तो भवति; तृतीय मह्नश्च तदहस्यान्तः; अतः पूर्ववत् अर्थतोऽन्तवल्लिङ्ग मस्ति ॥

तदेतत् वैश्वदेवसूक्तं प्रशंसति—"तदु गाय मैतेन वै गयः प्लातो विश्वेषां देवानां प्रियं धामोपागच्छत परम लोक मजयत्"–इति । 'तदु' तदेतत्सूक्तं 'गाय' गयेन दृष्टं प्लुतनामकस्य पुत्रो गयनामको महर्षिः 'एतेन' परावत इत्यादिसूक्तेन विश्वेषां देवानां प्रिय स्थानं प्राप्य तैरनुगृहीत उत्तमं लोकं जितवान् ॥ वेदनं प्रशंसति—"उप विश्वेषां देवानां प्रियं धाम गच्छति, जयति परमं लोकं य एवं वेद"–इति ॥

शस्त्रान्तरस्य प्रतिपत्सूक्तं विधत्ते—"वैश्वानराय धिषणा मृतावृध इत्याग्निमारुतस्य प्रतिपद् ( सं० ३.२.१. ); अन्तो वै धिषणाऽन्तस्तृतीय महस्तृतीयेऽहनि तृतीयस्याह्नो रूपम्"–इति । अत्र धिषणेत्यन्तःकरणवाचकः श्रूयते; अन्तःकरणं च भूम्यादेरन्तं प्राप्तुं शक्नोति । तथा चान्यत्र श्रूयते–"न वा इमा मश्वरथो न वाश्वतरीरथः सद्यः पर्याप्तु मर्हति; मनो वा इमां सद्यः

पर्याप्तु मर्हति"—इति। 'अन्त' सहसा भूम्याद्यन्तप्राप्तिहेतुत्वात् 'धिषणा'-शब्दोऽन्तस्योपलचकः। अन्तस्तृतीय मित्यादि पूर्ववत् ॥

मरुद्देवताकं सूक्तं विधत्ते—"धारावरा मरुतो धृष्ण्वोजस इति मारुतं बह्वभिव्याहृत्य मन्तो वै बह्वन्तस्तृतीय महस्तृतीये ऽहनि तृतीयस्याह्नो रूपम्"—इति। मारुतत्व मत्र विस्पष्टम्। बहुविधम् 'अभि व्याहृत्यम्' अभिव्याहरणीयं शंसनीय मङ्गजातं यस्मिन्सूक्ते तद् 'बह्वभिव्याहृत्यम्'; अत्र हि पञ्चदशर्चाः शंसनीया इति बहुत्वम्, बहूनां देवाना मभिव्याहरणीयानां विद्यमानत्वाद्बहुत्वम्। तस्य बहुत्वस्य अनेकत्वहितावेचयान्तत्वम्; अतोऽन्तवल्लिङ्ग मस्ति (सं० २.३४.) ॥

ऋगन्तरं विधत्ते—"जातवेदसे सुनवाम सोम मिति (सं० १ ९९.) जातवेदस्याच्युता"—इति। अच्युतत्वं सर्वेषां मन्त्राणां साधारणं लिङ्गम् ॥

जातवेदोदेवताकं सूक्तं विधत्ते—"त्व मग्ने प्रथमो अङ्गिरा ऋषिरिति (सं० १.३१.) जातवेदस्यं पुरस्तादुदर्कं तृतीये ऽहनि तृतीयस्याह्नो रूपम्; त्वं त्व मित्युत्तरं त्वाह मभिवदति सन्तत्यै"—इति। यद्यपि त्वमग्न इत्यग्निरेव देवता प्रतीयते, तथाप्यसौ जातवेदः-शब्दवाच्यो भवति, जातस्य सर्वस्य जगतो वेदितृत्वात्। तस्मादेतत्सूक्तं 'जातवेदस्यम्'। तत्र 'पुरस्तादुदर्कम्' उदर्कशब्दो ऽवसानवचनः; अवसानं च विच्छेदः। सोऽपि द्विविधः,—पुरस्तादुपरिष्टाच; उपक्रमात् पूर्वं शंसनीयस्याभावात् अयं पूर्वकालीनो विच्छेदः पुरस्तादुदर्क इत्युच्यते। समाप्तात् पूर्वकालीनो ऽविच्छेदः उपरिष्टादुदर्कः। समानोदर्कत्वं च तृतीयस्याह्नो लिङ्गं युक्तम्। तच्चोपरिष्टादुदर्कसाम्यं सजनीयादिषूदाहृतम् (१२४०);

अत्र पुरस्तादुदर्कसाम्यं लिङ्गत्वेनोदाह्रियते। तथा ह्यस्मिन् सूक्ते सर्वास्वप्यृक्षु "त्व मस्मे"—इति यदक्षरं समाम्नातम्, तदिदं समानोदर्कत्व मेकं लिङ्गम्। असकृदभिधानादेव पुनरावृत्तलिङ्गं च वक्तुं शक्यम्। किञ्च लोके कश्चित्पुरुषं सम्बोध्याभिमुखीकृत्य त्व मिति वदन्ति ; एव मत्रापि उत्तरशाह मभिमुखीकृत्यैव प्रत्यृचं त्वं त्व मिति शब्दः प्रयुज्यते, तच्च प्रथमद्वितीययोस्त्र्यहयोश्च 'सन्तत्यै' विच्छेदराहित्याय भवति॥ वेदनपूर्वक मनुष्ठानं प्रशंसति—"सन्ततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति"—इति। 'ये' पुरुषाः प्रत्यृचं त्वं-शब्दैः सूचितं त्र्यहयोः सातत्यं विद्वांसो ऽनुतिष्ठन्ति, ते पुरुषाः 'सन्ततैः' परस्परसम्बद्धैः, अत एव विच्छेदरहितैस्त्र्यहैरनुतिष्ठन्ति, तेषां विघ्नो न भवतीत्यर्थः॥ २॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां प्रथमाध्याये
( एकविंशाध्याये ) द्वितीयः खण्डः॥ २॥

---

॥ अथ तृतीय खण्डः ॥

आप्यन्ते वै स्तोमा आप्यन्ते छन्दांसि तृतीये-ऽहन्येतदेव तत उच्छिष्यते वागित्येव तदेतदक्षरं त्र्यक्षरं वागित्येक मक्षर मक्षर मिति त्र्यक्षरं स

एवैष उत्तरस्त्राहो वागेकं गौरेकं द्यौरेकं ततो वै वागेष चतुर्थं महर्वहति तद्याच्चतुर्थं महन्न्यूङ्खयन्त्ये-तदेव तदचर मभ्यायच्छन्त्येतदर्धयन्त्येतव्यविभाव-यिष्यन्ति चतुर्थस्त्राह उद्यत्यां अन्नं वै न्यूङ्खो यदेळवा अभिगेष्णास्वरन्त्ययान्नाद्यं प्रजायते तद्याच्चतुर्थं मह्न्न्यू-ङ्खयन्त्यन्न मेव तत्प्रजनयन्त्यन्नाद्याय प्रजात्यै तस्माच्चतुर्थे महर्जातवद् भवति चतुरक्षरेण न्यूङ्खयेदित्याहु-श्चतुष्पादा वै पशवः पशूना मवरुध्यै त्र्यक्षरेण न्यूङ्खये-दित्याहुस्त्रयो वा इमे त्रिवृतो लोका एषा मेव लोकाना मभिजित्या एकाक्षरेण न्यूङ्खयेदिति ह स्माह लाङ्गलायनो ब्रह्मा मौद्गल्य एकाक्षरा वै वागेष वाव सम्प्रति न्यूङ्खं न्यूङ्खयति य एकाक्षरेण न्यूङ्खयतीति द्व्यक्षरेणैव न्यूङ्खयेत् प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमान मेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति तस्माद् द्व्यक्षरेणैव न्यूंखयेन्मुखतः प्रातरनुवाके न्यूंखयति मुखतो वै प्रजा अन्न मदन्ति मुखत एव तदन्नाद्यस्य यजमानं दधाति मध्यत आज्ये न्यूंखयति मध्यतो वै प्रजा अन्नं धिनोति मध्यत एव तदन्नाद्यस्य यज-मानं दधाति मुखतो मध्यन्दिने न्यूंखयति मुखतो

न्यूङ्खस्वरूपमाश्वलायनेन वर्णितम्—"चतुर्थेऽहनि प्रातरनुवाकं प्रतिपद्यर्द्धर्चादौ न्यूङ्खो द्वितीयं स्वरमोकारं त्रिमात्रमुदात्तं त्रिस्तस्य तस्य चोपरिष्टादपरिमितान् पञ्च वार्द्धौकारानुदात्तानुत्तमस्य तु त्रीन् पूर्वं मकारं निहन्यात् न्यूङ्ख्यमाने"—इति (आश्व० ७.११.१–५.)। अस्यायमर्थः—"चतुर्थेऽहनि प्राप्ते सति प्रातरनुवाकस्य येयमृक् प्रथमास्ति, तस्या ऋचो यौ द्वावर्द्धर्चौ तयोरर्द्धर्चयोर्यावादी, तयोराद्योर्न्यूङ्खः कर्त्तव्यः। नितरामत्यन्तविषमप्रकारेण 'ऊङ्खनम्' उच्चारणं 'न्यूङ्खः'*। कथमिति, तदेव स्पष्टीक्रियते—"आपो रेवतीः क्षयथा"—इति (सं० १०.३०.१२.) प्रातरनुवाकस्य प्रतिपत्। तस्याः पूर्वार्द्धस्यादौ योऽयं द्वितीयस्वरः ओकारः पकारादूर्ध्वभावी, तं त्रिमात्रोपेतमुदात्तस्वरयुक्तं त्रिवारमुच्चारयेत्। त एते त्रय ओङ्काराः सम्पद्यन्ते। तत्रैकैकस्योकारस्योपरि पुनरप्योकारा अर्द्धस्वरूपा ह्रस्वमात्रा अपरिमिताः पञ्च वोच्चारणीयाः। ते चार्द्धौकाराः सर्वेऽप्यनुदात्ताः। उत्तमस्य तु त्रिमात्रस्योकारस्योपरि त्रीनर्द्धौकारानुच्चारयेत्। तेष्वर्द्धौकारेषु प्रथमं मकारं 'निहन्यात्' अत्यन्तनीचस्वरेणानुदात्तं कुर्यादिति। एवं सति उदात्तास्त्रिमात्रास्त्रय ओकारा अर्द्धौकारास्त्रयोदश इत्येवमोकाराः षोडश सम्पद्यन्ते। प्रथमद्वितीययोस्त्रिमात्रयोर्मध्ये पञ्चानुदात्ता अर्द्धौकाराः; द्वितीयतृतीययोस्त्रिमात्रयोर्मध्ये पञ्चानुदात्ता अर्द्धौकाराः; तृतीयस्य त्रिमात्रस्योपरिष्टादनुदात्ता अर्द्धौकारास्त्रयः; सोऽयमुच्चारणविशेषो न्यूङ्ख इत्युच्यते। सोऽयं न्यूङ्खश्चतुर्थस्याह्नः 'उद्यत्यै' उद्यमनाय सर्वस्मादुत्कर्षाय भवति॥

* "तदपि निदर्शनायोदाहरिष्याम.—"आपो३ ओ ओ ओ ओ ओ३ ओ ओ ओ

तमिमं न्यूंखं प्रशंसति—"अन्नं वै न्यूंखो यदेळवा अभिगेष्णाश्चरन्त्ययथान्नाद्यं प्र जायते, तद्यच्चतुर्थे ऽहन्न्यूंखयन्त्यन्न मेव तत्प्रजनयन्त्यन्नाद्यस्य प्रजात्यै; तस्माच्चतुर्थं अहर्जातवद्भवति"–इति। योऽयं मुक्तो न्यूंखोऽस्ति, तदेतत् 'अन्नं वै' अन्नसाधनत्वादन्नस्वरूप मेव। अथ मेतदस्ति, तदुच्यते—इळ-शब्दोऽन्नवाची, तद्येषां कर्षकाणा मस्ति, ते कर्षकाः 'इळवाः'। ते च वर्षन्तं पर्जन्यम् 'अभि'लक्ष्य 'गेष्णाः' हर्षेण गायन्तो यदाचरन्ति, अथ तदानी मन्नाद्यं प्रजायते। अकालवृष्टिमवृद्धिं च दृष्ट्वा कर्षका हृष्यन्ति, हृष्टाश्च गायन्तीति यदस्ति, तत्सदृश मिदं चतुर्थेऽहनि न्यूंखरूप मुच्चारणम्। अतो ऽनेनोच्चारणेनान्न मुत्पादयन्ति। तदेव मन्नाद्यस्य 'प्रजात्यै' उत्पादनार्थं सम्पद्यते। 'तस्मात्' अन्नप्रजातियुक्तत्वादेव चतुर्थ मह: 'जातवद्भवति'। जातवत्त्व मेतस्मिन्नहनि मन्त्रवचनेनोपरिष्टाद् वक्ष्यते॥

न्यूंखस्य मन्त्रमध्ये स्थानविशेषं विधत्ते—"चतुरक्षरेण न्यूंखयेदित्याहुश्चतुष्पादा वै पशवः पशूना मवरुद्ध्यै"–इति। मन्त्रे योऽय मादौ चतुरक्षरो भागस्तेन 'न्यूंखयेत्' चत्वार्यक्षराण्युच्चार्य तदन्ते ययोक्तं न्यूंखं प्रयुञ्ज्यादिति केचिद्याज्ञिका आहुः। चतुःसंख्यया पादचतुष्टयोपेतानां पशूनां प्राप्तिर्भवतीति तदभिप्रायः॥

पक्षान्तरं विधत्ते—"त्र्यक्षरेण न्यूंखयेदित्याहुस्त्रयो वा इमे त्रिवृतो लोका एषा मेव लोकाना मभिजित्यै"–इति। पूर्ववद् व्याख्येयम्॥

---

आ औ३ आ औ औ रेतसोः षष्ठ्या हि वसः कतुम अहं विषयाच्याय। ... औ औ औ औ औ३ औ औ औ औ औ औ३ औ औ औव स्. ... पवोः ... मदते चक्रोभिर्द्द आपोषु"–इति आ० श्रौ० ७.११.७।

पक्षद्वय मुक्त्वा तृतीयपक्षं विधत्ते—"एकाक्षरेण न्यूङ्खयेदिति ह स्माह लाङ्गलायनो ब्रह्मा मौद्गल्य एकाक्षरा वै वागेष वाव सम्प्रति न्यूङ्खं न्यूंखयति य एकाक्षरेण न्यूंखयतीति"—इति। लाङ्गलाख्यस्य महर्षेः पौत्रो 'लाङ्गलायनः'; मुद्गलाख्यस्य पुत्रो 'मौद्गल्यः', स च 'ब्रह्मा' इत्येतन्नामको ब्राह्मणः। स एवं मन्यते स्म एकाक्षरेण न्यूंखयेदिति। तत्किम्? तत्रेय मुपपत्तिः,—येयं वागस्तीति पूर्वं मुक्ता, सेय मेकाक्षरा; तथा सति यः पुमानेकाक्षरेण न्यूंखयति, एष एव सम्प्रति सम्यक् न्यूंख मनुतिष्ठति। अक्षरसङ्ख्याया देवतानुसारित्वादिति तस्य महर्षेरभिप्रायः॥

तदेतत् पक्षत्रय मङ्गीकृत्य स्वाभिप्रेतं पक्षं विधत्ते—"द्व्यक्षरेणैव न्यूङ्खयेत् प्रतिष्ठाया एव; द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमान मेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति; तस्माद् द्व्यक्षरेणैव न्यूङ्खयेत्"—इति। एवकारः पूर्वोक्तपक्षत्रयव्यावृत्त्यर्थः। 'प्रतिष्ठाया एव' यजमानस्य प्रतिष्ठार्थ मेव हि द्विसङ्ख्या; द्वाभ्यां पादाभ्या मवस्थितत्वात् पुरुषो 'द्विप्रतिष्ठः'। स्पष्ट मन्यत्॥

प्रातरनुवाके विशेषेण स्थानं विधत्ते—"मुखतः प्रातरनुवाके न्यूंखयति; मुखतो वै प्रजा अन्न मदन्ति, मुखत एव तदन्नादस्य यजमानं दधाति"—इति। प्रातरनुवाके मुखत अर्धर्चस्यादौ द्वितीयस्मिन्नक्षरे न्यूंखयेत्। प्रजानां सर्वासां मुखेनैवान्नादनात्। तथा सति यजमान मन्नाद्यस्य 'मुखत एव' समीप एव स्थापयति॥

आज्यशस्त्रे स्थानविशेषं विधत्ते—"मध्यत आज्ये न्यूङ्खयति; मध्यतो वै प्रजा अन्नं धिनोति, मध्यत एव तदन्नादस्य यजमानं दधाति"—इति। 'मध्यतः' तृतीयपादे इत्यर्थः। तथा चाश्वला-

यन आह—"आग्निं न स्ववृक्तिभिरित्याज्यम् *, तस्योत्तमावर्जं तृतीयेषु पादेषु न्यूङ्ख"—इति (आ० ७.११.८९.)। अत्र हि मध्यभागे धृतम्। तत्र प्रजां 'धिनोति' प्रीणयति। ततस्तत्पाठेनाग्नाय्यस्य मध्यतो धारणे यजमानम् अवस्थापयति ॥

माध्यन्दिने सवने स्थानविशेषं विधत्ते—"मुखतो माध्यन्दिने न्यूङ्खयति, मुखतो वै प्रजा अन्न मदन्ति, मुखत एव तदन्नाद्यस्य यजमानं दधाति"—इति। 'मुखत' अर्धर्चादौ। तथा चास्य शाखायां मरुत्वतीयं निष्केवल्यञ्च निरूप्य यथादिद माह—"सुधीचवीयस्य तु † तृच आदेरर्धर्चादिषु न्यूङ्खः"—इति (श्रौ० ७.११,२८.)॥

सवनद्वयगतं न्यूङ्खं प्रशंसति—"तदुभयतो न्यूङ्खं परिगृह्णाति सवनाभ्या मन्नाद्यस्य परिगृहीत्यै"—इति। 'उभयत.' प्रातस्सवने माध्यन्दिनसवने च ‡ ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकाया प्रथमाध्याये
(एकविंशाध्याये) तृतीयः खण्ड ॥ ३ ॥

---

* "आग्नि न स्ववृक्तिभि"—इति सं० १०.२१.१।

† "सुधी इव मिन्द्र मरुत्वा॰ इन्द्र"—इति स० २.११.१।

‡ "नूङ्खा षोडश ओंकाराश्च केचिदुदात्ता केचिदनुदात्ता"—इति पा० १.२.३४। "नूङ्खयन्तो पथि पक्ष वामिषि"—इति (सं० १०.९४.३) अस्यो व्याख्याने 'नूङ्खयन्तो—शब्दविशेष कुर्वन्ति'—इति सा० भा०। शाङ्खा० ब्रा० २२.९, २५.१२। शाङ्खा० श्रौ० १०.५.२१, १२.१३.१५,७। कात्या० श्रौ० १०.१२। द्रष्टव्यं पुन ९.१९,२९।

॥ अथ चतुर्थः खण्डः ॥

वाग्वै देवता चतुर्थं महर्वहतीकविंश स्तोमो वैराजं सामानुष्टुप् छन्दो यथादेवत मेनेन यथास्तोमं यथा-साम यथाछन्दसं राध्नोति य एवं वेद यद्वा एति च प्रेति च तच्चतुर्थस्याह्नो रूपं यद्वेव प्रथम महस्तदे-तत्पुनर्यच्चतुर्थे यद्युक्तवद्रथवद्दाशुमद्पिबवद्-प्रथमे पदे देवता निरुच्यते यदय लोको ऽभ्युदितो यज्जातवद्यद्ववद्यच्छुक्रवद्यद्वाचो रूपं यद्वैमदं यद्वि-रिफितं यद्विच्छन्दा यदूनातिरिक्तं यद्वैराजं यदानुष्टुभं यत्करिष्यद्यत्प्रथमस्याह्नो रूपं मेतानि वै चतुर्थस्याह्नो रूपाण्याग्निं न स्ववृक्तिभिरिति चतुर्थस्याह्न आज्यं भवति वैमदं विरिफितं विरिफितश्च रूपेयच्चतुर्थे-ऽहनि चतुर्थस्याह्नो रूपं महच्चैं पाङ्क्तम् पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशूना मवरुद्ध्यै ता उ द्श जगत्यो जगत्-प्रातस्सवन एष चाहस्तेन चतुर्थस्याह्नो रूपं ता उ यच्छदयानुष्टुभं आनुष्टुभं ह्येतदहस्तेन चतुर्थस्याह्नो रूपं ता उ विंशतिर्गायत्राः पुनः प्रायणीयं ह्येतदह-स्तेन चतुर्थस्याह्नो रूपं तदेतदस्तुत मशस्तं मयात-यामसूक्तं यज्ञ एव साक्षाद्यदेतच्चतुर्थस्याह्न आज्यं

भवति यद्वादेव तद्वाचं तन्वते वाच मेव तत्पुनरुप-
यन्ति सन्तत्यै सन्ततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एवं
विद्वांसो यन्ति वायो शुक्रो अयामि ते विहि होत्रा
अवीता वायोः शतं हरीणा मिन्द्रश्च वायवेषां सोमा-
नां मा चिकितान सुक्रतू आ नो विश्वाभिरूतिभिस्
त्य मु वो अप्रहण मप त्वं वृजिनं रिपुं सम्बितमी
नदीतम इत्यानुष्टुभं प्रउग मेति च प्रेति च शुक्रवच्च-
तुर्थे ऽहनि चतुर्थस्याह्नो रूपं तं त्वा यज्ञेभिरीमह
इति मरुत्वतीयस्य प्रतिपदीमह इत्यभ्यायाम्य मिवै-
तदहस्तेन चतुर्थस्याह्नो रूप मिदं वसो सुत मन्ध
इन्द्र नेदीय एदिहि मैतु ब्रह्मणस्पति रग्निर्नेता त्वं
सोम क्रतुभिः पिन्वन्त्यपः प्र व इन्द्राय वृहत इति
प्रथमेनाह्ना समान आतानश्चतुर्थे ऽहनि चतुर्थस्याह्नो
रूपं सुधी इव मिन्द्र मा रिषण्य इति सूक्तं हववच्च-
तुर्थे ऽहनि चतुर्थस्याह्नो रूपं मरुत्वाँ इन्द्र वृषभो
रणायेति सूक्तं सुतं सशोदा मिह तं हुवेमेति हव-
वच्चतुर्थे ऽहनि चतुर्थस्याह्नो रूपं तदु त्रैष्टुभं तेन
प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्य-
वते * इमं नु मायिनं हुव इति पर्यासो हववांश्चतुर्थे

* "प्राच्यायाम" ख ।

ऽहनि चतुर्थस्याह्नो रूपं ता उ गायत्रो गायत्रो
वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति तद्वैतच्छन्दो व-
हति यस्मिन् निविद्धीयते तस्माद् गायत्रीषु निविदं
दधाति पिबा सोम मिन्द्र मन्दतु त्वा श्रुधी हवं
विपिपानस्याद्रेरिति वैराजं पृष्ठं भवति बार्हते
ऽहनि चतुर्थे ऽहनि चतुर्थस्याह्नो रूपं यद्वावानेति
धाय्याच्युता त्वा मिद्धि हवामह इति बृहतो योनि
मनु निवर्त्तयति बार्हतं ह्येतदहरायतनेन त्व मिन्द्र
प्रतूर्तिष्विति साम प्रगाथो ऽभ्रातिहा जनितेति
जातवांश्चतुर्थे ऽहनि चतुर्थस्याह्नो रूपं त्य मू षु
वाजिनं देवजूत मिति तार्क्ष्यो ऽच्युतः ॥ ४ ॥

चतुर्थं महर्विधत्ते—"वाग्वै देवता चतुर्थ महर्वहत्येकविंश
स्तोमो वैराजं सामानुष्टुप् छन्दो यथादेवत मेनेन यथास्तोमं यथा-
साम यथाच्छन्दसं राध्नोति य एवं वेद"—इति । पूर्ववद्व्याख्येयम् ॥
चतुर्थस्याह्नो गमकानि मन्त्रगतानि लिङ्गानि दर्शयति—
"यद्वा एति च प्रेति च तच्चतुर्थस्याह्नो रूपं, यद्येव प्रथम मह-
स्तदेतत्पुनर्यच्चतुर्थं यद्युक्तवद्यद्रथवद्यदाशुमद्यत्पिबवद्यत्प्रथमे पदे
देवता निरुच्यते यदयं लोकोऽभ्युदितो यज्जातवद्यद्धववद्यच्छुक्र-
वद्यद्वाचो रूपं यद्वैमदं यद्विरिफितं यद्विच्छन्दा यदूनातिरिक्तं यद्वै-
राजं यदानुष्टुभं यत्कारिष्यद्यत्प्रथमस्याह्नो रूप मेतानि वै चतुर्थ-
स्याह्नो रूपाणि"—इति । आकारः प्रशब्दश्चेति यदेव पूर्वत्र प्रथम

स्याह्नो निरूपक सुक्तम् *, तदत्र चतुर्थस्याह्नो निरूपकम् । प्रथमत्र्यहापेक्षया प्रथम मह: पूर्वं यदुक्तम्, तदेतत्पुनरपि मध्यमत्र्यहापेक्षया प्रथम महरुच्यते ; अतो नवरात्रापेक्षया यत् चतुर्थं, तस्य त्र्यहापेक्षया प्रथमत्वात्प्रथमस्याह्नो लिङ्गान्यत्र योग्यानि ; तत एव तद्युक्तवदित्यारभ्यायं लोकोऽभ्युदित इत्यन्तानि पूर्वोक्तान्येवाभिहितानि †। 'जातवत्' जनिधातुयुक्तम् । 'हववत्' इति ह्वयतिधातुयुक्तम् । 'शुक्रवत्' शुक्रशब्दयुक्तम् । 'वाचो रूपं' वाक्प्रतिपादकशब्दयुक्तम् । 'वैमदं' विमदाख्येन महर्षिणा दृष्टम् । रिफतिधातुः क्लेशार्थे वर्तते ; विशेषक्लेशेन न्यूङ्खेनोच्चारितम् 'विरिफितम्' । 'विच्छन्दाः' इति विविधच्छन्दसा युक्तम् । तदूनं चातिरिक्तं च 'ऊनातिरिक्तम्' अक्षरन्यूनाधिक्यवदित्यर्थः । वैराजाख्यसामसम्बद्धं 'वैराजम्' । अनुष्टुप्छन्दस्सम्बद्धम् 'आनुष्टुभम्' । जातवदित्यादीनि अत्र विशेषलिङ्गानि । भविष्यदर्थवाचिप्रत्ययोपेतं धातुरूपं 'करिष्यत्'–इत्युच्यते । अत्र यन्नूतनं यच्च पूर्वोक्तं प्रथमस्याह्नो रूप मस्ति, तानि सर्वाण्यपि चतुर्थस्याह्नो निरूपकाणि ॥

इदानीं माज्यशस्त्रं विधत्ते—"अग्निं न स्ववृक्तिभिरिति चतुर्थस्याह्न आज्यं भवति ; वैमदं विरिफितं विरिफितस्य रूपं चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"–इति । अग्नि मित्यादिकं (सं० १०.२१.) सूक्तं 'वैमदं' विमदाख्येन महर्षिणा दृष्टम् । 'विरिफितं' न्यूङ्खरूपेण विशेषक्लेशेनोच्चारितम् । अत एव 'विरिफितस्य' विशेषक्लेशरूपतया युक्तस्य विमदाख्यस्य महर्षेः सम्बन्धि ।

* १ भा० १०० पृ० ८ पं० द्रष्टव्यम् ।

† १ भा० १०० पृ० ८—१० पं० द्रष्टव्यम् ।

मतो विमदेन दृष्टत्वं विरिफितत्वञ्चेति लिङ्गद्वयसद्भावाच्चतुर्थे ऽहन्येतत्सूक्तं योग्यम् ; तस्माच्चतुर्थस्याह्नो निरूपकम् ॥

ऋक्सङ्ख्यां छन्दश्चोपजीव्य सूक्तं प्रशंसति—"अष्टर्चं पाङ्क्तम् ; पाङ्क्तो यज्ञः, पाङ्क्ताः पशवः, पशूना मवरुद्ध्यै"–इति । ऋक्सङ्ख्योक्तरत्रोपयुज्यते । यत् किञ्चिच्छन्दोयोगात् 'पाङ्क्तम्' । पूर्वोक्तहविष्पङ्क्त्यादिभिः * यज्ञस्य पाङ्क्तत्वम् । चतुर्भिः पादैर्मुखेन च, पञ्चावयवैः 'पशवः पाङ्क्ताः' । तस्मादेतच्छंसनं पशुप्राप्तैर्भवति ॥

जगतीद्वारा पुनः प्रशंसति—"ता उ दश जगत्यो जागतात:-सवन एष त्र्यहस्तेन चतुर्थस्याह्नो रूपम्"–इति । 'ता उ' तास्तु सूक्तगता अष्टावृचो 'दश जगत्यः' सम्पद्यन्ते । कथं सम्पत्तिरिति, तदुच्यते— सूक्तस्याद्यन्तयोर्ऋचोस्त्रिरावृत्त्या द्वादश पङ्क्तयो भवन्ति ; पङ्क्तिश्चैकचत्वारिंशदक्षरा ; ततो मिलित्वा अशीत्यधिकचतुःशतान्यक्षराणि सम्पद्यन्ते । अष्टाचत्वारिंशदक्षराणां जगतीनां दशसङ्ख्याकानां तावन्त्येवाक्षराणि । एवं जगतीसम्पत्तिः । जगतीच्छन्दोयुक्तं प्रातःसवनं यस्य मध्यमस्य त्र्यहस्य सोऽयं 'जगत्प्रातःसवनः' । पूर्व मेव छन्दसां विवादे जगत्याः प्रातःसवनस्थान मुक्तम् † । अतः प्रातःसवने जगतीसम्बन्धश्चतुर्थस्याह्नो निरूपकः ॥

अनुष्टुप्सम्बन्धेन प्रशंसति—"ता उ पञ्चदशानुष्टुभ आनुष्टुभं ह्येतदहस्तेन चतुर्थस्याह्नो रूपम्"–इति । तास्तु दश जगत्यः 'पञ्चदशानुष्टुभः' सम्पद्यन्ते । तथाहि,— अष्टाचत्वारिंशदक्षरा जगती ; द्वात्रिंशदक्षरानुष्टुप् ; तथा सत्येकैका जगती सार्द्धानुष्टुब्-

* १ भा० ६९२ पृ०, २ भा० १०५ पृ० द्रष्टव्यम् ।

† २ भा० ६६६ पृ० ३ पं० द्रष्टव्यम् ।

भवति। अप्येतदनुष्टुभः सम्बन्धि ; अनुष्टुभो निर्वाहकत्वस्योक्तत्वात् ४। तेनेदं सूक्तं अनुष्टुब्द्वारा चतुर्थस्याह्नो निरूपकम् ॥

गायत्रीद्वारा प्रशंसति—"ता उ विंशतिर्गायत्र्यः पुनः प्रायणीयं ह्येतदहस्तेन चतुर्थस्याह्नो रूपम्"-इति। तास्तु दश जगत्यः पुनरपि प्रत्येकं द्वेधा विभज्यमाना चतुर्विंशत्यक्षरा गायत्री विंशतिर्भवन्ति। गायत्रीसम्बन्धयान्यच—"प्रायणीयं प्रथम मह्र्गायत्रो वा ऐन्द्रवायवो गायत्रं प्रायणीय मह:"-इति-श्रुत्यन्तरात्। इदं चाहर्मध्यमे त्र्यहे प्रथमत्वात् प्रायणीयम्। अतो गायत्री द्वारा सम्बन्धस्य युक्तं मत्वादेतत्सूक्तं (सं० १०.२१.) चतुर्थस्याह्नो निरूपकम्॥

सारयुक्तत्वेन पुनः प्रशंसति—"तदेतदसुत नयस्त यातयाममूक्तं यन्न एव साचात् तथदेतच्चतुर्थस्याह्न आज्यं भवति, यज्ञादेव तद्यज्ञं तन्वते ; वाच मेव तत्पुनरुपयन्ति सन्तत्यै"-इति। 'तदेतत्' आग्नि मित्यादि सूक्तम् (सं० १०.२१.); ऋषिभिः पूर्वं मनुतं होत्रभिरप्यशस्तम्; तस्मात् 'अयातयामं' गतसारं न भवतीति साचाद् यज्ञ एव; यज्ञमध्ये सारत्वात्। तथा सति यदेतत्सूक्तमाज्यं भवेत्, तदानीं यज्ञरूपादेव सूक्ताद् यज्ञरूप मह: 'तन्वते' विस्तारयन्ति, क्रियाहदेवतां 'वाच मेव' तेन सारयुक्तेन पुनः प्राप्नुवन्ति। तच मध्यमस्य त्र्यहस्य 'सन्तत्यै' विच्छेदराहित्याय भवति॥

वेदनपूर्वकं मनुष्ठानं प्रशंसति—"सन्ततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति"-इति। पूर्ववद्व्याख्येयम्॥

अथ प्रउगशस्त्रं विधत्ते— "वायो शुक्रो अयामि ते, विहि

---

* 'चतुर्थं मह्रंसति ०—० चतुष्टुप् छन्दः'-इत्यादिः २५ प० १ खं० द्रष्टव्यम्।

ह्वीवा अवीता, वायो शतं हरीणां, मिन्द्रश्च वायवेषां सोमाना, मा चिकितान सुक्रतू, आ नो विश्वाभिरूतिभिस्, त्व मु वो अप्रहण, मप त्यं वृजिनं रिपु, मम्बितमे नदीतम इत्यानुष्टुभं प्रउग मेति च प्रेति च शुक्रवच्चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"–इति। वायो शुक्र इत्याद्यं प्रतीकम् (सं०४.४७.१.)। विहि ह्वोवा इति (सं० ४.४८.१.) द्वितीयम्। वायो शत मिति (सं० ४.४८,५.) तृतीयम्। इन्द्रश्चेति (सं० ४.४७.२.) चतुर्थम्। आ चिकितानेति (सं० ५.६६.१.) पञ्चमम्। आ नो विश्वाभिरिति (सं० ८.८.१.) षष्ठम्। त्व मु व इति (सं० ६.४४.४.) सप्तमम्। अप त्य मित्यष्टमम् (सं० ६.५१.१३.)। अम्बितम इति (सं० २.४१.१६.) नवमम्। अत्राद्यैस्त्रिभिः प्रतीकैरेकास्तृचः, इतरैः षट्प्रतीकैः षड्टृचाः। एतत्सर्वं मनुष्टुप्छन्दस्कं प्रउगशस्त्रं वाय्यम्। अत्र आकारः, प्रशब्दः, शुक्रशब्दश्चेति लिङ्गानि द्रष्टव्यानि। वायो इत्यत्र शुक्रवल्लिङ्गम्। विहि होत्रेत्यस्या मृचि 'वायवा चन्द्रेण"–इत्याकारः। वायोः शत मित्यत्र "रथ आ यातु"–इत्याकारः। इन्द्रश्चेत्यत्र द्वितीयस्या मृचि "आ यातम्"–इत्याकारः। आ चिकितानेत्यत्र, आ नो विश्वाभिरित्यत्राकारौ स्पष्टौ। त्व मु वो अप्रहण मित्यत्र प्र-शब्दः। अप त्यं वृजिन मित्यत्र तृतीयस्या मृचि "आ सुगम्"–इत्याकारः। अम्बितम इत्यत्र "प्रशस्ति मम्ब"–इति प्र शब्दः। अतो लिङ्गसद्भावेन चतुर्थेऽहनि योग्यत्वात् इदं सर्वं चतुर्थस्याह्नो निरूपकम्॥

मरुत्वतीयशस्त्रस्य प्रतिपदं विधत्ते—"तं त्वा यज्ञेभिरीमह इति (सं० ८.६८.१०.) मरुत्वतीयस्य प्रतिपदीमह इत्यभ्यायाम्य मित्येतदहस्तेन चतुर्थस्याह्नो रूपम्"–इति। अत्र यदेतदीमह

-इति पदं मस्ति, तद् याचामहे इत्यस्मिन्नर्थे वर्त्तते ; याञ्चा च दीर्घकालेन फलप्रदा ; तस्मादेतदहः 'अभ्यायाम्य मिव' अभितो दीर्घं कर्त्तव्य मिव प्रयोगबाहुल्येन दृश्यते। तेन याञ्चार्थवाचि-धातुद्वारेण दीर्घत्वेन साम्यप्रतीतेरिदं मन्त्रवाक्यं चतुर्थस्याह्नो निरूपकम् ॥

मन्त्रान्तराणि विधत्ते— "इदं वसो सुत मन्ध ( सं० ८. २.१. ), इन्द्र नेदीय एदिहि ( सं० ८.५३.५. ), प्रैतु ब्रह्मणस्पति ( सं० १.४०.३. ), रग्निर्नेता ( सं० ३.२०.४. ), त्वं सोम क्रतुभिः ( स० १.९१.२.), पिन्वन्त्यपः ( स० १.६४.६. ), प्र व इन्द्राय बृहत ( ८.८९.३. ) इति प्रथमेनाह्ना समान आतानश्चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"–इति। 'आतानः' मन्त्रसृष्टिः। सा चेदं वसो सुत मित्यादिका। अस्मिन् चतुर्थेऽहनि पूर्वोक्तेन प्रथमेनाह्ना समानात्साम्यं चैकं लिङ्गम् ॥

सूक्तान्तरं विधत्ते—"सुधी इव मिन्द्र मा रिनण्य इति ( सं० २.१०. ) सूक्तं हववच्चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"–इति। हवमप्येतित मेतस्याह्नो विशेषलिङ्ग मिति पूर्व मुक्तम् ॥

अन्यस्मिन्नपि सूक्ते तल्लिङ्गं दर्शयति— "मरुत्वाँ इन्द्र वृषभो रणायेति ( सं० ३.४७. ) सूक्तं, सुग्रं सहोदा मिह तं हुवेमेति हववच्चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"–इति। मरुत्वानित्यस्य सूक्तस्य "उग्रम्"–इत्यादिरन्तिमः पादः ; तत्र "हुवेम"–इति हव-शब्दार्थवाची धातुर्दृश्यते ; अतो लिङ्गसद्भावादह्नो निरूपकम् ॥

एतत्सूक्तं प्रशंसति—"तद् त्रैष्टुभं तेन प्रतिष्ठितपदेन सवन दाधारायतनादेवैतेन न प्रच्यवत"–इति। 'तद्' तत्तु सूक्तं त्रिष्टुप्-छन्दस्कम्। प्रतिष्ठितानि पदानि प्रतिनियताक्षरसङ्ख्यायुक्ताः पादाः

यस्मिन् सूक्ते तत्सूक्तं 'प्रतिष्ठितपदम्'। तादृशेन तेन सूक्तेन 'सवनं' माध्यन्दिनसवनगतं अप्रचलतीयशस्त्रं 'दाधार' धारितवान् भवति। एतेन सूक्तेन स्वयम् 'आयतनात्' स्वकीयगृहात् कदाचिदपि न प्रच्यवते ॥

अन्यं तृचं विधत्ते—"इमं नु मायिनं हुव इति पर्यासो हव-वांश्चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"—इति। इमं न्वित्यादिसूक्त-विशेषः ( सं० ८.७६.१–३.) परितः पूर्वोक्ताना मन्त्रे प्रक्षेपणीयः। तत्र "हुवे"—इति ह्वयशब्दार्थो धातुरस्ति, अतश्चतुर्थस्याह्नो निरू-पकस्तृचः ॥

तदेतत्प्रशंसति—"ता उ गायत्र्यो गायत्री वा एतस्य ताहस्य मध्यन्दिनं वहन्ति"—इति। 'ता उ' ताः सूक्तगता ऋचः गायत्री-च्छन्दस्काः गायत्र्यश्च 'एतस्य' मध्यमस्य ताहस्य 'मध्यन्दिनं' सवनं वहन्ति। पूर्वोक्तनिर्वाहक्रमेण जगत्याः प्रातःसवनवाहित्वं गायत्र्या माध्यन्दिनसवनवाहित्वं च दर्शितम् ॥

अस्मिन् तृचे निविद्धानं विधत्ते—"तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते ; तस्माद्गायत्रीषु निविदं दधाति"—इति। 'यस्मिन्' छन्दसि 'निवित्' पदसमूहः प्रक्षिप्यते, तदेतत् छन्दो 'वहति' सवनस्य निर्वाहकं भवति। तस्मान्निर्वहणाय तासु गायत्रीषु निविदं दध्यात् ॥

अथ वैराजसामसम्बद्धं तृचद्वयं विधत्ते—"पिबा सोम मिन्द्र मन्दतु त्वा, सुधी हवं विपिपानस्याद्रेरिति वैराजं पृष्ठं भवति, बार्हते ऽहनि चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"—इति। पृष्ठस्तोत्र-साधनस्य वैराजसाम्नः आधारः "पिबा सोमम्"—इत्यादि ( सं० ७.२२.१–३.) स्तोत्रियस्तृचः, "सुधी हवम्"—इत्याद्यनुरूपः ( सं०

७.२२.४–६. ) ; अतो वैराजसामसम्बन्धो लिङ्गम् । किञ्च बृह-त्साम्नो ऽपत्यं वैराजसाम, इदं चार्हयुग्मरूपत्वात् बृहत्सामसम्बन्धि ; अतोऽपि कारणात् अग्निवहनि एतत् तृचद्वयं युक्तम् ॥

ऋगन्तरं विधत्ते—"यद्वावानेति धाय्याच्युता"–इति। अच्यु-तत्वं सर्वसम्बन्धि लिङ्ग मित्युक्तम् ॥

तस्मात्तृच ऊर्ध्वं मन्त्रं प्रगाथं विधत्ते—"त्वा मिद्धि हवामह इति ( सं० ६.४६.१,२. ) बृहतो योनि मनु निवर्त्तयति ; बार्हत मेतदहरायतनेन"–इति । त्वा मिद्धीत्यस्या मृचि बृहत्साम उत्पन्न ; तस्मादेतं योनिभूतं प्रगाथं पूर्वोक्तधाय्याम् 'अनु' पश्चात् शंसेत् । 'एतदहरायतनेन' मुख्याहस्वरूपस्थानेन 'बार्हतं' बृह-त्सामसम्बन्धं लिङ्ग मित्युक्तम् ॥

वैराजसाम्नः सम्बन्धिनं प्रगाथं विधत्ते—"त्व मिन्द्र प्रतूर्ति-ष्विति ( सं० ८.९९.५,६. ) सामप्रगाथः"–इति ॥

तत्र लिङ्गं दर्शयति—"अशस्तिहा जनितेति जातवांश्चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"–इति । उक्ते प्रगाथे तृतीयपादोऽयम्। अत्र "अशस्तिहा जनिता"–इति ; ततोऽयं जातवान् । 'जनि'-धातुयुक्तं जातवत्त्वं चैतस्याह्नो लिङ्गम् ॥

त्य मू ष्वितिसूक्तविशेषस्याच्युतत्वं लिङ्गं दर्शयति—"त्य मू षु वाजिनं देवजूत मिति ( सं० १०.१७८. )तार्क्ष्यो ऽच्युतः ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां प्रथमाध्याये
( एकविंशाध्याये ) चतुर्थः खण्डः ॥ ४ ॥

---

॥ अथ पञ्चमः खण्डः ॥

कुह श्रुत इन्द्रः कस्मिन्नद्येति सूक्तं वैमदं विरिफितं विरिफितस्य रूपेश्चतुर्थे ऽहनि चतुर्थस्याह्नो रूपं युध्मस्य ते वृषभस्य स्वराज इति सूक्तं गुरुं गभीरं तनुषाभ्युग्र मिति जातवच्चतुर्थे ऽहनि चतुर्थस्याह्नो रूपं तद् चैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते त्य मु वः सत्रासाह मिति पर्यासो विश्वासु गीर्ष्वायत मित्यभ्यायास्य मिवैतदहस्तेन चतुर्थस्याह्नो रूपं ता उ गायत्रो गायत्री वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माद गायत्रीषु निविदं दधाति विश्वो देवस्य नेतुर् तत्सवितुर्वरेण्य मा विश्वदेवं सत्पति मिति वैश्वदेवस्य प्रतिपदनुचरौ वाहते ऽहनि चतुर्थेऽहनि चतुर्थस्याह्नो रूप मा देवो यातु सविता सुरत्न इति सावित्र मेति चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम् प्र द्यावा यज्ञैः पृथिवी नमोभिरिति द्यावापृथिवीयं प्रेति चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम् प्र ऋभुभ्यो दूत मिव वाच मिष्य इत्यार्भवं प्रेति च वाच मिष्य इति च चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम् प्र शुक्रैतु देवी मनीषेति

वैश्वदेवं मेति च शाकृवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपं ता उ विच्छन्दसः सन्ति द्विपदाः सन्ति चतुष्पदास्तेन चतुर्थस्याह्नो रूपं वैश्वानरस्य सुमतौ स्यामेत्याग्निमारुतस्य प्रतिपद्दितो जात इति जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपं क ईं व्यक्ता नरः सनीळा इति मारुतं न किर्ह्येषां जनूंषि वेदेति जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपं ता उ विच्छन्दसः सन्ति द्विपदाः सन्ति चतुष्पदास्तेन चतुर्थस्याह्नो रूपं जातवेदसे सुनवाम सोम मिति जातवेदस्याच्युताग्निं नरो दीधितिभिररण्योरिति जातवेदस्यं हस्तच्युती जनयन्तेति जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपं ता उ विच्छन्दसः सन्ति विराजः सन्ति त्रिष्टुभस्तेन चतुर्थस्याह्नो रूपं मह्नो रूपम् ॥ ५ ॥

॥ इत्यैतरेयब्राह्मणे पञ्चमपञ्चिकायां प्रथमोऽध्यायः॥१॥

विमदेन महर्षिणा दृष्टं न्यूङ्खयितं सूक्तं विधत्ते—"कुह श्रुत इन्द्रः कस्मिन्नद्येति ( सं० १०.२२. ) सूक्तं वैमदं विरिफितं विरिफितस्य ऋपेयतुर्थेऽहनि चतुर्थस्याह्नो रूपम्"-इति। पूर्ववद् व्याख्येयम् ॥

सूक्तान्तरं विधत्ते—"युश्वध्य ते वृषभस्य स्वराज इति सूक्तमुग्रं गभीरं जनुषाभ्युग्र मिति जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो

रूपम्"–इति । युक्ष्वेति ( सं० ३.४६. ) सूक्ते "उरु गभीरम्"–इति यः पादः, तत्र "जनुषा"–इतिश्रवणात् 'जातवत्' जनिधातुयुक्तं लिङ्गं मस्ति ॥

सूक्तगतं छन्दोऽवलम्ब्य प्रशंसति—"तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते"–इति । पूर्ववद् व्याख्येयम् ॥

तृतीयं तृचं विधत्ते— "त्व मु वः सत्रासाह मिति ( सं० ८.८१.७–९. ) पर्यासो विश्वासु गीर्ष्वायत मित्यभ्यायाम्य मिवैतदहस्तेन चतुर्थस्याह्नो रूपम्"–इति । परितः प्रक्षेपणीयः 'पर्यासः' अन्तिमस्तृचः । तस्मिन् "विश्वासु"–इति यः पादः, तत्र आयत मिति शब्दो दीर्घत्ववाचकः श्रूयते । अहश्चैतत् 'अभ्यायाम्य मिव' प्रयोगाधिक्यादतिदीर्घं मिव; अतोऽत्र दीर्घत्वं लिङ्गम् ॥

छन्दो द्वारा प्रशंसति— "ता उ गायत्रो गायत्रो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति; तदेतच्छन्दो वहति यस्मिन्निविद्धीयते; तस्माद् गायत्रीषु निविदं दधाति"–इति । पूर्ववद् व्याख्येयम् ॥

शस्त्रान्तरं विधत्ते— "विश्वो देवस्य नेतुस्, तत्सवितुर्वरेण्य, मा विश्वदेवं सत्पति मिति वैश्वदेवस्य प्रतिपदनुचरौ; वार्हते ऽहनि चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"–इति । "विश्वो देवस्य"–इति ( सं० ५.५०.१. ) ऋगेका, "तत्सवितुः"–इति ( सं० ३.६२.१०, ११. ) द्वे ऋचौ । एष तृचो तृचसामसम्बन्धी, वैश्वदेवस्य प्रतिपत् । "आ विश्वदेवम्"–इति ( सं० ५.८२.७–९. ) तृचो ऽनुचरः । अह्नो युग्मत्वाद् वार्हतत्वम्; तृचसामसम्बन्ध एव मन्त्रलिङ्गम् ॥

सवितृदेवताकं सूक्तं विधत्ते— "आ देवो यातु सविता सुरत्न इति (सं० ७.४५) सावित्रं मेति चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्" –इति। आकारोऽत्र लिङ्गम् ॥

प्र-शब्दलिङ्गोपेतं सूक्तं विधत्ते—"प्र द्यावा यज्ञैः पृथिवी नमोभिरिति ( सं० ७.५३. ) द्यावापृथिवीयं; प्रेति चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"–इति ॥

प्र-शब्दो वाक्सम्बन्धश्चेति लिङ्गद्वयोपेतं सूक्तं विधत्ते— "प्र ऋभुभ्यो दूत मिव वाच मिष्य इत्यार्भवं ; प्रेति च वाच मिष्य इति च चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"–इति। ऋभुदेवताकत्वं स्पष्टम्। प्र-शब्दो वाक्सम्बन्धश्च प्रेति चेत्यादिना प्रदर्श्यते ॥

प्र-शब्देन ग्रावन्-शब्देन चोपेतं सूक्तान्तरं विधत्ते —"प्र ग्रावेतु देवी मनीषेति ( सं० ७,३४. ) वैश्वदेवं ; प्रेति च ग्रावचतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"–इति। अत्र बहुदेवताकत्वाद् वैश्वदेवत्वम् ॥

नानाविधच्छन्दोयुक्तत्वरूपं लिङ्गान्तरं दर्शयति— "ता उ विच्छन्दसः सन्ति द्विपदाः सन्ति चतुष्पदास्तेन चतुर्थस्याह्नो रूपम्"–इति। 'ता उ' तास्तु सूक्तगता ऋचो 'विच्छन्दसः' विविधच्छन्दोयुक्ताः; तत्रैकाविंशतिः द्विपदाः सन्ति, अवशिष्टाश्चतुष्पदाः सन्ति ; 'तेन' विच्छन्दस्त्वेन चाह्नो निरूपणम् ॥

शस्त्रान्तरस्थं प्रतिपत्सूक्तं विधत्ते—"वैश्वानरस्य सुमतौ स्यामेत्याग्निमारुतस्य प्रतिपद् ; इतो जात इति जातवच्चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"–इति। तस्य सूक्तस्य ( सं० १.९८. ) प्रथमाया ऋचस्तृतीयपादे "इतो जातः"–इतिश्रवणाज्जातवच्छब्दोपेतं लिङ्ग मस्ति ॥

मरुद्देवताकं सूक्तं विधत्ते—"क ईं व्यक्ता नरः सनीळा इति मारुतं; न किर्ह्येषां जनूंषि वेदेति जातवच्चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"–इति। अस्मिन् सूक्ते (सं० ७.५६.) तृतीयस्या ऋचि * "मरुद्भिरस्तु"–इतिश्रवणान्मारुतम्। न किर्ह्येत्यादिकः प्रथमायाः † ऋचस्तृतीयः पादः। तत्र "जनूंषि"–इति 'जनि'धातुयुक्तत्वं लिङ्गम्॥

विविधच्छन्दस्त्वयुक्तं लिङ्गान्तरं दर्शयति—"ता उ विच्छन्दसः सन्ति द्विपदाः सन्ति चतुष्पदास्तेन चतुर्थस्याह्नो रूपम्"–इति। अस्मिन् सूक्ते एकादश द्विपदाः, इतराश्चतुष्पदाः ‡॥

अच्युतत्वलिङ्गोपेतामृचं विधत्ते—"जातवेदसे सुनवाम सोम मिति (सं० १.९९.) जातवेदस्याच्युता"–इति।

जातवेदोदेवताकमन्यत् सूक्तं विधत्ते—"अग्निं नरो दीधितिभिररण्योरिति (सं० ७.१.) जातवेदस्यं; हस्तच्युती जनयन्तेति जातवच्चतुर्थे ऽहनि चतुर्थस्याह्नो रूपम्"–इति। जातस्य जगतो वेदितृत्वात् अग्निरेव 'जातवेदाः'। हस्तच्युतीत्यादिः द्वितीयः पादः; तत्र "जनयन्त"–इतिश्रवणाज्जनिधातुयुक्तं लिङ्गम्॥

विविधच्छन्दोरूपं लिङ्गान्तरं दर्शयति—"ता उ विच्छन्दसः सन्ति विराजः सन्ति त्रिष्टुभस्तेन चतुर्थस्याह्नो रूप मह्नो रूपम्"–इति। अत्राष्टादश विराजः, इतरास्त्रिष्टुभः॥

---

* पञ्चम्या ऋचीति तु युक्तम्।

† द्वितीयाया इति वक्तव्यम्, न हि प्रथमा ऋक् चतुष्पदा।

‡ क ईं व्यक्ता इति पञ्चविंशत्यृचं सूक्तम्। तत्र आद्या एकादश द्विपदा, द्विपदपरा विराजः; अपराश्चतुर्दश त्रिष्टुभः। यदिह यदुक्तं पुरस्तात् 'तृतीयस्या ऋचि'–इति, यच्चोक्तं 'प्रथमाया ऋच'–इति, तदुभयमेव भाष्यकारस्य प्रमादविलसितमिति स्फुटम्।

अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां प्रथमाध्याये
( एकविंशाध्याये ) पञ्चमः खण्डः ॥ २ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायाः प्रथमोऽध्यायः ॥

## ॥ अथ द्वितीयाध्यायः ॥

(२१)

॥ प्रथमः खण्डः ॥

॥ ॐ ॥ गौर्वै देवता पञ्चम मह॑र्वहति त्रिणव स्तोमः
शाक्वरं साम पङ्क्तिश्छन्दो* यथादेवत मेनेन यथास्तोमं
यथासाम यथाच्छन्दसं राध्नोति य एवं वेद यद्वै नेति
न प्रेति यत्स्थितं तत्पञ्चमस्याह्नो रूपं यद्वेव द्वितीय
महस्तदेतत्पुनर्यत्पञ्चमं यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्
यद्वृषण्वद् यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते
यदन्तरिक्ष मभ्युदितं यद्दुग्धवद् यदूधवद् यद्धेनुमद्
यत्पृश्निमद् यन्मद्वद् यत्पशुरूपं यदध्यासवद्विशुद्धा
रूपं हि पशवो यज्जागतं जागता हि पशवो यद्बा-
र्हतं बार्हता हि पशवो यत्पाङ्क्तं पाङ्क्ता हि पशवो
यद्वामं वामं हि पशवो यद्विषाववद्विर्हि पशवो यद्
वपुष्मद् वपुर्हि पशवो यच्छाक्वरं यत्पाङ्क्तं यत्कुर्वद् यद्
द्वितीयस्याह्नो रूपमेतानि वै पञ्चमस्याह्नो रूपाणीम
मू षु वो अतिथि मुषर्बुध मिति पञ्चमस्याह्न आज्यं

---

* "पङ्क्तिच्छन्दो" घ, ङ ।

भवति जागत मध्यासवत्यशुरूपं पञ्चमे ऽहनि पञ्च-मस्याह्नो रूपं मा नो यज्ञं दिविस्पृश मा नो वायो मह्रे तने रथेन पृथुपाजसा वहवः सूरचक्षस इमा उ वां दिविष्टयः पिबा सुतस्य रसिनो देवं देवं वो ऽवसे देवं देवं बृहदु गायिषे वच इति वार्हतं प्रउगं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं यत्याज्यजन्यया विशेति मरुत्वतीयस्य प्रतिपत्त्याज्यजन्ययेति पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं मिन्द्र इत्सोमपा एक इन्द्र नेदीय एदिह्युत्तिष्ठ ब्रह्मणस्पते ऽग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपो बृहदिन्द्राय गायतेति द्वितीये-नाह्ना समान आतानः पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं मवितासि सुन्वतो वृक्तवर्हिष इति सूक्तं महत्याङ्कं पञ्चपदं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं मित्था हि सोम इन्मद इति सूक्तं महत्याङ्कं पञ्चपदं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं मिन्द्र पिव तुभ्यं सुतो मदायेति सूक्तं महत् चैष्टुभं तेन प्रति-ष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते मरुत्वाँ इन्द्र मीढ्व इति पर्यासो नेति न प्रेति पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं ता उ गायत्री गायत्री वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति तद्वै-

तच्छन्दो वहति यस्मिन्निविद्धीयते तस्माद् गायत्रीषु निविदं दधाति ॥ १ (६) ॥

अथ नवरात्रापेक्षया पञ्चमं, मध्यमत्र्यहापेक्षया द्वितीय मह्वर्विधत्ते —"गौर्वै देवता पञ्चम मह्वर्वहति त्रिणव स्तोमः शाक्वरं साम पङ्क्तिश्छन्दो यथादेवत मेनेन यथास्तोमं यथासाम यथाच्छन्दसं राध्नोति य एवं वेद"–इति । पूर्वत्र वागेकं गौरेकं द्यौरेक मिति देवताया रूपत्रय मुक्तम् ; तत्र वागात्मकं रूपं चतुर्थे ऽहन्युक्तम्, पञ्चमस्याह्नो गौरेव देवता निर्वाहिका। स्तोमानां मध्ये त्रिणवो निर्वाहकः । तस्य त्रिणवस्य स्तोमस्य स्वरूपं छन्दोगैरेव माम्नातम्—"नवभ्यो हिङ्करोति स तिसृभिः स पञ्चभिः स एकया, नवभ्यो हिङ्करोति स एकया स तिसृभिः सपञ्चभि. ; नवभ्यो हिङ्करोति स पञ्चभिः स एकया स तिसृभिः ; वज्रो वै त्रिणवः"–इति * । अस्याय मर्थः । एकस्तृचस्त्रिभि पर्यायैरावर्तनीयः ; तत्र प्रथमायास्त्रिः पाठ, द्वितीयायाः पञ्चकृत्वः पाठः, तृतीयस्याः सकृदेव पाठः । द्वितीयपर्याये प्रथमायाः सकृत्पाठः, द्वितीयस्याः त्रिः पाठः, तृतीयस्याः पञ्चकृत्वः पाठः । तृतीयपर्याये प्रथमायाः पञ्चकृत्वः पाठः, द्वितीयस्या. सकृत्पाठः, तृतीयस्यास्त्रि. पाठः । एव माहत्ताभिः सप्तविंशतिसङ्ख्याकाभिर्ऋग्भिस्त्रिणवः स्तोमो भवति । अन्यत्पूर्ववद् व्याख्येयम् ॥

पञ्चमस्याह्नो मन्त्रलिङ्गानि दर्शयति—"यद्वै नेति न प्रेति यत् स्थितं तत्पञ्चमस्याह्नो रूपम्"–इति । आकारः प्र शब्दस्य नाम

* ता॰ ब्रा॰ २।९,२ ख॰ ।

लिङ्ग मिति नकारद्वयेन प्रतिषिध्यते। यत्तु 'स्थितं' तिष्ठति-धात्वर्थरूप मप्रचलितं तत् पञ्चमस्याह्नो निरूपकम् ॥

द्वितीयेऽहन्युक्तं लिङ्गजातं पञ्चमेऽहन्यतिदिशति— "यद्वेव द्वितीय महस्तदेतत् पुनर्यत्पञ्चमम्"—इति। नवरात्रापेक्षया यत्पञ्चम महर्विधीयते, तत् पृथङ् न भवति, किन्तु यदेव द्वितीय महस्तदेव पञ्चमत्वेन पुनः क्रियते ; तस्मात् लिङ्गजात मत्रानुसन्धेय मित्यर्थः * ॥

तानि लिङ्गानि दर्शयति—"यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद् वृषण्वद् यद् वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदन्तरिक्ष मभ्युदितम्"—इति। पूर्ववद् व्याख्येयम् ॥

अथ विशेषलिङ्गानि दर्शयति— "यद्दुग्धवद् यदूधवद्धेनुमद्यत्पृश्निमद्यन्मद्वद्यत्पशुरूपं यदध्यासवद् विक्षुद्रा इव हि पशवो, यज्जागतं जागता हि पशवो, यद्बार्हतं बार्हता हि पशवो, यत्पाङ्क्तं पाङ्क्ता हि पशवो, यद् वामं वामं हि पशवो, यद्धविष्मद्धविर्हि पशवो, यद्वपुष्मद्वपुर्हि पशवो, यच्छाक्वरं यत्पाङ्क्तं यत्कुर्वद्, यद् द्वितीयस्याह्नो रूप मेतानि वै पञ्चमस्याह्नो रूपाणि"—इति। दुग्धोधधेनुपृश्निमत्त्वैरुपेतं यद्यदस्ति, तत्सर्वं लिङ्गम्। तथाविधं पशुरूपं यदस्ति, तदपि लिङ्गम्। पशुरूपस्य बहुविधत्व मेव यदध्यासवदित्यादिना प्रपञ्च्यते। अधिकपादस्य प्रक्षेपः 'अध्यासः'। प्रकृतौ यावदस्ति, तावतोऽप्यधिकपादोपेतम् 'अध्यासवत्'; पशूना मपि चतुर्भ्यः पादेभ्योऽधिकं मुख मेकं परिगण्यते ; अतोऽध्यासवत् पशुरूपं भवति। तदेव 'विक्षुद्रा इव'—इत्यनेन स्पष्टीक्रियते। विविधाः क्षुद्राः 'विक्षुद्राः'; एकस्मादन्यो न्यूनः,

* २आ० ३।७३० २ प० द्रष्टव्यम्।

तस्मादप्यन्यो न्यूनः ;—गजापेक्षया अश्वः क्षुद्रः, तदपेक्षया महिषः क्षुद्रः, ततो गौः, ततो ऽजेत्येवं पशुषु क्षुद्रत्वं द्रष्टव्यम् । 'जागतं' जगतीसम्बद्धं यदस्ति, तदपि पशुरूपम् ; सोमाहरण-प्रसङ्गे * जगत्याः पशुना मानीतत्वाज्जागतत्वम् । तथा 'बार्हतं' बृहतीसम्बद्धं पशुरूपम् ; पशुविषये छन्दसा माजिधावने † बृहत्या विजयेन पशूनां बार्हतत्वम् । पङ्क्तिच्छन्दःसम्बद्ध मपि पशुरूपम् ; पङ्क्तिमुखेन पञ्चावयवैः उपेताः पशवः पाङ्क्ताः । यत् 'वामं' रमणीयं सूक्तं स्वरवर्णादिभिः श्राव्यं भवति, तदपि पशुरूपम् ; लोकेऽपि गवाश्वादिपशव इति यदस्ति, तद् 'वामं' रमणीयं दृश्यते । 'हविष्मद्' हविःसञ्ज्ञोपेतं यदस्ति, तदपि पशु-स्वरूपम् ; पशवो हि देवतासम्बद्धहविःस्वरूपेण दृश्यन्ते । 'वपु-ष्मद्' वपुःसञ्ज्ञोपेतं यदस्ति, तदपि पशुस्वरूपम् ; पशवो हि वपुः-पुष्टाङ्गा भूत्वा दृश्यन्ते । "विदा मघवन्"—इत्यादिषु महा-नाम्नीसूक्तस्थं 'शाक्वरं' साम ‡ ; तत्सम्बद्ध मेकं लिङ्गम् । पाङ्क्त मिति यत् पुनर्वचनं, तत् पशुसञ्ज्ञायुक्तं ; पूर्वत्र पङ्क्तिच्छन्दः-सम्बद्ध मिति विशेषः । 'कुर्वत्'—इति वर्त्तमानार्थवाचिप्रत्ययोपेतं धातुमात्रं विवक्षितम् । एतच्च द्वितीयस्याङ्गो रूप मिति पूर्वं सूक्तम् § । एवं च सति यानि द्वितीयेऽप्युक्तानि लिङ्गानि, यानि चात्र नूतनानि, एतानि सर्वाण्यपि पञ्चमस्याङ्गो निरूपकाणि द्रष्टव्यानि ॥

---

* २ भा० ११६ पृ० १७पं०—११७ पृ० १६ पं० द्रष्टव्यम् ।

† १ भा० २५७ पृ० १०पं० द्रष्टव्यम् ।

‡ ग्रामसंहितायां महानाम्नीनाम प्रथमैव साम, तथाऽप्यत्राप्यधनानोऽध्यापयन्ति ।

§ २ भा० ४१६ पृ० ६ पं० द्रष्टव्यम् ।

आज्यशस्त्रं विधत्ते — "इम मू षु वो अतिथि मुषर्बुध मिति पञ्चमस्याह्न आज्यं भवति ; जागत मध्यासवत्पशुरूपं, पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"—इति। इम मू षिवत्यादि सूक्ते ( सं० ६. १५. ) ; जगतीच्छन्दोयुक्ता आद्या नवर्चः शंसनीयाः *। तत्र तृतीयस्या मृचि जगतीच्छन्दस्केभ्यः चतुर्थपादेभ्योऽधिकः पादो "भरद्वाजाय सप्रथः"—इत्येषः समाम्नायते। अतोऽधिकपादयुक्तत्वादिद मध्यासवल्लिङ्गं तत्र पशुस्वरूपम्; पशोरपि पादचतुष्टयादधिकस्य पुच्छस्य विद्यमानत्वात्। तदेतल्लिंगयुक्तं पञ्चमे ऽहनि विनियोक्तुं युक्तं योग्यम्; तस्मादेतत्पञ्चमस्याह्नो 'रूपं' निरूपकम् ॥

अथ प्रउगशस्त्रं विधत्ते— "आ नो यज्ञं दिविस्पृशं, आ नो वायो महे तने, रथेन पृथुपाजसा, बहवः सूरचक्षस, इमा उ वां दिविष्टयः, पिबा सुतस्य रसिनो, देवं देवं वो ऽवसे देवं देवं †, बृहदु गायिषे वच इति बार्हतं प्रउगं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्" —इति। आ नो यज्ञ मिति ( सं० ८.१०१.९,१०. ) द्वे ऋचौ, आ नो वायो इत्येका ( सं० ८.४६.२५. ), सोऽयं प्रथमस्तृचः; रथेनेत्यादिः ( सं० ४.४६.५-७. ) द्वितीयः, बहव इत्यादिः ( सं० ७. ६६.१०-१२.) तृतीयः, इमा उ वा मित्यादिः (सं० ७.७४.१-३.) चतुर्थः, पिबा सुतस्येत्यादिः ( सं० ८.३.१-३.) पञ्चमः, देवं देव मिति ( सं० ८.२७.१३-१५.) षष्ठः, बृहदिति ( सं० ७.९६.१-३.) सप्तमः। तदेतत्सप्तकं बृहतीच्छन्दोयोगाद् 'बार्हतम्'। अतो लिंगसद्भावात्पञ्चमेऽहनि योग्यतया तस्य निरूपकम् ॥

* इम मू षु व इत्येकोनविंशत्यर्चं सूक्तम्। तत्रादितो नवर्च एवात्र शंसनीया भवन्ति, "इम मू षु वो अतिथि मुषर्बुध मिति नवाज्यम्"—इति कल्पोक्तेः ( ७।१२. )।

† पादमध्ये श्रूयमाणं देवं देवमिति पादाधिक्यद्योतकपदम्।

अथ प्रस्तारस्य प्रतिपदं विधत्ते—"यत्पाञ्चजन्यया विशेति मरुत्वतीयस्य प्रतिपत्पाञ्चजन्ययेति पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"—इति। अस्मिंस्तृचे प्रथमायामृचि ( सं० ८.६३.७. ) पाञ्चजन्येति पदे पञ्चशब्दयोगो लिंगम् ॥

अथ द्वितीयेनाह्ना समानत्वलिंगयुक्तं प्रस्तकृतिं विधत्ते—"इन्द्र इत्सोमपा एक ( सं० ८.२.४. ), इन्द्र नेदीय एदिहि ( सं० ८.५३.५. ), उत्तिष्ठ ब्रह्मणस्पते ( सं० १.४०.१. ), ऽग्निर्नेता ( सं० ३.२०.४. ), त्वं सोम क्रतुभिः ( सं० १.९१.२. ), पिन्वन्त्यपो ( सं० १.६४.६.), प्रवदिन्द्राय गायतेति ( सं० ८.८९.१.), द्वितीयेनाह्ना समान आतानः, पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"-इति। 'आतान' प्रस्तकृतिः ॥

अथ मदशब्दलिंगेन पञ्चपादोपेतपाङ्क्तत्वलिंगेन चोपेतं सूक्तं विधत्ते— "अवितासि सुन्वतो वृक्तबर्हिष इति ( सं० ८.३६. ) सूक्तं मदवत् पाङ्क्तं पञ्चपदं, पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"—इति। अत्र द्वितीयपादे "पिबा सोमं मदाय"—इतिवचनात् इदं सूक्तं मदवद्भवति। पञ्चपादाः विस्पष्टाः * ॥

तादृशमेवान्यत्सूक्तं विधत्ते—"इत्था हि सोम इन्मद इति सूक्तं ( सं० १.८०. ) मदवत्पाङ्क्तं, पञ्चपदं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"—इति ॥

पुनरपि मदशब्दलिंगोपेतं त्रिष्टुप्छन्दस्कं सूक्तं विधत्ते— "इन्द्र पिब तुभ्यं सुतो मदायेति ( सं० ६.४०.) सूक्तं मदवत्त्रैष्टुभं;

---

* अवितासि सुन्वतो वृक्तबर्हिषः, पिबा सोमं मदाय कं शतक्रतो। यं ते भाग मधारयन्, विश्वा सेहान पृतना उरु ज्रय, समप्सुजिन्मरुत्वान्, इन्द्र सत्पते"—इति।

तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते"–इति। पूर्ववद् व्याख्येयम् ॥

धाकारप्रगन्द्ववर्जितमरुत्वतीयशस्त्रस्यान्ते प्रक्षेपणीयं तृचं विधत्ते—"मरुत्वाँ इन्द्र मीढ्व इति पर्यासो नेति न प्रेति पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"–इति। उक्तो प्रक्षेपणीयः पर्यासः ॥

तस्मिंस्तृचे निविद्धानं विधत्ते— "ता उ गायत्रो गायत्रो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति तदेतच्छन्दो वहति, यस्मि-न्निविद्धीयते; तस्माद् गायत्रीषु निविदं दधाति"–इति। पूर्व-वद् व्याख्येयम् ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां द्वितीयाध्याये
( द्वाविंशाध्याये ) प्रथमः खण्डः ॥ १ (६) ॥

---

॥ अथ द्वितीयः खण्डः ॥

महानाम्नीष्वत्र स्तुवते शाक्वरेण साम्ना राथन्तरे ऽहनि पञ्चमे ऽहनि पञ्चमस्याह्नो रूपमिन्द्रो वा एताभिर्महानात्मानं निरमिमीत तस्मान्महानाम्न्यो ऽथो इमे वै लोका महानाम्न्य इमे महान्त इमान्वै लोकान् प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद्य-दिदं किं च यदिमाल्लोकान् * प्रजापतिः सृष्ट्वेदं

---

* "यदिमान् लोकान्" क, ञ, ठ, "यदिमांल्लोकान्" ख, ग, ङ, ज, "यदिमाल्लोकान्" घ, ट, "यदिमाँल्लोकान्"–इतीत्र व्यवहारमयव ।

सर्वं शक्नोद्यदिदं किञ्च तच्छक्वर्योऽभवंस्तच्छक्वरीणां
शक्वरीत्वं ता ऊर्ध्वाः सीम्नो ऽत्यसृजत यदूर्ध्वाः
सीम्नो ऽत्यसृजत तत्सिमा अभवंस्तत्सिमानां
सिमात्वं स्वादोरित्था विषूवत उप नो हरिभिः सुत
मिन्द्रं विश्वा अवीवृधन्नित्यनुरूपो वृषण्वान् पृश्नि-
मान्मद्वान्वृधन्वान् पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं
यद्वावानेति धाय्याच्युताभि त्वा शूर नोनुम इति
रथन्तरस्य योनि मनु निवर्तयति राथन्तरं ह्येतदह-
रायतनेन मो षु त्वा वाघतश्चनेति सामप्रगाथो
ऽभ्यासवान् पशुरूपं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं त्य
मू षु वाजिनं देवजूत मिति तार्क्ष्योऽच्युतः ॥ २ (७)॥

अथ शाक्वरसामसम्बन्धेन लिङ्गेन युक्ता ऋचो विधत्ते— "महानाम्नीभिः स्तुवते शाक्वरेण साम्ना राथन्तरे ऽहनि पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"—इति। "विदा मघवन्"—इत्यादयो नव ऋचो महानाम्नीसञ्ज्ञकाः *। तासूत्पन्नाः शाक्वराख्येन साम्ना † स्तुवते ; अहश्चेद मयुग्मत्वाद्राथन्तरम् ; शाक्वरं साम च रथन्तररूपजन्यत्वाद्राथन्तरम् , अतोऽत्र ता ऋचो योग्याः ॥

'महानाम्नी'-शब्दं निर्वक्ति— "इन्द्रो वा एताभिर्महानात्मानं निरमिमीत, तस्मान्महानाम्न्यो ऽथो इमे वै लोका महा-

* सा॰ महा॰ आ॰ १—९, ऐ॰ आ॰ ४. १—११ ।

† तच्च साम पञ्चम्यां मानपन्थेऽस्य प्रथमेऽवाम्नातम् ।

नाम्ना इमे महान्तः"—इति। पुरा कदाचिदिन्द्रः स्वय मेव ऐश्वर्यादिगुणैर्महान् भविष्यामीति विचार्य "विदा मघवन्"—इत्यादिभिर्ऋग्भिः स्वात्मानं गुणैर्महान्तं निर्मितवान्। तस्मान्महत्वनिर्माणसाधनत्वान्महानाम्नीशब्दवाच्याः सम्पन्नाः। अपि च महानाम्न्यो भूरादिलोकत्रयस्वरूपाः; लोकाश्च महान्तः; तस्मादप्यासां महानाम्नीत्वम्॥

ननु शक्करीपूर्व्वं साम शाक्कर मिति मन्तव्यं,— शक्करी च सप्तपादोपेता; न चैता ऋचस्तथाविधाः, किन्तु पादचतुष्टयोपेता अनुष्टुभः; तत् कथ मासां शक्करीत्व मित्याशङ्कय शक्तिप्रदत्वाच्छक्करीत्व मिति निर्वचनं दर्शयति— "इमान्वै लोकान् प्रजापतिः सृष्ट्वेदं सर्वं मशक्नोद्यदिदं किञ्च; यदिमाल्लोकान् प्रजापतिः सृष्ट्वेदं सर्वं मशक्नोद्यदिदं किञ्च, तच्छक्कर्यो ऽभवंस्तच्छक्करीणां शक्करीत्वम्"—इति। पुरा प्रजापतिः "विदा मघवन्"—इत्यादिका महानाम्नीरनुसन्धाय, तदात्मकान् लोकान् ( प्रजापतिः ) सृष्ट्वा, ताभिर्महानाम्नीभिरनुगृहीते, पृथ्व्यादिषु लोकेषु यत् किञ्चित् स्थावरजङ्गमप्राणिजातं स्रष्टव्य मस्ति, तत्सर्वं स्रष्टु मशक्नोत् शक्तिमानभूत् *। यस्मादेवं प्रजापतिरकरोत्, तस्माच्छक्तिहेतुत्वात् एता ऋचः शक्करीनामकाः अभवन्। अनेन प्रकारेण तासां शक्करीत्वं सम्पन्नम्॥

प्रकारान्तरेण महानाम्नीः प्रशंसति— 'ता ऊर्ध्वाः सीम्नो ऽभ्यसृजत; यदूर्ध्वाः सीम्नो ऽभ्यसृजत, तत्सिमा अभवंस्तत्सिमानां सिमात्वम्"—इति। या एता महानाम्न्यः सन्ति, ताः 'सीम्न ऊर्ध्वा अभ्यसृजत' "अग्नि मीळे"—इत्यारभ्य "यथा वः सु सहासति"—

* "शक्तिमानभूत्"—इति क, ख, घ।

इत्यन्ता दाशतयीनां सीमा ; तस्याः 'सीम्नः' ऊर्ध्वभाविनीः कृत्वा प्रजापतिः अभितः सृष्टवान् ; अत एवैताः संहिताः संहितायां नाम्नायन्ते किन्तु आरण्यकाण्डे * आम्नायन्ते। अथवा नवैता ऋचस्त्रिवेदेभ्य उपरि स्थितत्वेन प्रयुज्यन्ते। तथा चाश्वलायन आह— "शाक्वरं चेत्पृष्ठं महानाम्न्यः स्तोत्रियस्ता अर्धर्चकारं नव प्रज्ञात्या तिस्रो भवन्ति"–इति ( श्रौ० ७.१२.१०.)। अस्याय मर्थः। यदा शाक्वर साम्ना पृष्ठस्तोत्रं निष्पाद्यते; तदानीं महानाम्न्य ऋचः स्तोत्रियरूपो भवति। तासु 'प्रज्ञात्या' स्वभावेन नवसङ्ख्याकास्तथापि तिस्रः कर्तव्याः। अर्धर्चकार मिति अत्रोपाय उच्यते। अधिकेनार्धेन युक्ता मेका मृच मेक मर्धर्चं कृत्वेत्युक्तं भवति। ततस्त्रयाणा मर्धर्चाना मेकार्थत्वे सति तिस्र ऋचो भवन्तीति। सोऽयं सीम्नः उल्लङ्घनप्रकारः। यस्मात्सीम्न ऊर्ध्वाः सतीः प्रजापतिरसृजत, तस्मात् 'सिमा'-इत्येतन्नामका अभवन्। महानाम्नीना मनेन प्रकारेण सिमानामकत्वं विज्ञेयम् †॥

स्तोत्रिय शुक्लानुरूपं तृचं विधत्ते— "स्वादोरित्था विषूवत, उप नो हरिभिः सुत, मिन्द्रं विश्वा अवीवृधन्नित्यनुरूपो वृषण्वान् त्रिमाम्नवान्वृधन्वान् पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"–इति। स्वादोरित्यादिरध्ययनप्रकारेणैकस्तृचः ( सं० १.८४.१०.) उप न इत्यादिर्द्वितीयः ( सं० ८.९३.३१.) इन्द्रं विश्वा इति ( सं०

* चतुर्थे इति शेषः।

† अथ सामब्राह्मणयोः—"इन्द्रः प्रजापति मुपाधावत् वृत्रं हनानीति, तस्मा एतच्छन्दोभ्य इन्द्रियं वीर्यं निर्माय प्रायच्छदेतेन जहीति, तच्छक्वरीणां शक्वरीत्वम्। सीमान मभिनत् तत् सिमा। मह्या अकरोत् तन्मह्या। महान् घोष आसीत्तन्महानाम्न्यः"–इति ता० ब्रा० १२.३। "ऐन्द्रो महानाम्न्यः प्रजापतेर्वा विश्वोर्वा विश्वामित्रस्य वा सिमा वा महा वा शक्वर्यो वा"–इति आर्षे० ब्रा० ३ २८।

१.११.१.) तृतीयः ; एतत्त्रयं मिलित्वा पूर्वोक्तस्तोत्रियसादृश्या-दनुरूपस्तृचो भवति। तत्र स्वादोरित्येतस्मिन् "वृष्णा मदन्ति"-इति वृषण्वत्वं च दृश्यते, "सोमं श्रीणन्ति पृश्नयः"-इति पृश्नि-मत्त्वम्, "इदं विश्वा अवीवृधन्"-इति वृधन्वत्वम् ; तान्येतानि पञ्चमे ऽहनि योग्यत्वात् पञ्चमस्य गमकानि ॥

अच्युतत्वलिङ्गेन धाय्यां विधत्ते—"यद्वावानेति (सं० १०. ७४.६.) धाय्याच्युता"-इति ॥

तां धाय्या मनु रथन्तरसामयोनेः शंसनं विधत्ते—"अभि त्वा शूर नोनुम इति (सं० ७.३२.२२.) रथन्तरस्य योनिं मनु निवर्त-यति ; रायन्तरं ह्येतदहरायतनेन"-इति। असुरत्वादङ्गो रथ-न्तरायतनत्व मेतदेव तल्लिङ्गम् ॥

यास्करसामसम्बन्धि-सामप्रगाथं विधत्ते— "मो षु त्वा वाघ-तश्चनेति (सं० ७.३२.१.) सामप्रगाथो ऽध्यासवान् ; पशुरूपं, पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"-इति। ऋग्द्वय मेव सर्वत्र प्रगाथस्य स्वरूपम् ; अत्र तु "रायस्कामः"-इत्येषा (सं० ७.३२.३.) त्रिप-दाधिकत्वेन प्रक्षिप्ता * ; तस्मादयं प्रगाथो ऽध्यासवान्। तच्च पशुरूपत्वात् पञ्चमे ऽहनि योग्यम् ॥

अच्युतत्वलिंगेन सूक्तविशेषं विधत्ते— "त्यमू षु वाजिनं देवजूत मिति (सं० १०.१७८.) तार्क्ष्यो ऽच्युतः"-इति ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां द्वितीयाध्याये
(द्वाविंशाध्याये) द्वितीयः खण्डः ॥ २ (७) ॥

---

* तदयं यथायथमृच एवेति फलितम्। "मोषु त्वा वाघतश्चनेति सत्रिपद इपसम-

॥ अथ तृतीयः खण्डः ॥

प्रेदं ब्रह्म वृत्रतूर्येष्वाविथेति सूक्तं पाङ्क्तं पञ्चपदं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं मिन्द्रो मदाय वावृध इति सूक्तं महत्याङ्क्तं पञ्चपदं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं सचा मदासस्तव विश्वजन्या इति सूक्तं महद्वैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतना-देवैतेन न प्रच्यवते त मिन्द्रं वाजयामसीति पर्यासः स वृषा वृषभो भुवदिति पशुरूपं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं ता उ गायत्र्यो गायत्री वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निविदीयते तस्माद् गायत्रीषु निविदं दधाति तत्सवितुर्वृणीमहे ऽद्या नो देव सवित-रिति वैश्वदेवस्य प्रतिपदनुचरौ रायन्तरे ऽहनि पञ्चमे ऽहनि पञ्चमस्याह्नो रूपमुदु ष्य देवः सविता दमूना इति सावित्रं मा दाशुषे सुवति भूरि वाम मिति वामं पशुरूपं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं मही द्यावापृथिवी इह ज्येष्ठे इति द्यावापृथिवीयं रुवद्धोक्षेति पशुरूपं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपमृभुर्विभ्वा वाज इन्द्रो नो अच्छेत्यार्भवं वाजो वै)

स्वेद् द्विपदाम्"–इति आश्व० श्रौ० ७.३। सामसंहितायां तु (उ० आ० ८२९ १,२.) इत्थ एवैतस्य सामप्रायत्न मन्याहृतम्।

पशवः पशुरूपं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं स्तुषे जनं सुव्रतं नव्यसीभिरिति वैश्वदेवं मध्यासवत्पशुरूपं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं हविष्पान्तमजरं स्वर्विदीत्याग्निमारुतस्य प्रतिपद्विभ्वत्पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं वपुर्नु तच्चिकितुषे चिदस्त्विति मारुतं वपुष्मत्पञ्चमे ऽहनि पञ्चमस्याह्नो रूपं जातवेदसे सुनवाम सोम मिति जातवेदस्याच्युताग्निर्होता गृहपतिः स राजेति जातवेदस्यं मध्यासवत्पशुरूपं पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम् ॥(२)८॥

पञ्चपादोपेततया पाङ्क्तत्वलिङ्गयुक्तं सूक्तं विधत्ते— "प्रेदं ब्रह्म वृत्रतूर्येष्वाविथेति ( सं० ८.३७. ) सूक्तं पाङ्क्तं; पञ्चपदं, पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"—इति ॥

मदशब्देन पाङ्क्तत्वेन च लिङ्गद्वयेनोपेतं सूक्तं विधत्ते— "इन्द्रो मदाय वावृध इति ( सं० १.८१. ) सूक्तं मदवत्पाङ्क्तं; पञ्चपदं, पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"—इति ॥

मदिधातुलिङ्गकं त्रिष्टुप्छन्दस्कं सूक्तं विधत्ते— "सत्रा मदासस्तव विश्वजन्या इति ( सं० ६.३६. ) सूक्तं मदवत् त्रैष्टुभं; तेन *प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते*"—इति ॥

यस्मान्ते प्रक्षेपणीयं तृचं विधत्ते— "त मिन्द्रं वाजयामसीति ( सं० ८.९३.७-९. ) पर्यासः; स वृषा वृषभो भुवदिति पशुरूपं, पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"—इति । स वृषेत्यादिस्तृतीयः पादः; तत्र वृषभशब्दवशात् पशुरूपत्वम् ॥

तस्मिंस्तृचे निविद्धानं विधत्ते— "ता उ गायत्रो गायत्रो या एतस्य वाहस्य मध्यन्दिनं वहन्ति ; तदेतच्छन्दो वहति, यस्मिन्निविद्धीयते ; तस्माद् गायत्रीषु निविदं दधाति"–इति ॥

वैश्वदेवशस्त्रस्य तृचद्वयं विधत्ते— "तत्सवितुर्वृणीमहे, मद्या नो देव सवितरिति, वैश्वदेवस्य प्रतिपदनुचरौ ; राथन्तरे ऽहनि पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"–इति। "तत्सवितुः"–इति ( सं० ५.८२.१–३. ) तृचः प्रतिपत्, "मद्या नः"–इति ( सं० ५.८२.४–६.) तृचोऽनुचरः ; तावुभौ रथन्तरसम्बन्धिनौ। महयायुगमत्वात् राथन्तरम् ; एवं लिङ्गं सम्पादनीयम् ॥

रमणीयत्ववाचकेन वामशब्दलिंगेन युक्तं तृचं विधत्ते— "उदु ष्य देवः सविता दमूना इति (सं० ६.७१.४–६.) सावित्रम्; मा दाशुषे सुवति भूरि वाम मिति वामं पशुरूपं, पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"–इति। सावित्रत्वं स्पष्टम्। "आ दाशुषे" –इति चतुर्थः पादः ; तत्र "भूरि वामम्"–इति वामशब्दरूपं लिङ्गं पशुरूप मस्ति ॥

पशुवाचकेनोक्षशब्दरूपेण लिंगेन युक्तं चतुर्ऋचं विधत्ते— "मही द्यावापृथिवी इह ज्येष्ठे इति ( सं० ४.५६.१–४. ) द्यावापृथिवीयं ; रुवदुक्षेति पशुरूपं, पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"–इति। रुवदित्यादिश्चतुर्थः पादः ; तत्रोक्षेति पुङ्गवाभिधायकः शब्दोऽस्ति ॥

ऋभुदेवताकं सूक्तं विधत्ते— "ऋभुर्विभ्वा वाज इन्द्रो नो अच्छेत्यार्भवं ( सं० ४.३४. ) ; वाजो वै पशवः पशुरूपं, पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"–इति। पश्चोद्दिष्टेन देवतात्वादत्र वाजः ; वाजशब्दः पशुरूपं लिङ्गम् ॥

अध्यासलिङ्गं सूक्तं विधत्ते— "स्तुषे जनं सुव्रतं नव्यसीभिरिति ( सं० ६.४९.) वैश्वदेव मध्यासवत्पञ्चरूपं, पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"–इति। त्रिष्टुप्छन्दस्के सूक्ते "विश्व आ देवीः" –इत्येकः पादोऽधिकः प्रक्षिप्यते * ; सोऽयं मध्यासो लिङ्गम् ॥

यक्षान्तरस्य प्रतिपदं सूक्तं विधत्ते— "हविष्पान्तमजरं स्वर्विदीत्याग्निमारुतस्य प्रतिपद्धविष्मत्पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"–इति। हविःशब्दोपेतत्व मत्र ( सं० १०.८८. ) लिङ्गम् ॥

वपुःशब्दोपेतं मरुद्देवताकं सूक्तं विधत्ते— "वपुर्नु तच्चिकितुषे चिदस्त्विति ( सं० ६.६६. ) मारुतं ; वपुष्मत्पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"–इति। "मरुतो वावृधन्त"–इतिश्रवणात्तत्सूक्तं मारुतम् ; वपुः-शब्दलिङ्गं तु स्पष्टम् ॥

च्युतत्वलिङ्गयुक्ता मृचं विधत्ते— "जातवेदसे सुनवाम सोम मिति ( सं० १.९९.१.) जातवेदस्याच्युता"–इति ॥

अध्यासलिंगेन युक्तं जातवेदोदेवताकं तृचं विधत्ते— "अग्निर्होता गृहपतिः स राजेति ( ६.१५.१३–१५. ) जातवेदस्या मध्यासवत्पञ्चरूपं, पञ्चमे ऽहनि पञ्चमस्याह्नो रूपम्"–इति। त्रिष्टुप्छन्दकस्य तृचस्यावसाने "ता तरेम"–इत्यधिकः पादोऽध्यासः † ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां द्वितीयाध्याये
( द्वाविंशाध्याये ) तृतीयः खण्डः ॥ ३ (८)॥

---

* "विश्व आ देवीरध्युषाम"–इति सं० ६.४९.१५।

† "ता तरेम तवावसा तरेम"–इति सं० ६.१५.१५।

देवक्षेत्रं वा एतद्यत्षष्ठ महर्देवक्षेत्रं वा एत आगच्छन्ति ये षष्ठ महरागच्छन्ति न वै देवा अन्योऽन्यस्य गृहे वसन्ति नर्तुरृतोर्गृहे वसतीत्याहुस्तद्यथायथ मृत्विज ऋतुयाजान् यजन्त्यसम्प्रदाय तद्यथर्तूनृतून् कल्पयन्ति यथायथ जनतास्तदाहुर्नर्तुप्रैषैः प्रेषितव्यं नर्तुप्रैषैर्वषट्कृत्यं वाग्वा ऋतुप्रैषा आप्यते वै वाक् षष्ठे ऽहनीति यदृतुप्रैषैः प्रेष्येयुर्यदृतुप्रैषैर्वषट्कुर्युर्वाचमेव तदाप्तां श्रान्तां ऋक्णवतीं वहराविणीं मृच्छेयुर्यद्वेभिर्न प्रेष्येयुर्यद्वेभिर्न वषट्कुर्युरच्युताद्यज्ञस्य च्यवेरन्यज्ञात्प्राणात्प्रजापतेः पशुभ्यो जिह्मा ईयु* स्तस्माद्धमेभ्य एवाधि प्रेषितव्यं मृगमेभ्यो ऽधि वषट्कृत्यं त न वाच माप्तां श्रान्तां ऋक्णवतीं वहरासिवणीं मृच्छन्ति नाच्युताद्यज्ञस्य च्यवन्ते न यज्ञात् प्राणात् प्रजापतेः पशुभ्यो जिह्मायन्ति ॥ (४) ९ ॥

अथ षष्ठ महरारभ्यते— "देवक्षेत्र वा एतद्यत् षष्ठ महर्देवक्षेत्र वा एत आगच्छन्ति, ये षष्ठ महरागच्छन्ति"—इति । द्वादशाह मध्ये नवरात्रान्तर्गते पृष्ठ्यषडहे यत् षष्ठ महरस्ति, तदेतत् 'देवक्षेत्र वै' देवाना निवासस्थान मेव । एव सति 'ये' यजमाना षष्ठ महरनुतिष्ठन्ति, एते देवाना निवासस्थान मागच्छन्ति ॥

— * 'ह्यु' ङ, भा०-घ ।

अथास्मिन् षष्ठेऽहनि ऋतुप्रैषेषु ऋतुयाज्यासूक्ते कञ्चिद् विशेषं विधातुं प्रस्तौति — "न वै देवा अन्योऽन्यस्य गृहे वसन्ति, नर्त्तु-र्ऋतोर्गृहे वसतीत्याहुस्तद्यथायथ मृत्विज ऋतुयाजान् यजन्त्य-सम्प्रदायं तद्यथर्त्तूनृत्कल्पयन्ति यथायथं जनताः"-इति। देवाः सर्वेऽपि अन्योऽन्यस्य गृहे वासं नैव कुर्वन्ति ; किन्तु स्वस्य एव गृहे। एवं च सत्यृतुरप्यृतोरन्यस्य स्थाने न वसति, किन्तु सर्वोऽपि वसन्तादृतुः स्वस्य एव स्थाने निवसति। तस्मात् कारणात् यथायथं स्वस्वस्थान मनतिक्रम्य सर्वेऽप्यृत्विजः ऋतुयाजान् यजेयुः ; 'असम्प्रदायम्" अन्यस्मै अदत्त्वा। अय मर्थः—ऋतुप्र-षाणां प्रचारो यदा वर्त्तते, तदानीं मैत्रावरुणः प्रैषसूक्तगतेन मन्त्रेण होत्रादीन् प्रेष्यति, अन्ते च याज्यया वषट् कुर्वन्ति ; अध्वर्युयजमानौ तु प्रेषितौ स्वस्वयाज्यां होत्रे प्रयच्छतः। तदिदं प्रक्षतायनुष्ठानम्। अत्र तु तौ होत्रे न प्रयच्छतः, किन्तु स्वय मेव याज्यां पठत इति। तथा सति 'यथर्त्तु' तं तं मृतु मनतिक्रम्य सर्वानृतूनृत्विजः 'कल्पयन्ति' स्वस्वप्रयोजनसमर्थान् कुर्वन्ति। ऋतूनां तथा कल्पने सति 'जनताः' जनसमूहः 'यथायथं' स्वं स्वं स्थान मनतिक्रम्य व्यवस्थिताः सुखिनो भवन्ति। एव मृतुयाजा अत्र प्रस्तुताः। तत्रैतच्चिन्त्यते,— किं मृतुयाजेषु प्रैषवषट्कारौ प्रकृति-वन्न कर्त्तव्यौ उत कर्त्तव्यौ ? आहोस्वित्प्रकारान्तरेण कर्त्तव्यौ ? इति॥

तत्र तावदकरणपक्ष मुपन्यस्यति— "तदाहुर्नर्त्तुप्रैषैः प्रेषि-तव्यं नर्त्तुप्रैषैर्वषट्कृत्यं, वाग्वा ऋतुप्रैषा आप्यते वै वाक् षष्ठे ऽह-नीति"-इति। ऋतुयाज्यासु मैत्रावरुणेन पठितव्या मन्त्राः 'ऋतुप्रैषाः'। तैः प्रैषमन्त्रैर्होत्रादीन् प्रति च न प्रेषितव्यम्,—

"होता यक्षदिन्द्रम्"-इत्यादिभिः * प्रेषणं न कर्त्तव्यम् । होतादिभिश्च ऋतुप्रैषमन्त्रैर्न वषट् कर्तव्यं, याज्याऽऽलेन न पठितव्या इत्यर्थः । तत्रैव सुपपत्तिः— ये ऋतुप्रैषाः, ते सर्वेऽपि 'वाग्वै' वायूपैव ; वाक् च षष्ठे ऽहनि 'आप्यते' समाप्यते ; न हि समाप्ताया वाचि मन्त्रप्रयोगो युज्यत इति निषेधवादिना मभिप्रायः ॥

तेषा मेव मत माश्रित्य विधिवादिनां पक्षे दोषं दर्शयति— यदृतुप्रैषैः प्रेष्येयुर्यदृतुप्रैषैर्वषट्कुर्युर्वाच मेव तदाप्तां श्रान्ता मृक्षणवहीं वड्वराविणी मृच्छेयुः"-इति । य ऋतुप्रैषास्तत्पूर्वको वषट्कारश्चानुष्ठीयेरन्, तदानीम् 'आप्तां' समाप्तां वाच मेव 'ऋच्छेयुः' । कीदृशीं वाचम् ? 'ऋक्णवहीम्' । 'वहः' बलीवर्दस्य स्कन्धादिवहनप्रदेशः, 'ऋक्णः' भग्नः, "ओव्रश्चू छेदने"-इति धातुः । ऋक्णो भग्नो वहो वहनप्रदेशो यस्या वाचः, सा 'ऋक्णवही', श्रान्तत्वाद्यज्ञभारं वोढु मशक्तेत्यर्थः । 'वड्वराविणीम्' अव्यक्तवहननिमित्तो रावो रोदनरूपो ध्वनिर्यस्याः, सा 'वड्वराविणी' तादृशीम् ; उपद्रवद्वययुक्तां कृत्वा वाचं विनाशयेयुः ॥

एव मनुष्ठानपक्षे दोष मुक्त्वा निषेधपक्षे व्यवस्थिते सति विधिवादी स्वाभिमत मनुष्ठान हृदि निधाय निषेधपक्षे बाध मुपन्यस्यति— "यदेभिर्न प्रेष्येयुर्यदेभिर्न वषट् कुर्युरच्युताद्यज्ञस्य च्यवेरन्यज्ञात्प्राणात्प्रजापतेः पशुभ्यो जिह्मा ईयुः"-इति । 'यदु' यदि वा 'एभिः' मन्त्रैर्न प्रेष्येयुः, यदि वा एभिर्मन्त्रैर्याज्यामन्त्रैर्न वषट् कुर्युः । तदानी मृत्विजो यज्ञस्य 'अच्युतात्' अविनष्टात्प्रयोगात् 'च्यवेरन्' विनश्येयुः, यज्ञप्रयोगः साङ्गो न भवेदित्यर्थः । किञ्च तस्माद्यज्ञात् स्वकीयप्राणात् 'प्रजापतेः' स्वकीययजमाना-

* १भा॰ २३९—२४१ पृ॰ द्र॰ द्रष्टव्य.।

प्रवादिपशुभ्यश्च 'जिह्मा ईयुः' ऋत्विजः सर्वेऽपि कुटिला भूत्वा गच्छेयुः, यज्ञप्राणयजमानपशुभ्यो भ्रष्टा भवेयुरित्यर्थः॥

इत्थं विधिनिषेधपक्षयोरुभयोरपि बाधमुक्त्वा प्रकारान्तरेण अनुष्ठानं सिद्धान्तयति— "तस्मादृग्मेभ्य एवाधि प्रेषितव्य मृग्मेभ्योऽधि वषट्कर्त्तव्यं; तं न वाच मात्रां यान्ता मृक्णवतीं वज्राविणी मृच्छन्ति; नाच्युताच्यवस्य च्यवन्ते, न यज्ञात्प्राणात्प्रजापतेः पशुभ्यो जिह्मायन्ति"—इति। यस्मादनुष्ठानपक्षे आन्ता मित्याद्युक्तदोषः, परित्यागपक्षे तु अच्युतादित्याद्युक्तदोष, 'तस्माद्' दोषद्वयपरिहाराय प्रकारान्तरेणानुष्ठेयम्। प्रकृतौ हि मैत्रावरुणं तं प्रैषमन्त्रं पठित्वा होतर्यजेत्यादिना प्रेष्यति; होत्रादयश्च तत्र याज्यां प्रैषरूपा मेव पठित्वा, तदन्ते वौषडिति वषट् कुर्वन्ति; अत्र तु न तथा कर्त्तव्यम्। किं तर्हि ? 'ऋग्मेभ्यः' एव 'अधि' ऋक्शिरस्केभ्यो होत्रादिविषयप्रैषेभ्य एवोर्ध्वं मैत्रावरुणो होतर्यजेत्यादिना प्रेष्येत्, होत्रादयश्च तथैव ऋग्मेभ्योऽधि वषट्कृत्य "तुभ्यं हिन्वानः"—इत्याद्यृक्शिरस्कैः प्रैषैः यजेयुः। तथा सति प्रकृतिवदनुष्ठानाभावाद् वाच मात्रा मित्यादिरनुष्ठानपक्षे प्रोक्तो दोषो न भवति; अनुष्ठानपरित्यागस्याप्यभावात् प्रतिषेधपक्षे प्रोक्तोऽच्युतादित्यादिदोषोऽपि न भविष्यति ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकाया द्वितीयाध्याये
( द्वाविंशाध्याये ) चतुर्थः खण्डः ॥ ४ (८) ॥

---

॥ अथ पञ्चमः खण्डः ॥

पारुच्छेपीरुपदधति पूर्वयोः सवनयोः पुरस्तात्प्रस्थितयाज्यानां रोहितं वै नामैतच्छन्दो यत्पारुच्छेपमेतेन वा इन्द्रः सप्त स्वर्गाँल्लोकानरोहद्रोहति सप्त स्वर्गाँल्लोकान् * य एवं वेद तदाहुर्यत्पञ्चपदा एव पञ्चमस्याह्नो रूपं षट्पदाः षष्ठस्याथ कस्मात्सप्तपदाः षष्ठेऽहञ्छस्यन्त इति षड्भिरेव पदैः षष्ठमहराप्नुवन्त्यपच्छिद्येवैतदहर्यत्सप्तमं तदेव सप्तमेन पदेनाभ्यारभ्य वसन्ति वाचमेव तत्पुनरुपयन्ति सन्तत्यै सततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति ॥ (५) १० ॥

अथ सवनद्वये कांश्चिदृग्विशेषान्विधत्ते— "पारुच्छेपीरुपदधति पूर्वयोः सवनयोः पुरस्तात्प्रस्थितयाज्यानां रोहितं वै नामैतच्छन्दो यत्पारुच्छेपमेतेन वा इन्द्रः सप्त स्वर्गाँल्लोकानरोहत्"— इति। प्रातःसवने माध्यन्दिनसवने च याः 'प्रस्थितयाज्याः' चोदकेन प्रकृतितः प्राप्ताः, तासां पुरस्तात् 'पारुच्छेपीः' परुच्छेपाख्येन महर्षिणा † दृष्टा ऋचः उपदध्युः;— एकैकां पारुच्छेपीमृचमुक्त्वा पश्चादेकैकां प्रस्थितयाज्यां पठेत्। "उप-

* इह सर्वत्रैव पूर्ववत् (४८ पृ० "*") पाठभेदोऽवगन्तव्यः।

† "परुच्छेप ऋषिः, पर्ववच्छेप, परुषिपरुषि शेपोऽस्येति वा"—इति निरु० १०, ५। "परुच्छेपो दैवोदासिः"—इति ऋ० अनु०।

निन्द्र प्रयसायास इन्दवः”–इत्याद्याः ( सं० १.१३९.६. ), “पिबा सोम मिन्द्र सुवान मद्रिभिः”–इत्याद्याश्च ( सं० १.१३०.२. ), पारुच्छेप्यः ऋचः * सूत्रकारेण विस्पष्ट मुदाहृताः † । पारुच्छेपीष्वृक्षु यच्छन्दोऽस्ति, तदिदं रोहितनामकम् । कथ मिति, तदुच्यते— ‘एतेन’ पारुच्छेपोयेन छन्दसा पुरा कदाचिदिन्द्रः ‘सप्त स्वर्गान् लोकान् अरोहत्’ उत्तमाधमभोगावस्थानविशेषान् सप्तसङ्ख्याकान् स्वर्गान् रोहत्यनेन छन्दसेति ‘रोहितं’ नाम सम्पन्नम् ॥ वेदनं प्रशंसति— “रोहति सप्त स्वर्गांल्लोकान् य एवं वेद”–इति ॥

तस्मिन् छन्दसि चोद्य मुद्भावयति— “तदाहुर्यत्पञ्चपदा एव पञ्चमस्याह्नो रूपं षट्पदाः षष्ठस्याथ कस्मात्सप्तपदाः षष्ठे ऽहन्त्यस्यन्त इति”–इति । सङ्ख्यासाम्यात्पञ्चपदोपेता ऋचः पञ्चमे ऽहनि युक्ताः, षट्पदोपेताः षष्ठेऽहनि ; पारुच्छेप्यस्तु सप्तपदोपेताः, अतः षष्ठेऽहनि तच्छंसन मयुक्त मिति चोद्यवादिना मभिप्रायः ॥

तत्रोत्तर माह—“षड्भिरेव पदैः षष्ठ महराप्नुवन्त्यवच्छिद्येव तद्दहर्यत्सप्तमं, तदेव सप्तमेन पदेनाभ्यारभ्य वसन्ति, वाच मेव तत्पुनरुपयन्ति सन्तत्यै”–इति । एकैकस्या मृचि य एते प्रथमभाविनः षट् पादास्तैः सर्वैर्यदा षष्ठ महराप्नुवन्ति, तदानीं सुपरितसं यच्छस्त्रम मर्हस्तत् ‘अवच्छिद्येव’ पृथक्त्वेन तस्य विच्छेदं खल्वेव प्राप्नोति ; तस्माद् विच्छिन्नं सप्तम महस्तेन सप्तमेन पादेनाभिमुख्येनोपक्रम्य वसन्ति । तथा सति विच्छिन्नां वाच मेव पुनरपि

* ताः सर्वाः सं० १.१३०—१३९ सूक्तस्था द्रष्टव्याः ।

† “पवस्व वाजसातये अभिवदाम्यामो पुरुक्षुम्”–इत्युपक्रम्य ‘प्रयमिन्द्र प्रयसायास’ इत्यत.’

*—* ‘पिबा सोम मिन्द्र सुवान मद्रिभिः’*—* पादत्रयम्.”–इति पाठ० श्रौ० ८ । १-११ ।

प्राप्नुवन्ति । तत्र मध्यमयोरहर्द्वयोः सन्तत्वे सम्पद्यन्ते ॥ वेदनपूर्वक मनुष्ठानं प्रशंसति—"सन्ततैरहोरात्रैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति"—इति । पूर्ववद् व्याख्येयम् ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां द्वितीयाध्याये
( द्वाविंशाध्याये ) पञ्चमः खण्डः ॥ ५ ( १० ) ॥

---

॥ अथ षष्ठः खण्डः ॥

देवासुरा वा लोकेषु एषु समयतन्त ते वै देवाः षष्ठेनैवाह्नैभ्यो लोकेभ्यो ऽसुरान् प्राणुदन्त तेषां यान्यन्तर्हस्तीनानि वसून्यासंस्तान्यादाय समुद्रं प्रौप्यन्त त एतेनैव छन्दसा ऽनुहायान्तर्हस्तीनानि वसून्यादत्त तद्यदेतत्पदं पुनःपदं स एवाङ्कुश आसञ्जनाया ऽऽक्षिपतो वसु दत्ते निरेन मेभ्यः सर्वेभ्यो लोकेभ्यो नुदते य एवं वेद ॥ ( ६ ) ११ ॥

पारुच्छेपीयं छन्द उपाख्यानेन प्रशंसति—"देवासुरा वा एषु लोकेषु समयतन्त; ते वै देवाः षष्ठेनैवाह्नैभ्यो लोकेभ्यो ऽसुरान् प्राणुदन्त । तेषां यान्यन्तर्हस्तीनानि वसून्यासंस्तान्यादाय समुद्र'

प्रौप्यन्त ; त एतेनैव छन्दसा ऽनुहायान्तर्हस्तीनानि वसून्याददत ; तद्यदेतत्पदं पुनः पदं स एवाङ्कुश आसञ्जनाय"–इति । देवाश्चासुराश्च लोकविषये यदा 'समयतन्त' सङ्ग्राम मकुर्वत, तदानीं 'ते' देवा. षष्ठ मह्ररनुष्ठीय, तत्सामर्थ्येन असुरान् लोकेभ्यो निस्सारितवन्तः । तदानीं 'तेषाम्' असुराणां सम्बन्धीनि 'वसूनि' धनानि बहून्यासन् । कीदृशानि ? 'अन्तर्हस्तीनानि' हस्तिनां गजाना मुपरि भारवहनाय स्थापितानि ; यद्वा स्वकीयस्य हस्तस्यान्तर्मध्ये गोप्यत्वेन स्थापितानि 'अन्तर्हस्तीनानि' । तानि सर्वाण्यादाय असुरा 'समुद्रं प्रौप्यन्त' समुद्रं गतवद्भिरसुरैः तस्मिन् समुद्रे तानि धनानि प्रक्षिप्तानि । 'ते' देवाः एतत्पादच्छेपोयं छन्दोऽनुष्ठाय, तच्छन्दःसामर्थ्यात् 'अनुहाय' पृष्ठतो गत्वा हस्तिना मुपरि स्थितानि तदीयहस्ते ऽवस्थितानि वा सर्वाणि धनानि 'आददत' स्वीकृतवन्तः । समुद्रमध्यस्थितानां धनाना माकर्षणे किं साधन मिति, तदुच्यते— 'तत्' तत्र पादच्छेपोयासृक्षु यदेतत्पदपाठोऽस्ति कीदृशम् ? 'पुन.पदं' षट्सु पादेषु समाप्तेषु पुनः पश्चादुच्चार्यमाणः * "सुमृळीको न आ गहि"–इत्येवंविधः सप्तमः पाद. †, स एव धनानाम् 'आसञ्जनाय' आसक्तानि कृत्वा समाकर्षणाय अङ्कुशोऽभूत् ; यथा लोके अङ्कुशेनाकृष्यते, तद्वत्सप्तमेन पादेनासुरधनान्याकृष्टानि ॥

वेदनं प्रशंसति— "आ द्विषतो वसु दत्ते निरेनमेभ्यः सर्वेभ्यो लोकेभ्यो नुदते य एवं वेद"–इति । वेदिता 'द्विषत.' शत्रोः

---

* "अभ्यासे भूयांसमर्थं मन्यन्ते, यथाहो दर्शनीयाहो दर्शनीयेति ; तत् परुच्छेपस्य शीलम्"–इति निरु० १०. २ ५ ।

† "उपरिष्टात्—सुमृळीको न आ गहि"–इति सं० १.१३९ ६ । [illegible] ।

सम्बन्धि 'वसु' धनं सर्वं मादत्ते; एवं च 'द्विषन्तं' सर्वं लोकेभ्यो 'निर्णुदते' निस्सारयति ॥ ६ ॥

इतिश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां द्वितीयाध्याये
( द्वाविंशाध्याये ) षष्ठः खण्डः ॥ ६ ( ११ ) ॥

---

॥ अथ सप्तमः खण्डः ॥

द्यौर्वै देवता षष्ठ महर्वहति त्रयस्त्रिंश * स्तोमो रैवतं सामातिच्छन्दाश्छन्दो यथादेवत मेनेन यथास्तोमं यथासाम यथाच्छन्दसं राध्नोति य एवं वेद यद्वै समानोदर्कं † तत्षष्ठस्याह्नो रूपं यद्ध्येव तृतीय महस्तदेतत्पुनर्यत्षष्ठं यदश्ववद्यदन्तवद्यत्पुनरावृत्तं यत्पुनर्निवृत्तं यद्रतवद्यत्पर्यस्तवद्यत्त्रिवद्यदन्तरूपं यदुत्तमे पदे देवता निरुच्यते यदसौ लोको ऽभ्युदितो यत्पारुच्छेपं यत्सप्तपदं यन्नाराशंसं यन्नाभानेदिष्ठं यद्रैवतं यदतिच्छन्दा यत्कृतं यत् तृतीयस्याह्नो रूप मेतानि वै षष्ठस्याह्नो रूपाण्ययं जायत मनुषो धरीमणीति षष्ठस्याह्न आज्यं भवति पारुच्छेप सति-

* "त्रयस्त्रिंश." क; वैकल्पिक ।
† "समानोदर्कं" ख, क, वैकल्पिक । एव मुत्तरत्रापि ।

च्छन्दाः सप्तपदं * षष्ठे ऽहनि षष्ठस्याह्नो रूपं स्तीर्णं वर्हिरुप नो याहि वीतये आ वां रथो नियुत्वान् वक्षदवसे सुषुमा यात मद्रिभिर्युवां स्तोमेभिर्देवयन्तो अश्विना अवर्मह इन्द्र वृषन्निन्द्रा ऽस्तु श्रौषळो-षु णो अग्ने शृणुहि त्वं † मीळितो ये देवासो दिव्येकादश स्थेय मरुद्राद्रभस मच्युत मिति प्रउगं पारुच्छेप मतिच्छन्दाः सप्तपदं षष्ठे ऽहनि षष्ठस्याह्नो रूपं स पूर्व्यो महाना मिति मरुत्वतीयस्य प्रतिप-दन्तो वै महदन्तः षष्ठ महः षष्ठे ऽहनि षष्ठस्याह्नो रूपं त्रय इन्द्रस्य सोमा ‡ इन्द्र नेदीय एदिहि प्र नूनं ब्रह्मणस्पतिरग्निर्नेता त्वं सोम क्रतुभिः पिन्व-न्त्यपो नकिः सुदासो रथ मिति तृतीयेनाह्ना समान मातानः षष्ठे ऽहनि षष्ठस्याह्नो रूपं यं त्वं रथ मिन्द्र मेधसातय इति सूक्तं पारुच्छेप मतिच्छन्दाः सप्तपदं षष्ठे ऽहनि षष्ठस्याह्नो रूपं स यो वृषा वृष्ण्येभिः स मोका इति सूक्तं समानोदर्कं षष्ठे ऽहनि षष्ठ-स्याह्नो रूप मिन्द्र मरुत्व § इह पाहि सोम मिति सूक्तं तेभिः साकं पिबतु वृत्रखाद इत्यन्तो वाट्टोऽन्तः षष्ठ महः षष्ठे ऽहनि षष्ठस्याह्नो रूपं तद् वैष्टुभं

* "सप्तमपदं" ख, चयद ।
† "त्वा" क; चयद ।
‡ "धाम" क, ख, चयदं ।
§ "मदत्वा" ख, चयद ।

तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते ऽयं ह येन वा वृद मिति पर्यासः खमरुत्वता जित मित्यन्तो वै जित मन्तः षष्ठ महः षष्ठे ऽहनि षष्ठस्याह्नो रूपं ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति तद्वै तच्छन्दो वहति यस्मिन्निविद्धीयते तस्माद् गायत्रीषु निविदं दधाति रेवतीर्नः सधमादे रेवाँ॥* इद्रेवतस्तोतेति रैवतं पृष्ठं भवति वार्हते ऽहनि षष्ठे ऽहनि षष्ठस्याह्नो रूपं यद्वावानेति धाय्याच्युता त्वा मिद्धि हवामह इति बृहतो योनि मनु निवर्त्तयति वार्हतं ह्येतदहरायतनेनेन्द्र मिद्देवतातय इति सामप्रगाथो निन्त्तवान् षष्ठे ऽहनि षष्ठस्याह्नो रूपं त्य मू षु वाजिनं देवजूत मिति तार्क्ष्यो ऽच्युतः॥ ७ (१२)॥

इदानीं षष्ठ मह्वर्विधत्ते— "द्यौर्वै देवता षष्ठ मह्वर्वहति त्रयस्त्रिंश स्तोमो रैवतं सामातिच्छन्दाश्छन्दो यथादेवत मेनेन यथास्तोमं यथाच्छन्दसं राध्नोति य एवं वेद"—इति। पूर्वत्र वाग्गेकं गौरेकं द्यौरेक मिति यत्तृतीयं देवतास्वरूप मुक्तम्†, सेयं देवता षष्ठ मह्वर्निर्वहति। तथा स्तोमानां मध्ये त्रयस्त्रिंशस्तोमो निर्वाहकः। तस्य स्तोमस्य स्वरूपं छन्दोगैरेव माम्नायते— "एकादशभ्यो हिङ्करोति स तिसृभिः स सप्तभिः स एकया, एकादशभ्यो

* "रेवा' क, ख, ग, घ, ट, न्यायदर्शिके।

† १८,२० पृष्ठे द्रष्टव्यं।

हिङ्करोति स एकया स तिसृभिः स सप्तभिरेकादशभ्यो हिङ्करोति स सप्तभिः स एकया स तिसृभिरन्त्यो वै त्रयस्त्रिंशः" इति * (ता० ब्रा० ३.३—७. ख०)। अस्याय मर्थः— एक एव तृचस्त्रिभिः पर्यायैरावर्त्तनीयः; तत्र प्रथमे पर्याये प्रथमायास्त्रिरभ्यासः, मध्यमायाः सप्तकृत्वोऽभ्यासः, उत्तमायाः सकृत्पाठः; द्वितीयपर्याये प्रथमायाः सकृत्पाठः, मध्यमायास्त्रिरभ्यास, उत्तमायाः सप्तकृत्वोऽभ्यासः; तृतीयपर्याये प्रथमायाः सप्तकृत्वोऽभ्यासः, मध्यमायाः सकृत्पाठः, उत्तमायास्त्रिरभ्यास; एवं त्रयस्त्रिंशस्तोमनिष्पत्तिरिति। "रेवतीर्नः सधमादे"—इत्यस्या मृचि उत्पन्नं साम 'रैवतम्' †। गायत्र्यादिभ्यः छन्दोभ्योऽक्षरैरधिकत्वात् 'अतिच्छन्दाः'—इति कस्यचित् छन्दसो नामधेयम्। अन्यत् पूर्ववद् व्याख्येयम्॥

अत्र अष्टमगतमन्त्रलिङ्गानि दर्शयति— "यद्वै समानोदर्कं तत्षष्ठस्याह्नो रूपं; यद्वेव तृतीय मह्नस्तदेतत्पुनर्यत्षष्ठं; यदश्ववद्यदन्तवद्यत्पुनरावृत्तं यत्पुनर्निनृत्तं यद्रतवद्यत्पर्यस्तवद्यत्त्रिवद्यदन्तरूपं यदुत्तमे पदे देवता निरुच्यते यदसौ लोको ऽभ्युदितः"—इति। 'समानोदर्कं' तुल्यसमाप्तिकं यदस्ति, तत्षष्ठस्याह्नो रूपम्। 'अपि एव' यदप्यन्यत् पूर्वत्र प्रथमे त्र्यहे तृतीय मह्नदस्ति, तत् पुनरत्रानुसन्धेयम्;— यदिदानीं षष्ठ मह्नः प्रस्तूयते, तत् तदेव भवति; पूर्वस्मिंस्तृतीयेऽहनि, यदाश्विङ्ग मुक्तं, तत् षष्ठेऽपि द्रष्टव्य मित्यर्थः। यदश्ववदित्यादिना यदसौ लोकोऽभ्युदित इत्यन्तेन तान्येतानि लिङ्गानि दर्शितानि ‡॥

---

* त्रयस्त्रिंशस्तोमस्य विष्टुतयः पञ्च; तत्राद्या समन्त्रं व्याख्याता, शेषेयम्।

† ३ भा० ९१४ पृ० "॥" द्रष्टव्यम्। ‡ ६ पृ० ११ पं० द्रष्टव्यम्।

अथ विशेषलिङ्गानि दर्शयति— "यत्पारुच्छेपं यत्सप्तपदं यन्नाराशंसं यन्नाभानेदिष्ठं यद्रैवतं यदतिच्छन्दा यत्कृतं यत् तृतीयस्याह्नो रूप मेतानि वै षष्ठस्याह्नो रूपाणि"—इति। परुच्छेपेन दृष्टं 'पारुच्छेपम्'। सप्तभिः पादैरुपेतं 'सप्तपदम्'। नराशंसाख्यसम्बन्धि 'नाराशंसम्'। नाभानेदिष्ठेन दृष्टं 'नाभानेदिष्ठम्'। रैवतसामसम्बन्धि 'रैवतम्'। सप्तभ्यश्छन्दोभ्योऽधिकाक्षरा 'अतिच्छन्दाः'। भूतार्थवाचिप्रत्ययुक्तं धातुमात्रं 'कृतं' तदभ्युक्त मनुक्तं वा तृतीयस्याह्नो निरूपकम्। एतानि सर्वाणि षष्ठस्याह्नो निरूपकाणि वेदितव्यानि॥

अथाज्यमस्तं विधत्ते— "अयं जायत मनुषो धरीमणीति (सं० १.१२८.) षष्ठस्याह्न आज्यं भवति, पारुच्छेप मतिच्छन्दाः सप्तपदं षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"—इति। परुच्छेपेन दृष्टत्व मेकं लिङ्गम्, अतिच्छन्दस्त्वं द्वितीयम्, सप्तपादोपेतत्वं तृतीयम्; एतेन लिङ्गत्रयेण षष्ठस्याह्नो निरूपकम्॥

अथ प्रउगशस्त्रं विधत्ते— "स्तीर्णं बर्हिरुप नो याहि वीतय आ वां रथो नियुत्वान्वक्षदवसे सुषुमा यात मद्रिभिर्युवां स्तोमेभिर्देवयन्तो अश्विनावर्मेव दन्द्र वृषन्निन्द्रास्तु श्रौषळेषु यो भने गृणुहि त्वा मीळितो ये देवासो दिव्येकादश स्थेय मददाद्रभस मृणच्युत मिति प्रउगं, पारुच्छेप मतिच्छन्दाः सप्तपदं षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"—इति। "स्तीर्णं बर्हिः"—इत्याद्यस्तृचः (सं० १.१३५.१–३.); "आ वां रथः"—इति (सं० १.१३५.४–६.); द्वितीयः "सुषुमा यातम्"—इति (सं० १.१३७.१–२.) तृतीयः; युवां स्तोमेभिः"—इति (सं० १.१३९.३–५.) चतुर्थः; "अवर्मह:" —इति (सं० १.१३३.६–७.) द्वे ऋचौ, "वृषन्निन्द्र"—इत्येका

( सं० १.१३८.६. ), उभाभ्यां पञ्चमस्तृचः ; "अस्तु श्रौषट्"-इत्येका (सं०१.१३९.१.), "ओ षू णः"-इत्येका ( सं०१.१३९.७.), "ये देवासः"-इत्येका ( सं० १.१३९.११. ), एतास्तिस्रः षष्ठः ; "इह मददात्"-इति ( सं० ६.६१.१-३. ) सप्तमः। इत्येतत्सर्वं प्रउगशस्त्रं कुर्यात् ; लिङ्गानि पूर्ववत् ॥

शस्त्रान्तरस्य प्रतिपदं तृचं विधत्ते—"स पूर्व्यो महाना मिति ( सं० ८.६३.१. ) महत्वतीयस्य प्रतिपदन्तो वै महदन्तः षष्ठ महः षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"-इति। अत्र महाना मिति महच्छब्दः पादस्यान्ते दृश्यते, षष्ठं चाहः पृष्ठ्याख्यस्य षडहस्यान्तो भवति, तस्मादन्तत्वलिङ्गेन षष्ठेऽहनि योग्यम् ; यद्वा महतोऽप्यधिकस्यानस्याभावात् महदन्तं इति अन्तवत्त्वं व्याख्येयम् ॥

तृतीयेनाह्ना सह समानं शस्त्रकृमियुक्तं मन्त्रजातं दर्शयति—"त्रय इन्द्रस्य सोमा ( सं० ८.२. ), इन्द्र नेदीय एदिहि ( सं० ८.५३. ), प्र नूनं ब्रह्मणस्पति ( सं० १.४० ), अग्निर्नेता ( सं० ३.२०. ), त्वं सोम क्रतुभिः ( सं० १.९१. ), पिन्वन्त्यपो ( सं० १. ६४. ), नकिः सुदासो रथ मिति ( सं० ७.३२. ) तृतीयेनाह्ना समान आतानः ; षष्ठेऽहनि षष्ठस्याह्नो रूपम्"-इति ॥

परुच्छेपेन दृष्टं सूक्तं दर्शयति—"यं त्वं रथ मिन्द्र मेधसातय इति ( सं० १.१२९. ) सूक्तं पारुच्छेप मतिच्छन्दाः सप्तपदं षष्ठेऽहनि षष्ठस्याह्नो रूपम्"-इति ॥

तुल्यावसानत्वलिङ्गोपेतं सूक्तं दर्शयति— "स यो वृषा वृष्ण्येभिः समोका इति ( सं० १.१००. ) सूक्तं समानोदर्कं, षष्ठेऽहनि षष्ठस्याह्नो रूपम्"-इति। "मरुत्वान् नो भवतु"-इत्यस्य चतुर्थपादस्य सर्वास्वृक्षु विद्यमानत्वात्समानोदर्कत्वम् ॥

तृचात्मकं सूक्तान्तरं विधत्ते— "इन्द्र मरुत्व इह पाहि सोम मिति ( सं० ३.५१.७–९. ) सूक्तं ; तेभिः साकं पिबतु वृत्रखाद इत्यन्तो वै खादोऽन्तः षष्ठ मह्नः ; षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"– इति। अस्मिन् सूक्ते "तेभिः साकम्"–इत्यादिकस्तृतीयस्या मृचि तृतीयः पादः। तत्र वृत्रं खादति भक्षयतीति 'वृत्रखादः' ; तेन भक्षणेन वृत्रस्यावसानं मरणं सम्पद्यते। तस्मात् खादो वृत्रस्यान्तः ; षष्ठस्यान्तत्वं पूर्व मेवोक्तम् ; अतोऽन्तवत्त्वलिङ्गम्। यद्यपीदं सूक्तं न भवति *, तथापि सूक्तस्थानापन्नत्वात्सूक्त मित्युक्तम् ॥

सूक्तगतं छन्दः प्रशंसति— "तद् त्रैष्टुभं ; तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते"–इति। पूर्ववद् व्याखेयम् ॥

प्रस्तस्यान्तिमं तृचं विधत्ते— "अयं ह येन वा इद मिति ( सं० ८.६५. ) पर्यासः ; स्वर्मरुत्वता जित मित्यन्तो वै जित मन्तः षष्ठ मह्नः, षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"–इति। "स्वर्मरुत्वता जितम्"–इति द्वितीयः पादः, तत्र भूतार्थवाचि क्त-प्रत्ययान्तो जयतिधातोरेकं लिङ्गम् ; किञ्च जयस्य युद्धावसानत्वाज्जित मिति शब्दोऽन्तप्रतिपादकः, तदेतदन्तवत्त्व मपरं लिङ्गम् ॥

अत्रावस्थितच्छन्दःप्रशंसाद्वारा निविद्धानं विधत्ते— "ता वा गायत्री, गायत्री वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति, तद्वै-तच्छन्दो वहति, यस्मिन्निविद्धीयते ; तस्माद् गायत्रीषु निविदं दधाति"–इति। पूर्ववद् व्याखेयम् ॥

---

* अस्ति दाशतय्यां सकीयस्य चतुर्थे वर्गेऽस्य मिति पादमर्थं यथोदय एतम्, तदीयतृतीयवर्गस्यैवात्र ग्रहण मिष्टम्। तदेवम् "षष्ठे ऽहनि मरुत्व'–इति खण्डे ( ८१ ) आश्वलायनेन स्पष्टीकृतम्,—"इन्द्र मरुत्व इति त्रिष्टु इति मरुत्वतीयम्"–इति।

रैवतसामसाध्यपृष्ठस्तोत्रस्याधारभूतं स्तोत्रियं तृच मनुरूपञ्च तृचं विधत्ते—"रेवतीर्नः सधमादे रेवाँ इद्रेवत स्तोतेति रैवतं पृष्ठं भवति, बार्हते ऽहनि षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"–इति। "रेवतीर्नः सधमादे"–इति (सं० १.३०.१३–१५.) स्तोत्रियस्तृचः, "रेवान्"–इत्यनुरूपः (सं० ८.२.१३–१५.), रैवतं साम बृहत्साम रूपधरम् *, षष्ठस्य युग्मत्वाद्बार्हतम् †, सोऽयं बृहत्सम्बन्धी भवति लिङ्गम् ॥

भनुरतलिङ्गोपेता मूचं विधत्ते— "यज्ञायज्ञेति (सं० १०.७४.१.) धाय्याऽनुरता"–इति ॥

तां धाय्या मनु बृहत्साम्नो योनिभूतं प्रगाथं विधत्ते— "त्वा मिद्धि हवामह इति (सं० ६.४६.१,२.) बृहतो योनि मनु निवर्त्तयति; बार्हतं ह्येतदहरायतनेन"–इति। षष्ठो बार्हतत्वं पूर्व मेवोक्तम्, तदेवात्र बृहत्सामसम्बन्धरूपं लिङ्गम् ॥

रैवतसामसम्बन्धिनं साममगाथं विधत्ते— "इन्द्र मिद्देव तातय इति (सं० ८.३.५,६.) साममगाथो निन्द्रत्सवान्, षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"–इति। अस्य प्रगाथस्य सर्वेष्वपि पादेषु 'इन्द्र'-शब्दाहतेस्तालव्यनिसदृशत्वादिन्द्रत्तवल्लिङ्गम् ॥

भनुरतलिङ्गकं सूक्तविशेषं विधत्ते—"त्य मू षु वाजिनं देवजूत मिति (सं० १०.१०८.) तार्क्ष्यो ऽनुरतः"–इति ॥ ७ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां द्वितीयाध्याये
(द्वाविंशाध्याये) सप्तमः खण्डः ॥ ७ (१२) ॥

---

* १भा० १९५ पृ० १० पं० द्रष्टव्यम्। † १ भा० ३१७ पृ० टिप्पणी द्रष्टव्या।

॥ अथ अष्टमः खण्डः ॥

ऐन्द्र यात्वुप नः परावत इति सूक्तं पाङ्क्तछेप मतिच्छन्दाः सप्तपदं षष्ठे ऽहनि षष्ठस्याह्नो रूपं प्र घा न्वस्य महतो महानीति सूक्तं समानोदर्कं षष्ठे ऽहनि षष्ठस्याह्नो रूपं मभूरेको रयिपते रयीणा मिति सूक्तं रथ मातिष्ठ तुविन्मण भीम मित्यन्तो वै स्थित मन्तः षष्ठ महः षष्ठे ऽहनि षष्ठस्याह्नो रूपं तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवत उप नो हरिभिः सुत मिति पर्यासः समानोदर्कः षष्ठे ऽहनि षष्ठस्याह्नो रूपं ता उ गायत्री गायत्रो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति तद्वै-तच्छन्दो वहति यस्मिन्निविद्धीयते तस्माद् गायत्रीषु निविदं दधात्यभि त्यं देवं सवितार मोण्योरिति वैश्वदेवस्य प्रतिपदतिच्छन्दाः षष्ठे ऽहनि षष्ठस्याह्नो रूपं तत्सवितुर्वरेण्यं दोषो आगादित्यनुचरोऽन्तो वै गत मन्तः षष्ठ महः षष्ठेऽहनि षष्ठस्याह्नो रूपं मुदु ष्य देवः सविता सवायेति सावित्रं शश्वत्तमं तदपा वह्निरस्थादित्यन्तो वै स्थित मन्तः षष्ठ महः षष्ठे ऽहनि षष्ठस्याह्नो रूपं कतरा पूर्वा कतरापरायो-रिति द्यावापृथिवीयं समानोदर्कं षष्ठे ऽहनि षष्ठ-

स्याह्नो रूपं किमु श्रेष्ठः किं यविष्ठो न आ जगन्नुप नो वाजा अध्वर मृभुक्षा इत्यार्भवं नाराशंसं विवत् षष्ठे ऽहनि षष्ठस्याह्नो रूपमिद मित्या रौद्रं गूर्तवचा ये यज्ञेन दक्षिणया समक्ता इति वैश्वदेवम् ॥ ८ (१२) ॥

पारुच्छेपत्वादिलिङ्गद्वयोपेतं सूक्तं विधत्ते — "एन्द्र याह्युप नः परावत इति (सं० १.१३०.) सूक्तं, पारुच्छेप मतिच्छन्दाः सप्तपदं षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"–इति ॥

तुल्यसमामिवाललिङ्गोपेतं सूक्तं विधत्ते — "प्र घा न्वस्य महतो महानीति (सं० २.१५.) सूक्तं, समानोदर्कं षष्ठेऽहनि षष्ठस्याह्नो रूपम्"–इति। "सोमस्य ता मद इन्द्रश्चकार"–इत्यस्य चतुर्थपादस्य बहुषु ऋक्षु * विद्यमानत्वात्समानोदर्कत्वम् ॥

तिष्ठतिधातुरूपलिङ्गयुक्तं सूक्तं विधत्ते — "अभूरेको रयिपते रयीणा मिति (सं० ६.३१.) सूक्तं, रथ मा तिष्ठ तुविनृम्ण भीम मित्यन्तो वै स्थित मन्तः षष्ठ महः षष्ठे ऽहनि षष्ठस्याह्नो रूपम्" –इति। "अभूरेकः"–इत्यस्य सूक्तस्य पञ्चम्या मृचि "रथ मा तिष्ठ"–इति द्वितीयः पादः ; तत्र स्थितशब्दार्थवाची तिष्ठतिधातुर्विद्यते, स च गतिनिवृत्तिरूपत्वादन्तो भवति ; षष्ठस्याह्नोऽन्तत्वं पूर्वं मुक्तम् ; अतोऽन्तवत्त्वं लिङ्गम् ॥

तवत्थं छन्दः प्रशंसति—"तद्दु वैद्धुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते"–इति। पूर्ववद् व्याख्येयम् ॥

* प्र घा न्वस्येति दशम्यं सूक्तम् ; तत्र द्वितीयादयस्तु सर्वैर्वाक्येऽयं पादः।

निष्केवल्यस्य शस्त्रस्यान्तिमं वचं विधत्ते—"उप नो हरिभिः सुत मिति पर्यासः, समानोदर्काः, षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"—इति। तिसृष्वप्यृक्षु "उप नो हरिभि"—इति पादस्यैकत्वात् समानोदर्कत्वम् ॥

तत्र निविद्धानं विधत्ते—"त्रा उ गायत्री, गायत्री वा एतस्य त्र्यहस्य मध्यन्दिन वहन्ति; तद्यैतच्छन्दो वहति, यस्मि-न्निविद्धीयते; तस्माद्गायत्रीषु निविदं दधाति"—इति। पूर्ववद् व्याख्येयम् ॥

शस्त्रान्तरस्य प्रतिपदेका मृचं विधत्ते—"अभि त्य देवं सवि-तार मोण्योरिति * वैश्वदेवस्य प्रतिपदतिच्छन्दा, षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"—इति। अतिच्छन्दस्त्व मत्र लिङ्गम् ॥

प्रतिपच्छेष मृग्द्वय मनुचरत्वं च विधत्ते—"तत्सवितुर्वरेण्यं; दोषो आगादित्यनुचरोऽन्तो वै गत मन्तः षष्ठ मह: षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"—इति। "तत्सवितुः"—इति ( सं० ३.६२.१०, ११. ) द्वे ऋचौ, प्रतिपच्छेषभूतौ; "दोषो आगात्"—इत्येष तृचे पठितः † तृचो ऽनुचरः। अत्र भूतार्थवाची 'गमि'धातुर्योऽस्ति, तस्यार्थः आगादितिशब्देनोच्यते। भूतार्थवाचित्वाद्गतं गमन-समाप्तिरन्तो भवति। तदेतदन्तवत्त्वं लिङ्गम्। यस्मादत्र सूत्रकारो ऽभित्य मित्येका मृचं तत्सवितुरिति द्वे ऋचौ मिलित्वा प्रतिपत्तृ-चत्वेनोक्ता दोषो आगादित्यादिकस्तृचो ऽनुचर इत्युक्तवान् ‡, तस्मादस्माभिस्तत्सवितुरिति वाक्यं पूर्वशेषत्वेन विच्छेदनीयम् ॥

* सा० छ० आ० ५ २ ३ ८, यजु० वा० स० ४ २५, अथ० सं० ११ ४ २।

† आश्व० श्रौ० ८ १ १८ ( सा० छ० आ० २ २ ४ २ )।

‡ "अभि त्य देवं सवितार मोण्यो रित्येका, तत् सवितुर्वरेण्य मिति द्वे, दोषो

सवितृदेवताकं सूक्तं विधत्ते— "उदु ष्य देवः सविता सवायेति ( सं० २.३८. ) सावित्रं, शश्वत्तमं, तद्‌पा वह्निरस्थादित्यन्तो वै स्थित सन्तः यत्र सहः षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"—इति। शश्वत्तम मित्यादि द्वितीयः पादः; वह्निरस्थादिति भूतार्थवाचिप्रत्ययान्तस्तिष्ठतिधातुः श्रुतः, तच्च स्थितत्वं गमनस्यान्तः। तदिदं मन्तवत्त्वं लिङ्गम् ॥

तुल्यसमानवाचिलिङ्गकं सूक्तं विधत्ते— "कतरा पूर्वा कतरा परायोरिति ( सं०१.१८५.) द्यावापृथिवीयं, समानोदर्कं, षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"—इति। द्वितीयस्या ऋचः चतुर्थे पादे "द्यावा रक्षतं पृथिवी"—इत्युक्तत्वादिदं सूक्तं द्यावापृथिवीयम्; तत्र 'द्यावा रक्षतम्'—इतिपादस्य बह्वीषु ऋक्षु विद्यमानत्वात्समानोदर्कत्वम् ॥

ऋभुदेवताकं सूक्तद्वये विधत्ते—"किमु श्रेष्ठः किं यविष्ठो न आजगन्निप नो वाजा अध्वर मृभुक्षा इत्यार्भवं, नाराशंसं त्रिवत्, षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"—इति। "किमु श्रेष्ठः"—इत्यस्मिन् ( सं० १.१६१. ) सूक्ते त्रयोदश ऋचः शंसनीयाः; तत्र चतुर्थ्या ऋचः प्रथमपादे "चक्रवांस ऋभव."—इतिश्रुतत्वादिद मार्भवम्। "उप नः"—इति ( सं० ४.३७. ) सूक्ते चतस्रः; तत्र प्रथमपादे "ऋभुक्षाः"—इतिश्रुतत्वादपि आर्भवम्। ऋभवो हि नरा मनुष्याः; अत एव मनुष्यानन्तः प्रवेशयितुं असहमाना अग्निवस्वादयः सोमपानवेलायां ऋभून् निःसारितवन्तः। एतच्च "आर्भवं

आगाद् युवद् आय युसवे आयर्वण। स्तुहि देवं सवितारम्। त स उद्यन्तः सिर्षु सूनुं धर्मस्य युवानम्। अद्रोघवाच सुशेवम्। स मा नो देव. सविता शाचिपद् वसुपतिः। उभे सुचितो सुधातुरिति वैश्वदेवस्य प्रतिपदनुचरौ"—इति आश० श्रौ० ८।१.१८।

शंसत्यृभवो वै देवेषु"–इत्यादुपाख्यानेन* तुल्य मवगम्यते। ते च नराः ऋभवः 'शस्यन्ते' कथ्यन्ते अस्मिन् सूक्ते, तं नाराशंसम्, तदेकं लिङ्गम् ; तथैव "उप नो वाजा"–इतिसूक्तस्य ततीयाया ऋचि "नुदायम्"–इति विशब्दः श्रुतः ; तदेतत्त्रित्वं द्वितीयं लिङ्गम् ॥

अथ बहुदेवताकं सूक्तद्वयं विधत्ते— "इद मित्था रौद्रं गूर्तवचा, ये यज्ञेन दक्षिणया समक्ता इति वैश्वदेवम्"–इति। "इद मित्था"–इत्येकं सूक्तम् ( सं० १०.६१. ), "ये यज्ञेन"–इत्यपरम् ( सं० १०.६२. ) ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां द्वितीयाध्याये
( द्वाविंशाध्याये ) अष्टमः खण्डः ॥ ८(१३) ॥

---

॥ अथ नवमः खण्डः ॥

नाभानेदिष्ठं शंसति नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्सोऽब्रवीदेत्य किं मह्य मभाक्तेत्येत मेव निष्ठाव मववदितार मित्यब्रुवं स्तस्माद्धाप्येतर्हि पितरं पुत्रा निष्ठावो ऽववदितेत्येवा चक्षते स पितर मेत्याब्रवीत् त्वां ह वाव मह्यं तता-भाक्षुरिति तं पिताब्रवीन्मा पुत्रक तदादृथा अङ्गिरसो

* २ भा० १९१पृ० १ख० द्रष्टव्य ।

वा इमे स्वर्गाय लोकाय सत्र मासते ते षष्ठं षष्ठ मेवाहरागत्य मुह्यन्ति तानेते सूक्ते षष्ठे ऽहनि शंसय तेषां यत्सहस्रं सत्रपरिवेषणं तत्ते स्वर्यन्तो दास्यन्तीति तथेति तानुपैत्प्रतिगृभ्णीत मानवं सुमेधस इति त मब्रुवन् किङ्कामो वदसीतीद मेव वः षष्ठ मह: प्रज्ञापयानीत्यब्रवीदथ यदा एतत्सहस्रं सत्रपरिवेषणं तन्मे स्वर्यन्तो ऽदत्तेति तथेति तानेते सूक्ते षष्ठे ऽहन्यशंसयत् ततो वै ते प्र यज्ञ मजानन् प्र स्वर्गं लोकं तद्यदेते सूक्ते षष्ठे ऽहनि शंसति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै तं स्वर्यन्तो ऽब्रुवन्नेतत्ते ब्राह्मण सहस्र मिति तदेनं समा कुर्वाणं पुरुषः कृष्णशवास्युत्तरत उपोत्थायाब्रवीन्मम वा इद मम वै वास्तुह मिति सो ऽब्रवीन्मह्यं वा इद मदुरिति त मब्रवीत्तद्वै नौ तवैव पितरिप्रश्न इति स पितर मैत् तं पिताब्रवीन्ननु ते पुत्रकादूरित्यदुरेव म इत्यब्रवीत्तत्तु मे पुरुषः कृष्णशवास्युत्तरत उपोदतिष्ठन्मम वा इदं मम वै वास्तुह मित्यादितेति तं पिता ब्रवीत्तस्यैव पुत्रक तत्तत्तु स तुभ्यं दास्यतीति* स पुनरेत्याब्रवीत्तव ह वाव किल भगव

---

* "तत्तुभ्यं स दास्यतीति" क, "तत्तु स तुभ्यं दास्यतीति" ग, घ, ञ।

**इद मिति मे पितावेति सोऽब्रवीत्तदहं तुभ्य मेव ददामि य एव सत्य मवादीरिति तस्मादेवं विदुषा सत्य मेव वदितव्यं स एष सहस्रसनिर्मन्त्रो ऽयं नाभानेदिष्ठ उपैनं सहस्रं नमति ॥ षष्ठेनाह्ना स्वर्गं लोकं जानाति य एवं वेद ॥ ९ (१४) ॥**

पूर्वोक्ते सूक्तद्वये लिङ्गं दर्शयति— "नाभानेदिष्ठं शंसति" -इति । नाभानेदिष्ठाख्यः कश्चिन्महर्षिः, तेन दृष्टम्, पूर्वोक्तं (७७ पृ० ६ पं०) सूक्तद्वयं 'नाभानेदिष्ठं' तच्छंसेत् । अतो महर्षि-सम्बन्ध एवात्र लिङ्गम् ॥

तदेतत्सूक्तद्वयं प्रशंसितु मुपाख्यान माह— "नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्सोऽब्रवीदेत्य किं मह्य-मभाक्तेत्येत मेव निष्ठाव मववदितार मित्यब्रुवंस्तस्माद्धाप्येतर्हि पितरं पुत्रा निष्ठावो ऽववदितेत्येवाचक्षते"—इति । मनो पुत्रो-नाभानेदिष्ठो नाम बालको गुरुगृहे 'ब्रह्मचर्यं वसति' उपनीतः सन् वेद मध्येतुं तत्र तिष्ठति ; तदानीं तस्य ज्येष्ठभ्रातरो मनोः पितुर्धनं स्वार्थं विभजन्तः तं बालकं 'निरभजन्' भागरहित मकुर्वन् । बालोऽयं ब्रह्मचारी वेद मेवाभ्यस्यतु किं तस्य धनेनेति मत्वा भागं न दत्तवन्तः । तदानीं 'सः' नाभानेदिष्ठः 'एत्य' वेदाभ्यासं कृत्वा समागत्य भ्रातॄनिद मब्रवीत्,— हे भ्रातरः ! मह्य 'किम् अभाक्त' किं नाम वस्तु भागत्वेन यूयं पृथक्कृतवन्त इति । ते च भ्रातरः 'एत मेव' मनुं पितरं हस्तेन प्रदर्श्य हे नाभानेदिष्ठ ! वयं न जानीमस्त मेव पृच्छेत्यब्रुवन् । कीदृशं मनुम् ? 'निष्ठावं'

धनविभागादेर्धर्मरहस्यं निःशेषेण स्थितिनिर्णयो निष्ठा, सा यस्मिन्नस्ति स निष्ठावः; तादृशं धर्मरहस्यस्य निर्णेतार मित्यर्थः। 'अववदितारं' ज्येष्ठपुत्रस्यैतावत् द्वितीयस्यैतावदन्यस्यैतावत् इत्यवच्छिद्य वदितुं समर्थोऽववदिता तादृशम्। अय मर्थ — अयं मनुः धर्मशास्त्रकर्तृत्वाद्धर्मरहस्यनिर्णयवान् पितृत्वेन तवैतावदित्यवच्छिद्य वक्तुं समर्थः, तस्मान्मदीयो भागः क इति मनु मेव पृच्छेत्यब्रुवन्। यस्मादस्य भ्रातर एव मुक्तवन्तः, तस्मादिदानी मपि पितरं पुत्रा इत्यनेन प्रकारेण याचयते। केन प्रकारेणेति, सोऽभिधीयते— अयं पिता 'निष्ठावः' निर्णयवान्, अस्यैतावदित्यवच्छिद्य वदिता चेति ॥

तत ऊर्ध्वं नाभानेदिष्ठस्य वृत्तं दर्शयति— "स पितर मेत्याब्रवीत्,— त्वां ह वाव मह्यं तताभाक्षुरिति; तं पिताब्रवीन्मा पुत्रक तदादृथा,— अङ्गिरसो वा इमे स्वर्गाय लोकाय सत्र मासते, ते षष्ठं षष्ठ मेवाहरागत्य मुह्यन्ति, तानेते सूक्ते षष्ठेऽहनि शंसय; तेषां यत्सहस्रं सत्रपरिवेषणं, तत्ते स्वर्यन्तो दास्यन्तीति; तथेति"—इति। 'सः' नाभानेदिष्ठः भ्रातृभिस्तथोक्तः सन् पितरं मत्यागत्येद मब्रवीत्,— हे पितर्मह्यं 'त्वां ह वाव' त्वा मेव भ्रातरः सर्वेऽपि 'अभाक्षुः' भाग मकार्षुः, अतो मदीयो भागस्त्वमसि, तं मे देहीत्यभिप्रायः। ततः 'तं' नाभानेदिष्ठं 'पिता' मनुरेव मब्रवीत्,— हे 'पुत्रक' बालक! भ्रातृणां वचनं 'मा आदृथाः' तस्मिन्वचने आदरं माकार्षीः। नास्त्येव मदस्ते त्वदीयो भागः, सर्व मपि धनं त्वद्भ्रातृभिर्गृहीतम्। तव तु धनप्राप्त्यर्थ मेक मुपायं कथयिष्यामि,— अङ्गिरोनामका महर्षयः 'इमे' समीपदेशवर्त्तिनः स्वर्गार्थं सत्र मनुतिष्ठन्ति, ते पुनः पुनः सत्र मुप-

क्रम्य, तदा तदा प्राप्तं, तत्तत् पष्ठ मेवाहरागत्य तत्र तत्र मन्थवाङ्गत्ये 'मुह्यन्ति' भ्रान्ताः सन्तः सत्रसमाप्तिं प्रप्राप्य सर्वदा' क्लिश्यन्ति; 'तान्' महर्षीन् षष्ठेऽहनि त्वं गत्वा 'इद मित्था'–इति, "येन यज्ञ"–इति चैते उभे सूक्ते शंसय ; ततः "तेषाम्" ऋषीणां 'यत्' सहस्रसञ्ज्ञाकं धनं 'सत्रपरिवेषण' सत्रार्थं परितः सम्पादित मस्ति, तत्सर्वं मनुष्ठाना दूर्ध्वं मवशिष्टं धनं 'ते' तुभ्य मङ्गिरसो महर्षयः स्वर्गं प्राप्नुवन्तो दास्यन्ति इति। 'तथा' मस्त्विति तत् पितृवचनं नाभानेदिष्ठोऽङ्गीचकार॥

मङ्गीकारादूर्ध्वं किं कृतवानित्यायङ्का तद्दर्शयति— "तानुपैत्प्रतिग्टभ्णीत मानवं सुमेधस इति; त मब्रुवन्, किङ्कामो वदसीतीद मेव वः षष्ठ महः प्रज्ञापयानीत्यब्रवीदथ यद्वा एतत्-सहस्र' सत्रपरिवेषणं, तन्मे स्वयंन्तो दत्तेति; तथेति; तानेते सूक्ते षष्ठे ऽहन्यशंसयत्,— ततो वै ते प्र यज्ञ मजानन् प्र स्वर्गं लोकम्" –इति। 'तान्' अङ्गिरसो महर्षीन् 'उपैत्' नाभानेदिष्ठसमीपं प्राप्तवान्, प्राप्य च "प्रतिग्टभ्णीत"–इत्यादिमन्त्रपाठेनैव महर्षीणा मग्रे किञ्चिद्वचन मुक्तवान्। तस्य पाठस्याय मर्थः— हे 'सुमेधसः' शोभनमेधायुक्ता अङ्गिरसः। 'मानवं' मनोः पुत्रं नाभानेदिष्ठाख्यं मां 'प्रतिग्टभ्णीत' यूयं स्वीकुरुतेति। तथा वदन्तं नाभानेदिष्ठं प्रति मुनय इद मब्रुवन्,— हे नाभानेदिष्ठ! 'किङ्कामः' कीदृशमपेक्षया युक्तः सन्नस्मान् प्रत्येवं वदसि? इति। ततः स नाभानेदिष्ठो ऽब्रवीत्— हे महर्षय। 'वः' युष्माक मिद मेव षष्ठ महः 'प्रज्ञापयानि' प्रकर्षेण बोधयामीति; 'अथ' बोधनानन्तरं 'सत्रपरिवेषणं' भवद्भिः सत्रार्थं सम्पादित मनुष्ठाना दूर्ध्वं मवशिष्टं यदेतत्सहस्रसञ्ज्ञाकं धन मस्ति, तत् सर्वं यूयं 'मे' मह्यं

स्वर्गं प्रति गच्छन्तो दत्तेति। 'तथेति' मुनिभिरङ्गीकृते सति 'तान्' मुनीन्, 'एते' उभे सूक्ते षष्ठे ऽहन्यशंसयत्; तत एव 'ते' मुनयो यज्ञं प्रकर्षेण 'प्रजानन्' ज्ञातवन्तः; तदनुष्ठानेन स्वर्गं लोक मपि प्राजानन् ॥

सूक्तद्वयं प्रशस्य तद्विधिं निगमयति— "तद्यदेते सूक्ते (सं० १०.६१,६२.) षष्ठे ऽहनि शंसति, यज्ञस्य प्रज्ञात्यै, स्वर्गस्य लोकस्यानुख्यात्यै"–इति। यस्मात्सूक्तद्वयशंसनेनाङ्गिरोभिर्यज्ञः स्वर्गश्च प्रज्ञातः, तस्माद्धोता तदुभयं शंसेत्, तच्च यज्ञस्वर्गयोरवगमाय भवति ॥

पुनरपि सूक्तयोर्महिमानं दर्शयितुं सुपाख्यान मेवाह— "तं स्यन्तो ऽब्रुवन्नेतत्ते ब्राह्मणसहस्र मिति, तदेनं समाकुर्वाणं पुरुषः कृष्णशवास्युत्तरत उपोत्थायाब्रवीन्मम वा इदं मम वै वास्तुह मिति; सो ऽब्रवीन्मह्यं वा इद मदुरिति; त मब्रवीत्तद्वै नौ तवैव पितरि प्रश्न इति; स पितर मैत्तं पिताब्रवीन्ननु ते पुत्रकादुरित्यदुरेव म इत्यब्रवीत्तत्तु मे पुरुषः कृष्णशवास्युत्तरत उपोदतिष्ठन्मम वा इद मम वै वास्तुह मित्यादितेति; तं पिताब्रवीत्तस्यैव पुत्रक तत्तत्, स तुभ्यं दास्यतीति; स पुनरेत्याब्रवीत्तव ह वाव किल भगव इद मिति मे पिताहेति; सो ऽब्रवीत्तदहं तुभ्य मेव ददामि य एव सत्य मवादीरिति"–इति। 'तं' नाभानेदिष्ठं 'स्वर्यन्तः' स्वर्गं प्राप्नुवन्तो ऽङ्गिरसो ऽब्रुवन्,—हे 'ब्राह्मण' नाभानेदिष्ठ! 'एतद्' गोसहस्रं यज्ञभूमावशिष्टं 'ते' तुभ्यं दत्त मिति शेषः। अत्र शाखान्तरानुसारेण गोसहस्र मित्यर्थो लभ्यते। शाखान्तरे चैव माम्नायते—"ते सुवर्गं लोकं यन्तो य एषां पशव आसन् तानस्मै अददुः"–इति (तै० सं० ३.१.९.५.)। 'तद्' गोसहस्रं 'समा-

कुर्वाणं' सम्यगात्मसात्कुर्वन्तम् 'एनं' नाभानेदिष्ठं' कश्चित्पुरुषो यज्ञभूमेरुत्तरतः 'उपोत्थाय' समीप एवोत्थितो भूत्वेद मब्रवीत्,— कीदृश पुरुषः? 'कृष्णशवासी' अतिशयेन कृष्णं मलिनं वस्त्रं 'कृष्णशं' तद्वस्ते आच्छादयतीति कृष्णशवासी *। अत्रायं मलिन-वस्त्रः पुरुषः पशुस्वामी रुद्र इत्यवगन्तव्यम्। तथाच शाखान्तरे पठ्यते— "तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छत्"-इति ( तै० सं० ३.१.९.५.)। स रुद्रः किं मब्रवीदिति, तदभिधीयते— हे नाभानेदिष्ठ। 'इदं' पशुसहस्रं ममैव। स्वतन्त्रैव मुपपत्तिं। 'वास्तुहं' वास्तौ यज्ञभूमौ हीनं कर्मान्ते परित्यक्तं वास्तुहम्, तादृशं सर्वं ममैव स्व मिति सर्वत्र सम्प्रतिपन्नम्। इत्येवं पुरु-षेणोक्तः स नाभानेदिष्ठः पुनरेन मब्रवीत्,— हे रुद्र! मह्य मेवेदं सहस्र मङ्गिरसो दत्तवन्त इति। तं तथा वदन्तं नाभानेदिष्ठं पुनः पुरुषो ऽब्रवीत्,— हे नाभानेदिष्ठ! 'तद्वै' तस्मिन्नेव त्वदीयं मदीय मिति सन्देहे सति 'नौ' आवयो रुभयोरपि 'तवैव पितरि' सतो निर्णयार्थं प्रश्नोऽस्त्विति। ततः 'सः' नाभानेदिष्ठः पितरं प्रष्टुम् 'एत्' आगतवान्। स पिता तेन पृष्टस्त मब्रवीत्,— हे 'पुत्रक' बालक! तुभ्य मङ्गिरसो महर्षयः 'अदुः' ननु दत्तवन्तः किम्? प्लुतिः प्रश्नार्था। एवं पित्रा पृष्टः स नाभानेदिष्ठो 'मे' मह्यम् 'अदुरेव' दत्तवन्त एवेत्यब्रवीत्। तर्हि कस्तत्र विचारः? इत्याशङ्किते स नाभानेदिष्ठ एव मुवाच,— ते महर्षयो दत्तवन्त एव किन्तु तद्गोसहस्रं कश्चित् पुरुषो मलिनवस्त्रः सन् यज्ञभूमे-रुत्तरत उत्थाय, 'इदं' गोसहस्रं ममैव स्वं, यज्ञवास्तौ हीनत्वादि-

* भट्टभास्करे तु 'कृष्णशवासी'-इत्यस्य व्याख्यानं कृष्णशं शवच्छादकम्, कृष्णशवासी कश्चिदनार्य, 'रुद्र' भयानकाकृति स्यात्। अग्नीषोमीयवत् छान्दसम्।

त्यभिधाय 'श्रादित' आदानं कृतवान्, अपहृतवानित्यर्थः। तथा ब्रुवन्तं पुत्रं प्रति पिता अब्रवीत्,— हे 'पुत्रक' शिशो! 'तद्' यज्ञवास्तौ हीनं गोसहस्रं तस्यैव रुद्रस्य स्वम्, पशुपतित्वात् यज्ञावशिष्टस्वामित्वाच्च; किन्तु तथा सत्यपि तव हानिर्नास्ति, 'सः' रुद्रः 'तद्' गोसहस्रं तुभ्यं दास्यतीति। यज्ञकाले तत्सर्वं मङ्गिरसां धनं भवति, समाप्ते तु यज्ञे यदवशिष्टं तस्य तु रुद्र एव स्वामीति नाङ्गिरसां दातु मधिकारोऽस्तीत्यभिप्रायः। तथा रुद्रवचनं शाखान्तरे एव माम्नायते— "न वै तस्य त ईशत इत्यब्रवीद्यज्ञवास्तौ हीयते मम वै तदिति"—इति (तै॰ सं॰ ३. १.९.५.)। ततो दास्यतीति वचनं श्रुत्वा 'सः' नाभानेदिष्ठः पुनरपि रुद्रस्य समीप मेत्येद मब्रवीत्,— हे 'भगवन्' पूज्य! रुद्र! 'तव ह वाव किल' तवैव सर्वम् 'इदं' स्व मिति मदीयः पिता प्राहेति। ततः 'सः' रुद्रो ऽब्रवीत्— हे नाभानेदिष्ठ! 'तत्' सर्वं तुभ्य मेव ददामि, यस्त्वं सत्य मेवावदीः, न त्वनृत मुक्तवानसि; तस्मात्परितोषात् सत्यवादिने तुभ्य मेव ददामि इति *॥

इत्थ सुपाख्यानं परिसमाप्य प्रसङ्गात् पुरुषार्थत्वेन सत्यवदनं विधत्ते—"तस्मादेवं विदुषा सत्य मेव वदितव्यम्"—इति। 'एवं विदुषा' सत्यस्य श्रेयोहेतुत्वं जानता॥

उपाख्यानस्य सर्वस्य तात्पर्यं दर्शयति—"स एष सहस्रसनिर्मन्त्रो ऽयन्नाभानेदिष्ठः"—इति। नाभानेदिष्ठेन महर्षिणा दृष्टो यो मन्त्रसमूहः, स एषः 'सहस्रसनिः' सहस्रसङ्ख्याकस्य वस्तुनः सनिर्लाभो यस्मिन्मन्त्रे सोऽयं सहस्रसनिः॥

* ऋ० १०. ६१. ६२. सूक्तयोः सोपक्रमं सायणीयं भाष्यं सर्वं निरीक्षणीयम्। शाङ्खा० ब्रा० २८. ४। श्रौ० ब्रा० २०. ८. २।

वेदनं प्रशंसति—"उपैनं सहस्रं नमति प्र षष्ठेनाह्ना स्वर्गं लोकं जानाति य एवं वेद"–इति। 'एनं' वेदितारं सहस्रसङ्ख्याकं धनम् 'उपनमति' प्राप्नोति, स च कालान्तरे षष्ठ महरनुष्ठाय तेन स्वर्गं प्रजानाति ॥ ९ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां द्वितीयाध्याये
( द्वाविंशाध्याये ) नवमः खण्डः ॥ ९ ( १४ ) ॥

---

॥ अथ दशमः खण्डः ॥

तान्येतानि सहचराणीत्याचक्षते नाभानेदिष्ठं वालखिल्या वृषाकपि मेवयामरुतं * तानि सहैव शंसेद् यदेषा मन्तरियात्तद्य जमानस्यान्तरियाद्यदि नाभानेदिष्ठं रेतो ऽस्यान्तरियाद्यदि वालखिल्याः प्राणानस्यान्तरियाद्यदि वृषाकपि मात्मान मस्यान्तरियाद्यद्येवयामरुतं † प्रतिष्ठाया एनं च्यावयेद् दैव्ये च मानुष्ये च नाभानेदिष्ठेनैव रेतो ऽसिञ्चन्-वालखिल्याभिर्व्यकरोत् सुकीर्त्तिना काक्षीवतेन योनिं व्यहापयद्दूरो यथा तव शर्मन् मदेमेति तस्मा-

---

* "॰मारुत" क, ङ, चन्द्र। † "॰मारुत" ङ, चन्द्र।

ज्यायान्त्सन् गर्भः कनीयांसं सन्तं योनिं न हिनस्ति ब्रह्मणा हि स क्लृप्त एवयामरुतैतवे करोति तेनेदं सर्व मेतवे क्लृप्त मेति यदिदं किञ्चाहश्च कृष्ण मह-रर्जुनं चेत्याग्निमारुतस्य प्रतिपदह्श्चाह्श्चेति पुनरावृत्तं पुनर्निनृत्तं षष्ठे ऽहनि षष्ठस्याह्नो रूपं मध्वो वो नाम मारुतं यजत्रा इति मारुतं बह्वभि-व्याहृत्य मन्तो वै बह्वन्तः षष्ठ महः षष्ठे ऽहनि षष्ठस्याह्नो रूपं जातवेदसे सुनवाम सोम मिति जातवेदस्याच्युता स प्रत्नथा सहसा जायमान इति जातवेदस्यं समानोदर्कं षष्ठे ऽहनि षष्ठस्याह्नो रूपं धारयन् धारयन्निति शंसति प्रसंसाद्वा अन्तस्य विभार्य तद्यथा पुनरायव्यं पुनर्निग्रंथ्यं सन्तं बभ्रीयान्मयूखं वान्ततो धारणाय निहन्यात्ताद्वत्तद्धा-रयन् धारयन्निति शंसति सन्तत्यै सन्ततैस्त्र्याहै रव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति ॥ १०(१५)॥

इत्यैतरेयब्राह्मणे पञ्चमपञ्चिकायां द्वितीयोऽध्यायः॥२॥

अथ नाभानेदिष्ठीयेन सूक्तद्वयेन सह पठितव्यानि मन्त्रान्तराणि विधत्ते— "तान्येतानि सहचराणीत्याचक्षते,— नाभानेदिष्ठं वालखिल्या वृषाकपि मेवयामरुत तानि सहैव शंसेद्"—इति। 'तान्येतानि' वक्ष्यमाणानि चतुर्विधमन्त्रजातानि 'सहचराणि'

प्रयोगकाले सर्वेव वर्त्तन्ते इत्येवं याज्ञिका आचक्षते। तत्र 'नाभा-नेदिष्ठं' सूक्तद्वयं यदस्ति ( सं० १०.६०,६१.), वालखिल्यैर्महर्षिभि-र्दृष्टाः "अभि प्रवः सुराधसम्"–इत्याद्या वालखिल्यनामका मन्त्रा ये सन्ति ( सं ८.४९–५९. ), वृषाकपिनाममहर्षिणा दृष्टं "वि हि सोतोरसृक्षत"–इति ( सं० १०.८६. ) सूक्तं यदस्ति, एवया-मरुन्नाम्ना महर्षिणा दृष्टं "प्र वो महे मतयो यन्तु विष्णवे"–इति सूक्तं ( सं० ५.८६. ) यदस्ति ; तानि चत्वारि सर्वैव शंसेत् ॥

तच्छंसनाभावे बाधं दर्शयति— "यदेषा मन्तरियात्तद्यजमा-नस्यान्तरियात्"–इति। यदि कश्चित् 'एषां' चतुर्णां मध्ये एक-मपि 'अन्तरियात्' अन्तरितं लुप्तं कुर्यात्तदानीं यजमानस्य सम्बन्धि श्रेयः 'अन्तरियात्' विनाशयेत् ॥

सामान्याकारेण बाधं मुक्त्वा पुनर्विशेषाकारेण बाधं दर्श-यति—"यदि नाभानेदिष्ठं, रेतोऽस्यान्तरियात्; यदि वालखिल्याः, प्राणानस्यान्तरियात्; यदि वृषाकपिं, आत्मानमस्यान्तरियात्; यद्येवयामरुतं, प्रतिष्ठाया एनं च्यावयेद्दैव्ये च मानुष्ये च"–इति। यद्ययं होता नाभानेदिष्ठमन्त्रान्विलोपयेत्, तदानीमस्य यज-मानस्य पुत्राद्युत्पादकं रेतो विलोपयेत्। वालखिल्यानां मन्त्रराये यजमानस्य प्राणविच्छेदः। वृषाकपिसूक्तस्यान्तराये यजमानस्य 'आत्मानं' मध्यदेहं विच्छिन्द्यात्। एवयामरुतस्यान्तराये यज-मानं दैव्या मानुष्याश्च प्रतिष्ठायाः प्रच्यावयेत्। अविघ्नेन कर्मसमा-प्तिर्दैवी प्रतिष्ठा ; तत्साधनभूतधनादिसम्पत्तिर्मानुषी प्रतिष्ठा ॥

अन्तराये बाधं मुक्त्वा, तदनुष्ठाने लाभं दर्शयति— "नाभा-नेदिष्ठेनैव रेतोऽसिञ्चत्तद्वालखिल्याभिर्व्यकरोत्, सुकीर्त्तिना काक्षी-वतेन योनिं व्यहापयदुरो यथा तव शर्मन्मदेमेति, तस्माज्ज्याया-

स्तन् गर्भः कनीयांसं सन्तं योनिं न हिनस्ति; ब्रह्मणा हि स क्लृप्त एतयामरुत्तैतवै करोति, तेनेदं सर्व मेतवै छत मेति यदिदं किञ्च"–इति। अत्र मन्त्रसमूहात् यजमानस्य नूतनं जन्म वर्ण्यते; यद्वा पुत्रोत्पादनं वर्ण्यते। यजमानेदिष्ठं सूक्तद्वय मस्ति, तेनैव होता रेतः सिक्तवान् भवति। यास्तु वालखिल्या ऋचस्ताभिस्तद्धेतो 'व्यकरोत्' विस्तृतं गर्भाकार मकरोत्। कक्षीवा- नित्यभिहित, कश्चिदृषिः, तस्य पुत्रः सुकीर्त्तिनामकः; तेन द्वष्टम् "अप प्राच इन्द्र"–इति (सं० १०.१३१.) सूक्त मपि तन्नामकम्। तच्च वृषाकपिसूक्तात् 'प्रागेव' समीपे शंसनीयम्। तेन सुकी- र्त्तिना होता योनिं 'व्यहापयत्' गर्भनिर्गमाय विस्तृत मकारोत्। अत एव तस्या ऋचस्तृतीयपादे "उरौ यथा"–इत्यादिराम्नायते। तस्याय मर्थः— हे इन्द्र। यथा जनः 'उरौ' विस्तीर्णे 'शर्मन्' शर्मणि सुखहेतौ गृहे विस्रब्ध तिष्ठति, तथा तव प्रसादाद् वयं विस्तीर्णे योनिप्रदेशे 'सदेम' सङ्कोचाभावेन तिष्ठाम इति*। एष पादो योनिविस्तृतेर्गमकः। यस्मादनेन विवृत्तिः कृता, तस्मा- ल्लोके जायमानो गर्भो 'ज्यायान् सन्' योनिद्वारापेक्षयात्यन्त प्रौढः सन्नपि, स्वापेक्षया 'कनीयांसम्' अल्पत्वं सन्तं योनिं 'न हिनस्ति' न विनाशयति। यस्माद् 'ब्रह्मणा' सुकीर्त्तिनामकेन मन्त्रेण 'सः' योनिः 'क्लृप्तः' निर्मितः, तस्मादविनाशो युक्तः। एवयामरुन्नाम- केन सूक्तेन यजमानम् 'एतवै' सर्वत्र गन्तुं समर्थं करोति। 'यदिदं किञ्च' जगदस्ति, तदिदं सर्वं 'तेन' सूक्तेन 'एतवै छतं' गन्तुं समर्थं छतं सत्, पश्चाद् 'एति' गच्छति; तस्मादिद मेव सूक्तं यजमान- स्यापि गमनसामर्थ्यं प्रयच्छति॥

* एवमेव भाष्यकारेणास्य पादस्य संहितायां मन्त्रविभागः, कृत ।

आग्निमारुतशस्त्रस्य प्रतिपत्सूक्तं विधत्ते— "अहश्च कृष्ण महरर्जुनं चेत्याग्निमारुतस्य (सं० ६.९.) प्रतिपदहश्वाहश्चेति पुनरावृत्तं पुनर्निवृत्तं षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"—इति। अहःशब्दोऽत्र पुनः पुनः पठ्यमानत्वात् पुनरावृत्त मित्युच्यते; तालध्वनिसमानत्वाच्च पुनर्निवृत्त मिति लिङ्गद्वयम् ॥

मरुद्देवताकं सूक्तं विधत्ते— "मध्वो वो नाम मारुतं यजत्रा इति (सं० ७.५७.) मारुतं बह्वभिव्याहृत्य मरुतो वै बह्वंतः षष्ठ मह्नः षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"—इति। अस्मिन् सूक्ते मरुद्विषय मभिव्याहरणीय मर्थजातं बह्वस्ति, बहुलञ्च एकत्वद्वित्वापेक्षया, तच्छाया मवसानत्वादन्तो भवति, तदेतदन्तवत्त्वं लिङ्गम् ॥

अच्युतत्वलिङ्गयुता मृचं विधत्ते— "जातवेदसे सुनवाम सोम मिति (सं० १.९९.) जातवेदस्याच्युता"—इति ॥

जातवेदोदेवताकं सूक्तं विधत्ते— "स प्रत्नथा सहसा जायमान इति (सं० १.९६.) जातवेदस्यं समानोदर्कं षष्ठे ऽहनि षष्ठस्याह्नो रूपम्"—इति। "देवा अग्निम्"—इत्यस्य चतुर्थपादस्य सर्वास्वृक्षु पठितत्वात् समानोदर्कत्वम् ॥

धारयन्नित्येतत्पुनः पुनः पठितस्यानुवादेन तदभिप्रायं सदृष्टान्तं दर्शयति—"धारयन्धारयन्निति शंसति, प्रस्रंसाद्वा अन्तस्य बिभाय; तद्यथा— पुनरायम्यं पुनर्निग्रंथ्य मत्तं बध्नीयाऽमयूखं धान्ततो धारणाय निहन्यात्तादृक्तद्धारयन्धारयन्निति शंसति समत्यै"—इति। होतास्मिन् सूक्ते चतुर्थेषु पादेषु "धारयन् धारयन्"—इति पुनः पुनः पठित्वा शंसति; तत्र कोऽभिप्राय इति, सोऽभिधीयते— 'अन्तस्य' शस्त्रस्यावसानप्रदेशस्य 'प्रस्रंसात्' प्रकर्षेण स्रंसनात् शैथिल्यादयं होता 'बिभाय' भीतिं प्राप्तवान्।

स्रंसनपरिहारार्थं दृष्टान्तो ऽभिधीयते— तद्यथा लोके रज्जुं निर्मिमाणः पुरुषः 'पुनरायम्य' पुनःपुनरायथ्यायथ्य 'पुनर्निग्रंथ्य' पुनःपुनर्निग्रंथ्यनिग्रंथ्य तस्या रज्जोरन्तं बध्नीयात्, दीर्घाया रज्ज्वा अग्रं सूक्ष्मं पुनः पृष्ठतः प्रत्याकृष्य वेष्टनं कृत्वा ग्रथनं नाम, तस्य दृढीभावो निर्ग्रथन मकरोत्। अन्योऽपि दृष्टान्तोऽभिधीयते— यथा वा लोके चर्मकारः आर्द्रस्य चर्मणः सङ्कोचनिवारणाय भूमौ तत्प्रसार्य दृढ माकृष्य चर्मणोऽन्ते 'मयूखं' शङ्कुं चर्मणो धारणाय 'भूमौ निहन्यात्' दृढ भूमिप्रविष्ट कुर्यात्; चोतुः पुनर्धारयन्निति ग्रंसनं यदस्ति, तदेतत्तादृशं पूर्वोक्तदृष्टान्तसमानं द्रष्टव्यम्। तदेतच्छ्रंसनं यज्ञस्य समाप्त्यै भवति ॥

वेदनपूर्वक मनुष्ठानं प्रशंसति — "सन्ततैरक्षरै रव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति"—इति पूर्ववद् व्याख्येयम् ॥ अभ्यासो ऽध्यायसमाप्त्यर्थः ॥ १० ॥

इतिश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां द्वितीयाध्याये
( द्वात्रिंशाध्याये ) दशमः खण्डः ॥ १० ( १५ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायाः द्वितीयोऽध्यायः ॥

---

# ॥ अथ तृतीयाध्यायः ॥

( तत्र )

॥ अथ प्रथमः खण्डः ॥

---

॥ ॐ ॥ यद्वा एति च प्रेति च तत्सप्तमस्याह्नो रूपं
यद्वेव प्रथम महस्तदेवैतत्पुनर्यत्सप्तमं यद्युक्तवद्यद्रथ-
वद्यदाशुमद्यत्पिबवद्यत्प्रथमे पदे देवता निरुच्यते
यदयं लोकोऽभ्युदितो यज्जातवद्यदनिरुक्तं यत्क-
रिष्यद्यत्प्रथमस्याह्नो रूप मेतानि वै सप्तमस्याह्नो
रूपाणि समुद्रादूर्मिर्मधुमाँ उदारदिति सप्तम-
स्याह्न आज्यं भवत्यनिरुक्तं सप्तमेऽहनि सप्तमस्याह्नो
रूपं वाग्वै समुद्रो न वै वाक् क्षीयते न समुद्रः
क्षीयते तद् यदेतत्सप्तमस्याह्न आज्यं भवति यज्ञा-
देव तद् यज्ञं तन्वते वाच मेव तत्पुनरुपयन्ति
सन्तत्यै सन्ततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो
यन्त्याप्यन्ते वै स्तोमा आप्यन्ते छन्दांसि षष्ठेऽहनि
तद् यथैवाद आज्येनावदानानि पुनः प्रत्यभिघार-
यन्त्ययातयामताया एव मेवैतत् स्तोमांश्च छन्दांसि
च पुनः प्रत्युपयन्त्ययातयामतायै यदेतत्सप्तमस्याह्न
आज्यं भवति तत् त्रैष्टुभं त्रिष्टुप् प्रातःसवन एव

वाहं आ वायो भूष शुचिपा उप नः प्रयाभिर्यासि दाश्वांस मच्छा नो नियुद्भिः शतिनीभिरध्वरं प्र सोता जीरो अध्वरेष्वस्थाद् ये वायव इन्द्र माद-नासो या वां शतं नियुतो याः सहस्रं प्र यद्वां मित्रा-वरुणा स्पूर्धन्ना गोमता नासत्या रथेना नो देव शवसा याहि शुष्मिन् प्र वो यज्ञेषु देवयन्तो अर्चन् प्र चोदसा धायसा सस्र एषेति प्रउग मेति च प्रेति च सप्तमे ऽहनि सप्तमस्याह्नो रूपं तदु त्रैष्टुभं त्रिष्टुप्प्रातस्सवन एष त्र्यहः आ त्वा रथं यथोतय इदं वसो सुत मन्ध इन्द्र नेदीय एदिहि प्रैतु ब्रह्मण-स्पति रग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपः प्र व इन्द्राय बृहत इति प्रथमेनाह्ना समान आतानः सप्तमे ऽहनि सप्तमस्याह्नो रूपं कया शुभा सवयसः सनीळा इति सूक्तं न जायमानो नशते न जात इति जातवत् सप्तमे ऽहनि सप्तमस्याह्नो रूपं तदु कयाशुभीय मेतद्वै सञ्ज्ञानं सन्तनिसूक्तं यत्कया-शुभीय मेतेन ह वा इन्द्रो ऽगस्त्यो मरुतस्ते सम-जानत तद्यत्कयाशुभीयं शंसति सञ्ज्ञात्या एव तद्वा-युष्यं तयोऽस्य मिय * स्यात्कुर्यादेवास्य कयाशुभीयं

* "मिय." क, ट।

तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतना-
देवैतेन न प्रच्यवते त्यं सुमेषं महया स्वर्विद मिति
सूक्त मत्यन्न वाजं हवनस्यदं रथ मिति रथवत्सप्तमे
ऽहनि सप्तमस्याह्नो रूपं तदु जागतं जगत्यो वा
एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति तद्वैतच्छन्दो वहति
यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति
मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागता-
नि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूना
मवरुद्ध्यै त्वा मिद्धि हवामहे त्वं ह्येहि चेरव
इति * बृहत्पृष्ठं भवति सप्तमे ऽहनि यदेव षष्ठस्या-
ह्नस्तद्वै रथन्तरं तद्वैरूपं यद् बृहत् तद्वैराजं यद्रथन्तरं
तच्छाक्वरं यद् बृहत्तद्रैवतं तद् यद्बृहत्पृष्ठं भवति
बृहत्येव तद् बृहत्प्रत्युत्तभ्नुवन्त्यस्तोमकृन्तत्राय यद्र-
न्तरं स्यात्कृन्तत्रं स्यात्तस्माद् बृहदेव कर्त्तव्यं यद्वावा-
नेति धाय्याच्युता ऽभि त्वा शूर नोनुम इति रथन्त-
रस्य योनि मनु निवर्त्तयति राथन्तरं ह्येतदहराय-
तनेन पिबा सुतस्य रसिन इति सामप्रगाथः पिब-
वान्त्सप्तमे ऽहनि सप्तमस्याह्नो रूपं त्य मू षु वाजिनं
देवजूत मिति तार्क्ष्यो ऽच्युतः ॥ १ (१६) ॥

* "इति च" क।

द्वादशाहगते नवरात्रे त्र्यहस्त्र्यहाः। तत्र प्रथमद्वितीयौ त्र्यहा-वुक्तौ * ; तावता षष्ठः: षळहो समाप्तः । यस्तु तृतीयस्त्र्यहस्तत्र यानि त्रीण्यहानि, तानि छन्दोमनामकानि । तत्र प्रथमं नव-रात्रापेक्षया सप्तमं यदहरस्ति, तत्र मन्त्रलिङ्गं दर्शयति— "यद्वा एति च प्रेति च तत्सप्तमस्याह्नो रूपं; यद्वेव प्रथम महस्तदेवैतत् पुनर्यत्सप्तमम्"–इति । नवरात्रे प्रथम महर्यादृशलिङ्गोपेतं तदेवै-तत् पुनरनुसन्धीयमानं यत्सप्तम महस्तद्भवति ॥

तान्यतिदिष्टानि लिङ्गानि दर्शयति— "यद्युक्तवद्यद्रथ-वद्यदाशुमद्यत्पिबवद्, यत्प्रथमे पदे देवता निरुच्यते, यदयं लोको ऽभ्युदितः"–इति । एतानि प्रथमादह्नोऽत्रातिदिष्टानि लिङ्गानि † ॥

नूतन मपि लिङ्गं दर्शयति—"यज्जातवद्यदनिरुक्तम्"–इति। 'जातवत्' 'जनि'धातुयुक्तम् । 'अनिरुक्तम्' अस्पष्टदेवताकम् ॥

अतिदिष्टेन लिङ्गजातेन सह सर्वं लिङ्गजात मुपसंहरति— "यत्करिष्यद्यत्प्रथमस्याह्नो रूप मेतानि वै सप्तमस्याह्नो रूपाणि"–इति । भविष्यदर्थवाचिप्रत्ययान्तं धातुमात्रं 'करिष्यत्' इत्युच्यते । एतच्चान्यच्च यत्प्रथमस्याह्नो लिङ्गजात मस्ति, तेन सह सर्वाणि एतानि सप्तमस्याह्नो रूपाणि ॥

आज्यशस्त्रं विधत्ते— "समुद्रादूर्मिर्मधुमाँ उदारदिति सप्त-मस्याह्न आज्यं भवत्यनिरुक्तं, सप्तमे ऽहनि सप्तमस्याह्नो रूपम्"–इति। निःशेषेण स्पष्ट मुक्तं देवतास्वरूपं 'निरुक्तम्', तद्विपरीतम् 'अनिरुक्तम्'। समुद्रादिसूक्ते ( सं० ४. ५८. ) न काचिद्देवता

---

* २ भा० ४००० पृ०—३ भा० ९० पृ० ।

† २ भा० ४००० पृ० ८ पं० ।

विसृष्टा ; तस्मादिदंलिङ्गसद्भावात्सप्तमे ऽहनि योग्यतया सप्तमस्याह्नो निरूपकम् ॥

तदेतत्सूक्तं प्रशंसति—"वाग्वै समुद्रो ; न वै वाक् चीयते, न समुद्रः चीयते ; तद्यदेतत्सप्तमस्याह्न आज्यं भवति, यज्ञादेव तद्यज्ञं तन्वते ; वाच मेव तत्पुनरुपयन्ति सन्तत्यै"—इति। समुद्रादूर्मिरित्यत्र यः समुद्रः प्रोक्तः, सोऽयं वाक्स्वरूप एव ; तयोर्वाक्समुद्रयो रचयत्वसाम्यादेकैकस्य वस्तुनः कविभिर्बहुधा वर्ण्यमानत्वात् नास्ति वाचः चयः, समुद्रेऽपि जलं न शुष्यति। तस्मात् समुद्रस्य वागूपत्वाद्यदेतत्समुद्रादिति सूक्तं मवाज्य शस्त्रं भवति, तदानीं वाङ्निष्पाद्यमन्त्रात्मकात् 'यज्ञादेव' अनुष्ठानरूपं 'यज्ञ' 'तन्वते' विस्तारयन्ति। तद्विस्तारे च मन्त्राणां बहूनां पठितव्यत्वात् पुनःपुनर्वाच मेव प्राप्नुवन्ति। तच्च यज्ञसन्तत्यै सम्पद्यते ॥ वेदनपूर्वक मनुष्ठानं प्रशंसति—"सन्ततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति। पूर्ववद् व्याख्येयम् ॥

अस्मिन्नाज्यशस्त्रे यं घृतस्य नाम गुह्य मिति यो घृतशब्दः श्रुतः, त मभिप्रेत्य तद्दृष्टान्तपूर्वक माज्यशस्त्रं प्रशंसति—"आप्यन्ते वै स्तोमा आप्यन्ते छन्दांसि षष्ठे ऽहनि, तद्यथैवाद आज्येनावदानानि पुनः प्रत्यभिघारयन्त्ययातयामताया, एव मेवैतत्स्तोमांश्च छन्दांसि च पुनः प्रत्युपयन्त्ययातयामतायै यदेतत्सप्तमस्याह्न आज्यं भवति"—इति। त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाख्या ये स्तोमाः, ते सर्वेऽपि षष्ठेऽहनि 'आप्यन्ते' समाप्ताः। गायत्रीत्रिष्टुब्जगत्यनुष्टुप्पङ्क्तिच्छन्दोऽभिधानि सर्वाणि छन्दांसि च समाप्तानि। तथा सति 'तद्यथैवाद' वक्ष्यमाणं निदर्शनं तथैव सप्तमस्याह्नः प्रवृत्तिर्द्रष्टव्या। किं निदर्शन मिति,

तदुच्यते— यथा दर्शपूर्णमासादिषु पुरोडाशादिद्रव्याण्यवदाय पश्चात्तान्यवदानस्थानानि आज्यस्थाल्या आज्येन पुनः प्रत्यभिघारयन्ति। किमर्थ मिति, तदुच्यते— 'अयातयामतायै' गतसारत्वपरिहाराय, पुनरपि हविर्योग्यतार्थम्। एव मेवैतस्मिन् सप्तमेऽहनि स्तोमान् छन्दांसि च पुनरपि 'प्रत्युपयन्ति' प्रतिपाद्यानुतिष्ठन्ति। तथा सत्यनुष्ठितस्य पुनरनुष्ठानं चर्वितचर्वणसमानमिति 'यातयामत्वं' गतसारत्वं भवेत्। अतो यदेतत्समुद्रादूर्मिरित्यादिकं सप्तमस्याह्न आज्यं भवति, तदेतद् 'अयातयामतायै' पुनरपि सारत्वसिध्यर्थं भवति। तस्मिन्सूक्ते "घृतस्य नाम गुह्यम्"—इति (सं० ४.५८.१.) घृतशब्दस्य विद्यमानत्वात् प्रत्यभिघारणसाम्यं भवति। यद्यपि त्रिवृदादयः स्तोमाः सप्तमेऽहनि पुनर्नानुष्ठीयन्ते, तथापि चतुर्विंशाद्यस्तन्त्रोमनामकाः* अनुष्ठास्यन्ते। तस्मादयातयामत्वं स्तोमत्वसाम्येनाभिहितम् ॥

आज्यशस्त्रगतं छन्दः प्रशंसति— "तदु त्रैष्टुभ त्रिष्टुप् प्रातःसवन एष त्र्यहः"—इति। 'तदु' तदपि "समुद्रादूर्मिः"—इत्यादिकं शस्त्रं त्रिष्टुप् छन्दस्कम्; प्रातस्सवने त्रिष्टुप्छन्दो यस्मिंस्तृतीयत्र्यहे सोऽयं 'त्रिष्टुप्प्रातस्सवनः'। यथा प्रथमस्य त्र्यहस्य प्रातस्सवने गायत्री, यथा वा मध्यमस्य त्र्यहस्य प्रातस्सवने जगती, एव मुत्तमस्य त्र्यहस्य प्रातरसवने त्रिष्टुप् अवगन्तव्या। एतच्छन्दसां विपर्यासे निरूपितम् † ॥

अथ प्रउगशस्त्रं विधत्ते— "आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार। उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं वायवे"—इति। तथा— "प्र याभिर्यासि दाश्वांसमच्छा नो नियुद्भिः शतिनीभिरध्वरं प्र

---

* दश अहे क्रमाद् व्यक्तीभविष्यन्ति।

† २ भा० ३८८ पृ० ५ प०।

सीता जीरो अध्वरेष्वस्मद् ये वायव इन्द्र मादनासो या वां शतं नियुतो याः सहस्रं प्र यद्वां मित्रावरुणास्पूर्धन्ना गोमता नासत्या रथेना नो देव शवसा याहि शुष्मिन् प्र वो यज्ञेषु देवयन्तो अर्चन् प्र चोदसा धायसा सस्र एषेति प्रवत् भेति च प्रेति च सप्तमे ऽहनि सप्तमस्याह्नो रूपं, तद् त्रैष्टुभं त्रिष्टुप्प्रातःसवन एव तत्र्यहः।"
–इति। "आ वायो भूष"–इति ( सं० ७.९२.१. ) प्रथमं यत् प्रतीकं, तस्मिन्नाकारो लिङ्गम्; "प्र याभिः"–इति ( सं०७.९२.३.) द्वितीयं, तत्र प्रशब्दो लिङ्गम्; "आ नो नियुद्भिः"–इति ( सं० ७.९२.५. ) तृतीयं, तस्मिन्नाकारः; "प्र सोता"–इति ( सं० ७.९२.२. ) चतुर्थे प्रशब्दः; "ये वायव इन्द्र"–इति ( सं० ७.९२.४.) पञ्चम, तत्र द्वितीयपादे "आ देवासः"–इत्याकारः; "या वां शतम्"–इति ( सं० ७.९१.६.) षष्ठं, तत्र तृतीयपादादौ आकारः स्तुतः; "प्र यद्वाम्"–इति सप्तमे ( सं०६.६७.९–११.) प्रशब्दः; "आ गोमता"–इत्यष्टमे ( सं० ७.७२.१–३.) आकारः; "आ नो देव"–इति ( सं० ७.३०.१–३.) नवमे ऽप्याकारः; "प्र वो यज्ञेषु" –इति ( सं० ७.४३.१–३. ) दशमे प्रशब्दः; "प्र चोदसा"–इत्येकादशेऽपि ( सं० ७.९५.१–३.) प्रशब्द । एतास्वाद्याः षड्भिर्दृचौ*, इतरे पञ्च तृचाः। तदेतत्सर्वं प्रउगशस्त्रं सूक्तलिङ्गसद्भावात् सप्तमे ऽहनि योग्यम्। अन्यत्पूर्ववद् व्याख्येयम् ॥

अथ सप्तमेऽहनि मरुत्वतीये प्रतिपदादीन् मन्त्रान् विधत्ते— "आ त्वा रथं यथोतय ( सं० ८.६८.१. ) इदं वसो सुतमन्ध ( सं० ८.२.१. ) इन्द्र नेदीय एदिहि ( सं० ८.५३.५. ) प्रैतु ब्रह्मणस्पति ( सं० १.

* तथा चाश्वलायन —"आ वायो भूष०—०सप्तम त्रितीकपातिना"–इति ८९१।

४०.३.) रग्निर्नेता ( सं० ३.२०.४.) त्वं सोम क्रतुभिः ( सं० १. ९१.२.) पिन्वन्त्यपः ( सं० १.६४.६.) प्र व इन्द्राय बृहत ( सं० ८.८९.३.) इति प्रथमेनाह्ना समान आतानः सप्तमे ऽहनि सप्तमस्याह्नो रूपम्"–इति ॥

अथ जातलिङ्गं सूक्तं विधत्ते — "कया शुभा सवयसः सनीळा इति ( सं० १.१६५.) सूक्तं, न जायमानो नशते न जात इति जातवत्सप्तमे ऽहनि सप्तमस्याह्नो रूपम्"–इति। अस्य सूक्तस्य नवम्या ऋचि "न जायमानः"–इत्यादिकस्तृतीयः पादः, तत्र 'जात'शब्दोपेतत्वं लिङ्गम् ॥

एतत्सूक्तं प्रशंसति— "तदु कयाशुभीय मेतद्वै संज्ञानं सन्तनि सूक्तं, यत्कयाशुभीय मेतेन ह वा इन्द्रो ऽगस्त्यो मरुतस्ते समजानत, तद्यत्कयाशुभीयं शंसति संज्ञात्या एव"–इति। 'तदु' तत्सूक्तं 'कयाशुभ'शब्दोपेतत्वात् कयाशुभीयनामकम्। अस्त्वेवम्, किं तत ? इति चेत्, उच्यते— एतदेव कयाशुभीयनामकं सूक्तं 'संज्ञानम्' परस्परैकमत्यसाधनम्; किञ्चैतत्सूक्तं 'सन्तनि' सन्तानकरं प्राणाना मविच्छेदेन दीर्घायुष्यकारणम्। यदेतत्कयाशुभीयसूक्त मस्ति, एतदनुष्ठानेनैवेन्द्रागस्त्यमरुतो ये सन्ति, 'ते' सर्वे 'समजानत' संज्ञानं परस्परैकमत्यं प्राप्नुवन्। तथा सत्येतच्छंसनं विप्रतिपन्नाना मैकमत्यार्थं सम्पद्यते ॥

प्रकारान्तरेण प्रशंसति— "तदायुष्यं तद्योऽस्य प्रिय स्यात्कुर्यादेवास्य कयाशुभीयम्"–इति। 'तदु' तत् सूक्त मायुष्करम्, सन्तनीतिपूर्वमुक्तत्वात्। तथा सत्यस्य यजमानस्य यः पुत्रादिः प्रियः स्यात्, तस्यायुर्वृद्धयर्थं कयाशुभीयसूक्तं कुर्यादेव ॥

पुनरपि छन्दो द्वारा प्रशंसति— "तदु त्रैष्टुभं तेन प्रतिष्ठित-

पदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते"—इति । पूर्ववद् व्याख्येयम् ॥

रथलिङ्गकं सूक्तं विधत्ते — "त्वं सुमेयं मह्या स्वर्विद मिति (सं० १.५२.) सूक्त मत्यव वाजं हवनस्यदं रथ मिति रथवत्समाने ऽहनि सप्तमस्याह्नो रूपम्"—इति । "त्वं सुमेयम्"—इतिसूक्तस्य "अत्यं न वाजम्"—इति तृतीयः पादः, तत्र रथशब्दः श्रूयते ॥

तस्मिन् सूक्ते निविद्धानं विधत्ते— "तद् जागतं, जगत्यो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति; तद्वैतच्छन्दो वहति, यस्मिन्निविधीयते; तस्माज्जगतीषु निविदं दधाति"—इति । अस्य सूक्तस्य जगतीच्छन्दस्कत्वाज्जागतत्वम्; नाव विवाहकर्मणोत्तरे त्र्यहे माध्यन्दिने सवने निर्वाहकत्वादस्मिन्माध्यन्दिनसवनगते मन्त्रे; तत्सवननिर्वाहकतया जगतीच्छन्दस्कास्वृक्षु निविदं प्रक्षिपेत् ॥

पूर्वोक्तं त्रिष्टुप्छन्दः, इदानीं मुच्यमानं जगतीच्छन्दश्च मिलित्वा प्रशंसति— "मिथुनानि सूक्तानि शस्यन्ते, त्रैष्टुभानि च जागतानि च ; मिथुनं वै पशवः, पशवश्छन्दोमाः, पशूना मवरुद्ध्यै"—इति । यथा परस्परविलक्षणयो स्त्रीपुरुषयोर्मेलने मिथुनं भवति, एवं छन्दोद्वयमेलने मिथुनत्वम्; गवाश्वादिपशवश्च मिथुनरूपाः,—चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशाख्याश्छन्दोमाः, पशुसाधनत्वात्पशुरूपाः ; तस्माच्छन्दोमयुक्ते ऽस्मिंस्त्र्यहे छन्दोद्वयानुष्ठानं पशुप्राप्त्यै भवति । 'छन्दोभि' गायत्रीत्रिष्टुब्जगतीभिरुत्तरसङ्ख्याद्वारेण उपमीयन्त इति चतुर्विंशादयस्त्रयः 'छन्दोमाः'॥

तत्र गायत्र्या चतुर्विंशत्यक्षरया सदृशो यश्चतुर्विंशस्तोमः, तस्य प्रतिपादकं सष्टभ्यो चिद्ध रोतीत्यादिकं छन्दोगब्राह्मणं चतुर्विंश मेतदहरुपयन्तीत्यारभ्यणीय मित्यत्रैवोदाहृतम् (२भा० ३०६पृ०) ॥

यच्चतुश्चत्वारिंशस्तोमस्य निरूपकं छन्दोगब्राह्मणम्; तदेव साम्नायते—"पञ्चदशभ्यो हिङ्करोति स तिसृभिः स एकादशभिः स एकया, चतुर्दशभ्यो हिङ्करोति स एकया स तिसृभिः स दशभिः, पञ्चदशभ्यो हिङ्करोति स एकादशभिः स एकया स तिसृभिः"–इति ( ता० ब्रा० ३.८–११ ख० )। अस्याय मर्थः—त्रिभिः पर्यायैस्तृचस्यावृत्तौ प्रथमे पर्याये प्रथमाया ऋचस्त्रिरभ्यासः, मध्यमाया ऋच एकादशकृत्वो ऽभ्यासः, उत्तमाया ऋचः सकृत्पाठः; द्वितीयपर्याये प्रथमायाः सकृत्पाठः, मध्यमायास्त्रिरभ्यासः, उत्तमाया दशकृत्वोऽभ्यासः; तृतीये पर्याये प्रथमाया एकादशकृत्वो ऽभ्यासः, मध्यमायाः सकृत्पाठः, उत्तमायास्त्रिरभ्यासः; सोऽयं चतुश्चत्वारिंशः स्तोम इति * ॥

अथाष्टाचत्वारिंशस्तोमस्य ब्राह्मण मेव साम्नायते— "षोडशभ्यो हिङ्करोति स तिसृभिः स द्वादशभिः स एकया, षोडशभ्यो हिङ्करोति स एकया स तिसृभिः स द्वादशभिः, षोडशभ्यो हिङ्करोति स द्वादशभिः स एकया स तिसृभिरन्तो वा ऽष्टाचत्वारिंशः"–इति ( ता० ब्रा० ३.१२,१३. )। अस्याय मर्थः—प्रथमे पर्याये प्रथमायास्त्रिरभ्यासः, मध्यमाया द्वादशकृत्वोऽभ्यासः, उत्तमायाः सकृत्पाठः; द्वितीयपर्याये प्रथमायाः सकृत्पाठः, मध्यमायास्त्रिरभ्यासः, उत्तमाया द्वादशकृत्वो ऽभ्यासः; तृतीयपर्याये प्रथमाया द्वादशकृत्वोऽभ्यासः, मध्यमायाः सकृत्पाठः; उत्तमायास्त्रिरभ्यास इति। एव मष्टाचत्वारिंशः स्तोम इति † ॥

एवं त्रयश्छन्दोमा अवगन्तव्याः ॥

* चतुश्चत्वारिंशाख्यस्य स्तोमस्य त्रिधो विष्टुतयः; यथादीयम्।

† अष्टाचत्वारिंशाख्यस्य स्तोमस्य द्वे विष्टुती; यथाप्यादीयम्।

अथ बृहत्सामसाध्यपृष्ठस्तोत्रियस्याधारभूतं स्तोत्रियं प्रगाथं तदनुरूपञ्च विधत्ते— "त्वा मिद्धि हवामहे, त्वं ह्येहि चेरव इति बृहत्पृष्ठं भवति सप्तमे ऽहनि"—इति। त्वा मिद्धीत्येकः ( सं० ६.४६.१,२. ) प्रगाथः, त्वं ह्येहीति ( सं० ८.६१.७,८. ) द्वितीयः, तदुभयं सप्तमे ऽहनि निष्केवल्यशस्त्रे शंसनीयम्। ननु तत्र शुक्ल पक्षः सप्तमं, तथा सति रथन्तरपृष्ठं परित्यज्य बृहत्पृष्ठं कि मित्युपादीयते ? इति चेत्, वचनबलादिति ब्रूमः ; "किं हि वचनं न कुर्यान्नास्ति वचनस्यातिभारः"—इतिन्यायात् ॥

बृहत्पृष्ठस्वीकारे कांश्चिदुक्तिं माह— "यदेव षष्ठस्याह्नस्तद्" —इति। पूर्वस्य षष्ठस्याह्नो यदेव पृष्ठस्तोत्रं, तदेवात्र कृतं भवति। तस्य प्रयोजनं तूपरिष्टादक्ष्यते। ननु षष्ठेऽप्यहनि रैवतं पृष्ठं, न तु बृहदिति चेत्, नैष दोषः ; बृहद्रैवतयोः कार्यकारणभावे-नैकत्वादित्यभिप्रेत्य बृहच्च वा इदं मग्रे रथन्तरं चास्ता मित्यत्र प्रतिपादितम् *॥

कार्यकारणभाव मिह स्मारयति— "यद्वै रथन्तरं, तद्वै-रूपं ; यद् बृहत्, तद्वैराजं ; यद्रथन्तरं, तच्छाक्वरं ; यद् बृहत् तद्रैवतम्"—इति। वैरूपशाक्वरयोः रथन्तरजन्यत्वात्तद्रूपत्वम्, वैराजरैवतयोर्बृहज्जन्यत्वात्तद्रूपत्वम्, एवं च सति षष्ठेऽहनि रैव-तस्य बृहत्त्वं व्यवहर्तुं शक्यते ॥

इदानीं मत्र सप्तमे ऽहनि बृहत्पृष्ठस्वीकारे प्रयोजन माह— "तद्यद् बृहत्पृष्ठं भवति, बृहतैव तद् बृहत्प्रत्युत्तम्भुवन्त्यस्तोमच्छन्-दाय"—इति। 'तत्' तस्मात् षष्ठेऽहनि कृतस्य रैवतस्य बृहद्रूप-त्वात् कारणात् 'यद्' यत्र सप्तमे ऽहनि बृहत्पृष्ठं क्रियते। तदि-

* २ भा० १९६ पृ० २ पं० द्रष्टव्यम्।

दानीं षष्ठे ऽहन्यनुष्ठितेन बृहतैवास्मिन् सप्तमे ऽहनि 'तद्' बृहत्पृष्ठं 'प्रत्युत्तम्भुवन्ति'। अतीतत्वेन नष्टस्य पुनरुद्धरणं प्रत्युत्तम्भनम्। एतच्च 'अस्तोमकृन्तत्राय' सम्पद्यते। स्तोमानां त्रिवृत्पञ्चदशादीनां कृन्तत्रं कृन्तनं छेदः, तद्राहित्यम् 'अस्तोमकृन्तत्रं', तदर्थं भवत्स्वीकारः॥

विपक्षबाधोपन्यासमुखेनैव तदेव स्पष्टयति— "यद्रथन्तरं स्यात्कृन्तत्रं स्यात्"–इति। षष्ठेऽहन्यनुष्ठितस्य बृहतोऽस्मिन् सप्तमे ऽहन्यनुवृत्तिं परित्यज्य युग्मदिनत्व माश्रित्य रथन्तरपृष्ठं स्वीक्रियते, तदानीं षष्ठसप्तमयोरनुवृत्त्यभावात् 'कृन्तत्रं' विच्छेदनं स्यात्। षष्ठे बृहत् कृतं, सप्तमे तत्र कृतम्, किन्तु रथन्तरं कृत मिति विच्छेदः॥

विपक्षबाध मुपन्यस्य स्वपक्ष मुपसंहरति— "तस्माद् बृहदेव कर्त्तव्यम्"–इति। यस्माद् बृहति कृते विच्छेदः परिह्रियते, तस्मादित्यर्थः॥

अच्युतत्वलिङ्गयुक्ता मृचं विधत्ते— "यद्वावानेति (सं० १०.७४.६.) धाय्याच्युता"–इति॥

अथायुग्मदिनत्व मुपजीव्य रथन्तरसम्बन्धात्तदीया मृचं विधत्ते — "अभि त्वा शूर नोनुम इति (सं० ७.३२.२२.) रथन्तरस्य योनि मनु निवर्त्तयति, राथन्तरं ह्येतदहरायतनेन"–इति। नितरां वर्तनं मनुष्ठानं निवर्तनं, न तु परित्यागः। 'आयतनेन' अयुग्मत्व-स्थानेन रथन्तरसम्बन्धः॥

पिबशब्दलिङ्गकं प्रमाणान्तरं विधत्ते—"पिबा सुतस्य रसिन इति (सं० ८.३.१,२.) सामप्रगाथः, पिबवान्सप्तमे ऽहनि सप्तम-स्याह्नो रूपम्"–इति॥

२/१२

अच्युतलक्षिङ्गकं सूक्तविशेषं विधत्ते— "त्य मू षु वाजिनं देवजूत मिति ( सं० १०.१७८. ) तार्क्ष्यो ऽच्युतः"—इति ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां तृतीयाध्याये
( त्रयोविंशाध्याये ) प्रथमः खण्डः ॥ १ (१६) ॥

---

॥ अथ द्वितीयः खण्डः ॥

इन्द्रस्य नु वीर्याणि प्र वोच मिति सूक्तं। प्रेति सप्तमे ऽहनि सप्तमस्याह्नो रूपं। तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन। सवनं दाधारायतनादेवैतेन न प्रच्यवते। ऽभि त्यं मेषं पुरुहूत मृग्मिय मिति सूक्तं। यद्वाव प्रेति तदभीति सप्तमे ऽहनि सप्तमस्याह्नो रूपं। तदु जागतं जगत्यो वा। एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति। तद्वैतच्छन्दो वहति। यस्मिन्निविद्धीयते। तस्माज्जगतीषु निविदं दधाति। मिथुनानि सूक्तानि शस्यन्ते। त्रैष्टुभानि च जागतानि च। मिथुनं वै पशवः। पशवश्छन्दोमाः पशूना मवरुद्ध्यै। तत्सवितुर्वृणीमहे। ऽद्या नो देव सवितरिति। वैश्वदेवस्य प्रतिपदनुचरौ। राथन्तरे ऽहनि सप्तमे ऽहनि सप्तमस्याह्नो रूप। मभि त्वा देव

सवितरिति सावित्रं यद्याव प्रेति तद्भीति सप्तमे ऽहनि सप्तमस्याह्नो रूपं प्रेतां यज्ञस्य शम्भुवेति द्यावापृथिवीयं प्रेति सप्तमे ऽहनि सप्तमस्याह्नो रूपं मयं देवाय जन्मन इत्यार्भवं जातवत् सप्तमे ऽहनि सप्तमस्याह्नो रूपं मा याहि वनसा सहेति द्विपदाः शंसति द्विपाद्वै पुरुषश्चतुष्पादाः पशवः पशवश्छन्दोमाः पशूना मवरुद्ध्यै तद्यद् द्विपदाः शंसति यजमान मेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयत्यैभिरग्ने दुवो गिर इति वैश्वदेवं मेति सप्तमे ऽहनि सप्तमस्याह्नो रूपं तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहो वैश्वानरो अजीजनदित्याग्निमारुतस्य प्रतिपज्जातवत् सप्तमे ऽहनि सप्तमस्याह्नो रूपं प्र यद्वस्त्रिष्टुभ मिष मिति मारुतं प्रेति सप्तमे ऽहनि सप्तमस्याह्नो रूपं जातवेदसे सुनवाम सोम मिति जातवेदस्याच्युता दूतं वो विश्ववेदस मिति जातवेदस्य मनिरुक्तं सप्तमे ऽहनि सप्तमस्याह्नो रूपं तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः ॥ २ (१७)॥

मरुत्वतीयमुक्तं सूक्तं विधत्ते— "इन्द्रस्य नु वीर्याणि प्रवोच मिति ( सं० १.३२. ) सूक्तं ; प्रेति सप्तमे ऽहनि सप्तमस्याह्नो रूपम्"–इति ।

तत्त्वं छन्दः प्रशंसति— "तद्‌ त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते"–इति ॥

अभिशब्द प्रशब्दयोरुपसर्गत्वसाम्येनार्थैकत्व मभिप्रेत्य, तत्रा प्रत्वैकत्व मप्यारोप्याभिशब्दलिङ्गकं सूक्तं विधत्ते— "अभि त्वं मेषं पुरुहूत मृग्मिय मिति ( सं० १.५१. ) सूक्तं; यद्वाव प्रेति तदभीति सप्तमे ऽहनि सप्तमस्याह्नो रूपम्"–इति ॥

अस्मिन् सूक्ते निविद्धानं विधत्ते— "तद्‌ जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति; तद्यैतच्छन्दो वहति, यस्मिन्‌ निविद्धीयते ; तस्माज्जगतीषु निविदं दधाति"–इति ॥

छन्दोद्वय मिलित्वा प्रशंसति—"मिथुनानि सूक्तानि शस्यन्ते,— त्रैष्टुभानि च जागतानि च ; मिथुनं वै पशवः पशवश्छन्दोमाः पशूना मवरुद्ध्यै"–इति ॥

अथ तृतीयसवनस्य प्रतिपदनुचरौ विधत्ते— "तत्सवितुर्वृणीमहे ( सं० ५.८२.१–२. ), ऽद्या नो देव सवितरिति ( सं० ५.८२. ४–६. ) वैश्वदेवस्य प्रतिपदनुचरौ ; राथन्तरे ऽहनि सप्तमे ऽहनि सप्तमस्याह्नो रूपम्"–इति । तत्सवितुरित्यादेः कश्चिद्रथन्तरसा- साधारत्व मभिप्रेत्य राथन्तरत्वं लिङ्ग मुक्तम् ॥

अभिशब्द प्रशब्दयोः पूर्ववदेकत्व मारोप्य प्रशब्दलिङ्गकं तृचा- त्मकं सूक्तं विधत्ते— "अभि त्वा देव सवितरिति ( सं० १.२४. ) सावित्रं, यद्वाव प्रेति तदभीति, सप्तमे ऽहनि सप्तमस्याह्नो रूपम्" –इति ॥

आरोपित-प्रशब्दलिङ्गकं सूक्तं मुक्त्वा मुख्य-प्रशब्दलिङ्गकं तृचात्मकं सूक्तं विधत्ते— "प्रेतां यज्ञस्य शम्भुवेति ( सं० २.४१. ) द्यावा- पृथिवीयं ; प्रेति सप्तमे ऽहनि सप्तमस्याह्नो रूपम्"–इति। द्विती-

यस्यां मृचि "द्यावा नः पृथिवी"–इत्युक्तत्वादिदं सूक्तं द्यावापृथिवीदेवताकम् ॥

जातलिङ्गकं तृचात्मकं सूक्तं विधत्ते— "अयं देवाय जन्मन इत्यार्भवं ( सं० १.२०. ) जातवत्सप्तमे ऽहनि सप्तमस्याह्नो रूपम्"–इति। अत्र सूक्ते चतुर्थ्यां मृचि "ऋभवो विष्ट्यक्रत"–इति श्रुतत्वात् अय मपि तृच आर्भवः; "जन्मने"–इत्युक्तत्वाज्जातवल्लिङ्गम् ॥

अथ पादद्वयोपेता ऋचो विधाय प्रशंसति— "आ याहि वनसा सहेति ( सं० १०.१७२. ) द्विपदाः शंसति; द्विपाद्वै पुरुषश्चतुष्पादाः पशवः, पशवश्छन्दोमाः, पशूनामवरुद्धै; तद्यद्द्विपदाः शंसति, यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति"–इति। छन्दोमानां पूर्वोक्तचतुर्विंशादीनां पशुप्राप्तिसाधनत्वात् पशुत्वम् ॥

आकारलिङ्गकमृतुदेवताकं सूक्तं विधत्ते— "ऐभिरग्ने दुवो गिर इति ( सं० १.१४. ) वैश्वदेवं शंसति सप्तमे ऽहनि सप्तमस्याह्नो रूपम्"–इति ॥

उक्तेषु सूक्तेषु छन्दः प्रशंसति— "तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः"–इति। 'तान्यु' तानि तु सूक्तानि "अद्या नो देव सवितर्"–इत्यारभ्य मध्ये द्विपदा वर्जयित्वा "ऐभिरग्ने"–इत्यन्तानि ( १०५–१०६ पृ० ) गायत्रीच्छन्दस्कानि वैश्वदेवशस्त्रे ऽभिहितानि। एषु चोत्तमस्त्र्यहो 'गायत्रतृतीयसवनः' गायत्रीच्छन्दस्तृतीयसवने यस्य त्र्यहस्य सोऽयं गायत्रतृतीयसवनः। तदेतच्छन्दोविवाहप्रस्तावेऽनुसन्धेयम् * ॥

* २भा० ३५०, ३५८ पृ० २,१, पं० द्रष्टव्यम्।

अस्त्रान्तरस्य जनिधातुलिङ्गयुक्तं प्रतिपदं विधत्ते—"वैश्वानरो अजीजनदित्याग्निमारुतस्य प्रतिपज्जातवत् *, सप्तमे ऽहनि सप्तमस्याह्नो रूपम्"–इति ॥

प्रशब्दलिङ्गकं सूक्तं विधत्ते— "प्र यद्वस्त्रिष्टुभ मिष मिति ( सं० ८.७. ) मारुतं ; प्रेति सप्तमे ऽहनि सप्तमस्याह्नो रूपम्"–इति। द्वितीयपादे "मरुतो विप्रा."–इतिश्रुतत्वादिदं सूक्तं मरुद्देवताकम् ॥

अच्युतत्वलिङ्गयुक्ता ऋचं विधत्ते— "जातवेदसे सुनवाम सोम मिति ( सं० १.९९.१. ) जातवेदस्याच्युता"–इति ॥

अस्पष्टदेवताकं सूक्तं विधत्ते— "दूतं वो विश्ववेदस मिति ( सं० ४.८. ) जातवेदस्य मनिरुक्तं सप्तमे ऽहनि सप्तमस्याह्नो रूपम्"–इति। जातवेद.शब्दस्याग्निवाचित्वेऽपि अस्पष्टदेवतावाचकत्वस्याभावादनिरुक्तत्वम् ॥

"वैश्वानरो अजीजनत्"–इत्यादिषु "दूतं व."–इत्यन्तेषु सूक्तेषु ( १०६–१०७ पृ० ) जातवेदश्च इत्येतद्वर्जितेषु विद्यमानं छन्द. प्रशंसति— "तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यह."–इति ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकाया तृतीयाध्याये
( त्रयोविंशाध्याये ) द्वितीयः खण्ड ॥ २ (१७) ॥

---

* वैश्वानरीयवत्रषसूक्तस्याद्या चातुर्मास्येषु कल्पना, तत्परे त्वत्रैव पठिते। 'स विश्वम्'–इति, 'इषा पावक'–इति च। आश्व० श्रौ० ८. ९. ७. द्रष्टव्यम्।

॥ अथ तृतीयः खण्डः ॥

यद्वै नेति न प्रेति यत्स्थितं तदष्टमस्याह्नो रूपं यद्वेव द्वितीय महस्तदेवैतत्पुनर्यदष्टमं यदूर्ध्ववद् यत्प्रतिवद् यदन्तर्वद् यद् वृषण्वद् यद् वृधन्वद् यन्मध्यमे पदे देवता निरुच्यते यदन्तरिक्ष मभ्युदितं यद् द्ध्रग्नि यन्महद्वद्* यद् विहूतवद् यत्पुनर्वद् यत्क्षुवद् यद् द्वितीयस्याह्नो रूप मेतानि वा अष्टमस्याह्नो रूपाण्यग्निं वो देव मग्निभिः सजोषा इत्यष्टमस्याह्न आज्यं भवति द्व्यग्न्यष्टमे ऽहन्यष्टमस्याह्नो रूपं तदु त्रैष्टुभं त्रिष्टुप्प्रातस्सवन एष त्र्यहः कुविदङ्ग नमसा ये वृधासः पीवो अन्नाँ रयिवृधः सुमेधा उच्छन्नुषसः सुदिना अरिप्रा उशन्ता दूता न दभाय गोपा यावत्तरस्तन्वो यावदोजः प्रति वां सूर उदिते सूक्तैर्धेनुः प्रत्नस्य काम्यं दुहाना ब्रह्मा ण इन्द्रोप याहि विद्वानूर्ध्वो अग्निः सुमतिं वस्वो अश्रेदुत त्या नः सरस्वती जुषाणेति प्रउगं प्रतिवदन्तर्वद् विहूतवदूर्ध्ववदष्टमे ऽहन्यष्टमस्याह्नो रूपं तदु त्रैष्टुभं त्रिष्टुप्प्रातस्सवन एष त्र्यहो विश्वानरस्य वस्पति मिन्द्र इत्सोमपा एक इन्द्र नेदीय एदिहित्तिष्ठ

---

* "[illegible]" क।

ब्रह्मणस्पते ऽग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपो बृहदिन्द्राय गायतेति द्वितीयेनाह्ना समान आतानो ऽष्टमे ऽहन्यष्टमस्याह्नो रूपं शंसा महा मिन्द्रं यस्मिन् विश्वा इति सूक्तं महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं महश्चित्त्वमिन्द्र यत एतानिति सूक्तम् * महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं पिबा सोम मभि य मुग्र तर्द इति सूक्त मूर्वं गव्यं महि गृणान इन्द्रेति महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं महाँ इन्द्रो नृवदाचर्षणिप्रा इति सूक्तं महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं तद् त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते त मस्य द्यावापृथिवी सचेतसेति सूक्तं यदेत्कृखानो महिमान मिन्द्रिय मिति महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं तद् जागतं जगत्यो वा एतस्य वाहस्य मध्यन्दिनं वहन्ति तदैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूना मवरुद्ध्यै महद्वन्ति सूक्तानि शस्यन्ते महद्वा अन्तरिक्ष मन्तरिक्षस्याप्त्यै पञ्च सूक्तानि शस्यन्ते

* "एतानि सूक्तानि" क ।

पञ्चपदा पङ्क्तिः पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्या ऽभि त्वा शूर नोनुमो ऽभि त्वा पूर्वपीतय इति रथन्तरं पृष्ठं भवत्यष्टमे ऽहनि यद्वावानेति धाय्याच्युता त्वामिद्धि हवामह इति बृहतो योनिमनु निवर्तयति बार्हतं ह्येतदहरायतनेनो भर्तं शृणवच्च न इति सामप्रगाथो यद्वेद मद्य यदु च ह्य आसीदिति बार्हते ऽहन्यष्टमे ऽहन्यष्टमस्याह्नो रूपं त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यो ऽच्युतः ॥ ३ (१८) ॥

सप्तम महरभिधायाष्टमस्याह्नो मन्त्रलिंगानि दर्शयति—"यद्वै नेति न प्रेति, यत्स्थितं, तदष्टमस्याह्नो रूपम्"—इति। आकारस्य च प्रशब्दस्य चालिंगत्वं नकारद्वयेन निषिध्यते। 'यत् स्थितम्' अच्युतत्वेन नियतं तिष्ठतिधातुयुक्तं वा, तदष्टमस्याह्नो निरूपकम् ॥

द्वितीयस्मिन्नहनि प्रोक्तानि लिंगान्यष्टमे ऽहन्यतिदिशति—"यद्वेव द्वितीय मह्नस्तदेवैतत्पुनर्यदष्टमम्"—इति। यल्लिङ्गक मेव द्वितीय मह्नस्तल्लिङ्गक मेवैतत्पुनरपि भवति ॥

यदष्टम मह्नस्तत्पूर्वोक्तलिंगकम्; तानि लिंगान्युपन्यस्यति—"यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद् वृषण्वद्यद् वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदन्तरिक्ष मभ्युदितम्'—इति ॥

अथ नूतनानि लिङ्गानि दर्शयति— "यद्द्रवन्ति यन्मद्वद

यद्द्विहूतवद्यत्पुनर्वद्यत् कुर्वत्”–इति । अग्निशब्दद्वयोपेतं द्व्यग्नी-त्युच्यते । महच्छब्दोपेतं महद्वत् । द्वयोर्देवतयोर्हूतमाह्वानं यस्मिन् तादृशं द्विहूतवत् । पुनःशब्दोपेतं पुनर्वत् । द्वितीयेऽहनि वर्त्त-मानार्थवाचिप्रत्ययान्तं कुर्वच्छब्देनोक्तम् ॥

तेन सह सर्वाणि लिंगान्युपसंहरति— “यद् द्वितीयस्याह्नो रूप मेतानि वा अष्टमस्याह्नो रूपाणि”–इति ॥

तत्राज्यशस्त्रं विधत्ते— “अग्निं वो देव मग्निभिः सजोषा इत्यष्टमस्याह्न आज्यं भवति ( सं० ७.३. ); द्व्यग्न्यष्टमे ऽहन्यष्टम-स्याह्नो रूपम्”–इति । द्वावग्निशब्दौ यस्मिन् सूक्ते विद्येते, तत्सूक्तं द्व्यग्नि ; अतो ऽष्टमे ऽहनि योग्यत्वादेतदष्टमस्याह्नो निरूपकम् ॥

तत्रत्यं छन्दः प्रशंसति — “तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः”–इति ॥

अथ प्रउगशस्त्रं विधत्ते—“कुविदंग नमसा ये वृधासः, पीवो अन्ना रयिवृधः सुमेधा, उच्छन्नुषसः सुदिना अरिप्रा, उशन्ता दूता, तद्वायु गोपा, यावत्तरस्तन्वो यावदोजः, प्रति वां सूर उदिते सूक्तैर्, धेनुः प्रत्नस्य काम्यं दुहाना, ब्रह्मा ण इन्द्रोप याहि विद्वा-नर्वाञ्च अग्निः सुमतिं वसो अयेदुत त्या नः सरस्वती जुषाणेति प्रउगं प्रतिवदन्तर्वद्, द्विहूतवदृृवदष्टमे ऽहन्यष्टमस्याह्नो रूपम्”–इति । “कुविदंग”–इति (सं० ७.९१.१.) प्रथमं प्रतीकम्, “पीवो अन्नान्”–इति (सं० ७.९१.३.) द्वितीयम्, उच्छन्नुषसः”–इति ( सं० ७.९०.४. ) तृतीयम्, “उशन्ता.”–इति ( सं० ७.९१.२. ) चतुर्थम्, “यावत्तरः”–इति ( सं० ७.९१,४,५. ) पञ्चमम्, “प्रति वाम्”–इति ( सं० ७.६५.१-३. ) षष्ठम्, “धेनुः प्रत्नस्य”–इति ( सं० ३.५८.१-३. ) सप्तमम्, “ब्रह्मा णः”–इत्यष्टमम् ( सं० ७.

२८.१-३.), "ऊर्ध्वो अग्निः"-इति (सं० ७.३९.१-२.) नवमम्; "उतस्या नः"-इति (सं० ७.८५.४-६.) दशमम्। अत्राद्यैस्त्रिभिः प्रतीकैरेकस्तृचः; चतुर्थे चैका, पञ्चमे द्वे, तदुभयं मिलित्वा द्वितीयस्तृचः; इतरे पञ्च तृचाः; एतत्सर्वं प्रउगम्। तत्र दशमे प्रतीके "प्रति स्तोमम्"-इति प्रतिशब्दोपेतं लिंगमस्ति, षेतुः प्रत्नस्येत्यस्य द्वितीयपादे "अन्तः पुचः"-इति अन्तःशब्दोपेतं लिंगम्, ऊर्ध्वो अग्निरित्यत्रिपूर्वशब्दोपेतं लिंगम्; अवशिष्टेषु द्वयोराम्नानं लिंगम्,— क्वचिदिन्द्रवाय्वोः क्वचिन्मित्रावरुणयोरिति द्रष्टव्यम्॥

तत्रामन्त्रगतं छन्दः प्रशंसति— "तद्‌ त्रैष्टुभं त्रिष्टुप्प्रातस्सवन एष तृचः"-इति॥

अथ मरुत्वतीयशस्त्रे तुल्यमन्तत्रराख्येन लिंगेनोपेतान् मन्त्रान् विधत्ते—"विश्वानरस्य वस्पति (सं० ८.६८.४.) मिन्द्र इत्सोमपा एक (सं० ८.२.४.) इन्द्र नेदीय एदि- (सं० ८. ५३.५.) त्तुत्तिष्ठ ब्रह्मणस्पते (सं १.४०.१.) ऽग्निर्नेता (सं० ३. ८१.२.) त्वं सोम क्रतुभिः (सं० १.९१.२.) पिन्वन्त्यपो (सं० १. २०.४.) बृहदिन्द्राय गायतेति (सं० ८.८९ १.) द्वितीयेनाह्ना समान आतानोऽष्टमे ऽहन्यष्टमस्याह्नो रूपम्"-इति॥

महच्छब्दलिंगकं सूक्तं विधत्ते—"यस्मा महा मिन्द्रं यस्मिन् विश्वा इति सूक्तं (सं० ३.४९.) महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्" -इति। अत्र 'महाम्"-इत्येष एव महच्छब्दः॥

पुनरपि महच्छब्दयुक्तं सूक्तान्तरं विधत्ते— "पिबा सोम मभि य मुग्र तर्दः"-इति (सं० ६.१७.) सूक्तं मूर्वे गव्यं महि गृणान इन्द्रेति महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्"-इति। पिबा

सोम मित्यादिसूक्तस्य "ऊर्वं गव्यम्"-इति द्वितीयः पादः । तत्र "महि"-इत्येष महच्छब्दः ॥

पुनरपि महच्छब्दयुक्तं सूक्तान्तरं विधत्ते—"महश्चित्त्व मिन्द्र यत एतानिति ( सं० १.१६९. ) सूक्तं, महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपम्"-इति । अत्र "महः"-इत्येष एव महच्छब्दः * ॥

पुनरपि महच्छब्दयुक्तं सूक्तं विधत्ते—"महाँ † इन्द्रो नृवदा-चर्षणिप्रा इति ( सं० ६.१९. ) सूक्तं, महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपम्"-इति । अत्र "महान्"-इत्येष महच्छब्दः ॥

उक्तेषु चतुर्ष्वपि महच्छब्देषु अन्तस्य वैलक्षण्येऽप्यादिभागस्यैक-विधत्वात् ‡ महच्छब्दत्वं द्रष्टव्यम् ॥

एतत्सूक्तचतुष्टयगतं छन्दः प्रशंसति— "तदु त्रैष्टुभं तेन प्रति-ष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते"-इति ॥

अथान्यमहच्छब्दोपेतं सूक्तं विधत्ते— "त मस्य द्यावापृथिवी सचेतसेति ( सं० १०. ११३. ) सूक्तं, यदैत् कृण्वानो महिमान मिन्द्रिय मिति, महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपम्"-इति । त मस्येतिसूक्तस्य "यदैत् कृण्वानः"-इति तृतीयः पादः । तत्र "महिमानं मदेमहि"-इति महच्छब्दः श्रूयते ॥

तस्मिन् सूक्ते निविद्धानं विधत्ते—"तदु जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति ; तद्धैतच्छन्दो वहति, यस्मिन्नि-विद्धीयते ; तस्माज्जगतीषु निविदं दधाति"-इति ॥

---

* एतत् पङ्क्तिद्वयं ११२ पृ० २१ पङ्क्त्यनन्तरं पाठ्यम्, इह तु भ्रमात् मुद्रितम् ।

† "दीर्घादटि समानपादे"-इति ( पा० ८. ३. ९. ) रुत्वे ऽनुनासिकत्वे ( पा० ८. ३. ४. ) च रूपम् । वस्तुतः 'महाँ'-इति, 'महाँऽ'-इति, 'महाँ'-इति च लिपिप्रकारभेद-मात्रम्, तस्मात् एकविध मेव व्यवह्रियते ।

‡ 'महाम्', 'महः', 'महि', 'महान्' इति ( सं० ३.४९, १.१६९, ९.१३, ६.१९. ) ।

छन्दोद्वयं मिलित्वा प्रशंसति—“मिथुनानि सूक्तानि शस्यन्ते, त्रैष्टुभानि जागतानि च; मिथुनं वै पशवः, पशवश्छन्दोमाः; पशूना मवरुद्ध्यै”–इति ॥

उक्तेषु सूक्तेषु महच्छब्दं प्रशंसति—“महद्वन्ति सूक्तानि शस्यन्ते; महद्वा अन्तरिक्ष मन्तरिक्षस्याप्त्यै”–इति। अन्तरिक्षस्य महत्त्वं विस्तीर्णत्वं प्रसिद्धम् ॥

महच्छब्दयुक्तानां सूक्तानां सङ्ख्यां प्रशंसति— “पञ्च सूक्तानि शस्यन्ते; पञ्चपदा पङ्क्तिः, पाङ्क्तो यज्ञः, पाङ्क्ताः पशवः, पशवश्छन्दोमाः, पशूना मवरुद्ध्यै”–इति। शंसा महा मिति (सं० ३.४९.१.) प्रथमे सूक्ते महच्छब्दः, महश्चित्त्व मिति (सं० १.१६९.१.) द्वितीये, महि· शवान इति (सं० ६.१७.१.) तृतीये, महाँ इन्द्र इति (सं० ६.१९.१.) चतुर्थे, महिमान मिति (सं० १०.११२.१.) पञ्चमे; एवं पञ्च सूक्तानि महच्छब्दयुक्तानि शस्यन्ते। पञ्चसङ्ख्यायोगात्पञ्चपादोपेता ‘पङ्क्तिः’ छन्दोरूपा भवति; यज्ञश्च हविष्पङ्क्त्यादिना ‘पाङ्क्तः’; पशवश्च पङ्क्तिमुखेन ‘पाङ्क्ताः’; छन्दोमानां च पशुसाधनत्वात्पशुत्वम्। अनेन सम्बन्धेन सूक्तपञ्चकं पशुप्राप्तेः सम्पद्यते ॥

अथ निष्केवल्यशस्त्रस्य रथन्तरसामसाध्यपृष्ठस्तोत्रस्य आधारभूतं स्तोत्रिय मनुरूपञ्च विधत्ते—“अभि त्वा शूर नोनुमो (सं० ८.३२.२२,२३.) ऽभि त्वा पूर्वपीतय इति (सं० १.१८.८,१०.) रथन्तरं पृष्ठं भवत्यष्टमेऽहनि”–इति। यद्यपि युग्मदिनत्वात् न्यायतो बृहत्पृष्ठं प्राप्तम्, तथापि वचनबलाद्रथन्तरपृष्ठत्वं द्रष्टव्यम् ॥

अच्युतत्वलिङ्गयुक्तां ऋचं विधत्ते— “यद्वावानेति (सं० १०.७४.६.) धाय्याच्युता”–इति ॥

तस्या उपरि बृहत्सामयोनेः शंसनं विधत्ते— "त्वा मिद्धि हवामह इति (सं० ६.४६.) बृहतो योनि मनु निवर्त्तयति ; बार्हतं ह्येतदहरायतनेन"—इति। अष्टमस्य युग्मदिनत्वात् बृहत्सम्बन्धित्वम् ॥

तस्यैव बृहत्सम्बन्धिनं साममगाथं विधत्ते— "उभयं शृणवच्च न इति (सं० ८.६१.१,२.) साममगाथो यच्चेद मद्य यदु च ह्य आसीदिति बार्हते ऽहन्यष्टमे ऽहन्यष्टमस्याह्नो रूपम्"—इति। उभयशब्दस्य तात्पर्य्यं यच्चेद मित्यादिनोच्यते। अद्य 'यदिद' कार्य्यं मासीत्, 'ह्यश्च' पूर्वेद्युरपि 'यदु' यदेव कार्य्यं मासीत्, तदेतदुभय मपि शृणुत मिति तस्य पादस्यार्थः *। युग्मरूपे बार्हते ऽहनि बृहत्सामसम्बद्धः प्रगाथो युक्त एव ॥

अच्युतत्वलिङ्गक सूक्तविशेष विधत्ते—"त्य मू षु वाजिनं देवजूत मिति (सं० १०.१७८.) तार्क्ष्यो ऽच्युतः"—इति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकाया तृतीयाध्याये
(त्रयोविंशाध्याये) तृतीय. खण्ड ॥ ३ (१८) ॥

---

* "उभय—स्तोत्रात्मक मस्मानं च"—इति संहिताभाष्ये ऽयमेव सायणः।

॥ अथ चतुर्थः खण्डः ॥

अपूर्व्या पुरुतमान्यस्मा इति सूक्तं मह्दे वीराय तवसे तुरायेति महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं तां सु ते कीर्तिं मघवन् महित्वेति सूक्तं महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं त्वं महाँ॰ इन्द्र यो ह शुष्मै-रिति सूक्तं महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं त्वं महाँ इन्द्र तुभ्यं ह क्षा इति सूक्तं महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं तद् त्रैष्टुभं तेन प्रतिष्ठित-पदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते दिव-श्चिदस्य वरिमा वि पप्रथ इति सूक्तमिन्द्रं न मह्नेति महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं तद् जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति मिथुनानि सूक्तानि शस्यन्ते त्रैष्टु-भानि च जागतानि च मिथुनं वै पशवः पशवश्छ-न्दोमाः पशूनामवरुद्ध्यै महद्वन्ति सूक्तानि शस्यन्ते महद्वा अन्तरिक्षमन्तरिक्षस्याप्त्यै पञ्च पञ्च सूक्तानि शस्यन्ते पञ्चपदा पङ्क्तिः पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै तानि द्वेधा पञ्चा-न्यानि पञ्चान्यानि दश सम्पद्यन्ते सा दशिनी विरा-

---

● "महा॰" ख, "महां" क, ग, घ। एवं पूर्वमोपरत्र च सर्वत्र।

ळन्न' विराळन्न' पशवः पशवश्छन्दोमाः पशूना मवरुद्धै' विश्वो देवस्य नेतुस्' तत्सवितुर्वरेण्य मा विश्वदेवं सत्पति मिति' वैश्वदेवस्य प्रतिपदनुचरौ' वार्हते ऽहन्यष्टमे ऽहन्यष्टमस्याह्नो रूपं' हिरण्य-पाणि मूतय इति सावित्र मूर्द्धवदष्टमे ऽहन्यष्ट-मस्याह्नो रूपं' मही द्यौः पृथिवी च न इति' द्यावा-पृथिवीयं' महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं' युवाना पितरा पुनरित्यार्भवं' पुनर्वदष्टमे ऽहन्यष्टमस्याह्नो रूप' मिमा नु कम्भुवना सीषधामेति' द्विपदाः शंसति' 'द्विपाद्वै पुरुषश्चतुष्पादाः पशवः' पशवश्छन्दोमाः' पशूना मवरुद्धै' तद्यद् द्विपदाः शंसति' यजमान मेव' तद् द्विप्रतिष्ठं' चतुष्पात्सु पशुषु प्रतिष्ठापयति' देवाना मिद्वो महदिति वैश्वदेवं' महद्वदष्टमे ऽह-न्यष्टमस्याह्नो रूपं' ताभ्यु गायत्राणि गायचतृतीय-सवन एष चाह' एतावान वैश्वानर' मित्याग्निमारु-तस्य प्रतिपदग्निर्वैश्वानरो महानिति' महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं' क्रीळं वः शर्धो मारुत मिति मारुतं' जम्भे रसस्य वावृध इति' वृधन्वदष्टमे ऽहन्यष्ट-मस्याह्नो रूपं' जातवेदसे सुनवाम सोम मिति जात-वेदस्याच्युता ऽग्ने मृळ महाँ असीति जातवेदस्यं'

महद्द्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यह एष त्र्यहः ॥ ॥ (१८) ॥

इत्यैतरेयब्राह्मणे पञ्चमपञ्चिकायां तृतीयोऽध्यायः॥ ३॥

महच्छब्दयुक्तं सूक्तचतुष्टयं विधत्ते—"अपूर्व्या पुरुतमान्यस्मा इति ( सं० ६.३२. ) सूक्तं, महे वीराय तवसे तुरायेति महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं; तां सु ते कीर्त्तिं मघवन्महि त्वेति ( सं० १०.५४. ) सूक्तं, महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं; त्वं महाँ इन्द्र यो ह शुष्मैरिति ( सं० १.६३. ) सूक्तं, महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपं; त्वं महाँ इन्द्र तुभ्यं ह क्षा इति ( सं० ४.१७.) सूक्तं; महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपम्"–इति। अपूर्व्येतिसूक्तस्य द्वितीयपादे "महे वीराय"–इति महच्छब्दः श्रुतः ; इतरस्मिन् सूक्तत्रये प्रथमपादे एव महच्छब्दः स्पष्टः ॥

सूक्तचतुष्टयगतं छन्दः प्रशंसति— "तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते"–इति ॥

यथा मरुत्वतीयशस्त्रे महच्छब्दयुक्तं त्रिष्टुप्छन्दस्कं सूक्तचतुष्टय मुक्त्वा पश्चाज्जगतीच्छन्दस्कं महच्छब्दयुक्तं सूक्तान्तर मुक्तम्, एव मत्र निष्केवल्येऽपि त्रिष्टुप्छन्दस्कं सूक्तचतुष्टय मभिधाय जगतीच्छन्दस्कं सूक्तं विधत्ते— "दिवश्चिदस्य वरिमा वि पप्रथ इति ( सं० १.५५. ) सूक्त मिन्द्रं न मह्नेति महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपम्"–इति। "दिवश्चिदस्य"–इतिसूक्तस्य इन्द्र मिति द्वितीयपादे "मह्ना"–इति महच्छब्दः श्रुतः ॥

तस्मिन् सूक्ते निविद्धानं विधत्ते— "तदु जागतं जगत्यो वा

एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति; तद्वेतच्छन्दो वहति, यस्मिन्निविद्धीयते; तस्माज्जगतीषु निविदं दधाति"–इति ॥

छन्दोद्वयं मिलित्वा प्रशंसति—"मिथुनानि सूक्तानि शस्यन्ते,—त्रैष्टुभानि च जागतानि च; मिथुनं वै पशवः, पशवश्छन्दोमाः; पशूना मवरुद्ध्यै"–इति ॥

सूक्तेषु महच्छन्दपञ्चसङ्ख्याञ्च पूर्ववत्प्रशंसति—"महद्वन्ति सूक्तानि शस्यन्ते; महद्वा अन्तरिक्ष मन्तरिक्षस्याप्त्यै; पञ्च पञ्च सूक्तानि शस्यन्ते; पञ्चपदा पङ्क्तिः, पाङ्क्तो यज्ञः, पाङ्क्ताः पशवः, पशवश्छन्दोमाः, पशूना मवरुद्ध्यै"–इति ॥

शस्त्रद्वयगतानि महच्छब्दयुक्तानि मिलित्वा प्रशंसति—"तानि द्वेधा पञ्चान्यानि पञ्चान्यानि दश सम्पद्यन्ते; सा दशिनी विराळन्नं, विराळन्नं पशवः, पशवश्छन्दोमाः, पशूना मवरुद्ध्यै"–इति। पूर्वोक्तानि महच्छब्दयुक्तानि सर्वाणि सूक्तानि द्वेधा वियुक्तानि। कथ मिति, तदुच्यते—'पञ्चान्यानि' मरुत्वतीयशस्त्रगतानि पञ्चसङ्ख्याकानि पृथगेवावस्थितानि; पुनरपि 'पञ्चान्यानि' निष्केवल्यशस्त्रगतानि पञ्चसङ्ख्याकानि पृथगेवावस्थितानि; तानि सर्वाणि मिलित्वा दशसङ्ख्याकानि सम्पद्यन्ते। सा 'दशिनी' दशसङ्ख्यासमूहरूपा विराड् भवति; "दशाक्षरा विराट्"–इतिश्रुतेः। अन्नसाधनत्वाद्विराट्छन्दोऽन्नम्; तथान्नं क्षीरादिरूपं पशूत्पन्नत्वात्पशवः एव; ते च पशवश्छन्दोमैश्चतुर्विंशादिभिः स्तोमैस्तद्युक्तैरहोभिर्वा सम्पादितत्वाच्छन्दोमस्वरूपाः; अनेन सम्बन्धेन तत्पञ्चकद्वयं पशुप्राप्त्यै भवति ॥

शस्त्रान्तरस्य प्रतिपदनुचरौ विधत्ते—"विश्वो देवस्य नेतुस्, तत्सवितुर्वरेण्य, मा विश्वदेवं सत्पति मिति वैश्वदेवस्य प्रतिपद-

नुचरौ; बार्हते ऽहन्यष्टमे ऽहन्यष्टमस्याह्नो रूपम्"–इति। "विश्वो देवस्य"–इत्येका ( सं ५.५०.१.), "तत्सवितुर्वरेण्यम्"–इति ( सं० ३.६२.१०,११.) द्वे; एतत्त्रय बृहत्सामसम्बन्धी तृचः शस्त्रस्य प्रतिपत्; "आ विश्वदेवम्"–इति ( सं० ५.८२.७–९.) तृचोऽनुचरः; तदुभयं बृहत्सामसम्बन्धाद् 'बार्हतं' शुक्लत्वेन बृहत्सामसम्बन्धिन्यष्टमे ऽहनि योग्यम् ॥

ऊर्ध्वलिङ्गोपेतं सवितृदेवताकं सूक्तस्थानीयं चतुर्ऋचं* विधत्ते —"हिरण्यपाणिमूतय इति ( सं० १.२२.५–८.) सावित्रमूर्ध्ववदष्टमे ऽहन्यष्टमस्याह्नो रूपम्"–इति। द्वितीयपादे "सवितारमुपह्वये"–इतिश्रवणात् सवितृदेवताकं सूक्तम्। ऊर्ध्वशब्दस्याश्रवणेऽपि सवितृमण्डलस्योपरिदेशवर्तित्वादर्थत ऊर्ध्ववत्त्वम् ॥

महच्छब्दोपेतं सूक्तस्थानीयं तृचं† विधत्ते— "मही द्यौः पृथिवी च न इति ( सं० १.२२.१३–१५.) द्यावापृथिवीयं, महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपम्"–इति। "मही"–इत्येष एव महच्छब्दः ॥

पुनःशब्दोपेतं सूक्तस्थानीयं तृचं‡ विधत्ते—"युवाना पितरा रित्यार्भवम् ( सं० १.२०.४–६.), पुनर्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्" –इति। तृतीयपादे "ऋभवो विष्ट्यक्रत"–इतिश्रवणात् ऋभुदेवताकं सूक्तम् ॥

द्विपदा ऋचो विधाय प्रशंसति—"इमा नु कं भुवना सीषधामेति द्विपदाः शंसति; द्विपाद्वै पुरुषश्चतुष्पादाः पशवः; पशव-

---

* प्रातर्युजेत्यादिकमेकविंशत्यृचं सूक्तम्, तत्रैव पञ्चमादीनां चतसृणामिह पठनम्।

† प्रातर्युजेत्यादिकमेकविंशत्यृचं सूक्तम्, तत्रैव त्रयोदशादीनां तिसृणामिह पठनम्।

‡ अयं देवायेत्यष्टर्चं सूक्तम्, तत्रैव चतुर्थादीनां तिसृणामिह पठनम्।

च्छन्दोमाः, पशूना मवरुद्धै ; तद्यद् द्विपदाः शंसति, यजमान मेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति"–इति ॥

महच्छब्दोपेतं बहुदेवताकं सूक्तं विधत्ते—"देवाना मिदवो महदिति ( सं० ८.८३. ) वैश्वदेवं महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपम्"–इति। महच्छब्दोऽत्र विस्पष्टः ॥

द्विपदाव्यतिरिक्ताना तत्सवितुर्वरेण्य मित्यारभ्य, देवाना मिदवो महदित्यन्तानां छन्दः प्रशंसति—"तानु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः"–इति ॥

शस्त्रान्तरस्य प्रतिपदं विधत्ते—"ऋतावानं वैश्वानर मित्याग्निमारुतस्य प्रतिपदग्निर्वैश्वानरो महानिति महद्वदष्टमे ऽहन्यष्टमस्याह्नो रूपम्"–इति। ऋतावान मित्यादिके सूक्तगते * तृचे द्वितीयस्या मृचि "अग्निर्वैश्वानरः"–इति द्वितीयः पादः। तत्र "महान्"–इति महच्छब्दः श्रूयते ।

हवशब्दोपेतं सूक्तं विधत्ते—"क्रीळं वः शर्धो मारुत मिति मारुतं; जम्भे रसस्य वावृध इति हवन्वदष्टमे ऽहन्यष्टमस्याह्नो रूपम्"–इति। क्रीळं व इति ( सं० १.३७. ) सूक्तस्य पञ्चम्या मृचि "जम्भे रसस्य"–इति पादः श्रूयते। तत्र "वावृधे"–इति वृधिधातुमत्त्वम् ॥

अच्युतलक्षिङ्गा मृचं विधत्ते— "जातवेदसे सुनवाम सोम मिति ( सं० १.९९. ) जातवेदस्यायुरता"–इति ॥

महच्छब्दयुतं जातवेदोदेवताकं सूक्तं विधत्ते— "अग्ने मृळ

* सर्वेष्वेव भाष्यपुस्तकेषु 'सूक्तगते' इति पाठो दृश्यते, परं स नून लिपिकरप्रमादप्रवाहजः, संहितायां कस्मिंश्चिदपि सूक्ते ऽस्य तृचस्यादर्शनात्, स्वतन्त्रायं शाखान्तरीयस्तृच, तन्न सूत्रे—"ऋतावान०—०विराजति"–इति ( आश्व० श्रौ० ८.१०.२ )।

महाँ असीति ( सं० ४.९.) जातवेदस्यं महद्वदष्टमोऽह्न्यष्टमस्याह्नो रूपम्"—इति ॥

आग्निमारुतशस्त्रगतेषु सूक्तेषु छन्दः प्रशंसति—"तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यह एष त्र्यहः"—इति । अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ४ ॥

इतिश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां तृतीयाध्याये
( त्रयोविंशाध्याये ) चतुर्थः खण्डः ॥ ४ ( १८ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायाः तृतीयोऽध्यायः ॥

## ॥ अथ चतुर्थाध्यायः ॥

( तत्र )

### ॥ अथ प्रथमः खण्डः ॥



॥ ॐ ॥ यद्वै समानोदर्कं तन्नवमस्याह्नो रूपं यद्द्व्येव तृतीय मह्स्तदेवैतत् पुनर्यन्नवमं यदश्ववद्यदन्तवद्यत् पुनरावृत्तं यत् पुनर्निनृत्तं यद्रतवद्यत् पर्यस्तवद्यत् त्रिवद्यदन्तरूपं यदुत्तमे पदे देवता निरुच्यते यदसौ लोको ऽभ्युदितो यच्छुचिवद्यत्सत्यवद्यत् क्षेतिवद्यद् गतवद्यदोकवद्यत् कृतं यत्तृतीयस्याह्नो रूप मेतानि वै नवमस्याह्नो रूपाण्यगन्म मह्ना नमसा यविष्ठ मिति नवमस्याह्न आज्यं भवति गतवन्नवमे ऽहनि नवमस्याह्नो रूपं तदु त्रैष्टुभं त्रिष्टुप्प्रातस्सवन एष त्र्यहः प्र वीरया शुचयो दद्रिरे ते ते सत्येन मनसा दीध्याना दिवि क्षयन्ता रजसः पृथिव्यां मा विश्ववाराश्विना गतं नो ऽयं सोम इन्द्र तुभ्यं सुन्वे मा तु प्र ब्रह्माणो अङ्गिरसो नक्षन्त सरस्वतीं देवयन्तो हवन्त मा नो दिवो बृहतः पर्वतादा सरस्वत्यभि नो नेषि वस्य इति प्रउगं शुचिवत् सत्यवत् क्षेतिवद्गतव-

दोकवन्नवमे ऽहनि नवमस्याह्नो रूपं तदु त्रैष्टुभं त्रिष्टुप्प्रातस्सवन एष चाहस्तं त मिद्राधसे महे त्रय इन्द्रस्य सोमा इन्द्र नेदीय एदिहि ॥ नूनं ब्रह्मणस्पतिरग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपो न कि: सुदासो रथ मितिं तृतीयेनाह्ना समान आतानो नवमे ऽहनि नवमस्याह्नो रूप मिन्द्रः स्वाहा पिबतु यस्य सोम इति सूक्तं मन्तो वै स्वाहाकारोऽन्तो नवम महर्नवमे ऽहनि नवमस्याह्नो रूपं गायत्साम नभन्यं यथावेरिति सूक्तं मर्चाम तद्वावृधानं स्वर्वदित्यन्तो वै स्वरन्तो नवम महर्नवमे ऽहनि नवमस्याह्नो रूपं तिष्ठा हरी रथ आ युज्यमानेति सूक्तं मन्तो वै स्थित मन्तो नवम महर्नवमे ऽहनि नवमस्याह्नो रूप मिमा उ त्वा पुरुतमस्य कारोरिति सूक्तं धियो रथेष्ठा मित्यन्तो वै स्थित मन्तो नवम महर्नवमे ऽहनि नवमस्याह्नो रूपं तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते प्र मन्दिने पितुमदर्चता वच इति सूक्तं समानोदर्कं नवमे ऽहनि नवमस्याह्नो रूपं तदु जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं

दधाति मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च
जागतानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूना
मवरुद्ध्यै पञ्च सूक्तानि शस्यन्ते पञ्चपदा पङ्क्तिः
पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशवश्छन्दोमाः पशूना
मवरुद्ध्यै त्वा मिद्धि हवामहे त्वं ह्येहि चेरव इति
बृहत्पृष्ठं भवति नवमे ऽहनि यद्वावानेति धाय्या-
च्युता ऽभि त्वा शूर नोनुम इति रथन्तरस्य योनि
मनु निवर्त्तयति राथन्तरं ह्येतदहरायतने नेन्द्र
विधातु शरण मिति सामप्रगाथस्त्रिवान्नवमे ऽहनि
नवमस्याह्नो रूपं त्य मू षु वाजिनं देवजूत मिति
तार्क्ष्यो ऽच्युतः ॥ १ (२०) ॥

नवमेऽहनि सम्यग्लिङ्गं दर्शयति— "यद्वै समानोदर्कं तन्नव-मस्याह्नो रूपम्"—इति। 'समानोदर्कं' तुल्यसमाप्तिकम् ॥

तृतीये ऽहन्युक्तानि लिङ्गान्यत्रापि नवमे ऽहन्यतिदिशति— "यदेव तृतीय महस्तदेवैतत् पुनर्यन्नवमम्"—इति। तृतीय महर्यादृशलिङ्गोपेतं पुनरप्यत्र यन्नवम महस्तदपि तादृशलिङ्गोपेतं द्रष्टव्यम् ॥

तानि लिङ्गान्युपन्यस्यति— "यदश्ववद्यद्रन्तवद्यत् पुनरावृत्तं यत् पुनर्निनृत्तं यद्रतवद्यत् पर्यस्तवद्यत्त्रिवद्यदन्तरूपं यदुत्तमे पदे देवता निरुच्यते यदसौ लोको ऽभ्युदितः"—इति ॥

अथ नूतनानि लिङ्गानि दर्शयति— "यच्छुचिवद्यत्सत्यवद्यत्

चेतिवदन्नतवदोकवत्"–इति। शुचिसत्यचेतिगतौकशब्दा नवमेऽहनि लिङ्गरूपाः। भूतार्थवाचिप्रत्ययान्तधातुरूपं यदस्ति, तेन सहितं तृतीयेऽहनि विद्यमानं लिङ्गम्॥

अन्यानि च सर्वाणि लिङ्गानि उपसंहरति—"यत्कृतं यत्तृतीयस्याह्नो रूप मेतानि वै नवमस्याह्नो रूपाणि"–इति॥

आज्यशस्त्रं विधत्ते— "अगन्म मह्ना नमसा यविष्ठ मिति नवमस्याह्न आज्यं भवति; गतवन्नवमे ऽहनि नवमस्याह्नो रूपम्"–इति। 'गतवद्' गमिधातुयुक्त मित्युक्तम्। अत्र (सं० ७.१२.) च "अगन्म"–इति गमिधातुः श्रूयते॥

सूक्तगतं छन्दः प्रशंसति— "तदु त्रैष्टुभं त्रिष्टुप्प्रातस्सवन एष त्र्यहः"–इति॥

प्रउगशस्त्रं विधत्ते— "प्र वीरया शुचयो दद्रिरे ते, ते सत्येन मनसा दीध्यानाः, दिवि क्षयन्ता रजसः पृथिव्या, आ विश्ववाराश्विना गतन्नो, अयं सोम इन्द्र तुभ्यं सुन्वे, आ तु प्र ब्रह्माणो अङ्गिरसो नक्षन्त, सरस्वतीं देवयन्तो हवन्त, आ नो दिवो बृहतः पर्वतादा, सरस्वत्यभि नो नेषि वस्य इति प्रउगं; शुचिवत्सत्यवत्क्षेतिवद्गतवदोकवन्नवमे ऽहनि नवमस्याह्नो रूपम्"–इति। अत्र 'दद्रिरे ते'–इति प्रयोगपाठः*, "प्र वीरया"–इति (सं०७,९०.१–३.) प्रथमं प्रतीकम्, तत्र "शुचयः"–इति शुचिशब्दोपेतं लिङ्गम्; "ते सत्येन"–इति (सं० ७.९०.५–७.) द्वितीयं प्रतीकम्, तत्र सत्यशब्दो लिङ्गम्; "दिवि क्षयन्ता"–इति (सं० ७.६४.१–३.) तृतीयम्, तत्र क्षेतिधातुर्लिङ्गम्; "आ विश्ववारा"–इति (सं० ७.७०.१–३.) चतुर्थम्, तत्र गतशब्दो लिङ्गम्; "अयं सोमः"–

* संहितापाठस्तु "दद्रिरे वां"–इति। 'वां—वै'–इति भाष्यम्। आश्व० श्रौ०८.११.१. द्र०।

इति ( सं० ७.२९.१–३. ) पञ्चमम्, तस्मिन् "आ तु प्र याहि हरिवस्तदोकाः"–इति द्वितीयः पादः, तस्मिन् ओकशब्दो लिङ्गम् ; "प्र ब्रह्माणः"–इति ( सं० ७.४२.१–३.) षष्ठम्, "सरस्वतीम्"–इति ( सं०१०.१७.७.) सप्तमम् ; "आ नो दिवः"–इति ( सं० ५.४३.११.) अष्टमम्, अत्र द्वितीयपादे "यजतां गन्तु"–इति गमिधातुः श्रुतः ; "सरस्वत्यभि नः"–इति ( सं० ६.६१.१४. ) नवमम्, तत्र चतुर्थपादे "अरणानि गन्म"–इति गमिधातुः श्रुतः । पूर्वोक्तयोः षष्ठसप्तमयोः अष्टलिंगाभावेऽपि छत्रिणो गच्छन्तीति न्यायेनेतरसाहचर्य्याल्लिंगवत्त्वं द्रष्टव्यम् । पञ्चानामेतैस्त्रिभिः प्रतीकैरेकसूचः ; इतरे षट् ऋचः । तदेतत्सर्वं प्रउगशस्त्रम् ॥

तदत्र्यं छन्दः प्रशंसति—"तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एव नवह."–इति ॥

मरुत्वतीयशस्त्रे क्लृप्तिलिंगं दर्शयति—"तं त मिद्राधसे मह ( सं० ८.६८. ), त्रय इन्द्रस्य सोमा ( सं० ८.२. ) इन्द्र नेदीय एदिहि ( सं० ८.५३. ), प्र नूनं ब्रह्मणस्पतिर् ( सं० १.४०. ), अग्निर्नेता ( सं० ३.२०. ), त्वं सोम क्रतुभिः ( सं० १.९१. ), पिन्वन्त्यपो ( सं० १.६४. ), न किः सुदासो रथ मिति ( सं० ७. ३२. ) तृतीयेनाह्ना समान आतानो नवमे ऽहनि नवमस्याह्नो रूपम्"–इति ॥

अन्तलिंगोपेतं सूक्तं विधत्ते — "इन्द्रः स्वाहा पिबतु यस्य सोम इति ( सं० ३.५०. ) सूक्त मन्तो वै स्वाहाकारोऽन्तो नवम महर्नवमे ऽहनि नवमस्याह्नो रूपम्"–इति । अत्र स्वाहा शब्दो दृश्यते, स च होममन्त्रस्यान्त ; नवम महर्नवरात्रस्यान्तः ; अतो लिंगसद्भावात् नवमे ऽहन्येतद्युक्तम् ॥

पुनरप्यन्तलिंगोपेतं सूक्तं विधत्ते — "गायत् साम नभन्यं यथा वेरिति ( सं० १.१७३. ) सूक्तं मर्चाम तदावृधानं स्वर्वदित्यन्तो वै स्वरन्तो नवम मह्नर्नवमे ऽहनि नवमस्याह्नो रूपम्"–इति। गायदितिसूक्तस्य "अर्चाम"–इति द्वितीयः पादः। तत्र "स्वर्वत्"–इति स्वर्गवाची शब्दः श्रूयते; स्वर्गश्च लोकत्रयस्यान्तः॥

प्रकारान्तरेणान्तवत्सूक्तं विधत्ते—"तिष्ठा हरी रथ आ युज्यमानेति ( सं० ३.३५. ) सूक्तमन्तो वै स्थित मन्तो नवम मह्नर्नवमे ऽहनि नवमस्याह्नो रूपम्"–इति। तिष्ठेति स्थितिवाची धात्वर्थः श्रूयते.; स च गमनस्यान्त॥

पुनरपि तथाविधं तल्लिङ्गोपेतं सूक्तं विधत्ते — "इमा उ त्वा पुरुतमस्य कारोरिति ( सं० ६.२१. ) सूक्तं, धियो रथेष्ठा मित्यन्तो वै स्थित मन्तो नवम मह्नर्नवमे ऽहनि नवमस्याह्नो रूपम्"–इति। "इमा उ त्वा"–इतिसूक्तस्य "धियो रथेष्ठाम्"–इति तृतीयः पाद। तत्र स्था मिति स्थितिधात्वर्थो गमनस्यान्तः श्रूयते॥

एतेष्वन्तवत्सु सूक्तेषु छन्दः प्रशंसति— "तद् त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते"–इति।

तुल्यसमाप्तिकं सूक्तं विधत्ते— "प्र मन्दिने पितुमदर्चता वच इति ( सं० १.१०१.) सूक्तं समानोदर्कं, नवमे ऽहनि नवमस्याह्नो रूपम्"–इति। अत्र सर्वास्वृक्षु "मरुत्वन्तं सख्याय हवामहे"–इति चतुर्थपादस्यैकत्वात्समानोदर्कत्वम्॥

तस्मिन् सूक्ते निविद्धानं विधत्ते— "तद् जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति; तद्वैतच्छन्दो वहति, यस्मिन्निविद्धीयते; तस्माज्जगतीषु निविदं दधाति"–इति॥

छन्दोद्वयं मिलित्वा प्रशंसति—"मिथुनानि सूक्तानि शस्यन्ते, त्रैष्टुभानि च जागतानि च; मिथुनं वै पशवः, पशवश्छन्दोमाः, पशूना मवरुद्धै"—इति। मिथुनस्यैकत्वेऽपि बहुवचनं पूजार्थम्॥

द्विविधसूक्तगतसङ्ख्यां प्रशंसति—"पञ्च सूक्तानि * शस्यन्ते; पञ्चपदा पङ्क्तिः, पाङ्क्तो यज्ञः, पाङ्क्ताः पशवः, पशवश्छन्दोमाः, पशूना मवरुद्धै"—इति॥

निष्केवल्यशस्त्रे बृहत्सामसाध्यपृष्ठस्तोत्रस्याधारभूतं स्तोत्रियं तृचं तदनुरूपञ्च विधत्ते—"त्वामिद्धि हवामहे (सं० ६.४६.), त्वं ह्येहि चेरव इति (सं० ८.६१.) बृहत्पृष्ठं भवति नवमेऽहनि"—इति। अयुग्मस्याह्नो राथन्तरत्वेऽपि बृहत्सम्बन्धस्य वाचनिकत्वान्नवमेऽहनि तद्योग्यता॥

तृतीयेऽहनि विहितानि अत्र पुनर्विधीयन्ते—"यद्वावानेति (सं० १०.७४.६.) धाय्याच्युता, अभि त्वा शूर नोनुम इति (सं० ७.३२.२२.) रथन्तरस्य योनिमनु निवर्तयति; राथन्तरं ह्येतदहरायतनेनेन्द्र त्रिधातु शरणमिति (सं० ६.४६.९,१०.) सामप्रगाथस्त्रिवान्नवमेऽहनि नवमस्याह्नो रूपं; त्यमू षु वाजिनं देवजूतमिति (सं० १०.१७८.) तार्क्ष्योऽच्युतः"—इति॥ १॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां चतुर्थाध्याये
(चतुर्विंशाध्याये) प्रथमः खण्डः॥ १ (२०)॥

---

* 'इन्द्रः स्वाहा', 'गायत्साम', 'तिष्ठा हरी', 'इमा उ त्वा'—इति चत्वारि त्रैष्टुभानि, 'प्र मन्दिने'—इत्येकं जागतम्, तदुभयथा पञ्च (१.७, १२८ पृ०)।

॥ अथ द्वितीयः खण्डः ॥

सं च त्वे जग्मुर्गिर इन्द्र पूर्वीरिति सूक्तं गतवन्नवमे ऽहनि नवमस्याह्नो रूपं कदा भुवन् रथक्षयाणि ब्रह्मेति सूक्तं क्षेतिवदन्तरूपं क्षेतीव वा अन्तं गत्वा नवमे ऽहनि नवमस्याह्नो रूपमा सत्यो यातु मघवाँ ऋजीषीति सूक्तं सत्यवन्नवमे ऽहनि नवमस्याह्नो रूपं तत्त इन्द्रियं परमं पराचैरिति सूक्तमन्तो वै परमन्तो नवममहर्नवमे ऽहनि नवमस्याह्नो रूपं तद् त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते ऽहं भुवं वसुनः पूर्व्यस्पतिरिति सूक्तमहं धनानि संजयामि शश्वत इत्यन्तो वै जितमन्तो नवममहर्नवमे ऽहनि नवमस्याह्नो रूपं तदु जागतं जगत्यो वा एतस्याह्नो माध्यन्दिनं वहन्ति तद्धैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै पञ्च पञ्च सूक्तानि शस्यन्ते पञ्चपदा पङ्क्तिः पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै तानि द्वेधा पञ्चान्यानि पञ्चा-

न्यानि दश सम्पद्यन्ते सा दशिनी विराळन्नं विराळन्नं पशवः पशवश्छन्दोमाः पशूना मवरुद्ध्यै तत्सवितुर्वृणीमह इत्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथन्तरे ऽहनि नवमे ऽहनि नवमस्याह्नो रूपं प्र वां महि द्यवी अभीति द्यावापृथिवीयं शुची उप प्रशस्तय इति शुचिवन्नवमे ऽहनि नवमस्याह्नो रूप मिन्द्र इषे ददातु नस्तेनो रत्नानि धत्तनेत्यार्भवं विरासाग्नानि सुव्रत इति चिवन्नवमे ऽहनि नवमस्याह्नो रूपं बभ्रुरेको विषु णः सूनरो युवेति द्विपदाः शंसति द्विपाद्वै पुरुषश्चतुष्पादाः पशवः पशवश्छन्दोमाः पशूना मवरुद्ध्यै तद्यद् द्विपदाः शंसति यजमान मेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति ये त्रिंशति त्रयस्पर इति वैश्वदेवं त्रिवन्नवमे ऽहनि नवमस्याह्नो रूपं तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहो वैश्वानरो न ऊतय इत्याग्निमारुतस्य प्रतिपदा प्र यातु परावत इत्यन्तो वै परावतोऽन्तो नवम महर्नवमे ऽहनि नवमस्याह्नो रूपं मरुतो यस्य हि क्षय इति मारुतं चेतिवदन्तरूपं चेतीव वा अन्तं गत्वा नवमे ऽहनि नवमस्याह्नो रूपं जातवेदसे सुनवाम सोम मिति

जातवेदस्याच्युता प्राग्नये वाच मीरयेति जातवेदस्यं समानोदर्कं नवमे ऽहनि नवमस्याह्नो रूपं स नः पर्षदति द्विषः स नः पर्षदति द्विष इति शंसति बहु वा एतस्मिन्नवरात्रे किञ्च किञ्च वारुणं क्रियते शान्त्या एव तस्मात् स नः पर्षदति द्विषः स नः पर्षदति द्विष इति शंसति सर्वस्मादेवैनांस्तदेनसः प्रमुञ्चति तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः ॥ (२) २१ ॥

अथ गमिधातुयुक्तं सूक्तं विधत्ते— "सं च त्वे जग्मुर्गिर इन्द्र पूर्वीरिति ( सं० ६.३४. ) सूक्तं, गतवन्नवमे ऽहनि नवमस्याह्नो रूपम्"–इति। जग्मुरिति गमिधातुः ॥

क्षेतिधातुलिङ्गकं सूक्तं विधत्ते— "कदा भुवन् रथक्षयाणि ब्रह्मेति ( सं० ६.३५. ) सूक्तं, क्षेतिवदन्तरूपं ; क्षेतीव वा अन्तं गत्वा नवमे ऽहनि नवमस्याह्नो रूपम्"–इति। कदा भुवन्नित्यत्र "क्षयाणि"–इति क्षेतिधातुरूपं श्रूयते। क्षेतिधातुरूपत्वादन्तरूपम्। कथमेतदिति, तदुच्यते— मार्गस्यान्तं गत्वा 'क्षेतीव वै' कश्चिन्निवसत्येव, अतो निवासार्थवाचिनो क्षेतिधातोरन्तरूपत्वम् ॥

सत्यलिङ्गकं सूक्तं विधत्ते—"आ सत्यो यातु मघवाँ ऋजीषीति ( सं० ६.१६. ) सूक्तं, सत्यवन्नवमे ऽहनि नवमस्याह्नोरूपम्"–इति। सत्यशब्दोऽत्र विस्पष्टः ॥

अन्तलिङ्गोपेतं सूक्तं विधत्ते— "तत्त इन्द्रियं परमं पराचैरिति ( सं० १.१०३. ) सूक्तं अन्तो वै परमं अन्तो नवममहर्नवमे

ऽहनि नवमस्याह्नो रूपम्"–इति। "तमे"–इतिसूक्ते परम-शब्दः उत्कर्षवाची विद्यते; उत्कर्षादधिकस्य कस्यचिदभावात् परमशब्दस्यान्तवाचित्वम् ॥

"यत्त्वे"–इत्यादिसूक्तचतुष्टयगतं छन्दः प्रशंसति— "तद्ध त्रैष्टुभं, तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते"–इति ॥

मरुत्वतीयशस्त्रे अन्यत् सूक्तं विधत्ते—"अहं भुवं वसुनः पूर्व्यस्पतिरिति (सं० १०.४८.) सूक्तं मद्वत् धनानि सञ्जयामि शश्वत इत्यन्तो वै जित मन्तो नवम मद्भन्वमे ऽहनि नवमस्याह्नो रूपम्"–इति। "अहं भुवम्"–इतिसूक्तस्य "अहं धनानि"–इति द्वितीयः पादः। तत्र "जयामि"–इति श्रूयते; जयश्च युद्धस्यान्तः ॥

तस्मिन् सूक्ते निविद्धानं विधत्ते—"तदु जागतं,—जगत्यो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति; तद्वैतच्छन्दो वहति, यस्मिन्निविद्धीयते; तस्माज्जगतीषु निविदं दधाति"–इति।

सूक्तगतं छन्दोदयं सूक्तसङ्ख्याच प्रशंसति—"मिथुनानि सूक्तानि शस्यन्ते,— त्रैष्टुभानि च, जागतानि च; मिथुनं वै पशवः, पशवश्छन्दोमाः, पशूना मवरुद्धे, पञ्च पञ्च सूक्तानि शस्यन्ते; पञ्चपदा पङ्क्तिः, पाङ्क्तो यज्ञः, पाङ्क्ताः पशवः, पशवश्छन्दोमाः, पशूना मवरुद्धे; तानि द्वेधा पञ्चान्यानि पञ्चान्यानि दश सम्पद्यन्ते; सा दशिनी विराळन्नं; विराळन्नं पशवः, पशवश्छन्दोमाः, पशूना मवरुद्धे"–इति। मरुत्वतीयनिष्केवल्यशस्त्रद्वयगतसूक्तापेक्षया 'पञ्च पञ्च' इति द्विरुक्तिः ॥

तृतीये ऽहनि विहितौ वैश्वदेवस्य प्रतिपदनुचरावत्रापि विधत्ते—"तत्सवितुर्वृणीमहे (ऋ० ५.८२.१–३.), अद्या नो देव

सवितरिति ( सं० ५.८२.४–६. ) वैश्वदेवस्य प्रतिपदनुचरौ ; राथन्तरे ऽहनि नवमेऽहनि नवमस्याह्नो रूपम्"–इति ॥

अन्तलिङ्गकं त्र्यचात्मकं सूक्तं विधत्ते —"दोषो आगादिति* सावित्र मन्तो वै गत मन्तो नवम महर्नवमे ऽहनि नवमस्याह्नो रूपम्"–इति । "आगात्"–इति गमिधात्वर्थः ; गमनञ्च स्थितेरन्तः ; अतोऽन्तवत्त्वं लिङ्गम् ॥

शुचिलिङ्गकं सूक्तस्थानीयं त्र्यचं विधत्ते – "प्र वां महि द्यवी अभीति ( सं० ४.५६.५–७. ), द्यावापृथिवीयं ; शुची उप प्रशस्तय इति शुचिवन्नवमे ऽहनि नवमस्याह्नो रूपम्"–इति । "महि द्यवी"–इतिप्रथमपादादिदं द्यावापृथिवीयम् । तस्य तृतीयपादे "शुची उप"–इति शुचिशब्दः श्रूयते ॥

त्रिशब्दोपेतं सूक्तस्थानीयं त्र्यचं विधत्ते —"इन्द्र इषे ददातु नस्तेनो रत्नानि धत्तनेत्यार्भवं, त्रिरा साप्तानि सुन्वत इति त्रिवन्नवमे ऽहनि नवमस्याह्नो रूपम्"–इति । "इन्द्र इषे"–इत्यृगेका ( सं० ८.९३.३४. ), "तेनो रत्नानि"–इति ( सं० १.२०.७,८. ) द्वे, त्रितयं मिलित्वा ऋभुदेवताकं सूक्तम् ; "ऋभुक्षण मृभुम्"–इतिप्रथमपादात् ( सं० ८.९३.३४. ) । "त्रिरा साप्तानि"–इतिपादे ( सं० १.२०.७. ) त्रिशब्दः श्रुतः ॥

पादद्वयोपेता ऋचो विधाय प्रशंसति— "बभ्रुरेको विषुणः सूनरो युवेति ( सं० ८.२९.१–१०. ) द्विपदाः शंसति ; द्विपाद्वै पुरुषश्चतुष्पादाः पशवः, पशवश्छन्दोमाः, पशूना मवरुद्ध्यै ; तद्यद् द्विपदाः शंसति, यजमान मेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति"–इति ॥

---

* अ० पु० दोषो आगादित इत्यत्र ।

त्रिशब्दोपेतं बहुदेवताकं सूक्तं विधत्ते— "ये त्रिंशति त्रय-स्पर इति ( सं० ८.२८. ) वैश्वदेवं त्रिवन्नवमे ऽहनि नवमस्याह्नो रूपम्"–इति । "त्रिंशति"–इतिश्रवणाद् बहुदेवताकत्वम् । "त्रयः"–इति त्रिशब्दो विस्पष्टः ॥

तत्सूक्तगतं छन्दः प्रशंसति—"तान्यु गायत्राणि गायत्रतृतीय-सवन एष त्र्यहः"–इति । 'तान्यु' वैश्वदेवशस्त्रे प्रोक्तानि तान्यपि सूक्तानि ॥

शस्त्रान्तरस्य प्रतिपदं विधत्ते— "वैश्वानरो न ऊतय इत्या-ग्निमारुतस्य प्रतिपदा प्र यातु परावत इत्यन्तो वै परावतोऽन्तो नवम महर्नवमे ऽहनि नवमस्याह्नो रूपम्"–इति । अत्र सूक्त-पठिते * ऋचे "परावतः"–इति शब्दो दूरदेशवाची ; स च देशो मार्गस्यान्त इत्यन्तवत्त्वं लिङ्गम् ॥

प्रकारान्तरेणान्तलिङ्गकं सूक्तं विधत्ते— "मरुतो यस्य हि क्षय इति ( सं० १.८६. ) मारुतं, क्षेतिवदन्तरूपं ; क्षेतीव वा अन्तं गत्वा नवमे ऽहनि नवमस्याह्नो रूपम्"–इति । "मरुतः" –इतिश्रवणात् 'मारुतम्', "क्षयः"–इतिश्रवणात् 'क्षेतिवत्' क्षयतिधातुयुक्तम् । स च धात्वर्थोऽन्त स्वरूपम् । कथ मेतदिति, तदुच्यते— सर्वो हि पुरुषो मार्गस्यान्तं गत्वा 'क्षेतीव वै' कचि-न्निवसत्येव ; सोऽयं मन्तो लिङ्गम् ॥

अच्युतत्वलिङ्गयुक्तां सूचं विधत्ते—"जातवेदसे सुनवाम सोम मिति ( सं० १.९९.१.-) जातवेदस्याच्युता"–इति ।

जातवेदोवाचकाग्निशब्दोपेतं सूक्तं विधत्ते— "अग्नये वाच

* आश्व० श्रौ० ८.११.४ । तत्र "वैश्वानरो न ऊतये"–इति प्रथमा, "वैश्वानरो न आगमत्"–इति द्वितीया, "वैश्वानरो अङ्गिरोभ्य"–इति तृतीया ।

मीरयेति ( सं॰ १०.१८७. ) जातवेदस्यं समानोदर्कं, नवमे ऽह्नि नवमस्याह्नो रूपम्"–इति। एतदीयासृक्षु "स नः पर्षदति द्विषः"–इतिपादेन समाप्तिदर्शनात् समानोदर्कत्वम् ॥

तस्य पादस्य पुनःपुनरावृत्तिं दर्शयति— "स नः पर्षदति-द्विषः, स नः पर्षदति द्विष इति शंसति ; बहु वा एतस्मिन्नवरात्रे, किंच किंच वारुणं क्रियते, शान्त्या एव ; तद्यत्स नः पर्षदति द्विषः, स नः पर्षदति द्विष इति शंसति, सर्वस्मादेवैनांस्तदेनसः प्र मुञ्चति"–इति। "स नः"–इत्यादिपादस्य सर्वासृक्षु पठितस्य सङ्ख्यार्थं वीप्सारूपेण द्विरुक्तिः। एत मेव पादं पुनः पुनः शंसतीत्यत्र को ऽभिप्राय इति, सोऽभिधीयते— एतस्मिन्नवरात्रे विविधबहुसमष्टिरूपे प्रयोगाधिक्यात्तदा तदा विस्मृत्य किंचिदपि 'वारुणं' वारणीयं निषिद्धानुष्ठानं 'बहु वै' प्रभूत मेव क्रियते, अतः तस्य शान्त्यर्थं मेव पुनः पुनः शस्यते। तेन स न इत्यादेः पुनः पुनः शंसनेन, तस्मात् सर्वस्मात् निषिद्धाचरणात् 'एनान्' ऋत्विग्यजमानान् प्रमोचयति। तस्य पादस्याय मर्थः— यस्माग्नेः स्तुतिरूपा वार्गीयते, सोऽग्निः पापरूपान् शत्रूनतिक्रम्य 'नः' अस्मान् 'पर्षद्' विघ्नपरिहारेण कर्मपारं नयत्विति ॥

एतच्छस्त्रगतसूक्तेषु छन्दः प्रशंसति— "तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः"–इति ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां चतुर्थाध्याये
( चतुर्विंशाध्याये ) द्वितीयः खण्डः ॥ २ (२१) ॥

---

॥ अथ तृतीयः खण्डः ॥

पृष्ठ्यं षळहमुपयन्ति यथा वै मुख मेवं पृष्ठ्यः षळहस्तद्यथान्तरं मुखस्य जिह्वा तालु दन्ता एवं छन्दोमा अथ येनैव वाचं व्याकरोति येन स्वादु चास्वादु च वि जानाति तद्दशम महर्यथा वै नासिके एवं पृष्ठ्यः षळहस्तद्यथान्तरं नासिकयोरेवं छन्दोमा अथ येनैव गन्धान्वि जानाति तद्दशम महर्यथा वा अक्ष्येवं पृष्ठ्यः षळहस्तद्यथान्तर मक्ष्णः कृष्ण मेवं छन्दोमा अथ येव कनीनिका येन पश्यति तद्दशम महर्यथा वै कर्ण एवं पृष्ठ्यः षळहस्तद्यथान्तरं कर्ण-स्यैवं छन्दोमा अथ येनैव शृणोति तद्दशम महः श्रीर्वै दशम महः श्रियं वा एत आ गच्छन्ति ये दशम महरागच्छन्ति तस्माद्दशम मह रविवाक्यं भवति मा श्रियो ऽववादिष्मेति दुरववदं हि श्रेयसे ततः सर्पन्ति ते मार्जयन्ते ते पत्नीशालां सम्प्रपद्यन्ते तेषां य एता माहुतिं विद्वान्स्यात् ब्रूयात् समन्वा-रभध्व मिति स जुहुयादिह रमेह रमध्वं मिह धृतिरिह स्वधृतिरग्ने ऽवाट् स्वाहावाळिति स यदिह रमेत्याहास्मिन्नेवैनांस्तल्लोके रमयतीह रमध्व मिति यदाह प्रजा मेवेषु तद्रमयतीह धृतिरिह

स्वधृतिरिति यदाह प्रजां चैव तद्वाचं च यजमानेषु दधात्यग्ने ऽवाळिति रथन्तरं स्वाहावाळिति बृहद्देवानां वा एतन्मिथुनं यद् बृहद्रथन्तरे देवाना मेव तन्मिथुनेन मिथुन मवरुन्धते देवानां मिथुनेन मिथुनं प्र जायन्ते प्रजात्यै प्र जायते प्रजया पशुभिर्य एवं वेद ते ततः सर्पन्ति ते मार्जयन्ते त आग्नीध्रं समन्वारभन्ते तेषां य एता माहुतिं विद्यात् स ब्रूयात् समन्वारभध्व मिति स जुहुयादुप सृजन् धरुणं मातरं धरुणो धयन् रायस्पोष मिष मूर्ज मस्मासु दीधरत्स्वाहेति रायस्पोष मिष मूर्ज मवरुन्ध आत्मने च यजमानेभ्यश्च यत्रैवं विद्वानेता माहुतिं जुहोति ॥ २ (२२) ॥

द्वादशाहे प्रायणीयोदयनीयरूप आद्यन्ते ये अहनी, तयोर्मध्ये दशरात्रोऽस्ति ; तस्मिंश्च त्रयो भागाः,— पृष्ठ्यः षडह एको भागः, छन्दोमनामकास्त्रयोऽहर्विशेषाः द्वितीयो भागः, दशम मह-स्तृतीयो भागः। तस्य भागस्य विधेयतया प्रशंसा कर्तव्या। इतरभागयोरपि यत्र या प्रशंसा प्रतीयते, सापि विधेयस्य दशमस्याह्नः प्रशंसार्थ मेव ; तस्मिन्नहनि प्रशंसातिशयस्य गम्यमानत्वात्। तत्र चत्वारो दृष्टान्ता विवक्षिताः। तेषां मध्ये प्रथमेन दृष्टान्तेन प्रशंसति— "पृष्ठं षळहः सुपयन्ति ; यथा वै मुख मेवं षळहः षळहस्तद्यथान्तरं मुखस्य जिह्वा तालु दन्ताः, एवं छन्दोमाः ; अथ येनैव वाचं व्याकरोति, येन स्वादु चास्वादु च विजानाति,

तद्दशमं महः"–इति। याज्ञिका दशरात्रे पृष्ठ्यं षळहमनु तिष्ठन्ति, स मुखस्थानीयः; मुखस्याभ्यन्तरे जिह्वा तालु दन्ताश्चेति त्रयोऽवयवास्तिष्ठन्ति, तत्स्थानीयास्त्रयश्छन्दोमाः। अथ तद् 'येन' विलक्षणेन येनैव वागिन्द्रियेण 'वाचं व्याकरोति' शब्दमुच्चारयति। येन च रसनेन्द्रियेण स्वाद्वस्वादुविभागं जानाति, तदिन्द्रियद्वयस्थानीय मेतद्दशमं महः॥

द्वितीयेन दृष्टान्तेन प्रशंसति— "यथा वै नासिके एवं पृष्ठः षळहस्तद्यथान्तरं नासिकयोरेवं छन्दोमा, अथ येनैव गन्धान्विजानाति तद्दशमं महः"–इति। छिद्रद्वययुक्तत्वेन भागद्वयविवक्षया 'नासिके' इति द्विवचनम्। तयोः 'अन्तरं' मध्यवर्ति छिद्रम्; गन्धग्राहकघ्राणेन्द्रियस्थानीयं दशमं महः॥

तृतीयेन दृष्टान्तेन प्रशंसति— "यथा वा अक्ष्येवं पृष्ठः षळहस्तद्यथान्तरं मध्यः कृष्ण मेवं छन्दोमा, अथ यैव कनीनिका, येन पश्यति, तद्दशमं महः"–इति। अक्षिशब्देन शुक्लमण्डलसहितं सर्वं गोलकं विवक्षितम्। तत्र भागत्रयं मारण्यकाण्डे वक्ष्यते— "त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिका"–इति (२आ० ३.५. ५.)। शुक्लमण्डलमध्ये कृष्णमण्डलं, तस्य मध्ये स्वल्पा वर्तुलाकारा कनीनिका, तत्रावस्थितेन चक्षुरिन्द्रियेण जनो रूपं पश्यति। तत्र शुक्लमण्डलरूपगोलकस्थानीयः पृष्ठः षळहः, कृष्णमण्डलस्थानीयाः छन्दोमाः, कनीनिकागतेन्द्रियस्थानीयं दशमं महः॥

चतुर्थदृष्टान्तेन प्रशंसति— "यथा वै कर्ण एवं पृष्ठः षळहस्तद्यथान्तरं कर्णस्यैवं छन्दोमा, अथ येनैव शृणोति, तद्दशमं महः"–इति। कर्णशब्देन शष्कुल्याकारं गोलक मुच्यते। तत्स्थानीयः पृष्ठः षळहः। तस्य कर्णस्य 'अन्तरं' यन्मध्यवर्त्ति

छिद्र तत्स्थानीया छन्दोमाः। तच्छिद्रावस्थितेनेन्द्रियेण जनः शब्द शृणोति, तदिन्द्रियस्थानीयं दशम मह्नः ॥

अथ तस्मिन् दशमेऽहनि कञ्चिन्नियमं विधत्ते—"श्रीर्वै दशम महः,— श्रियं वा एत आ गच्छन्ति, ये दशम महरागच्छन्ति तस्माद्दशम मह्नरविवाक्यं भवति, मा श्रियो ऽववादिष्मेति दुरववदं हि श्रेयसः"—इति। यदेतद्दशम महः, सा 'श्रीर्वै' भोग्यवस्तुसमृद्धि-स्वरूपमेव; "ऋध्नोति यो द्वादशाहेन यजते"—इतिश्रुत्यन्तरात् *। अतो ये दशम महः 'आगच्छन्ति' अनुतिष्ठन्ति, ते श्रिय मेव प्राप्नुवन्ति; यस्मात् श्रीरूप मेतदहः, तस्माद्विवाक्यरहितं भवति; यदि प्रमादान्मन्त्रे ऽन्यत्र वा यत्किञ्चिद्विरुद्ध माचरेत्, तदानीं तद्विरुद्ध मस्तेन 'वाच्यं' वक्तव्यम्,— अत्र त्वया विरुद्ध मनुष्ठितं, तदेवं सम्यगनुतिष्ठेत्यभिप्रेत्य कर्मान्तरे वक्तव्यम्; अत्र तु तस्य विरुद्धमानवचनस्य निषिद्धत्वादिद महः 'अविवाक्यम्'। तथा चाश्वलायन आह—"तस्मिन्नहनि कोनचिस्व्यचिद्विवाच्य मवि वाक्य मित्येतदाचक्षते; संशये वहिर्वेदि स्वाध्यायप्रयोगो ऽन्त-र्वेदीत्येके"—इति (श्रौ० ८.१२.१०-१२.)॥

परेण प्रयुज्यमानं विरुद्धं दृष्ट्वापि तन्न ब्रूयादितिनियमस्योप-पत्तिरुच्यते—"श्रियो माववादिष्मेति"—इति। दशमस्याह्नः श्रीरू-पत्वात्तस्य यदववदनं तत् श्रिया एव भवति। अवमतस्य विरुद्धस्य वदनम् 'अववदनं' निन्दा; यदि दशम महः 'अववादिष्म' निन्दां कुर्मः, तर्हि श्रिया एव निन्दा सम्पद्यते; अतो वयं श्रियो 'माव-वादिष्म' निन्दा मा कुर्म इति विवाच्यं परित्यजतां अभिप्रायः। लोकेऽपि श्रेयसो विद्यैश्वर्यादिनाधिकस्य पुरुषस्याचरणं 'दुरववदं'

* "यदकार्षं परिभूय सर्वां भूमिं आर्धात्"—इति १६६ पृ०।

हि' अपवादेन निन्दया रहितम्। अत एव पितावार्थ्यादीनां निन्दां न कुर्वन्ति, हेषिभिः क्रियमाण मपि न शृखन्ति। तदेव मविवाच्यत्वधर्मोऽत्र विहितः। यद्वा वाक्यद्वय मिदम्,— दशम मह्रागच्छन्तीत्यन्तो दशमस्याह्नो विधिः, तस्मादित्यादिरविवाक्य-त्वनियमविधिः। सोऽपि शाखान्तरेऽप्येव माम्नायते—"तस्माद्दशमे ऽहन्यविवाक्ये उपहताय न व्रूयम्"–इति ( तै० सं० ७.२.१.२.) ॥

अथैतस्मिन् दशमेऽहनि मानसग्रहाय प्रसर्पणं विधत्ते— "ते ततः सर्पन्ति"–इति। 'ते' अनुष्ठातारः, 'ततः' पत्नीसंयाजा-न्तानुष्ठानादूर्ध्वं प्राञ्चः उदेत्य मानसाय प्रसर्पेयुः। प्रसर्पणं नाम तदर्थः प्रयत्नः। सर्वेष्वहर्गणेषु कर्मसु अन्तिमादह्नः इतराण्यहानि पत्नीसंयाजान्तानि, अन्तिमं त्वेक मेवोदवसानीयान्तम्। तथा चाश्वलायन आह— "प्रातरनुवाकाद्युदवसानीयान्तान्यन्त्यानि ; पत्नीसंयाजान्तानीतराणि"–इति (श्रौ० ७. १. ४, ५.)। तथा सत्यपि वाक्येतरत्वन्यायेन पत्नीसंयाजान्तत्वे प्राप्ते वचनेन तत ऊर्ध्वं मानसग्रहो विधत्ते। तदर्थं 'प्रसर्पन्ति' सदसो विनिर्गत्य यथायथं मार्गेण गच्छेयुः ॥

गतानां तेषां तीर्थदेशे मार्जनं विधत्ते— "ते मार्जयन्ते"– इति ॥

मार्जनादूर्ध्वं होमार्थं स्थानविशेषप्राप्तिं विधत्ते— "ते पत्नी-शालां सम्प्रपद्यन्ते"–इति। पत्नी हि गार्हपत्यस्य समीपेऽवतिष्ठत इति सैव 'पत्नीशाला' ; तत्र गच्छेयुः ॥

गतानां तेषां होमं विधत्ते— "तेषां य एता माहुतिं विद्यात्स ब्रूयात्समन्वारभध्व मिति, स जुहुयात्"–इति। 'तेषां' होमार्थं गार्हपत्यसमीपं गतानां मध्ये 'यः' पुमान् 'एतां' वक्ष्यमाणा माहुतिं

जानाति, 'सः' पुमानितरान् प्रति 'समन्वारभध्वं' यूयं सर्वेऽपि मां स्पृशतेति ब्रूयात्। तै समन्वारब्धः 'सः' पुमानाहुतिं जुहूयात्॥

तत्र मन्त्रं दर्शयति— "इह रमेह रमध्व मिह धृतिरिह स्वधृतिरग्ने ऽवाट् स्वाहावाळिति"—इति। हे यजमानाः! 'इह' अस्मिन् लोके 'रम' रमणं कुरुत। हे पुत्रपौत्रादिकाः प्रजाः! 'इह' एतेषु यजमानेषु 'रमध्व' क्रीडत, 'इह' यजमानेषु 'धृतिः' अपत्यानां प्रजानां धारण मस्तु। 'इह' यजमानेषु 'स्वधृतिः' वेदशास्त्रादिरूपायाः वाचः स्वाधीनत्वेन धारण मस्तु। हे अग्ने! 'अवाट्' रथन्तररूपेण यज्ञस्य वहनं कुरु। हे 'स्वाहा' देवि! अग्निजाये! 'अवाट्' बृहत्सामरूपेण यज्ञस्य वहनं कुरु। 'इति'-शब्दो मन्त्रसमाप्त्यर्थः॥

यथोक्तं मन्त्रार्थ मभिप्रेत्य क्रमेण मन्त्रावयवानां सर्वेषां तात्पर्यं दर्शयति— "स यदिह रमेत्याहास्मिन्नेवैनांस्तल्लोके रमयतीह रमध्व मिति यदाह प्रजा मेवैषु तद्रमयतीह धृतिरिह स्वधृतिरिति यदाह प्रजां चैव तद्वाचं च यजमानेषु दधात्यग्ने ऽवाळिति रथन्तरं स्वाहावाळिति बृहद्"—इति। 'सः' मन्त्र इह रमेति भाग माहेति यदस्ति, तेनास्मिन्नेव लोके 'एनान्' यजमानान् रमयति। एव मुत्तरभागा अपि योज्याः॥

बृहद्रथन्तररूपं भागद्वयं विशेषेण प्रशंसति— "देवानां वा एतन्मिथुनं यद्बृहद्रथन्तरे, देवाना मेव तन्मिथुनेन मिथुन मवरुन्धते; देवानां मिथुनेन मिथुनं प्र जायन्ते प्रजात्यै"—इति। यदेतत् अन्त्यमन्त्रद्वयं बृहद्रथन्तररूप मुक्तम्, तदेतद्देवानां सम्बन्धि मिथुनम्। अतस्तद्भागद्वयपाठेन देवसम्बन्धेनैव मिथुनेन मानुषं मिथुन प्राप्नुवन्ति। ततो देवसम्बन्धिमिथुनानुग्रहेण मानुषमिथुन

मुत्पादयन्ति । ततः सोऽयं मन्त्रो यजमानस्य प्रजोत्पादनाय सम्पद्यन्ते ॥ वेदनं प्रशंसति— "प्र जायते प्रजया पशुभिर्य एवं वेद"–इति ॥

गार्हपत्ये यथा होमो विहितः, तथैवाग्नीध्रीये कश्चिद्धोमं विधत्ते—"ते ततः सर्पन्ति, ते मार्जयन्ते, त आग्नीध्रं सम्प्रपद्यन्ते; तेषां य एतां माहुतिं विद्यात्स ब्रूयात्समन्वारभध्व मिति, स जुहुयात्"–इति । गार्हपत्यस्थानाद् वहिर्निर्गत्य मार्जनं कृत्वा आग्नीध्रीयं प्राप्य, तत्र पूर्ववज्जुहुयात् ॥

तस्मिन् होमे मन्त्र माह— "उप सृजन् धरुणं मातरं धरुणो धयन्, रायस्पोष मिष मूर्जं मस्मासु दीधरत्स्वाहेति"–इति । अत्र देवताया अस्पष्टत्वात् "अनिरुक्तः प्रजापतिः"–इतिश्रुत्यन्तरेण प्रजापतिर्देवता । तस्य मन्त्रस्याय मर्थः—'धरुणः' सर्वस्य जगतो धारयिता प्रजापतिः 'धरुणम्' अस्माकं धर्त्तारं पितरं मातरं च 'उप सृजन्' अस्माभिः संयोजयन्, अनिष्टाद्वा वियोजयन्नस्माभिर्हुत माज्यं 'धयन्' पिबन्, 'रायस्पोषं' धनपुष्टिम्, 'इषम्' अन्नम् 'ऊर्जं' क्षीरादिरसं चास्मासु 'दीधरत्' धारयतु सम्पादयतु । तस्मै प्रजापतेरिदं स्वाहुत मस्तु । 'इति' शब्दो मन्त्रसमाप्त्यर्थः ॥

आहुतिं प्रशंसति—"रायस्पोष मिष मूर्जं मवरुन्ध आत्मने च यजमानेभ्यश्च यत्रैवं विद्वानेता माहुति जुहोति"–इति । 'आत्मने' होत्रे ॥ ३ ॥

इतिश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां चतुर्थाध्याये
( चतुर्विंशाध्याये ) तृतीयः खण्डः ॥ ३ ( २२ ) ॥

॥ अथ चतुर्थः खण्डः ॥

ते ततः सर्पन्ति ते सदः समप्रपद्यन्ते यथायथ मन्य ऋत्विजो व्युत्सर्पन्ति संसर्पन्त्युद्गातारस्ते सर्पराज्ञ्या ऋक्षु स्तुवत इयं वै सर्पराज्ञीयं हि सर्पतो राज्ञीयं वा अलोमिकेवाग्र आसीत्सैतं मन्त्र मपश्य द्यायं गौः पृश्निरक्रमीदिति ता मयं पृश्निर्वर्णं आविशन्नानारूपो ऽयं यं काम मकामयत यदिदं किञ्चौषधयो वनस्पतयः सर्वाणि रूपाणि पृश्निरेनं वर्णं आविशति नानारूपो ऽयं यं कामं कामयते य एवं वेद मनसा प्रस्तौति मनसोद्गायति मनसा प्रतिहरति वाचा शंसति वाक् च वै मनश्च देवानां मिथुनं देवाना मेव तन्मिथुनेन मिथुन मवरुन्धते देवानां मिथुनेन मिथुनं प्र जायन्ते प्रजात्यै प्र जायते प्रजया पशुभिर्य एवं वेदाथ चतुर्होतॄन् होता व्याचष्टे तदेव तत् स्तुत मनु शंसति देवानां वा एतद्यज्ञियं गुह्यं नाम यच्चतुर्होतारस्तद्यच्चतुर्होतॄन् होता व्याचष्टे देवाना मेव तद्यज्ञियं गुह्यं नाम प्रकाशं गमयति तदेनं प्रकाशं गतं प्रकाशं गमयति गच्छति प्रकाशं य एवं वेद यं ब्राह्मण मनूचानं यशो नर्च्छेदिति ४ सार्पराज्ञ्यं परेत्य दर्भस्तम्बानुद्ग्रथ्य दक्षि-

अतो ब्रह्माण मुपवेश्य चतुर्होतॄन् व्याचक्षीत देवानां वा एतत्प्रियं गुह्यं नाम यच्चतुर्होतारस्तद् यच्चतुर्होतॄन् व्याचक्षीत देवाना मेव तत्प्रियं गुह्यं नाम प्रकाशं गमयति तदेनं प्रकाशं गतं प्रकाशं गमयति गच्छति प्रकाशं य एवं वेद ॥ ४ (२३) ॥

आग्नीध्रीये होमादूर्ध्वं कर्त्तव्यानि दर्शयति—"ते ततः सर्पन्ति ; ते सदः सम्प्रपद्यन्ते; यथायथ मन्य ऋत्विजो व्युत्सर्पन्ति; संसर्पन्त्युद्गातारस्ते सर्पराज्ञ्या ऋक्षु स्तुवते"—इति। 'ते' कृत-होमाः सर्वे 'ततः' आग्नीध्रीयादग्नेः 'सर्पन्ति' निर्गच्छन्ति। निर्गतास्ते सदः प्रविशेयुः। प्रवेशवेलाया मुद्गातृभ्योऽन्य ऋत्विजो 'यथायथं' स्वमार्ग मनतिक्रम्य 'व्युत्सर्पन्ति' विविधं गच्छन्ति ; उद्गातारस्तु 'संसर्पन्ति' सम्भूय गच्छेयुः। गतास्ते सामगाः सर्प-राज्ञ्याः सम्बन्धिनीषु ऋक्षु "आयं गौः"—इत्यादिषु स्तोत्रं कुर्युः *। सर्पराज्ञीति भूमिरवतारस्वरूपा काचिद्देवता ; तया दृष्टा मन्त्रा अपि सर्पराज्ञीशब्देनोच्यन्ते। अत्र तु 'ऋक्षु'—इति पृथगुपादानात्, 'सर्पराज्ञ्याः'—इतिषष्ठ्यन्तत्वाच्च देवतावाच्येवायं शब्दः † ॥

---

* आश्व० श्रौ० ५. ३—( तथा आप० श्रौ० ९. २. ८—१० सार्पराज्ञानि ( योनि-सामानि ); छ० आ० ६. ३. ११. तत्र ऊह्य० श्रौ० ५. ३. ९ ( आयं गौरम् )। "प्रजा-पतेर्विवा; सर्पराज्ञाः सर्पाणां वार्बुदस्य वा सर्पस्य"—इति आर्षे० ब्रा० २. २९। "तिसृभिः स्तुवन्ति०—० सर्पराज्ञा ऋग्भिः स्तुवन्ति०—० मृत्युमपजयति"—इति ता० ब्रा० ९. ८.।

† "आयङ्गौरिति०—० सार्पराज्ञीनामर्षिका, सैव देवता सूर्यो वा"—इति ऋग्भाष्ये माधवः ( १०.१८९.); "सर्पराज्ञी नाम कद्रुरादित्री"—इति तु ताण्ड्यभाष्ये ( ९.८.७.)।

एतदेवाभिप्रेत्य तत्सम्बद्धाः ऋचस्तासां च देवतां प्रशंसति— "इयं वै सर्पराज्ञीयं हि सर्पतो राज्ञीयं वा अलोमिकेवाग्र आसीत् सैतं मन्त्र मपश्यदायं गौः पृश्निरक्रमीदिति ; ता मयं पृश्निर्वर्ण माविशन्नानारूपो ऽयं यं काम मकामयत, यदिदं किञ्चौषधयो वनस्पतयः सर्वाणि रूपाणि"–इति। या भूमिरस्ति, सेय मेव देवताशरीरं त्यक्त्वा ब्रह्मवादिनी भूत्वा 'सर्पराज्ञी'-शब्देनोच्यते। यस्मादियं पृथिवी 'सर्पतः' सञ्चरतो जङ्गमस्य मनुष्यादेः 'राज्ञी' स्वामिनी ; सर्वेषां मनुष्यादीनां तदाश्रयेणावस्थानात् ; अतः सर्पराज्ञीत्युच्यते *। इय मेव 'अग्रे' ऋगुत्पत्तेः पूर्व मेव 'अलोमिकेव' रोमरहितेवासीत् ; ततो रोमोत्पत्त्यर्थं सा भूमिः साधनभूतम् "आयं गौः"–इति 'मन्त्रम्' अपश्यत्। तन्मन्त्र-प्रसादेन 'तां' भूमि मयं दृश्यमानः 'पृश्निर्वर्ण आविशत्'। पृश्नि-शब्दस्य व्याख्यानं 'नानारूपः' इति, नीलपीतादिरित्यर्थः †। किञ्च लोके ओषधयो वनस्पतयः सर्वाणि अन्यानि रूपाणि वृक्षादीनि यदिदं किञ्चित् स्थावररूप मस्ति, तन्मध्ये यं काम मसौ भूमि मकामयत, स सर्वोऽप्येनां प्राविशत् ॥

वेदनं प्रशंसति—"पृश्निरेनं वर्ण आ विशति, नानारूपो ऽयं यं कामं कामयते य एवं वेद"–इति। वर्णशब्देन नीलपीतादि-वाचिना सर्वं मपि भोग्यजात मुपलक्ष्यते ॥

स्तोत्रशस्त्रयोः प्रकारविशेषं विधत्ते—"मनसा प्रस्तौति, मनसोद्गायति, मनसा प्रतिहरति, वाचा शंसति"–इति। उद्-गातॄणां मध्ये प्रस्तोतुः प्रस्तावभागः, उद्गातुरुद्गीथभागः प्रतिहर्तुः

* "सर्पराज्ञ्या ऋग्भिः स्तुवते"–इत्यादावार्षेयभाष्ये सायण (३२९.)।

† निरु० २.१.२ ; १०.४.२ एतदुभयस्थानेऽपि द्रष्टव्यौ।

प्रतिहारभागः ७। तान् भागान् मनसैव ते स्तुनिमेयुः ; होता तु वाचा शंसेत् ॥

द्विविध मपि विधिं प्रशंसति— "वाक् च वै मनश्च देवानां मिथुनं, देवाना मेव तन्मिथुनेन मिथुन मवरुन्धते, देवानां मिथुनेन मिथुनं प्र जायन्ते प्रजात्यै ; प्र जायते प्रजया पशुभिर्य एवं वेद"–इति। छन्दद्वयन्तरमिथुनवद्व्याख्येयम् (१४२ पृ०)॥

होतः सर्पराज्ञाः शंसनादूर्ध्वं चतुर्होतृमन्त्रान् विधत्ते— "अथ चतुर्होतॄन् होता व्याचष्टे,—तदेव तत् स्तुत मनु शंसति"– इति। चतुर्होतृमन्त्रास्तद्व्याख्यानप्रकारश्चोपरिष्टात् अभिधास्यते। तेन व्याख्यानेन यदुद्गातृभिः स्तुतः, तदेव सर्वं मनुशस्तं भवति॥

त मेतं मन्त्रसमूहं प्रशंसति— "देवानां वा एतद्यज्ञियं गुह्यं नाम यच्चतुर्होतारस्तद्यच्चतुर्होतॄन् होता व्याचष्टे, देवाना मेव तद्यज्ञियं गुह्यं नाम प्रकाशं गमयति"–इति। य एते चतुर्होतृमन्त्राः सन्ति, तदेतन्मन्त्रलक्षणं देवानां सम्बन्धि यज्ञयोग्यं नाम ; ततो होतृव्याख्याने देवसम्बन्धि योग्यं नाम प्रकाशितं करोति॥ वेदनं प्रशंसति— "तदेनं प्रकाशं गतं प्रकाशं गमयति, गच्छति प्रकाशं य एवं वेद"–इति। यदुक्तार्थवेदिता होता 'एनं' होतारं 'तत्' देवानां गुह्यं नाम, स्वयं प्रकाशं गतं सत् पश्चात् प्रकाशं गमयति। ततो वेदिता 'प्रकाशं गच्छति' तेन नाम्नानुगृहीतः प्रख्यातो भवतीत्यर्थः। यद्वा तदेन मित्यादिः पूर्वशेषः। 'तद्' देवानां गुह्यं नाम स्वयं प्रकाशं गतं सत् पश्चात् 'एनं' होतारं प्रकाशं गमयति ; गच्छतीत्यादिकैव विद्वत्प्रशंसा॥

तदेवं क्रत्वङ्गत्वेन चतुर्होतृव्याख्यानं विधाय तत्प्रशंसां कर्त्तुं

---

* आ० १०८ पृ० । टी० ६०। पञ्च० मृ० ११३,२। ता० उप० १ १–२)।

क्रतुनिरपेक्षलौकिककाम्यफलसिद्ध्यर्थं चतुर्होतृव्याख्यानं विधत्ते — "यं ब्राह्मण मनूचानं यशो नर्च्छेदिति ह स्माहारण्यं परेत्य दर्भस्तम्बानुद्ग्रथ्य दक्षिणतो ब्रह्माण मुपवेश्य चतुर्होतृन् व्याचक्षीत"-इति । साङ्गवेदाध्ययन-तदर्थानुष्ठानशीलः 'अनूचानः' । तादृशं कश्चिद् ब्राह्मणं सभामध्ये वाग्मित्वेन रहितं यदि 'यशो नर्च्छेत्' विद्यानय मिति कीर्त्तिं न प्राप्नुयात्, तदानी मयं ब्राह्मणो ग्रामान्निर्गत्य विजन मरण्यदेशं प्राप्य तत्र दर्भस्तम्बाना मग्र मूर्ध्वमुखत्वेन ग्रथित्वा तस्य दक्षिणपार्श्वे कश्चिद्वेदविदं विप्र मुपवेश्य तत्सन्निधौ चतुर्होतृनामकान्मन्त्रान् व्याचक्षीत । उच्चै-रुच्चारणं 'व्याख्यानम्' । 'इति' एतत्प्रयोगं कश्चिद् ब्रह्मवादयाह स्मेत्यन्वयः ॥

त मिमं यज्ञसंयुक्तं प्रयोगं पूर्ववत्प्रशंसति— "देवानां वा एत-दाश्रियं गुह्यं नाम यच्चतुर्होतारस्तद्यच्चतुर्होतॄन् व्याचक्षीत देवाना मेव तद् यश्रियं गुह्यं नाम प्रकाशं गमयति ; तदेनं प्रकाशं गतं प्रकाशं गमयति, गच्छति प्रकाशं य एवं वेद"-इति । पूर्ववद् व्याख्येयम् ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां चतुर्थाध्याये
( चतुर्विंशाध्याये ) चतुर्थः खण्डः ॥ ४ (२१) ॥

---

॥ अथ पञ्चमः खण्डः ॥

अथौदुम्बरीं समन्वारभन्त' इष मूर्जं मन्वारभ इत्यूर्वा अन्नाद्य मुदुम्बरी यद्वैतद्देवा इष मूर्जं व्यभ-

जन्त तत उदुम्बरः समभवत्तस्मात्स त्रिः संवत्सरस्य पच्यते तद्यदौदुम्बरीं समन्वारभन्त ऊर्ज मेव तदूर्जं मन्नाद्यं समन्वारभन्ते वाचं यच्छन्ति वाग्वै यज्ञो यज्ञ मेव तद् यच्छन्त्यहर्नियच्छन्त्यहर्वै स्वर्गो लोकः स्वर्ग मेव तल्लोकं ❁ नियच्छन्ति न दिवा वाचं विसृजेरन्यद्दिवा वाचं विसृजेरन्नहर्भ्रातृव्याय परिशिंष्युर्न नक्तं वाचं विसृजेरन्यन्नक्तं वाचं विसृजेरन् रात्रीं भ्रातृव्याय परिशिंष्युः समयाविषितः सूर्ये † स्यादथ वाचं विसृजेरंस्तावन्त मेव तद् द्विषते लोकं परिशिंषन्त्यथो खल्वस्तमित एव वाचं विसृजेरंस्तमोभाज मेव तद् द्विषन्तं भ्रातृव्यं कुर्वन्त्याहवनीयं परीत्य वाचं विसृजेरन्यज्ञो वा आहवनीयः स्वर्गो लोक आहवनीयो यज्ञेनैव तत्स्वर्गेण लोकेन स्वर्गं लोकं यन्ति यदि हीन मकर्म यदत्यरीरिचामे प्रजापतिं तत्पितर मप्येत्विति वाचं विसृजन्ते प्रजापतिं वै प्रजा अनु प्र जायन्ते प्रजापतिरूनातिरिक्तयोः प्रतिष्ठा नैनानूनं नातिरिक्तं हिनस्ति प्रजापतिमेवोनातिरिक्तान्यभ्यत्यर्जन्ति य एवं विद्वांस एतेन वाचं विसृजन्ते तस्मादेवं विद्वांस एतेनैव वाचं विसृजेरन् ॥ ५ (२४) ॥

❁ "त लोकं" क, ख, ग, म। † "सूर्य." क।

अथ चतुर्होतृव्याख्यानस्य प्रकारं यत्राह्व साकल्येनाभिधातु मुपक्रमते— "अथौदुम्बरीं समन्वारभन्ते"–इति। चतुर्होतृव्याख्यानोद्योगानन्तरं येयं औदुम्बरी शाखा सदस्यन्तर्निहिता, तां शाखां सर्वे सम्भूयोपस्पृशेयुः ॥

तत्र मन्त्रं दर्शयति— "इष मूर्जं मन्वारभ इति"–इति। अन्नरूपां रसरूपां वै तां औदुम्बरीम् 'अन्वारभे' हस्तेन स्पृशामि। 'इति'-शब्दो मन्त्रसमाप्त्यर्थः ॥

मन्त्रार्थं औदुम्बर्यां दर्शयति— "ऊर्ग्वा अन्नाद्य मुदुम्बरः"–इति। योऽयं मुदुम्बरवृक्षः, सोऽयं रसरूपोऽन्नरूपश्च ॥

तमेत मर्थं मुपपादयति— "यद्वै तद्देवा इष मूर्जं व्यभजन्त, तत उदुम्बरः समभवत्, तस्मात्स त्रिः संवत्सरस्य पच्यते"–इति। देवाः पुरा यदेतदन्नं रसरूपं वस्तु क्वचित् भूमावुपविश्य 'व्यभजन्त' एतावदस्यैतावदस्येति विभागं कृतवन्तः। तदानीं तस्माद्भूमौ पतितादन्नरसभेदाद्बीजीभूतादयं मुदुम्बरवृक्षः समुत्पन्नः; तस्मात् संवत्सरस्य मध्ये भोक्तृणा मन्नसिद्ध्यर्थं स वृक्षः 'त्रिः पच्यते' त्रिरित्युपलक्षणम्, बहुकृत्वः फलं गृह्णाति ॥

औदुम्बरीस्पर्श मुपसंहरति— "तद्यदौदुम्बरीं समन्वारभन्त, इष मेव तदूर्जं मन्नाद्यं समन्वारभन्ते"–इति ॥

औदुम्बरीस्पर्शा दूर्ध्वं मौनं विधत्ते— "वाचं यच्छन्ति; वाग्वै यज्ञो यज्ञ मेव तद्यच्छन्ति"–इति। यज्ञस्योच्चार्यमाणमन्त्रसाध्यत्वाद्वागूपत्वम्; अतो वाङ्नियमेन यज्ञस्यैव नियमो भवति ॥

मौनस्य कालविशेषं विधत्ते— "अहर्नियच्छन्त्यहर्वै स्वर्गो लोक, स्वर्ग मेव तल्लोकं नियच्छन्ति"–इति। सूर्यास्तमयादर्वाक्

स्वर्गवत्प्रकाशसद्भावेनाह्नः स्वर्गत्वम् । तस्मिन्नहनि वाङ्नियमेन स्वर्ग एव नियतः स्वाधीनो भवति ॥

विधिसिद्ध्यर्थं महनि कतिपयेषु चषेषु वाचं नियम्य पश्चात् मौनपरित्यागप्राप्तौ निषेधति— "न दिवा वाचं विसृजेरन् ; यद्दिवा वाचं विसृजेरन्नहर्भ्रातृव्याय परिशिंषुः"—इति । अहनि वाग्विसर्गे सति यजमानाः सर्वेऽप्यहःसम्बन्धं परित्यज्य भ्रातृव्ये तदह: 'परिशिंषुः' दद्युरित्यर्थः ॥

अहनि निषिद्धस्य वाग्विसर्गस्य रात्रौ प्राप्तौ सत्यां तदपि निषेधति— "न नक्तं वाचं विसृजेरन् ; यन्नक्तं वाचं विसृजेरन् रात्रीं भ्रातृव्याय परिशिंषुः"—इति । पूर्ववद् व्याख्येयम् ॥

यद्यहनि रात्रौ च निषेधः, कदा तर्हि वाग्विसर्ग इत्याशङ्क्याह —"समयाविषितः सूर्य्यः स्यादथ वाचं विसृजेरंस्तावन्त मेव तद् द्विषते लोकं परिशिंषन्ति"—इति । यदा सूर्य्यः 'समयाविषितः' अस्तमयसमयं प्राप्तः, अर्धास्तमितः * स्यात्, तदानीं वाग्विसर्गः । तथा सति सम्पूर्णास्तमयपर्यन्त मल्प मेव कालं 'द्विषते लोकं' शत्रोः स्थानं 'परिशिंषन्ति' प्रयच्छन्ति । अह्नो रात्रियैति कालद्वयं स्वार्थ मेव भवति ॥

पक्षान्तरं विधत्ते —"अथो खल्वस्तमित एव वाचं विसृजेरंस्तमोभाज मेव तद् द्विषन्तं भ्रातृव्यं कुर्वन्ति"—इति । 'अथो

* समयाध्युषित समयाविषितशब्दौ सन्धिकालपरौ । तत्र समयाध्युषितः प्रातःसन्धिकालः, समयाविषितस्तु सायंसन्धिकाल इति विवेकः । कात्या० श्रौ० ४.१५.१ ; आप० श्र० १.७२ । म० स० २.१५ । वै० सं० ९.९-११९. व्याख्यानं च तस्य १.४. ४५.१५ । अनु० सू० १.१२ । "समयास्तमितः" वै० पा० सा० भा० (ए. सी. मु० ४१२ पृ० १० पं०) ।

खलु' यथवेत्यर्थः । सूर्ये शाकल्येऽस्तमिते सत्येव पश्चाद्वाग्विसर्गेण सर्वं 'तमोभाजम्' अन्धकारगतं कुर्वन्ति ॥

वाग्विसर्गस्य देशविशेषं विधत्ते — "आहवनीयं परीत्य वाचं विसृजेरन्, यज्ञो वा आहवनीयः, स्वर्गो लोक आहवनीयो, यज्ञेनैव तत् स्वर्गेण लोकेन स्वर्गं लोकं यन्ति"–इति। सदसो निर्गत्य आहवनीयं परितः प्रदक्षिणीकृत्य तत्र वाग्विसर्गः कर्त्तव्य। आहवनीयस्य यज्ञनिष्पादकत्वद्वारा स्वर्गहेतुत्वेन तदुभयात्मकत्वे सति यज्ञस्वर्गात्मकेनाहवनीयेन यजमानाः स्वर्गं प्राप्नुवन्ति ॥

वाग्विसर्गे मन्त्रविशेषं विधत्ते— "यदिहोन मकर्म यदत्यरीरिचाम प्रजापतिं तत्पितर मप्येत्विति वाचं विसृजन्ते"–इति। 'इह' क्रतौ 'यत्' अङ्गम् 'ऊनम्' असम्पूर्णम्, यदपि 'अकर्म' स्वरूपेणैव तदङ्गं न कृतम्, 'यत्' अप्यङ्गम् 'अत्यरीरिचाम' अतिरिक्तं विवारं त्रिवारं वा वय मनुष्ठितवन्तः; 'तत्' सर्वं दोषप्रकार सञ्जातं 'पितरम्' अस्माकं पालकं प्रजापतिम् 'अप्येतु' प्राप्नोतु। 'इति' अनेन मन्त्रेण वाग्विसर्गः कर्त्तव्यः ॥

उक्तमन्त्रं प्रशंसति—"प्रजापतिं वै प्रजा अनु प्र जायन्ते, प्रजापतिरूनातिरिक्तयोः प्रतिष्ठा, नैनानूनं नातिरिक्तं हिनस्ति"–इति। सर्वाः प्रजाः प्रजापति मेवानुप्रजायन्ते; तस्य स्रष्टृत्वात् तदनुरूपैव सर्वोत्पत्तिः। अतः स्रष्टा प्रजापतिरेव न्यूनातिरिक्तदोषयोः 'प्रतिष्ठा' आश्रयः समाधानहेतुः। तस्मादेतन्मन्त्रपाठेन 'एनान्' यजमानान् न्यूनातिरिक्तद्वयदोषो न बाधते ॥

वेदनपूर्वकं मनुष्ठानं प्रशंसति— "प्रजापति मेवोनातिरिक्तान्यभ्यत्यर्जन्ति य एवं विद्वांस एतेन वाचं विसृजन्ते"–इति। मन्त्रेण वाग्विसर्गं कुर्वाणा यजमाना ऊनातिरिक्ताङ्गं कृतं दोष

मभिलक्ष्य प्रजापति मेव 'अभ्यत्यर्जन्ति' अतिशयेन प्राप्नुवन्ति, स एव समादधातीत्यर्थः ॥

मन्त्रेण वाग्विसर्ग मुपसंहरति— "तस्मादेवं विद्वांस एतेनैव वाचं विसृजेरन्"—इति ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां चतुर्थाध्याये
( चतुर्विंशाध्याये ) पञ्चमः खण्डः ॥ ५ ( २४ ) ॥

---

॥ अथ षष्ठः खण्डः ॥

अध्वर्यो हूत्याह्वयते चतुर्होतृषु वदिष्यमाणस्तद्दाहावस्य रूपं ओं होतस्तथा होतरित्यध्वर्युः प्रतिगृणात्यवसिते ऽवसिते दशसु पदेषु तेषां चित्तिः स्रुगासी३त् चित्त माज्य मासी३त् वाग् वेदिरासी३त् आधीतं बर्हिरासी३त् केतो अग्निरासी३त् विज्ञात मग्नीदासी३त् प्राणो हविरासी३त् सामाध्वर्युरासी३त् वाचस्पतिर्होतासी३त् मन उपवक्तासी३त् ते वा एतं ग्रह* मगृह्णत वाचस्पते विधे† नामन् विधेम ते नाम विधेस्त्व मस्माकं नाम्ना द्यां गच्छ यां देवाः प्रजापतिगृहपतय ऋद्धि मराध्नुवंस्ता मृद्धिं राल्स्यामो ऽथ प्रजापतेस्तनूरनुद्रवति ब्रह्मोद्यं

---

* "ग्रह" ख, घ, ङ, ट। † "विधा" क, ङ।

चान्नादा चान्नपत्नी चान्नादा तदग्निरन्नपत्नी तदा-
दित्यो भद्रा च कल्याणी च भद्रा तत्सोमः कल्याणी
तत्पशवो ऽनिलया चापभया चानिलया तद्वायुर्न ह्येष
कदा च नैलयत्यपभया तन्मृत्युः सर्वं ह्येतस्माद्
बीभाय* नाप्ता चानाप्या चानाप्ता तत्पृथिव्यनाप्या
तद् द्यौरनाधृष्या चाप्रतिधृष्या चानाधृष्या तद-
ग्निरप्रतिधृष्या तदादित्यो ऽपूर्वा चाभ्रातृव्या चा-
पूर्वा तन्मनो ऽभ्रातृव्या तत्संवत्सर एता वाव
द्वादश प्रजापतेस्तन्व एष कृत्स्नः प्रजापतिस्तत्कृ-
त्स्नं प्रजापति माप्नोति दशम महरथ ब्रह्मोद्यं वद-
न्त्यग्निर्गृहपतिरिति हैक आहुः सो ऽस्य लोकस्य
गृहपतिर्वायुर्गृहपतिरिति हैक आहुः सोऽन्तरिक्ष-
लोकस्य † गृहपतिरसौ वै गृहपतिर्यो ऽसौ तपत्येष
पतिर्ऋतवो गृहाः येषां वै गृहपतिं देवं विद्वान् गृह-
पतिर्भवति राध्नोति स गृहपती ‡ राध्नुवन्ति ते यज-
मानाः येषां वा अपहतपाप्मानं देवं विद्वान् गृह-
पतिर्भवत्यप स गृहपतिः पाप्मानं हते पते यज-
मानाः पाप्मानं घ्नते ऽध्वर्यो अरात्स्मारात्स्म ॥६(२५)

॥ इत्यैतरेयब्राह्मणे पञ्चमपञ्चिकायां चतुर्थोऽध्यायः ॥४॥

---

* "बिभाय" क । † "ऽन्तरिक्षस्य लोकस्य" क । ‡ "स ह गृहपती" ग ।

चतुर्होतृमन्त्रव्याख्यानार्थं माह्वावं विधत्ते— "अध्वर्यो इत्या-ह्वयते चतुर्होतृषु वदिष्यमाणस्तदाह्वावस्य रूपम्"–इति। चतु-र्होतृनामकेषु मन्त्रेषूच्चारणं कर्तुं मुद्युक्तो होता "हे अध्वर्यो!" इत्याह्वानं कुर्यात्। यथा शस्त्रादौ "शोंसावोम्"–इत्याह्वानं करोति, तद्वदत्रापि सम्बोधन मेवाह्वावस्य स्वरूपम्।

चतुर्होतृव्याख्यानकाले अध्वर्योः प्रतिगरविशेषं विधत्ते— "ॐ होतस्तथा होतरित्यध्वर्युः प्रतिगृणात्यवसिते ऽवसिते दशसु पदेषु"–इति। हे होतः! 'ॐ' तदभिलषित मस्तु, हे होतः! 'तथा' क्रियता मित्यध्याहारः। अनेन मन्त्रेणाध्वर्युः प्रतिगरं ब्रूयात्। होतुरुत्साहजनकं प्रतिवचनं 'प्रतिगरः'। वक्ष्यमाणेषु होत्रा प्रयोज्येषु दशसङ्ख्याकेषु पदेषु मध्ये एकैकस्मिन् पदे 'अव-सिते' समाप्ते सति तदा तदा पुनःपुनरध्वर्युरों होतरित्यादिमन्त्रेण प्रतिगरं ब्रूयात्। अवसितशब्दस्य वीप्सा प्रतिपदं प्रतिगरप्रयो-गार्थम्॥

तत्र प्रथमं पदं दर्शयति—"तेषां चित्तिः स्रुगासीऽत्"–इति। देवसत्रके सत्रे प्रजापतिर्गृहपतिरन्ये देवा यजमानास्ते च मन्त्रान्तरे वक्ष्यन्ते। त एवात्र तेषामितितच्छब्देन परामृश्यन्ते। 'तेषां' प्रजापतिरूपगृहपतियुक्तानां देवात्मनां यजमानानां मानसे कर्मणि 'चित्तिः स्रुगासीऽत्'। "चिती सञ्ज्ञाने"–इति (भ्वा० ३८.) धातोश्चित्तिशब्दनिष्पत्तिः। इदं वस्त्वीदृश मेव न त्वन्यथेति या सम्यग्ज्ञानरूपा मनोवृत्तिः, सा 'चित्तिः'। सैव एतेषां होमसाधनभूतजुह्वस्थानीयासीत्। अमूर्त्तायाश्चित्तेर्जुहू-रूपत्व मायर्थ मिति द्योतयितुं प्लुतिः। एव मुत्तरत्रापि द्रष्टव्यम्॥

द्वितीयं पदं दर्शयति—"चित्त माज्य मासीऽत्"–इति।

पूर्वोक्तायाश्चित्तिरूपायाः वृत्तेराधारभूतं यदन्तःकरणं तत् 'चित्तम्' तदेवाज्यस्थानीय मासीदिति ॥

तृतीयं पदं दर्शयति— "वाग् वेदिरासीश्त्"–इति। यद् "वाग्" इन्द्रियम, तद्वेदिस्थानीय मासीदिति ॥

चतुर्थं पदं दर्शयति—"आधीतं बर्हिरासीश्त्"–इति। 'आ' समन्ताद् 'धीतं' मनसा ध्यातं यद्वस्तु, तदेव बर्हिस्थानीय मासीदिति ॥

पञ्चमं पदं दर्शयति— "केतो अग्निरासीश्त्"–इति। "कित ज्ञाने"–इति (भ्वा० ८८३.) धातुः। 'चित्ति.' सम्यक् ज्ञानम्, 'केतः' ज्ञानमात्र मिति विशेषः। स च केतोऽग्निस्थानीय मासीदिति ॥

षष्ठं पदं दर्शयति—"विज्ञात मग्नीदासीश्त्"–इति। 'विज्ञातं' विशेषेण निश्चितं यद्वस्तु, तत् 'अग्नीत्' आग्नीध्रनामक ऋत्विगासीत् ॥

सप्तमं पदं दर्शयति— "प्राणो हविरासीश्त्"–इति। योऽयं प्राणवायुः, स हविःस्थानीय मासीदिति ॥

अष्टमं पदं दर्शयति— "सामाध्वर्युरासीश्त्"–इति। यद् गीयमानं 'साम', तदध्वर्युस्थानीय मासीदिति ॥

नवमं पदं दर्शयति —"वाचस्पतिर्होतासीश्त्"–इति। योऽयं 'वाचस्पतिः' बृहस्पतिः, सोऽयं होतृस्थानीय मासीदिति ॥

दशमं पदं दर्शयति— "मन उपवक्तासीश्त्"–इति। यद्यप्येक मेवान्तःकरणं चित्तशब्देन मनःशब्देन चाभिधीयते, तथाप्यवस्थाविशेषो द्रष्टव्यः। चित्तिकेतादिवृत्तिजनकत्वाकारेण 'चित्तम्'; वृत्तिरहितस्वरूपावस्थानाकारेण 'मनः'; तच्चात्र 'उपवक्ता' होतुः समीपस्थो वक्ता मैत्रावरुण आसीदिति ॥

एतेषां दशानां पदाना मेकैकस्मिन् पदे अवसिते सत्यध्वर्युः "ॐ होतः, तथा होतः"—इति प्रतिगरं ब्रूयात्। सोऽयं दश-पदात्मकः चतुर्होतृसञ्ज्ञको मन्त्रसङ्घातः * ॥

अथ ग्रहसञ्ज्ञकं मन्त्रं दर्शयति—"ते वा एतं ग्रह मगृह्णत ; वाचस्पते विधे नामन्, विधेम ते नाम, विधेस्त्व मस्माकं नाम्ना द्यां गच्छ, यां देवाः प्रजापतिगृहपतय ऋद्धि मराध्नुवंस्ता मृद्धिं राध्स्यामः"—इति। तेषामितिपदेनोक्ताः प्रजापतिगृहपतियुक्ता देवरूपा ये यजमानाः सन्ति, त एव 'एतं' मामसं ग्रह मगृह्णत। ग्रहणकाले वाचस्पतिं सम्बोध्य ब्रुवते— हे 'वाचस्पते' बृहस्पते ! हे 'विधे' जगतो विधातः। हे 'नामन्' सर्वस्य नमयितः। सर्व-वशीकारयुक्तेत्यर्थः। तादृशस्य ते 'नाम विधेम' ख्यातिं करवाम। यद्वा 'नाम' अन्नं हविर्लक्षणं 'विधेम' सम्पादयामः। त्व मस्माकं प्रजापतियुक्तानां देवानां विधिः, कीर्त्तिं मन्नञ्च सम्पादय। तेनास्मदीयेन 'नाम्ना' हविर्लक्षणेनान्नेन कीर्त्त्या वा युक्तो द्यां स्वर्गं गच्छ। प्रजापतिर्गृहपतिर्येषां देवानां ते 'प्रजापतिगृहपतयः' तादृशा देवा याम् 'ऋद्धिम्' ऐश्वर्य्यम् अराध्नुवन्, 'ता मृद्धिं' तादृश मैश्वर्य्यं वय मपि यजमाना राध्स्यामः। इत्येष ग्रह-मन्त्रः † ; त मपि होता पठेत् ॥

मन्त्रान्तराणि विधत्ते— "अथ प्रजापतेस्तनूरनुद्रवति ब्रह्मोद्यं

---

* तैत्तिरीयब्राह्मणेऽपि द्वितीयाष्टकीयो द्वितीयः प्रपाठकः समग्र एवैतद्विषयकः। तैत्तिरीयारण्यके त्विमे दश मन्त्राः समाम्नाताः (३.१.) किञ्चित्पाठभेदेन। तत्रार्थे त्वेषां सायणीयव्याख्यानानि सुष्ठुतराणीव मन्यन्ते। "चित्त्यादयो दश शरीरगताः पदार्थ-विशेषाः, स्रुगादयस्तु दश पदार्था होमनिष्पादकाः"—इत्येव तत्सार मिति सङ्क्षेपः।

† तैत्तिरीयारण्यके तु एष एव ग्रहमन्त्रः किञ्चिद्विभिन्नः (३.१.)।

च"–इति। चतुर्होतृग्रहमन्त्रपाठानन्तरं होता प्रजापतितनुसञ्ज्ञकान् मन्त्रान् ब्राह्मोद्यसञ्ज्ञकं मन्त्रञ्च 'अनुद्रवति' अनुक्रमेण ब्रूयात् ॥

द्वादशसङ्ख्याकाः प्रजापतितनुसञ्ज्ञकाः। अन्नादा चेति चशब्दान्तानि द्वादशपदानि प्रजापतेस्तन्वः। तत्र द्वे द्वे पदे उपादाय क्रमेण प्रशंस्येते ॥

तत्र प्रथमं पदयुग्ममाह— "अन्नादा चान्नपत्नी चान्नादा तदग्निरन्नपत्नी तदादित्यः"–इति। अन्नादादयः प्रजापतेर्मूर्त्तिविशेषस्य वाचकाः शब्दाः। अन्नादेति यदस्ति, तदयमग्निः; अन्नपत्नीति यदस्ति, तदसावादित्यः; एतदुभयं प्रजापतितनुरूपम् ॥

द्वितीयं युग्ममाह— "भद्रा च कल्याणी च; भद्रा तत्सोमः, कल्याणी तत्पशवः"–इति। पूर्ववद् व्याख्येयम् ॥

तृतीयं युग्ममाह— "अनिलया चापभया चानिलया तद्वायुर्न ह्येष कदा च नेलयत्यपभया तन्मृत्युः सर्वं ह्येतस्माद् बीभाय" –इति। एष वायुः कदाचिदपि नेलयतीति न हि। इलयतिः गतिकर्मा (नि० १२०.)। 'नेलयति' न गच्छतीति न हि, किन्तु सदा गच्छत्येव। अमुमर्थं मनिलयेतिशब्दो ब्रूते। निलयो निवासः, स नास्ति यस्या वायुमूर्त्तेः सेयम् 'अनिलया'। अपगतं भयं यस्या मृत्युमूर्त्तेः सेयम् 'अपभया'; सर्वमपि जगत् 'एतस्मात्' मृत्योः 'बीभाय' भीतिं प्राप्नोति, तादृशो मृत्युः कस्मादप्यस्मादन्यस्माद्भीतिं प्राप्नुयात् ॥

अनेन न्यायेन पूर्वोक्तानामपि मूर्त्तीनां निरुक्तयो द्रष्टव्याः। अन्नपत्नीत्यत्रान्नादाग्निमूर्त्तिः; अन्नस्य पत्नी पालयित्री सूर्य-

मूर्त्तिः । "आदित्याज्जायते वृष्टिः"—इतिन्यायेन ( मं॰ सं॰ ३. ७६. ) पालयितृत्वम् । सोममूर्त्तेः शैत्यहेतुत्वात्, दृष्टिप्रियत्वाच्च भद्रत्वम् । पशुमूर्त्तेः क्षीरादिप्रदानेन कल्याणत्व मिति तासां निरुक्तयः ॥

चतुर्थं पदयुग्म माह— "अनाप्ता चानाप्या चानाप्ता तत्पृथिव्यनाप्या तद् द्यौः"—इति । दूरस्थस्य ग्रामादेः संयोगे सति प्राप्तिरित्युच्यते ; पृथिव्या नैवोत्पन्नस्य मनुष्यादेः दूरवर्त्तित्वपूर्वकः पृथिवीसंयोगो नास्ति, तस्मादसंयोगपूर्वस्य संयोगस्य प्राप्तिशब्दार्थत्वस्याभावात् 'अनाप्ता' भूमिः । उपरि दूरदेशवर्त्तित्वेन प्राप्तु मयोग्यत्वात् द्यौः 'अनाप्या' ॥

पञ्चमं युग्म माह— "अनाधृष्या चाप्रतिधृष्या चानाधृष्या तदग्निरप्रतिधृष्या तदादित्यः"—इति । आगत्य समीपं प्राप्य हस्तस्पर्शेन धर्षितु मभिभवितु मशक्योऽग्निः । आदित्यो यथा न प्रकाशते तथा कश्चित् प्रतिबन्धं कृत्वा धर्षितु मभिभवितु मशक्यः आदित्यः ॥

षष्ठं युग्म माह— "अपूर्वा चाभ्राव्या चापूर्वा तन्मनो ऽभ्राव्या तत्संवत्सरः"—इति । न विद्यते पूर्वं प्रथममप्रवृत्त मिन्द्रियं यस्या मनोमूर्त्तेः सेयम् 'अपूर्वा' ; सर्वं मपीन्द्रियजातं मनसा सङ्कल्पिते विषये पश्चात्प्रवर्त्तते, अतो नास्त्यन्यस्य पूर्वप्रवृत्तिः । 'संवत्सरः' कालात्मा सर्वं जगज्जरयति, न च तं कालं जरयितुं समर्थः कश्चिदन्योऽस्ति ; तस्मात्संवत्सरमूर्त्तिर्भ्राव्यरहिता दाद्यपदरूपा ॥

प्रजापतितनूरुपसंहरति— "एता वाव द्वादश प्रजापतेस्तन्व एष सर्वः प्रजापतिस्तत्कृत्स्नं प्रजापति माप्नोति दशम महः"—

इति। अन्नादेत्यारभ्य अभ्रातृव्येत्यन्ता द्वादशसङ्ख्याका मूर्तयो याः प्रोक्ताः, एता एव प्रजापतेर्जगन्निर्वाहिकास्तन्वः। 'एषः' द्वादशभिस्तनूभिर्युक्तः प्रजापतिः 'कृत्स्नः' सम्पूर्णः। तथा सत्ये-तत्पदपाठेन कृत्स्नं प्रजापतिरूपं दशममहः प्राप्नोति ॥

ब्रह्मोद्यमन्त्रविधि मनूद्य तन्मन्त्रस्वरूपं दर्शयति— "अथ ब्रह्मोद्यं वदन्त्यग्निर्गृहपतिरिति हैक आहुः, सोऽस्य लोकस्य गृहपतिर्वायुर्गृहपतिरिति हैक आहुः, सोऽन्तरिक्षलोकस्य गृहपतिरसौ वै गृहपतिर्योऽसौ तपत्येष पतिर्ऋतवो गृहाः; येषां वै गृहपतिं देवं विद्वान् गृहपतिर्भवति, राध्नोति स गृहपती, राध्नुवन्ति ते यजमानाः; येषां वा अपहतपाप्मानं देवं विद्वान् गृहपतिर्भवत्यप स गृहपतिः पाप्मानं हते अप यजमानाः पाप्मानं घ्नते ऽध्वर्यो अरात्स्मारात्स्म"—इति। 'अथ' द्वादशपदानुद्रवणा-नन्तरं ब्रह्मोद्यनामकं मन्त्रं वदेयुः। ब्राह्मणानां मुख्य संवादो 'ब्रह्मोद्यम्'। अग्निरित्यादिकस्तन्मन्त्रः। 'एके' ब्राह्मणा अग्निः 'गृहपतिः' स्वामीत्याहुः। सोऽस्येत्यादिना तन्मतं मन्यैर्ब्राह्मणै-र्दूष्यते,— 'सः' अग्निः 'अस्य लोकस्य' भूलोकमात्रस्य गृहपतिः, न तु सर्वलोकस्येति दूषणवादिनामपरितोषः। तच्छ्रुत्वा अपरे ब्राह्मणा वायुर्गृहपतिरित्याहुः। तदपि मतं मन्यैर्ब्राह्मणैर्दूष्यते, — स वायुरन्तरिक्षलोकमात्रस्य गृहपतिः, न तु सर्वस्य। यो ऽसावादित्यस्तपति सोऽसावेव गृहपतिरिति सर्वैरङ्गीकार्यं मतम्। कथं गृहपतित्व मिति, तदुच्यते— 'एषः' प्रकाशमान आदित्यः पतिः, तेन निष्पाद्या वसन्ताद्यृतवो गृहाः; तस्मादृतुलक्षणानां गृहाणां पतिरित्ययमर्थो नाग्निवाय्वोरस्ति, आदित्ये तु विद्यते, तत्सञ्चारादृतुनिष्पत्तेः। किञ्च 'येषाम्' ऋतूनां गृहरूपाणां

स्वामिन मादित्यं देवं गृहपतित्वेन विद्वान् पुरुषः स्वय मपि गृहपतिर्भवति, स च गृहपतिः 'राध्नोति' सर्वैर्भोगैः समृद्धो भवति। तादृशेन गृहपतिना युक्तास्ते यजमानाः सर्वेऽपि 'राध्नुवन्ति' समृद्धिं प्राप्नुवन्ति। तेषां मृत्युग्रहाणां स्वामित्वादादित्यस्य गृहपतित्वं युक्त मित्यर्थः। सत्रे दीक्षिताः सर्वेऽपि यजमानाः, तेषु मुख्यो गृहपतिरिति विवेकः। किञ्च येषा मृतूनां स्वामिन मादित्यदेवम् 'अपहतपाप्मानं' सर्वपापरहितं विद्वान् पुरुषः स्वयं गृहपतिर्भवति, स गृहपतिः पाप्मान मप्यपहते। ये त्वन्ये यजमानास्तेऽपि पाप्मान मपघ्नते। तादृशाना मृतूनां स्वामिनो गृहपतित्वं युक्तम्। हे अध्वर्यो! वयम् 'अरात्स्म' समृद्धा अभूम ७॥

अभ्यासोऽध्यायसमाप्त्यर्थः॥ ६॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां चतुर्थाध्याये
( चतुर्विंशाध्याये ) षष्ठः खण्डः॥ ६ (२५)॥

* "प्रजापतिरकामयत"– इत्यारभ्य ( २भा० १६६पृ० ), एतावान् ग्रन्थ. सर्वेषु विधे-. यतो द्वादशाहदीक्षणीयविषयः समाम्नात.। अत्र तु "सत्राणाम्"–इत्युपक्रम्य ( ७.१.१. ) "एतावत् सार्धं दीक्षकर्मान्त स प्रावदत्"–इत्यन्तै. ( ८.१२.१०. ) सूत्रैः सत्रविधय उक्ताः ; द्वादशाहप्रयोगा अपि तदन्तर्गता एव। तत्रापि "गार्हपत्ये जुह्वति"–इत्यादिग्रन्थस्तु ( ८.१२.१—२९. ), "ते पवीत्यात्सा सम्पद्यन्ते"–इत्यादिखण्डद्वयस्य ( १२७–१६१ पृ० ) व्याख्यानायानुवाद इवेति। सामब्राह्मणे तु "अग्निना पृथिव्योषधिभि"–इत्यादि. ( १०. १.१. ), "देवतासु वा एष प्रतिष्ठित"–इत्यन्तश ( १५.१२.८. ) विस्तृततरो द्वादशाहदीक्षाविधायक आम्नातः। कात्यायनश्रौतसूत्रेऽपि द्वादशाध्यायीयसूत्रैरेष एव द्वादशाहो वर्णित.। समाम्नातश्च तदाश्वर्यं शतपथे सामान्यत, तैत्तिरीयसंहितायाश्च सप्तमे काण्डे द्वितीयप्रपाठकीयसप्तमादनुवाकेष्विति॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयात् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायाः चतुर्थोऽध्यायः ॥

## ॥ अथ पञ्चमाध्यायः ॥

( नव )

॥ अथ प्रथमः खण्डः ॥

॥ ॐ ॥ उद्धराहवनीय मित्यपराह्ण आह यदे-वाह्ना साधु करोति तदेव तत्प्राङुद्धृत्य तदभये निधत्त उद्धराहवनीय मिति प्रातराह यदेव रात्र्या साधु करोति तदेव तत्प्राङुद्धृत्य तदभये निधत्ते यज्ञो वा आहवनीयः स्वर्गो लोक आहवनीयो यज्ञ एव तत्स्वर्गे लोके स्वर्गे लोकं निधत्ते य एवं वेद यो वा अग्निहोत्रं वैश्वदेवं षोळशकलं पशुषु प्रति-ष्ठितं वेद वैश्वदेवेनाग्निहोत्रेण षोळशकलेन पशुषु प्रतिष्ठितेन राध्नोति रौद्रं गविसद्वायव्य मुपावसृष्ट माश्विनं दुह्यमानं सौम्यं दुग्धं वारुण मधिश्रितं पौष्णं समुदयन्तं मारुतं विष्यन्दमानं वैश्वदेवं विन्दुमन्मैत्रं शरोगृहीतं द्यावापृथिवीय मुद्वासितं सावित्रं प्रक्रान्तं वैष्णवं क्रियमाणं बार्हस्पत्य मुपसन्न मग्नेः पूर्वाहुतिः प्रजापते रुत्तरैन्द्रं हुत मेतद्वा अग्निहोत्रं वैश्वदेवं षोळशकलं पशुषु प्रति-

ष्ठितं* वैश्वदेवेनाग्निहोत्रेण षोळशकलेन पशुषु प्रतिष्ठितेन राध्नोति य एवं वेद ॥ १ (२६) ॥

दशम मह्नरविवाक्य मभिधाय द्वादशाहः समापितः ; अथाग्निहोत्र मभिधीयते। तत्राध्वर्युं प्रति यजमानोऽग्न्युद्धरणकर्त्तव्यतां ब्रूयात्। तदाहापस्तम्बः— "उद्धरेत्येव साय माह यजमान उद्धरेति प्रातः"–इति ( श्रौ० ६.१.४. ) ॥

तत्र सायङ्कालीनं यजमानकर्त्तव्यं विधत्ते— "उद्धराहवनीय मित्यपराह्ण आह ; यदेवाह्ना साधु करोति, तदेव तस्मा-दुद्धृत्य तदभये निधत्ते"–इति। अग्निहोत्रस्याध्वर्युरेक एव ऋत्विग्भवति। तथा च शाखान्तरे श्रूयते— "तस्मादग्निहोत्रस्य यज्ञ-क्रतोरेक ऋत्विक्"–इति (तै० ब्रा० २.२.६.)। त मध्वर्युं यज-मानः प्रेष्यति। हे अध्वर्यो ! आहवनीयाख्यं वह्नि मुद्धरेति ; ज्वलन्त मग्निं गार्हपत्यादुद्धृत्य प्राच्य मानीयाहवनीयस्थाने निधे-हीत्यर्थः। तथा चाश्वलायन आह— "गार्हपत्यादाहवनीयं ज्वलन्त मुद्धरेत्"–इति ( श्रौ० २.२.१. )। 'उद्धर आहवनीयम्' –'इति' अमुं प्रैषम् 'अपराह्णे' सायङ्काले सूर्यास्तमयात् प्राग् यजमानो ब्रूयात्। एवं सति अह्ना सर्वेणापि यदेव पुण्यं यज-मानः करोति, तत्सर्वं प्राङ्मुखृत्य भयरहिते आहवनीयस्थाने निहितवान् भवति †।

प्रातःकालीनं यजमानकर्त्तव्यं विधत्ते— "उद्धराहवनीय मिति प्रातराह ; यदेव रात्र्या साधु करोति, तदेव तस्मादुद्धृत्य तदभये निधत्ते"–इति। पूर्ववद् व्याख्येयम् ॥

---

* "प्रतिष्ठितपदे" ख।

† उद्धरणस्य कालोऽस्तमयादिकं सर्वं [illegible] द्रष्टव्यम् ( १. २. )।

आहवनीयोद्धरणं प्रशंसति— "यज्ञो वा आहवनीयः, स्वर्गो लोक आहवनीयः"–इति । आहवनीयस्य यज्ञनिष्पादनेन स्वर्गहेतुत्वादुभयरूपत्वम् ॥ वेदनं प्रशंसति— "यज्ञ एव तत् स्वर्गे लोके स्वर्गं लोकं निधत्ते य एवं वेद"–इति । आहवनीयोद्धरणस्य वेदिता स्वर्गसाधनयज्ञात्मके स्थाने स्वर्गं लोकं स्थापितवान् भवति ॥

अथाग्निहोत्रहोमद्रव्यं क्षीरादिरूपं प्रशंसितु मुपक्रमते—"यो वा अग्निहोत्रं वैश्वदेवं षोळशकलं पशुषु प्रतिष्ठितं वेद, वैश्वदेवेनाग्निहोत्रेण षोळशकलेन पशुषु प्रतिष्ठितेन राध्नोति"–इति । 'यः' पुमानग्निहोत्रशब्देन कर्मवाचिनोपलक्षितं होमद्रव्यं वेद, स पुमानग्निहोत्रकर्मणा 'राध्नोति' समृद्धो भवति । कीदृशमग्निहोत्रद्रव्यम् ? 'वैश्वदेवं' वक्ष्यमाणा रुद्रादयो विश्वेदेवाः, तेषां सम्बन्धि ; 'षोळशकलं' षोड़शावस्थम् । ते चावस्थाविशेषा रौद्रंगवीत्यादिना वक्ष्यन्ते । गवि स्थितत्वादेव पशुषु तत्प्रतिष्ठितम् । अग्निहोत्रेणेत्यत्रापि विशेषणत्रयं द्रव्यद्वारा योजनीयम् ॥

होमद्रव्यस्य बहुदेवतासम्बन्धं षोड़शावस्थोपेतत्वं च दर्शयति— "रौद्रं गविसद्, वायव्य मुपावसृष्ट माश्विनं दुह्यमानं, सौम्यं दुग्धं, वारुण मधिश्रितं, पौष्ण समुदयन्तं, मारुतं विष्यन्दमानं, वैश्वदेवं बिन्दुमत्, मैत्रं शरोगृहीतं, द्यावापृथिवीय मुद्वासितं, सावित्रं प्रक्रान्तं, वैष्णवं ह्रियमाणं, बार्हस्पत्य मुपसन्न मग्नेः पूर्वाहुतिः, प्रजापते रुत्तरैन्द्रं हुतम्"–इति । होमद्रव्यं क्षीरं 'गवि सत्' गोशरीरे यदा तिष्ठति, तदा 'रौद्रं' रुद्रदेवताकं वेदितव्यम् ; 'उपावसृष्ट' वत्सेन संसृष्टं प्रस्तुतं यदा भवति, तदा वायुदेवताकम् ; दुह्यमानत्वदशाया मश्विदेवताकम् ; दुग्धत्व-

दशायां सोमदेवताकम्; 'अधिश्रितं' पाकार्थं मग्नौ स्थापितं वरुणदेवताकम्; 'समुदयन्तं' पात्रमध्ये स्थित्वा सन्तापवशेन सम्यगूर्ध्वदशायां पूषदेवताकम्; 'विष्यन्दमानम्' ऊर्ध्वं सुद्गतस्य पात्राद् बहिर्विशेषेण स्यन्दनदशापन्नं मरुद्देवताकम्; 'बिन्दुमत्' बुद्बुदवत् विश्वेषां देवानां सम्बन्धि; 'शरोयहीतं' सारप्रचयभावापन्नं * मित्रदेवताकम्; 'उद्वासितम्' अग्निस्थानाद् बहिरवस्थापितं द्यावापृथिवीदेवताकम्; 'प्रक्रान्तं' होतुं हरणायोपक्रान्तं सवितृदेवताकम्; 'क्रियमाणं' होमस्थाने नीयमानं विष्णुदेवताकम्; 'उपसन्नं' नीत्वा वेद्यां मासादितं बृहस्पतिदेवताकम्; तेन द्रव्येण या पूर्वाहुतिः, साग्निसम्बन्धिनी; उत्तराहुतिस्तु प्रजापतिसम्बन्धिनी; 'हुतं' होमोत्तरकालीन मिन्द्रदेवताकम्। एवं हविषः षोडशावस्थाः तत्तद्देवतासम्बन्धाश्च दर्शिताः † ॥

तत्सर्व मुपसंहरति—"एतद्वा अग्निहोत्रं वैश्वदेवं षोळशकलं पशुषु प्रतिष्ठितम्"—इति। अग्निहोत्रं तदर्थक्षीरम् ॥

तद्वेदनं प्रशंसति—"वैश्वदेवेनाग्निहोत्रेण षोळशकलेन पशुषु प्रतिष्ठितेन राध्नोति य एवं वेद"—इति ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां पञ्चमाध्याये
( पञ्चविंशाध्याये ) प्रथमः खण्डः ॥ १ ( २६ ) ॥

---

* "लोहमयं घनीभूतं यच्चर सार्द्रं मन्थिवत्स प्रियम्"—इति ते॰ब्रा॰ग्र॰भा॰ २.१०।

† तैत्तिरीयब्राह्मणेऽप्येता एव षोडशावस्थास्तद्देवताश्चाम्नाताः ( २,१,३. )।

॥ अथ द्वितीयः खण्डः ॥

यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत्का तत्र प्रायश्चित्तिरिति ता मभिमन्त्रयेत यस्माद् भीषा निषीदसि ततो नो अभयं कृधि पशून्नः सर्वान् गोपाय नमो रुद्राय मीळ्हुष इति ता मुत्थापये-दुदस्थाद्देव्यदितिरायुर्यज्ञपतावधात् इन्द्राय कृण्वती भाग मित्राय वरुणाय चेत्यथास्या उदपात्र मूधसि च मुखे चोपगृह्णीयादथैनां ब्राह्मणाय दद्यात्सा तत्र प्रायश्चित्तिर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना वाश्येत का तत्र प्रायश्चित्तिरित्यशनायां ह वा एषा यजमानस्य प्रतिख्याय वाश्यते ता मन्न मप्यादये-च्छान्त्यै शान्तिर्वा अन्नं सूयवसाद्भगवती हि भूया इति सा तत्र प्रायश्चित्तिर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना स्यन्देत का तत्र प्रायश्चित्तिरिति सा यत्तत्र* स्कन्दयेत्तदभिमृश्य जपेद्यदद्य दुग्धं पृथिवी मसृप्त यदोषधीरत्यसृपद्यदापः पयो गृहेषु पयो अघ्न्यायाम् पयो वत्सेषु पयो अस्तु तन्मयीति तत्र यत्परिशिष्टं स्यात्तेन जुहुयाद्यद्यलं होमाय स्याद्यदि वै सर्वं सिक्तं स्यादथान्या माहूय तां दुग्ध्वा तेन

* "सा तत्र" क ।

जुहुयादा त्वेव श्रद्धायै होतव्यं सा तत्र प्रायश्चित्तिः सर्वं वा अस्य बर्हिष्यं सर्वं परिगृहीतं य एवं विद्वानग्निहोत्रं जुहोति ॥ २ (२७) ॥

अथाग्निहोत्रे वैकल्यनिमित्तं प्रश्नपूर्वकं प्रायश्चित्तं विधत्ते— "यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत्का तत्र प्रायश्चित्तिरिति, तामभिमन्त्रयेत"—इति । अग्निहोत्रार्थं सम्पादिता गौः 'अग्निहोत्री' सा च 'उपावसृष्टा' दोहनार्थं वत्सेन संयोजिता, ऊर्ध्वं दुह्यमाना सती, दोहनमध्ये यद्युपविशेत्, तदानीं शास्त्रीयस्य दोहनस्य विनष्टत्वाद् 'यस्य' यजमानस्य 'तत्र' अग्निहोत्र्युपवेशने प्रायश्चित्तिरपेक्षिता, सा च कीदृशी ? इति प्रश्नः । 'ताम्' अग्निहोत्रीं वक्ष्यमाणेन मन्त्रेणाभिमन्त्रयेतेति प्रायश्चित्तविधिः ॥

तत्र मन्त्रं दर्शयति— "यस्माद् भीषा निषीदसि, ततो नो अभयं कृधि ; पशून् नः सर्वान् गोपाय, नमो रुद्राय मीळ्हुष इति"—इति । हे अग्निहोत्रि । त्वं 'यस्मात्' विरोधिनः मक्षरमानात्मनस्त्वा अर्यमाणाद् व्याघ्रादेः 'भीषा' भयेन 'निषीदसि' उपविशसि, 'ततः' भयहेतोः सकाशात् 'नः' अस्माकम् अभयं 'कृधि' कुरु । तथा 'नः' अस्माकं सर्वान् पशून् 'गोपाय' रक्ष । 'मीळ्हुषे' सेचनसमर्थाय रुद्राय पशुस्वामिने नमोऽस्तु । 'इति'—शब्दो मन्त्रसमाप्त्यर्थः ॥

अभिमन्त्रणादूर्ध्वं तस्या अग्निहोत्र्या मन्त्रान्तरेणोत्थापनं विधत्ते— "तामुत्थापयेत्"—इति ॥

तस्मिन्नुत्थापने मन्त्रमाह— "उदस्थाद्देव्यदितिरायुर्यज्ञपतावधात्, इन्द्राय कृण्वती भागं मित्राय वरुणाय चेति"—इति ।

'अदितिः' अदीना देवी देवतारूपा अग्निहोत्री 'उदस्थात्' उत्थितवती। उत्थाय च 'यज्ञपतौ' यजमाने आयुः 'अधात्' सम्पादितवती। कीदृश्यग्निहोत्री? इन्द्रमित्रवरुणाना मपेक्षितं हविर्भागं 'कृण्वती' सम्पादयन्ती। 'इति'–शब्दो मन्त्रसमाप्त्यर्थः ॥

उत्थापनानन्तरकर्त्तव्यं दर्शयति— "अथास्या उदपात्र मूधसि च मुखे चोपगृह्णीयादथैनां ब्राह्मणाय दद्यात्सा तत्र प्रायश्चित्तिः" –इति। 'अस्याः' अग्निहोत्र्याः, ऊधसि उदकपात्रग्रहणं नाम जलस्योऽवेचणं, मुखे गृहीत्वा जलं पाययित्वा, तादृश्या ब्राह्मणाय दानं यदस्ति, सा 'तत्र' वैकल्ये प्रायश्चित्तिरवगन्तव्या ॥

अथ दोहनकाले ध्वनिकरणे प्रायश्चित्तं विधत्ते— "यस्याग्निहोत्रुपावसृष्टा दुह्यमाना वाश्येत, का तत्र प्रायश्चित्ति रित्यशनायां ह वा एषा यजमानस्य प्रतिख्याय वाश्यते, ता मन्न मप्यादयेच्छान्त्यै; शान्तिर्वा अन्नं सूयवसाद्भगवती हि भूया इति; सा तत्र प्रायश्चित्तिः"–इति। 'वाश्येत' हम्भारवं कुर्वीत, तदानीं सेवाग्निहोत्री स्वकीयाम् 'अशनायां' क्षुधां यजमानस्य 'प्रतिख्याय' प्रख्यापनार्थं 'वाश्यते' ध्वनिं करोति। तस्मात् 'ताम्' अग्निहोत्रीं वाश्यमानां मन्नम् 'अप्यादयेत्' अपिशब्दात् तृणादिक मपि। तच्च भक्षणं क्षुधाशान्त्यै सम्पद्यते। अन्नं शान्तिहेतुरिति प्रसिद्धम्। "सूयवसाद्"–इत्यादिर्मन्त्रः। हे अग्निहोत्रि! 'भगवती' पूज्या त्वं 'सूयवसात्' भूयः सुष्ठु यवसं तृणं सूयवसं, तदत्ति भक्षयतीति सूयवसात्; तादृशी भवेति मन्त्रार्थः। मन्त्रेणान्न मादयेदिति यदस्ति, सैव 'तत्र' ध्वनौ प्रायश्चित्तिर्द्रष्टव्या ॥

दोह्यमानस्य क्षीरस्याग्निहोत्र्याः स्थानचलनेन भूमौ पतने प्रायश्चित्तं विधत्ते— "यस्याग्निहोत्रुपावसृष्टा दुह्यमाना स्पन्देत,

का तत्र प्रायश्चित्तिरिति ; सा तत्र स्कन्दयेत्तदभिमृश्य जपेत्"—इति । 'स्पन्देत' किञ्चिच्चलेत्, 'सा' चलन्ती यदि 'तत्र' भूमौ 'स्कन्दयेत्' ईषत् चीरं पातयेत्, 'तत्' चीरं हस्तेन स्पृष्ट्वा मन्त्रं जपेत् ॥

तं मन्त्रं दर्शयति—"यदद्य दुग्धं पृथिवी मसृप्त, यदोषधीरत्यसृपद्यदापः ; पयो गृहेषु पयो अघ्न्यायाम्, पयो वत्सेषु पयो अस्तु तन्मयीति"—इति । अयेदानीं यद् 'दुग्धं' चीरं पृथिवीम् 'असृप्त' प्राप्नोत्, यच्च 'ओषधीः' पतितं तृणजातम् 'अत्यसृपत्' अतिशयेन प्राप्नोत्, यदपि 'तत्' चीरं बिन्दुरूपम् 'आपः' भूमिष्ठं जलं प्राप्नोत् ; आप इति द्वितीयार्थे प्रथमा ; सर्वं मदीयेषु गृहेषु 'अघ्न्यायाम्' अस्मदीयायां धेन्वां, वत्सेषु अस्मदीयेषु, 'मयि' मदुदरे वा 'अस्तु' तिष्ठतु । पृथगन्वयार्थे 'पयः'—शब्दावृत्तिः । 'इति'—शब्दो मन्त्रसमाप्त्यर्थः ॥

उक्तप्रायश्चित्तादूर्ध्वं होमे विशेषं विधत्ते— "तत्र यत्परिशिष्टं स्यात्, तेन जुहुयाद्यद्यलं होमाय स्याद्"—इति । 'तत्र' दोहनपात्रे 'यत्' चीरं भूमौ पतितात् परिशिष्टं स्यात्, तद्यदि होमाय 'अलं' पर्याप्तं भवेत्, तदानीं तेन जुहुयात् ॥

अपर्याप्तावुपायान्तरं माह— "यद्यु वै सर्वं सिक्तं स्यादथान्यामाहूय तां दुग्ध्वा तेन जुहुयादा त्वेव श्रद्धायै होतव्यं ; सा तत्र प्रायश्चित्तिः"—इति । 'यद्यु वै' यदि च 'सर्वं' दुह्यमानं चीरं 'सिक्तं' भूमौ पतितं स्यात्, तदानीम् 'अन्यां' काञ्चिद्गाम् 'आहूय' आनीय, तां दुग्ध्वा तदीयेन चीरेण जुहुयात् । यदन्यापि न लभेत, तदानीं मग्निहोत्रं न परित्याज्यं किन्तु 'आ श्रद्धायै होतव्यम्' ; आङोऽभिविधिरर्थः,— आ श्रद्धायाः, श्रद्धासहितं सर्वं वस्तुजातं

'होतव्यं' होमयोग्यम् । अय मर्थः— दधियवाग्वादीनां * मध्ये येन केनापि द्रव्येण होतव्यम्, सर्वालाभे त्वन्ततः श्रद्धां मपि जुहुयात् । "श्रद्धं श्रद्धां जुहोमि"—इति सङ्कल्प्य श्रद्धाहोमः । अग्निहोत्रस्य नित्यत्वात् सर्वात्मना परित्यागो न युक्तः इति ॥

वेदनपूर्वकं मनुष्ठानं प्रशंसति— "सर्वं वा अस्य बर्हिष्यं, सर्वं परिगृहीतं य एवं विद्वानग्निहोत्रं जुहोति"—इति । विदित्वा अनुष्ठातुः 'अस्य' पुरुषस्य 'सर्वम्' अपि द्रव्यं 'बर्हिष्यं' यज्ञयोग्यम् । अतः सर्वं द्रव्यम् अनेन होमार्थं परिगृहीतं भवति ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां पञ्चमाध्याये
( पञ्चविंशाध्याये ) द्वितीयः खण्डः ॥ २ (२०) ॥

---

॥ अथ तृतीयः खण्डः ॥

असौ वा अस्यादित्यो यूपः पृथिवी वेदिरोषधयो बर्हिर्वनस्पतय इध्मा आपः प्रोक्षण्यो दिशः परिधयो यद्ध वा अस्य किञ्च नश्यति यन् म्रियते यद-

---

* "पयसा नित्यहोमः । यवागूरोदनो दधि सर्पिर्ग्रामकामान्नाद्यकामेन्द्रियकामतेजस्कामानाम्"—इत्यादिकल्पसूत्राण्यत्रानुसन्धेयानि ( आप० श्रौ० ६.१५.१,२. ) । "दध्ना जुहुयात् पयसा जुहुयात् पशुकामस्य०—०आज्येन जुहुयात् तेजस्कामस्य०—०दध्नेन्द्रियकामस्य०—० यवाग्वा ग्रामकामस्य०—०"—इति तै० ब्रा० २.१.५ इ० ।

प्राजन्ति। सर्वं हैवैनं तदमुष्मिंल्लोके* यथा बर्हिषि दत्त मागच्छेदेव मागच्छति। य एवं विद्वानग्निहोत्रं जुहोत्युभयान्वा एष देवमनुष्यान् विपर्यासं दक्षिणा नयति। सर्वं चेदं यदिदं किञ्च। मनुष्यान्वा एष सायं माहुत्या देवेभ्यो दक्षिणा नयति। सर्वं चेदं यदिदं किञ्च। त एते प्रलीना न्योकस इव शेरे। मनुष्या देवेभ्यो दक्षिणा नीता। देवान्वा एष प्रातराहुत्या मनुष्येभ्यो दक्षिणा नयति। सर्वं चेदं यदिदं किञ्च। त एते विविदाना ब्रुवीत्यतन्वंदो ऽहं करिष्ये। ऽदो ऽहं गमिष्यामीति वदन्तो। यावन्तं ह वै सर्वमिदं दत्त्वा लोकं जयति तावन्तं ह लोकं जयति य एवं विद्वानग्निहोत्रं जुहोत्यग्नये वा एष सायं माहुत्याश्विन मुपाकरोति। तद्वाक् प्रतिगृणाति। वाग् वाग्नित्यग्निना ह्यस्य रात्र्याश्विनं शस्तं भवति। य एवं विद्वानग्निहोत्रं जुहोत्यादित्याय वा एष प्रातराहुत्या। महाव्रत मुपाकरोति। तस्याग्नः प्रतिगृणात्यन्न मन्न मित्यादित्येन ह्यस्याह्ना महाव्रतं शस्तं भवति। य एवं विद्वानग्निहोत्रं जुहोति। तस्य वा एतस्याग्निहोत्रस्य। सप्त च शतानि विंशतिश्च संवत्सरे सायं माहुतयः। सप्त चो एव शतानि विंशतिश्च।

* "यदर्हिषिश्वाके" च, क, ट। "यदर्हिषिनाके" च।

संवत्सरे प्रातराहुतयस्तावत्यो ऽग्नेर्यजुष्मत्य इष्टकाः संवत्सरेण हास्याग्निना चित्येनेष्टं भवति य एवं विद्वानग्निहोत्रं जुहोति ॥ ३ (२८) ॥

यथा यज्ञाहोमः पूर्वं मुक्तः, तथा भावनारूपो होमोऽग्निहोत्रप्रशंसार्थ मेव प्रदर्श्यते—"असौ वा अस्यादित्यो यूप, पृथिवी वेदिरोषधयो बर्हिर्वनस्पतय इध्मा, आपः प्रोक्षण्यो, दिशः परिधयः"—इति । 'अस्य' भावनारूपं यज्ञं कुर्वत. पुरुषस्यासावादित्यो यूपस्थानीयः, पृथिवी वेदिस्थानीया, ओषधयो बर्हिःस्थानीयाः, वनस्पतय इध्मस्थानीयाः, भूमौ विद्यमाना आपः सर्वा अपि संस्कृतप्रोक्षणीस्थानीयाः, प्राच्या दिशः परिधिस्थानीयाः । ईदृशी भावनैवाग्निहोत्रहोमः ; इतरसम्भवाभावेऽपि एतादृशो वा होमः कर्त्तव्यः ॥

ईदृग्भावनायां फलं दर्शयति—"यद्ध वा अस्य किञ्च नश्यति, यन् म्रियते, यदपाजन्ति, सर्वं हैवैनं तदमुष्मिंल्लोके यथा बर्हिषि दत्त मागच्छेदेव मागच्छति य एवं विद्वानग्निहोत्रं जुहोति"—इति । यः पुमानादित्यो यूप इत्यादिकं विद्वान् भावयन्नग्निहोत्रं जुहोति, 'एनं' पुरुषम् 'अमुष्मिन्' स्वर्गे लोके तत्सर्व मागच्छति । किं कि मिति, तदुच्यते—'अस्य' पुरुषस्य 'यद्ध वै किञ्च' अस्मिंल्लोके यत् कि मपि वस्तु नश्यति, यच्च पुत्रादिकं म्रियते, यदप्यन्यद्‌ 'अपाजन्ति' अपगच्छति, स्वस्मादियुक्तं भवति ; तत्सर्वं प्राप्यते । तत्र दृष्टान्तः— यथा 'बर्हिषि' यज्ञे दत्तं वस्तु स्वर्गे यजमान मागच्छेत्, एवं नष्टं मृत मपगतं च सर्वं मागच्छति * ॥

* "ब्रह्मवादिनो वदन्ति॰—॰बर्हिषि दत्त भवति"—इति ते॰ ब्रा॰ २ । ५ । १, २ इ॰ ।

योऽयं अग्निहोम पूर्वं मुक्तः, तस्यैव पुनरपि यूपवेद्यादिभावना-रूप मनुष्ठान मुक्तम्, इदानीं भावनारूपां दक्षिणा माह—"उभयान् वा एष देवमनुष्यान् विपर्यासं दक्षिणा नयति, सर्वं चेदं यदिदं किञ्च"–इति। 'एषः' अग्निहोमस्य कर्त्ता, 'देवान्मनुष्यांश्च, उभयविधान् 'विपर्यासं' विपर्यस्य दक्षिणाः कृत्वा 'नयति' ऋत्विग्भ्यः समर्पयति। यत्र देवानां दक्षिणारूपत्वं, न तत्र मनुष्याणां तद्रूपत्वम्; यत्र तु मनुष्याणां दक्षिणात्वं, न तत्र देवाना मित्येवं विपर्यासः; अनेन विपर्यासेन देवेषु मनुष्येषु च दक्षिणात्वसङ्कल्पः कर्त्तव्यः। न केवलं देवमनुष्याणा मेव दक्षिणात्वम्, किं तर्हि? 'यत्किञ्च इदं' जगदस्ति, तत्सर्वं मिदं यथाऽग्नीमीयदक्षिणा नयति; सर्वस्मिन् जगति दक्षिणेय मिति सङ्कल्पः कर्त्तव्यः॥

मनुष्याणां कुत्र दक्षिणात्व मित्यायङ्का तद्दर्शयति— "मनुष्यान्वा एष सायमाहुत्या देवेभ्यो दक्षिणा नयति सर्वं चेदं यदिदं किञ्च; त एते प्रलीना न्योकस इव शेरे, मनुष्या देवेभ्यो दक्षिणा नीताः"–इति। येयं अग्निहोत्रे सायमाहुतिः, तया 'आहुत्या' तदाहुतिनिमित्तं 'देवेभ्यः' ऋत्विक्स्थानीयेभ्यो 'मनुष्यान्' गोसुवर्णस्थानीयान् दक्षिणाः कृत्वा 'नयति' समर्पयति। न केवल मनुष्यान्, किन्तु यत् किञ्चिदिदं जगदस्ति, तत्सर्वं दक्षिणाः कृत्वा समर्पयति। कथं मनुष्याणां रात्रौ दक्षिणात्व मिति, तदुच्यते— 'एते' मनुष्याः यस्मात्स्वयं देवेभ्यो दक्षिणा नीताः, तस्माद्रात्रौ 'प्रलीनाः' स्व-स्व-व्यापाररहिताः 'न्योकस इव' निर्गत ओकः स्थानं गृहरूपं येषां ते न्योकसः, मदीयं गृह मित्यभिमानरहिता एव सन्तः 'शेरे' शेरते, सुषुप्तिं गच्छन्तीत्यर्थः। यथा ऋत्विग्भ्यः

समर्पितं गवादिकं दक्षिणाद्रव्यं पराधीनं भवति, एवं रात्रौ मनुष्या देवाधीनत्वात् स्वव्यापाराक्षमाः ; तदिदं पारवश्यं दक्षिणात्वे लिङ्गम् ॥

अथ देवानां दक्षिणात्वं दर्शयति— "देवान्वा एष प्रातराहुत्या मनुष्येभ्यो दक्षिणा नयति सर्वं चेदं यदिदं किञ्च ; त एते विविदाना इवोत्पतन्त्यदो ऽहं करिष्ये ऽदो ऽहं गमिष्यामीति वदन्तः"—इति। 'एषः' अग्निहोत्रोमोऽयं 'प्रातराहुत्या' निमित्तभूतया 'मनुष्येभ्यः' ऋत्विक्स्थानीयेभ्यो 'देवान्' गवादिद्रव्यस्थानीयान् दक्षिणाः कृत्वा समर्पयति। यत् किञ्चिदिदं जगदस्ति, तदपि सर्वं दक्षिणात्वेन समर्पयति। अतः 'ते एते' देवाः दक्षिणारूपेण मनुष्यपारवश्यं गताः 'विविदाना इवोत्पतन्ति' स्वस्वामिभूतानां मनुष्याणा मभिप्रायविशेषं जानन्त एवोद्योगं कुर्वन्ति। किं कुर्वन्तः सन्तः ? 'अस्य' मनुष्यस्य 'अदः' कार्यं मह करिष्ये, तस्मात् 'अदः' मनुष्यस्य समीप महं गमिष्यामीति वदन्तः। अहनि देवा मनुष्यैः पूज्यमानास्तत्समीपं गत्वा तदीय मिद मायुरारोग्यादिरूपं कार्यं करिष्याम इति वदन्तो मनुष्याधीना अवतिष्ठन्ते ; तदिदं देवानां दक्षिणात्वम्। अथवा 'त एते' इति वाक्यं मनुष्यपरत्वेन योजनीयम्। 'त एते' मनुष्याः प्रातःकाले निद्रापारवश्यं परित्यज्य देवतानुग्रहरूपां दक्षिणां गृहीत्वा 'विविदाना इव' विशेषेण स्व-स्व-कार्यं जानन्त एव 'उत्पतन्ति' शयनादुत्तिष्ठन्ति ; उत्थाय चाह मिदं सन्ध्यावन्दनं करिष्ये ऽह मिदं राजगृहं गमिष्यामीत्येवं वदन्तो वर्त्तन्ते। तदेव मनुष्याणां स्वातन्त्र्यं देवतारूपदक्षिणाप्रतिग्रहस्य लिङ्गम् ॥

उक्तार्थवेदनपूर्वकं मग्निहोत्रानुष्ठानं प्रशंसति— "यावन्तं ह

वै सर्वमिदं दत्त्वा लोकं जयति, तावन्तं ह लोकं जयति य एवं विद्वानग्निहोत्रं जुहोति"–इति। 'इदं सर्वं' स्वकीयं धनं दत्त्वा तद्दानफलरूपं यावन्तं लोकं पुरुषः प्राप्नोति, तावन्तमेव लोकं यद्वाहोमवेदनपूर्वकाग्निहोत्रानुष्ठायी प्राप्नोति * ॥

तदेवं यद्वाहोमादिरूपेणाग्निहोत्रं प्रशस्याथ गवामयनसम्पादनेन प्रशंसति—"अग्नये वा एष सायमाहुत्याश्विनमुपाकरोति, तद्वाक् प्रति गृणाति वाग् वागिति"–इति। येयमग्निहोत्रस्य सायमाहुतिरग्निदेवतायां, तया अग्निहोत्री गवामयनसम्बन्धमाश्विनं शस्त्रमुपाकरोति; सायंहोमः शस्त्रोपक्रम इत्यर्थः। अस्या. सायमाहुतेरग्निर्देवता, आश्विनशस्त्रस्यादावपि "अग्निर्होता गृहपति"–इति ( सं० ६.१५.१३.१. ) मन्त्रेऽग्निः स्तुतः, तदिदं साहश्यम्। तत्राहुतिरूपं शस्त्रं 'वाक् प्रतिगृणाति' यथा शस्त्रस्य प्रतिगरः, एवमत्र वाक् शब्दः प्रयुज्यते। तथाग्निहोत्रोत्तरमन्त्रे "वाचा त्वा होत्रा"–इति वाक् शब्दः प्रयुज्यते, तदिदं प्रतिगरसदृशम्। वाग्वागिति वीप्सा प्रयोगबाहुल्यापेक्षा। गवामयनस्य प्रायणीयमहो ऽतिरात्रसंस्थम्; अतिरात्रे चाश्विनं शस्त्रं शस्यते, तेन सायंहोमस्य गवामयनप्रारम्भसादृश्यं प्रतिपादितं भवति † ॥

उक्तार्थवेदनपूर्वकमनुष्ठानं प्रशंसति—"अग्निना हास्य रात्र्याश्विनं शस्त्रं भवति य एवं विद्वानग्निहोत्रं जुहोति"–इति। 'अस्य' विदित्वानुष्ठातुः सायमाहुतिः देवेनाग्निना रात्रौ विहितमाश्विनं शस्त्रं शस्त्रं भवति ॥

---

* "यद् सायं जुहोति०—०इव मेव तत्"–इति तै० ब्रा० २ १ ५ २.२ द्र०।

† ४ प० २ ख० १ ख० ( २ भा० २०८—२८२ पृ० )।

सायमाहुतिं प्रायणीयातिरात्ररूपेण प्रशस्य प्रातराहुतिं गवामयनगतमहाव्रतरूपेण प्रशंसति— "आदित्याय वा एष प्रातराहुत्या महाव्रत मुपाकरोति, तस्मात्: प्रतिष्ठणात्यन्न मन्न मिति"–इति। आदित्यार्थं हूयमाना येयं प्रातराहुतिः, तया 'एषः' अग्निहोत्री महाव्रताख्यं गवामयनस्योपान्तिम मह्नः प्रारभते; "तदिदास"–इत्यादित्यदेवताकेन मन्त्रेण ( सं० १०.१२०.१.) तस्मिन्नहनि निष्केवल्यशस्त्रप्रारम्भात्। तच्चाहुतिरूपं शस्त्रं प्राणः प्रतिष्ठणाति। कथ मेतदिति, तदुच्यते— "अन्नं पयो रेतो अस्मासु"–इत्यग्निहोत्रे भक्षणमन्त्रः; तेन 'अन्न मिति प्रतिष्ठणाति'–इत्युच्यते। अन्नञ्च प्राणत्वेन संस्तुतम्; "अन्नं प्राणमन्न मपानम्"–इतिश्रुतेः। अन्न मन्न मिति वीप्सा प्रयोगबाहुल्यापेक्षा। तस्मादस्ति महाव्रतस्य प्रातराहुतिगतादित्यसम्बन्धः ॥

उक्तार्थवेदनपूर्वक मनुष्ठानं प्रशंसति— "आदित्येन ह्यस्याह्ना महाव्रतं यस्तं भवति य एवं विद्वानग्निहोत्रं जुहोति"–इति। पूर्ववद् व्याख्येयम् ॥

प्रकारान्तरेण गवामयनसाम्यं सम्पाद्य प्रशंसति— "तस्य वा एतस्याग्निहोत्रस्य सप्त च शतानि विंशतिश्च संवत्सरे सायमाहुतयः, सप्त चो एव शतानि विंशतिश्च संवत्सरे प्रातराहुतयस्तावत्यो ऽग्नेर्यजुष्मत्य इष्टकाः"–इति। एकैकस्यां रात्रौ द्वे द्वे आहुती; तथा सति षष्ट्यधिकशतत्रयसङ्ख्याकासु संवत्सरस्य रात्रिषु, तत्सङ्ख्याद्विगुणत्वेन विंशत्यधिकसप्तशतसङ्ख्याकाः सायमाहुतयः सम्पद्यन्ते। प्रातराहुतयोऽपि संवत्सरस्यैतावत्य एव। 'सप्त चो'–इत्युकारो निपातो वाक्योपन्यासार्थः। मिलिता सर्वाहुतीनां

* ४ प० १.८. (२ भा० ११७—१२०पृ०) द्र०।

चत्वारिंशदधिकेन शतचतुष्टयेन युक्ता सहस्रसङ्ख्या सम्पद्यते ; गवामयने चित्यस्याग्नेर्यजुष्मत्यो मन्त्रयुक्ता इष्टका अपि तावत्यः* ; अतोऽग्निहोत्रस्येष्टकासङ्ख्याद्वारा गवामयनसादृश्यम् ॥

एतद्वेदनपूर्वक मनुष्ठानं प्रशंसति — "संवत्सरेण हास्याग्निना चित्येनेष्टं भवति य एवं विद्वानग्निहोत्रं जुहोति"–इति । तस्य विदित्वा अनुष्ठातु. संवत्सरसत्रेण चित्याग्नियुक्तेनेष्टं भवति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां पञ्चमाध्याये
( पञ्चविंशाध्याये ) तृतीयः खण्डः ॥ ३ ( २८ ) ॥

---

॥ अथ चतुर्थः खण्डः ॥

वृषशुष्मो ह वातावत उवाच जातूकर्ण्यो वक्ता
स्मो वा इदं देवेभ्यो यद्धैतदग्निहोत्रमुभयेद्युरहूय-
तान्येद्युर्वाव तदेतर्हि हूयत इत्येतदु हैवोवाच
कुमारी गन्धर्वगृहीता वक्ता स्मो वा इदं पितृभ्यो
यद्धैतदग्निहोत्रमुभयेद्युरहूयतान्येद्युर्वाव तदेतर्हि
हूयत इत्येतद्वा अग्निहोत्रमन्येद्युर्हूयते यदस्त-
मिते सायं जुहोत्यनुदिते प्रातरथैतदग्निहोत्रमुभये-

* "अथ यजुष्मत्य —दर्भस्तम्बो लोगेष्टका पुष्करपर्णं रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजू रेतःसिचौ विश्वज्योतिर्ऋतव्या अषाढा"–इत्यादय श० ब्रा० १०. ४।१।१४—२०। "यतो यजुष्मत्"–इति निरु० ११ ४ ८।

द्युहूयते 'यदस्तमिते सायं जुहोत्युदिते प्रातस्तस्मा-दुदिते होतव्यं चतुर्विंशे ह वै संवत्सरे ऽनुदितहोमी' गायत्रीलोक माप्नोति' द्वादश उदितहोमी' स यदा द्वौ संवत्सरावनुदिते जुहोत्यथ हास्यैको हुतो भवत्यथ य उदिते जुहोति' संवत्सरेणैव संवत्सर माप्नोति' य एवं विद्वानुदिते जुहोति 'तस्मादुदिते होतव्यं' मेष ह वा अहोरात्रयोस्तेजसि जुहोति यो ऽस्तमिते सायं जुहोत्युदिते प्रातरग्निना वै तेजसा रात्रिस्तेजस्वत्यादित्येन तेजसा ऽहस्तेजस्वदहोरात्र-योर्हास्य 'तेजसि हुतं भवति' य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यम्' ॥ ४ (२९) ॥

अथानुदितहोमनिन्दोदितहोमस्तुतिश्च प्रारभ्यते— "वृषशुष्मो ह वातावत उवाच जातूकर्ण्यो वक्ता स्मो वा इदं देवेभ्यो यद्वै-तदग्निहोत्र मुभयेद्युरहूयतान्येद्युर्वाव तदेतर्हि हूयत इति"— इति। वतावतनाम्नो महर्षेरपत्यं 'वातावतः' जतूकर्णस्य पौत्रो 'जातूकर्ण्यः', स च 'वृषशुष्मः' वृषभस्येव शुष्मो बलं यस्य महर्षेः *सोऽयं वृषशुष्मः। तादृशो महर्षिः कदाचिदग्निहोत्रिणा सह प्रस*-ङ्गादिद मुवाच— हे अग्निहोत्रिणः! भवदीयम् 'इदम्' आचरणं देवेभ्यो 'वक्ता स्मः' वयं वक्ष्यामः। किं तदाचरणम्? इति, तदु-च्यते— 'एतद्' अग्निहोत्रं पुरातनैर्महर्षिभिः 'उभयेद्युरहूयत' दिनद्वये हुत मासीत्। पूर्वदिनस्य रात्रावग्नि मुद्दिश्य होमः,

परदिनस्य प्रातः सूर्यं समुद्दिश्य होमः ; इत्येवं दिनद्वयानुष्ठानं पूर्वैः कृतम् ; तदुल्लङ्घ्य इदानीं मेतदग्निहोत्रं मनुष्यैः 'अन्येद्युः' अन्यतरस्मिन्नेव दिवसे हूयते ;— अस्तमयादूर्ध्वं मग्नये होमः, पुनरपि सूर्योदयात् प्रागेव सूर्याय होमः ; इत्येव मेकस्या मेव रात्रौ होमद्वय मनुचितं क्रियते। 'इति' एतदाचरणं शास्त्रविरुद्धं देवताना मग्रे कथयिष्यामीति हृदस्य महर्षेर्वाक्यम् * ॥

अस्मिन्नेवार्थे कुमारीवाक्य मप्युदाहरति— "एतद्ध स्मैवोवाच कुमारी गन्धर्वगृहीता वक्ष्यामो वा इदं पितृभ्यो यद्वैतदग्निहोत्र मुभयेद्युरहूयतान्येद्युर्वाव तदेतर्हि हूयत इति"—इति। कस्यैः पुत्री काचिद्बाला, तद्गृहस्वामिना गन्धर्वेण कदाचिद्गृहीता सती, प्रसङ्गादेतदेव वाक्य मग्निहोत्रविषये मवोचत्। 'वक्ष्याम' —इत्यादिक मेतद्वाक्यम् ; पितृभ्य इत्येतावानेव विशेषः ॥

कस्यैः कुमार्याश्च वाक्यतात्पर्यं दर्शयति— "एतद्वा अग्निहोत्र मन्येद्युर्हूयते यदस्तमिते सायं जुहोत्यनुदिते प्रातरथैतदग्निहोत्र मुभयेद्युर्हूयते, यदस्तमिते सायं जुहोत्युदिते प्रातः" —इति। इदानीन्तनो यदग्निहोत्रं सूर्येऽस्तमिते सायं जुहोति, पुनः सूर्येऽनुदिते प्रातर्जुहोति, एवं सति एतदेवाग्निहोत्रहोमद्वयम् 'अन्येद्युः' तु एकस्मिन्नेव दिने हूयते; रात्रिमध्ये एव द्विविधहोमनिष्पत्तेः। अथैतद्वैपरीत्येन पुरातनानां शास्त्रज्ञानां यदग्निहोत्रं सूर्येऽस्तमिते ऽध्वर्युः सायं जुहोति, परेद्युः प्रातरुदिते सूर्ये यथाऽऽजुहोति ; एतदग्निहोत्रं 'उभयेद्युः' दिनद्वय एव हूयते ॥

* "एक एवाग्ने बहुधा समिद्ध आगूर्य्य ."—इति भाष० ६.१.२ (। "आगूर्णा भारद्वाजाः"—इति ग्रह० श्रा० १६.१.५.२१, ०.३.२०। कात्यायनश्रौतसूत्रेऽपि आगूर्णेश्च मतपार्थवानि उद्धिष्यानि ८.१.२०, १० १ १०; १५ ७ १७ ।

एव मिदानीन्तनाना मेकदिनानुष्ठानरूपां निन्दाम्, पुरातनानां दिनद्वयानुष्ठानरूपां स्तुतिं च प्रदर्श्य, उदिते होमं प्रातःकाले विधत्ते — "तस्मादुदिते होतव्यम्"–इति ॥

प्रकारान्तरेणोदितहोमं प्रशंसति— "चतुर्विंशे ह वै संवत्सरे ऽनुदितहोमी गायत्रीलोक माप्नोति ; द्वादश उदितहोमी ; स यदा द्वौ संवत्सरावनुदिते जुहोत्यथ हास्यैको हुतो भवत्यथ य उदिते जुहोति, संवत्सरेणैव संवत्सर माप्नोति, य एवं विद्वानुदिते जुहोति ; तस्मादुदिते होतव्यम्"–इति। यः पुरुषो ऽनभिज्ञः इदानीन्तनोऽनुदितहोमी, स पुरुषचतुर्विंशतिसङ्ख्यापूरके संवत्सरे गायत्रीदेवताया लोक माप्नोति ; तावद्भिः संवत्सरैः गायत्र्यक्षरसङ्ख्यानिष्पत्तेः। उदितहोमी तु द्वादशसङ्ख्यापूरक एव संवत्सरे तं गायत्रीलोकं माप्नोति ; तावतैवोक्तसङ्ख्यानिष्पत्तेः। कथ मेतदिति, तदुच्यते— 'सः' अनुदितहोमी यदा द्वौ संवत्सरौ अनुदिते सूर्य्ये प्रातर्जुहोति, 'अथ' तदानीं तस्यानुदितहोमिन एक एव संवत्सरो हुतो भवति ;' अस्तमयादूर्ध्वं पुनरुदयात् पूर्वं च कालैक्येन होमद्वयनिष्पत्त्यभावात्। अथ तद्वैलक्षण्येन 'यः' शास्त्राभिज्ञः उदयादूर्ध्वं प्रातर्जुहोति, तस्य कालद्वयानुष्ठानविशेषैः संवत्सरद्वयम् इतरेणानुष्ठितं फल मेकेनैव संवत्सरेणास्य सिध्यति। तस्माद् द्वादशे संवत्सरे द्विगुणसङ्ख्यया गायत्रीलोकप्राप्तिरुपपद्यते। "संवत्सरेण"–इत्यादिकं वाक्यं विद्वत्प्रशंसार्थम् पुनरप्यावर्त्तनीयम् ;—यो विद्वान् जुहोति, स कालद्वयानुष्ठानात् संवत्सरमात्रेण संवत्सरद्वयफलं लभते। तस्मादुदिते सूर्य्ये सति पश्चादेव होतव्यम् ॥

पुनरपि प्रकारान्तरेणोदितहोमं प्रशंसति— "एष ह वा

अहोरात्रयोस्तेजसि जुहोति, योऽस्तमिते सायं जुहोत्युदिते प्रातरग्निना वै तेजसा रात्रिस्तेजस्वत्यादित्येन तेजसाहस्तेजस्वत्"–इति। 'यः' सायम्प्रातर्होमी कालभेदेन जुहोति, 'एषः' पुमान् अहोरात्रयोः सम्बन्धिनि विविधे तेजसि जुहोति। कथ मेतदिति, तदुच्यते—येयं रात्रिः, सेय मग्निनैव तेजसा युक्ता सती तेजस्विनी भवति। यदिद महस्तदेतदादित्येन तेजसा तेजस्वद् भवति। तस्मात् सायं प्रातः कालद्वये शुद्धतेजोद्वये होमसिद्धिः॥

: वेदनपूर्वक मनुष्ठानं होमं प्रशंसति—"अहोरात्रयोर्हास्य तेजसि हुतं भवति य एवं विद्वानुदिते जुहोति"–इति॥

उपपादित मर्थं निगमयति—"तस्मादुदिते होतव्यम्"–इति *॥ ४॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां पञ्चमाध्याये
( पञ्चविंशाध्याये ) चतुर्थः खण्डः ॥ ४ (२८) ॥

---

॥ अथ पञ्चमः खण्डः ॥

एते ह वै संवत्सरस्य चक्रे यदहोरात्रे ताभ्या मेव तत्संवत्सर मेति स यो ऽनुदिते जुहोति यथैक-

* "अग्नये साय हूयते, सूर्याय प्रातः। आग्नेयी वै रात्रि, ऐन्द्र महः। यदनुदिते सूर्ये प्रातर्जुहुयात्, उभय मेवाग्नेय स्यात्। उदिते सूर्ये प्रातर्जुहोति"–इत्यादि चैतत् ब्राह्मणम् त० ब्रा० २ १ २ द्र०।

तस्मक्रेण यायात्तादृक्तद्य य उदिते जुहोति यथो-भयतश्चक्रेण यान् चिप्र मध्वानं समश्नुवीत तादृक्त-त्तदेषाभियज्ञगाथा गीयते वृहद्रथन्तराभ्या मिद मेति युक्तं यद्भूतं भविष्यच्चापि सर्वं ताभ्या मियादग्नीनाधाय धीरो दिवैवान्यज्जुहुयान्नक्त मन्य दिति रायन्तरी वै रात्रार्वाहितं मग्निर्वै रथन्तर मादित्यो वृहदेते ह वा एन देवते ब्रध्नस्य विष्टपं स्वर्गं लोकं गमयतो य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यं तदेषाभियज्ञगाथा गीयते यथा ह वास्यूरिथैकेन यायादकृत्वान्यदुपयोजनाय एवं यन्ति ते वहवो जनासः पुरोदयाज्जुह्वति ये ऽग्निहोत्र मिति तां वा एतां देवतां भयतीं सर्व मिद मनु प्रैति यदिदं किंचेतस्यै होदं देवताया अनुचरं सर्वं यदिदं किञ्च सैषानुचरवती देवता विन्दते ह वा अनुचरम् भवत्यस्यानुचरो य एवं वेद स वा एष एकातिथिः स एष जुह्वत्सु वसति तद्यददो गाथा भवत्यनेनस मेनसा सो ऽभिशस्तादेनस्वतो वापहरादेनः एकातिथि मप सायं रुणद्धि विसानिस्तेनो अपसो जहारेत्येष ह वै स एकातिथिः स एष जुह्वत्सु वसत्येतां वाव स देवता मप-

वृणक्ति यो ऽलमग्निहोत्राय सन्नाग्निहोत्रं जुहोति तमेषा देवतापवृज्यापवृणक्त्यस्माच्च लोकादमुष्माच्चोभाभ्यां यो ऽलमग्निहोत्राय सन्नाग्निहोत्रं जुहोति तस्माद्यो ऽलमग्निहोत्राय स्याज्जुहुयात्तदाहुर्न सायमतिथिरपरुध्य इत्येतद्ध स्म वै तद्विद्वान् नगरी जानश्रुतेय उदितहोमिनमैकादशाक्षं मानुतन्तव्यमुवाच प्रजायामेनं विज्ञातास्मो यदि विद्वान्वा जुहोत्यविद्वान्वेति तस्यो हैकादशाक्षे राष्ट्रमिव प्रजा बभूव राष्ट्रमिव ह वा अस्य प्रजा भवति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यम् ॥ ५ (३०) ॥

दृष्टान्तपूर्वक मुदितहोमं पुनः प्रशंसति— "एते ह वै संवत्सरस्य चक्रे यदहोरात्रे, ताभ्या मेव तत् संवत्सर मेति ; स यो ऽनुदिते जुहोति, यथैकतश्चक्रेण यायात्तादृक्तदथ य उदिते जुहोति, यथोभयतश्चक्रेण यान् क्षिप्र मध्वानं समश्नुवीत तादृक्तत्"—इति । ये एव अहोरात्रे विद्येते, एते एव रथस्थानीयस्य संवत्सरस्य चक्रस्थानीये ; एवं सति स पुरुषो लौकिकस्ताभ्या मेवाहोरात्रचक्राभ्यां संवत्सररथं प्राप्नोति । एवं अहोरात्रयोः संवत्सरप्राप्तिसाधनत्वे स्थिते सति, यः पुमानुदयात्प्रागेव प्रातर्जुहोति, तस्य दृष्टान्तो ऽभिधीयते— यथा लोके रथस्य 'एकतः' एकस्मिन्नेव पार्श्वे स्थितेन चक्रेण 'यायात्' मार्गं गच्छेत्, तादृक् 'तत्'

अनुष्ठानं स्यात् । एक चक्रं यथा गमनक्षमं न भवति, तथैवानुदितहोम ; एककालमात्रवर्त्तित्वादित्यर्थः । अथोक्तवैलक्षण्येन य पुमानुदिते जुहोति, तस्य दृष्टान्तो ऽभिधीयते— यथा पार्श्वद्वयचक्रयुक्तेन रथेन 'यान्' गच्छन् पुरुष 'क्षिप्रं' शीघ्रं मार्गं प्राप्नोति, तादृक् 'तत्' कालद्वयानुष्ठानमविघ्नेन फलप्रद मित्यर्थः ॥

उक्तार्थदार्ढ्याय गाथा मुदाहरति— "तदेषाभियज्ञगाथा गीयते"–इति । 'तत्' तस्मिन् कालद्वयहोमविषये काचियज्ञप्रतिपादिका गाथा सर्वैरभितो गीयते । सुभाषितत्वेन सर्वैर्गेयमाना 'गाथा' ॥

ता गाथा मुदाहरति— "बृहद्रथन्तराभ्या मिद मेति युक्तं, यद्भूत भविष्यच्चापि सर्वम् ; ताभ्या मियादग्नीनाधाय धीरो दिवैवान्यज्जुहुयान्नक्त मन्यदिति"–इति । 'यद्भूतं' जगदस्ति, यच्च भविष्यत्, इदं सर्व मपि बृहद्रथन्तराभ्या सामभ्यां युक्तं सत् 'एति' प्रवर्त्तते । तस्माद् 'धीरः' बुद्धिमानग्नीनाधाय पश्चात् 'ताभ्या' बृहद्रथन्तराभ्या पृष्ठस्तोत्रनिष्पादकाभ्याम् 'इयात्' सोमयाग मनुतिष्ठेत् । प्रतिदिनं च दिवैव 'अन्यत्' सूर्यदेवताक मग्निहोत्रं जुहुयात्, 'नक्तं' रात्रौ 'अन्यत्' अग्निदेवताक मग्निहोत्रं जुहुयात् । 'इति'-शब्दो गाथासमाप्त्यर्थः ॥

दिवाहोमं रात्रिहोम च बृहद्रथन्तरसम्बन्धेन प्रशंसन्नुदितहोमं निगमयति— "राथन्तरी वै रात्रिर्वार्हत मग्निर्वै रथन्तर मादित्यो बृहदेते ह वा एन देवते ब्रध्नस्य विष्टपं स्वर्गे लोकं गमयतो य एवं विद्वानुदिते जुहोति ; तस्मादुदिते होतव्यम्"–इति । सर्वस्य जगतो बृहद्रथन्तराधीनत्वादहोरात्रयोरपि तत्सम्बन्धोऽस्ति । तत्र रात्री रथन्तरसामसम्बन्धिनी ; अहस्तु बृहत्सामसम्बन्धि ।

तयोः कालयोरभिमानिन्यौ ये उभे 'देवते' अग्न्यादित्यरूपे, तयोः रथन्तरबृहद्रूपत्वं, तन्नामाभिमानित्वादवगन्तव्यम् । एवं सति 'यः' पुमान् शास्त्ररहस्यं विद्वान् सायं मग्निहोत्रं हुत्वा पश्चात्प्रातरुदिते जुहोति, एव मुदितहोमिनं बृहद्रथन्तराभिमानिन्यौ देवते 'ब्रध्नस्य' आदित्यस्य 'विष्टपं' स्थानं स्वर्गं लोकं प्रापयतः । तस्मात् कारणात् प्रातरुदिते होतव्यम् ॥

उदितहोमं प्रशस्यानुदितहोमं निन्दितुं गाथा मुदाहरति—"तदेषाभियज्ञगाथा गीयते"–इति । 'तत्' तस्मिन्ननुदितहोमनिन्दारूपेऽर्थे 'एषा' वक्ष्यमाणा गाथा याज्ञिकैः सर्वैः गीयमाना, सुभाषितरूपा अभितः सर्वतो 'गीयते' वक्ष्यते ॥

तां गाथा मुदाहरति—"यथाह वाश्वूरिर्यैकेन यायादकृत्वान्यदुपयोजनाय, एवं यन्ति ते बहवो जनासः, पुरोदयाज्जुह्वति येऽग्निहोत्र मिति"–इति । 'अश्वूरि'-नामाश्वो रथवाजी। यथा लोके कश्चिन्मन्दबुद्धिः 'उपयोजनाय' रथे योजयितुम्, 'अन्यदकृत्वा' अश्वान्तर मसम्पाद्य एकेनैव 'अश्वूरिणा' अश्वेन रथयुक्तेन 'यायात्' मार्गं गच्छेत्, एव मेव 'ये' शास्त्ररहस्यानभिज्ञाः सूर्योदयात् पुरा अग्निहोत्रं जुह्वति, ते बहवो 'जनासः' पुरुषाः 'यन्ति' गच्छन्ति। एकाश्वयुक्तो रथो यथा मार्गपारं नेतुमसमर्थः, एवं रात्रिरूपे एकस्मिन्नेव काले हुत मग्निहोत्रं फलप्रदं न भवतीत्यर्थः । 'इति'-शब्दो गाथासमाप्त्यर्थः ॥

उदितहोमोत्कर्षार्थं मादित्यदेवतां प्रशंसति—"तां वा एतां देवतां प्रयतीं सर्वं मिद मनु प्रैति यदिदं किञ्चैतस्यै ह्येदं देवताया अनुचरं सर्वं यदिदं किञ्च, सैषानुचरवती देवता"–इति । यत् किञ्चिदिदं स्थावरं जङ्गमरूपं जगदस्ति, तदिदं सर्वम्, 'ता

नेताम्' आदित्यदेवतां 'प्रयतीम्' उदयास्तमयौ गच्छन्तीम् 'अनु' पश्चात् 'प्रैति' प्रवर्त्तते। तथा च शाखान्तरे श्रूयते— "योऽसौ तपन्नुदेति, स सर्वेषां भूतानां प्राणानादायोदेति ; असौ योऽस्त मेति, स सर्वेषां भूतानां प्राणानादायास्त मेति"–इति। सूर्योदय मनु सर्वेषा मिन्द्रियोदयाद्दिवा सर्वे चेष्टन्ते, सूर्यास्तमय मनु सर्वेषा मिन्द्रियाणा मस्तमयाद्रात्रौ सर्वे निद्रां कुर्वन्ति। अनेन प्रकारेण, यत् किञ्चिज्जगदस्ति, तत् सर्वं मेतस्या आदित्य-देवतायाः 'अनुचरम्' भृत्यस्थानीयम्। अतः 'सैषा' आदित्यदेवता 'अनुचरवती' बहुभृत्योपेता ॥

वेदनं प्रशंसति— "विन्दते ह वा अनुचरमवत्यस्यानुचरो य एवं वेद"–इति। वेदिता स्वयं धनिको भूत्वा जीवितप्रदानेन अनुचरं लभते। अतोऽस्य सर्वदा 'अनुचरः' भृत्यवर्गो भवत्येव ॥

प्रकारान्तरेणादित्यदेवतां प्रशंसति— "स वा एष एका-तिथिः, स एष जुह्वत्सु वसति"–इति। 'एषः' आदित्यः स्वयम् 'एकातिथिः' ; यथा लोके कश्चिद्वैदेशिको बन्धुरहितः स्वय मेक एव अतिथिर्भूत्वा गृहेषु गच्छति, एवं 'स एषः' आदित्यो 'जुह्वत्सु' अग्निहोत्रिषु प्रातः समागत्य तिष्ठति ॥

अस्मिन्नर्थे काञ्चिद्गाथा मुदाहरति—"तदप्येषा गाथा भवति" –इति। यदिद मादित्यस्यैकातिथित्वं 'तत्' तस्मिन्नर्थे काचिद् 'गाथा' सर्वैर्गातुं योग्या गीतिर्विद्यते ॥

तां गाथा मुदाहरति— "अनेनश्च मेनसा सोऽभिशस्तादेन-स्वतो वाप हरादेनः, एकातिथि मप सायं रुणद्धि, बिसानि स्तेनो अप सो जहारेति"–इति। पुरा कदाचित् सप्तर्षीणां संवादप्रसङ्गे कश्चित्पुरुषो बिसस्तैन्यलक्षण मपवादं प्राप्य तत्परिहारार्थं मृषीणा

मग्रे शपथं चकार, तदीयशपथोक्तिरूपेयं गाथा। 'बिसानि' पद्म-मूलानि तेषां मपहर्त्ता, प्रत्यवायपरम्परां प्राप्नोतु ;— पापरहिते पुरुषे विपरीत्य मपवादं कृतवतो यः प्रत्यवायः, पापिनः पुरुषस्य सम्बन्धि पापं स्वीकुर्वतो यः प्रत्यवायः, सायङ्काले गृहे समागच्छत एकातिथेर्वैदेशिकस्यापरोधने यः प्रत्यवायः; सेयं प्रत्यवायपरम्परा बिसस्तैन्ये सति मम भूयादित्येवं शपथः। अक्षरार्थस्तु प्रसिद्धः *, —माद्यः पुरुषः 'स्तेनः' चोरो भूत्वा बिसान्यपजहार चेत्, 'सः' पुमान्, 'अनेनसम्' पापरहितं पुरुषं श्रोत्रियम् 'एनसा अभिशस्तात्' पापेनाभिशंसन मपवादं कुर्य्यात्। तथैव 'सः' बिसापहारी 'एनस्वतः' पापयुक्तस्य यत् 'एनः' पाप मस्ति, तत् 'अपहरात्' स्वीकुर्य्यात्। तथा स बिसापहारी सायङ्काले गृहे समागत मेकातिथिम् 'अपरुणद्धि' भोजन मदत्त्वा निःसारयेत ; यद्वा अग्निहोत्रार्थं सायं समागतम् 'एकातिथिं' देवम् 'अपरुणद्धि' होमराहित्येन निराकुर्यात्। 'इति'-शब्दो गाथासमाप्त्यर्थः ॥

अस्या गाथाया मेकातिथि मप सायं रुणद्धीत्यस्य भागस्य मक्षतोपयुक्तत्वात् तस्य तात्पर्यं दर्शयति—"एष ह वै स एकातिथिः, स एष जुह्वत्सु वसत्येतां वाव स देवता मप रुणद्धि, यो ऽलं मग्निहोत्राय सन्नाग्निहोत्रं जुहोति ; त मेषा देवतापरुद्धापरुणद्धास्माच्च लोकादमुष्माच्चोभाभ्यां यो ऽलं मग्निहोत्राय सन्नाग्निहोत्रेण जुहोति"—इति। 'एषः' दृश्यमान आदित्य एव गाथायां युक्त 'एकातिथिः'। 'स एष' देवः प्रातः काले समागत्य 'जुह्वत्सु' अग्निहोत्रिषु तिष्ठति। एवं सति 'यः' पुमान् अग्निहोत्राय 'अलं' समर्थः सन्नग्निहोत्रं न जुहोति, 'सः' पुमान् 'एताम्'

* "प्रसिद्ध"—इति ख, ङ।

अग्निहोत्रहोमार्थं मागतां देवताम् 'अपरुणद्धि' निराकरोति । 'एषा' च देवता तेनापरुद्धा सती 'तं' नास्तिकं भूलोकस्वर्गलोकाभ्या मुभाभ्याम् 'अपरुणद्धि' निःसारयति । योऽत्र मित्यादेः पुनरुक्तिरुपसंहारार्था ;— यो न जुहोति, तस्यायं देवताद्रोह. ॥

विपक्षे बाधक मुक्ता स्वपक्षं दर्शयति—"तस्माद्यो ऽल मग्निहोत्राय स्याज्जुहुयात्"-इति । अग्निहोत्राय 'अलम्' आहिताग्नित्वेन समर्थो भवेत्, सोऽवश्यं जुहुयात् ॥

अग्निहोत्रस्यावश्यकाले दृष्टान्तरूपविवक्षायां आप्तं शास्त्रार्थं दर्शयति—"तस्मादाहुर्न साय मतिथिरपरुध्य इति"-इति । यस्माद्देवस्य मनुष्यस्य च अतिथेरपरोधे प्रत्यवायोऽस्ति, तस्माच्छास्त्रज्ञा एव माहुः ;—साय काले समागतो ऽतिथिः 'नापरुध्यः' न निराकरणीय इति । अतो लौकिकातिथिवत् देवतातिथये होतव्य मित्यर्थः ॥

अग्निहोत्रस्यावश्यकर्त्तव्यता मुक्ता पुनरपि प्रकारान्तरेणोदितहोमं प्रशंसति—"एतद्ध स्म वै तद्विद्वान्नगरी जानश्रुतेय उदितहोमिन मैकादशाक्षं मानुतन्तव्य मुवाच,— प्रजाया मेनं विज्ञाता स्मो यदि विद्वान्वा जुहोत्यविद्वान्वेति ; तस्यो हैकादशाक्षे राष्ट्र मिव प्रजा बभूव ; राष्ट्र मिव ह वा अस्य प्रजा भवति य एवं विद्वानुदिते जुहोति ; तस्मादुदिते होतव्यम्"-इति । जनश्रुताख्यस्य कस्यचिन्महर्षेः पुत्रो 'जानश्रुतेयः' * । स च राजपुरोहितत्वात् नित्यं नगरे वसतीति 'नगरी' । स महर्षिः तदेतदुदितमाहात्म्यं विद्वान् राजपुत्रं कञ्चित् 'उदितहोमिनम्' उद्दिश्य स्वमनस्येव

* "उपाविर्जानश्रुतेय."-इति १ मा० १२१ पृ० ८ प० । "जानश्रुतिर्ह पौत्रायणः"-इति छा० उप० ४ । १ । १ । "औपाविनैव जानश्रुतेयेन"-इति शत० ब्रा० ५ । १ । १ । ५ । ७ ।

मुवाच। कीदृश मुदितहोमिनम् ? 'ऐकादशाक्षम्' एकादशाक्ष-नामकस्य राज्ञः पुत्रम्, 'मानुतन्तव्यं' मनुतन्तुनामकस्य राज्ञः पौत्रम् *। त मुद्दिश्य मनसि कि मुवाचेति, तदभिधीयते— अय मैकादशाक्षो राजपुत्रो यदि विद्वान् जुहोति, यदि वा शास्त्रार्थ मविद्वानिति मम संशयो जायते। तथा सति 'प्रजायाम्' एतदीय-पुत्रपौत्रादिसन्ततौ पर्यालोच्य 'एनम्' ऐकादशाक्षं 'विज्ञाता स्मः' विशेषेण ज्ञास्यामः। यदि प्रजा वर्द्धते, तदानीं मयं विद्वान्, अन्यथात्वविद्वानिति। एवं निश्चित्य, यदा तदीयां प्रजा मपश्यत्, तदानीं तस्यापि राजपुत्रस्य 'प्रजा' पुत्रपौत्रादिरूपा 'राष्ट्र मिव बभूव' यथा राष्ट्रं बहुजनाकीर्णं तद्वदिति समृद्धा प्रजासीत्। ऐकादशाक्षस्यापत्य मैकादशाक्षिरिकारान्तः शब्दस्तस्य षष्ठीयम् 'ऐकादशाक्षेः'-इति। 'यः' पुमानेवं विद्वान् प्रातरुदिते जुहोति, अस्य राष्ट्र मिव बहुला प्रजा भवति†। तस्मादुदिते होतव्य मिति ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां पञ्चमाध्याये
( पञ्चविंशाध्याये ) पञ्चमः खण्डः ॥ ५ ( ३० ) ॥

---

* "इति ह [illegible] मानुतन्तव्यो"–इति शत० ब्रा० [illegible]। "[illegible]"–इति [illegible] १२.१४.१।

† [illegible] ब्रा० ३.१.४.१८-२०।

॥ अथ षष्ठः खण्डः ॥

उद्यन्नु खलु वा आदित्य आहवनीयेन रश्मीन्त्सन्दधाति स यो ऽनुदिते जुहोति यथा कुमाराय वा वत्साय वा ऽजाताय स्तनं प्रतिदध्यात्तादृक्तद्‌थ य उदिते जुहोति यथा कुमाराय वा वत्साय वा जाताय स्तनं प्रतिदध्यात्तादृक्तत् त मस्मै प्रतिधीयमान मुभयोर्लोकयोरन्नाद्य मनु प्रतिधीयते ऽस्माच्च * लोकादमुष्माच्चोभाभ्यां स यो ऽनुदिते जुहोति यथा पुरुषाय वा हस्तिने वा ऽप्रयते हस्त आदध्यात्तादृक्तद्‌थ य उदिते जुहोति यथा पुरुषाय वा हस्तिने वा प्रयते हस्त आदध्यात्तादृक्तत्त मेष एतेनैव हस्तेनोर्द्ध्वं हृत्वा स्वर्गे लोक आदधाति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यं मुद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि प्रणयति तस्मादेनं प्राण इत्याचक्षते प्राणे हास्य सम्यक् हुतं भवति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यं मेष ह वै सत्यं वदन्त्सत्ये जुहोति यो ऽस्तमिते सायं जुहोत्युदिते प्रातर्भूर्भुवः स्वरो मग्नि † ज्योतिर्ज्योतिरग्निरिति सायं जुहोति भूर्भुवः स्वरों ‡ सूर्यो ज्योति-

* "ऽस्माच" क। † "स्वरो मिति मग्नि" क, "स्वरोऽमग्नि" ख। ‡ "स्वरोँ" ख।

ज्योतिः सूर्य इति प्रातः सत्यं हास्य वदतः सत्ये हुतं भवति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यं तदेषाभियज्ञगाथा गीयते प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति ये ऽग्निहोत्रं दिवाकीर्त्य मदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषा मिति ॥ ६ (३१) ॥

प्रकारान्तरेणानुदितहोमनिन्दा मुदितहोमप्रशंसां चाह— "उद्यन्तु खलु वा आदित्य आहवनीयेन रश्मीन्त्सन्दधाति; स यो ऽनुदिते जुहोति,— यथा कुमाराय वा वत्साय वा ऽजाताय स्तनं प्रति दध्यात्तादृक्तदथ य उदिते जुहोति,— यथा कुमाराय वा वत्साय वा जाताय स्तनं प्रति दध्यात्तादृक्तत्; त स्मै प्रतिधीयमान मुभयोर्लोकयोरन्नाद्य मनु प्रतिधीयते ऽस्माच्च लोकादमुष्माच्चोभाभ्याम्"–इति। आदित्यः स्वय मुद्यन्नेव हव्यार्थी सन्नाहवनीयेन सह स्वकीयान् रश्मीन् 'सन्दधाति' संयोजयति। एवं सति 'यः' पुमान् सूर्योदयात् पूर्वं जुहोति, स मूढ इति शेषः। तत्र दृष्टान्तः— यथा लोके कश्चित् 'अजाताय' अनुत्पन्नाय 'स्तनं प्रति दध्यात्' पातुं समर्पयेत्, तादृगेव तद् द्रष्टव्यम्। अथ तद्वैलक्षण्येन 'यः' पुमानुदयादूर्ध्वं जुहोति, स विवेकी। तत्रायं दृष्टान्तः— उत्पन्नाय स्तनप्रदानं यादृशं भवति, तादृगेव तदिति। एवं सति 'अस्मै' सूर्याय प्रति धीयमानं हविः समर्पयेत्। 'तम्' अग्निहोत्रिण मनु लोकद्वयेऽप्यन्नाद्यं सम्पद्यते। लोकयोरित्यस्यैव व्याख्यानम् "अस्माच्च"–इत्यादि; सप्तम्यर्थे पञ्चमी। अस्मिन्नमुष्मिंश्चोभयोर्लोकयोरित्यर्थः॥

पुनरप्यन्येन दृष्टान्तेनानुदितहोमनिन्दां मुदितहोमप्रशंसां च दर्शयति—"स यो ऽनुदिते जुहोति, यथा पुरुषाय वा हस्तिने वा ऽप्रयते हस्त आदध्यात्तादृक्तद्य य उदिते जुहोति, यथा पुरुषाय वा हस्तिने वा प्रयते हस्त आदध्यात्तादृक्तत्; त मेव एतनैव हस्तेनोर्ध्वं हृत्वा स्वर्गे लोक आदधाति, य एवं विद्वानुदित जुहोति ; तस्मादुदिते होतव्यम्"–इति । 'यः' अनुदितहोमी, स मूढः । यथा लोके पुरुषस्य हस्तिनो वा ग्रासार्थम् 'अप्रयते' अप्रसारितहस्ते ग्रासं प्रक्षिपेत्, तादृगेव तत् । उदितहोमन्तु प्रसारितहस्ते ग्रासप्रक्षेपसमानं 'यः' पुमान् विदित्वोदितहोमी स्यात्, 'तं' पुमांसम् 'एष' आदित्यः 'एतेनैव' हविःस्वीकारार्थं प्रसारितेन हस्तेनैवोर्ध्वं 'हृत्वा' नीत्वा स्वर्गे लोके स्थापयति । तस्मादुदयादूर्ध्वं होतव्यम् ॥

प्रकारान्तरेणोदितहोमं प्रशंसति—"उद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि प्रणयति, तस्मादेनं प्राण इत्याचक्षते ; प्राणे हास्य सम्प्रति हुतं भवति य एवं विद्वानुदिते जुहोति ; तस्मादुदिते होतव्यम्"–इति । आदित्यः स्वय मुद्यन्नेव सर्वाणि प्राणिनः 'प्रणयति' चेष्टयति ; तस्मात्प्रणयतीतिव्युत्पत्त्यादित्यस्य प्राण इति नाम । एवं सत्युदितहोमी योऽस्ति, तस्य प्राणरूपे आदित्ये 'सम्प्रति' सम्यग्द्रव्यं हुतं भवति । तस्मादुदयादूर्ध्वं होतव्यम् ॥

पुनरपि युक्त्यन्तरेण उदितहोमं प्रशंसति—"एष ह वै सत्य मदन्सत्ये जुहोति, यो ऽस्तमिते सायं जुहोत्युदिते प्रातर् ; भूर्भुवः स्वरो मग्निर्ज्योतिर्ज्योतिरग्निरिति सायं जुहोति, भूर्भुवः स्वरों सूर्यो ज्योतिर्ज्योतिः सूर्य इति प्रातः ; सत्यं हास्य वदतः सत्ये हुत भवति य एवं विद्वानुदिते जुहोति ; तस्मादुदिते होत-

व्यम्"–इति। सायङ्कालीन मग्निहोत्र मस्तमयादूर्ध्वं, प्रातःकालीनं च सूर्योदयादूर्ध्वं जुहोति, 'एषः' पुमान्वाचा 'सत्यं' यथार्थवादिन मेव मन्त्रं ब्रुवन् 'सत्ये' परमार्थे देवे जुहोति। कथ मिति, तदुच्यते— "भूर्भुवः स्वः"–इत्यादिकः सायङ्कालीनो मन्त्रः। तस्याय मर्थः – भूरादयस्त्रयो लोकाः मदीयहोमम् 'ॐ' मङ्गीकुर्वन्तु; यः 'अग्निः' देवः, स एव 'ज्योतिः' दीपादिरूपः प्रकाशः; यच्च 'ज्योतिः' दीपादिरूपः प्रकाशः, स एव 'अग्निः' देवः; तस्मै देवाय स्वाहुत मिद मस्तु इति। एवं प्रातःकालीनमन्त्रेऽपि द्रष्टव्यम्। भूरादयो लोका मदीयं होमं स्वीकुर्वन्तु; यः 'सूर्यः' देवः, स एव 'ज्योतिः' दिवसगतं प्रभारूपम्; यच्चेदं प्रभारूपं 'ज्योतिः' स एव 'सूर्यः' देवः; तस्मै स्वाहुत मिद मस्तु। तत्र यो विद्वानेवं जुहोति, तस्य सायङ्कालीनं ज्योतिरग्निः, प्रातःकालीनं ज्योतिः सूर्यः, इत्येवं 'सत्यं' परमार्थं 'वदतः' पुरुषस्य 'सत्ये' परमार्थरूपे ऽग्नौ सूर्ये च हुतं भवति। तस्मात्प्रातरुदयादूर्ध्वं होतव्यम् * ॥

उदितहोमं प्रशस्यानुदितहोमं निन्दितुं गाथा मुदाहरति— "तदेषाभियज्ञगाथा गीयते"–इति ॥

तां गाथा माह— "प्रातः-प्रातरनृतं ते वदन्ति, पुरोदयाज्जुह्वति ये ऽग्निहोत्रं; दिवाकीर्त्य मदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषा मिति"–इति। 'ये' अग्निहोत्रिणः उदयात् पूर्वं मग्निहोत्रं जुह्वति, 'ते' पुरुषाः 'दिवाकीर्त्यम्' अहनि कीर्त-

* य० वा० सं० ३. ९—११ अग्निहोत्रहोममन्त्राः; तत्रायामिमौ। "प्रदीप्त अभि जुहोत्यग्निर्ज्योतिरिति"–इति कात्या० श्रौ० ४.१२.१४। तै० ब्रा० २.१.९ अनु० होममन्त्रौ, तयोरनूक्तं मेव (२ अनु०) तयोर्व्याख्यानानि द्रष्टव्यानि।

नीयं सूर्यम् 'अदिवा' रात्रौ कीर्त्तयन्तः 'प्रातःप्रातः' प्रतिदिनं प्रातःकाले 'अनृतम्' असत्यं वदन्ति। कथ मसत्यत्व मिति, तदुच्यते—"सूर्यो ज्योति"-इति हि मन्त्रपाठः, 'तदा' उदयात्पुरा 'एषाम्' अग्निहोत्रिणां सूर्यरूपं ज्योतिर्नास्ति; तस्मादसत्यवादिनः *। 'इति'-शब्दो गाथासमाप्त्यर्थः ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायाः पञ्चमाध्याये
(पञ्चविंशाध्याये) षष्ठः खण्डः ॥ ६ (३१) ॥

---

॥ अथ सप्तमः खण्डः ॥

प्रजापतिरकामयत प्र जायेय भूयान्त्स्या मिति स तपो ऽतप्यत स तपस्तप्त्वेमांल्लो†कानसृजत पृथिवी मन्तरिक्षं दिवं तांल्लोकानभ्यतपत्तेभ्यो ऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्ताग्निरेव पृथिव्या अजायत वायुरन्तरिक्षादादित्यो दिवस्तानि ज्योतींष्यभ्यतपत्तेभ्यो ऽभितप्तेभ्यस्त्रयो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्

---

* "यदनुदिते सूर्ये प्रातर्जुहुयात्, उभय मेवास्येयं स्यात्"—इति तै॰ ब्रा॰ २ । १ । २ ०। अत एवानुदितहोमिनां मन्त्रवादित्व बोध्यम्। १८० पृ॰ २ पं॰ अपीह द्र॰।

† "॰माल्लो॰" ग, ट, '॰मांल्लो॰" घ। एव मिहोत्तरत्रापि गत्योः पाठौ।

तान्वेदानभ्यतपंस्तेभ्यो ऽभितप्तेभ्यस्त्रीणि शुक्राण्य-जायन्त भूरित्येव ऋग्वेदादजायत भुव इति यजु-र्वेदात् स्वरिति सामवेदात् तानि शुक्राण्यभ्यतपंस्ते-भ्यो ऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरत्तदेतदो३मिति तस्मादो मो मिति प्रणौत्यो मिति वै स्वर्गो लोक ओ मित्यसौ यो ऽसौ तपति स प्रजापतिर्यज्ञ मतनुत त माहरत्तेनायजत स ऋचैव हौत्र मकरोद्यजुषा-ध्वर्यवं साम्नोद्गीथं यदेतत् त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्व मकरोत् स प्रजापतिर्यज्ञं देवेभ्यः सम्प्राय-च्छत्ते देवा यज्ञ मतन्वत त माहरन्त तेनायजन्त त ऋचैव हौत्र मकुर्वन्यजुषाध्वर्यवं साम्नोद्गीथं यदेवै-तत् त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्व मकुर्वंस्ते देवा अब्रुवन् प्रजापतिं यदि नो यज्ञ ऋक्त आर्तिः स्याद्यदि यजुष्टो यदि सामतो यद्यविज्ञाता सर्व-व्यापद्वा का प्रायश्चित्तिरिति स प्रजापतिरब्रवी-द्देवान् यदि वो यज्ञ ऋक्त आर्तिर्भवति भूरिति गार्हपत्ये जुहवाथ यदि यजुष्टो भुव इत्याग्नीध्रीये ऽन्वाहार्यपचने वा हविर्यज्ञेषु यदि सामतः स्वरि-त्याहवनीये यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः

स्वरिति सर्वा अनुद्रुत्याहवनीय एव जुहवाथैत्ये-तानि ह वै वेदाना मन्तःश्लेषणानि यदेता व्याहृत-यस्तद्यथात्मनात्मानं सन्दध्याद्यथा पर्वणा पर्व यथा श्लेष्मणा चर्मण्यं वान्यद्वा विश्लिष्टं संश्लेषयेदेव मेवै-ताभिर्यज्ञस्य विलिष्टं * सन्दधाति सैषा सर्वप्राय-श्चित्तिर्यदेता व्याहृतयस्तस्मादेषैव यज्ञे प्रायश्चित्तिः कर्त्तव्या ॥ ७ (३२) ॥

अथाग्निहोत्रमन्त्रप्रसङ्गाद् बुद्धिस्थस्य सर्वप्रायश्चित्तसम्पादकस्य व्याहृतित्रयस्य सृष्टिं वक्तु मुपक्रमते— "प्रजापतिरकामयत प्रजायेय भूयान्स्या मिति ; स तपो ऽतप्यत ; स तपस्तप्त्वेमां-ल्लोकानसृजत,— पृथिवी मन्तरिक्षं दिवं ; तांल्लोकानभ्यतपत् ; तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्ताग्निरेव पृथिव्या अजायत, वायुरन्तरिक्षादादित्यो दिवस्तानि ज्योतींष्यभ्यतपत् तेभ्योऽभित-प्तेभ्यस्त्रयो वेदा अजायन्त,— ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायोः; सामवेद आदित्यात् ; तान्वेदानभ्यतपत् तेभ्योऽभितप्तेभ्य-स्त्रीणि शुक्राण्यजायन्त,— भूरित्येव ऋग्वेदादजायत, भुव इति यजुर्वेदात्, स्वरिति सामवेदात्"—इति । पुरा प्रजापतिरेको भूत्वा प्रजोत्पादनेन 'बहुविधः स्या मिति कामयित्वा तत्सिद्ध्यर्थं 'तपः' पर्यालोचनम् 'अकरोत्' इदं वस्त्वीदृश मिति पर्यालोचन-रूपं तपः कृत्वा, पर्यालोचितप्रकारेणोत्पाद्यता मिति सङ्कल्प,

---

* "विश्लिष्ट" क, ङ, ट ।

तेन सङ्कल्पेन लोकत्रय मसृजत। 'तान्' लोकान् पुनरप्यभितः पर्यालोचितवान्,—कि मेषु लोकेषु सारभूतं सम्पादनीय मिति पर्यालोचनम्। तथा पर्यालोचितेभ्यो लोकेभ्यः प्रजापतिसङ्कल्पानुसारेणाग्निवायुादित्यरूपाणि 'ज्योतींषि' अजायन्त। तत्रापि सारं पर्यालोच्य तेभ्यो ज्योतिर्भ्यो वेदत्रय मुत्पादितवान् *। तेभ्यश्च वेदेभ्यो व्याहृतित्रयरूपाणि 'शुक्राणि' ज्योतींषि पापाख्यतमोनिवारणसमर्थानि अजायन्त॥

एवं व्याहृतित्रयस्योत्पत्ति मुक्त्वा प्रणवस्योत्पत्ति माह—"तानि शुक्राण्यभ्यतपत्; तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति; तानेकधा समभरत्तदेतदो३मिति, तस्मादो मो मिति प्रणौत्यो मिति वै स्वर्गो लोक ओ मित्यसौ यो ऽसौ तपति"–इति। 'तानि शुक्राणि' व्याहृतित्रयरूपाणि ज्योतींषि सारोत्पादनाय पर्यालोचितवान्। 'तेभ्यः' पर्यालोचितेभ्यः प्रजापतिसङ्कल्पाद्वर्णत्रय मजायत। तच्च त्रय मेकधा संयोजितवान्। तदेकीभूतं वर्णत्रय मो मित्येवं सम्पन्नम्। 'तस्मात्' सर्वसारत्वात् होता यः प्रयोगमध्ये ओ मिति प्रणवं करोति [ सर्वप्रयोगसङ्ग्रहार्था वीप्सा ], सोऽय मोकारः स्वर्गप्राप्तिहेतुत्वात् तदात्मकः। तथा यः 'असौ' आदित्यस्तपति असावप्योङ्काररूपः; आदित्यप्राप्तेरप्योङ्कारसाधनत्वात्। ओङ्कारस्य सर्वफलहेतुत्वं कठा आमनन्ति —"एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्"–इति ( उप० १, २, १६. )॥

अथ प्रायश्चित्त विधातु मुपयुक्त मुपाख्यान माह—"स प्रजापतिर्यज्ञ मतनुत; त माहरत्; तेनायजत; स ऋचैव हौत्र

* म० सं १-२१-६०।

मकरोद् *, यजुषाध्वर्यवं †, साम्नोद्गीथं ‡; यदेतत् त्रय्यै विद्यायै शुक्रं, तेन ब्रह्मत्व मकरोत्"—इति। पुरा प्रजापतिः स्वेच्छया यज्ञम् 'अतनुत' विस्तारितवान्। केन प्रकारेणेति, सोऽभिधीयते— 'तं' यज्ञसाधनसमूहम् आहृत्य तेन साधनेन यागं कृतवान्। वेदत्रयगतैर्मन्त्रैः क्रमेण हौत्राध्वर्यवौद्गात्राणि निष्पाद्य, ततः 'त्रय्यै विद्यायै' वेदत्रयरूपायां विद्यायां यदेतत् 'शुक्रं' सारं व्याहृति-त्रयादिरूपं, तेन सारेण ब्रह्मत्वं कृतवान् ॥

अथ ब्रह्मयज्ञवद्देवतायज्ञं दर्शयति—"स प्रजापतिर्यज्ञं देवेभ्यः सम्प्रायच्छत्, ते देवा यज्ञ मतन्वत, त माहरन्त, तेनाजयन्त, त ऋचैव हौत्र मकुर्वन् यजुषा ऽऽध्वर्यवं, साम्नोद्गीथं, यदेवैतत् त्रय्यै विद्यायै शुक्रं, तेन ब्रह्मत्व मकुर्वन्"—इति। पूर्ववाक्यवद् व्याख्येयम् ॥

अथ प्रश्नोत्तराभ्यां प्रायश्चित्तं विधत्ते—"ते देवा अब्रुवन् प्रजापतिं,—यदि नो यज्ञ ऋक्त आर्तिः स्याद्यदि यजुष्टो यदि सामतो यद्यविज्ञाता सर्वव्यापद्वा, का प्रायश्चित्तिरिति; स प्रजापतिरब्रवीद्देवान्,—यदि वो यज्ञ ऋक्त आर्तिर्भवति, भूरिति गार्हपत्ये जुहवाथ; यदि यजुष्टो, भुव इत्याग्नीध्रीये ऽन्वाहार्यपचने वा हविर्धानेषु; यदि सामतः, स्वरित्याहवनीये §; यद्य-

---

* एतद्विषयमसूत्रकाण्डेऽपि आश्वलायनसूत्रम्—"यद यो केवलं छान्दोम्यं वा ऽऽध्वर्यवं वा हौत्रानर्थाः समाम्नाता न तान् कुर्यादकारणत्वाद्धौत्रस्य"—इति श्रौ० ८. १२. २२।

† "अध्वर्युमध्यन्तु आख्यान कामकामदेवदक्षिणानां दीक्षोपसत्प्रवर्ग्योद्यानानां मैत्रावरुणं हविषा मुखे वपायवाग्यां हविषा चानुपूर्व्यम्"—इति आश्व० श्रौ० ८. १२. २३।

‡ "छन्दोगमप्यं सोमः सोविष्टः पृष्ठं संस्तुति"—इति आश्व० श्रौ० ८. १२. २४।

§ छान्दोग्येऽप्येवमेव द्रष्टव्यम् ( छान्० ४. १०. २ )।

विज्ञाता, सर्वव्यापद्वा भूर्भुवः स्वरिति सर्वा अनुद्रुत्याहवनीय एव जुहवाथेति"—इति। ते देवाः प्रजापतिं प्रत्येव मपृच्छन्,— 'नः' अस्मदीये यज्ञे यदि कदाचित् 'ऋक्तः' ऋङ्मन्त्रात् 'आर्त्तिः' नाशो भवेत्, तथा यजुर्मन्त्रात्साममन्त्राद्वा कदाचिदार्त्तिः स्यात्, एताः सर्वा आर्त्तयो ऽस्माभिर्विज्ञाताः; यदि कदाचिदविज्ञाता काचिदार्त्तिर्भवेत्, यदि वा सर्वथा यद्वेदत्रयमन्त्रनिमित्ता अस्माभिरज्ञाता च सर्वाप्यार्त्तिर्भवेत्, इदानीं प्रायश्चित्तिर्वक्तव्येति देवप्रश्नः। ऋङ्मन्त्रवैकल्ये गार्हपत्ये भूरिति होमः, यजुर्मन्त्रवैकल्ये चत्वाग्नीध्रीये धिष्णिये भुव इति होमः। सोऽयं सोमयागे द्रष्टव्यः; हविर्यागे आग्नीध्रीयाभावात्। अग्न्याधेय मग्निहोत्रं दर्शपूर्णमासौ वाग्रयणं चातुर्मास्यानि दाक्षायणयज्ञः, कौण्डपायिनामयनं सौत्रामणी वा सप्तमी; त एते हविर्यज्ञाः *। तेष्वाग्नीध्रीयाभावात् 'अन्वाहार्यपचने' दक्षिणाग्नौ † 'जुहवाथ' हे यूयं जुहुत। सामभ्रेषे स्वरित्याहवनीये होमः। यद्यविज्ञातो भ्रेषः, यदि वा वेदत्रयस्त्रेषसमुच्चयः, तत्रोभयत्रापि भूर्भुवः स्वरित्येतास्तिस्रो व्याहृतीः सर्वाः 'अनुद्रुत्य' उच्चार्य आहवनीय एव जुहुत ‡॥

अनेनार्थवादेन प्रायश्चित्तविधि मुन्नीय व्याहृतिप्रशंसापूर्वकं तं विधि मुपसंहरति— "एतानि ह वै वेदाना मन्तःश्लेषणानि यदेता व्याहृतयस्तद्यथात्मनात्मानं सन्दध्याद्यथा पर्वणा पर्व यथा

---

* "अग्न्याधेय मग्निहोत्रं दर्शपूर्णमासौ आग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः"—इति गौत॰ ध॰ सू॰ ८. १९।

† "एतौ दर्शपूर्णमासयोर्दक्षिणा मकल्पयन् यदन्वाहार्यम्"—इति शत॰ ब्रा॰ १.२.३.५। 'अन्वाहरति यज्ञसम्बन्धि दोषजातं परिहरत्यनेनेति अन्वाहार्यो नाम ऋत्विग्भ्यो देय ओदनः'—इति च तत्र सा॰ भा॰। "अन्वाहार्यं दक्षिणाभावधिश्रयति"—इति कात्या॰ श्रौ॰ २.५.२७।

‡ "भूर्भुवः सुवरिति सर्वप्रायश्चित्तानि"—इति तै॰ आ॰ ४.२०-१. सा॰ भा॰।

श्लेषणा चर्मण्यं वान्यद्वा विश्लिष्टं संश्लेषयेदेव मेवैताभिर्यज्ञस्य विलिष्टं सन्दधाति ; सैषा सर्वप्रायश्चित्तिर्यदेता व्याहृतयस्तस्मादेषैव यज्ञे प्रायश्चित्तिः कर्त्तव्या"–इति। या एता व्याहृतयः सन्ति, 'एतानि ह वै' श्रोत्रेव व्याहृतिरूपाणि, वेदानां सम्बन्धीनि 'अन्तःश्लेषणानि' अन्तर्बन्धनसाधनानि। तत्र दृष्टान्तो ऽभिधीयते —यथा लोके 'आत्मनात्मानं सन्दध्यात्' आत्मशब्दः स्वरूपमात्र-वाचित्वात् सर्वद्रव्यपरः ; एकेन द्रव्येण द्रव्यान्तरं सन्धीयते। एतच्च छन्दोगैर्विस्पष्टं माम्नातम्— "तद्यथा लवणेन सुवर्णं सन्दध्यात्, सुवर्णेन रजतं, रजतेन त्रपु, त्रपुणा सीसं, सीसेन लोहं, लोहेन दारु, दारुणा चर्म"–इति ( छा० उप० ४.१७.७. )। चारादिना सुवर्णादीनां सन्धानं सुवर्णकारादिषु प्रसिद्धम्। तदेतदभिप्रेत्या-त्मनात्मानं सन्दध्यादित्युक्तम् *। यथा च हस्तपादादिष्वेकेन पर्वणा पर्वान्तरं संश्लिष्टम्, यथा च श्लेषणा भालन्तरं संश्लिष्टम्, चर्मणा 'चर्मण्यं' पादत्राणादिकम्, 'अन्यद्वा' शकटादिषु किञ्चि-द्विश्लिष्टं मङ्गम्, चर्म अपि रज्वा संश्लेषयेत् ; अनेनैव प्रकारेण 'एताभिः' व्याहृतिभिर्यज्ञस्य विश्लिष्टं मङ्गं संश्लिष्टं भवति। या एता व्याहृतयः, सैषा सर्वस्य वैकल्यस्य प्रायश्चित्तिः ; तस्माद्द्र यज्ञे वैकल्यपरिहारार्थं सैषैव प्रायश्चित्तिः कार्त्तव्या ॥ ७ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां पञ्चमाध्याये
( पञ्चविंशाध्याये ) सप्तमः खण्डः ॥ ७ ( ३२ ) ॥

---

* "धृता मात्म सन्दधदिधान"–इति २ भा० ७१ पृ० १९ पं०।

॥ अथ अष्टमः खण्डः ॥

तदाहुर्महावदाः यदृचैव हौत्रं क्रियते यजुषाऽऽध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवत्यथ केन ब्रह्मत्वं क्रियत इति त्रय्या विद्ययेति ब्रूयादयं वै यज्ञो योऽयं पवते तस्य वाक् च मनश्च वर्तन्यौ वाचा च हि मनसा च यज्ञो वर्तत इयं वै वागदो मनस्तद्वाचा त्रय्या विद्ययैकं पक्षं संस्कुर्वन्ति मनसैव ब्रह्मा संस्करोति ते हैके ब्रह्माण उपाकृते प्रातरनुवाके स्तोमभागान् जपित्वा भाषमाणा उपासते तद्धैतदुवाच ब्राह्मण उपाकृते प्रातरनुवाके ब्रह्माणं भाषमाणं दृष्ट्वाऽर्धं मस्य यज्ञस्यान्तरगुरिति तद्यथैकपात्पुरुषो यन्नेकतश्चक्रो वा रथो वर्त्तमानो भ्रेषं न्येत्येवमेव स यज्ञो भ्रेषं न्येति यज्ञस्य भ्रेषमनु यजमानो भ्रेषं न्येति तस्माद् ब्रह्मोपाकृते प्रातरनुवाके वाचंयमः स्यादोपांश्वन्तर्यामयोर्होमादुपाकृतेषु पवमानेष्वोदृचोऽथ यानि स्तोत्राणि सशस्त्राण्या तेषां वषट्काराद्वाचंयम एव स्यात् तद्यथोभयतःपात्पुरुषो यन्नुभयतश्चक्रो वा रथो वर्त्तमानो न रिष्यत्येवमेव स यज्ञो न रिष्यति यज्ञस्यारिष्टिमनु यजमानो न रिष्यति ॥ ८ (३३) ॥

व्याहृतिहोमप्रसङ्गेन ब्रह्मा बुद्धिस्थः ; तस्य तत्कर्तृत्वात् * । तथा चाश्वलायन आह—"जुहोति-जपतीति प्रायश्चित्तं ब्रह्मायम्" –इति ( श्रौ० १.१.१६.) । अतः प्रश्नोत्तराभ्यां ब्रह्मत्वं निर्णेतु मुपक्रमते —"तदाहुर्ब्रह्मवादाः यद्धचैव हौत्रं क्रियते, यजुषा ऽऽध्वर्यवं, साम्नोद्गीथं, व्यारब्धा त्रयी विद्या भवत्यथ केन ब्रह्मत्वं क्रियत इति, त्रय्या विद्ययेति ब्रूयात्"–इति । 'तत्' तत्र प्रायश्चित्तप्रसङ्गे 'ब्रह्मवदाः' ब्रह्मवादिन 'आहुः' चोदयन्ति । ब्रह्म प्रौढं वेदं वदन्तीति ब्रह्मवदाः । प्रतिवक्तॄणां प्रशंसार्था । 'यद्' यस्मात् कारणादृग्यजुस्सामेति हौत्राध्वर्यवौद्गात्राणां 'त्रयी' वेदत्रयरूपा विद्या 'व्यारब्धा' विविच्य होत्रादिभिः स्वीकृता भवति । अथर्ववेदस्य नात्र निश्चयितुं शक्यते ; आहवनीयादिकर्तव्यस्य तत्राभावात् । अथ तस्मात् कारणात् केन साधनेन ब्रह्मत्वं क्रियते ? इति चोद्यम् । तस्य 'त्रय्या' वेदत्रयरूपया विद्यया ब्रह्मत्वं कर्तव्य मित्युत्तरं प्रतिब्रूयात् । अत एव सम्प्रदायविदः—

"अथर्वचेत्रवान् ब्रह्मा वेदेष्वन्येषु भागवान् ।
तस्माद् ब्रह्माणं भर्मिष्ठ मिति † आरण्यके श्रुतम्"–इति ॥

ब्रह्मणो मनसा वैकल्पराहित्यानुसन्धानं विधत्ते— "अयं वै यज्ञो यो ऽयं पवते, तस्य वाक् च मनश्च वर्तन्यौ ; वाचा च हि मनसा च यज्ञो वर्तते, इयं वै वागदो मनस्तद्वाचा त्रय्या विद्ययैकं पक्षं संस्कुर्वन्ति, मनसैव ब्रह्मा संस्करोति"–इति । यः 'अयं' वायुः 'पवते' अन्तरिक्षे सञ्चरति, अयमेव यज्ञस्वरूपो वायुसदृशो यज्ञः ; यथा वायोः सञ्चारमार्गाः, तथा 'तस्य' यज्ञस्य वाक्

* व्याहृतिहोमकर्तृत्वादिति पाठः ।
† "भर्मिष्ठ मिति" च ।

च मनश्च 'वर्तन्यौ' प्रवृत्तिमार्गौ। यस्माद् 'वाचा' मन्त्ररूपया 'मनसा' च प्रयोगानुसन्धात्रा यज्ञो वर्तते, तस्मादुभौ मार्गौ ; तत्र वाग् 'इयं वै' भूमिस्वरूपैव, मनस्तु 'असौ' स्वर्गरूपम् ; 'तत्' तथा सति वाग्रूपया तया विद्यया होत्रादयो रथस्थानीयस्य यज्ञस्यैकं 'पक्षं' भागं 'संस्कुर्वन्ति' सम्यक् सम्पादयन्ति। ब्रह्मा मनसैव 'संस्करोति' सम्यक् सम्पादयति ; पक्षं भाग मिति शेषः। होत्रादिभिर्वाचानुष्ठीयमानेष्वङ्गेषु वैकल्यराहित्यं ब्रह्मा मनुसन्दध्यादित्यर्थः। छन्दोगाश्चैत सर्वं मामनन्ति— "एष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी ; तयोरन्यतरां मनसा संस्करोति ब्रह्मा ; वाचा होताध्वर्युरुद्गातान्यतराम्"—इति ( छान्दो० उप० ४.१६. २ ) ॥

अथ ब्रह्मणो मौनं विधातुं वाग्व्यवहारे बाधं दर्शयति— "ते ह्येके ब्रह्माण उपाकृते प्रातरनुवाके स्तोमभागान् जपित्वा भाषमाणा उपासते तद्धैतदुवाच ब्राह्मण उपाकृते प्रातरनुवाके ब्रह्माणं भाषमाणं दृष्ट्वा अर्द्धं मस्य यज्ञस्यान्तरगुरिति ; तद्यथैकपात्पुरुषो यन्नेकतश्चक्रो वा रथो वर्तमानो भ्रेषं न्येत्येव मेव स यज्ञो भ्रेषं न्येति,—यज्ञस्य भ्रेष मनु यजमानो भ्रेषं न्येति"—इति। केषुचिद्यज्ञप्रयोगेषु वर्तमानाः 'ते' वेदत्रयाभिज्ञत्वेन प्रसिद्धाः 'एके ब्रह्माणः' केचिद् ब्रह्मसञ्ज्ञका ऋत्विजो होत्रा पठितव्ये प्रातरनुवाके ऽध्वर्युणा 'उपाकृते' अनुज्ञाते सति, तत ऊर्ध्वं "रश्मिरसि क्षयाय त्वा"—इत्यादींस्तोमभागसञ्ज्ञकानमन्त्रान् ( तै० ब्रा० ३. ५.१. )जपित्वा * मौनं मकृत्वा 'भाषमाणाः' वाग्व्यवहारं कुर्वन्तः

---

* "स यद्युपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यवदति, उभयत एव यज्ञं वर्तनिं संस्करोति, हीयते ऽन्यतरा"—इत्यादिच्छान्दोग्यश्रुतिरेव. अस्य पर्वेतदर्थकः।

† स्तोमभागमन्त्रास्तु तै० सं० ४.४ १ १. पाठिताः ; "तथा तत्सिद्धौ ब्रह्मा कार्यः, मैव

'उपासते' समीपे तिष्ठन्ति। तदानीं कश्चिच्छास्त्राभिज्ञो ब्राह्मण आगत्य कस्मिंश्चिद्यज्ञे प्रातरनुवाकोपाकरणादूर्ध्वं 'भाषमाणं' वाग्व्यवहारं कुर्वन्तं ब्रह्माणं दृष्ट्वा वाक्यमेतदुवाच—"अस्य यज्ञस्यार्ध मन्तरगुः"—इति ; ऋत्विग्यजमाना एवं यज्ञभाग मन्तरितं कृतवन्त इति। तथा सति यथा लोके कश्चिदेकपात्पुरुषो द्वितीयं पादं सङ्कुचितं कृत्वा प्रसारितेनैकेनैव पादेन 'यन्' मार्गं गच्छन् 'भ्रेषं' भूमौ पतन् 'न्येति' नितरा मेति ; यथा वा कश्चिद्रथ एकचक्रो भूमौ प्रवर्तमानो भ्रेषं प्राप्नोति ; एव मेव मौनरहितेन ब्रह्मणा युतः स यज्ञो भ्रेषं न्येति ; तस्य यज्ञभ्रेषम् 'अनु' पश्चाद् यजमानो भ्रेषं न्येति * ॥

इत्थं वाग्व्यवहारे बाधं श्रुत्वा मौनं विधत्ते—"तस्माद् ब्रह्मो-पाकृते प्रातरनुवाके वाचंयमः स्यादोपांश्वन्तर्यामयोर्होमादुपा-कृतेषु पवमानेष्वोदृचो † ऽथ यानि स्तोत्राणि सशस्त्राण्या तेषां वषट्कारादवाचंयम एव स्यात् ; तद्यथोभयतःपात् पुरुषो यन्नुभय-तश्चक्रो वा रथो वर्तमानो न रिष्यत्येव मेव स यज्ञो न रिष्यति,—यज्ञस्यारिष्टि मनु यजमानो न रिष्यति"—इति। यस्माद्भाषणे बाधोऽस्ति, 'तस्माद्' ब्रह्मा प्रातरनुवाकोपाकरणात्पूर्वं 'वाचंयमः' मौनी स्यात्। कियन्तं काल मिति, तदुच्यते—'उपांश्वन्तर्यामयोः' ग्रहयोः 'आ होमाद्' होमसमाप्तिपर्यन्तम् ; तथा पवमान-

---

जायते, रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्याह"—इत्यादिभिर्व्याख्याता तै० सं० ३ ५ २.१। पुन० पञ्चमे ऽस्य रश्मिरसिमन्त्रस्य "रश्मिरित्येवादित्य मसृजत"—इत्यादिव्यष्टिपरतया व्याख्यानमाम्नातम् (५.२.६.१-)। ता० ब्रा० १५.६ द्र०।

* "इन्द्रो ह०—० ब्रह्मा वाचंयमो बुभूषेत्"—इति षड्० ब्रा० १.५ द्र० । २.८, ९ द्र०।

† आ-उत्-ऋच, = ओदृच।

स्तोत्रेषु ❋ त्रिष्वप्यध्वर्युणा 'उपाकृतेषु' अनुज्ञातेषु सत्सु 'श्रोदृच:' उत्तमा समाप्तिकालीना येय ऋगस्ति, तत्समाप्तिपर्यन्तम्, वाचंयमः स्यादित्यनुवर्तते। 'अथ' अनन्तरं यान्यन्यानि आज्यादिस्तोत्राणि यज्ञसहितानि सन्ति, तेषाम् 'आ वषट्काराद्' वौषडितिमन्त्रोच्चारणपर्यन्तम्; तत्तत्स्तोत्रप्रारम्भादूर्ध्वं तदा तदा वाचंयम एव स्यात्। तथा सति 'यथोभयत:पात्' पादद्वयोपेतः पुरुषः 'यन्' मार्गे गच्छन् 'न रिष्यति' न विनश्यति; तथा च 'उभयतश्चक्रः' चक्रद्वयोपेतो रथो मार्गे प्रवर्तमानो न विनश्यति; एव मेव मौनिना ब्रह्मणा युक्तः स यज्ञो न विनश्यति। यज्ञस्य 'अरिष्टिं' विनाशाभाव मनु यजमानोऽपि 'न रिष्यति' न विनश्यति ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां पञ्चमाध्याये
(पञ्चविंशाध्याये) अष्टमः खण्डः ॥ ८ (३३) ॥

---

॥ अथ नवमः खण्डः ॥

तदाहुर्यद् ग्रहान्† मे ऽग्रहीष्टाचारीन्म आज्य-
तीर्मे ऽस्तौषीदित्यध्वर्यवे दक्षिणा नीयन्त उद्गातॄन्म

❋ बहिष्पवमानम्, माध्यन्दिनपवमानम्, आर्भवपवमान मिति त्रीणि पवमानस्तोत्राणि।
† 'ग्रहान्' च।

इत्युद्गात्रे ऽन्ववोचन्मे ऽशंसीन्मे ऽयाक्षीन् म इति होत्रे किं स्विदेव चक्रुषे ब्रह्मणे दक्षिणा नीयन्ते ऽकृत्वाहोस्विदेव हरता इति यज्ञस्य हैष भिषग् यद् ब्रह्मा यज्ञायैव तद्भेषजं कृत्वा हरत्यथो यद्भूयिष्ठेनैव ब्रह्मणा छन्दसां रसेनार्त्विज्यं करोति यद् ब्रह्मा तस्माद् ब्रह्मार्द्धभाग्घवा एष इतरेषा मृत्विजा मर्ध आस यद् ब्रह्मार्द्ध मेव ब्रह्मण आसार्द्ध मितरेषा मृत्विजां तस्माद्यदि यज्ञ ऋक्त आर्त्तिः * स्याद् यदि यजुष्टो यदि सामतो यद्यविज्ञाता सर्वव्यापद्वा ब्रह्मण एव निवेदयन्ते तस्माद्यदि यज्ञ ऋक्त आर्त्तिर्भवति भूरिति ब्रह्मा गार्हपत्ये जुहुयाद्यदि यजुष्टो भुव इत्याग्नीध्रीये ऽन्वाहार्यपचने वा हविर्धानेषु यदि सामतः स्वरित्याहवनीये यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वरिति सर्वा अनुद्रुत्याहवनीय एव जुहुयात्स प्रस्तोतोपाकृते स्तोत्र आह ब्रह्मन्त्स्तोष्यामः प्रशास्तरिति स भूरिति ब्रह्मा प्रातस्सवने ब्रूयादिन्द्रवन्त † स्तुध्व मिति भुव इति माध्यन्दिने सवने ब्रूयादिन्द्रवन्त स्तुध्व मिति स्वरिति तृतीयसवने ब्रूयादिन्द्रवन्त स्तुध्व मिति भूर्भुवः स्वरित्युक्थ्ये वा ऽतिरात्रे वा ब्रूयादिन्द्रवन्त स्तुध्व मिति स

* "आर्त्ति" ख, ग, घ।  † "इन्द्रवन्तः" क। एव मितीयत्रापि।

यदाहेन्द्रवन्त स्तुध्व मित्यैन्द्रो वै यज्ञ इन्द्रो यज्ञस्य देवता सेन्द्र मेव तदुक्थं करोतीन्द्रान्मा गादिन्द्रवन्त स्तुध्व मित्येवैनांस्तदाह तदाह ॥ ९ (३४) ॥

॥ इत्यैतरेयब्राह्मणे पञ्चमपञ्चिकायां पञ्चमोऽध्यायः ॥५॥

अथ ब्रह्मणः कांश्चित् कर्तव्यविशेषान्विधातुं चोद्य मुद्भावयति— "तदाहुर्यद् ग्रहान्मेऽग्रहीत्प्राचारीन्म आहुतीर्मेऽहौषी-दित्यध्वर्यवे दक्षिणा नीयन्त उदगासीन्म इत्युद्गात्रेऽन्ववोचन् मेऽशंसीन्मेऽयाक्षीन् म इति होत्रे, किंस्विदेव चक्रुषे ब्रह्मणे दक्षिणा नीयन्तेऽकृत्वाहोस्विदेव हरता इति"–इति। 'तत्' तस्मिन् ब्रह्मणि चोद्य माहुः। किं चोद्य मिति, तदुच्यते— यजमानेनाध्वर्यवे यदा दक्षिणा 'नीयन्ते' प्रदीयन्ते, तदानीं यजमानस्याय मभिप्रायः— असावध्वर्युः 'मे' मदर्थं 'ग्रहान्' ऐन्द्रवायवादीनग्रहीत्, तथा 'मे' मदर्थं 'प्राचारीत्' यज्ञप्रचारं कृतवान्, तथा 'मे' मदर्थ माहुतीः 'अहौषीत्' हुतवानिति। यदोद्गात्रे दक्षिणा नीयन्ते, तदानी मय मभिप्रायः— असौ उद्गाता 'मे' मदर्थम् 'उदगासीत्' औद्गात्रं कृतवानिति। यदा होत्रे दक्षिणा नीयन्ते, तदानी मय मभिप्रायः— अयं होता 'मे' मदर्थम् 'अन्ववोचत्' पुरोनुवाक्यादीना मनुवचनं कृतवान्, तथा 'मे' मदर्थम् 'अशंसीत्' शंसनं कृतवान्, तथा 'मे' मदर्थम् 'अयाक्षीद्' याज्यां पठितवानिति। एवं तेन तेन कृतं कार्यं स्मृत्वा यस्माद् दक्षिणां ददाति, तस्माद् ब्रह्मणेऽपि तत्कृतं कार्यं स्मृत्वा दक्षिणा दातव्या। तथा सति 'किंस्विदेव' किं नाम कार्यं 'चक्रुषे' कृतवते ब्रह्मणे यजमानेन दक्षिणा

नीयन्ते, 'चाहोस्विदकृत्वैव' अथवा किमपि कार्य्यमकृत्वैव 'हरते' ब्रह्मा दक्षिणां हरेत् ? एतच्चायुक्त मिति चोद्यम् ॥

तस्योत्तर माह— *"यज्ञस्य हैष भिषग्यद् ब्रह्मा; यज्ञायैव तद्भेषजं कृत्वा हरति"*–इति। यो ब्रह्मास्ति, एष यज्ञस्य 'भिषक्' चिकित्सकः। 'तत्' तस्मात् कारणाद् 'यज्ञायैव भेषजं कृत्वा' यज्ञस्याङ्गवैकल्यरोगं शमयित्वा, दक्षिणां हरति; तस्माद्दोषादिच-दुपकारित्वादयं दक्षिणाया योग्य एव ॥

प्रकारान्तररूपेण ब्रह्मणो दक्षिणाधिक्यं दर्शयति— "अथो यद् भूयिष्ठेनैव ब्रह्मणा छन्दसां रसेनार्त्विज्यं करोति यद् ब्रह्मा; तस्माद् ब्रह्मार्धभाग्य वा एष इतरेषा मृत्विजा मर्ध यास यद् ब्रह्मार्ध मेव ब्रह्मण आसार्ध मितरेषा मृत्विजाम्"–इति। अपि यो ब्रह्मास्ति, 'भूयिष्ठेनैव' अतिबहुलेनैव 'छन्दसां रसेन' वेदसारभूतेन व्याहृति-प्रणवरूपेण 'ब्रह्मणा' मन्त्रेणैव 'यद्' यस्मात् कारणादार्त्विज्यं करोति, तस्मात् कारणादुपकारबाहुल्यादयं ब्रह्मेति विशिष्टेन नाम्ना व्यवह्रियत इति शेषः। किञ्च यो ब्रह्मास्ति, एषः 'अर्धे' प्रथम मेवेतरेषा मृत्विजाम् 'अर्धभाग्य वै' अर्धप्रयोगं भजत्येव;— वेदत्रये यावान् प्रयोगो विततोऽस्ति, स सर्वोऽपीतरैर्ऋत्विग्भि-र्वाचानुष्ठीयते, ब्रह्मणा तु मनसेत्येतावानेव विशेषः, प्रयोगस्तूभयत्र समान एव। अथ सेवार्थोऽर्धं मेवेत्यादिना स्पष्टीक्रियते। ब्रह्मणो यज्ञस्यार्ध मेव मनसानुष्ठीयमानम्, 'इतरेषा मृत्विजां' होत्रादीनां वाचानुष्ठीयमान मर्धम्; तस्मादुपकारबाहुल्यं सिद्धं पूर्ववत् ॥

व्याहृतिप्रायश्चित्त मुक्तं तत्कर्त्तृत्वं ब्रह्मणो विधत्ते— "तस्माद् यदि यज्ञ ऋक्त आर्त्तिः स्याद्यदि यजुष्टो यदि सामतो यद्य-विज्ञाता सर्वव्यापदा, ब्रह्मण एव निवेदयन्ते; तस्माद्यदि यज्ञ ऋक्त

आर्तिर्भवति, भूरिति ब्रह्मा गार्हपत्ये जुहुयाद् ; यदि यजुष्टो भुव इत्याग्नीध्रीये ऽन्वाहार्यपचने वा हविर्यज्ञेषु ; यदि सामतः, स्वरित्याहवनीये ; यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वरिति सर्वा अनुद्रुत्याहवनीय एव जुहुयात्"–इति । यस्माद् ब्रह्मा यज्ञभार मर्थं वहति, भिषक्त्वेन यज्ञवैकल्यं परिहर्तुंच शक्नोति, तस्मादृग्वादिभ्यः किञ्चित् वैकल्यं भवेत्, तदानीं मितरे सर्वेते तस्मै ब्रह्मणे एव तद्वैकल्यं निवेदयन्ते ; 'तस्माद्' इतरैर्निवेदितत्वात् स ब्रह्मा पूर्वोक्तप्रकारेण तत्तत् प्रायश्चित्तं जुहुयात् ॥

ब्रह्मणः कर्तव्यान्तरं दर्शयति—"स प्रस्तोतोपाकृते स्तोत्र आह ब्रह्मन्त्स्तोष्यामः प्रशास्तरिति, स भूरिति ब्रह्मा प्रातस्सवने ब्रूयादिन्द्रवन्त स्तुध्व मिति ; भुव इति माध्यन्दिने सवने ब्रूयादिन्द्रवन्त स्तुध्व मिति ; स्वरिति तृतीयसवने ब्रूयादिन्द्रवन्त स्तुध्व मिति; भूर्भुवः स्वरित्युक्थे वा ऽतिरात्रे वा ब्रूयादिन्द्रवन्त स्तुध्व मिति"–इति । अध्वर्युणा स्तोत्रे 'उपाकृते' प्रारब्धुमनुज्ञाते सति 'प्रस्तोता' स्तोत्रसाधने साम्नि प्रथमस्य प्रस्तावभागस्य गाता प्रस्तोतृनामक ऋत्विक्, ब्रह्माणं प्रत्यनुज्ञा मनेन मन्त्रेण प्रार्थयेत । "ब्रह्मन्"–इत्यादिर्मन्त्रः । हे 'प्रशास्तः' अस्माकं प्रशातनस्य आज्ञापनस्य कर्तः ! हे ब्रह्मन् ! त्वदनुज्ञया वयं स्तोष्याम इति । ततस्तेन प्रार्थितो ब्रह्मा 'भूः'–इत्येतां प्रथमां व्याहृति मुक्त्वा, हे उद्गातारः ! 'इन्द्रवन्तः' इन्द्रविषयस्तुतिपराः सन्तः 'स्तुध्वं' स्तोत्रं कुरुतेति ब्रूयाद् । एव मितरत्रापि योज्यम् ॥

ब्रह्मणा प्रयुक्तस्यानुज्ञानमन्त्रस्याभिप्रायं दर्शयति—"स यदाहेन्द्रवन्त स्तुध्व मित्यैन्द्रो वै यज्ञ, इन्द्रो यज्ञस्य देवता, सेन्द्र मेव तदुद्गीथं करोतीन्द्रान्मा गादिन्द्रवन्त स्तुध्व मित्येवैनांस्तदाह तदाह",

—इति । 'सः' ब्रह्मा 'इन्द्रवन्तः स्तुध्वमिति' यद्वाक्यमाह, तस्याभिप्राय उच्यते— 'यज्ञः' सोमयागः 'ऐन्द्रो वै' इन्द्रसम्बन्ध एव, इन्द्रो हि तस्य यज्ञस्य देवता ; अतः 'तदुद्गीथं' सामगैः क्रियमाणमुद्गानं 'सेन्द्रम्' इन्द्रसहितमेव करोति ; ऐन्द्रं सुद्गीतम्, इन्द्रात् 'मा गात्' मापगच्छतु । तस्मात् हे उद्गातारः ! यूयम् 'इन्द्रवन्तः' इन्द्रविषयतां पर्यवेक्षन्तः, एवं भूत्वा स्तुध्वम् । 'इति' अनेनैव प्रकारेण 'एनान्' उद्गातॄन् ब्रह्मा 'तद्' वाक्यमाह ॥
अभ्यासोऽध्यायपरिसमाप्त्यर्थः * ॥ ९ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायां पञ्चमाध्याये
( पञ्चविंशाध्याये ) नवमः खण्डः ॥ ९ ( ३४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायाः पञ्चमाध्यायः ॥

---

* अस्मिन्नध्याये नव खण्डाः सन्ति, यत्राद्येषु षट्सु अग्निहोत्रं भाषितम्, तत उपरि ऋत्विक्कार्योपदेशप्रकरणमारभ्य मिति सप्तमाष्टमयोः खण्डयोः ब्रह्मर्त्विक्कार्योपदेश उक्तः, ग्रावस्तुदादीनां कार्याण्यपि परस्तादवचान्ति । आश्वलायनीयद्वितीयाध्यायस्य प्रथमकण्डिकायाम्— अग्न्याधाने ब्रह्मा द्वितीयादिषु चतसृषु अग्निहोत्रम्, ब्रह्मकर्मण्योपदेशस्तु "अथ ब्रह्मत्व. ( १-१२ १ )"—इत्याद्युपक्रमेण परस्तादेवोक्त इति मम ॥

विश्वे वै पञ्च[१]। गौर्वै दश[२]। यद्वा एति च प्रेति च चत्वारि[३]। यद्वै समानोदर्कं षट्[४]। उद्धराहवनीयं नव[५] ॥ ५ * ॥

विश्वे वै देवा, देवासुरा वै, सप्त ह वै जग्मु, स्वर्ग्यन्तु खलु वा चत्वारि ॥ ५ † ॥

॥ इति पञ्चमपञ्चिका समाप्ता ॥

---

* १, ४१, [illegible] इ० ([illegible] प० )।
† [illegible] इ० ([illegible] प० ) [illegible]

# ॥ ऐतरेयब्राह्मणम् ॥

## ॥ अथ षष्ठपञ्चिका ॥

( तत्र )

॥ प्रथमाध्यायस्य प्रथमः खण्डः ॥



॥ ॐ ॥ देवा ह वै सर्वचरौ सत्रं निषेदुस्तेह पाप्मानं नापजघ्निरे तान्होवाचार्बुदः काद्रवेयः सर्पऋषिर्मन्त्रकृदेका वै वो होत्रा ऽकृता तां वो ऽहं करवाण्यथ पाप्मान मपहनिष्यध्व इति ते ह तथेत्यूचुस्तेषां ह स्म स मध्यन्दिने मध्यन्दिन एवोपोदासर्पद् ग्राव्णो ऽभिष्टौति तस्मान् मध्यन्दिने मध्यन्दिन एव ग्राव्णो ऽभिष्टुवन्ति तदनुकृति स ह स्म येनोपोदासर्पत्तद्धाप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति तान् ह राजा मदयाञ्चकार ते होचुराशीविषो वै नो राजान मवेक्षते हन्तास्योष्णीषेणाक्ष्यावपिनह्यामेति तथेति तस्य होष्णीषेणाक्ष्यावपिनह्युस्तस्मादुष्णीष मेव पर्यस्य ग्राव्णो ऽभिष्टुवन्ति तदनुकृति तान् ह राजा मदया मेव चकार ते होचुः स्वेन वै नो मन्त्रेण ग्राव्णो ऽभिष्टौति हन्तास्यान्या-

भिर्ऋग्भिर्मन्त्र मा पृचामेति तथेति तस्य हान्याभिर्ऋग्भिर्मन्त्र मापपृचुस्ततो हैनां न मदयाञ्चकार तद्यदस्यान्याभिर्ऋग्भिर्मन्त्र मापृञ्चन्ति शान्त्या एव ते ह पाप्मान मप जघ्निरे तेषा मन्वपहतिं सर्पाः पाप्मान मप जघ्निरे त एते ऽपहतपाप्मानो हित्वा पूर्वां जीर्णां त्वचं नवयैव प्रयन्त्यप पाप्मानं हते य एवं वेद ॥ १ ॥

॥ श्रीगणेशाय नमः ॥

यथाग्निष्टोमं पयसः प्रशंसा तद्दोहनापत्तिविनिष्कृतिश्च ।
तस्य प्रशंसाप्युदिते च होमो मन्त्रलिंगो व्याहृतयोऽप्यधीताः ॥ १ ॥

मन्त्रस्य: कार्त्स्न्यविधानेन यावत्तद् बुद्धिस्थ: ; तस्याग्निष्टोमे कर्त्तव्यं * विधातु मुपाख्यान माह— "देवा ह वै सर्वचरौ सत्रं निषेदुस्ते ह पाप्मानं नापजघ्निरे ; तान्होवाचार्बुदः काद्रवेयः सर्प ऋषिर्मन्त्रकृदेका वै वो होत्रा ऽकृता, तां वो ऽहं करवाण्यथ पाप्मान मप हनिष्यथ इति ; ते ह तथेत्यूचुस्तेषां ह स्म स मध्यन्दिने मध्यन्दिन एवोपोदासर्पद् ग्रावणो ऽभिष्टौति"—इति। पुरा कदाचिद् देवाः 'सर्वचरु'नामके देशविशेषे † 'सत्रं' किञ्चिदनुष्ठितवन्तः। 'ते' देवास्तेन सत्रेण स्वकीयं 'पाप्मानं' दारिद्र्यहेतुं 'नापजघ्निरे' न नाशितवन्तः। 'तान्' पापक्षयरहितान् देवान् 'अर्बुदः' तन्नामकः कश्चिदृषिरागत्योवाच। कीदृशोऽर्बुदः ?

* "एतस्मिन् काले ग्रावस्तुत् प्रपद्यते"—इत्यादि आश्व० श्रौ० ५, १२ ख० द्र०।
† ताण्ड्य० ब्रा० २९, १ द्रष्टव्यम्।

'काद्रवेयः' कद्रुनामधारिण्याः स्त्रियाः पुत्रः *, 'सर्पः' सर्पजातीयदेहधारी, 'ऋषिः' अतीन्द्रियार्थद्रष्टा 'मन्त्रकृत्' [ करोतिधातुरत्र दर्शनार्थः ] मन्त्रस्य "प्रैते वदन्तु प्र वयं वदाम"–इत्यादिसूक्तस्य ( सं० १०, ९४. १. ) द्रष्टा । तेनार्बुदेन किं मुक्तमिति, तदुच्यते— हे देवाः ! 'एका वै वो होत्रा' एकैव होतृवेदोत्पन्ना क्रिया 'वः' युष्माकम् 'अकृता' नानुष्ठिता, तदेकत्वेन पापक्षयो नासीत् । 'तां' क्रियां 'वः' युष्मदर्थं अहं करवाणि, अनन्तरं पाप्मानं यूय मपहनिष्यध्वे । 'इति' एतदृषिवाक्यं देवाः अङ्गीचक्रुः । ततः 'सः' अर्बुदः 'तेषां' देवानां सवे प्रतिदिनं मध्यन्दिनसमय एव 'उप' समीपम् उत्सुकः समागच्छत् । आगत्य च ये सोमाभिषवार्थाः 'ग्रावाणः' पाषाणाः † सन्ति, तान् पूर्वोक्तेन सूक्तेन 'अभिष्टौति' अभितः स्तुतिं कृतवान् ॥

इदानीं ग्रावस्तुत ऋत्विजः ‡ तत्सूक्तेन ग्राव्णा मभिष्टवं विधत्ते— "तस्मान् मध्यन्दिने मध्यन्दिन एव ग्राव्णो ऽभिष्टुवन्ति तदनुकृति"–इति । यस्मादर्बुदेनाभिष्टुतिः कृता, तस्मात्सोमप्रयोगेषु सर्वेषु तत्तन्मध्यन्दिने काल एव "प्रैते वदन्तु"–इतिसूक्तेन ग्राव्णा मभिष्टव मृत्विजः कुर्य्युः । 'तदनुकृति'–इति क्रियाविशेषणम् । 'तस्य' अर्बुदस्य 'अनुकृति' अनुरूपं यथा भवति तथेत्यर्थः ॥

---

* "अर्बुद काद्रवेयो राजेत्याह तस्य सर्पा विशः"–इति शत० ब्रा० १३. ४. ३. ९ । "अर्बुदः काद्रवेयस्तस्य सर्पा विशः ०—०विषविद्यां निगदेत्"–इति आश्व० श्रौ० १०. ७. ५ ।

† निरु० ९. १. ८, ९ द्रष्टव्यम् ।

‡ "षोडशर्त्विजः । चत्वारस्त्रिपुरुषाः । तस्य दक्षोत्तरे मध्ये । होता मैत्रावरुणो ऽच्छावाको ग्रावस्तुदध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेता ब्रह्मा ब्राह्मणाच्छंस्याग्नीध्रः पोतोद्गाता प्रस्तोता प्रतिहर्त्ता सुब्रह्मण्य इति । एते ऽहीनैकाहैर्याजयन्ति । एत एवाहिताग्नेश्च दशदशमयस्य गृहपतिसप्तदशाः"–इति आश्व० श्रौ० ४ । १ । ३–८ ।

अर्बुदस्य वृत्तान्तं लोकप्रसिद्धया द्रढयति—"स ह स्म येनोपोदासर्पत्तदाप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति"—इति। 'स ह' स तु अर्बुदाख्यः सर्पदेहो महर्षिः, येन मार्गेण 'उपोदासर्पत्' तत्समीपं प्रति बिलादुद्गम्यागच्छत्, 'तत्' तस्मिन्नेव देशे 'एतर्हि' इदानीमपि 'अर्बुदोदासर्पणी'—इत्यनेन नामधेयेन युक्ता 'प्रपत्' मार्गोऽस्ति। प्रपद्यते गम्यते अनयेति प्रपत् ॥

अथाभिषवकाले ग्रावस्तुत उष्णीषेण नेत्रवेष्टनं विधत्ते—"तान् ह राजा मदयाञ्चकार; ते होचुराशीविषो वै नो राजानमवेक्षते, हन्तास्योष्णीषेणाक्ष्यावपिनह्यामेति; तथेति; तस्य होष्णीषेणाक्ष्यावपिनह्युस्तस्मादुष्णीषमेव पर्यस्य ग्रावस्तुदभिष्टौति तदनुकृति"—इति। ग्राव्णा अभिषवार्थमर्बुदाख्ये सर्परूपे महर्षौ समागते सति तदीयविषदृष्ट्यावलोकितः सोमो 'राजा' वल्यात्मकः, स्वयमपि विषयुक्तः सन्, 'तान्' समीपवर्तिनो देवान् 'मदयाञ्चकार' उन्मत्तान् परवशान् कृतवान्। तदानीं 'ते' देवाः परस्परमिदमूचुः,— 'आशीविषः' सर्परूपोऽयमर्बुदो 'नः' अस्माकं राजानं विषदृष्ट्या अवेक्षते 'हन्त' कष्टमेतत्सम्पन्नम्; अतस्तत्परिहाराय केनचित् 'उष्णीषेण' शिरोवेष्टनसाधनेनास्य सर्पस्यार्बुदस्य 'अक्ष्यावपिनह्याम' चक्षुषोर्बन्धनं करवाम इति विचार्य ते: तदुचितं तस्य मुखमुष्णीषेण वेष्टयित्वा तदीयचक्षुषोर्बन्धनं कृतवन्तः *। यस्माद्देवैरेवं कृतम्, तस्मादृत्विजोऽपि उष्णीषमेव 'पर्यस्य' परितो मुखं वेष्टयित्वा 'ग्रावस्तुत्'

* "यदाप्यः अभर्भुदस्यौषं प्रयच्छति। यदपलिना प्रविश्य, शिरः प्रदक्षिणं शिरः मुखं वेष्टयित्वा, यदा सोमावराभिषवाय ग्रावीक्यस्य ग्राव्णोऽभिष्टुयात्"—इति आप० श्रौ० सू० १२ ९, ७। पु० १ भा० १८८ पृ० । द्रष्टव्यम्।

सोमाभिषवार्थान् पाषाणानभिष्टुवन्ति। 'तस्य' अर्बुदस्य 'अनुकृति' सादृश्यं यथा भवति तथैवनेनाभिप्रायेण वेष्टनम् ॥

अथ यावस्तुतः पूर्वोक्तसूक्तादन्या अप्यृचो विधत्ते— "तान् ह राजा मदया मेव चकार; ते होचुः,—स्वेन वै नो मन्त्रेण ग्राव्णो ऽभिष्टौति, हन्तास्यान्याभिर्ऋग्भिर्मन्त्रं मा पृणचामेति; तथेति; तस्य हान्याभिर्ऋग्भिर्मन्त्रं मापपृचुस्ततो हैनां न मदयाञ्चकार; तद्यदस्यान्याभिर्ऋग्भिर्मन्त्रं मापृञ्चन्ति शान्त्या एव"–इति। पुनरपि सोमो 'राजा' 'तान्' देवान् पूर्ववत् 'मदयाञ्चकारैव'; ततः ते देवाः परस्परमूचुः,— दृष्टिविषयपरिहारोऽस्मपं सर्पदेष्ट ऋषिः स्वकीयेनैव सूक्तरूपेण मन्त्रेण ग्राव्णो ऽभिष्टौति। अतो मन्त्रसम्बन्धेन विषोत्पादक सुमादो जायते, 'हन्त' अस्त्र मेतत्। अतो मन्त्रगतविषपरिहाराय 'अस्य' अर्बुदस्य 'मन्त्रं' सूक्तम् 'अन्याभिः' "आप्यायस्व समेतु ते"–इत्यादिभिर्ऋग्भिः * 'आपृणचाम' ["पृची सम्पर्के"–इति (रुधा॰ २५.) धातुः] सर्वतः सम्पृक्तं करवाम। तदेतत् सर्वे देवा अङ्गीकृत्य तथैव चक्रुः। 'ततः' ऋगन्तरसम्पर्कात् तत्सूक्तगतेऽपले सति 'एतान्' देवान् सोमो राजा 'न मदयाञ्चकार' उन्मादं नाकरोत्। तस्मात् कारणादर्बुदस्य 'मन्त्रं' सूक्तम् 'अन्याभिः' "आप्यायस्व"–इत्यादिभिः (सं॰ १.८१.१६–१८.) अभिष्टवकाले सम्पृक्तं कुर्युः; तच्च शान्त्यर्थ मेव भवति ॥

देवाना मभिष्टवकर्तां पापशान्तिं दर्शयति— "ते ह पाप्मान मप जघ्निरे, तेषा मन्वपद्यतिं सर्पाः पाप्मान मप जघ्निरे, त एते ऽपहतपाप्मानो हित्वा पूर्वां जीर्णां त्वचं नवयैव यन्ति"–इति। 'ते' देवाः अर्बुदानुष्ठितेनाभिष्टवेन दारिद्र्यादिहेतुम् 'पाप्मानं'

* "आप्यायस्व समेतु ते विश्वतः"–इति आश्व॰ श्रौ॰ ५.१२.१६।

नाशितवन्तः। 'तेषां' देवानाम् 'अपहतिं' पापविनाशम् 'अनु' पश्चाद् अर्बुदसम्बन्धिनः सर्पाः सर्वेऽपि स्वकीयं पाप्मानं नाशितवन्तः। ते सर्पाः स्वशरीरगतां पूर्वसिद्धां जीर्णां त्वचं हित्वा 'नवयैव' नूतनयैव त्वचा युक्ताः 'प्रयन्ति' सर्वतः प्रसर्पन्ति। 'एते' नूतनत्वग्युक्ताः सर्वा अपहतपाप्मान इत्युच्यन्ते॥ वेदनं प्रशंसति— "अप पाप्मानं हते य एवं वेद"–इति॥ १॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकाया प्रथमाध्याये
(षड्विंशाध्याये) प्रथमः खण्ड.॥ १॥

---

॥ अथ द्वितीयः खण्डः ॥

तदाहुः कियतीभिरभिष्टुयादिति शतेनेत्याहुः शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय आयुष्येवैनं तद्वीर्य इन्द्रिये दधाति त्रयस्त्रिंशत्या वेत्याहुस्त्रयस्त्रिंशतो वै स देवानां पाप्मनो ऽपाहंस्त्रयस्त्रिंशद्वै तस्य देवा इत्यपरिमिताभिरभिष्टुयादपरिमितो वै प्रजापतिः प्रजापतेर्वा एषा होत्रा यद् ग्रावस्तोत्रीया तस्यां सर्वे कामा अवरुध्यन्ते स यदपरिमिताभिरभिष्टौति सर्वेषां कामानामवरुद्धे सर्वान् कामानवरुन्धे य एवं वेद तस्मादपरिमिताभिरेवाभिष्टुयात्तदाहुः कथं मभिष्टुयादित्यक्षरशः

चतुरक्षरशा३ः पञ्चा३ः अर्द्धर्चशा३ः ऋक्शा३ः इति तद्यदृक्शो न तदवकल्पते ऽथ यत् पञ्चो नो एव तदवकल्पते ऽथ यदक्षरशश्चतुरक्षरशो वि तथा छन्दांसि लुप्येरन् बहूनि तथाक्षराणि हीयेरन्नर्द्धर्चश एवाभिष्टुयात्प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमान मेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति तस्मादर्द्धर्चश एवाभिष्टुयात्तदाहुर्यन्माध्यन्दिने मध्यन्दिन एव ग्राव्णो ऽभिष्टौति कथ मस्येतरयोः सवनयोरभिष्टुतं भवतीति यदेव गायत्रीभिरभिष्टौति गायत्रं वै प्रातस्सवनं तेन प्रातस्सवने ऽथ यज्जगतीभिरभिष्टौति जागतं वै तृतीयसवनं तेन तृतीयसवन एव सु हास्य मध्यन्दिने मध्यन्दिन एव ग्राव्णो ऽभिष्टुवतः सर्वेषु सवनेष्वभिष्टुतं भवति य एवं वेद तदाहुर्यदध्वर्युरेवान्यानृत्विजः सम्प्रेष्यत्यथ कस्मादेष एता मसम्प्रेषितः प्रतिपद्यत इति मनो वै ग्रावस्तोत्रीया ऽसम्प्रेषितं वा इदं मनस्तस्मादेष एता मसम्प्रेषितः प्रतिपद्यते ॥ २ ॥

अथ प्रश्नोत्तराभ्या मभिष्टवगताना मृचां सङ्ख्यां विधत्ते— "तदाहुः कियतीभिरभिष्टुयादिति, शतेनेत्याहुः ; शतायुर्वै पुरुषः

शतवीर्यः शतेन्द्रिय आयुष्येवैनं तद्वीर्य इन्द्रिये दधाति"–इति। शतसङ्ख्याकासु नाडीषु सञ्चारादिन्द्रियाणां तदीयवीर्यस्य च शतसङ्ख्यात्वम्; तत्सङ्ख्याकाना मृचां पाठेन 'एनं' यजमानं दीर्घायुष्यादिगुणयुक्तं करोति॥

पक्षान्तरं विधत्ते— "त्रयस्त्रिंशतया वेत्याहुस्त्रयस्त्रिंशतो वै स देवानां पाप्मनो ऽपाहंस्त्रयस्त्रिंशद्वै तस्य देवा इति"–इति। अथवा 'त्रयस्त्रिंशता' ऋचां त्रयस्त्रिंशत्सङ्ख्यया अभिष्टव इत्याहुः। तत्र हेतुरुच्यते— देवानां सम्बन्धिनी या त्रयस्त्रिंशदस्ति, अस्याः सकाशात् 'सः' अर्बुदः पापानि 'अपाहन्' विनाशितवान्। 'तस्य' 'अर्बुदस्य' समीपस्था देवाः 'त्रयस्त्रिंशद्वै' अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः, प्रजापतिश्च, वषट्कारश्चेत्येवं देवसङ्ख्या द्रष्टव्या *॥

पक्षान्तरं विधत्ते— "अपरिमिताभिरभिष्टुयादपरिमितो वै प्रजापतिः; प्रजापतेर्वा एषा क्रीवा यद् ग्रावस्तोत्रीया, तस्यां सर्वे कामा अवरुध्यन्ते; स यदपरिमिताभिरभिष्टौति, सर्वेषां कामाना मवरुद्धै"–इति। एतावत्त्वेवेति सङ्ख्यानियमरहिताः 'अपरिमिताः'। प्रजापतेरपरिमितमहिमत्वाद् ग्रावस्तोत्रसम्बन्धिन्या क्रीडयैवोत्पन्नायाः क्रियायाः प्रजापतिसम्बन्धत्वात् अपरिमितत्वं युक्तम्; तस्याञ्च क्रियायां सर्वे कामाः स्वाधीना भवन्ति; अतो ऽपरिमिताभिरभिष्टवः सर्वकामप्राप्तेः सम्पद्यते॥ वेदनं प्रशंसति— सर्वान् कामानवरुन्धे य एवं वेद"–इति॥

---

* पु० १ भा० ५५८,४४६ पृ० द्र०। "तिस्र एव देवता इति नैरुक्ता अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानस्तासां महाभाग्यादेकैकस्या अपि बहूनि नामधेयानि"–इत्यादि निरु० ७. २. १।

तृतीयस्य पक्षस्य मुख्यत्वं दर्शयति— "तस्मादपरिमिताभि-रेवाभिष्टुयात्"—इति ॥

प्रश्नोत्तराभ्या मभिष्टवे प्रकारविशेषं विधत्ते— "तदाहुः कथ मभिष्टुयादित्यक्षरशा३ः, चतुरक्षरशा३ः, पच्छा३ः अर्द्धर्चशा३ः, ऋक्शा३ः इति ; तद्यदृक्शो न तदवकल्पते ऽथ यत् पच्छो नो एव तदवकल्पते ऽथ यदक्षरशश्चतुरक्षरशो वि तथा छन्दांसि लुप्येरन्, बहूनि तथाक्षराणि हीयेरन्नर्द्धर्चश एवाभिष्टुयात्प्रति-ष्ठाया एव"—इति । 'तत्' तत्राभिष्टवे ब्रह्मवादिनः प्रश्न माहुः,— केन प्रकारेणाभिष्टुयादिति । कियन्तः प्रकाराः सम्भाव्यन्त इति चाकाङ्क्षायां ते प्रकारा उपन्यस्यन्ते,— अक्षरशोऽभिष्टुयादित्येकः प्रकारः ; प्रत्यक्षर मवसायावसायाभिष्टुयादित्यर्थः । अक्षरचतुष्टये ऽवसानं द्वितीयः प्रकारः । पादेऽवसानं तृतीयः प्रकारः । अर्द्धर्चे ऽवसानं चतुर्थः । ऋचि समाप्तायां मवसानं पञ्चमः । प्लुतयः सर्वा विचारार्थाः । किं प्रत्यक्षर मवसानम्, उताक्षरचतुष्टयेऽव-सानम्, उत पादे पादे ऽवसानम्, आहोस्विदर्द्धर्चे ऽवसानम्, अथवा कृत्स्नायां मृच्यवसानम् ? इति संशयः । तत्र पक्षान्त-राणि दूषयित्वार्द्धर्चपक्ष एव स्वीकार्य्यः । कथ मिति, तदुच्यते— यदि ऋक्श इति पक्षः स्यात् ? तत् 'नावकल्पते' न सम्भवति ; अध्ययनवैपरीत्यप्रसङ्गात्,— अध्ययनकाले ऽर्द्धर्चे ऽवसानं कुर्वन्ति, न तु कृत्स्ना मृचं मध्ये ऽवसानरहितां पठन्ति । पादावसान-पक्षेऽपि स एव दोषः । एकैकाक्षर-चतुरक्षर-पक्षयोर्दोषान्तर मप्यस्ति,— तथा पक्षद्वयाङ्गीकारे छन्दांसि विलुप्येरन् । कथं विलोप इति, तदुच्यते— तथा सत्यक्षरावसानपक्षे बहून्यक्षराणि 'हीयेरन्' विनश्येयुः ; संहिताकालीनस्य विसन्धेरभावात् ; तत-

श्छन्दोभङ्गः। अर्द्धर्चपक्षे तु यथाध्ययन मेवाभिष्टवात् न कोऽपि दोषः ; तस्मादय मेव पक्षः सिद्धान्तः। अर्द्धर्चयोः द्वित्वात् पच-द्वयसादृश्येन प्रतिष्ठार्थ मेतत् सम्पद्यते ॥

इम मर्द्धर्चपक्षं प्रशंसति—"द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमान मेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति ; तस्मादर्द्धर्चश एवाभिष्टुयात्"–इति। अर्द्धर्चयोर्द्वित्वाद्यजमान-साम्यम्, ऋचां पादचतुष्टयोपेतत्वात् पशुसाम्यम् ॥

अथ मध्यन्दिनकालीन मभिष्टवं प्रश्नोत्तराभ्यां प्रशंसति—"तदाहुर्यन्मध्यन्दिने मध्यन्दिन एव ग्राव्णो ऽभिष्टौति, कथ मस्ये-तरयोः सवनयोरभिष्टुतं भवतीति ; यदेव गायत्रीभिरभिष्टौति, गायत्रं वै प्रातस्सवनं तेन प्रातस्सवने, ऽथ यज्जगतीभिरभिष्टौति जागतं वै तृतीयसवनं तेन तृतीयसवने"–इति। 'तत्' तत्राभिष्टवे चोद्य माहुः। यस्मात् कारणादयं ग्रावस्तुत् तत्प्रयोगसम्बन्धिनि 'मध्यन्दिने' एव सवने ग्राव्णा मभिष्टवं करोति, एवं सति केन प्रकारेण 'अस्य' ग्रावस्तुतः प्रातस्सवनतृतीयसवनयोरभिष्टवः सिध्य-तीति प्रश्नः। ऋक्षु यद्गायत्री जगती छन्दोद्वयं तद्द्वारान्ययोरपि सवनयोरभिष्टवसिद्धिरित्युत्तरम् ॥ वेदनं प्रशंसति—"एव मु हास्य मध्यन्दिने मध्यन्दिन एव ग्राव्णो ऽभिष्टुवतः सर्वेषु सवनेष्व-भिष्टुतं भवति य एवं वेद"–इति। 'एव मु ह' अनेनैव गायत्री-जगतीच्छन्दोद्वारेण ॥

अथ ग्रावस्तुतः सम्प्रेषनिरपेक्षत्वं प्रश्नोत्तराभ्यां दर्शयति—"तदाहुर्यदध्वर्युरेवान्यानृत्विजः सम्प्रेष्यत्यथ कस्मादेष एता मस-म्प्रेषितः प्रतिपद्यत इति ; मनो वै ग्रावस्तोत्रीया ऽसम्प्रेषितं वा इदं मनस्तस्मादेष एता मसम्प्रेषितः प्रतिपद्यते"–इति। 'तत्'

तत्र ग्रावस्तुद्विषये प्रश्न माहुः । यस्मात् कारणादध्वर्युः सर्वानन्यानृत्विजः सम्प्रेष्यत्येव, न तूदास्ते, तथा सत्यृत्विगन्तरवत् ग्रावस्तुदप्यध्वर्युणा सम्प्रेषणीयः ? तत्र नास्ति । कस्मात् कारणात् असम्प्रेषित 'एषः' ग्रावस्तुत् 'एताम्' ऋचं प्रारभत इति प्रष्टुणा मभिप्रायः । तत्रेद मुत्तरम्— येयं मृग् ग्रावस्तोत्रसम्बन्धिनी विद्यते, सेयं मनःस्वरूपा, मनश्चेद मिन्द्रियान्तरेण केनचिदपि असम्प्रेषित मेव प्रवर्त्तते ; तस्मात् 'एषः' ग्रावस्तुत् सम्प्रैषनिरपेक्ष एव 'एतां' स्तोत्रीया मृचं प्रतिपद्यते ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां प्रथमाध्याये
( षड्विंशाध्याये ) द्वितीयः खण्डः ॥ २ ॥

---

॥ अथ तृतीयः खण्डः ॥

वाग्वै सुब्रह्मण्या तस्यै सोमो राजा वत्सः सोमे राजनि क्रीते सुब्रह्मण्या माह्वयन्ति यथा धेनु मुपह्वयेत् तेन वत्सेन यजमानाय सर्वान् कामान् दुह्रे सर्वान् हास्मै कामान् वाग् दुग्धे य एवं वेद तदाहुः किं सुब्रह्मण्यायै सुब्रह्मण्यात्व मिति वागेवेति ब्रूयाद्वाग्वै ब्रह्म च सुब्रह्म चेति तदाहुरथ कस्मादेनं

पुमांसं सन्तं स्त्री मिवाचक्षत इति वाग्घि सुब्रह्म-ण्येति ब्रूयात् तेनेति तदाहुर्यदन्तर्वेदीतर ऋत्विज आर्त्विज्यं कुर्वन्ति * बहिर्वेदि सुब्रह्मण्या कथ मस्या-न्तर्वेद्यार्त्विज्यं कृतं भवतीति वेदेर्वा उत्कर मुत्-किरन्ति यद्देवोत्करे तिष्ठन्नाह्वयतीति ब्रूयात् तेनेति तदाहुरथ कस्मादुत्करे तिष्ठन्त्सुब्रह्मण्या माह्वयती-त्यृषयो वै सत्र मासत तेषां यो वर्षिष्ठ आसीत्त मब्रु-वन्त्सुब्रह्मण्या माह्वय त्वं नो नेदिष्ठाद् देवान् ह्वयि-ष्यसीति वर्षिष्ठ मेवैनं तत् कुर्वन्त्यथो वेदि मेव तत् सर्वां प्रीणाति तदाहुः कस्मादस्या ऋषभं दक्षिणा मभ्याजन्तीति वृषा वा ऋषभो योषा सुब्र-ह्मण्या तन्मिथुनं तस्य मिथुनस्य प्रजात्या इत्यु-पांशु पात्नीवतस्याग्नीध्रो यजति रेतो वै पात्नीवत उपांश्विव वै रेतसः सिक्तिर्नानुवषट् करोति संस्था वा एषा यदनुवषट्कारो नेद्रेतः संस्थापयानीत्य-संस्थितं वै रेतसः समृद्धं तस्मान्नानुवषट्करोति नेष्टुरुपस्थ आसीनो भक्षयति पत्नीभाजनं वै नेष्टा ऽग्निः पत्नीषु रेतो दधाति प्रजात्या अग्निनैव तत् पत्नीषु रेतो दधाति प्रजात्यै प्र जायते प्रजया पशु-भिर्य एवं वेद दक्षिणा अनु सुब्रह्मण्या सन्तिष्ठते

* "कुर्वन्तीति" क।

वाग्वै सुब्रह्मण्यान्नं दक्षिणान्नाद्य एवं तद्वाचि यज्ञ मन्ततः प्रतिष्ठापयन्ति प्रतिष्ठापयन्ति ॥ ३ ॥

॥ इत्यैतरेयब्राह्मणे षष्ठपञ्चिकायां प्रथमोऽध्यायः ॥१॥

ग्रावस्तुत ऋत्विज कर्त्तव्य मभिधाय सुब्रह्मण्याख्यस्य ऋत्विजः कर्त्तव्य निरूपयति—"वाग्वै सुब्रह्मण्या, तस्यै सोमो राजा वत्सः ; सोमे राजनि क्रीते सुब्रह्मण्या माह्वयन्ति, यथा धेनु मुपह्वयेत् तेन वत्सेन; यजमानाय सर्वान् कामान् दुहे"—इति। 'सुब्रह्मण्या'-शब्देन "इन्द्रागच्छ हरिव आगच्छ"—इत्यादिर्निगद उच्यते *। सा च सुब्रह्मण्या वागेव, शब्दरूपैव सती धेनुसदृशी। तस्याः सुब्रह्मण्यायाः धेनोः सोमो राजा वत्सस्थानीयः। तस्मात् सोमक्रयादूर्द्धम् ऋत्विजः तत्प्रयोगेषु सुब्रह्मण्या माह्वयेयुः, तन्निगदं पठेयु-रित्यर्थः। यथा लोके दोहनार्थं काञ्चिद्धेनुं तदीयवत्सप्रदर्शनेन समीपं प्रत्याह्वयते, तद्वदेतत् द्रष्टव्यम्। एतेनाह्वानेन यजमानाय सर्वान् कामान् 'दुहे' सम्पादयति॥ वेदनं प्रशंसति— "सर्वान् ह्यस्मै कामान् वाग् दुहे य एवं वेद"—इति॥

प्रश्नोत्तराभ्यां सुब्रह्मण्यां प्रशंसति—"तदाहु किं सुब्रह्मण्यायै सुब्रह्मण्यात्व मिति ; वागेवेति ब्रूयाद्,— वाग्वै ब्रह्म च सुब्रह्म चेति"—इति। 'तत्' तत्र सुब्रह्मण्याख्ये निगदरूपे † मन्त्रे नाम-

---

*, † 'सुब्रह्मण्या'-नाम्ना निगदोऽयं यजुर्विशेष एव, मीमांसायां तथैव सिद्धान्तितत्वात् ( जै० सू० २।१।३८—४५ )। शतपथब्राह्मणे पठित, सामान्यतो व्याख्यातश्च ( ३ ९४. २८. )। सामवेदीयषड्विंशब्राह्मणे त्वयं समग्र- पठितो व्याख्यातश्च, सामेति च निर्दिष्ट. ( १ १.२ )। तथा सामकल्पसूत्र लाट्यायनके प्रपाठक प्रथमे विहित ( १.२ ), सुब्रह्मण्या नाम सामवेदीयलिङ्गा गीयतेऽपि, तथाप्यस्मिन् सामेति च व्यपदिश्यते। तथ

प्रश्नाभिप्रायः। तस्येदं मुत्तरम्— योऽयं दक्षिणालेन नीयमानः ऋषभ', सोऽयं 'वृषा वै' सेचनसमर्थः पुरुषस्वरूप एव ; सुब्रह्मण्या तु स्त्रीलिङ्गशब्दाभिधेयत्वाद्योषिद्रूपा ; तदुभयं मिथुनं भवति। तस्य मिथुनस्य 'प्रजात्यै' प्रजोत्पादनार्थं ऋषभानयन मित्युत्तर-वादिनोऽभिप्राय ॥

सुब्रह्मण्यस्य कर्तव्यं मुक्का आग्नीध्रस्यर्त्विजः कर्तव्यं विधत्ते— "उपांशु पात्नीवतस्याग्नीध्रो यजति ; रेतो वै पात्नीवत उपांश्विव वै रेतसः सिक्तिः"–इति। पात्नीवताख्यो यो ग्रहविशेष', तस्य मन्त्रे 'उपांशु' शनैरुच्चार्य आग्नीध्रो यजेत्। योऽयं 'पात्नीवतः' ग्रहः स रेतसः स्वरूपम् ; लोकेऽपि रेतसः 'सिक्तिः' सेचनम् 'उपांश्विव वै' ध्वनि मन्तरेण रहस्येव क्रियते। अतस्तत्साम्यायं मुपांशुत्वं युक्तम् ॥

अत्र पात्नीवतग्रहे "सोमस्याग्ने वीहि"–इत्येत मनुवषट्कारं¹ निषेधति— "नानुवषट् करोति ; संस्था वा एषा यदनुवषट्-कारो नेद्रेतः संस्थापयानीत्यसंस्थितं वै रेतसः समृद्धं ; तस्मान्नानु-वषट् करोति"–इति। सर्वत्र ग्रहेषु वषट्कारानुवषट्काराभ्यां हूयते ; अत्र तु पात्नीवतग्रहे वषट्कारहोम एव एव, न त्वितरः। तत्र हेतुः "संस्था वै"–इत्यादिः। योऽय मनुवषट्कारो-ऽस्ति, सोऽयं 'संस्था वै' ग्रहस्य समाप्तिरेव। तथा सति स पात्नी-वतग्रहरूपं रेतः 'नेत् संस्थापयानि' सर्वथा समाप्तिं न करवा-णीति अभिप्रेत्य तत्समाप्तौ भीतो भवेत्। 'असंस्थितम्' असमाप्त मनुपरतं रेतसः सेचनं अपत्योत्पत्त्या समृद्धं भवति ; तस्मादेव नानुवषट् कुर्यात्। तथाच यज्ञगाथां पठन्ति—

---

¹ Q १ भा० १६२ पृ० १४ पं०, २ भा० २२ पृ० १० पं०। आश्व० ५, ५, १८।

"ऋतुयाजान् द्विदेवत्यान् यश्च पात्नीवतो ग्रहः।
आदित्यग्रहसावित्री तान्स्म मानुवषट्क्रिया:"—इति * ॥

अथ पात्नीवतग्रहभक्षणे देयं विधत्ते— "नेष्टुरुपस्थ आसीनो भक्षयति; पत्नीभाजनं वै नेष्टाऽग्निः पत्नीषु रेतो दधाति प्रजात्या अग्निनैव तत् पत्नीषु रेतो दधाति प्रजात्यै"—इति। योऽयं आग्नीध्रः पात्नीवतं यजति, सोऽयं नेष्टुः 'उपस्थे' समीपे आसीनः शेषं भक्षयेत्। नेष्टृनामक ऋत्विक् 'पत्नीभाजनं वै' पत्नीस्थानीयः; "नेष्टः पत्नी मुदानय"—इत्येवं † नेष्टृपत्न्योरान-यनद्वारा सम्बन्धश्रवणात्। अतस्तत्समीपे भक्षणे सत्यग्निरूप आग्नीध्रः पत्नीषु रेतः स्थापयति; तच्च प्रजननाय सम्पद्यते। 'तत्' तेनानुष्ठानेन यजमानोऽपि 'अग्निनैव' अग्न्यनुग्रहेणैव पत्नीषु रेतो ऽवस्थापयति। तदपि 'प्रजात्यै' सम्पद्यते। वेदनं प्रशंसति— "प्र जायते प्रजया पशुभिर्य एवं वेद"—इति ॥

अथ सुब्रह्मण्याविषये कञ्चिद्विशेषं विधत्ते— "दक्षिणा अनु सुब्रह्मण्या सन्तिष्ठते; वाग्वै सुब्रह्मण्यान्नं दक्षिणान्नाद्य एव तद्वाचि यज्ञ मन्ततः प्रतिष्ठापयन्ति प्रतिष्ठापयन्ति"—इति। दक्षिणासु नीतासु ता दक्षिणाः 'अनु' पश्चात् सुब्रह्मण्या 'सन्तिष्ठते' समाप्यते। सुब्रह्मण्याया वाग्रूपत्वात् दक्षिणायायान्नरूपत्वात् 'अन्ततः' समाप्तिवेलाया मिमं यज्ञं 'अन्नाद्ये वाचि' द्वयोरेवैतयोः 'प्रतिष्ठा-पयन्ति' प्रतिष्ठितं कुर्वन्ति ॥

---

* आश्व० श्रौ० ५. ५-२१. द्र० ।

† तै० सं० ६.५.८.६। "अथ समेष्यति— अग्नीन्नेष्टुरुपस्थ मासीद, नेष्टः पत्नी मुदानय, उद्गात्रा सङ्ख्यापय ०—० यथा वा अग्नीद, योषा नेष्टा, मिथुन मेवैतत् प्रजननं क्रियते, उदानयति नेष्टा पत्नीं, ता मुद्गात्रा सङ्ख्यापयति"—इति आप० श्रौ० ॥ ४.२.१०,१८ ।

अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायां प्रथमाध्याये
( षड्विंशाध्याये ) तृतीयः खण्डः ॥ ३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायाः प्रथमाध्यायः ॥

## ॥ अथ द्वितीयाध्यायः ॥

( ब्र )

॥ अथ प्रथमः खण्डः ॥

---

॥ ॐ ॥ देवा वै यज्ञमतन्वत तांस्तन्वानानसुरा अभ्यायन्यज्ञवेशस मेषां करिष्याम इति तान् दक्षिणत उपायन् यत एषां यज्ञस्य तनिष्ठ ममन्यन्त ते देवाः प्रतिबुध्य मित्रावरुणौ दक्षिणतः पर्यौहंस्ते मित्रावरुणाभ्या मेव दक्षिणतः प्रातःसवने ऽसुररक्षांस्यपाघ्नत तथैवैतद्यजमाना मित्रावरुणाभ्या मेव दक्षिणतः प्रातःसवने ऽसुररक्षांस्यपघ्नते तस्मान् मैत्रावरुणं मैत्रावरुणः प्रातःसवने शंसति मित्रावरुणाभ्यां हि देवा दक्षिणतः प्रातःसवने ऽसुररक्षांस्यपाघ्नत ते वै दक्षिणतो ऽपहता असुरा मध्यतो यज्ञं प्राविशंस्ते देवाः प्रतिबुध्येन्द्रं मध्यतो ऽदधुस्त इन्द्रेणैव मध्यतः प्रातःसवने ऽसुररक्षांस्यपाघ्नत तथैवैतद्यजमाना इन्द्रेणैव मध्यतः प्रातःसवने ऽसुररक्षांस्यपघ्नते तस्मादैन्द्रं ब्राह्मणाच्छंसी प्रातःसवने शंसतीन्द्रेण हि देवा मध्यतः प्रातःसवने ऽसुररक्षांस्यपाघ्नत ते वै मध्यतो ऽपहता असुरा उत्त-

रतो यज्ञं प्राविशंस्ते देवाः प्रतिबुध्येन्द्राग्नी उत्तरतः पर्यौहंस्त इन्द्राग्निभ्या मेवोत्तरतः प्रातःसवने ऽसुररक्षांस्यपाघ्नत तथैवैतद्यजमाना इन्द्राग्निभ्या मेवोत्तरतः प्रातःसवने ऽसुररक्षांस्यपघ्नते तस्मादैन्द्राग्न मच्छावाकः प्रातःसवने शंसतीन्द्राग्निभ्यां हि देवा उत्तरतः प्रातःसवने ऽसुररक्षांस्यपाघ्नत ते वा उत्तरतो ऽपहता असुराः पुरस्तात्पर्यद्रवंस्तमनीकतस्ते देवाः प्रतिबुध्याग्निं पुरस्तात् प्रातःसवने पर्यौहंस्ते ऽग्निनैव पुरस्तात् प्रातःसवने ऽसुररक्षांस्यपाघ्नत तथैवैतद्यजमाना अग्निनैव पुरस्तात् प्रातःसवने ऽसुररक्षांस्यपघ्नते तस्मादाग्नेयं प्रातःसवन मप पाप्मानं हते य एवं वेद ते वै पुरस्तादपहता असुराः पश्चात्परीत्य प्राविशंस्ते देवाः प्रतिबुध्य विश्वान् देवानात्मानं पश्चात्तृतीयसवने पर्यौहंस्ते विश्वैरेव देवैरात्मभिः पश्चात् तृतीयसवने ऽसुररक्षांस्यपाघ्नत तथैवैतद्यजमाना विश्वैरेव देवैरात्मभिः पश्चात्तृतीयसवने ऽसुररक्षांस्यपघ्नते तस्माद् वैश्वदेवं तृतीयसवन मप पाप्मानं हते य एवं वेद ते वै देवा असुरानेव मपाघ्नत सर्वस्मादेव यज्ञात् ततो वै देवा अभवन् परा सुरा भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो

भवति य एवं वेद ते देवा एवं क्लृप्तेन यज्ञेनापासु-रान् पाप्मान मघ्नताजयन्त्स्वर्गं लोक मय ह वै विषन्तं पाप्मानं भ्रातृव्यं हते जयति स्वर्गं लोकं य एवं वेद यश्चैवं विद्वान्त्सवनानि कल्पयति ॥ १ (४) ॥

यावत्सोतोऽर्व्वीवसमावेष्टितमूर्द्धा
मन्त्रैरन्यैरवुंदसङ्गं विदृणक्ति ।
रिक्यन्त्यो वाभिष्टवर्षीयाः कथ मेताः
सुब्रह्मण्याख्याम मितीह प्रवदन्ति ॥ १ ॥

यावत्सुत् सुब्रह्मण्याख्ययोर्ऋत्विजो. कर्त्तव्य मुक्ता मैत्रावरुण-ब्राह्मणाच्छंस्यच्छावाकनाम्नां होत्रकाणां मस्त्राणि विधातु माख्या-यिका माह—"देवा वै यज्ञ मतन्वत; तांस्तन्वानानसुरा अभ्यायन्, यज्ञवेशस मेषां करिष्याम इति; तान् दक्षिणत उपायन्; यत एषा यज्ञस्य तनिष्ठ ममन्यन्त; ते देवाः प्रतिबुध्य मित्रावरुणौ दक्षिणत. पर्य्यौहंस्ते मित्रावरुणाभ्या मेव दक्षिणतः प्रातस्सवने ऽसुररक्षांस्यपाघ्नत; तथैवैतद्यजमाना मित्रावरुणाभ्या मेव दक्षि-णतः प्रातस्सवने ऽसुररक्षांस्यपघ्नते; तस्मात् मैत्रावरुण मैत्रावरुणः प्रातस्सवने शंसति; मित्रावरुणाभ्यां हि देवा दक्षिणतः प्रात-स्सवने ऽसुररक्षांस्यपाघ्नत"—इति । यदा देवा यज्ञ मकुर्वत, तदा 'तान्' कुर्वाणान्' देवान् असुराः अभित आगच्छन् । असुर-शब्देन रक्षांस्युपलक्ष्यन्ते । 'एषां' देवानां 'यज्ञवेशस' यज्ञविघातं करिष्याम इत्यसुराणा मभिप्रायः । 'एषां' देवानां सम्बन्धिनो यज्ञोपलक्षितस्य देवयजनदेशस्य 'यतः' यस्मिन् दक्षिणदेशभागे

'तनिष्ठम्' अतिशयेन तनुरूपं मत्यन्तदुर्बलं स्थानमिदमित्यसुराः 'अमन्यन्त' सर्वथा मृत्विजां माहवनीयादिदेशेष्ववस्थितत्वेन सदसो दक्षिणभागे रक्षकाभावात् दुर्बलस्थानमित्यसुराणां बुद्धिरासीत्। 'दक्षिणतः' तस्मिन् सदसो दक्षिणभागे, 'तान्' देवान् असुराः 'उपायन्' प्राप्तवन्तः। 'ते' देवाः तस्कररूपेण समागतान् असुरान् प्रतिबुध्य तस्मिन् दक्षिणतः 'मित्रावरुणौ' द्वौ देवौ 'पर्यौहन्' रक्षकत्वेनावस्थापितवन्तः। ततः 'ते' देवाः मित्रावरुणाभ्यामेव धातुकाभ्यां मत्यन्तशूराभ्यां दक्षिणदेशे प्रातःसवनकाले तानसुरान् रक्षांसि चापसारयन्ति। तस्मादपसारणार्थं मित्रावरुणदेवताकं शस्त्रम् "आ नो मित्रावरुणा"–इत्यादिकं ( सं० ३.६२. १६–१८. ) मैत्रावरुणाख्यः ऋत्विक् प्रातःसवने शंसेत्। यस्माद्देवा मित्रावरुणाभ्यामपसारितवन्तः, तस्मात् मैत्रावरुणं शस्त्रं युक्तम् *॥

उपाख्यानमुखेन मैत्रावरुणस्य शस्त्रं विधाय तथैव ब्राह्मणाच्छंसिनः शस्त्रं विधत्ते— "ते वै दक्षिणतो ऽपहता असुरा मध्यतो यज्ञं प्राविशंस्ते देवाः प्रतिबुध्येन्द्रं मध्यतो दधुस्त इन्द्रेणैव मध्यतः प्रातःसवने ऽसुररक्षांस्यपाघ्नत ; तथैवैतद्यजमाना इन्द्रेणैव मध्यतः प्रातःसवने ऽसुररक्षांस्यपघ्नते ; तस्मादैन्द्रं ब्राह्मणाच्छंसी प्रातःसवने शंसतीन्द्रेण हि देवा मध्यतः प्रातःसवने ऽसुररक्षांस्यपाघ्नत"–इति। 'ते' दक्षिणदेशादपसारिता असुराः, प्राचीनवंशस्य सदसश्च मध्ये यज्ञभूमिं प्राविशन्। "आ याहि सुषुमा हि त"–इत्यादिकं ( सं० ८.१०.१–३. ) इन्द्रदेवताकं शस्त्रम् †। अन्यत् पूर्ववद् व्याख्येयम् ॥

* । आप० श्रौ० ५.१०.१८. इ०।

इदानीं मरुत्वतीयस्य शस्त्रं विधत्ते—"ते वै मध्यतो ऽपहता असुरा उत्तरतो यज्ञं प्राविशंस्ते देवाः प्रतिबुध्येन्द्राग्नी उत्तरतः पर्यौहंस्त इन्द्राग्निभ्या मेवोत्तरतः प्रातस्सवने ऽसुररक्षांस्यपाघ्नत ; तथैवैतद्यजमाना इन्द्राग्निभ्या मेवोत्तरत. प्रातस्सवने ऽसुररक्षांस्यपघ्नते ; तस्माऐन्द्राग्न मरुत्वतीयः प्रातस्सवने शंसतीन्द्राग्निभ्यां हि देवा उत्तरतः प्रातस्सवने ऽसुररक्षांस्यपाघ्नत"–इति। "इन्द्राग्नी आगतं सुतम्"–इत्यादिकम् ( सं० ३. १२. १–३. ) 'ऐन्द्राग्नं' शस्त्रम् *। अन्यत् पूर्ववद् व्याख्येयम् ॥

प्रातस्सवनाभिमानी देवोऽग्निरित्येत मर्थं दर्शयति— "ते वा उत्तरतो ऽपहता असुराः पुरस्तात् पर्यद्रवन्समनीकास्ते देवा प्रतिबुध्याग्निं पुरस्तात् प्रातस्सवने पर्यौहंस्ते ऽग्निनैव पुरस्तात् प्रातस्सवने ऽसुररक्षांस्यपाघ्नत ; तथैवैतद्यजमाना अग्निनैव पुरस्तात् प्रातस्सवने ऽसुररक्षांस्यपघ्नते ; तस्मादाग्नेयं प्रातस्सवनम्"–इति। 'ते' इन्द्राग्निभ्या मुत्तरतो ऽपवारिता असुराः 'समनीकास.' ,सङ्ग्रामार्थं समीचीनसैन्यैर्युक्ताः, 'पुरस्ताद्'–यज्ञभूमेः पूर्वस्यां दिशि 'पर्यद्रवन्' परितः प्राप्ताः। 'ते' देवाः, प्रतिबुध्येत्यादि पूर्ववत्। यस्मात् पूर्वस्यां दिशि रक्षकोऽग्निस्तस्मादिदं प्रातस्सवन मग्निसम्बन्धं द्रष्टव्यम् ॥ वेदनं प्रशंसति— "अप पाप्मानं हते य एवं वेद"–इति ॥

प्रातस्सवनाभिमानिन मग्निं प्रशस्य तृतीयसवनाभिमानिनो विश्वान् देवान् प्रशंसति— "ते वै पुरस्तादपहता असुराः पश्चात्परीत्य प्राविशंस्ते देवाः प्रतिबुध्य विश्वान् देवानात्मानं पश्चात् तृतीयसवने पर्यौहंस्ते विश्वैरेव देवैरात्मभि पश्चात् तृतीयसवने

* आश्व० श्रौ० ५, १०-२८, ३०।

ऽसुररक्षांस्यपाघ्नत ; तथैवैतद्यजमाना विश्वैरेव देवैरात्मभिः पश्चात् तृतीयसवने ऽसुररक्षांस्यपघ्नते ; तस्माद् वैश्वदेवं तृतीयसवनम्"–इति। अग्निना प्राच्या दिशो ऽपसारिताः असुरा रक्षांसि च प्रतीच्यां दिशि परितो गत्वा यज्ञभूमिं प्राविशन्। देवाश्च प्रतिबुध्य विश्वान् देवान् तृतीयसवनवेलायां प्रतीच्यां दिशि रक्षार्थं प्रेषितवन्तः। आत्मान मिति विश्वेषां देवानां विशेषणम् ; ये पेरका देवाः तेषा मात्मभूतान् स्वशरीरवदत्यन्त मासान् विश्वान् देवानित्यर्थः *। तैर्विश्वैर्देवैरितरदेवात्मभूतैरसुराणां तृतीयसवने अपहतत्वादिदं तृतीयसवनं वैश्वदेवम् ॥ वेदनं प्रशंसति—"अप पाप्मानं हते य एवं वेद"–इति ॥

पुनरपि प्रदेशान्तरे प्रवेशशङ्कां वारयितु मसुराणां सर्वात्मना विनाशं दर्शयति— "ते वै देवा असुरानेव मपाघ्नत सर्वस्मादेव यज्ञात्, ततो वै देवा अभवन् परासुराः"–इति। उक्तक्रमेण सर्वतो ऽपसारितेष्वसुरेषु देवाः असुररहिता अभवन्, असुराश्च पराभूताः॥ वेदनं प्रशंसति— "भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद"–इति। 'आत्मना' स्वेनैव रूपेण असुररहितेन सुखी भवति ; द्वेषी तु पाप्मा पराभवति॥

उपाख्यान मुपसंहरति— "ते देवा एवं क्लृप्तेन यज्ञेनापासुरान् पाप्मान मघ्नताजयन्त्स्वर्गं लोकम्"–इति। 'एवं' पूर्वोक्तप्रकारेण क्लृप्तेन मित्रावरुणादिभिर्दक्षिणादिदेशविशेषेषु रचितो यो यज्ञस्तेन पापरूपानसुरानपहत्य देवाः स्वर्गं लोकं प्राप्नुवन्॥ वेदनं तत्पूर्वक मनुष्ठानञ्च प्रशंसति—"अप ह वै द्विषन्तं पाप्मानं भ्रातृव्यं हते ; जयति स्वर्गं लोकं य एवं वेद, यश्चैवं विद्वांस्त्व-

* 'आत्मानम्'—इति पदे श्रस. (पा० ७.१.३९.) सू: द्रष्टव्यम्।

मानि कल्पयति"–इति । सवनगतानां होत्रकाणां मैत्रावरुणादिशस्त्रसम्पादन मेव सवनकल्पनम् ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां द्वितीयाध्याये
( सप्तविंशाध्याये ) प्रथमः खण्डः ॥ १ ( ४ ) ॥

---

॥ अथ द्वितीयः खण्डः ॥

स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति प्रातस्सवन, ऽहरेव तदह्नो ऽनुरूपं कुर्वन्त्यवरेणैव तदह्नापर मह्नरभ्यारभन्ते ऽथ तथा न मध्यन्दिने शैवैं पृष्ठानि तानि तस्मै न तस्थानानि यत् स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्युस्तथैव विभक्त्या तृतीयसवने न स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति ॥ २ (५) ॥

अथ तेषां होत्रकाणा महर्गणेषु शस्त्रेषु प्रकारविशेषं विधत्ते —"स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति ; प्रातस्सवने ऽहरेव तदह्नो ऽनुरूपं कुर्वन्त्यवरेणैव तदह्नापर मह्नरभ्यारभन्ते"–इति । पृष्ठ्यषडहादिष्वहर्गणेषु बहून्यहानि विद्यन्ते ; तेषु प्रातस्सवने द्वितीयस्याह्नो यः स्तोत्रियस्तृचः, तं तृचं प्रथमेऽहनि स्तोत्रियस्य तृचस्यानुरूपं कुर्युः । सामगा यस्मिंस्तृचे स्तोत्रं कुर्वन्ति, स तृचः 'स्तोत्रियः' ; तस्य स्तोत्रियस्य छन्दोदेवतादिना सदृशोऽन्यो

शंसति ता वा एताः स्वर्गस्य लोकस्य नावः सम्पारिण्यः स्वर्गमेवैताभिर्लोकमभिसन्तरन्ति ॥ ३(६) ॥

होत्रकाणां स्तोत्रियानुरूप सुक्त्वा आरम्भणीया ऋचो विधत्ते —"अथात आरम्भणीया एव"—इति। 'अथ' स्तोत्रियानुरूपानन्तरम्, यस्मात् शस्त्रस्योत्तरभाविन आरम्भो युक्तः, 'अतः' अस्मात् कारणात् 'आरम्भणीयाः' ऋचो विधीयन्ते। 'एव'कारो ऽवर्गणेषु चोदकमासाया ऋचो व्यावृत्यर्थः ॥

तत्र मैत्रावरुणाख्यस्य होत्रकस्य आरम्भणीयां दर्शयति— "ऋजुनीती नो वरुण इति मैत्रावरुणस्य, मित्रो नयतु विद्वानिति; प्रणेता वा एष होत्रकाणां यन्मैत्रावरुणस्तस्मादेषा प्रणेतृमती भवति"—इति। "ऋजुनीती"—इत्यस्या ऋचि ( सं० १. ८०. १. ) मित्रो नयत्विति द्वितीयः पादः। तत्र नयत्विति प्रणेतृवाचकं पदं दृश्यते, मैत्रावरुणश्च होत्रकाणां प्रणेता 'प्रवर्त्तकः'; तस्मादृगेषा प्रणेतृवाचकशब्दवती भवति। तच्च युक्त मित्यर्थः ॥

अन्यस्य आरम्भणीयां विधत्ते—"इन्द्रं वो विश्वतस्परीति ब्राह्मणाच्छंसिनो हवामहे जनेभ्य इतीन्द्र मेवैतयाहरहर्निह्वयन्ते" —इति। "इन्द्रं वः"—इत्यस्या ऋचि ( सं० १.७,१०. ) हवामह इति द्वितीयः पादः। तत्राह्वानवाचिनः शब्दस्य विद्यमानत्वात् 'एतया' ऋचा प्रतिदिन मिन्द्रं नितरा माहूयन्ते॥ वेदनं प्रशंसति— "न हैषां विहवे ऽन्य इन्द्रं वृङ्क्ते, यत्रैवं विद्वान् ब्राह्मणाच्छंसेता मप्रदः शंसति"—इति। 'एवं विद्वान्' इन्द्राह्वानप्रतिपादिकेय मृगिति विद्वान्, यत्र शंसति, तस्मिन् 'एषां' यजमानानां सम्बन्धिनि 'विहवे' विशेषेणाह्वानयुक्ते यज्ञे 'अन्यः'

कश्चिच्छत्रुः इन्द्रं 'न ह' नैव 'हृह्ले' वर्जयति, एतदीये यज्ञे इन्द्रागमनं निराकर्तुं न शक्नोतीत्यर्थः ॥

अन्यस्यारम्भणीयां विधत्ते — "यत् सोम आ सुते नर इत्यच्छावाकस्येन्द्राग्नी अजोहवुरितीन्द्राग्नी एवैतयाहरहर्निह्वयन्ते ; न हैषां विहवे ऽन्य इन्द्राग्नी हृह्ले यत्रैवं विद्वानच्छावाक एतामहरहः शंसति"–इति । "यत्सोमः"–इत्यस्या मृचि ( सं० ७, ९४.१०. ) इन्द्राग्नी इति द्वितीयः पादः । अजोहवुरिति होमार्थे आह्वानार्थो वा धातुः * । अन्यत् पूर्ववद् व्याख्येयम् ॥

उक्तानामारम्भणीयानामृचां तयं प्रशंसति—"ता वा एताः स्वर्गस्य लोकस्य नावः सम्पारिण्यः, स्वर्गं मेवैताभिर्लोकमभि सन्तरन्ति"–इति । 'ताः' पूर्वोक्ताः "ऋजुनीती", "इन्द्रं वो", "यत् सोम"–इत्येतास्तिस्रः स्वर्गप्राप्तये नौस्थानीयाः, सम्यक् पारं नयन्तीति 'सम्पारिण्यः' । यथा नावा नदीं तरति, तथा 'एताभिः' ऋग्भिः स्वर्गम् 'अभि'-लक्ष्य नदीस्थानीयं प्रौढं मार्गं सम्यक् तरन्ति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां द्वितीयाध्याये ( सप्तविंशाध्याये ) तृतीयः खण्डः ॥ ३ ( ६ ) ॥

---

* "हेम, स्पर्धायां शब्दे च"–इति धा० १००८, "हु दानादानयोः"–इति जु० १ ।

यस्तृच', स: "अनुरूप:" * । तथा सति सर्वेष्वहस्सु एकैकस्मिंस्तृचे सामगा स्तोत्रं कुर्वन्ति, ते सर्वे तृचाः स्तोत्रियाः । तत्र सर्वत्र उत्तरदिनगतं स्तोत्रियम् पूर्वदिने स्तोत्रियस्यानन्तरभाविन मनुरूपं कुर्यात् । अयं च नियमो होत्रकाणां शस्त्रेषु प्रातस्सवने द्रष्टव्यः । एवं सत्युत्तर मह्नरेव पूर्वस्याह्नो ऽनुरूपं कुर्वन्ति । 'तत्' तथा सति 'अपरेणैव' अतीतेनैव पूर्वेणाह्ना 'अपरम्' उत्तर मह्नरभिमुखीकृत्य 'आरभन्ते' उपक्रमन्ते ॥

माध्यन्दिनसवनेऽप्यस्य न्यायस्य प्रसक्तौ तं निषेधति— "अथ तथा न मध्यन्दिने, श्रीर्वै पृष्ठानि ; तानि तस्मै न तत्स्थानानि, यत् स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्युः"–इति। 'अथ' प्रातस्सवनानन्तरं माध्यन्दिने 'तथा न' तेन पूर्वोक्तप्रकारेण न कुर्यादिति शेषः। तत्र हेतु — श्रीर्वै पृष्ठानीति। यानि मध्यन्दिनसवने पृष्ठस्तोत्राणि, तानि 'श्रीर्वै' सम्पद्रूपाण्येव ; श्रीरूपत्वेन सामगैः स्तुतत्वात् । न हि श्रीरूपाणां स्ततन्त्राणां मन्यानुवृत्तिलक्षणमनुरूपत्वं युक्तम् ; तस्मात् 'तानि' पृष्ठस्तोत्राणि 'तस्मै' तस्मिन् माध्यन्दिने सवने 'तत्स्थानानि' प्रातस्सवनस्थानानि न भवन्ति, तत्सदृशानि न भवन्तीत्यर्थः। प्रातस्सवने ह्युत्तरदिनगतं स्तोत्रियं पूर्वदिनगतस्तोत्रियस्यानुरूपं कुर्वन्ति । 'यत्' यस्मात् कारणादपि तथा कुर्युः, तादृशं कारणं नास्ति ; तुल्यच्छन्दस्त्वादीनामभावात् । 'तस्मात्' पृष्ठस्तोत्राणां पूर्वोत्तरदिनेषु सादृश्याभावात् प्रातस्सवनन्यायोऽत्र न घटते ॥

माध्यन्दिनसवनन्यायं तृतीयसवनेऽतिदिशति—"तथैव विभक्त्या तृतीयसवने न स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति"–इति ।

* ३ आ॰ २०, ११६, ११९, १६२ पृ॰ द्र॰ ।

विभक्तिशब्दः प्रकारवाची ; तेनैव माध्यन्दिनोक्तप्रकारेण तृतीयसवनेऽप्युत्तरदिनगतं स्तोत्रियं पूर्वदिनगतस्य स्तोत्रियस्यानुरूपं न कुर्वन्ति ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां द्वितीयाध्याये
( सप्तविंशाध्याये ) द्वितीयः खण्डः ॥ २ ( ५ ) ॥

---

॥ अथ तृतीयः खण्डः ॥

अथात आरम्भणीया एवं ऋजुनीती नो वरुण इति मैत्रावरुणस्य मित्रो नयतु विद्वानिति प्रणेता वा एष होत्रकाणां यन् मैत्रावरुणस्तस्मादेषा प्रणेतृमती भवतीन्द्रं वो विश्वतस्परीति ब्राह्मणाच्छंसिनो हवामहे जनेभ्य इतीन्द्र मेवैतयाहरहर्निह्वयन्ते न हैषां विहवे ऽन्य इन्द्रं वृङ्क्ते यत्रैवं विद्वान् ब्राह्मणाच्छंसैता महरहः शंसति यत् सोम आ सुते नर इत्यच्छावाकस्येन्द्राग्नी अजोहवुरितीन्द्राग्नी एवैतयाहरहर्निह्वयन्ते न हैषां विहवे ऽन्य इन्द्राग्नी वृङ्क्ते यत्रैवं विद्वानच्छावाक एता महरहः

शंसति ता वा एताः स्वर्गस्य लोकस्य नावः सम्पारिण्यः स्वर्गमेवैताभिर्लोकमभिसन्तरन्ति ॥ ३(६) ॥

होत्रकाणां स्तोत्रियानुरूप सुक्ता आरम्भणीया ऋचो विधत्ते—"अथात आरम्भणीया एव"–इति। 'अथ' स्तोत्रियानुरूपानन्तरम्, यस्मात् शस्त्रस्तोत्रभाविन आरम्भो युक्तः, 'अतः' अस्मात् कारणात् 'आरम्भणीयाः' ऋचो विधीयन्ते। 'एव'कारो ऽवर्गणेषु चोदकमाशाया ऋचो व्यावृत्त्यर्थः ॥

तत्र मैत्रावरुणाख्यस्य होत्रकस्य आरम्भणीयां दर्शयति—"ऋजुनीती नो वरुण इति मैत्रावरुणस्य, मित्रो नयतु विद्वानिति; प्रणेता वा एष होत्रकाणां यन्मैत्रावरुणस्तस्मादेषा प्रणेतृमती भवति"–इति। "ऋजुनीती"–इत्यस्या ऋचि (सं० १. ८०. १.) मित्रो नयत्विति द्वितीयः पादः। तत्र नयत्विति प्रणेतृवाचकं पदं दृश्यते, मैत्रावरुणश्च होत्रकाणां प्रणेता 'प्रवर्त्तकः'; तस्मादेषा प्रणेतृवाचकशब्दवती भवति। तच्च युक्त मित्यर्थः ॥

अन्यस्य आरम्भणीयां विधत्ते—"इन्द्रं वो विश्वतस्परीति ब्राह्मणाच्छंसिनो हवामहे जनेभ्य इतीन्द्र मेवैतयाहरहर्निह्वयन्ते"–इति। "इन्द्रं वः"–इत्यस्या ऋचि (सं० १.७.१०.) हवामह इति द्वितीयः पादः। तत्राह्वानवाचिनः शब्दस्य विद्यमानत्वात् 'एतया' ऋचा प्रतिदिन मिन्द्रं नितरा माह्वयन्ते ॥ वेदनं प्रशंसति—"न हैषां विहवे ऽन्य इन्द्रं हवते, यत्रैवं विद्वान् ब्राह्मणाच्छंसेतद् अहरहः शंसति"–इति। 'एवं विद्वान्' इन्द्राह्वानप्रतिपादिकेय मृगिति विद्वान्, यत्र शंसति, तस्मिन् 'एषां' यजमानानां सम्बन्धिनि 'विहवे' विशेषेणाह्वानयुक्ते यज्ञे 'अन्यः'

कश्चिच्छन्तु इन्द्रं 'न ह' नैव 'ह्वते' वर्जयति, एतदीये यज्ञे इन्द्रागमनं निराकर्त्तुं न शक्नोतीत्यर्थः ॥

अन्यस्यारम्भणीया विधत्ते — "यत् सोम आ सुते नर इत्यच्छावाकस्यैन्द्राग्नी यजोहवुरितीन्द्राग्नी एवैतयाहरहर्निह्वयन्ते ; न हैषां विश्वे ऽथ इन्द्राग्नी ह्वते यथैवं विद्वानच्छावाक एतामहरहः शंसति"–इति । "यत्सोमः"–इत्यस्या ऋचि ( सं० ७, ८४.१०. ) इन्द्राग्नी इति द्वितीयः पादः । यजोहवुरिति होमार्थ आह्वानार्थो वा धातुः * । अन्यत् पूर्ववद् व्याख्येयम् ॥

उक्तानामारम्भणीयानामृचां मर्थं प्रशंसति—"ता वा एताः स्वर्गस्य लोकस्य नावः सम्पारिण्यः, स्वर्गं मेवैताभिर्लोक मभि सन्तरन्ति"–इति । 'ताः' पूर्वोक्ताः "ऋजुनीती", "इन्द्रं वो", "यत् सोम'–इत्येतास्तिस्रः स्वर्गप्राप्तये नौस्थानीयाः, सम्यक् पारं नयन्तीति 'सम्पारिण्यः'। यथा नावा नदीं तरति, तथा 'एताभिः' ऋग्भिः स्वर्गम् 'अभि'-लक्ष्य नदीस्थानीयं मौक्तं मार्गं सम्यक् तरन्ति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां द्वितीयाध्याये
( सप्तविंशाध्याये ) तृतीयः खण्डः ॥ ३ ( ६ ) ॥

---

* "हेञ् स्पर्धायां शब्दे च"–इति धा० १००८, "हु दानादनयोः"–इति जु० १ ।

॥ अथ चतुर्थः खण्डः ॥

अथातः परिधानीया एव ते स्याम देव वरुणेति मैत्रावरुणस्येयं स्व धीमहीत्ययं वै लोक इष मित्यसौ लोकः स्वरित्युभावेवैतया लोकावारभन्ते व्यन्तरिक्ष मतिरदिति ब्राह्मणाच्छंसिनो विवक्तृच स्वर्गं मेवैभ्य एतया लोकं विवृणोति मदे सोमस्य रोचना इन्द्रो यदभिनद्वल मिति सिषासवो वा एते यद्दीक्षितास्तस्मादेषा वलवती भवत्युद्गा आजदङ्गिरोभ्य आविष्कृण्वन् गुहा सतीः अर्वाञ्चं नुनुदे वल मिति सनि मेवैभ्य एतयावरुन्ध इन्द्रेण रोचना दिव इति स्वर्गो वै लोक इन्द्रेण रोचना दिवो दृळ्हानि दृंहितानि च स्थिराणि न पराणुद इति स्वर्ग एवैतया लोके ऽहरहः प्रतितिष्ठन्तो यन्त्याहं सरस्वतीवतोरित्यच्छावाकस्य वाग्वै सरस्वती वाग्वतोरिति हैतदाहेन्द्राग्न्योरवो वृण इत्येतद्ध वा इन्द्राग्न्योः प्रियं धाम यद्वागिति प्रियेणैवैनौ तद्धाम्ना समर्धयति प्रियेण धाम्ना समृध्यते य एवं वेद ॥ ४ (७) ॥

होत्रकाणां गृहारम्भणसाधनभूता ऋचो विधाय समाप्तिसाधनभूता ऋचो विधत्ते— "अथातः परिधानीया एव"-इति ।

'अथ' शस्त्रप्रारम्भानन्तरं यस्मात् 'परिधानं' समापन मपेक्षितम्, तस्मात् परिधानीया ऋचो विधीयन्ते; एवकार प्रकृतव्यावृत्त्यर्थ.॥

एतस्य होत्रकस्य परिधानीयां विधत्ते—"ते स्याम देव वरुणेति मैत्रावरुणस्येयं स्वथ धीमहीत्ययं वै लोक इष मित्यसौ लोकः स्वरित्युभावेवैतया लोकावारभन्ते"–इति। "ते स्याम"–इत्यस्या मृचि ( सं० ७. ६६. ८. ) इषं स्वश्चेति तृतीयः पादः। तत्र इष मित्यनेन पदेनाभीष्टत्वादयं लोको विवक्षितः, स्वरित्यनेन पदेन 'असौ' स्वर्गो लोक.। तथा सति लोकद्वयं 'धीमहि' ध्यायेमेति मन्त्रे ऽभिधानात् 'एतया' ऋचा द्वावपि लोकौ 'आरभन्ते' प्राप्नुवन्ति॥

अन्यस्य परिधानीयां विधत्ते—'व्यन्तरिक्ष मतिरदिति ब्राह्मणाच्छंसिनो विवत्तृचं स्वर्ग मेवैभ्य एतया लोकं विवृणोति"–इति। यस्मिंस्तृचे "व्यन्तरिक्षम्"–इत्यृगेषा ( सं० ८. १४. ७. ) श्रूयते, सोऽयं विशब्दयुक्तत्वात् 'विवत्तृच'-शब्देनाभिधीयते। तेन तृचेन साध्यो यः स्वर्गो लोकः, तम् 'एतया' व्यन्तरिक्ष मित्यृचा यजमानेभ्यो 'विवृणोति' विवृतद्वारं करोति। तस्या मृचि द्वितीयतृतीयपादौ पठति—"मदे सोमस्य रोचना, इन्द्रो यदभिनद्वल मिति"–इति। तस्या ऋचो ऽय मर्थ.— इन्द्रो देवः सोमस्य 'रोचना' रुचिं प्राप्येति शेषः। ततो 'मदे' हर्षे सति अन्तरिक्षं 'व्यतिरत्' विशेषेण यजमानानां गमनयोग्य मकरोत्। 'यद्' यस्मात् कारणात् वलनामान मसुरम् 'अभिनत्' विदारितवान्, तस्मादन्तरिक्षमार्ग- सुगमः॥

अत्र वलभेदन मभिप्रेत्य ता मृचं प्रशंसति—"सिपासवो वा एते यद् दीक्षितास्तस्मादेषा वलवती भवति"–इति। ये

दीक्षिताः सन्ति, ते 'सिषासवः' लुब्धकामाः फलार्थिनः। तस्मात् कारणादेषा 'वलवती' वलनामकासुरभेदप्रतिपादिका कर्त्तव्या भवति। यद्यपीयं मृक् परिधानीया न भवति, तथापि एतदादिके तृचेऽन्तिमाया ऋचः परिधानीयत्वात् तत्प्रदर्शनाय तृच उपक्रान्तः ॥

तस्मिन् प्रथमा मृचं मनूद्य व्याख्याय, द्वितीया मृचं मनूद्य व्याचष्टे—"उद्गा आजदङ्गिरोभ्य आविष्कृण्वन् गुहा सतीः, अर्वाञ्चं नुनुदे वल मिति ( सं० ८.१४.८.) ; सनि मेवैभ्य एतयावरुन्धे"—इति। 'अङ्गिरोभ्यः' महर्षिभ्यः 'सतीः' विद्यमानाः गाः 'उदाजत्' ऊर्ध्वं प्रेरितवान्। किं कुर्वन्? 'गुहा' वलस्यासुरस्य सम्बन्धि गूढं स्थानम् 'आविष्कृण्वन्' प्रकटीकुर्वन् 'अर्वाञ्चम्' अतिनीचं वलनामक मसुरं 'नुनुदे' विनाशितवान्। अय मर्थः—वलनामा कश्चिदसुरो महर्षीणां गाः अपहृत्य कस्मिंश्चिद् बिले प्रवेश्य पाषाणेन बिलद्वार माच्छाद्यावस्थितः। तं वृत्तान्त मिन्द्रो ऽवगत्य, गुहाद्वारं मुद्घाट्य, वलनामान मसुरं मपनुद्य, तत्रावस्थिता महर्षीणां गाः बिलादुद्धृत्य, महर्षिभ्यो दत्तवानिति। अय मर्थः शाखान्तरे विस्पष्ट माम्नायते—"इन्द्रो वलस्य बिल मपौर्णोत्, स य उत्तमः पशुरासीत्, तं पृष्ठं प्रति सङ्गृह्योदखिदत्, तं सहस्रं पशवो ऽनूदायन्त्स उन्नतोऽभवत्"—इति ( तै० सं० २. १. ५. १. ) *। 'एतया' तृचगतया द्वितीयर्चा 'सनि मेव' लाभ मेवैभ्यः 'अवरुन्धे' सम्पादयति † ॥

अथ तृतीया मृचं परिधानीयां विवक्षुः प्रथमं पादं मनूद्य

---

* "पशुराद्यो वै बलस्तस्मा प्राश्नतो ऽश्मापिधान आसीत्"—इति ता० ब्रा० १८ ७ ३।

† १६ दर्शाविनमप्रश्नावधावेतान्यक्षरादि ख ग पुस्तकयोः, दृश्यादि च पुस्तके।

व्याचष्टे—"इन्द्रेण रोचना दिव इति ( सं० ८. १४. ९. ) ; स्वर्गो वै लोक इन्द्रेण रोचना दिवः"–इति। 'दिवः' स्वर्गविशेषाः 'इन्द्रेण' देवेन 'रोचना' रोचमानाः दीप्तियुक्ताः, क्वता इति शेषः। अनेन पादेन स्वर्गलोकवर्णनं विवक्षितम् ; इन्द्रेणेत्यादिकस्यार्थस्य तत्र विद्यमानत्वात् ॥

द्वितीयतृतीयपादावनुवदति— "दृळ्हानि दृंहितानि च, स्थिराणि न पराणुदः इति"–इति। तस्मिन् स्वर्गे यानि 'दृळ्हानि' प्रकाशरूपाणि नक्षत्राणि, यानि च पूर्वं मदृढान्यपि 'दृंहितानि' इन्द्रेण दृढीकृतानि, तानि सर्वाण्यपि स्थिराणि कृत्वा 'न पराणुदे' इन्द्रो न विनाशितवान्। "स्वर्ग एवैतया लोके ऽहरहः प्रतितिष्ठन्तो यन्ति"–इति। अस्या मृचि स्थिराणां स्वर्गस्थानानां नक्षत्रादिशरीराणां श्रूयमाणत्वादेतयर्चा परिधाने सति प्रतिदिनं स्वर्ग एव लोके प्रतिष्ठां प्राप्नुवन्तो 'यन्ति' वर्तन्ते ॥

अन्यस्य परिधानीयां विधत्ते— "आहं सरस्वतीवतोरित्यच्छावाकस्य ; वाग्वै सरस्वती, वाग्वतोरिति हैतदाहेन्द्राग्न्योरवो हण इत्येतद्ध वा इन्द्राग्न्योः प्रियं धाम यद्वागिति, प्रियेणैवैनौ तद्धाम्ना समर्धयति"–इति। आह मित्यादिः प्रथमः पाद, इन्द्राग्न्योरित्यादिः द्वितीयः पादः। तस्यार्धर्चस्याय मर्थः—'अहम्' अनुष्ठाता 'सरस्वतीवतोः' सरस्वतीयुक्तयोरिन्द्राग्न्योर्देवयोः सम्बन्धि यत् 'अवः' सुरक्षितं स्थान मस्ति, तत् 'आहणे' सर्वतः प्रार्थयति। अत्र प्रथमपादे सरस्वतीशब्देन वेदशास्त्रस्वरूपा वागेव विवक्षिता; अतः 'सरस्वतीवतोरिति' एवंरूपो मन्त्रो 'वाग्वतोरिति' एत मेवार्थ माह। द्वितीयपादे त्ववःशब्देन सुरक्षित मिन्द्राग्निदेवतयोः यत् प्रियं धाम विवक्षितं, तद्व वाग्रूप मेव ; वाग्व्यवहारे तयो-

रत्यन्तप्रीतिमत्त्वात्। तस्मादेता मृचं * पठन्नेव त्विन्द्राग्नी प्रियेणैव 'धाम्ना' स्थानेनैव 'समर्द्धयति' समृद्धौ करोति ॥ वेदनं प्रशंसति— "प्रियेण धाम्ना समृद्धयते य एवं वेद"--इति ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां द्वितीयाध्याये
( सप्तविंशाध्याये ) चतुर्थः खण्डः ॥ ४ ( ७ ) ॥

---

॥ अथ पञ्चमः खण्डः ॥

उभय्यः परिधानीया भवन्ति होत्रकाणां प्रातःसवने च माध्यन्दिने चाहीनाश्चैकाहिकाश्च तत ऐकाहिकाभिरेव मैत्रावरुणः परिदधाति तेनास्माल्लोकान्न प्रच्यवतेऽहीनाभिरच्छावाकः स्वर्गस्य लोकस्याप्त्या उभयीभिर्ब्राह्मणाच्छंसी तेनो स उभौ व्यन्वारभमाण एतीमं चामुं च लोकमथो मैत्रावरुणं चाच्छावाकं चाथो अहीनं चैकाहं चाथो संवत्सरं चाग्निष्टोमं चैव तु स उभौ व्यन्वारभमाण एत्यथ तत ऐकाहिका एव तृतीयसवने होत्रकाणां परिधानीया भवन्ति प्रतिष्ठा वा एकाहः प्रतिष्ठायामेव तद्यज्ञमन्ततः प्रतिष्ठापयन्त्यनवानं प्रातःसवने

* "मार्द्र सत्यमोनवीरिन्द्राग्नी हवे । याभ्यां गायत्रमृच्यते"--इति ऋ० ८.६८.१०।

यजेदेकां द्वे न स्तोममतिशंसेत् तद्यथाभिहिषते * पिपासते क्षिप्रं प्रयच्छेत्तादृक्तद्यो क्षिप्रं देवेभ्योऽन्नाद्यं सोमपीथं प्रयच्छतीति क्षिप्रं हास्मिंल्लोके † प्रतितिष्ठत्यपरिमिताभिरुत्तरयोः सवनयोरपरिमितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याप्त्यै कामं तद्धोता शंसेद्यद्धोत्रकाः पूर्वेद्युः शंसेयुर्यद्वा होता तद्धोत्रकाः प्राणो वै होताङ्गानि होत्रकाः समानो वा अयं प्राणोऽङ्गान्यनु सञ्चरति तस्मात् तत्कामं होता शंसेद्यद्धोत्रकाः पूर्वेद्युः शंसेयुर्यद्वा होता तद्धोत्रकाः सूक्तान्तैर्होता परिदधदेत्यथ समान्य एव तृतीयसवने होत्रकाणां परिधानीया भवन्त्यात्मा वै होताङ्गानि होत्रकाः समाना वा इमेऽङ्गानामन्तास्तस्मात्समान्य एव तृतीयसवने होत्रकाणां परिधानीया भवन्ति भवन्ति ॥ ५ (८) ॥

॥ इत्यैतरेयब्राह्मणे षष्ठपञ्चिकायां द्वितीयोऽध्यायः ॥२॥

अथ परिधानीयां स्तोतु मुपक्रमते— "उभय्य परिधानीया भवन्ति होत्रकाणां,— प्रातःसवने च माध्यन्दिने चाहीनाश्चैकाहिकाश्च"–इति । 'होत्रकाणां' मैत्रावरुणब्राह्मणाच्छंस-

* "ईषते" ग।

† "हास्मिंल्लोके", "हास्मिन् लोके", "हास्मिंलोके"–इति पाठाश्च पूर्ववत्।

च्छावाकानां * सवनद्वये परिधानीया द्विविधा भवन्ति। कथम्? तदुच्यते—'अहीनाः' अहर्गणेषु विहिताः, 'ऐकाहिकाः' एकाहे प्रकृतिरूपे विहिताः; इत्येवं द्वैविध्यम् †॥

तत्र होत्रकविशेषस्य परिधानीयाविशेषं दर्शयति— "तत ऐकाहिकाभिरेव मैत्रावरुणः परिदधाति; तेनास्माल्लोकान्न प्रच्यवते"-इति। ततस्तासूभयविधासु मैत्रावरुणाख्यत्विगैकाहिकाभिरेव परिदध्यात्। "ते स्याम देव वरुण"-इति (सं० ७.६६.९.) प्रकृतौ प्रातस्सवने मैत्रावरुणस्य परिधानीया विहिता ‡; माध्यन्दिनसवने "नू ष्टुत इन्द्र नू गृणानः"-इत्येषा (सं० ४.१६.२१.) विहिता §। अहीने विकृतिरूपे ऽपि सवनद्वये तदेव परिधानीयाद्वयं मैत्रावरुणस्य द्रष्टव्यम्। कथमिति, तदुच्यते— अहर्गणस्य प्रातस्सवने हि मैत्रावरुणस्य "प्रति वां सूर उदिते"-इत्यस्य (सं० ७.६६.७-९.) पर्यायत्र्यचस्यान्त्या, "ते स्याम देव वरुण"-इत्येषा (सं० ७. ६६.९.) परिधानीया; ऐकाहिकापि सैव परिधानीया भवति। तथाहि प्रकृतौ मैत्रावरुणस्य "प्र मित्रयोर्वरुणयोरिति नवायाते मित्रावरुणेति याज्या"-इति-

* 'यस्मिन् शास्त्रे सुब्रह्मवर्जिता द्वादशर्त्विजो होत्रका इत्युच्यन्ते'-इति आश्व० श्रौ० १. १.२१. वृ०। सुब्रह्मण्य चत्वारः— होता, अध्वर्युः, ब्रह्मा, उद्गाता चेति (आश्व० श्रौ० ४. १.४.)। एवं आश्व० श्रौ० ५. ६. १७. द्रष्टव्यम्। तत्र च होत्रकेषु त्रयः शिल्पिनः। १ भा० ४४९ पृ० २ पं०, २ भा० २४२ पृ० १९ पं०, आश्व० श्रौ० ५. १०. १०. द्र०।

† "यस्मिन्नुत्तमवीरन् स सौत्रियः। यस्मिन्नृचः सोऽनुरूपः। एकस्तोत्रियेष्वहःसु यो ऽन्यो ऽन्त्यः सो ऽनुरूपो न चेत् सर्वो ऽप्यर्थचः सर्वहो वा। ऐकाहिकास्तथा सति"-इति आश्व० श्रौ० ६. २. ५—८।

‡ आश्व० श्रौ० ७. २. १२। २४२ पृ० २ पं०।

§ आश्व० श्रौ० ७. २. ९।

सूत्रकारवचनात् ( आश्व० श्रौ० ५. १०. २८. ) नवाना मन्त्रा सैवेति ऐकाहिकाभिरेव मैत्रावरुणः परिदधातीत्येतदुपपन्नं भवति। तथा माध्यन्दिनसवनेऽपि "आ सत्यो यातु"–इत्यहीन-सूक्त मिति ( सं० ४. १६. १. ) वक्ष्यति *। यान्यहीनसूक्तान्या, सान्त्रीनस्य तत्र परिधानीया। अहीनसूक्तान्तं हि माध्यन्दिनसवने मैत्रावरुणशस्त्रम्। तस्य "नू ष्टुत इन्द्र नू गृणान"–इत्येषान्त्या (सं० ४. १८. ११.)। तथा प्रकृतावपि सैव परिधानीया; तथाहि— "कया नश्चित्र आ भुवत्, कया त्वं न ऊत्या, कस्त मिन्द्र त्वा वसुं, सद्यो ह जात, एवा त्वा मिन्द्रोग्रस्तु पु यः सुमना उपाक इति याज्या"–इतिसूत्रकारवचनात् (आश्व० श्रौ० ५. १६. १.) "एवा त्वा मिन्द्र वज्रिन्नत्र"–इत्येतस्यैकादशर्चस्य ( सं० ४. १८. १–११. ) अन्त्या "नू ष्टुत इन्द्र नू गृणानः"–इत्येदेवेति † मैत्रावरुणस्य प्रातस्सवने माध्यन्दिनसवने च ऐकाहिकाभिः परिधान मुपपन्नं भवति। ऐकाहिकाभिरेवेत्येवकारोऽन्यत्र मङ्गाव्यावर्त्यः। या ऐकाहिकाः परिधानीयास्ता एव चात्वर्गणे मैत्रावरुणस्य परिधानीया, न त्वन्या इत्यर्थः। यद्यपि मैत्रावरुणस्य प्रकृतौ सवनयोरुभयोः द्वे एव परिधानीये, तथापि प्रयोगबहुत्वापेक्ष मैकाहिकाभिरिति बहुवचनम् ॥

मैत्रावरुणस्य प्रकृतिविकृत्योः परिधानीया मेका मुक्ता, अच्छावाकस्य प्रकृतिविलक्षणं सवनद्वये परिधानीयाद्वयं दर्शयति —"अहीनाभिरच्छावाकः स्वर्गस्य लोकस्याप्त्यै"–इति। योऽय मच्छावाकः, सोऽय महीनगताभिरृग्भिः परिदध्यात्; न त्वैकाहिकाभिः। तथाहि—"घाहं सरस्वतीवतोरित्यच्छावाकस्य"–इति

* ४ म० २ स० ( आश्व० श्रौ० ७. ४. ९ )। † यद्वेत्था वहुषु सूक्तेषु सुतेति योयम्।

पूर्वस्मिन् खण्डे (२४२ पृ०) विहितत्वात् प्रातस्सवने एषा अहर्गणसम्बन्धिनी परिधानीया। ऐकाहिके तु "गोमद्धिरण्यवद्"–इत्येव (सं० ७. ८४. ८.) परिधानीया *। माध्यन्दिने त्वच्छावाकस्य "नूनं सा ते"–इत्यहर्गणमता (सं० २. ११. २१.) परिधानीया †; एकाहे तु "शुनं हुवेम"–इति (सं० ३. ३०. २२.) माध्यन्दिने परिधानीया ‡। एवं सति अच्छावाकस्यैकाहिकपरिधानीयापरित्यागेनोपरितनस्याहर्गणस्य सम्बन्धिन्याः परिधानीयायाः स्वीकारः, उपरि च स्वर्गलोकमार्गेऽ सम्पद्यते ॥

अथ ब्राह्मणाच्छंसिनः परिधानीयां दर्शयति — "उभयीभिर्ब्राह्मणाच्छंसी; तेनो स उभौ व्यन्वारभमाण एतीमं चासुं च लोकमथो मैत्रावरुणं चाच्छावाकं चाथो अहीनं चैकाहं चाथो संवत्सरं चाग्निष्टोमं चैव सु स उभौ व्यन्वारभमाण एति"–इति। यो ऽयं ब्राह्मणाच्छंसी, सोऽय सुभयविधाभिरैकाहिकाभिरहीनगताभिय ऋग्भिः परिदध्यात्। प्रातस्सवने प्रकृतौ "स न इन्द्रः शिवः सखा"–इति (सं० ८. ९३. ३.) परिधानीया §; विकृतौ तु "इन्द्रेण रोचना दिवः"–इति पूर्वखण्डे ऽभिहिता (२४२ पृ०)। माध्यन्दिनसवने प्रकृतौ विकृतौ च "एवेदिन्द्रं वृषणं वज्रबाहुम्"–इत्येव (सं० ७. २३. ६.) परिधानीया ‖। एवं च सत्यस्य ब्राह्मणाच्छंसिनः प्रातस्सवने ऽच्छावाकसाम्य माध्यन्दिने सवने

* "इयं वामस्य मन्मन इति नव (सं० ७.९४.१-९)"–इति आश्व० श्रौ० ५.१०.२८।
† "नूनं सा त इयन्त सुषमम्"–इति आश्व० श्रौ० ७.४.१०।
‡ "इच्छन्ति त्वा (सं० ३ ३०. १—२२.)"–इति आश्व० श्रौ० ७ ५.२०।
§ "उद्घेदभीति श्रुत. (सं० ८. ९३. १–३)"–इति आश्व० श्रौ० ५. १०. २८।
‖ "उदु ब्रह्माणि (सं० ७ २३. १—६.)"–इति आश्व० श्रौ० ७ ४.९।

मैत्रावरुणसाम्यं सम्पन्नम् । 'तेनो' तेनैव, ऐकाहिकाहीनगतो-भयविधशंसनेनैव 'सः' ब्राह्मणाच्छंसी भूलोकः स्वर्गलोकः 'उभौ' अपि 'अन्वारभमाणः' विविधं सृजन् 'एति' गच्छति, वर्त्तत इत्यर्थः । प्रातःसवने प्रकृतिविकृत्योः परिधानीयाविलक्षणत्वात् लोकद्वयस्य पृथगेव सर्गः ; माध्यन्दिनसवने प्रकृतिविकृत्योः परिधानीयैक्याल्लोकद्वयस्य सह सर्गः ; इत्येवं विविधसर्गो 'अन्वारभण'-शब्देन विवक्षितः । 'यथो' अपि चायं ब्राह्मणाच्छंसी मैत्रावरुणं चाच्छावाकम् 'उभौ' ऋत्विजौ 'अन्वारभमाण एति' विविधं सुपसृजन् वर्त्तते । कथ मिति, तदुच्यते — यथा मैत्रावरुणस्य प्रकृतिविकृत्योः परिधानीयैक्यम्, तथा ब्राह्मणाच्छंसिनोऽपि माध्यन्दिनसवने तदैक्यम् । यथाच्छावाकस्य प्रकृतिविकृत्योः परिधानीया-वैलक्षण्यम्, एवं ब्राह्मणाच्छंसिनः प्रातःसवने तद्वैलक्षण्य मिति । यथा मैत्रावरुणाच्छावाकविषयोऽयं विविधसर्गः, तथैवाहीनैकाहविषयेऽपि विविधः सर्ग उन्नेयः । कथ मिति, तदुच्यते— प्रातःसवने अहीनैकाहयोर्वैलक्षण्येन सर्गः, माध्यन्दिने सवने साहस्येन सर्गः, इति उभयविधत्वम् । तथा संवत्सरं गवामयनमूलं प्रकृतिपूर्वं मग्निष्टोमं च विविधं सृजति ; अहीनैकाहसर्गवदेतदुभयसर्गस्य योजनीयत्वात् ॥

इत्थं होत्रकाणां सवनद्वयगताः परिधानीयाः प्रशस्य तृतीय-सवनगताः परिधानीयाः प्रशंसति— "अथ तत ऐकाहिका एव तृतीयसवने होत्रकाणां परिधानीया भवन्ति, प्रतिष्ठा या एकाहः, प्रतिष्ठाया मेव तद्यज्ञ मन्ततः प्रतिष्ठापयन्ति"—इति । एकाहे मूलप्रकृतौ ज्योतिष्टोमे होत्रकाणां या एव परिधानीयाः, ता एवाहर्गणे तृतीयसवने द्रष्टव्याः । तथाहि—"आवां राजाना

विति नित्य मैकाहिकम्"–इतिवचनात् मैत्रावरुणस्य "आवां राजानौ"–इति- ( सं॰ ७. ८४. १. ) -सूक्तस्यान्त्या परिधानीया भवति। तथा ब्राह्मणाच्छंसिनो ऽपि "अच्छाम इन्द्र मिति नित्य मैकाहिकम्"–इतिवचनात् ( आश्व॰ श्रौ॰ ८. २. २४. ) "अच्छाम इन्द्रम्"–इति- ( सं॰ १०. ४३. १. ) -सूक्तस्यान्त्या परिधानीया भवति। तथाच्छावाकस्य "ऋतुर्जनित्रीति नित्यान्यैकाहिकानि"–इतिवचनात् (आश्व॰ श्रौ॰ ८.४.२.) "सं वां कर्मणा" –इति- ( सं॰ ६. ६९. १. ) -सूक्तस्यान्त्या परिधानीया भवति। यो ऽय मेकाहः, स मूलप्रकृतित्वात् 'प्रतिष्ठा' सर्वासां विकृतीना माधारः। अतस्तेनैकाहिकापरिधानीयाशंसनेन यज्ञम् 'अन्ततः' अवसानकाले 'प्रतिष्ठायां' सर्वाधारे प्रतिष्ठापयन्ति ॥

इत्थं परिधानीयाः प्रशस्य प्रातस्सवनगतानां याज्यादीनां मध्ये अवसानाभावं विधत्ते— "अनवानं प्रातस्सवने यजेद्"–इति। 'अनवानम्' अनुच्छ्वासम्, उच्छ्वासो मध्ये यथा न भवति तथा याज्यां पठेत् ❁ ॥

स्तोमद्वयो नियमविशेषं विधत्ते—"एकां द्वे न स्तोम मतिशंसेत्; तद्यथाभिहितपते पिपासते क्षिप्रं प्रयच्छेत्, तादृक्तद्यो क्षिप्रं देवेभ्यो ऽन्नाद्यं सोमपीथं प्रयच्छामीति; क्षिप्रं हास्मिंल्लोके प्रतितिष्ठति"–इति। त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशादयः स्तोमा विहिताः। विहितस्य सप्तदशस्तोमस्य विद्वरा अष्टादशादयः स्तोमा निष्पाद्यन्ते। तथाहि विहितस्यैकविंशस्य विद्वरा द्वाविंशादयः स्तोमाः सम्पाद्यन्ते। अनेनैव दृष्टान्तेन शंसनेऽप्या-

❁ १ भा॰ १९७ पृ॰, २ भा॰ १६॰ पृ॰। आश्व॰ श्रौ॰ ५. १. ४, ५।

धिक्यं प्रसक्तम् ; "यथा वाव स्तोत्र मेवं शस्त्रम्"–इतिन्यायात् *। सन्ति तत्र प्राकृताः स्तोमाः ; स्तोमे वर्द्धमाने सति तां स्तोमगतां सङ्ख्या मतिक्रम्य शंसनं तदतिशंसनं यदा क्रियते, तदानी मेकस्या द्वयोर्वा ऋचोरभ्यनुज्ञाने त्वधिकानां ऋचां ॥ ॥ ॥। अक्षरार्थस्तु— यदा 'स्तोम मतिशंसेत्' स्तोमसङ्ख्या मतिक्रम्य शंसनं कुर्य्यात्, तदानी मेकां द्वे नातिक्रम्य शंसेत्, किं त्वेकयैव वा द्वाभ्या मेव वातिशंसेत्। तथाच सूत्रकार आह— "अतिशंसन मेकया द्वाभ्यां वा प्रातस्सवने"–इति (आश्व० श्रौ० ६. १२. ४.) †। ततोऽधिकानां शंसनाभावे युक्तिर्दृष्टान्तमुखेनोच्यते, अत्रायं दृष्टान्तो ऽवगन्तव्यः। यथा लोके 'अभिहेषते' ग्रासार्थं माभिमुख्येन 'हेषा'-शब्दं कुर्वते ऽश्वाय वा, 'पिपासते' अत्यन्तत्वषार्त्ताय पुरुषाय वा 'भ्रजाय' पानीयं क्षिप्रं प्रयच्छेत्, तादृगेव 'तत्' ऋग्बाहुल्य-भावेनातिशंसनम्। 'अथो' अपि च क्षिप्र मेव देवेभ्यः सोमपानरूप मशाय' प्रयच्छतीत्यभिप्रेत्य ऋग्बाहुल्येन विलम्ब मकृत्वा एकया द्वाभ्यां वा अतिशंसनं कुर्यात्। तथा सति 'क्षिप्रं' शीघ्र मेवा-स्मिन् लोके प्रतिष्ठितो भवति ॥

सवनान्तरयोरुक्तवैपरीत्यं विधत्ते—"अपरिमिताभिरुत्तरयोः सवनयोरपरिमितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याप्त्यै"–इति ‡। इयत्य एवेत्येवं नियमरहिताभिर्बह्वीभिर्ऋग्भिरतिशंसनं सवन-द्वये कुर्य्यात्; स्वर्गलोकस्येयत्तारहितत्वात्, तस्य लोकस्य प्राप्त्यर्थ मिद मतिशंसनं सम्पद्यते ॥

---

* (भा० ४१। पृ० १ प०। "यद्वाव स्तोत्रं तच्छस्त्रं, यासु ह्येव स्तुवते ता एवानु-शंसति"–इति मत० ब्रा० ८.१.२.४। "स्तोत्र मग्रे शस्त्रात्"–इति च आश्व० श्रौ०५ १०.१।

†, ‡ "अपरिमिताभिरुत्तरयोः सवनयोः"–इति च तदुत्तरसूत्रम्। शाङ्खा०श्रौ०१२.२.१६।

यत्रातिशंसनं कर्त्तव्यं भवति, तत्र तदर्थं मृचा मागमनं कर्तव्यम् ; तासा मृचां देशविशेषं दर्शयति—"कामं तद्धोता शंसेद्यद्धोत्रकाः पूर्वेद्युः शंसेयुर्यद्वा होता तद्धोत्रकाः ; प्राणो वै होताङ्गानि होत्रकाः ; समानो वा अयं प्राणोऽङ्गान्यनुसञ्चरति ; तस्मात्तत्कामं होता शंसेद्धोत्रकाः पूर्वेद्युः शंसेयुर्यद्वा होता तद्धोत्रकाः"—इति। अहर्गणेषु वर्तमानदिनात् 'पूर्वेद्युः' मैत्रावरुणादयो 'होत्रकाः' 'यत्' सूक्तं शंसेयुः, तदेव सूक्तं परेद्युर्होता 'कामम्' अविमृश्यैव शंसेत् ; — यदि होतुरतिशंसनं प्रसक्तम्, तदानीं पूर्वेद्युर्होत्रकैः शस्तात् सूक्ताद्दृच आनेतव्याः ; यदि तु होत्रकाणा मतिशंसनं प्रसक्तम्, तदानीं पूर्वेद्युर्होता यत् सूक्तं शंसति, तस्मात् सूक्ताद्धोत्रकैरपेक्षिता ऋच आनेतव्याः। होतुः प्राणस्थानीयत्वाद्धोत्रकाणां हस्तपादाद्यवयवस्थानीयत्वात् परस्परसूक्तादृगानयने सत्ययं प्राणः सर्वेष्ववयवेषु अपक्षपात मन्तरेण तुल्य एवानुसञ्चरति। "तस्मात्तत्कामम्"—इति उक्तार्थोपसंहारः ॥

इत्थं परिधानीयाप्रसङ्गेन तुविक्षयाज्यायां अनवानत्व मतिशंसनं च निर्णीय, अथ प्रकृत मेव परिधानीयास्तुति मनुसरति—"सूक्तान्तैर्होता परिदधदेत्यथ समान्य एव तृतीयसवने होत्रकाणां परिधानीया भवन्त्यात्मा वै होताङ्गानि होत्रकाः समाना वा इमेऽङ्गाना मन्तास्तस्मात् समान्य एव तृतीयसवने होत्रकाणां परिधानीया भवन्ति भवन्ति"—इति। सूक्तानां मन्तिमा ऋचः 'सूक्तान्ता' ताभिर्ऋग्भिर्होता 'परिदधत्' शस्त्रसमापनं कुर्वन् अतिवर्त्तते। 'अथ' होतुरनन्तरं होत्रकाणां सूच्यते,— तेषां तृतीयसवने परिधानीयाः 'समान्य' तुल्या एव भवन्ति। एकाहे याः परिधानीयाः, ता एवाहर्गणेषु भवन्ति। तथाच पूर्वं मुक्तम्—

"ऐकाहिका एव तृतीयसवने"–इति (२५१ पृ०), तदेवात्र होत्रा सह प्रशंसार्थं मनूद्यते । योऽयं होता, सोऽयम् 'आत्मा वै' देह एव ; होतकास्तु हस्तपादाद्यवयवाः, तेषां च हस्तादीना मन्ताः 'समानाः' तुल्या एव दृश्यन्ते । दक्षिणहस्तस्यान्तो याहशः, पश्चाङ्गुल्युपेतः, ताहश एव वामहस्तस्यान्तोऽपि । एवं पादयोः, स्तनकर्णादियुग्मयोस्तुल्यान्तत्वं द्रष्टव्यम् । "तस्मात् समान्य एव"–इत्युपसंहारः ॥

पञ्चाभ्यासोऽध्यायसमाप्त्यर्थः ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायां द्वितीयाध्याये
( सप्तविंशाध्याये ) पञ्चमः खण्डः ॥ ५ ( ८ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयात् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायाः द्वितीयाध्यायः ॥

---

## ॥ अथ तृतीयाध्यायः ॥

( तत्र )

### ॥ अथ प्रथमः खण्डः ॥

———

॥ॐ॥ आ त्वा वहन्तु हरय इति प्रातःसवन उन्नीयमानेभ्यो ऽन्वाह वृषण्वतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धा ऐन्द्रीरन्वाहैन्द्रो वै यज्ञो गायत्रीरन्वाह गायत्रं वै प्रातःसवनं नव न्यूनाः प्रातःसवने ऽन्वाह न्यूने वै रेतः सिच्यते दश मध्यन्दिने ऽन्वाह न्यूनं वै रेतः सिक्तं मध्यं स्त्रियै * प्राप्य स्थविष्ठं भवति नव न्यूनास्तृतीयसवने ऽन्वाह न्यूनाद्धै प्रजाः प्र जायन्ते तद्यदेतानि केवलसूक्तान्यन्वाह यजमानमेव तद्गर्भं भूतं प्र जनयति यज्ञाद्देवयोन्यै ते हैके सप्त-सप्तान्वाहुः सप्त प्रातःसवने सप्त माध्यन्दिने सप्त तृतीयसवने यावत्यो वै पुरोनुवाक्यास्तावत्यो याज्याः सप्त वै † प्राञ्चो यजन्ति सप्त वषट् कुर्वन्ति तासामेताः पुरोनुवाक्या इति वदन्तस्तत् तथा न कुर्याद्यजमानस्य ह ते रेतो विलुम्पन्त्यथो यजमानमेव यजमानो हि सूक्तं नवभिर्वा एतं मैत्रावरुणो

---

* "स्त्रिय" क।

† "वै" क-पुस्तके नास्ति।

ऽस्माल्लोकादन्तरिक्षलोक मभि प्र वहति दशभिरन्त-रिक्षलोकादमुं लोक मध्यन्तरिक्षलोको हि ज्येष्ठो नवभिरमुष्माल्लोकात् स्वर्गं लोक मभि न ह वै ते यजमानं स्वर्गं लोक मभि वोळ्हु मर्हन्ति ये सप्त-सप्तान्वाहुस्तस्मात् केवलश एव सूक्तान्यनु-ब्रूयात् ॥ १ ( ८ ) ॥

प्रातस्सवने होत्रकाणां स्वाज्यानुरूपौ
यस्मिन्नेव सुवते स्तोत्रिय एषः ।
आरम्भणीया आहवनीयाः परिधानीया
हवे स्तोमे स्यादतिशंसार्यवचय ॥ १ ॥

अथोन्नीयमानसूक्तानि ✽ विधातु मुपक्रमते—"आ त्वा वहन्तु हरय इति प्रातस्सवन उन्नीयमानेभ्यो ऽन्वाह ; रूपवती. पीतवतीः सुतवतीर्मदवती रूपसमृद्धा."–इति । यदा चमसा 'उन्नीयन्ते' सोमेन पूर्यन्ते, तदानीं मध्वर्युणा प्रेषितो मैत्रावरुणः "आ त्वा वहन्तु"–इति ( सं० १. १६. १—८. ) सूक्त मनुब्रूयात् । तस्मिन् सूक्ते स्थिता ऋचो रूपशब्देन पीतशब्देन सुतशब्देन मदशब्देन च युक्ताः । तत्र द्वितीयपादे "उपयं सोमपीतये"–इति रूपशब्द-पीतशब्दौ विद्येते ; चतुर्थ्या मृचि "सुते हि त्वा हवामहे"–इतियवचनात् सुतशब्दो विद्यते ; अष्टमाया मृचि "इन्द्रो मदाय गच्छति"–इति मदशब्दो विद्यते । यद्यप्येते शब्दा सर्वासृचु न

✽ "उन्नीयमानेभ्यो ऽन्वाहा त्वा वहन्त्वित्ति देव मित्रोपयानन्दनुवचनम्"–इति आश्व० श्रौ० ५. ५. १ । तानि च सूक्तानीह प्रथमवतीयपतुपयर्थ्यांर्विधीयन्ते ।

सन्ति, तथापि क्वचिच्छ्रवणात् सर्वा अपि छत्रिन्यायेन तैः शब्दैर्युक्ता भवन्ति। यथैवसम इन्द्रः सोमं पीत्वा माद्यतीत्यस्यार्थस्योक्त-शब्दचतुष्टयेन प्रतीयमानत्वात् विवक्षितार्थानुकूल्येन रूप-समृद्धत्वम् ॥

देवताद्वारा ता ऋचः प्रशंसति— "ऐन्द्रीरन्वाहैन्द्रो वै यज्ञः" -इति। "इन्द्र त्वा सूरचक्षस."-"इन्द्रं सुखतमे रथे"-इति-श्रवणात् * इन्द्रदेवताका ऋचः; सोमयागश्चेन्द्रदेवताकः †; अतस्तत्र ता युज्यन्ते ॥

छन्दोद्वारा प्रशंसति— "गायत्रीरन्वाह; गायत्रं वै प्रातःसवनम्"-इति। प्रातस्सवनस्य गायत्रीच्छन्दस्कत्वात् तच्छन्दस्का ऋचः तत्र योग्याः ॥

सङ्ख्याद्वारा प्रशंसति— "नव न्यूनाः प्रातस्सवने ऽन्वाह; न्यूने वै रेतः सिच्यते"-इति। मध्यन्दिनसवने दशसङ्ख्याका वक्ष्यन्ते (१ ख०); तां सङ्ख्या मपेक्ष्यात्र या नव सङ्ख्याकास्ता एकया न्यूनाः; लोकेऽपि 'न्यूने' खल्वे गर्भस्थाने रेतः सिच्यते। अतो न्यूनत्वं मत्र युक्तम् ॥

अथ माध्यन्दिने सवने "असावि देवङ्गोऋजीक मन्धः"-इत्ये-तत्सूक्तगता दशसङ्ख्याका ऋचो (सं० ७. २१. १-१०.) विधत्ते —"दश मध्यन्दिने ऽन्वाह; न्यूने वै रेतः सिक्तं मध्यं स्त्रियै प्राप्य स्थविष्ठं भवति"-इति। लोके खल्वे गर्भस्थाने सिक्तं रेतः स्त्री-शरीरस्य ‡ मध्यस्थानं प्राप्य गर्भरूपेण 'स्थविष्टम्' अतिस्थूलं

* सं० १. १६. १, २। "त्रिदेवत्यैर्यजन्ति"-इत्यादि. आश्व० श्रौ० ५. ५. १. द०।
† "इन्द्रः सोमस्य काणुका"-इति सं० ८, ७७, ४। निरु० ५, २, ६।
‡ मूले 'स्त्रियै'-इति पदं मस्ति, तस्यैवार्थोऽयम्। षष्ठ्यर्थे चतुर्थी (पा० २, ३, ६९, वा०)।

भवति। अतो रेतस्सेकस्थानीयाया ऋचो गर्भस्थानीयायाः सङ्ख्याधिक्य युक्तम् * ॥

तृतीयसवने "इहोपयात शवसो नपातः"–इत्येतत्सूक्तगता नवसङ्ख्याका ऋचो ( सं० ४, ३५, १–९, ) विधत्ते— "नव न्यूनास्तृतीयसवने ऽन्वाह; न्यूनाद्धि प्रजाः प्र जायन्ते"–इति। पूर्ववद् दशसङ्ख्यापेक्षयात्र न्यूनत्वम्। लोके हि 'न्यूनाद्' यस्माद् योनिद्वारात् प्रौढ़ाः प्रजा उत्पद्यन्ते ; अतो गर्भोत्पादनार्थं मत्र न्यूनत्वं युक्तम् † ॥

एतेषु सूक्तेषु मतद्वय मस्ति। सम्पूर्णसूक्तानुवचन मित्येकं मतम्, प्रतिसूक्तं समाना मेवर्चा मनुवचनत्व मिति द्वितीयं मतम्। तत्र प्रथमं मत प्रशंसति— "तद्यदेतानि केवलसूक्तान्यन्वाह, यजमान मेव तद्गर्भं भूतं प्र जनयति यज्ञाद्देवयोन्यै"–इति। 'केवल'-शब्दः सम्पूर्णवाची। तदनुवचनेन सम्पूर्णगर्भं प्राप्तं यजमान मेव यज्ञरूपाद् 'देवयोन्यै' देवसम्बन्धियोनिस्थानादुत्पादयति। अतः सम्पूर्णानुवचनं युक्तम् ॥

द्वितीयं मतं दर्शयति—"ते हैके सप्त-सप्तान्वाहु,—सप्त प्रातस्सवने, सप्त माध्यन्दिने, सप्त तृतीयसवने, यावत्यो वै पुरोनुवाक्यास्तावत्यो याज्याः ; सप्त वै प्राचो यजन्ति, सप्त वषट् कुर्वन्ति, तासा मेताः पुरोनुवाक्या इति वदन्तः"–इति। 'ते' प्रसिद्धा ऋत्विजः 'एके' केचित् तत्तच्छस्त्रेषु यथोक्तसूक्तगता ऋचः प्रतिसूक्तं सप्तसङ्ख्याका एवान्वाहुः, न तु सम्पूर्णसूक्तानि। तस्यैव व्याख्यानं "सप्त प्रातस्सवने"–इत्यादि। "यावत्यः"–इत्यादिना तदीया

* द्वितीयतृतीययो खण्डयोः द्रष्टव्यम् ( आश्व० श्रौ० ५, ५, १७ )।

† द्वितीयचतुर्थयो खण्डयोः द्रष्टव्यम् ( आश्व० श्रौ० ५, ५, १७, )।

युक्तिरुच्यते। पुरोनुवाक्यानां याज्यानां च सङ्ख्या प्रायेण समानैव दृश्यते। तथा सत्यत्र 'सप्त' सप्तसङ्ख्याका ऋत्विज — होता, मैत्रावरुण, ब्राह्मणाच्छंसी, नेष्टा, पोता, आग्नीध्रः, अच्छावाकश्चे-त्येते * प्राङ्मुखाः 'यजन्ति' याज्याः पठन्ति। तथैव व्याख्यानं "सप्त वषट् कुर्वन्ति"–इति। 'तासां' सप्तभिः पठ्यमानानां याज्यानाम् 'एताः' सूक्तगताः सप्तसङ्ख्याका ऋचः पुरोनुवाक्या भवन्तीति। एके तादृशीं युक्तिं वदन्तः सप्त सप्तान्वाहुरित्यन्वयः॥

तदिदं मतं दूषयति— "तत् तथा न कुर्याद्; यजमानस्य ते रेतो विलुम्पन्त्यथो यजमान मेव; यजमानो हि सूक्तम्"–इति। सप्त-सप्तेति यन्मतम्, तत्तथा न कुर्यात्। 'ते' सप्त-सङ्ख्यावादिनः सम्पूर्णसूक्ताभावाद्यजमानस्य प्रजोत्पादकं 'रेतः' विनाशयन्ति। 'अथो' अपिच यजमान मेव विनाशयन्ति। सूक्तस्य यजमानरूपत्वेन सम्पूर्णसूक्तविलोप एव यजमानविलोपः॥

परमते दोषं दर्शयित्वा स्वमते गुणं दर्शयति— "नवभिर्वा एतं मैत्रावरुणो ऽस्माल्लोकादन्तरिक्षलोक मभि ॥ वहति; दशभिरन्तरिक्षलोकादमुं लोकां सभ्यन्तरिक्षलोको हि ज्येष्ठो नवभिरमुष्माल्लोकात् स्वर्गं लोक मभि"–इति। प्रथमसूक्तगताभिर्ऋग्भिः 'नवभि' † 'एतं' यजमानं भूलोकादन्तरिक्षलोकम् 'अभि'लक्ष्य नयति। द्वितीयसूक्तगताभिः 'दशभि' ‡ ऋग्भिरन्तरिक्षलोकाद्

---

* "प्राचीनोत्तरं पूर्वम्। विहृतायोपरि रौद्रिवेति सर्वत्र। षट् सदसि। प्रत्यङ्मुखौ द्वारे मध्ये होतुः। दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य। होतृधिष्ण्यात् पूर्वेण चतुरः समान्तरान् ब्राह्मणाच्छंसि–पोतृ–नेष्ट्रच्छावाकानाम्"–इति कात्या० श्रौ० ८, ६, १८–२१।

† दाशतय्यां "आ त्वा वहन्तु"–इति प्रथमं सूक्तं विहितम् प्रथमखण्डे (२५७१०)।

‡ माध्यन्दिने सवने "अपादित देवम्"–इति दशर्चं सूक्तं विधास्यते द्वितीयखण्डे।

'अमुं लोकं' नाकपृष्ठाख्यं लोकम् 'अभि'लक्ष्य नयति। अन्तरिक्षस्य यः समीपवर्त्ती स्वर्गभागः, स नाकपृष्ठाख्यो लोकः; स च प्रवृद्धादन्तरिक्षाद् * 'ज्येष्ठः' अतिप्रवृद्धः; तं दशभिः प्राप्य तस्मान्नाकपृष्ठाख्याद् 'अमुष्मात्' स्वर्गाल्लोकादुपरितनं बहुभोगयुक्तं 'स्वर्गं लोकं' तृतीयसूक्तगताभिः 'नवभि' † ऋग्भिर्यजमानमभि वहति ॥

स्वमते गुणान् दर्शयित्वा तद्राहित्यं परमते दर्शयति— "न ह वै ते यजमानं स्वर्गं लोकमभि वोळ्हुमर्हन्ति, ये सप्त समाम्नाहुः"—इति। 'ये' पूर्वपक्षिणः प्रतिसूक्तं सप्तसङ्ख्याका एवाम्नाहुः, 'ते' सङ्ख्यान्यूनत्वात् पूर्वोक्तरीत्या स्वर्गं प्रति यजमानं वोढुं नार्हन्ति ॥

स्वमतं निगमयति— "तस्मात् केवलश एव सूक्तान्यनुब्रूयात्" —इति। 'केवलशः' प्रतिसूक्तं सम्पूर्णमेवेत्यर्थः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां तृतीयाध्याये
( षष्टाविंशाध्याये ) प्रथमः खण्डः ॥ १ ( ८ ) ॥

---

॥ अथ द्वितीयः खण्डः ॥

## अथाह यदैन्द्रो वै यज्ञो ऽथ कस्माद् द्वावेव प्रातःसवने प्रस्थितानां प्रत्यक्षादैन्द्रीभ्यां यजतो

---

* प्रवृद्धमन्त इह सर्वत्र दीर्घमध्य ख ग पुस्तकयोः ।

† तृतीयसूक्ते 'इन्द्रोपयात'—इति नवर्चं सूक्तं विधास्यते चतुर्थखण्डे ।

होता चैव ब्राह्मणाच्छंसी चेदं ते सोम्यं मध्विति होता यजतीन्द्र त्वा वृषभं वय मिति ब्राह्मणाच्छंसी नानादेवत्याभिरितरे कथं तेषा मैन्द्र्यो भवन्तीति मित्रं वयं हवामह इति मैत्रावरुणो यजति वरुणं सोमपीतय इति यद्वै किञ्च पीतवत् पदं तदैन्द्रं रूपं तेनेन्द्रं प्रीणाति मरुतो यस्य हि क्षय इति पोता यजति स सुगोपातमो जन इतीन्द्रो वै गोपास्तदैन्द्रं रूपं तेनेन्द्रं प्रीणात्यग्ने पत्नीरिहावहेति नेष्टा यजति त्वष्टारं सोमपीतय इतीन्द्रो वै त्वष्टा तदैन्द्रं रूपं तेनेन्द्रं प्रीणात्युक्षान्नाय वशान्नायेत्याग्नीध्रो यजति सोमपृष्ठाय वेधस इतीन्द्रो वै वेधास्तदैन्द्रं रूपं तेनेन्द्रं प्रीणाति प्रातर्यावभिरागतं देवेभिर्जेन्यावसू इन्द्राग्नी सोमपीतय इति स्वयं समृद्धाच्छावाकस्यैव सु हैता ऐन्द्र्यो भवन्ति यन्नानादेवत्यास्तेनान्या देवताः प्रीणाति यदु गायत्र्यस्तेनाग्नेय्य एतदु हैताभिस्त्रय मुपाप्नोति ॥ २ (१०) ॥

अथ प्रस्थितयाज्याविषयं चोद्य मुद्भावयति— "अथाह यदैन्द्रो वै यज्ञो ऽथ कस्माद् द्वावेव प्रातस्सवने प्रस्थितानां प्रत्यक्षादैन्द्रीभ्यां यजतो होता चैव ब्राह्मणाच्छंसी चेदं ते सोम्यं

मश्विति होता यजतीन्द्र त्वा वृषभं वय मिति ब्राह्मणाच्छंसी, नानादेवत्याभिरितरे ; कथं तेषा मैन्द्र्यो भवन्तीति ?"–इति ।
'अथ' उन्नीयमानसूक्तनिर्णयानन्तरं कश्चिद् ब्रह्मवादी चोद्य माह। यस्मात् कारणात् यज्ञः 'ऐन्द्रो वै' इन्द्रदेवताक एव। तथैवं सति सर्वेषा मृत्विजा मिन्द्रदेवताका एव याज्या अपेक्षिताः ; अत्र तु प्रस्थितसोमानां यागे प्रातस्सवनकालीने होतृब्राह्मणाच्छंसिनौ द्वावेव 'प्रत्यक्षात्' श्रोत्रप्रत्यक्षेण वा श्रूयमाणाभ्या मिन्द्रदेवताकाभ्या मृग्भ्यां यजतः; न त्वितरे। "इदं ते सोम्यम्"–इति (सं० ८. ६५. ८.) होतुर्याज्या। तस्यास्तृतीयपादे "जुषाण इन्द्र"–इति प्रत्यक्ष एवेन्द्रशब्दः श्रूयते ; "इन्द्र त्वा वृषभं वयम्"–इति (सं० ३. ४०. १.) ब्राह्मणाच्छंसिनो याज्या ; तत्र स्पष्ट एवेन्द्रशब्दः। 'इतरे' पञ्चर्त्विजो 'नानादेवत्याभिः' ऋग्भिर्यजन्ति ; तेषा मृत्विजां ता ऋचः कथ मिन्द्रदेवताका भवन्ति ? इति चोद्यम्। तत्र पञ्चाना मृत्विजां याज्यास्विन्द्रदेवताकत्वं सम्पादनीयम् ॥

तत्रैकस्यां याज्यायां तत् सम्पादयति—"मित्रं वयं हवामह इति मैत्रावरुणो यजति ; वरुणं सोमपीतय इति, यद्वै किञ्च पीतवत् पदं, तदैन्द्रं रूपं, तेनेन्द्रं प्रीणाति"–इति। मैत्रावरुणस्य "मित्रं वयम्"–इति (सं० १. २३. ४.) येयं याज्या, तस्या द्वितीयपादे वरुण मित्यादिकं 'पीतवत्' पिबतिधातुयुक्तं यत् किञ्चित् पद मस्ति, तदिन्द्रसम्बन्धि रूपम् ; इन्द्रस्य सोमपानप्रियत्वात्। 'तेन' हि पीतवत्पदेनेन्द्रं परितोषयति ॥

पोतुर्याज्याया ऐन्द्रत्वं दर्शयति— "मरुतो यस्य हि क्षय इति पोता यजति ; स सुगोपातमो जन इतीन्द्रो वै गोपास्तदैन्द्रं रूपं,

तेनेन्द्रो प्रीणाति"–इति। "भक्षः"–इत्यस्यां ( सं० १.८६.१. ) याज्यायां तृतीयपादे 'गोपा'शब्देनेन्द्रो ऽभिधीयते। गोमृत्वं रचकत्व मिन्द्रसम्बन्धि रूपम्, तेनेन्द्रस्य प्रीतिः॥

नेष्टुर्याज्याया ऐन्द्रत्वं सम्पादयति— "अग्ने पत्नीरिहावहेति नेष्टा यजति ; त्वष्टारं सोमपीतय इतीन्द्रो वै त्वष्टा, तदैन्द्रं रूपं, तेनेन्द्रं प्रीणाति"–इति। "अग्ने पत्नीः"–इत्यस्या याज्यायाः ( सं० १. २२. ८. ) तृतीयपादे यस्त्वष्टा, स एवेन्द्रः, प्रकृष्टां तनूकरणादिन्द्रस्य त्वष्टृत्वम् ॥

आग्नीध्रस्य याज्याया ऐन्द्रत्वं सम्पादति— "उक्षान्नाय वशान्नायेत्याग्नीध्रो यजति ; सोमपृष्ठाय वेधस इतीन्द्रो वै वेधास्तदैन्द्रं रूपं, तेनेन्द्रं प्रीणाति"–इति। "उक्षान्नाय"–इतियाज्यायाः द्वितीयपादे यो वेधाः ; स एवेन्द्रः, इन्द्रस्य जगद्व्यवस्थाविधायकत्वेन वेधःशब्दवाच्यत्वात् ॥

अच्छावाकस्य याज्यायाः ऐन्द्रत्वं सम्पादयति— "प्रातर्यावभिरागतं देवेभिर्जेन्यावसू, इन्द्राग्नी सोमपीतय इति स्वयं समृद्धाच्छावाकस्य"–इति। हे इन्द्राग्नी! 'जेन्यावसू' जेन्यं जेतव्यं वसु धनं ययोस्तौ तादृशौ भूत्वा 'प्रातर्यावभिः' प्रातस्सवनगामिभिः 'देवेभिः' देवैः सह 'सोमपीतये' सोमपानार्थम् 'आगतम्' आगच्छतम्। अस्या ऋचि 'इन्द्राग्नी'–श्रवणेऽपि इन्द्रशब्दस्य प्रत्यक्षस्य विद्यमानत्वात् स्वय मेवैन्द्रत्वाय 'समृद्धा' सम्पूर्णा ; न त्वैन्द्रत्वं सम्पादनीय मस्ति ( सं० ८. ३८, ७. ) ॥

षट्सु सम्पादित मैन्द्रत्वं निगमयति—"एव मु हैता ऐन्द्रो भवन्ति"–इति ॥

सामपूर्व देवतान्तरप्रीतिं दर्शयति— "यज्ञानादेवत्यास्तेनान्या

देवताः प्रीणाति"—इति । मित्रावरुणौ मरुतो ऽग्निर्वेधा इन्द्राग्नी इत्येताभिः 'नानादेवताभिः' युक्ता ऋचः इति यदस्ति, तेनेन्द्रव्यतिरिक्ता देवतास्तोषयति ॥

तत्रत्यं छन्दः प्रशंसति— "यदु गायत्रास्तेनाग्नेय्यः"—इति । अग्निगायत्र्योः प्रजापतिमुखजत्वसम्बन्धात् * गायत्रीच्छन्दसां तासां अग्निदेवताकत्वं सम्पद्यते ॥

उक्तां प्रशंसां निगमयति— "एतदु हैताभिस्त्रय मुपाप्नोति" —इति । 'एताभिः ऋग्भिः' 'एतदु ह' पूर्वोक्त मेव 'त्रयं' त्रिविधदेवतासम्बन्धत्वं प्राप्नोति । तत्र तत्र प्रतीयमाननानाविधदेवताकत्वं, पूर्वोक्तरीत्या सम्पादित मैन्द्रत्वं, गायत्रीद्वारेणाग्नेयत्वं चेति त्रयं वेदितव्यम् ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां तृतीयाध्याये
( अष्टाविंशाध्याये ) द्वितीयः खण्डः ॥ २ ( १० ) ॥

---

॥ अथ तृतीयः खण्डः ॥

असावि देवं गोऋजीक मन्ध इति मध्यन्दिन उन्नीयमानेभ्यो ऽन्वाह वृषण्वतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धा ऐन्द्रीरन्वाहैन्द्रो वै यज्ञस्त्रिष्टुभो ऽन्वाह त्रैष्टुभं वै माध्यन्दिनं सवनं तदा-

* तै॰ सं॰ ७.१.१ ( ६ भा॰ १६८० ) ।

हुर्यत्तृतीयसवनस्यैवं रूपं 'मद्वद्य कस्मान् मध्यन्दिने मद्वतीरनु चाह यजन्ति चाभिरिति माद्यन्तीव वै मध्यन्दिने देवताः स मेव तृतीयसवने मादयन्ते तस्मान् मध्यन्दिने मद्वतीरनु चाह यजन्ति चाभिस्ते वै खलु सर्व एव माध्यन्दिने प्रस्थितानां प्रत्यक्षा-दैन्द्रीभिर्यजन्त्यभितृस्ववतीभिरेके 'पिवा सोम मभि य मुग्र तर्द इति होता यजति' स ईं पाहि य ऋजिषी तरुत्र इति मैत्रावरुणो यजत्येवा पाहि प्रत्नथा मदन्तु त्वेति ब्राह्मणाच्छंसी यजत्यर्वाङेहि सोम कामं त्वाहुरिति पोता यजति' तवायं सोमस्त्व मेह्यर्वाङिति नेष्टा यजतीन्द्राय सोमाः प्र दिवो विदाना इत्यच्छावाको यजत्यापूर्णो अस्य कलशः स्वाहेत्याग्नीध्रो यजति तासा मेता अभितृस्ववत्यो भवन्तीन्द्रो वै प्रातःसवने न व्यजयत स एताभिरेव माध्यन्दिनं सवन मभ्यतृणद्यदभ्यतृणत्तस्मादेता अभितृस्ववत्यो भवन्ति' ॥ २ (११) ॥

अथ माध्यन्दिने उन्नीयमानसूक्तं विधत्ते— "असावि देवं गोऋजीक मन्ध इति मध्यन्दिन उन्नीयमानेभ्यो ऽन्वाह ; रूपवती: पीतवतीः सुतवतीर्मद्वती रूपसमृद्धाः"–इति । माध्यन्दिने सवने अध्वर्युणा प्रेषितो "असावि देवम्"–इत्यादिकं ( स० ७, २१. १. ) सूक्त मनुब्रूयात् । तत्रत्या ऋचः रूप पीत सुत-मद शब्दोपेता ।

पूर्वत्र "दध मध्यन्दिने ऽन्वाह"—इति सञ्ज्ञैवोक्ता, न तु सूक्तं दर्शितम् ( २५८ पृ० ) ; अत्र तत्सावि देव मिति सूक्तं प्रदर्श्यते । अस्य सूक्तस्य द्वितीयस्या मृचि "तपसो तवा च"—इति तपसच्छन्दः श्रुतः। तृतीयस्या मृचि "रथो धेना"—इति धेनाशब्दः पिबतिधात्वर्थः, तेन पीतवत्त्वम् ; "धेट् पाने"—इति ( भ्वा० ८०२. ) हि धातुः । "असावि"—इति सुनोतिधातोः ( स्वा० १. ) श्रूयमाणत्वात् सुतवत्त्वम् । प्रथमाया ऋचो ऽवसाने "मत्सो मदेषु"—इति मदत्त्वं श्रुतम् । रूपसमृद्धत्वं पूर्ववद्योज्यम् ॥

देवताद्वारा छन्दोद्वारा च ता ऋचः प्रशंसति— "ऐन्द्रीरन्वाहैन्द्रो वै यज्ञस्त्रिष्टुभोऽन्वाह त्रैष्टुभं वै माध्यन्दिनं सवनम्"—इति । द्वितीयपादे "मन्यमिन्द्र"—इतिश्रवणादैन्द्रत्वम् । एव मुत्तरेष्वमुदाहरणीयम् ॥

माध्यन्दिनसवनस्य त्रैष्टुभत्वं प्रसिद्धम्, महतोरिति यदुक्तं, तस्यामेव मुद्भावयति—"तदाहुर्यत् तृतीयसवनस्यैव रूपं मदवद्य कस्मान् मध्यन्दिने महतीरनु चाह यजन्ति चाभिरिति"—इति । तृतीयसवने सर्वेषां देवानां सोमपानादूर्ध्वं हर्षसद्भावान् मदत्त्वं तृतीयसवनस्यैव रूपम् । तथा सति मध्यन्दिने सवने महतीनां मृचा मनुवचनम् 'चाभिः' मदतीभिर्यजनं च कस्मात् कारणादिति चोद्यम् ॥

तस्योत्तर माह— "माद्यन्तीव वै मध्यन्दिने देवताः स मेव तृतीयसवने मादयन्ते ; तस्मान् मध्यन्दिने महतीरनु चाह यजन्ति चाभिः"—इति । माध्यन्दिने सवनेऽपि देवानां सोमपानसद्भावात्ताः माद्यन्त्येव ; तृतीयसवने तु निरवशेषाणां देवानां सोमपानसम्पत्त्या 'सम्पादयन्ते' सम्भूय हृष्यन्तीत्येतावानेव विशेषः । तस्मात् 'मोदस्व' हर्षस्य माध्यन्दिनसवनेऽपि सद्भावात्, तत्र,

'महतीः' ऋचो मैत्रावरुणोऽन्वाह। होतादयश्च सप्तर्त्विजः 'आभिः' महतीभिर्यजन्ति ॥

अथ ताः प्रस्थितयाज्या विधत्ते— "ते वै खलु सर्व एव माध्यन्दिने प्रस्थितानां प्रत्यक्षादैन्द्रीभिर्यजन्ति"–इति। 'ते' होतादयः सप्तर्त्विजः सर्वेऽपि 'माध्यन्दिने' सवने प्रस्थितसोमानां सम्बन्धिनीभिः 'प्रत्यक्षात्' प्रत्यक्षेण पठ्यमानेनैवेन्द्रशब्देन प्रयुक्ताभिरिन्द्रदेवताकाभिः ऋग्भिर्यजेयुः। तेषु सप्तस्वृत्सु मध्ये होतृ-मैत्रावरुण-ब्राह्मणाच्छंसिनां त्रयाणां सम्बन्धिनीषु याज्यासु न केवलमैन्द्रत्वं किन्तु अभिरूपवत्त्वम् ॥

अपरं विशेषं दर्शयति —"अभिरूपवतीभिरेके"–इति। अभिपूर्वस्य रुदिधातो रूपं यास्वस्ति, ताः 'अभिरूपवत्यः' ॥

तत्र होतुर्याज्यां दर्शयति— "पिबा सोम मभि य मुग्र तर्द इति ( सं० ६. १७. १. ) होता यजति"–इति। तत्राभिशब्दस्य तर्दशब्दस्य च विद्यमानत्वात् अभिरूपवत्त्वम् ॥

मैत्रावरुणस्य याज्यां दर्शयति— "स ईम्पाहि य ऋजीषी तरुत्र इति ( सं० ६. १७. १. ) मैत्रावरुणो यजति"–इति। "स ईम्पाहि"–इत्यस्या ऋचश्चतुर्थपादे अभिरूपवत्त्वम् ॥

ब्राह्मणाच्छंसिनो याज्यां दर्शयति— "एवा पाहि प्रत्नथा मन्दतु त्वेति ( सं० ६. १७. ३. ) ब्राह्मणाच्छंसी यजति"–इति। "एवा पाहि"–इत्यस्या ऋचि चतुर्थपादे "अभि गा इन्द्र तृन्धि" –इतिश्रवणादभिरूपवत्त्वम्। एतांस्त्रीनृत्विजो ऽभिप्रेत्याभिरूपवतीभिरेक इत्युक्तम् ( १० पं० ) ॥

पोतुर्याज्यां दर्शयति— "अर्वाङेहि सोम कामं त्वाहुरिति ( सं० १. १०४. ८. ) पोता यजति"–इति ॥

नेष्टुर्याज्यां दर्शयति— "तवायं सोमस्त्वं मेह्यर्वाङिति (सं० ३. ३५. ६.) नेष्टा यजति"—इति ॥

अच्छावाकस्य याज्यां दर्शयति— "इन्द्राय सोमाः प्र दिवो विदाना (सं० ३. ३६. २.) इत्यच्छावाको यजति"—इति ॥

आग्नीध्रस्य याज्यां दर्शयति— "आ पूर्णो अस्य कलशः स्वाहे-त्याग्नीध्रो (सं० ३. ३२. १५.) यजति"—इति ॥

उक्तानां समानां याज्यानां मध्ये "पिबा सोमम्", "स ईम्पाहि", 'एवा पाहि"—इति तिस्र ऋचो ऽभितृण्वत्त्वेन प्रशं-सति— "तासा मेता अभितृण्वत्यो भवन्तीन्द्रो वै प्रातःसवने न व्यजयत; स एताभिरेव माध्यन्दिनं सवनमभ्यतृणदभ्यतृण-त्तस्मादेता अभितृण्वत्यो भवन्ति"—इति। अभिपूर्वतर्दनधातु-युक्तत्वादभितृण्वत्त्वं यथा भवति तथैव धात्वर्थसम्भवादप्यभितृण्व-त्त्वं द्रष्टव्यम्। कथं मेतदिति, तदुच्यते— इन्द्रः पुरा प्रातः-सवने समाप्ते सति तावता 'न व्यजयत' विजयं न प्राप्तवान्; माध्यन्दिनसवनस्य गुरुत्वेन गलितत्वात्। तदानी मिन्द्रस्तस्य माध्यन्दिनसवनस्य स्थितिसिद्ध्यर्थम् "पिबा सोम"—इत्यादिभि-स्तिसृभिः ऋग्भिर्माध्यन्दिनसवनम् 'अभितः' प्रथमतृतीययोर्मध्ये 'अतृणत्' तर्दनं अकरोत्, दृढबन्धेन स्थितिं कृतवानित्यर्थः। 'तस्मात्' तर्दनस्यार्थस्य युक्तत्वादेतासां तिसृणा मभितृण्वत्त्वम् ॥३॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे,
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायां तृतीयाध्याये
(अष्टाविंशाध्याये) तृतीयः खण्डः ॥ ३ (११) ॥

---

॥ अथ चतुर्थः खण्डः ॥

इहोपयात शवसो नपात इति तृतीयसवन उन्नीयमानेभ्यो ऽन्वाह वृषण्वतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धास्ता ऐन्द्रार्भव्यो भवन्ति तदाहुर्यन्नार्भवीषु स्तुवते ऽथ कस्मादार्भवः पवमान इत्याचक्षत इति प्रजापतिर्वै पित ऋभून् मर्त्यान्त्सतो ऽमर्त्यान् कृत्वा तृतीयसवन आभजत् तस्मान्नार्भवीषु स्तुवते ऽथार्भवः पवमान इत्याचक्षते ऽथाह यद्यथाच्छन्दसं पूर्वयोः सवनयोरन्वाह गायत्रीः प्रातःसवने त्रिष्टुभो माध्यन्दिने ऽथ कस्माज्जगते सति तृतीयसवने त्रिष्टुभो ऽन्वाहेति धीतरसं वै तृतीयसवन मथैतदधीतरसं शुक्रियं छन्दो यत् त्रिष्टुप् सवनस्य सरसताया इति ब्रूयादथो इन्द्र मेवैतत्सवने ऽन्वा भजतीत्यथाह यदैन्द्रार्भवं वै तृतीयसवन मथ कस्मादेष एव तृतीयसवने प्रस्थितानां मत्स्वैन्द्रार्भव्या यजतीन्द्र ऋभुभिर्वाजवद्भिः समुक्षित मिति होतैव नानादेवत्याभिरितरे कथं तेषा मैन्द्रार्भव्यो भवन्तीतीन्द्रावरुणा सुतपाविमं सुत मिति मैत्रावरुणो यजति युवो रथो अध्वरं देववीतय इति बहूनि वा ह तदृभूणां रूप मिन्द्रश्च सोमं

पिबतं वृषण्वसू इति ब्राह्मणाच्छंसी यजत्यावां विशन्त्विन्दवः स्वाभुव इति वहूनि वा ह तद्दृष्णां रूपं मा वो वहन्तु सप्तयो रघुष्यद इति पोता यजति रघुपत्वानः प्र जिगात बाहुभिरिति वहूनि वा ह तद्दृष्णां रूपं ममेव नः सुहवा आ हि गन्तनेति नेष्टा यजति गन्तनेति वहूनि वा ह तद्दृष्णां रूपमिन्द्राविष्णू पिबतं मध्वो अस्येत्यच्छावाको यजत्या वा मन्धांसि मदिराण्यग्मन्निति वहूनि वा ह तद्दृष्णां रूपमिमं स्तोममर्हते जातवेदस इत्याग्नीध्रो यजति रथमिव सम्महेमा मनीषयेति वहूनि वा ह तद्दृष्णां रूपमेवमु हैता ऐन्द्रार्भव्यो भवन्ति यन्नानादेवत्यास्तेनान्या देवताः प्रीणाति यदु जगत्प्रासाहा जागतं वै तृतीयसवनं तृतीयसवनस्यैव समृद्ध्यै ॥ ४ (१२) ॥

अथ तृतीयसवने उक्थ्यमानं सूक्तं विधत्ते— "इहोपयात शवसो नपात इति ( सं० ४. ३५. १–९. ) तृतीयसवन उक्थ्यमानेभ्यो ऽन्वाह; वृषण्वतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धास्ता ऐन्द्रार्भव्यो भवन्ति"–अध्वर्युणा चमसोन्नयनकाले प्रेषितो मैत्रावरुणः "इहोपयात"–इति सूक्तमनुब्रूयात्। तत्रत्या ऋचो वृष-पीत सुत मद-शब्दोपेताः। "आ तचत वृषणः"–इति 'वृषन्'-शब्दः। "सु पुतस्य पीतिः"–इति सुनोतिधातुना पिबतिधातुना

च योगः। "अनु वो मदासः"–इति मदिधातुयोगः। तत्वत्या ऋच. 'ऐन्द्रार्भव्यः' इन्द्रश्च ऋभवश्च तासां देवता; "सौधन्वना ऋभवः"–"गच्छन्द्रम्"–इति तत्र श्रवणात् ॥

ऋभुदेवताप्रसङ्गेन तृतीयसवनगते पवमानस्तोत्रे किञ्चिच्चोद्य मुद्भावयति—"तदाहुर्यदार्भवीषु स्तुवते ऽथ कस्मादार्भवः पवमान इत्याचक्षत इति"–इति। 'तत्' तस्मिन्नृभुसम्बन्धविषये चोद्य माहुः। यस्मात् कारणादृभुदेवतास्वृक्षु सामगास्तृतीयसवने पवमानस्तोत्रेण न स्तुवते, किन्तु "स्वादिष्ठया मदिष्ठया"–इत्यन्य-देवताकास्वेव स्तुवते *। अथैवं सति कस्मात् कारणात् पवमान-स्तोत्रस्यार्भवत्व माचक्षते ? इति चोद्यम् ॥

तस्योत्तर माह—"प्रजापतिर्वै पित ऋभून् मर्त्यान्सतो ऽमर्त्यान् कृत्वा तृतीयसवन आभजत्; तस्मान्नार्भवीषु स्तुवते ऽथा-र्भवः पवमान इत्याचक्षते"–इति। पुरा प्रजापतिः पिता भूत्वा 'मर्त्यान्' मनुष्यान् सतः ऋभून् 'अमर्त्यान्' देवान् कृत्वा तृतीय-सवने 'आभजत्' भागिनः अकरोत्। तदिद मुपाख्यानम् "आर्भवं शंसति"–इत्यत्र प्रदर्शितम् †। एवं च सति ऋभूणां स्तोत्रदेवता-त्वाभावाद् 'आर्भवीषु' ऋक्षु उद्गातारो न स्तुवते; 'अथ' अपि ऋभूणां तृतीयसवनसम्बन्धसद्भावात् तृतीयसवनगतस्य पवमान-स्तोत्रस्याप्यार्भवत्वं व्यवहरन्ति ॥

प्रासङ्गिकं परिसमाप्य प्रकृत एव सूक्ते चोद्य मुद्भावयति—"अथाह यद्यथाच्छन्दसं पूर्वयोः सवनयोरन्वाह,—गायत्रीः प्रात-स्सवने त्रिष्टुभो माध्यन्दिने, ऽथ कस्माज्जागते सति तृतीयसवने

* उ० भा० १ । १४, ता० ब्रा० ८ । ४. ५ (२ भा० ४९ पृ० )।

† १ प० ३ ख० ६ प० (२ भा० १३५ पृ० )।

त्रिष्टुभो ऽन्वाहेति"—इति । 'अथ' उन्नीयमानसूक्तविधानानन्तरं तत्र कश्चिद् ब्रह्मवादी चोद्य माह । 'यद्' यस्मात् कारणात् 'यथाच्छन्दसं' तत्र तत्रोचितं छन्दोऽनतिक्रम्य सवनद्वये गायत्रीः त्रिष्टुभश्च क्रमेणान्वाह, तृतीयसवनं तु जागतम् । तथा सति जगतीमतिक्रम्य "इहोपयात"—इत्याद्यास्त्रिष्टुभः कस्मादनुब्रूते ? इति चोद्यम् ॥

तत्रोत्तरं दर्शयति— "धीतरसं वै तृतीयसवन मथैतदधीतरसं शुक्रियं छन्दो यत् त्रिष्टुप्, सवनस्य सरसतायां इति ब्रूयादथो इन्द्र मेवैतत्सवने ऽन्वाभजतीति"—इति । यदेतत् तृतीयसवनं, तदेतद् 'धीतरसं' तदीयो रसो गायत्र्या पीतः सोमाहरणकाले पक्षाभ्यां सवनद्वयं मुखेन तृतीयसवनं च स्वीकृत्य तवत्यं रसं गायत्री पीतवती । तथाचान्यत्र श्रूयते— "पक्षाभ्यां द्वे सवने समगृभ्णात्, मुखेनैकं ; यत् मुखेन समगृभ्णात्, तदधयत् ; तस्माद् द्वे सवने शुक्रवती प्रातस्सवनं माध्यन्दिनञ्च, तस्मात् तृतीयसवन ऋजीष मभिषुण्वन्ति ; धीत मिव हि मन्यन्ते"—इति ( तै० सं० ६. १. ७. ४. ) । तथैव त्रिष्टुप् छन्दो यदस्ति, एतद् 'अधीतरसम्' अपीतरसम् ; माध्यन्दिनसवनसम्बन्धित्वात् । अत एतत् शुक्रियो रसः तदुपेतं 'शुक्रियम्' । अतो ऽस्य तृतीयसवनस्य सरसत्वायै त्रिष्टुभोऽन्वाहेत्युत्तरं ब्रूयात् । 'अथो' अपि च तेन सरसत्वेनेन्द्र मेव तृतीयसवनं भागवन्तं करोति ; त्रिष्टुप्छन्दसः ऐन्द्रत्वात् । तेनेन्द्रार्भवत्वं युक्तम् ॥

उक्तं चोद्यं समाधाय प्रस्थितयाज्याविषये चोद्य मुद्भावयति— "अथाह यदैन्द्रार्भवं वै तृतीयसवन मथ कस्मादेष एव तृतीयसवने प्रस्थितानां प्रत्यक्षादैन्द्रार्भव्या यजतीन्द्र ऋभुभिर्वाजवद्भिः समु-

चित मिति होतैव, नानादेवत्याभिरितरे ; कथं तेषा मैन्द्रार्भव्यो भवन्तीति"–इति। 'अथ' उच्यमानसूक्तकथनानन्तरं कश्चिद् ब्रह्मवादी चोद्य माह। 'यद्' यस्मात् कारणात् तृतीयसवनम् 'ऐन्द्रार्भवम्', तच्च पूर्वं सुपपादितम् (२७१ पृ०) ; एवं सत्येक एव होता प्रस्थितसोमानां 'प्रत्यक्षात्' प्रत्यक्षेण, मुखेनैवेन्द्रशब्देन ऋभुशब्देन च युक्तयर्चा यजति। "इन्द्र ऋभुभिः"–इत्याद्या (सं० ३. ६०. ५.) सेय मृगवगन्तव्या। होतैव तया यजति ; न त्वितरे षड्ऋत्विजः ; ते तु नानाविधदेवताकाभिर्वक्ष्यमाणाभिर्ऋग्भिर्यजन्ति। तस्मात् कारणादेतत् कथं सम्पन्नम् ? किञ्च तेषां षण्णा मृत्विजां सम्बन्धिन्यो याज्याः कथ मैन्द्रार्भव्यो विविधदेवताका भवन्ति ? इति चोद्यम् ॥

तत्र होतुर्याज्याया मैन्द्रार्भवत्वेन परितोषात्तां तथैवाङ्गीकृत्येतरेषां याज्यासु क्रमेण ऐन्द्रार्भवत्वं दर्शयितुं कामः प्रथमतो मैत्रावरुणस्य याज्यायां तद्दर्शयति— "इन्द्रावरुणा सुतपाविमं सुत मिति मैत्रावरुणो यजति ; युवो रथो अध्वरं देववीतय इति बहूनि वा ह तदृभूणां रूपम्"–इति। "इन्द्रावरुणा"–इत्यस्यां याज्यायां (सं० १. १७. ८.) "युवो रथो"–इत्यस्मिन् पादे "देववीतये"–इति पदं विद्यते। देवानां वीतिः प्राप्तिः देववीतिरिति तस्य समासः। तस्य समासे षष्ठीबहुवचनान्तेन शब्देन बहून्येव रूपाणि प्रतीयन्ते। तत्र बहुत्व मृभूणां स्वरूपम् ; मनुष्यरूपाणा मृभुशब्दवाच्यानां महर्षीणां बहुत्वात्। तस्मादर्थतः ऋभुसद्भावादिन्द्रशब्दस्य [redacted] साक्षात् श्रवणादिय मैन्द्रार्भवी ॥

ब्राह्मणाच्छंसिनो याज्याया मार्भवत्वं सम्पादयति— "इन्द्रश्च सोमं पिबतं बृहस्पत इति ब्राह्मणाच्छंसी यजत्या वां विशन्त्विन्दवः

स्वाभुव इति बहूनि वा ह तद्भूणां रूपम्"–इति। "इन्द्रम्"–इत्यादियाज्यायाम् ( सं० ४. ५०. १०. ) "आ वां विशन्तु"–इत्यस्मिन् पादे "विशन्तु"–इत्यादीनि बहुवचनान्तानि पदानि श्रूयन्ते, तैरभिधेयं बहुत्व मृभूणां स्वरूपम् ॥

पोतुर्याज्याया मार्भवत्वं दर्शयति— "आ वो वहन्तु सप्तयो रघुष्यद इति पोता यजति ; रघुपत्वानः प्र जिगात बाहुभिरिति बहूनि वा ह तद्भूणां रूपम्"–इति। "आ वो वहन्तु"–इतियाज्यायां ( सं० १. ८५. ६. ) "रघुपत्वानः"–इत्यस्मिन् पादे बहुवचनान्तैः पादैरभिधेयं बहुत्व मृभूणां स्वरूपम् ॥

नेष्टुर्याज्याया मार्भवत्वं दर्शयति— "अमेव नः सुहवा आ हि गन्तनेति नेष्टा यजति ; गन्तनेति बहूनि वा ह तद्भूणां रूपम्" –इति। "अमेव नः"–इतियाज्यायां ( सं० २. ३६. ३. ) तस्मिन्नेव पादे "गन्तन"–इतिपदस्य गच्छतेत्यर्थे सति लोटमध्यमपुरुष-बहुवचनान्तेन प्रतीतं बहुत्व मृभूणां स्वरूपम् ॥

अच्छावाकस्य याज्याया मार्भवत्वं दर्शयति— "इन्द्राविष्णू पिबतं मध्वो अस्येत्यच्छावाको यजत्या वा मन्धांसि मदिराण्य-ग्मन्निति बहूनि वा ह तद्भूणां रूपम्"–इति। "इन्द्राविष्णू"–इत्यस्यां याज्यायाम् ( सं० ६. ६९. ७. ) "आ वाम्"–इत्यस्मिन् पादे बहुवचनान्तैः "अन्धांसि"–इत्यादिभिः पदैः प्रतीतं बहुत्व मृभूणां स्वरूपम् ॥

आग्नीध्रस्य याज्याया मार्भवत्वं दर्शयति—"इमं स्तोम मर्हते जातवेदस इत्याग्नीध्रो यजति ; रथ मिव सम्महेमा मनीषयेति बहूनि वा ह तद्भूणां रूपम्"–इति। "इमं स्तोमम्"–इत्यस्यां याज्यायां ( सं० १. ९४. १. ) "रथ मिव"–इत्यस्मिन् पादे "महेमा"

–इत्युत्तमपुरुषबहुवचनान्तेन पदेन प्रतीयमानं बहुल मृभूणां स्वरूपम् ॥

उक्त मर्थ मुपसंहरति— "एव मु हैता ऐन्द्रार्भव्यो भवन्ति"–इति। उक्तेन प्रकारेण याज्यास्वृभुसम्बन्धसम्पादनादिन्द्रसम्बन्धस्य च साक्षादेव श्रुतत्वादेता ऋच ऐन्द्रार्भव्यः सम्पद्यन्ते ॥

इन्द्रस्यर्भूणां चोक्तसम्बन्धेन प्रीतेः सिद्धत्वादितरदेवताना मपि ताभिर्याज्याभिः प्रीतिं दर्शयति—"यन्नानादेवत्यास्तेनान्या देवताः प्रीणाति"–इति। इन्द्रवरुणबृहस्पत्यादिनानाविधदेवतायुक्ता ऋच इति यदस्ति, 'तेन' कारणेन 'अन्याः' इन्द्रादृभुभ्यश्च व्यतिरिक्ता देवतास्तोषयति ॥

याज्यास्ववस्थितं छन्दः प्रशंसति— "यद्‌ जगत्प्रासाहा जागतं वै तृतीयसवनं तृतीयसवनस्यैव समृद्ध्यै"–इति। जगच्छब्देन जगतीच्छन्दो ऽभिधीयते, प्रासाहशब्दो बाहुल्यवाची ; जगत्यः प्रासाहाः बहुला यासृक्षु प्रस्थितयाज्यासु ता 'जगत्प्रासाहाः' ; तृतीयसवनञ्च जागत मिति प्रसिद्धम्। अतो 'यद्' यदेव जगतीबाहुल्यं, तेन तृतीयसवनस्य समृद्धिर्भवति* ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां तृतीयाध्याये
( अष्टाविंशाध्याये ) चतुर्थः खण्डः ॥ ४ ( १२ ) ॥

---

* "इदन्ते सौम्यं०—० उपाघ्राय मद्यान्नावेदि प्रातस्सवनिका. प्रस्थितयाज्याः (२ख०), पिबा सोम मभि ०—० आ पूर्या अस कलश' स्वाहेति माध्यन्दिन्यः ( २ख० ), इन्द्र ऋभुभिः ०—० इमं सोम मर्पते जातवेदस इति तार्तीयसवनिका. (४ख०)"–इति आश्व-

॥ अथ पञ्चमः खण्डः ॥

अथाह यदुक्थिन्यो ऽन्या होत्रा अनुक्था अन्याः कथ मस्यैता उक्थिन्यः सर्वाः समाः समृद्धा भवन्तीति यदेवैनाः सम्प्रगीर्य होत्रा इत्याचक्षते तेन समा यदुक्थिन्यो ऽन्या होत्रा अनुक्था अन्या-स्तेनो विषमा एव सु हास्यैता उक्थिन्यः सर्वाः समाः समृद्धा भवन्त्यथाह शंसन्ति प्रातःसवने शंसन्ति माध्यन्दिने होत्रकाः कथ मेषां तृतीयसवने शस्तं भवतीति यदेव माध्यन्दिने द्वे द्वे सूक्ते शंसन्तीति ब्रूयात्तेनेत्यथाह यद् द्व्युक्थो होता कथं होत्रका द्व्युक्था भवन्तीति यदेव द्विदेवत्याभिर्यजन्तीति ब्रूयात्तेनेति ॥ ५ ( १३ ) ॥

होत्रकाणां प्रस्थितयाज्याः सवनत्रये ऽभिधाय परस्परं साम्यं वैषम्यञ्च विवेक्तुं प्रश्न मुद्भावयति— "अथाह यदुक्थिन्यो ऽन्या होत्रा, अनुक्था अन्याः, कथ मस्यैता उक्थिन्यः सर्वाः समाः समृद्धा भवन्तीति"—इति। होत्रकाणां याज्याकथनानन्तरं कश्चिद् ब्रह्मवादी चोद्य माह। होत्रकाणां क्रियाः 'होत्रा'शब्देन विवक्षिताः। तासु 'अन्याः' काश्चित् क्रियाः 'उक्थिन्यः' शस्त्रयुक्ताः,

श्रौ॰ ५. ५. १८, १९। इह चैता. २६३—२७८ पृष्ठेषु विहिता द्रष्टव्याः। ता एवैताः 'प्रस्थितयाज्याः'—इत्युच्यन्ते। "होता यक्षत्॰—॰ इति प्रेषितः प्रेषितो होतानुवचन प्रस्थितयाज्याभिर्यजति, नामादेश मित्वरे, प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टा ऽग्नीध्रो ऽच्छावाकश्च" —इति आश्व॰ श्रौ॰ ५. ५. १५—१७।

'अन्याः' इतराः क्रियाः 'अनुकथाः' शस्त्ररहिताः। मैत्रावरुणो ब्राह्मणाच्छंस्यच्छावाक इत्येतेषां त्रयाणां शस्त्रसद्भावादेतदीयाः क्रियाः 'उकथिन्यः', नेष्टृपोत्रादीनां शस्त्राराहित्यात् तदीयाः क्रियाः 'अनुकथाः' *। एवं वैषम्ये स्पष्टे सति 'अस्य' यज्ञस्य यजमानस्य वा सम्बन्धिन्यः 'एताः' होत्राः सर्वाः 'उकथिन्यः' शस्त्रयुक्ता भूत्वा 'समाः' वैषम्यरहिताः अत एव 'समृद्धाः' सम्पूर्णाः कथं भवन्ति ? इति चोद्यम् ॥

तस्योत्तर माह — "यदेवैनाः सम्प्रगीर्य होत्रा इत्याचक्षते, तेन समाः"—इति। 'यदेव' यस्मादेव कारणात् 'एनाः' मैत्रावरुणादिक्रियाः पोतृनेष्ट्रादिक्रियाश्च 'सम्प्रगीर्य' सम्भूय प्रकर्षेणोक्त्वा 'होत्रा'—इतिशब्देन याज्ञिका आचक्षते, तेन समाः। यथा लोके छत्रयुक्ताम् तद्रहितांश्च सम्भूय छत्रिण इत्येकेनैव शब्देन व्यवह्रियन्ते, एव मत्रापि शस्त्रयुक्ता मैत्रावरुणादयः, शस्त्ररहिताः पोतृनेष्ट्रादयश्च सम्भूय एकेनैव होत्राशब्देन व्यवह्रियन्ते। अतः शस्त्रिभिः समभिव्याहारात् अशस्त्रिणा मप्युपचरितं शस्त्रित्वम्; 'तेन' व्यवहारैक्येन समा भवन्ति; न चैतावता स्वाभाविकं शस्त्रित्वाशस्त्रित्ववैषम्य मपगच्छति ॥

तदेतद् वैषम्यं दर्शयति— "यदुकथिन्यो ऽन्या होत्रा अनुकथा अन्यास्तेनो विषमाः"—इति। 'उ'-शब्दोऽपिशब्दार्थः। 'तेन' उकथित्वानुकथित्वधर्मद्वयेन विषमा अपि भवन्ति ॥

सत्यपि वैषम्ये औपचारिकोकथित्वेन साम्यं यदुपपादितम्, तदुपसंहरति—"एव मु हास्यैता उकथिन्यः सर्वाः समाः समृद्धा भवन्ति"—इति ॥

---

* १ भा० ४४८ पृ०, आश्व० श्रौ० ५, १० १० । मैत्रावरुण,—प्रशास्ता।

होत्रकेषु चोद्यान्तर मुद्भावयति— "अथाह शंसन्ति प्रा स्सवने, शंसन्ति माध्यन्दिने होत्रकाः ; कथ मेषां तृतीयसव शस्तं भवतीति"–इति । अग्निष्टोमे मैत्रावरुणब्राह्मणाच्छंसच्छाव कानां सवनद्वये शंसनं विहितम्, तद्दृष्टान्तेन तृतीयसवनेऽ शंसन मपेक्षितम् ; तत्र न विहितम् ; तथा सति कथ मेष तृतीयसवने 'शस्तं भवति' शंसनं सिध्यति ? इति चोद्यम् ॥

तस्योत्तरं दर्शयति—"यदेव माध्यन्दिने द्वे द्वे सूक्ते शंसन्तीि ब्रूयात्तेनेति"–इति । मैत्रावरुणस्य "सद्यो ह जातो वृषभ कनीनः"–इत्येकं ( सं० ३.४८.) सूक्तम्, "एवा त्वा मिन्द्र वज्रिन् –इति ( सं० ४. १९. ) द्वितीयम् ; ब्राह्मणाच्छंसिनः "इन्द्र पूर्भिद्"–इत्येकं ( सं० ३. ३४. ) सूक्तम्, "उदु ब्रह्माणि"–इति ( सं० ७, २३. ) द्वितीयम् ; अच्छावाकस्य "भूयः"–इत्येकं ( सं० ६. ३०. ), "इम मू षु"–इति ( सं० ३. ३६. ) द्वितीयम् एव मेते त्रयो माध्यन्दिने सवने प्रत्येकं द्वे द्वे सूक्ते शंसति * तत्रैकं माध्यन्दिनसवनार्थं द्वितीयन्तु तृतीयसवनार्थं मित्युपचारेण तत्रापि शंसनं सिध्यतीत्युत्तरं ब्रूयात् ॥

तेष्वेव चोद्यान्तर मुद्भावयति—"अथाह यद् द्व्युक्थो होता कथं होत्रका द्व्युक्था भवन्तीति"–इति । 'अथ' तृतीयसवने शंसनसम्पादनानन्तरं पुनरपि ब्रह्मवादी चोद्यान्तर माह । 'यद्, यस्मात् कारणाद्धोता 'द्व्युक्थः' द्वे उक्थे शस्त्रे यस्यासौ द्व्युक्थः । प्रातस्सवने आज्य प्रउगे द्वे, माध्यन्दिनसवने मरु त्वतीय-निष्केवल्ये द्वे, तृतीयसवने वैश्वदेवाग्निमारुते द्वे । एवं स्थिते होतृदृष्टान्तेन होत्रकाणा मपि उक्थद्वयोपेतत्व मपे-

* सूक्तिद्वैतत्वस्य मध्यमायेन होत्रकाणा मिति कण्डिकायाम् ( ५. १९ ) ।

च्छितम्, न चोक्थद्वयं विहित मस्ति ; अतस्तत् केन प्रकारेण सिध्यति ? इति चोद्यम् * ॥

तस्योत्तर माह— "यदेव द्विदेवत्याभिर्यजन्तीति ब्रूयात्, तेनेति"—इति। प्रस्थितयाज्यानां श्रूयमाणदेवतया सम्मायमानदेवतया च द्विदेवत्यत्वम् †; तादृशीभिर्ऋग्भिर्यस्मात् यजन्ति, तेन द्विप्रख्यत्वम् ; तत्रैका देवता याज्यायां, इतरा द्वितीया प्रख्यायेत्येव मुत्तरं ब्रूयात् ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायां तृतीयाध्याये (अष्टाविंशाध्याये) पञ्चमः खण्डः ॥ ५ (१२) ॥

---

॥ अथ षष्ठः खण्डः ॥

अथाह यदेतास्तिस्र उक्थिन्यो होत्राः कथ मितरा उक्थिन्यो भवन्तीरयाज्य मेवाग्नीध्रीयाया उक्थं मरुत्वतीयं पोत्रीयायै वैश्वदेवं नेष्ट्रीयायै ता वा एता होत्रा एवं व्यङ्गा एव भवन्त्यथाह यदेकप्रैषा अन्ये होत्रका अथ कस्माद् द्विप्रैषः पोता द्वि-

---

* आज्यप्रउगादीनि षट् शस्त्राणि पुरस्तात् द्रष्टव्यानि,— २प० ५अ० ४ख०, ३प० १अ० १ख०, ३प० २अ० ३ख०, ३प० २अ० १०ख०, ३प० ३अ० ७ख०, ३प० ३अ० ४ख० (१भा० ४४५ पृ०—२भा० १८० पृ०)।

† यद्वा: श्रूयमाणदेवता, उभयत्र सम्मायमाना: (२७४–२७६ पृ० द्र०।

प्रैषो नेष्टेति यचाहो गायत्री सुपर्णी भूत्वा सोम माहरत्तद्देतासां होत्राणा मिन्द्र उक्थानि परिलुप्य होत्रे प्रददौ यूयं माभ्यह्वयध्वं यूय मस्यावेदिष्टेति ते होतुर्देवा वाचेमे होत्रे प्रभावयामेति तस्मात्ते द्विप्रैषे भवत ऋचाग्नीध्रीयाम् प्रभावयाञ्चक्रुस्तस्मात् तस्यैकयर्चा भूयसी याज्या भवन्त्यथाह यद्धोता यक्षद्धोता यक्षदिति मैत्रावरुणो होत्रे प्रेष्यत्यथ कस्मादहोतृभ्यः सद्भ्यो होत्राशंसिभ्यो होता यक्षद्धोता यक्षदिति प्रेष्यतीति प्राणो वै होता प्राणः सर्व ऋत्विजः प्राणो यक्षत् प्राणो यक्षदित्येव तदाहाथाहाम्युन्नानूणां प्रैषा३ः, नाँ३ इति* अस्तीति ब्रूयाद्दैवैतत्प्रशास्ता जपं जपित्वा स्तुध्व मित्याह स एषां प्रैषो ऽथाहास्यच्छावाकस्य प्रवरा३ः नाँ३ इति† अस्तीति ब्रूयाद्दैवेन मध्वर्युराह्वाच्छावाक वदस्व यत्ते वाद्य मित्येषो ऽस्य प्रवरो ऽथाह यदैन्द्रावरुणं मैत्रावरुणस्तृतीयसवने शंसत्यथ कस्मादस्याग्नेयौ स्तोत्रियानुरूपौ भवत इत्यग्निना वै मुखेन देवा असुरानुक्थेभ्यो निर्जघ्नुस्तस्मादस्याग्नेयौ स्तोत्रियानुरूपौ भवतो ऽथाह यदैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसी तृतीयसवने शंस-

*, † "नाँ इति" ख, ग, घ, ङ, "नाँ इति" च ।

त्यैन्द्रावैष्णव मच्छावाकः कथ मेनयोरैन्द्राः * स्तोत्रियानुरूपा भवन्तीतीन्द्रो ह स्म वा असुरानुकथेभ्यः प्रजिगाय सो ऽब्रवीत् कश्चाहञ्चेत्यहञ्चाहञ्चेति ह स्म देवता अन्ववयन्ति स यदिन्द्रः पूर्वः प्रजिगाय तस्मादेनयोरैन्द्राः † स्तोत्रियानुरूपा भवन्ति यद्वहञ्चाहञ्चेति ह स्म देवता अन्ववयुस्तस्मान्नानादेवत्यानि शंसतः ॥ ६ (१४) ॥

सर्वत्र होतकशब्दस्य व्यवहारसाम्येन शस्त्ररहिताना मप्युपचरित मुक्थित्व मित्युक्तम् ; इदानीं प्रकारान्तरेण तेषा मुक्थित्व सम्पादयितु प्रश्न मुद्भावयति— "अथाह यदेतास्तिस्र उक्थिन्यो होत्रा', कथ मितरा उक्थिन्या भवन्तीति"—इति । 'अथ' द्वितीयशस्त्रसम्पादनानन्तरं ब्रह्मवादी चोद्य माह । 'यद्' यस्मात् कारणात् 'एताः' पूर्वोक्ताः 'होत्राः' मैत्रावरुणादीना क्रियास्तिस्रः 'उक्थिन्यः' शस्त्रोपेता, तद्दृष्टान्तेन 'इतराः' पोत्रादीनां क्रिया अपि शस्त्रयुक्ता इति वक्तव्यम् । न चात्र शस्त्रं विहितम्, अतः कथ मेता उक्थिन्यः ? इति प्रश्नः ॥

तत्रोत्तर माह—"आज्य मेवाग्नीध्रीयाया उक्थं, मरुत्वतीयं पोत्रीयायै, वैश्वदेवं नेष्ट्रीयायै ; ता वा एता होत्रा एवं न्यङ्गा एव भवन्ति"—इति । होतु प्रातस्सवने यत् प्रथमम् 'आज्य''शस्त्रं तदेव 'आग्नीध्रीयायै' आग्नीध्रेण क्रियमाणायाः क्रियायाः 'उक्थं' शस्त्रम् । एव मरुत्वतीयवैश्वदेवयोरपि योज्यम् । तथा सति ताः

*, † ग-ङ-च-पुस्तकेष्विह विसर्गो नास्ति ।

एवैताः 'होत्राः' होत्रकाणां क्रियाः 'एवम्' उक्तेन प्रकारेण 'व्यङ्गाः' तत्तच्चिह्ना एव भवन्ति । अग्नि माग्नीध्रो यजति *, आज्यशस्त्रं चाग्नेयम्; पोता मरुतो यजति † मरुत्वतीये च मारुतानि सूक्तानि शंसति; "अग्ने पत्नीरिहावह"—इति (सं० १. २२. ९.) नेष्टा यजति ‡, तत्र "देवाना मुशतीः"—इत्यत्र "देवानाम्"—इति श्रवण मस्ति । एवं त्रयाणा मपि आग्नीध्र-पोतृ-नेष्टृणा माग्नेयत्व-मारुतत्व-वैश्वदेवत्व-चिह्नानि विद्यन्ते । तस्मादाज्यादिभिरुक्थैरितरेषा मुक्थित्वम् ॥

तेषा मेव होत्रकाणा मृतुयाजेषु § कस्यचिद् विशेषस्य प्रश्न मवतारयति— "अथाह यदेकप्रैषा अन्ये होत्रका अथ कस्माद् द्विप्रैषः पोता द्विप्रैषो नेष्टेति"—इति । प्रैषसूक्ते ‖ ये ये प्रैषा उक्ताः, तेषु प्रैषेषु एकैक एव प्रैषो नेष्टृ-पोतृ-व्यतिरिक्तानां होत्रकाणाम्; पोतुर्नेष्टुश्च द्वौ द्वौ प्रैषौ । तथा च यज्ञसम्प्रदायविदः पठन्ति— "हो-पो-ने-ऽग्नीद्-ब्र-प्र-हो-पो-ने-ऽच्छा-ऽध्वर्यु गृहपतीति च"—इति । अस्याय मर्थः — तत्र नाम्ना माद्यवर्णैरृतुयजो निर्दिश्यन्ते । तथाच होता, पोता, नेष्टा, आग्नीध्रः, ब्राह्मणाच्छंसी, प्रशास्ता, होता, पोता, नेष्टा, अच्छावाकः, अध्वर्युर्गृहपतिश्च क्रमेणोक्ताः । एतेषां प्रैषसूक्ते द्वादश प्रैषाः क्रमेण सन्ति । तथा सति पोतुर्द्वि-

*, †, ‡ २८३, २८४ पृ० द्र० ।

§ २ भा० २४२ पृ० 'ऋतुयाजाः षळृच०'—इति द्रष्टव्यम् ।

‖ अस्ति षडध्यायात्मक ऋक्परिशिष्टः । तत्र प्रथमः प्रैषाध्यायः । स एव 'प्रैषसमाम्नाय'—इति, 'प्रैषग्रन्थ'—इति चोच्यते । वर्तन्ते च पञ्च सूक्तानि । तदीय पञ्चमे सूक्ते तुल्यायां सवनीय प्रैषा उक्ताः । तत्रैवैषोऽर्थः । तदुक्त माश्वलायनेन—"ऋतुयाजैश्चरन्ति, तेषां प्रैषाः, पञ्चमं प्रैषसूक्तम्"—इति आश्व० श्रौ० ५. ८. १—२ । 'प्रैषसमाम्नाये यत् पञ्चमं प्रैषसूक्तं तदेवात्र प्रैषा भवन्ति'—इति तद्वृत्तिः ।

तीयोऽष्टमश्च द्वौ प्रैषौ ; नेष्टुस्तृतीयो नवमश्च द्वौ प्रैषौ। "होता यक्षन् मरुतः पोत्रात्"–इत्येकः ( प० ५. ५. १०. ) प्रैषः, "होता यक्षद्देवं द्रविणोदा पोत्रादृतुभिः"–इति ( प० ५. ५. १६. ) द्वितीयः ; एतौ द्वौ पोतुः प्रैषौ। "होता यक्षद् ग्रावो नेष्टा"–इति ( प० ५. ५. ११. ) एकः, "होता यक्षद्देवं द्रविणोदां नेष्ट्रात्"–इति ( प० ५. ५. १७. ) द्वितीयः ; एतौ द्वौ नेष्टुः प्रैषौ। इतरेषा माग्नीध्राच्छावाकादीना मेकैक एव प्रैषः। तथा सति पोतृनेष्ट्रोः द्वि. प्रैषत्वे किं कारणम् ? इति प्रश्नः ॥

तस्योत्तर माह—"यत्रादो गायत्री सुपर्णो भूत्वा सोम माहरत्, तदेतासां होत्राणा मिन्द्र उक्थानि परिलुप्य होत्रे प्रददौ ; यूयं माभ्यभ्रयध्वं, यूय मस्यावेदिष्टेति ; ते होतुर्देवा वाचेमे होत्रे प्रभावयामेति ; तस्माते द्विप्रैषे भवत ऋचाग्नीध्रीयां प्रभावयाञ्चक्रुस्तस्मात् तस्यैकयर्चा भूयस्यो याज्या भवन्ति"–इति। 'यत्र' यस्मिन् काले अदो गायत्री विश्वपि छन्दःसु या श्रेयंयुक्ताभूत् [ असौ गायत्री सुपर्णो भूत्वा द्युलोकात् सोम माहरत्,— सोऽयं वृत्तान्तः पूर्वं मेवाम्नात *. ], 'तत्' तस्मिन् काले केनापि निमित्तेन क्रुद्धः इन्द्रः 'एतासां' होत्राणाम् 'उक्थानि' शस्त्राणि परिलुप्य होत्रे प्रददौ। होत्राशब्दः स्त्रीलिङ्गोऽपि पुरुषान् होत्रकानभिधत्ते। पोतृनेष्ट्राग्नीध्राणां होत्रकाणा माज्य-मरुत्वतीय वैश्वदेवशस्त्राणि पूर्वं मासन्, तानि क्रुद्ध इन्द्रस्तेभ्यो निवार्य्य होत्रे दत्तवान्। ततो होता प्रतिसवनं शस्त्रद्वययुक्तो बभूव। गायत्र्या सोमे प्रहृते सति शोकाभिभूत मिन्द्रं सान्त्वयितु मृत्विजाभिमानिन्यो देवताः सर्वा उपतस्थिरे, पोतृनेष्ट्रा-

* २ प० १ ख० १.२ ख० (२ भा० ११५—१२२ पृ०)।

ग्नीध्रदेवास्तु नागताः ; तदिदं कोपकारणम् । स च कुपित इन्द्रः शस्त्राणि निवार्य्य पुनरप्येव मुवाच,— हे गर्वाधिकाः पोत्रादयो यूयं 'मा आभ्यह्वयध्वम्' "ओसावोम्"-इत्याह्वान मपि मा कुरुत, दूरे युष्माकं शस्त्राणि ; यतो यूयम् 'अस्य' मम सान्त्वनं 'मा अवेदिष्ट' न ज्ञातवन्तः । निषेधार्थो मा शब्दोऽत्रानुवर्त्तनीय ॥ 'इति' एव मिन्द्रेणोक्ते सति तत्समीपवर्त्तिनः 'ते' देवा इन्द्रं सम्राप्येव मूचु,— 'इमे होत्रे' एतौ पोतृनेष्टारौ शस्त्रशून्यावतिभीतौ येन केनापि प्रकारेणानुग्रहणीयौ । तयोश्चस्त्राभावेऽपि 'वाचा' अधिकप्रैषरूपया 'प्रभावयाम' प्रकर्षेण भावितौ तोषितौ करवामेति । 'तस्मात्' कारणात् 'ते होत्रे द्विप्रैषे भवतः' तौ होत्रकौ पोतृनेष्टारौ प्रैषद्वययुक्तौ भवतः । तथैव 'आग्नीध्रीयाम्' आग्नीध्रक्रियाम् 'ऋचा' कयाचिदधिकया 'प्रभावयाञ्चक्रुः' प्रभूतां कृतवन्तः । यस्मादेवं 'तस्मात्', 'तस्य' आग्नीध्रस्य एकयर्चा याज्या 'भूयस्यः' अयन्त अधिका भवन्ति । समाना अपि होत्रकाणां प्रस्थितयाज्यास्तिस्त्र एव भवन्ति, आग्नीध्रस्य "ऐभिरग्ने सरथम्"-इत्येषा ( सं० ३. ६.८. ) अधिका । सा च पात्नीवतग्रहवर्त्तिनी * । तथा च सम्प्रदायविद आहुः—

"तिस्रः प्रस्थितयाज्यास्तु समाना अभवन् खलु ।
अग्नीधस्तिसृभिः सार्द्धं मैभिरग्ने चतुर्थभूत् ॥"—इति ।

यद्यप्याग्नीध्रविषये ब्रह्मवादिना प्रश्नो न कृतः, तथापि पोतृनेष्टृभ्या समानयोगक्षेमत्वेन तदवृत्तान्तोऽप्यभिहितः ॥

होत्रकविषये प्रश्नान्तर मुद्भावयति— "अथाह यद्धोता यक्षद्धोता यक्षदिति मैत्रावरुणो होत्रे प्रेष्यत्यथ कस्माद्धोत्रभ्यः

* "पात्नीवतस्य यजत्यैभिरग्ने सरथं याह्यर्वाङित्यनुवषट्कृते"-इति आश्व श्रौ० ५,१९ ७ ।

सद्भ्यो होत्राशंसिभ्यो होता यक्षद्धोता यक्षदिति प्रेष्यतीति”—इति। ‘अथ’ द्विप्रैषत्वनिमित्तकथनानन्तरं ब्रह्मवादिनां प्रश्नमाह। ‘मैत्रावरुणः’ सर्वेषां होत्रादीनां प्रैषकर्त्ता *; स च प्रैषसूक्तगतेषु सर्वेष्वपि मन्त्रेषु आदौ “होता यक्षद्”—इत्येव तत्र तत्र पठति †। तत्र ‘होत्रे’ होतृनाम्न्यर्थं तेन मन्त्रेण यत् प्रेष्यति, तदुपक्रम; मन्त्रादाववस्थितस्य होतृशब्दस्य तद्वाचकत्वात्; ये तु ‘अहोतारः’ होतृव्यतिरिक्ताः सन्तो ‘होत्राशंसिनः’ होत्रा होत्रा न माशंसन्ति तेषां होत्रनामरहितानां प्रैषेषु तत्र तत्र “होता यक्षद्”—इति ‘कस्मात्’ कारणाद्धोतृशब्दं प्रयुङ्क्ते ? इति प्रश्नः ॥

तस्योत्तर माह—“प्राणो वै होता, प्राणः सर्वे ऋत्विजः, प्राणो यक्षत्प्राणो यक्षदित्येव तदाह”—इति। योऽयं मुख्यो होता, स प्राणस्वरूप एव; स्वतदेहस्य होतृत्वाभावात्। तथान्येषां मपि सर्वेषां ऋत्विजां प्राणस्वरूप एव। तथा सति प्राणविवक्षया प्रयुक्तो होतृशब्दः सर्वेषूपपद्यते। “होता यक्षद्धोता यक्षद्”—इत्युक्ते ‘प्राणो यक्षत्प्राणो यक्षद्”—इत्येव मैत्रावरुणो ब्रूते। तस्मादुपपन्नः सर्वेषु होतृशब्दप्रयोगः ॥

प्रकारान्तरविषये प्रश्नोत्तरे दर्शयति—“अथाहास्त्युन्नातॄणां प्रैषा३ः नाँ३ इति ? अस्तीति ब्रूयाद्; यदेवैतत्प्रस्तोता जपं जपित्वा सुब्रह्मण्यमित्याह, स एषां प्रैषः”—इति। होत्रादयो मैत्रावरुणेन

* “तेन तेनैव प्रेषितः प्रेषितः स स यथाप्रैषं यजति”—इति आश्व० श्रौ० ५.८.४।

† तद्यथा—“होता यक्षद्०—०होतर्यज। होता यक्षद्०—०पोतर्यज। होता यक्षद्०—० नेष्टर्यज। होता यक्षद्०—० अग्नीद्यज। होता यक्षद्०—० ब्रह्मन्यज। होता यक्षद्०—० प्रशास्तर्यज। होता यक्षद्०—० होतर्यज। होता यक्षद्०—० पोतर्यज। होता यक्षद्०—० नेष्टर्यज। होता यक्षद्०—० अच्छावाक यज। होता यक्षद्०—० अध्वर्यू यजतम्। होता यक्षद्०—० गृहपते यज”—इति प० ५. ५. ९—२०।

प्रेषिताः स्व-स्व-व्यापारं कुर्वन्तीति तद्दृष्टान्तेनोन्नातृणामपि प्रेषितत्वं युक्तम्, न चोन्नातृप्रैषाः प्रैषसूक्ते समाम्नाताः; तस्मादेषां प्रैषोऽस्ति न वेति संशयः। श्रुतिरियं विचारार्थम्। नकारस्य सानुनासिकत्वं छान्दसम् *। अत्र प्रैषोऽस्तीत्येव सुतरं ब्रूयात्। प्रकर्षेण सर्वानृत्विजः 'शास्ति' प्रैषमन्त्रेण तत्तद्व्यापारे प्रवर्त्तयतीति 'प्रशास्ता' मैत्रावरुणः †; स च "सुत देवेन सविता"–इत्यादिमन्त्रजपं ‡ जपित्वा, अनन्तरं "सुध्वम्" –'इति' यदेवैतद्वचनं आह, स एव 'एषाम्' उन्नातॄणां प्रैषः ॥

अच्छावाकविषये प्रश्नोत्तरे दर्शयति—"अथाहास्त्यच्छावाकस्य प्रवरा३: नाँ३ इति ? अस्तीति ब्रूयात्; यदेवैनमध्वर्युराहाच्छावाक वदस्व यत्ते वाद्य मित्येषो ऽस्य प्रवर."–इति। अच्छावाकव्यतिरिक्तानां वषट्कर्तॄणां 'प्रवरः' प्रकर्षेण वरणमस्ति। तथा च सूत्रकार आह—"प्रवृताहुतीर्जुह्वति वषट्कर्तारोऽन्येऽच्छावाकात्"–इति (आश्व० श्रौ० ५.२.१२.)। सूत्रान्तरेऽप्येव मुक्तम्— "यथाप्रवृतं § प्रवृतहोमौ जुह्वति"–इति (कात्या० श्रौ० ८. ८. १६.)। अतोऽन्येषां प्रवरसद्भावोऽवगतः; अच्छावाकस्य नावगतः; न्यायेन त्वितरदृष्टान्तेन प्रवरोऽपेक्षितः; अतोऽस्ति नवेति संशयः। तत्रास्तीत्युत्तरं ब्रूयात्। यद्यप्यन्येषा

---

* "अतो ऽप्रगृह्यस्यानुनासिकः."–इति पा० ८. ४. ५७।

† "मित्रावरुणो प्रशास्तारौ प्रशास्त्रात्"–इति कात्या० श्रौ० ९. ८. १०। अत एव क्वचिदृत्विङ्नामपरिगणनसूत्रेषु प्रशास्तेति न दृश्यते, दृश्यते मैत्रावरुण इति (आश्व० श्रौ० ४. १. ६, कात्या० श्रौ० ७. १. ६, आप० श्रौ० १०. १. ९)।

‡ "मन्त्र जपन्"–इति दृश्यमानसर्वभाष्यपुस्तकेषु।

§ "यथाप्रवृत मिति। प्रथमं होता, ततो ऽध्वर्यु:, ततः प्रतिप्रस्थाता, प्रशास्ता, ब्राह्मणाच्छंसी, पोता, नेष्टा, आग्नीध्र, यजमान इति च तट्टीकायां याज्ञिकदेव.।

मिव स्पष्टः प्रवरो नास्ति, तथापि पुरोडाशशकलं प्रत्त मिड़ामिवोपह्यासीन मच्छावाकम्, अच्छावाक ! यत्ते 'वाद्यं' वक्तव्य मस्ति, तद्वदस्व इति *, प्रोष्य मच्छावाकसम्बोधनेन प्रवरसमानत्वात् प्रवर इत्युच्यते ॥

इत्य मग्निष्टोमसंस्थे होत्रकविषयव्यापारं परिसमाप्याधुना उक्थ्यसंस्थेष्वहस्सु प्रश्नोत्तरे दर्शयति— "अथाह यदैन्द्रावरुणं मैत्रावरुणस्तृतीयसवने शंसत्यथ कस्मादस्याग्नेयौ स्तोत्रियानुरूपौ भवत इत्यग्निना वै मुखेन देवा असुरानुक्थेभ्यो निर्जघ्नुस्तस्मादस्याग्नेयौ स्तोत्रियानुरूपौ भवतः"–इति । 'अथ' अच्छावाकप्रवरसम्पादनानन्तरं ब्रह्मवादी प्रश्न माह । मैत्रावरुणस्तृतीयसवने "इन्द्रावरुणा युवम्"–इत्यादिक मैन्द्रावरुणं ( सं० ७. ८२. ) सूक्तं शंसति । तस्य शस्त्रादौ "एह्यू षु"–इत्याग्नेयः ( सं० ६. १६. १६–१८. ) स्तोत्रियः, "अग्निरगामि"–इत्याग्नेयोऽनुरूपः ( सं० ६. १६. १९–२१. ) ; तदेतद् व्यधिकरणत्वाद् अयुक्तम् ; ऐन्द्रावरुणाभ्यां स्तोत्रियानुरूपाभ्यां भवितव्यम् ? इति प्रश्नः । अग्निनेत्यादिना तस्योत्तरम् । यदा देवा असुरानुक्थेभ्यो 'निर्जघ्नुः' निःशेषेण हतवन्त, दूरे अपसारितवन्तः ; तदानी मग्नि 'मुखं' प्रधानभूतं कृत्वा तन्मुखेन निस्सारितवन्तः । एतच्च "अग्निष्टोमं वै देवा अश्रयन्त"–इत्यादौ विस्पष्टं मुदीरितम् † । 'तस्मात्' असुरनिस्सारणेऽग्नेर्मुख्यत्वादाग्नेयौ स्तोत्रियानुरूपौ युक्तौ ॥

ब्राह्मणाच्छंसस्यच्छावाकविषयप्रश्नोत्तरे दर्शयति— "अथाह

* तथाहि सूत्रम्—"पुरोडाशदृगलं प्रत्त मिडा मिवोपह्याच्छावाक वदस्वेत्युक्तोऽध्वर्यो अपि नयस्व इति तृच मन्वाह"–इति आश्व० श्रौ० ५. ७. २ ।

† २ प० ५अ० ५ख० ( २भा० २३५ पृ० ) ।

यदैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसी तृतीयसवने शंसत्यैन्द्रावैष्णव मच्छावाकः, कथ मेनयोरैन्द्राः स्तोत्रियानुरूपा भवन्तीतीन्द्रो ह स्म वा असुरानुक्थेभ्यः प्रजिगाय ; सो ऽब्रवीत्,— कश्चाहञ्चेत्यु-हचाहञ्चेति ह स्म देवता अन्वयन्ति ; स यदिन्द्रः पूर्वः प्रजिगाय, तस्मादेनयोरैन्द्राः स्तोत्रियानुरूपा भवन्ति ; यदुच्चाहञ्चेति ह स्म देवता अन्वयुस्तस्मात्रानादेवत्यानि शंसतः”—इति । तृतीय-सवने ब्राह्मणाच्छंसिनः “प्र मंहिष्ठाय”—इत्यैन्द्राबार्हस्पत्यं ( सं० १. ५७. ) शस्त्रम् । तस्यादौ स्तोत्रियानुरूपावैन्द्रौ,—“वय मु त्वा”—इति ( सं० ८. २. १६-१८. ) स्तोत्रियः, “यो न इदम्”—इत्यनु-रूपः ( सं० ८. २१. ९, १०. ) । तथा अच्छावाकस्य “ऋतुर्ज-निर्त्री”—इत्यादिक मैन्द्रावैष्णवं ( सं० २. १३. ) शस्त्रम् । तस्या-द्यावैन्द्रौ स्तोत्रियानुरूपौ,—“अधाहीन्द्र गिर्वणः”—इति ( सं० ८. ९८. ७-९. ) स्तोत्रियः, “इयन्त इन्द्र गिर्वणः”-इत्यनुरूपः ( सं० ८. १३. ४-६. ) । तदेतद्द्वैयधिकरण्य मुपजीव्य पूर्ववत् प्रश्नः । इन्द्रो हेत्यादिक मुत्तरम् । इन्द्रः स्वयम् ‘उक्थेभ्यः’ शस्त्रेभ्यः सकाशादसुरान् ‘प्रजिगाय’ प्रकर्षेण जितवान्, प्राद्रावयदित्यर्थः । तदानी मिन्द्र इतरान् देवान् प्रति सहाय मपेक्षमाणो युष्माकं मध्ये कश्चाहञ्चोभौ युद्धार्थं गच्छाव इत्यब्रवीत् । तदानीं देवानां मध्ये एकैका ऽहं चाहं च तव सहायभूत इत्युक्त्वा देवतास्त मिन्द्रम् ‘अन्वयन्ति’ तस्य पृष्ठतो गच्छन्ति । यस्मात् स इन्द्रः सर्वेषां देवानां मध्ये स्वयं पूर्वगामी सन्नसुरान् प्रजिगाय, ‘तस्मात्’ ‘एनयोः’ ब्राह्मणाच्छंस्यच्छावाकयस्तयोरप्यैन्द्रा स्तोत्रियानुरूपा युज्यन्ते । ‘यदु’ यदप्येतदस्ति, अहं चाहञ्च तव सहायभूत इति ब्रुवत्यो देवता इन्द्रम् ‘अन्वयुः’ अन्वगच्छन्, ‘तस्मात्’ कारणाद्

देवतान्तराणा मपीन्द्रवत्तूच्यत्वात् नानादेवताकानि सूक्तानि ब्राह्मणाच्छंस्यच्छावाकौ शंसतः ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां तृतीयाध्याये (षड्विंशाध्याये) षष्ठ. खण्ड. ॥ ६ ( १४ ) ॥

---

॥ अथ सप्तमः खण्डः ॥

अथाह यदैश्वदेवं वै तृतीयसवन मथ कस्मादेता-न्यैन्द्राणि जागतानि सूक्तानि तृतीयसवन आरम्भणीयानि शस्यन्त इतीन्द्र मेवैतैरारभ्य यन्तीति ब्रूया-दथो यज्जागतं वै तृतीयसवनं तज्जगत्काम्यैव तद्यत् किञ्चात ऊर्ध्वं छन्दः शस्यते तद्ध सर्वं जागतं भवत्येतानि चेदैन्द्राणि जागतानि सूक्तानि तृतीय-सवन आरम्भणीयानि शस्यन्ते ऽथैतत् * त्रैष्टुभ मच्छावाकोऽन्ततः शंसति सं वां कर्मणेति यदेव पनाय्यं कर्म तदेतदभिवदति स मिषेत्यन्नं वा इषो † ऽन्नाद्यस्यावरुद्ध्या अरिष्टैनः पथिभिः पारयन्तेति स्वस्तिताया एवैतदहरहः शंसत्यथाह यज्जागतं वै

---

* "शस्यनीय" क। † "इष्टो" क।

तृतीयसवन मथ कस्मादेषां त्रिष्टुभः परिधानीया भवन्तीति वीर्यं वै त्रिष्टुब् वीर्यं एव तदन्ततः प्रतितिष्ठन्तो यन्तीय मिन्द्रं वरुण मष्टमे गीरिति मैत्रावरुणस्य बृहस्पतिर्नः परिपातु पश्चादिति ब्राह्मणाच्छंसिन उभा जिग्यथुरित्यच्छावाकस्योभौ हि तौ जिग्यतुर्न पराजयेथे न पराजिग्य इति न हि तयोः कतरश्चन पराजिग्य इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथा मितीन्द्रश्च ह वै विष्णुश्चासुरैर्युयुधाते ताग् ह स्म जित्वोचतुः कल्पामहा इति ते ह तथेत्यसुरा ऊचुः सोऽब्रवीदिन्द्रो यावदेवायं विष्णुस्त्रिर्विक्रमते तावदस्माक मथ युष्माक मितरदिति स इमांल्लोकान् * विचक्रमे ऽथो वेदानथो वाचं तदाहुः किं तत् सहस्र मितीमे लोका इमे वेदा अथो वागिति ब्रूयादैरयेथा मैरयेथा मित्यच्छावाक उक्थ्ये ऽभ्यस्यति स हि तत्रान्त्यो भवत्यग्निष्टोमे होता ऽतिरात्रे च स हि तत्रान्त्यो भवत्यभ्यस्येत् † षोळशिनी३ ‡ नाभ्यस्ये३त् इति अभ्यस्येदित्याहुः कथ मन्येष्वहःस्वभ्यस्यति कथ मत्र नाभ्यस्येदिति तस्मादभ्यस्येत् § ॥ ७ (१५) ॥

---

* "इमान् लोकान्" क, "इमाल्लोकान्" च। † "भवत्यभ्यसेऽ३त्" क।
‡ "षोळशिनी ३" ख, ग, "षोळशिनी३" घ, च। § "तस्मादभ्यसे३त्" क।

अथ तेषामेव शस्त्राणां छन्दोदैवतविषये प्रश्नोत्तरे दर्शयति— "अथाह यद् वैश्वदेवं वै तृतीयसवन मथ कस्मादेतान्यैन्द्राणि जागतानि सूक्तानि तृतीयसवन आरम्भणीयानि शस्यन्त इतीन्द्र मेवैतैरारभ्य यन्तीति ब्रूयादथो यज्जागतं वै तृतीयसवनं तज्जगत्काम्यैव, तद्यत् किञ्चात ऊर्ध्वं छन्दः शस्यते, तद सर्वं जागतं भवत्येतानि चेदैन्द्राणि जागतानि सूक्तानि तृतीयसवन आरम्भणीयानि शस्यन्ते"—इति। 'अथ' ऐन्द्रावरुणादिशस्त्रेष्वैन्द्रस्तोत्रियानुरूपवर्णनानन्तरम्, ब्रह्मवादी प्रश्न माह। तृतीयसवनं वैश्वदेवं बहुदेवताकं यस्मात्, तस्माद् वैश्वदेवान्येव सूक्तानि तत्रोचितानि; अथैवं सति तानि परित्यज्य कस्मात् कारणादेतान्यारम्भणीयानि सूक्तान्यैन्द्राणि शस्यन्ते ? सति चैन्द्रत्वे त्रिष्टुभो युक्तत्वात् तत्परित्यागेन जागतानि कस्मात् शस्यन्ते ? "चर्षणीधृतम्"—इति ( सं० ३. ५१. ) मैत्रावरुणस्य सूक्तम्, "प्र मंहिष्ठाय"—इति ( सं० १. ५७. ) ब्राह्मणाच्छंसिनः सूक्तम्, "ऋतुर्जनित्री"—इत्यच्छावाकस्य ( सं० २. १३. ) सूक्तम्। एतेषु सूक्तेष्वैन्द्रप्रश्नोत्तर मुच्यते। ऐन्द्रत्वे सत्येतैः सूक्तैरिन्द्र मेवारभ्य प्रवृत्ता भवन्ति; इन्द्रो हि मारब्धस्याविघ्नेन समाप्तिकारीत्युत्तरं ब्रूयात्। 'अथो' अपि च त्रिष्टुप्परित्यागेन जागतसूक्त मिति यदस्ति, तत् तृतीयसवनस्य जागतत्वात् 'जगत्काम्यैव' जगत्कामनयैव प्रवृत्तिः कृता भवति। अपि च तथा सत्यत ऊर्ध्व मन्यदपि यत् किञ्चित् छन्दः शस्यते, तत् सर्वं जगतीच्छन्दस्क मेव सम्पद्यते ॥

आरम्भणीयाना मैन्द्राणां सूक्तानां जागतत्वाद्यस्य छन्दोन्तरस्य जागतत्वं सम्पद्यते, तच्छन्दोन्तरं दर्शयति— "अथैतत् त्रैष्टुभ मच्छावाकोऽन्ततः शंसति, सं वां कर्मणेति; यदेव पनाय्यं

कर्म, तदेतदभिवदति"—इति । आरम्भणीयशंसनादूर्ध्वं मच्छावाकः 'अन्ततः' शस्त्रस्यान्ते "सं वां कर्मणा"—इत्येतत् सूक्तं (सं० ६.६९.) त्रिष्टुप्छन्दस्कं शंसेत्। अत्रेन्द्राविष्णू सम्बोध्य 'वां' युवां अनेन कर्मणा 'संहिनोमि' सम्यक् प्रीणयामि, इत्येतदुच्यते। तस्य च कर्मशब्दस्यार्थो यदेवेत्यादिना अभिधीयते। पनतिधातुस्तुत्यर्थे वर्तते; "पण व्यवहारे स्तुतौ च, पन च"—इति (धा० ४३९, ४४०.) वैयाकरणैर्धातुषु पठ्यमानत्वात्। तथा सति 'पनाय्यं' स्तुत्यं सोमपानाख्यं कर्म; तदयं मन्त्रो ऽभिवदति * ॥

सं वां कर्मणेत्येतत्प्रथमपादस्य पूर्वभागं व्याख्यायोत्तरभाग मनूद्य व्याचष्टे—"स मिषेत्यन्नं वा इषोऽन्नाद्यस्यावरुद्ध्यै"—इति। 'इषा' अन्नेन 'युवाम्' इन्द्राविष्णू 'संहिनोमि'—इत्यन्वयः। अत्रान्न मिषेत्यस्य शब्दस्यार्थः। इषशब्दस्यैषा इति प्रथमाबहुवचनम्। तस्मादन्नवाचित्वे सति एतच्छंसन मन्नाद्यस्य प्राप्तये भवति ॥

अस्या ऋचश्चतुर्थपाद मनूद्य व्याचष्टे— "अरिष्टैर्नः पथिभिः पारयन्तेति स्वस्तिताया एवैतदहरहः शंसति"—इति। नः अस्मान् 'अरिष्टैः' हिंसारहितैः 'पथिभिः' स्वर्गमार्गैः 'पारयन्ता' कर्मणः पारं फलरूपं नयन्तौ, इन्द्राविष्णू इत्यर्थः। एतस्य पादस्य शंसनं 'स्वस्तिताया एव' क्षेमार्थ मेव भवति। तस्मादच्छावाकः 'एतद्' वचनं अहर्गणेषु प्रतिदिनं शंसति ॥

परिधानीयानां छन्दसि प्रश्नोत्तरे दर्शयति—"अथाह यज्जागतं वै तृतीयसवन मथ कस्मादेताः त्रिष्टुभः परिधानीया भवन्तीति; वीर्यं वै त्रिष्टुब् वीर्य एव तदन्ततः प्रतितिष्ठन्तो यन्ति"

* "सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य। जुषेथां यज्ञं द्रविणं च धत्त मरिष्टैर्नः पथिभिः पारयन्ता ॥"—इति सं० ६.६९.१।

-इति। तृतीयसवनस्य जागतत्वेन परिधानीया अपि जगत्य एव युक्ताः; एतत्परित्यागेन त्रिष्टुभां स्वीकारे प्रतिदिनं किं कारणम्? इति प्रश्नः। वीर्यं मित्याद्युत्तरम्। त्रिष्टुभो वीर्यस्वरूपत्वात् तया परिधाने सति यज्ञस्यान्ते वीर्यं एव प्रतिष्ठिताः सन्तो 'यन्ति' वर्त्तन्ते॥

होत्रकाणां त्रयाणां युक्तास्त्रिष्टुभः परिधानीया उदाहृत्य प्रदर्शयति— "इय मिन्द्रं वरुण मष्टमे गीरिति (सं० ७.८४.५.) मैत्रावरुणस्य, बृहस्पतिर्नः परिपातु पश्चादिति (सं० १०. ४२. ११.) ब्राह्मणाच्छंसिन, उभा जिग्यथुरित्यच्छावाकस्य (सं० ६. ६९. ८.)"-इति॥

तदिदं मन्त्रमोदाहरणं व्याचष्टे—"उभौ हितौ जिग्यतुः"-इति। याविन्द्राविष्णू 'तावुभौ' 'जिग्यतुः' युद्धे जयं प्रापतुरिति प्रसिद्धम्॥

अत्र च: पूर्वार्द्धे "उभा जिग्यथुः"-इत्यमुं मंत्रं व्याख्यायांशान्तरव्याख्यानं पठति— "न पराजयेथे न पराजिग्य इति"-इति। तस्यार्द्धस्य "कतरश्च नैनोः"-इत्ययं शेषो ब्राह्मणेनानुदाहृतोऽप्यर्थावबोधाय द्रष्टव्यः *। तस्य च सर्वस्याय मर्थः— हे 'इन्द्राविष्णू' युवां 'न पराजयेथे' कदाचिदपि पराजयं न प्राप्तवन्तौ। 'एनोः' एनयोः इन्द्राविष्ण्वोर्मध्ये 'कतरश्चन' एकोऽपि 'न पराजिग्ये' पराजयं न प्राप। एकैकस्यापि यदा पराजयो नास्ति, तदानी मुभयोर्मिलितयोर्नास्तीति किमु वक्तव्य मिति॥

उक्तस्यार्थस्य तात्पर्यं दर्शयति—"न हि तयोः कतरश्चन पराजिग्ये"-इति॥

* "उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः."-इति ऋक्पूर्वार्द्धं।

उत्तरार्द्धं पठति—"इन्द्रश्च विष्णोर्यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथा मिति"—इति। 'यत्' यदा हे विष्णो। त्वञ्च इन्द्रश्च युवां उभौ 'अपस्पृधेथां' स्पर्द्धां असुरैः सह युद्धं कृतवन्तौ, 'तत्' तदानीं सहस्रं 'त्रेधा' विभज्य 'ऐरयेथां' तं तं भाग तस्मै तस्मै स्वामिने समर्पितवन्तौ॥

तस्य तात्पर्य्यं दर्शयितु मितिहास माह— "इन्द्रश्च ह वै विष्णुश्चासुरैर्युयुधाते; तान् ह स्म जित्वोचतुः,—कल्पामहा इति; ते ह तथेत्यसुरा ऊचुः; सोऽब्रवीदिन्द्रो यावदेवायं विष्णुस्त्रिर्विक्रमते तावदस्माक मथ युष्माक मितरदिति; स इमाँल्लोकान्विचक्रमे ऽथो वेदानथो वाचं; तदाहुः किं तत् सहस्र मितीमे लोका इमे वेदा अथो वागिति ब्रूयाद्"—इति। योऽय मिन्द्रो यश्च विष्णुस्तावुभावसुरैः सह 'युयुधाते' युद्धं कृतवन्तौ। ततस्तावसुरान् जित्वा तैः सहैव मूचतुः,— हे असुराः। वयं सर्वे 'कल्पामहै' विभागं करवामहा इति। असुरास्तथेत्यङ्गीचक्रुः। तदानीं मसुरैः सह इन्द्र एव मब्रवीत्,—'अयं' विष्णुः 'यावद्' वस्तूद्दिश्य 'त्रिर्विक्रमते' वस्तुजाते पादत्रयं प्रक्षिपति, 'तावद्' वस्तु सर्वं मस्माकं भवतु; अथ 'इतरत्' अवशिष्टं युष्माक मस्त्विति। एव मसुरैः सह समयं कृत्वा स विष्णुः 'इमान् लोकान्' त्रीनपि एकेन पादेन 'विचक्रमे' विक्रान्तवान्, लोकत्रयस्योपरि एक मेव पादं प्रक्षिप्तवान्। 'अथो' तदनन्तरं 'वेदान् विचक्रमे' सर्वेषां वेदाना मुपरि एकं पादं प्रक्षिप्तवान्। 'अथो' तदनन्तरं 'वाचं विचक्रमे' सर्वस्या वाच उपरि तृतीयं पादं प्रक्षिप्तवान्। एवं पादत्रयेणाक्रान्तं सर्वं मिन्द्राविष्ण्वोर्भाग आसीत्। एवं विभागे व्यवस्थिते सति 'तत्' तन्मन्त्रार्थे ब्रह्मवादिनः प्रश्न माहुः। त्रेधा

सहस्रमिति मन्त्रे यदुक्तं, तत्र सहस्रशब्देन किमुच्यते ? इति। इम मित्यादिकं तदुत्तरम् । य इमे त्रयो लोकाः, ये चेमे वेदाः, या चेयं वाक्, तदेतदपरिमितत्वस्योपलक्षणेन सहस्रशब्देन विवक्षित मित्युत्तरं ब्रूयात् । यद्यप्ययं मन्त्रस्तैत्तिरीयाणां सप्तमे काण्डे ऽतिरात्रस्य यागे * दक्षिणारूपगोसहस्रविषयत्वेन उदाहृतः †, तथाप्यत्र सहस्रशब्दः सर्वजगद्विषयत्वेन श्रुत्यैव व्याख्यायत इत्युभयार्थत्व मस्तु ॥

यदुक्त माश्वलायनेन उत्तमे शस्त्रे परिधानीयाया उत्तमे वचने उत्तमं चतुरक्षरं द्विरुक्त्वा प्रणुयादिति ‡, त मेव चतुरक्षराभ्यासं विधत्ते—"ऐरयेथा मैरयेथा मित्यच्छावाक उक्थ्ये ऽभ्यस्यति ; स हि तत्रान्त्यो भवति"–इति। उक्थ्यनामके क्रतावच्छावाकः "ऐरयेथाम्"–इति चतुरक्षरभागं द्विरभ्यस्येत् । 'स हि' भागः 'तत्र' अच्छावाकशस्त्रे ऽन्त्यो भवति ॥

अच्छावाकस्याभ्यासं विधाय होतुरभ्यासं विधत्ते—"अग्निष्टोमे होतातिरात्रे च ; स हि तत्रान्त्यो भवति"–इति । अग्निष्टोमोक्थ्यसंस्थायां यथा अच्छावाकस्यान्तिमे शस्त्रे ऽभ्यासः। तथाग्निष्टोमसंस्थाया मतिरात्रसंस्थायां होतान्तिमे शस्त्रेऽन्तिमं

---

* "द्वेधा विभक्तं वै त्रिरात्रे"–इति (ए. सो. स. तै० सं० ६ भा० १८४ पृ० ८ पं०) श्रवणात्तवगम्यते त्रिरात्रयागे इति , तदिह लेखकप्रमादप्रमादेन भवितव्यम्, अपिवातिरात्रप्रकरण इति अतिरात्रस्येतावाक्यस्योल्लेखन्ये सायणस्येति ।

† "सोमो वै सहस्र मविन्दत्०—०तथा त्रिष्वपुनं पराजयेषे०—०सहस्रं त्रि तदेषी-धाम्०—०सहस्रतम्या वै यजमानः सुवर्गं लोक मेति०—० वा अग्नीधे वा ब्रह्मणे वा होत्रे चोदात्रे वाध्वर्यवे वा दद्यात्, सहस्र मस्य सा दत्ता भवति०—०देवान् गच्छति"–इति तै० स० ७. १. ६, ७ अनु० ।

‡ "उत्तमात्पुत्तमे, चतुरक्षराणि त्वच्छावाकः"–इति तत्सूत्रम् ( ६. ४. ५, ६. )।

चतुरक्षरभाग मभ्यस्येत् । 'स हि' होता 'तत्र' उभयत्र 'अन्त्यः' शंसिता भवति । अग्निष्टोमे "यज्जरित्रे-यज्जरित्रोम्"—इति चतुरक्षराभ्यासः * ; अतिरात्रे तु "धेहि चित्रं-धेहि चित्रोम्"—इति चतुरक्षराभ्यासः † ॥

षोडशिसंस्थायां विचारपूर्वकं चतुरक्षराभ्यासं विधत्ते— "अभ्यस्येत् षोळशिनीं३ नाभ्यस्येत् इति ? अभ्यस्येदित्याहुः ; कथ मन्येष्वहःस्वभ्यस्यति, कथ मत्र नाभ्यस्येदिति, तस्मादभ्यस्येत्"—इति । विचारार्थं श्रुतिरियम् । तत्राभ्यस्येदिति निर्णय माहुः । तत्रैव मुपपत्तिः— इतरेष्वहःसु चतुरक्षरभाग मभ्यस्यात्रैव परित्यागे कारणं नास्तीति । तस्मादित्युपसंहारः । "सख्युः पदे-सख्युः पदोम्"—इति चतुरक्षराभ्यासो द्रष्टव्यः ‡ ॥ ७ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां तृतीयाध्याये
( अष्टाविंशाध्याये ) सप्तमः खण्डः ॥ ७ ( ३५ ) ॥

---

* "एवा न इन्द्रो मघवा०— माहिनं यज्जरित्रे ( सं० ४. १७. २०. )"—इत्यैन्द्रम्, अग्निष्टोमीयमरुत्वतीयपरिधानीया । यत्रोक्ता चत्वारश्चतुरक्षराभ्यासाः । "एवा न इन्द्रो मघवा विरप्शीत्युत्तमया परिदधाति"—इत्याचार्यः पुरस्तात् ( २ भा० १०३ पृ० १६ पं० ) । "एवा न इन्द्रो मघवा विरप्शीति परिदध्यात्"—इति च आश्व० श्रौ० ५. १०. ६ ।

† "बृहस्पते अति०— द्रविणं धेहि चित्रम्"—इति सं० २. २३. १५. । "बृहस्पते अति यदर्यो अर्हाद्द्युमदित्येतया परिदध्यात्"—इति पु० २भा० २८८पृ० ८ पं० । "बृहस्पते०— इति परिधानीया"—इति च आश्व० श्रौ० ६. ५. १९ ।

‡ "उद्यद् ब्रध्नस्य०— सप्त सख्युः पदे"—इति सं० ८. ६९. ७ । उद्यद् ब्रध्नस्य विष्टप मित्युत्तमया परिदधाति"—इति पु० २भा० २६० पृ० ८ पं० । "उद्यद्०— मिति परिधानीया"—इति च आश्व० श्रौ० ६. २. १२ ।

॥ अथ अष्टमः खण्डः ॥

अथाह यन्नाराशंसं वै तृतीयसवन मथ कस्मादच्छावाकोऽन्ततः शिल्पेष्वनाराशंसीः शंसतीति विकृतिर्वै नाराशंसं कि मिव च वै कि मिव च रेतो विक्रियते तत्तदा विकृतं प्रजातं भवत्यथैतन् मृदिव च्छन्दः शिथिरं यन्नाराशंस मथैषोऽन्त्यो यदच्छावाकस्तद् दृळहतायै दृळ्हे प्रतिष्ठास्याम इति तस्मादच्छावाकोऽन्ततः शिल्पेष्वनाराशंसीः शंसति दृळहतायै दृळ्हे प्रतिष्ठास्याम इति दृळ्हे प्रतिष्ठास्याम इति ॥ ८ (१६) ॥

॥ इत्यैतरेयब्राह्मणे षष्ठपञ्चिकायां तृतीयोऽध्यायः॥ ३ ॥

अच्छावाकविषये पुनरपि प्रश्न मुत्थापयति — "अथाह यन्नाराशंसं वै तृतीयसवन मथ कस्मादच्छावाकोऽन्तत. शिल्पेष्वनाराशंसीः शंसतीति ?"–इति। 'अथ' चतुरक्षराभ्यासकथनानन्तरं ब्रह्मवादी प्रश्न माह। 'यद्' यस्मात् कारणात् तृतीयसवनं 'नाराशंसं वै' नरा मनुष्याः ऋभवोऽङ्गिरसो वा यत्र शस्यन्ते, तत् नाराशंसम्; तत्सम्बन्धिनि तृतीयसवने सति कस्मात् कारणादच्छावाकोऽन्ततः तृतीयसवनं शिल्पाख्येषु * शस्त्रेषु नाराशंस-

* "अत ऊर्द्ध्वं मनुष्येभ्यो विकृतानि शिल्पानि शस्त्रेषु"–इति आश्व॰ श्रौ॰ ८ २.२। 'वालखिल्यादीनि शिल्पसञ्ज्ञकानि'–इति तद्वृत्तौ नारायण। तानि च शिल्पानि द्विवि

सम्बन्धिरहिता ऋचः शंसति,— "ऋतुर्जनित्री"-इत्यादिकाम् (सं० २.१३.१–१३.) मच्छावाकः शंसति †; न च तत्र नराः शस्यन्ते, तत् कथ मुपपादितम् ? इति प्रश्न॥ .

तस्योत्तर माह—"विकृति वै नाराशंसं, किं मिव च वै किं मिव च रेतो विक्रियते, तत् तदा विकृतं प्रजातं भवत्यथैतन् म्रदिव च्छन्दः शिथिरं यन्नाराशंसं मथैषोऽच्छावाकस्तद् दृढ-तायै दृळ्हे प्रतिष्ठास्याम इति"–इति। गर्भाशये निषिक्तस्य रेतसो 'विकृतिर्वै' विकारपरिणामैव 'नाराशंसं' सवनम्, अङ्ग-परिणामक्रमेणैव भवति। लोकेऽपि निषिक्तं रेतः 'किं मिव च वै किं मिव च' क्रमेण किञ्चित् किञ्चिदेव विक्रियते। तथा च गर्भोपनिषदि— "एकरात्रोषितं कललं भवति, सप्तरात्रोषितं बुद्-बुदं भवति, अर्द्धमासाभ्यन्तरेण पिण्डो भवति"–इत्यादि। 'तत्' तादृशक्रमेण विक्रियमाणं रेतो यदा तत्कालेन 'विकृतं' विहृतं भवति, तदा 'प्रजातं भवति' पुत्रादिरूपेणोत्पद्यते। तस्मात् नारा-शंसे तृतीयसवने विकारस्थानीयो ऽन्तिमो भागः, तत्र सम्पूर्ण-तयोत्पत्त्यर्थं मनाराशंसीना मृचां शंसन मित्यभिप्रायः। अथा-न्यदपि कारण मस्ति। 'यत् नाराशंसं छन्दः' मनुष्यशंसनसम्बन्धि छन्दोऽस्ति, तत् 'म्रदिव' मार्दवोपेत मिव। तस्यैव व्याख्यानं

---

थानि, विकृतान्यविकृतानीति। विहरण -न्यूङ्ख-निनर्दादीनि विकृतानि, वाचखिल्यादीन्य-विकृतानि। एतत्सूत्रे विकृताना मेव ग्रहणम्; विकृतानीतिवचनात्। तत उत्तरम् "ऊर्ध्वं मारम्भणीयाभ्य. प्रकृत्या शिल्पानि शंसेयुः (४.७.)"-इति सूत्रे ऽविकृताना मेव, प्रकृत्येतिवचनात्। "नित्यशिल्पान्वित महः (४.५)"–इत्यादौ तूभयविधशिल्पानां ग्रहणं भवति, विशेषतो निर्देशाभावात्।

† "ऋतुर्जनित्रीति शिल्पान्यैकाहिकानि"–इति आश्व० श्रौ० ८.४.२।

'शिथिरम्'-इति, शिथिल मदृढ मित्यर्थः । अस्यापि च योऽच्छावाकोऽस्ति, 'एपोऽन्त्यः' ऋत्विक् ; न ह्येतदीयशंसनस्योपरि किञ्चिदन्यच्छंसन मस्ति । अतोऽन्तिमत्वात् दृढः । तस्मात् 'इळहताये' दार्ढ्यार्थे 'इळहे' स्थाने प्रतिष्ठास्यामः 'इति' अनेनाभिप्रायेण तासां मनाराशंसीनां मृचां शंसन मित्यर्थः ॥

उपपादित मर्थ मुपसंहरति—"तस्मादच्छावाकोऽन्ततः शिल्पेष्वनाराशंसीः शंसति इळहताये, इळहे प्रतिष्ठास्याम इति, इळहे प्रतिष्ठास्याम इति"-इति ॥ अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां तृतीयाध्याये
( अष्टाविंशाध्याये ) अष्टमः खण्डः ॥ ८ ( १६ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायाः तृतीयाध्यायः ॥

---

## ॥ अथ चतुर्थाध्यायः ॥

( ३४ )

### ॥ अथ प्रथमः खण्डः ॥

---

॥ॐ॥ यः* स्वः† स्तोत्रियस्त मनुरूपं कुर्वन्ति प्रातःसवनेऽहीनसन्तत्यै यथा वा एकाहः सुत एव महीनस्तद्यथैकाहस्य सुतस्य सवनानि सन्तिष्ठमानानि यन्त्येव मेवाहीनस्याहानि सन्तिष्ठमानानि यन्ति तद्यच्छ्वः‡ स्तोत्रिय मनुरूपं कुर्वन्ति प्रातस्सवनेऽहीनसन्तत्या अहीन मेव तत्सन्तन्वन्ति ते वै देवाश्च ऋषयश्चाद्रियन्त समानेन यज्ञं सन्तनवामेति त एतत् समानं यज्ञस्यापश्यंस्समानान् प्रगाथान्त्समानीः प्रतिपदः समानानि सूक्तान्योकस्सारी वा इन्द्रो यत्र वा इन्द्रः पूर्वं गच्छत्येव तत्रापरं गच्छति यज्ञस्यैव सेन्द्रतायै ॥ १ (१७) ॥

उक्तीयमानसूक्तानि तथा प्रस्थितयाज्यकाः ।
प्रश्नोत्तराभ्यां सम्प्रोक्ताः प्रयोगस्य च निर्णयः ॥ १ ॥

अथाहर्गणेषु होत्रकाणां माध्यन्दिनीयशस्त्रक्लृप्तिर्वक्तव्या; तत्र प्रथमं तावत् सर्वत्र विहित मर्थं मनूद्य प्रशंसति— "यः स्वः स्तोत्रियस्त मनुरूपं कुर्वन्ति प्रातस्सवने ऽहीनसन्तत्यै"–इति ।

---

*, †, ‡ ग-ङ-च-पुस्तकेष्विह विसर्गो नास्ति ।

अहर्गणेषु 'श्वः' परेद्युर्यस्मिंस्तृचे सामगाः स्तोत्रं कुर्वन्ति, तं स्तोत्रियं पूर्वेद्युर्होतारः अद्येऽन्वनुरूपं कुर्वन्ति। एतच्च प्रातस्सवने एव *। तच्चानुरूपकरणं अहीनस्य सन्तत्यै सम्पद्यते। अह्नां समूहरूपः क्रतुरहीनः, स चैकैकस्मिन्नहनि विच्छिन्नो मा भूदित्यहर्द्वयसन्धानार्थं भविष्यत्यहनि स्तोत्रियस्य भूतेऽहनि अनुरूपत्वकरणं अह्नां भेदेऽपि फलैक्यात् समूहप्रयोग एक एव; ततः सन्ततिरपेक्षिता। अथ मन्त्रः सप्तविंशाध्याये व्याख्यातः—"स्तोत्रिय स्तोत्रियस्यानुरूपं कुर्वन्ति प्रातस्सवने ऽहरेव तदह्नोऽनुरूपं कुर्वन्ति"–इति (२३७ पृ०)। तस्य व्याख्यानमिदम्—"श्वः स्तोत्रियः"–इति ॥

अभिप्रेतविशेषस्य विधानादहर्भेदेऽपि प्रयोगैक्येन सान्तत्यं दृष्टान्तेनोपपादयति— "यथा वा एकाहः सुत एवमहीनस्याथैकाहस्य सुतस्य सवनानि सन्तिष्ठमानानि यन्त्येव मेवाहीनस्याहानि सन्तिष्ठमानानि यन्ति, तदाच्छः स्तोत्रिय मनुरूपं कुर्वन्ति, प्रातस्सवने ऽहीनसन्तत्या अहीन मेव तत् सन्तन्वन्ति"–इति। एकस्मिन्नेवाहनि निष्पन्नो ज्योतिष्टोमः 'एकाहः'। स यथा 'सुतः' सोमाभिषवेण कृत्स्नो निष्पादितः, एवम् 'अहीनः' अहर्गणोऽपि सोमाभिषवेण निष्पाद्यते। तावेव दृष्टान्तदार्ष्टान्तिकौ तथ्येत्यादिना स्पष्टीक्रियते। 'तत्' तस्यैकाहस्य 'सुतस्य' सोमाभिषवयुक्तस्यैव सतः क्रतोरवयवभूतानि प्रातर्माध्यन्दिनतृतीयसवनानि 'सन्तिष्ठमानानि' पृथक् पृथक् समाप्तियुक्तानि 'यन्ति' यजमाना

* "होत्रकाणाम्"–इत्युपक्रम्याश्वलायनीये श्रौते स्तोत्रियानुरूपाणां दश युग्मानि प्रदर्शितम्—"स्तोत्रियानुरूपाणां यदनुरूपे स्तोत्रीयस्तोत्रियाऽनुरूप."–इति ७. ४ ५। पुरस्तादपि (१४८ पृ०) स्तोत्रियादिकथा द्रष्टव्या।

अनुतिष्ठन्ति; एव मेवाहीनस्याहर्गणस्य एकस्यैव सतः क्रतो रवयवभूतानि अहानि पृथक् पृथक् समाप्तियुक्तानि यजमाना अनुतिष्ठन्ति । तथा सति यद्युत्तरदिनसम्बन्धिनं 'स्तोत्रियं' तृचं पूर्वदिने प्रातःसवने 'अनुरूपं' तृचं कुर्वन्ति, तदानीं अहर्गणस्यैकस्य क्रतोः 'सन्ततिः' मध्ये विच्छेदराहित्यं भवति । तस्मादन्यदिने गतस्यान्यदिने प्रयोगेण 'अहीनं' क्रतुं सन्ततं कुर्वन्ति ॥

अथ माध्यन्दिनीयशस्त्रक्लृप्तिं विधातु माख्यायिका माह—"ते वै देवाश्च ऋषयश्चाद्रियन्त समानेन यज्ञं सन्तनवामेति ; त एतत् समानं यज्ञस्यापश्यन्त्समानान् प्रगाथान्त्समानीः प्रतिपदः समानानि सूक्तानि"–इति । 'ते वै' प्रसिद्धाः, वस्वादयो 'देवाश्च', विश्वामित्रप्रभृतयः 'ऋषयश्च', 'आद्रियन्त' मनस्येव मादर मकुर्वन्त । कीदृश मादरः ? सोऽभिधीयते—'समानेन' सर्वेष्वेकविधानेन प्रयोगेण 'यज्ञम्' अहीनं 'सन्तनवाम' सन्ततं करवाम 'इति' मनसि विचार्य 'ते' द्विविधा देवा ऋषयश्च 'एतद्' वक्ष्यमाणं मन्त्रजातं 'यज्ञस्य' अहीनस्य 'समानं' सर्वेष्वहस्सु सदृश मपश्यन् । किं किं सदृश मिति, उच्यते— ये कद्वत्त्वयुक्ताः प्रगाथाः, याश्च 'प्रतिपदः' आरम्भणीया ऋचः, यानि चाहीनसूक्तानि * ; तेषां सर्वेषा महस्सु सर्वेषु समानत्व मपश्यन् ॥

साम्ये तत्प्रयोजनं दृष्टान्तेन दर्शयति—"ओकःसारी वा इन्द्रो यत्र वा इन्द्रः पूर्वं गच्छत्यैव तत्रापरं गच्छति यज्ञस्यैव सेन्द्रतायै"–इति । 'ओकांसि' स्थानानि गृहाणि, तेषु सरति सर्वदा सञ्चरतीति 'ओकःसारी' मार्जारः । 'वै'-शब्द उपमार्थः । यथा मार्जारः

* "कद्वत् स्तोत्रियानुरूपेभ्यः०—० कद्वन्तः प्रगाथाः । ०—० कद्वद्भ्यः आरम्भणीयाः । कद्वदारम्भणीयाभ्यः०—०अहीनसूक्तानि षडहस्तोत्रियानात्रप०"—इति आश्व० श्रौ० ७.४.६–११।

पूर्वस्मिन् दिने येषु गृहेषु सञ्चरति, तेष्वेव गृहेषु परेद्युरपि सञ्चरति ; एव मय मिन्द्रोऽप्यवगन्तव्यः। स चेन्द्रो 'यत्र वै' येषु स्थानेषु 'पूर्वम्' अहः गच्छति, 'तत्र' तेष्वेव स्थानेषु 'अपरम्' अहरागच्छत्येव ; अतो ऽह्वीनस्य 'यज्ञस्य' सर्वस्यापि ऐन्द्रत्वार्थं पूर्वोक्तं समानत्व मादरणीयम् ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायां चतुर्थाध्याये
( एकोनविंशाध्याये ) प्रथमः खण्डः ॥ १ ( १७ ) ॥

---

॥ अथ द्वितीयः खण्डः ॥

तान् वा एतान्त्सम्पातान् 'विश्वामित्रः प्रथम समपश्यत्'तान् विश्वामित्रेण दृष्टान्'वामदेवो ऽसृज-' तैवां त्वा मिन्द्र वज्रिन्नत्र' यन्न इन्द्रो जुजुषे यच्च वष्टि'कया महा मवृधत् कस्य होतुरिति'तान् क्षिप्रं समपतद्यत् क्षिप्रं समपतत्' तत् सम्पातानां सम्पातत्वं'स हेक्षाञ्चक्रे विश्वामित्रो 'यान् वा अहं सम्पातानपश्यं' तान् वामदेवो ऽसृष्ट' कानि न्वहं सूक्तानि' सम्पातांस्तत्प्रतिमान्त्सृजेयेति' स एतानि सूक्तानि'सम्पातांस्तत्प्रतिमानसृजत'सद्यो ह जातो

वृषभः कनीन इन्द्रः पूर्भिदातिरद्दास मर्कैरिमा मू षु प्रभृतिं सातये धा इच्छन्ति त्वा सोम्यासः सखायः शासद्वह्निर्दुहितुर्नप्त्यङ्गादभि तष्टेव दीधया मनीषा मिति य एक इद्धव्यश्चर्षणीना मिति भरद्वाजो यस्तिग्मशृङ्गो वृषभो न भीम उदु ब्रह्माण्यैरत श्रवस्येति वसिष्ठो ऽस्मा इदु प्र तवसे तुरायेति नोधास्त एते प्रातस्सवने षळहस्तोत्रियाच्छस्त्वा माध्यन्दिने ऽहीनसूक्तानि शंसन्ति तान्येतान्यहीनसूक्तान्या सत्यो यातु मघवाँ ऋजीषीति सत्यवन् मैत्रावरुणो ऽस्मा इदु प्र तवसे तुरायेन्द्राय ब्रह्माणि राततमा इन्द्र ब्रह्माणि गोतमासो अक्रन्निति ब्रह्मण्वद् ब्राह्मणाच्छंसी शासद्वह्निर्दुहितुर्नप्त्यं गादिति वह्निवदच्छावाकस्तदाहुः कस्मादच्छावाको वह्निवदेतत् सूक्त मुभयत्र शंसति पराक्षिषु चैवाहःस्वभ्यावर्तिषु चेति वीर्यवान् वा एष बह्वृचो वह्निवदेतत् सूक्तं वहति ह वै वह्निर्धुरो यासु युज्यते तस्मादच्छावाको वह्निवदेतत् सूक्त मुभयत्र शंसति पराक्षिषु चैवाहःस्वभ्यावर्तिषु च तानि पञ्चस्वहःसु भवन्ति चतुर्विंशे ऽभिजिति विषुवति विश्वजिति महाव्रते ऽहीनानि ह वा एतान्यहानि न ह्येषु किञ्चन हीयते

पराञ्चीनि ह वा एतान्यहान्यनभ्यावर्तीनि तस्मादेनान्येतेष्वहःसु शंसन्ति यदेनानि शंसन्त्यहीनान्त्स्वर्गांल्लोकान्त्सर्वरूपान्त्सर्वसमृद्धानवाप्नवामेति यद्वेवैनानि शंसन्तीन्द्रमेवैतैर्निह्वयन्ते यथर्षभं वाशितायै यद्वेवैनानि शंसन्त्यहीनस्य सन्तत्या अहीनमेव तत् सन्तन्वन्ति ॥ २ (१८) ॥

अथ सम्पातनामकानि सूक्तान्याख्यायिकया दर्शयति—"तान् वा एतान्त्सम्पातान् विश्वामित्रः प्रथम अपश्यत्; तान् विश्वामित्रेण दृष्टान् वामदेवोऽसृजतैवा त्वामिन्द्र वज्रिन्नत्र, यन्न इन्द्रो जुजुषे यच्च वष्टि, कथा महामवृधत् कस्य होतुरिति; तान् क्षिप्रं समपतद्; यत् क्षिप्रं समपतत्; तत् सम्पातानां सम्पातत्वम्"—इति। 'तान् वै' शास्त्रप्रसिद्धानेव 'एतान्' अत्रैवोदाहरिष्यमाणान् सम्पातनामकान् सूक्तविशेषान् 'विश्वामित्रः' महर्षिः 'प्रथमं' सृष्ट्यादौ ईश्वरानुग्रहेण 'अपश्यत्' मनसा वेदमध्ये ज्ञातवान्। विश्वामित्रेण दृष्टा ये सूक्तविशेषाः, तानधीत्य 'वामदेवः' महर्षिः 'असृजत' स्वकीयत्वेन लोके प्रकटीकृतवान्। ते सूक्तविशेषा उदाह्रियन्ते। "एवा त्वाम्"—इत्येकं (सं० ४. १९.) सूक्तम्, "यन्न इन्द्रः"—इति (सं० ४. २२.) द्वितीयम्, "कथा महाम्"—इति (सं० ४. २३.) तृतीयम्। 'तान्' त्रीन् सूक्तविशेषान् वामदेवः 'क्षिप्रं समपतत्' कालविलम्बे सति विश्वामित्र आगत्य स्वकीयत्वं प्रकटीकरिष्यतीति भीत्या स्वयं शीघ्रमेव 'समपतत्' सम्यगध्येतॄन् शिष्यान् प्रापितवान्, स्वकीयत्वप्रसिद्ध्यर्थं बहून्

गिथ्यान् सहसाध्यापयामासेत्यर्थः। 'तत्' तेषु सूक्तेषु 'यद्' यस्मात् कारणात् चिप्रं समपतत्, 'तत्' तस्मात् कारणात्, सम्यक् पतनं प्रकटीकरणं मेषां सूक्ताना मिति व्युत्पत्त्या सम्पातं नाम सम्पन्नम् ॥

अथ सूक्तान्तराणां सृष्टिं दर्शयति— "स हैचाञ्चक्रे विश्वामित्रो यान्वा अहं सम्पातानपश्यं, तान् वामदेवो ऽसृष्ट, कानि न्वहं सूक्तानि सम्पातांस्तत्प्रतिमान्सृजेयेति; स एतानि सूक्तानि सम्पातांस्तत्प्रतिमानसृजत; सद्यो ह जातो वृषभः कनीन, इन्द्रः पूर्भिदातिरद्दास मर्कैं, रिमा मू षु प्रभृतिं सातये धा, इच्छन्ति त्वा सोम्यासः सखायः, शासद्वह्निर्दुहितुर्नप्त्यङ्गा, दभितष्टेव दीधया मनीषा मिति"–इति। वामदेववृत्तान्त मवगत्य स विश्वामित्रः 'ईचाञ्चक्रे' मनस्येवं विचारितवान्, 'यान्' सम्पातानहं मीश्वरानुग्रहेण दृष्टवानस्मि, तान् अयं वामदेवः 'असृष्ट' गुरुद्रोहभीतिरहितः सन् स्वकीयत्वेन लोके प्रकटीकृतवान्। अतः परं केषाञ्चित् सूक्तानां मदीयत्वप्रसिद्धिरपेक्षिता; अतोऽहं कानि नाम सूक्तानि 'तत्प्रतिमान्' पूर्वसूक्तसदृशान् सम्पातान् कृत्वा 'सृजेय' लोके प्रकटीकरवाणि? 'इति' विचार्य्य विश्वामित्रः 'एतानि' वक्ष्यमाणानि सूक्तानि पूर्वसूक्तसदृशान् सम्पातान् कृत्वा 'असृजत' प्रकटीकृतवान्। तेषु "सद्यो ह जातः"–इत्येकं (सं० ३. ४८.) सूक्तम्, "इन्द्रः पूर्भित्"–इति (सं० ३. ३४.) द्वितीयम्, "इमा मू षु"–इति (सं० ७. ८३.) तृतीयम्, "इच्छन्ति त्वा"–इति (सं० ३. ३०.) चतुर्थम्, "शासद्वह्निः"–इति (सं० ३. ३१.), पञ्चमम्, 'अभितष्टेव'–इति (सं० ३. ३८.) षष्ठम् ७। एतानि सूक्तानि विश्वामित्रसम्बन्धित्वेन प्रसिद्धान्यभवन् ॥

---

७ आश्व० श्रौ० ७. ६. २० द्रष्टव्यम्।

अथ भरद्वाजवसिष्ठनोधसां त्रयाणां ऋषीणां सम्बन्धीनि सूक्तानि दर्शयति — "य एक इद्धव्यश्चर्षणीनामिति भरद्वाजो, यस्तिग्मशृङ्गो वृषभो न भीम, उदु ब्रह्माण्यैरत श्रवस्येति वसिष्ठो, ऽस्मा इदु प्र तवसे तुरायेति नोधाः"—इति। भरद्वाजो "य एक इद्"—इति ( सं० ६. २२. ) एकं सूक्तमसृजत। वसिष्ठो "यस्तिग्मशृङ्गः"— "उदु ब्रह्माणि"—इति सूक्तद्वयम् ( सं० ७. १९,२३. ) असृजत। नोधाः "अस्मा इदु प्र तवसे"—इत्येकं ( सं० १. ६१. ) सूक्तमसृजत। एतेषां सर्वेषां सूक्तानां तत्र तत्र विनियोगो वक्ष्यते ॥

इदानीं अहीनसूक्तानि विधत्ते— "त एते प्रातस्सवने षळहस्तोत्रियाञ्छस्त्वा माध्यन्दिने ऽहीनसूक्तानि शंसन्ति"—इति। 'ते' प्रसिद्धाः 'एते' प्रयोगकाले सन्निहिता होत्रकाः, अहर्गणेषु प्रातस्सवने षळहसम्बन्धिनः 'स्तोत्रियान्' तृचान्, "आ नो मित्रावरुणा"— "मित्रं वयम्"—इत्यादीन् सूत्रकारपठितान् तृचान् * शस्त्वा, 'माध्यन्दिने' सवने त्वहीनसूक्तानि शंसेयुः ॥

कान्यहीनसूक्तानीत्याशङ्क्योदाहरति— "तान्येतान्यहीनसूक्तान्या सत्यो यातु मघवाँ ऋजीषीति सत्यवन् मैत्रावरुणो, ऽस्मा इदु प्र तवसे तुरायेन्द्राय ब्रह्माणि राततमा इन्द्र ब्रह्माणि गोतमासो अक्रन्निति ब्रह्मण्वद् ब्राह्मणाच्छंसी, शासद्वह्निर्दुहितुर्नप्त्यं गादिति वह्निमदच्छावाकः"—इति। 'तानि' पूर्ववाक्ये विहितानि अहीनसूक्तान्येतान्युदाह्रियन्ते,—"आ सत्यो यातु"—इति ( सं० ४. १६. ) 'सत्यवत्' सत्यशब्दोपेतं सूक्तं मैत्रावरुणः शंसेत्।

* "आ नो मित्रावरुणा, मित्रं वयं हवामहे, मित्रं हुवे पूतदक्षम्, मधु वां मित्रावरुणा, युवक्षा विराजसि, इति वो सूर उदित इति षडहस्तोत्रिया मैत्रावरुणस्य"—इति आश्व० श्रौ० ७. ५. ३। 'षडहशब्देन पृष्ठ्याभिप्लवौ लक्ष्येते'—इति तत्र भा० वृ०।

"अच्छा व इत"—इति ( सं० १. ६१. ) सूक्तम् । तस्य "इन्द्राय ब्रह्माणि"—इति चतुर्थः पादः । तत्र ब्रह्माणीतिश्रुतत्वात् इदं सूक्तं 'ब्रह्मण्वत्' ब्रह्मशब्दोपेतम् । तथा तत्रैव सूक्ते "इन्द्र ब्रह्माणि"—इतिश्रुतत्वादिन्द्रब्रह्मणवत् । तदेतदुभयं ब्राह्मणाच्छंसी शंसेत् । "प्रासद्वह्निः"—इति ( सं० ३. ३१. ) सूक्तं 'वह्निवत्' वह्निशब्दोपेतम् ; तस्मिन् सूक्ते "जनयन्त वह्निम्"—इतिश्रुतत्वात् । तदेतदच्छावाकः शंसेत् ॥

अथाच्छावाकविषयं प्रश्न मुद्भावयति— "तदाहुः कस्मादच्छावाको वह्निवदेतत् सूक्त मुभयत्र शंसति,—पराचिषु चैवाहःस्वभ्यावर्तिषु चेति ?"—इति । गवामयने हि द्विविधान्यहानि,—आवृत्तिरहितानि तत्सहितानि च । तत्र वक्ष्यमाणानि चतुर्विंशादीन्यावृत्तिरहितानि; अभिप्लवषडहगतानि पृष्ठ्यषडहगतानि चावृत्तिसहितानि, तयोः षडहयोरसकृदनुष्ठानस्य विहितत्वात् । एवं सति 'पराचिषु' आवृत्तिरहितेषु चतुर्विंशादिष्वहस्सु वह्निवत् सूक्त मच्छावाकः शंसति, तथैव 'अभ्यावर्तिषु' षडहगतेष्वहस्सु च तं सूक्तं शंसति । तत्र उभयत्र शंसने किं कारणम् ? इति प्रश्नः ॥

तस्योत्तर माह— "वीर्यवान् वा एष बह्वृचो वह्निवदेतत् सूक्तं, वहति ह वै वह्निर्धुरो यासु युज्यते ; तस्मादच्छावाको वह्निवदेतत् सूक्त मुभयत्र शंसति,—पराचिषु चैवाहःस्वभ्यावर्तिषु च"—इति । 'एषः' अच्छावाको 'बह्वृचः' बहुना ऋचा मनेनाधीतत्वात् तादृशः । अच्छावाकत्वं पूर्वत्रैव माम्नातम् —"तस्माद्यो ब्राह्मणो वीर्यवान्स्यात् , सोऽस्याच्छावाकीयां कुर्यात्"—इति ॐ ।

ॐ १भा० ४४६ पृ० १६ पं० ।

बह्वृचत्वादेवायं 'वीर्य्यवान्' शक्तिमान्, यज्ञभारं वोढुं शक्तः ; सूक्तं चैतद्वह्निशब्दोपेतत्वात् तस्य योग्यम् ; लोकेऽपि 'वह्निः' वोढाश्वो बलीवर्दो वा 'यासु' रथशकटसम्बन्धिनीषु धुर्षु 'युज्यते' बध्यते, ता धुरो वहत्येव । 'तस्मात्' यज्ञभारं वोढुं समर्थत्वादच्छावाकः 'उभयत्र' द्विविधेष्वप्यहस्सु वह्निवत् सूक्तं शंसति ॥

तत्राहीनरहितेष्वहस्सु, पूर्वोक्तसूक्तानां शंसनं प्रशंसति— "तानि पञ्चस्वहस्सु भवन्ति,—चतुर्विंशे ऽभिजिति विषुवति विश्वजिति महाव्रते ; ऽहीनानि ह वा एतान्यहानि, न ह्येषु किञ्चन हीयते ; पराञ्चीनि ह वा एतान्यहान्यनभ्यावर्तीनि ; तस्मादेनान्येतेष्वहस्सु शंसन्ति"–इति । गवामयने चतुर्विंशाख्य मारम्भणीयं द्वितीय मह:, महाव्रताख्य मुपान्त्य मह:, विषुवदाख्यं मध्यवर्त्ति प्रधानमहः, अभिजिद्विश्वजिदाख्ये विषुवत उभयभागवर्त्तिनी द्वे अहनी । एतेषु 'पञ्चस्वहस्सु' 'तानि' पूर्वोक्तानि अहीनसूक्तानि होत्रकाः शंसन्ति । एतेषां मह्ना मही-नत्वात्तानि सूक्तानि तत्र योग्यानि । यस्मादेतेष्वहस्सु किं मप्यङ्गं न हीयते, तस्मादेतान्यहीनानि; किञ्चैतान्यहीनानि 'पराञ्चीनि' सकृदेव प्रयोज्यत्वात् । तेष्वहस्सु सामर्थ्यातिशयाय तानि सूक्तानि शंसेयुः ॥

प्रकारान्तरेण सूक्तानि प्रशंसति— "यदेनानि शंसन्त्यहीनाः स्स्वर्गाल्लोकान्त्सर्वरूपान्त्सर्वसमृद्धानवाप्नवामेति"–इति । 'ये' स्वर्गलोकाः 'अहीनाः' भोग्यैर्वस्तुभिर्हीना न भवन्ति, अत एव 'सर्वसमृद्धाः', उत्तममध्यमाधमकर्मफलरूपत्वात् 'सर्वरूपाः' बहुविधा भवन्ति; तांल्लोकान् प्राप्नवामेत्यनेनाभिप्रायेण तानि ( ३०८पृ० ) सूक्तानि शंसेयुः ॥

पुनरपि प्रकारान्तरेण प्रशंसति— "यदेवैनानि शंसन्तीन्द्र मेवैतैर्निह्वयन्ते यथर्षभं वाशितायै"–इति । 'एनानि' सूक्तानि यदा शंसन्ति, तदानी मेतैरिन्द्र मेव 'निह्वयन्ते' नितरा माह्वयन्ति, गर्भग्रहण मिच्छन्ती धेनुः 'वाशिता', तदर्थ मृषभं पुङ्गवं यथाह्वयति तद्वदिन्द्राह्वानं द्रष्टव्यम् ॥

पुनरपि प्रकारान्तरेण सूक्तानि प्रशंसति— "यद्वेवैनानि शंसन्त्यहीनस्य सन्तत्या, अहीन मेव तत् सन्तन्वन्ति"–इति । 'यद्वु एव' यस्मादेव कारणात् 'एनानि' सूक्तानि सर्वेष्वहस्सु, शंसन्ति, तस्मादेव कारणादेतत् शंसनम् 'अहीनस्य' अहर्गणस्य सन्तत्यर्थं सम्पद्यते । 'तत्' तेन शंसनेन 'अहीन मेव' अहर्गण मेव 'सन्तन्वन्ति' सन्ततं कुर्वन्ति ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां चतुर्थाध्याये
(एकोनत्रिंशाध्याये) द्वितीयः खण्डः ॥ २ ( १८ ) ॥

---

॥ अथ तृतीयः खण्डः ॥

ततो वा एतांस्त्रीन्त्सम्पातान् मैत्रावरुणो विपर्यास मेकैक महरहः शंसत्येवा त्वा मिन्द्र वज्रिन्नत्रेति प्रथमे ऽहनि यन्न इन्द्रो जुजुषे यच्च वष्टीति द्वितीये कथा महा मवृधत् कस्य होतुरिति तृतीये त्रीनेव सम्पातान् ब्राह्मणाच्छंसी विपर्यास

मेकैक महरहः शंसतीन्द्रः पूर्भिदातिरद्दास मर्कैरिति प्रथमे ऽहनि य एक इद्धव्यश्चर्षणीना मिति द्वितीये यस्तिग्मशृङ्गो वृषभो न भीम इति तृतीये चीनेव सम्पातानच्छावाको विपर्यास मेकैक महरहः शंसतीमा मू षु प्रभृतं सातये धा इति प्रथमे ऽहनीच्छन्ति त्वा सोम्यासः सखाय इति द्वितीये शासद्वह्निर्दुहितुर्नप्त्यं गादिति तृतीये तानि वा एतानि नव त्रीणि चाहरहःशस्यानि तानि द्वादश सम्पद्यन्ते द्वादश वै मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तत् संवत्सरं प्रजापतिं यज्ञ माप्नुवन्ति तत् संवत्सरे प्रजापतौ यज्ञे ऽहरहः प्रतितिष्ठन्तो यन्ति तान्यन्तरेणावाप मावपेरन्नन्यूङ्खा विराजो वैमदीश्चतुर्थे ऽहनि पङ्क्तीः पञ्चमे पारुच्छेपीः षष्ठे ऽथ यान्यहानि महास्तोमानि स्युः को अद्य नर्यो देवकाम इति मैत्रावरुण आवपेत वनेन वा यो न्यधायि चाकन्निति ब्राह्मणाच्छंस्यायाद्यर्वाङुप वसुरेष्ठा इत्यच्छावाक एतानि वा आवपनान्येतैर्वा आवपनैर्देवाः स्वर्गं लोक मजयन्नेतैर्ऋषयस्तथैवैतद् यजमाना एतैरावपनैः स्वर्गं लोकं जयन्ति ॥ ३ (१८) ॥

अथ पूर्वोक्तानां सम्पातसूक्तानां विनियोगं दर्शयति— "ततो वा एतांस्त्रीन्त्सम्पातान् मैत्रावरुणो विपर्यास मेकैक महरहः शंसति"–इति। 'ततो वै' तस्मादेव पूर्वोक्तात् चतुर्विंशादेरहः-पञ्चकादन्यत्र षडहेष्विति शेषः। तेषु मैत्रावरुणः त्रीन् सम्पाताख्यान् सूक्तविशेषान् 'विपर्यासं' विपर्यस्य शंसेत्। स एव विपर्यास एकैक महरह इत्यनेन स्पष्टीक्रियते। प्रतिदिन मेकैकं सूक्त मित्यर्थः॥

तदेवोदाहृत्य प्रदर्शयति— "एवा त्वा मिन्द्र वज्रिन्नत्रेति ( सं० ४. १९. ) प्रथमेऽहनि, यन्न इन्द्रो जुजुषे यच्च वष्टीति ( सं० ४. २२. ) द्वितीये, कथा महा मवृधत् कस्य होतुरिति ( सं० ४. २३. ) तृतीये"–इति॥

मैत्रावरुणवद् ब्राह्मणाच्छंसिनोऽपि सूक्तत्रयस्य विपर्यासेन शंसनं दर्शयति— "त्रीनेव सम्पातान् ब्राह्मणाच्छंसी विपर्यास मेकैक महरहः शंसतीन्द्रः पूर्भिदातिरद्दास मर्कैरिति (सं० ३. ३४.) प्रथमेऽहनि, य एक इद्धव्यश्चर्षणीना मिति ( सं० ६. २२. ) द्वितीये, यस्तिग्मशृङ्गो वृषभो न भीम इति ( सं० ७. १९. ) तृतीये"–इति॥

तथाच्छावाकस्यापि सूक्तत्रयस्य विपर्यासेन शंसनं दर्शयति— "त्रीनेव सम्पातानच्छावाको विपर्यास मेकैक महरहः शंसतीमा ऊ षु प्रभृतिं सातये धा इति (सं० ३. ३६.) प्रथमेऽहनीच्छन्ति त्वा सोम्यासः सखाय इति ( सं० ३. ३०. ) द्वितीये, शासद्वह्निर्दुहितुर्नप्त्यं गादिति ( सं० ३. ३१. ) तृतीये"–इति॥

उक्तानां सूक्तानां मिलित्वा सङ्ख्यां दर्शयति— "तानि वा एतानि नव"–इति॥

दिनविशेषेण सूक्तविशेषान् विधाय प्रतिदिनं शंसनीय सूक्तानि विधत्ते— "त्रीणि चाहरहःशस्यानि"-इति। या प्रतिदिनं शंसनीयानि त्रीणि सूक्तानि, तान्युपरितनखण्डे "स ह जातः इत्यादिना ( ३१६पृ० ) स्पष्टीकरिष्यन्ते ॥

दिनविशेषगतानि प्रतिदिनगतानि च मिलित्वा प्रशंसनि "तानि द्वादश सम्पद्यन्ते; द्वादश वै मासाः संवत्सरः, संवत्सरः प्र पतिः, प्रजापतिर्यज्ञस्तत् संवत्सरं प्रजापतिं यज्ञ माप्नुवन्ति ; त संवत्सरे प्रजापतौ यज्ञे ऽहरहः प्रतितिष्ठन्तो यन्ति"-इति। 'ता पूर्वोक्तानि नव त्रीणि च मिलित्वा द्वादश सम्पद्यन्ते। अतो मास संवत्सर-तन्निमात्प्रजापति-द्वारा प्रजापतिसृष्टत्वेन प्रजापतिरू यो यज्ञस्ताद्दशं संवत्सरात्मकं प्रजापतिरूपं यज्ञ मनुष्ठातारः प्रा वन्ति। 'तत्' तेन शंसनेन संवत्सरात्मकप्रजापतिरूपे यज्ञे प्रति दिनं प्रतिष्ठिताः सन्तो ऽनुतिष्ठन्ति ॥

अथ पृष्ठ्यषडहस्य उत्तरस्मिंस्त्र्यहे वाचाविहया मावा विधत्ते— "तान्यन्तरेणावाप मावपेरन्"-इति। यानि विपर्या सेन शंसनीयानि नव सङ्ख्याकानि सूक्तान्युक्तानि, यानि च प्रति दिनं शंसनीयानि त्रीण्युक्तानि, 'तान्यन्तरेण' तेषा मुभयविधाना मन्तराले स्थाने किञ्चिदावपनीय मृक्समूह मावपेरन् ॥

कस्मिन् दिने का ऋच आवपनीया इत्याशङ्क्य तत् सर्व विविच्य दर्शयति—"अन्यूङ्खा विराजो वैमदीश्चतुर्थे ऽहनि, पङ्क्तीः पञ्चमे, पारुच्छेपीः षष्ठे"-इति। उच्चारणविशेषोपेताः ओकाराः 'न्यूङ्खाः', ते च पूर्व मेव "मुखतो मध्यन्दिने न्यूङ्खयन्ति"-इत्यता- भिहिताः ( २४ पृ० ) *; ता अनर्हन्तीति 'अन्यूङ्खाः'; 'विराजः' विराट्छन्दस्का ऋचः; ताः पृष्ठ्यषडहस्य चतुर्थेऽहन्यावपनीयाः।

"न ते गिरो अपि मृष्ये"—इत्याद्यायतस्र ऋचः ( सं० ७.२२.५–८.), "प्र वो महे महिवृधे भरध्वम्"—इत्याद्यास्तिस्रः ( सं० ७. ३१. १०–१२. ); एताः सप्त विराजः त्रयाणां होत्रकाणां त्रयस्तृचा भवन्ति। प्रथमा मारभ्यैकस्तृचो मैत्रावरुणस्य, तृतीया मारभ्यैकस्तृचो ब्राह्मणाच्छंसिनः, पञ्चमी मारभ्यैकस्तृचो ऽच्छावाकस्य। तदेवं सप्तसृक्षु त्रयस्तृचा विभज्य प्रक्षेपणीयाः। सोऽयं विराजां प्रक्षेपः एकः पक्षः। वैमदीरावपन्तीति पक्षान्तरम्। विमदाख्येन महर्षिणा दृष्टा वैमद्यः। ताश्च "यजामह इन्द्रम्"—इत्याद्याः सप्तर्चः ( सं० १०. २३.१–७. )। ता अपि पूर्ववत् त्रयस्तृचाः कर्त्तव्याः। पञ्चमे ऽहनि "अचित्ति सत्य सोमपाः" —इत्याद्याः पङ्क्तिच्छन्दस्काः सप्तर्चः ( सं० १. २९.१–७. )पूर्ववदावपनीयाः। तथा षष्ठेऽहनि परुच्छेपेन दृष्टा "इन्द्राय हि द्यौः" —इत्याद्याः सप्तर्चः ( सं० १. १३१. १–७. ) पूर्ववदावपनीयाः॥

स्तोमहद्धावतिशंसनार्थान्यावपनीयानि सूक्तानि दर्शयति— "अथ यान्यहानि महास्तोमानि स्युः, को अद्य नर्यो देवकाम इति मैत्रावरुण आवपेत; वने न वायो * न्यधायि चाकन्निति ब्राह्मणाच्छंस्यायाह्यर्वाङुप वन्धुरेष्ठा इत्यच्छावाकः"—इति। 'अथ' पूर्वोक्तविराडाद्यावापकथनानन्तरम्, अन्य आवाप उच्यत इति शेषः। यान्यहानि 'महास्तोमानि' सप्तदशैकविंशादिस्तोमेभ्यो ऽधिकैश्चतुर्विंशादिस्तोमैर्युक्तानि स्युः, तेष्वहस्सु, स्तोमसङ्ख्या मतिक्रम्याधिकानामृचां शंसनं कर्त्तव्यम्। तत्र मैत्रावरुणः "को अद्य"—इति ( सं० ४. २५. ) सूक्त मावपेत। ब्राह्मणाच्छंसी

---

* "वाय —वे' श्रुन. । ०—० चेति च य इति च चकार शाकल्य', उदात्त त्वेर माख्यात मभविष्यदसुसमासश्चार्थः"—इति निरु० ६ ५, ५।

"वने न"–इति ( सं०. १० २९. ) सूक्तं मावपेत। अच्छावाकः "आयाहि"–इति ( सं ३. ४३. ) सूक्तं मावपेत ॥

तेषां सूक्तानां प्रशंसां दर्शयति— "एतानि वा आवपनान्येतैर्वा आवपनैर्देवाः स्वर्गं लोक मजयंस्तैर्ऋषयस्तथैवैतद्यजमाना एतैरावपनैः स्वर्गं लोकं जयन्ति"–इति । कौष्पयेत्यादीनि सूक्तानि 'आवपनानि' आवापयोग्यानि, एतैर्देवानां स्वर्गजयाद्यजमानाना मपि तैः स्वर्गजयो भवति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां चतुर्थाध्याये
( एकोनविंशाध्याये ) तृतीयः खण्डः ॥ ३ ( १९ ) ॥

---

॥ अथ चतुर्थः खण्डः ॥

सद्यो ह जातो वृषभः कनीन इति मैत्रावरुणः' पुरस्तात् सूक्ताना मह्रह्रः शंसति तदेतत् सूक्तं स्वर्ग्यं 'मेतेन वै सूक्तेन देवाः स्वर्गं लोक मजयन्नेतेन ऋषयस्तथैवैतद्यजमाना एतेन सूक्तेन स्वर्गं लोकं जयन्ति तदु वैश्वामित्रं' विश्वस्य ह वै मित्रं विश्वामित्र आस विश्वं हास्मै मित्रं भवति य एवं वेद येषां चैवं विद्वानेतन् मैत्रावरुणः' पुरस्तात् सूक्ताना

महरहः शंसति तदृषभवत् पशुमद्भवति पशुना मव-रुद्ध्यै तत् पञ्चर्चं भवति पञ्चपदा पङ्क्तिः पङ्क्तिर्वा अन्न मन्नाद्यस्यावरुद्ध्या उदु ब्रह्माण्यैरत श्रवस्येति ब्राह्मणाच्छंसी ब्रह्मण्वत् समृद्धं सूक्त महरहः शंसति तदेतत् सूक्तं स्वर्ग्य मेतेन वै सूक्तेन देवाः स्वर्गं लोक मजयन्नेतेन ऋषयस्तथैवैतद्यजमाना एतेन सूक्तेन स्वर्गं लोकं जयन्ति तदु वासिष्ठ मेतेन वै वसिष्ठ इन्द्रस्य प्रियं धामोपागच्छत् स परमं लोक मजयदुपेन्द्रस्य प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद तद्वै षळृचं षड्वा ऋतव ऋतूना माप्त्यै तदुपरिष्टात् सम्पातानां शंसत्याप्त्वैव तत् स्वर्गं लोकं यजमाना अस्मिंल्लोके * प्रतितिष्ठन्त्यभि तष्टेव दीधया मनीषा मित्यच्छावाको ऽहरहः शंसत्य-भिवत् तत्यै रूप मभि प्रियाणि मर्मृशत् पराणीति यान्येव पराण्यहानि तानि प्रियाणि तान्येव तदभि-मर्मृशतो यन्त्यन्वारभमाणाः परो वा अस्माल्लो-कात् स्वर्गो लोकस्त मेव तदभिवदति कवीँरि-च्छामि † सन्दृशे सुमेधा इति ये वै तेन ऋषयः पूर्वे

* "अस्मिन् लोके" ख, "अस्मिल्लोके" ग, "अस्मिंलोके" घ, ङ, च।

† "प्रच्छामि" ङ, च।

मेतास्ते वै कवयस्तानेव तदभ्यतिवदति तदु वैश्वामित्रं विश्वस्य ह वै मित्रं विश्वामित्र आस विश्वं हास्मै मित्रं भवति य एवं वेद तदनिरुक्तं प्राजापत्यं शंसत्यनिरुक्तो वै प्रजापतिः प्रजापतेराप्त्यै सकृदिन्द्रं निराह तेनैन्द्राद्रूपान्न प्रच्यवते तद्वै दशर्चं दशाक्षरा विराळन्नं विराळन्नाद्यस्यावरुद्ध्यै यदेव दशर्चा३म्* दश वै प्राणाः प्राणानेव तदाप्नुवन्ति प्राणानात्मन् दधते तदुपरिष्टात् सम्पातानां शंसत्यास्वेव तत् स्वर्गं लोकं यजमाना अस्मिंल्लोके† प्रतितिष्ठन्ति ॥ ४ (२०) ॥

एवं तावत् प्रसङ्गानुप्रसक्तं परिसमाप्याधुना प्रस्तुत मारभते— "सद्यो ह जातो वृषभः कनीन इति ( सं० ३. ४८. ) मैत्रावरुणः पुरस्तात् सूक्ताना महरहः शंसति"–इति। पूर्वंत्र ( २१४ पृ० ) त्रीणि चाहरहःशस्यानीति यदुक्तं, तस्यैवैतद् व्याख्यानं सद्योह-जात इत्यादिकम्। मैत्रावरुणः स्वकीयस्य सूक्तस्य पुरस्तात् प्रतिदिनं शंसेत्। सूक्ताना मिति बहुवचनं व्यत्ययेन द्रष्टव्यम्॥

उक्तं सूक्तं प्रशंसति— "तदेतत् सूक्तं स्वर्ग्यमेतेन वै सूक्तेन देवाः स्वर्गं लोक मजयन्नेतेन ऋषयस्तथैवैतद्यजमाना एतेन सूक्तेन स्वर्गं लोकं जयन्ति"–इति। 'स्वर्ग्यं' स्वर्गाय हितम्। अन्यत् पूर्ववद् व्याख्येयम्॥

ऋषिसम्बन्धेन पुनः प्रशंसति— "तदु वैश्वामित्रं विश्वस्य ह

* "दशर्चा३" क, दशर्चा३" ख, च। † "अस्मिन् लोके" क, ङ, च।

वै मित्रं विश्वामित्र आस"—इति । 'तदु' तत्तु सूक्तं विश्वामित्रेण दृष्टत्वात् 'वैश्वामित्रम्' । विश्वस्य मित्र मिति निरुक्त्या विश्वामित्रशब्दोऽभूत् * ॥

वेदनं तत्पूर्वं मनुष्ठानञ्च प्रशंसति— "विश्वं हास्मै मित्रं भवति य एवं वेद, येषां चैवं विद्वानेतन् मैत्रावरुणः पुरस्तात् सूक्ताना महरहः शंसति"—इति ॥

वृषभः कनीन इति योऽयं वृषभशब्दस्तदन्तर्गतं वकारव्यतिरिक्त मृषभशब्द मुपजीव्य प्रशंसति— "तदृषभवत् पशुमद्भवति पशूना मवरुद्धै"—इति । 'तत्' सूक्त मृषभशब्दोपेतम्, ऋषभस्य च पशुत्वात् सूक्तं पशुमद्भवति । अतः पशूनां प्राप्तिर सम्पद्यते ॥

ऋक्सङ्ख्या मुपजीव्य प्रशंसति— "तत् पञ्चर्चं भवति, पञ्चपदा पङ्क्तिः, पङ्क्तिर्वा अन्न मन्नाद्यस्यावरुद्धै"—इति । ऋग्गतया पञ्चसङ्ख्यया पादपञ्चकोपेतपङ्क्तिच्छन्दःस्वरूपत्वम्; अन्नञ्च पञ्चसङ्ख्योपेतत्वात् पङ्क्तिरेव,—प्राश्यं, पेयं, खाद्यं, लेह्यं, निगीर्य मिति । एव मन्नप्राप्तिर सम्पद्यते ॥

ब्राह्मणाच्छंसिनः सूक्तं विधत्ते— "उदु ब्रह्माण्यैरत श्रवस्येति ( सं० ७. २२. ) ब्राह्मणाच्छंसी ब्रह्मण्वत् समृद्धं सूक्त महरहः शंसति"—इति । ब्रह्माणीति ब्रह्मशब्दयोगादिदं सूक्तं ब्रह्मण्वत् 'समृद्धम्' समृद्धिकारणम् ॥

तस्य प्रशंसां दर्शयति— "तदेतत् सूक्तं स्वर्ग्य मेतेन वै सूक्तेन देवाः स्वर्गं लोक मजयन्नेतेन ऋषयस्तथैवैतद् यजमाना एतेन सूक्तेन स्वर्गं लोकं जयन्ति"—इति ॥

---

* "विश्वामित्र ऋषिः सुदास. पैजवनस्य पुरोहितो बभूव; विश्वामित्रः सर्वमित्र." —इति निरु० २. ७. २। "मित्रे चर्षौ"—इति पा० ६. ३. १३० ।

पुनरप्यृषिसम्बन्धेन प्रशंसति— "तदु वासिष्ठमेतेन वै वसिष्ठ इन्द्रस्य प्रियं धामोपागच्छत्, स परमं लोक मजयत्"–इति ॥

वेदनं प्रशंसति— "उपेन्द्रस्य प्रियं धाम गच्छति, जयति परमं लोकं य एवं वेद"–इति ॥

ऋक्सङ्ख्या सुपजीव्य प्रशंसति— "तद्वै पळ्चं मद्वा ऋतव ऋतुना मात्रैः"–इति ॥

तस्य सूक्तस्य स्थानं विधत्ते— "तदुपरिष्टात् सम्पातानां शंसत्यात्रैव तत् स्वर्गे लोकं यजमाना अस्मिंल्लोके प्रतितिष्ठन्ति"–इति। सम्पातसूक्तस्योपरिष्टात् तत् सूक्तं शंसेत्। तेन शंसनेन 'स्वर्गलोकमात्रैव' देहपातादूर्द्ध्वभाविनीं स्वर्गप्राप्तिं सम्पाद्यैवेदानी मस्मिन् लोके यजमानाः प्रतिष्ठिता भवन्ति ॥

अच्छावाकस्य सूक्तं विधत्ते— "अभितष्टेव दीधया मनीषा मित्यच्छावाको ऽहरहः शंसत्यभिवत् तल्वे रूपम्"–इति। अभितष्टेत्यादिकं (सं० ३. ३८.) सूक्तं मच्छावाकः प्रतिदिनं शंसेत्। तच्च 'अभिवत्' अभिशब्दोपेतम्। अभिशब्दस्य चाभितः सर्वत इत्यस्मिन्नर्थे वर्त्तमानत्वात् सूक्तं 'तल्वे' सतत्वे, विच्छेदराहित्यस्वरूपं भवति ॥

तस्या ऋचस्तृतीयपाद मनूद्य व्याचष्टे— "अभि प्रियाणि मर्मृशत् पराणीति; यान्येव पराण्यहानि, तानि प्रियाणि; तान्येव तदभिमर्मृशतो यन्त्यस्यारभमाणाः; परो वा अस्माल्लोकात् स्वर्गो लोकस्त मेव तदभिवदति"–इति। अनया ऋचा (सं०३.३८.१.) विश्वामित्रः प्रजापतिं तुष्टाव। तथा सत्यस्य पादस्याय मर्थः— 'पराणि' उत्तराणि कर्माणि प्रजापतेः प्रियाणि 'अभि मर्मृशत्' सर्वतः पुनः पुनः स्पृशन्नयं वर्त्त इति। यान्येवेत्यादिकं तद्-

व्याख्यानम् । वर्तमानादङ्गः 'पराणि' उत्तराणि यान्येवाङ्गानि सन्ति, तानि देवस्य प्रियाणि ; अतस्तेन पादपाठेन तान्येव 'अभिमर्मृशतः' अभितः पुनः पुनः स्पृशन्तः । तस्यैव व्याख्यान मभ्यारभमाणा इति । तादृशा यजमाना 'यन्ति' वर्त्तन्ते । किञ्चास्माल्लोकात् परः स्वर्गो लोकः, त मेव लोकं 'तत्' तेन परशब्देनाभिवदति ॥

चतुर्थपाद मनुवदति—"कवीँ रिच्छामि सन्दृशे सुमेधा इति" —इति । 'सुमेधाः' शोभनया मेधया युक्तोऽहं 'सन्दृशे' सम्यग्-दर्शनाय 'कवीन्' महर्षीन् इच्छामि ॥

त मेव पादं व्याचष्टे—"ये वै ते न ऋषयः पूर्वे प्रेतास्ते वै कवयस्तानेव तदभ्यतिवदति"—इति । 'नः' अस्माकं सम्बन्धिनः पूर्वे ऋषयः ये, 'ते' प्रसिद्धाः 'प्रेताः' परलोकं गताः, त एवात्र 'कवयः' कविशब्देन विवक्षिताः । अतस्तानेव 'अभि'लक्ष्य तेन पादेन 'अतिवदति' अतिशयेन ब्रूते ॥

ऋषिसम्बन्धेन प्रशंसति—"तद्ध वैश्वामित्रं, विश्वस्य ह वै मित्रं विश्वामित्र आस ; विश्वं हास्मै मित्रं भवति य एवं वेद"—इति । पूर्ववद् व्याख्येयम् ॥

अस्पष्टदेवताक मुपजीव्य प्रशंसति—"तदनिरुक्तं प्राजापत्यं शंसत्यनिरुक्तो वै प्रजापतिः, प्रजापतेराप्त्यै"—इति । 'तत्' सूक्तम् 'अनिरुक्तम्' न हि तत्र काचिद्देवता विस्पष्टं निरुच्यते ; अतः प्रजापतिदेवताकम्, तत् शंसेत् । प्रजापतिश्च सृष्टेः पूर्वं मूर्त्ति-राहित्यात् 'अनिरुक्तः', अतः सूक्तं प्रजापतिप्राप्तेः सम्पद्यते ॥

सूक्तस्य प्राजापत्यत्वे सत्यैन्द्रत्वं प्रच्यवेतेत्याशङ्क्याह—"सकृदिन्द्रं निराह, तेनैन्द्राद्रूपान्न प्रच्यवते"—इति । कस्याञ्चिदृचि "शुन

ह्वयेम मघवान मिन्द्रम्"–इति सकृदिन्द्रं निर्ब्रूते, तेन कारणेनैन्द्रसम्बन्धिस्वरूपादपि प्रच्युतिर्नास्ति ॥

ऋक्सङ्ख्या मुपजीव्य प्रशंसति– "तद्वै दशर्चं, दशाक्षरा विराळन्नं विराळन्नाद्यस्यावरुद्ध्यै"–इति ॥

पुनरप्यृक्सङ्ख्या मुपजीव्य प्रशंसति– "यदेव दशर्चा३म्, दश वै प्राणाः, प्राणानेव तदाप्नुवन्ति, प्राणानात्मन् दधते"–इति। 'यदेव' यस्मादेव कारणादिदं सूक्तं 'दशर्चा३म्' [प्लुतिः प्राणसादृश्येनाश्चर्यार्था। पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, इन्द्रियरूपाः प्राणा दशैव। यद्वा प्राणापानादयः पञ्च वायवो नागकूर्मादयश्च पञ्च वायव इति दश प्राणाः।] अतस्तच्छंसनेन प्राणानेव प्राप्य, तान् प्राणान् स्वात्मन्येव स्थापयन्ति ॥

तस्य सूक्तस्य स्थानं विधत्ते– "तदुपरिष्टात् सम्पातानां शंसत्यन्नैव तत् स्वर्गं लोकं यजमाना अस्मिंल्लोके प्रतितिष्ठन्ति"–इति ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायां चतुर्थाध्याये
(एकोनविंशाध्याये) चतुर्थः खण्डः ॥ ४ (२०) ॥

---

॥ अथ पञ्चमः खण्डः ॥

कस्त मिन्द्र त्वा वसु कन्नव्यो अतसीनां कदू
न्वस्य हत मिति कद्वन्तः प्रगाथा आरम्भणीया

अहरहः शस्यन्ते को वै प्रजापतिः प्रजापतेराप्त्यै यद्देव कद्वन्तः * अन्नं वै क मन्नाद्यस्यावरुद्ध्यै यद्देव कद्वन्ताः † अहरहर्वा एते शान्तान्यहीनसूक्तान्युपयुञ्जाना यन्ति तानि कद्भिः प्रगाथैः शमयन्ति तान्येभ्यः शान्तानि कं भवन्ति तान्येनाञ्छान्तानि स्वर्गं लोक मभि वहन्ति त्रिष्टुभः सूक्तप्रतिपदः शंसेयुरिता हैके पुरस्तात्प्रगाथानां शंसन्ति धाय्या इति वदन्तस्तत् तथा न कुर्यात् चत्रं वै होता विशो होत्राशंसिनः चत्रायैव तद् विशं प्रत्युद्यामिनीं कुर्युः पापवस्यसं त्रिष्टुभो म इमाः सूक्तप्रतिपद इत्येव विद्यात् तद्यथा समुद्रं प्रप्लवेरन्नेवं हैव ते प्रप्लवन्ते ये संवत्सरं वा द्वादशाहं वासते तद्यथा सैरावतीं नावं पारकामाः समारोहेयुरेव मेवैतास्त्रिष्टुभः समारोहन्ति न ह वा एतच्छन्दो गमयित्वा स्वर्गं लोक मुपावर्त्तते वीर्यवत्तमं हि ताभ्यो न व्याह्वयीत समानं हि छन्दो ऽथो नेद्धाय्याः करवाणीति यदेनाः शंसन्ति प्रज्ञाताभिः सूक्तप्रतिपद्भिः सूक्तानि समारोहामेति यदेवैनाः शंसन्तीन्द्र मेवैताभिर्निह्वयन्ते यथऋषभं वाशितायै यद्देवैनाः शंसन्त्यहीनस्य सन्तत्या अहीन मेव तत् सन्तन्वन्ति ॥ ५ (२१) ॥

*, † "कद्वन्ताइ" ख।

अथ त्रीन् प्रगाथान् विधत्ते— "कस्त मिन्द्र त्वा वसुं, कन्नव्यो अतसीनां, कदू न्वस्या कृत मिति कद्वन्तः प्रगाथा आरम्भणीया अहरहः शस्यन्ते"-इति। "कस्तम्"-इत्यादिरेकः ( सं० ७. ३२. १४, १५. ) प्रगाथः, "कन्नव्य"-इति ( सं० ८. ३. १३, १४. ) द्वितीयः, "कदू नु"-इति ( सं० ८. ६६. ९, १०. ) तृतीयः। यद्यपि प्रथमे कच्छब्दो नास्ति, तथापि छत्रिन्यायेन साहचर्याद्वा सर्वे कद्वन्तः, 'प्रगाथाः' ऋग्द्वयात्मकाः ; ते च वैकृतारम्भहेतुत्वात् 'आरम्भणीयाः' ते च प्रतिदिनं शंसनीयाः ॥

प्रथमं प्रगाथं शंसति— "को वै प्रजापतिः, प्रजापतेराप्त्यै"-इति। प्रथमस्यादौ श्रूयमाणस्य क-शब्दस्य प्रजापतिरर्थः ; अतो ऽयं प्रजापतिप्राप्त्यै सम्पद्यते ॥

सर्वान् प्रगाथान् प्रशंसति— "यदेव कद्वन्ताः अन्नं वै क मन्नाद्यस्यावरुद्ध्यै"-इति। 'यदेव' यस्मादेव कारणादेते प्रगाथाः कद्वन्ता [ स्तुतिः प्रशंसार्था ] ; कच्छब्दैकदेशरूपं यत्कं, तदन्न मेव ; कशब्दस्य सुखवाचित्वादन्नस्यापि सुखहेतुत्वात् ; अतो ऽन्नप्राप्त्यै तत् सम्पद्यते ॥

पुनरपि प्रकारान्तरेण प्रशंसति— "यद्वेव कद्वन्ताः अहरहर्वा एते शान्तान्यहीनसूक्तान्युपयुञ्जाना यन्ति ; तानि कद्भिः प्रगाथैः शमयन्ति ; तान्येभ्यः शान्तानि कं भवन्ति ; तान्येनाञ्छान्तानि स्वर्गं लोक मभि वहन्ति"-इति। 'यद्वेव' पुनरपि यस्मादेव कारणात् एते प्रगाथाः कद्वन्तः शस्यन्ते [ स्तुतिः पूर्ववत् ] , तस्मादेव कारणात् प्रतिदिनम् 'एते' यजमानाः 'शान्तानि' सर्वोपद्रवशमकराणि अहीनसूक्तान्युपयुञ्जानाः 'यन्ति' वर्तन्ते। कथं सूक्तानां शान्तत्व मिति,तदुच्यते—'तानि'

सूक्तानि 'ककुद्भिः' सुखवाचकशब्दोपेतैः प्रगाथैर्यजमानाः 'शमयन्ति' शान्तानि कुर्वन्ति । 'तानि' च सूक्तानि शान्तानि भूत्वा 'एभ्यः' यजमानेभ्यः 'कं भवन्ति' सुखकारणानि भवन्ति । 'तानि' सूक्तानि शान्तानि भूत्वा 'एनान्' यजमानान् स्वर्गं लोकम् 'अभि वहन्ति' प्रापयन्ति ॥

ककुत्-प्रगाथेभ्य ऊर्ध्वं "अप प्राच इन्द्र"–इत्यस्याः त्रिष्टुप्छन्दस्का ऋचः ( ३२८ पृ० ) प्रतिदिनं शंसनीयसूक्तादित्वेन विधत्ते—"त्रिष्टुभः सूक्तप्रतिपदः शंसेयुः"–इति ॥

अत्र कश्चित् पूर्वपक्षमुद्भावयति—"ता हैके पुरस्तात् प्रगाथानां शंसन्ति, धाय्या इति वदन्तः"–इति । यथा होतुर्निष्केवल्यशस्त्रे प्रगाथात् पुरस्तात् धाय्या भवन्ति, तद्वत् "अप प्राचः"–इत्याद्यास्त्रिष्टुभोऽपि धाय्यास्तस्मात् पूर्वोक्तानां ककुत्-प्रगाथानां पुरस्तात् शंसितुं योग्या इति वदन्तः केचियाज्ञिकाः 'ताः' ऋचः तेषां पुरस्तात् शंसन्ति ॥

तं पूर्वपक्षं निराचष्टे— "तत् तथा न कुर्यात्"–इति ॥

तस्मिन् पक्षे दोषं दर्शयति—"क्षत्रं वै होता, विशो होत्राशंसिनः; क्षत्रायैव तद् विशं प्रत्युद्यामिनीं कुर्युः पापवस्यसम्"–इति । निष्केवल्यस्य शंसको यो होतास्ति, असौ 'क्षत्रं वै' क्षत्रियो राजेव । होतृत्वे समुत्पन्नाः क्रिया होत्राः, ताः शंसतीति मैत्रावरुणादयो 'होत्राशंसिनः', ते च 'विशः' राष्ट्रवर्त्तिन्यः ; प्रजाः 'तत्' तथा सति, होतृदृष्टान्तेन प्रगाथेभ्यः पूर्वं त्रिष्टुभः शंसने सति, तां 'विशं' प्रजां 'क्षत्रायैव' राज्ञ एव 'प्रत्युद्यामिनीं' प्रतिकूलोद्योगयुक्तां कुर्युः । तच्च 'पापवस्यसम्' अतिशयेन पापरूपम् ; स्वामिना राज्ञा सह मात्सर्यस्य स्वामिद्रोहरूपत्वात् ॥

परपक्षं दूषयित्वा स्वपक्षं निगमयति— "त्रिष्टुभो म इमाः सूक्तप्रतिपद इत्येव विद्यात्"–इति। 'इमाः' "अप प्राचः"–इत्याद्याः ३२८पृ०) त्रिष्टुभ ऋचः 'मे' मम शंसितुः 'सूक्तप्रतिपदः' अहर्गणशंसनीय सूक्तप्रारम्भरूपाः इत्येव निश्चिनुयात्; न पुनः प्रगाथेभ्यः पुरस्तात् त्रिष्टुभामवस्थानं युक्तम् ॥

सूक्तप्रतिपत्पक्षे गुणं दर्शयति— "तद्यथा समुद्रं प्रप्लवेरन्नेवं हैव ते प्रप्लवते, ये संवत्सरं द्वादशाहं वासते,; तद्यथा सैरावतीं नावं पारकामाः समारोहेयुरेव मेवैतास्त्रिष्टुभः समारोहन्ति"–इति। 'तत्' तस्मिन्नभिहितेऽर्थे दृष्टान्तोऽभिधीयते,— यथा लोके समुद्रं प्रप्लवेरन्। 'प्लवः' परतीरगमनम्। स्वल्पेषु नदीतडागादिषु परतीरगमनं सुशकं भवति, समुद्रस्य तु तद्दुःशकम्; तथा संवत्सरसत्रस्य द्वादशाहस्य वानुष्ठातॄणां 'प्रप्लवः' पारगमनं समापनमत्यन्तदुःशकम्; प्रयोगस्यातिबहुलत्वात्। 'तत्' तथा सति, यथा लोके समुद्रस्य परतीरगमनकामाः पुरुषाः 'सैरावतीं नावं समारोहेयुः' इरा अन्नम्, तत्समूहः ऐरम्, तेन सह वर्त्तत इति 'सैरं' नौस्थं वसुजातम्, तादृशं सैरं यस्यां नाव्यस्ति, सेयं नौः सैरावती। समुद्रपारगमनस्य चिरकालसाध्यत्वात्, तावतः कालस्य पर्याप्तेनान्नेन सह सर्वं अपेक्षिते वसुजाते तस्यां नावि सम्पाद्य यथावकाशस्तां नावं मारोहेयुः, एव मेवानुष्ठातारः तथाविध-नौसदृशा एतास्त्रिष्टुभः समारोहन्ति। सर्ववसुसमृद्धा नौरिवैतास्त्रिष्टुभः पारं नेतुं समर्था इत्यर्थः ॥

तदेव सामर्थ्यं मस्पष्टीकरोति— "न ह वा एतच्छन्दो गमयित्वा स्वर्गं लोक मुपावर्त्तते; वीर्यवत्तमं हि"–इति। समुद्रं बाहुभ्या मुडुपेन वाप्लवनं पारगमनक्षमं न भवति, सैरावत्या तु

नावा पारं मवश्यं प्राप्यते ; एव मेव त्रिष्टुप् छन्दो यजमानान् स्वर्गं लोकं गमयित्वा नैवोपावर्त्तते, किन्तु सर्वथा स्वर्गं गमयत्येव। यस्मादेतच्छंसन मतिशयेन वीर्यवत्, तस्मादुक्तं पारगमयिष्णुत्वम्। एवंविधास्त्रिष्टुभो यदि सूक्तप्रतिपदः स्युः, तदानीं सूक्तच्छन्दसोऽपि त्रिष्टुप्त्वात् तस्माद्धाय्येन वीर्यवत्त्वमत्र मुपपद्यते। प्रगाथानां तु त्रिष्टुप्त्वाभावात् तेभ्यः पुरस्तात् शंसने वीर्यवत्त्वमत्रं न सिध्येदित्यभिप्रायः॥

एताभ्यस्त्रिष्टुब्भ्यः पूर्वं शोंसावो मिति व्याहाव मितरदृष्टान्तेन प्रसक्तं प्रतिषेधति— "ताभ्यो न व्याह्वयीत; समानं हि च्छन्दो ऽयो नेद्धाय्याः करवाणीति"—इति। ताभ्यस्त्रिष्टुब्भ्यः पूर्वं शोंसावो मिति व्याहावं न कुर्यात् *। यस्मात् सूक्तैः सहैतासां छन्दः समानम्, तस्मात् सूक्तान्तर्भूतानां ऋगन्तराणा मिवैतासां व्याहावो नास्ति। यदि धाय्यादृष्टान्तेन व्याहावः क्रियेत, तदानीं मेता अपि धाय्याः क्रियेरन्, अहं तु तासां धाय्यात्वं 'नेत् करवाणि' सर्वथा न करवाणीत्यभिप्रेत्य धाय्यारूपाद्भीतः सन् व्याहावं न कुर्यात्॥

उक्तास्त्रिष्टुप्छन्दस्का ऋचः प्रशंसति— "यदेनाः शंसन्ति, प्रज्ञाताभिः सूक्तप्रतिपद्भिः सूक्तानि समारोहामेति"—इति। 'एनाः' ऋचो यदा शंसन्ति, तदानीं मह्वानीयानीयानां त्रिष्टुप्छन्दस्कानां समारोहणम् 'एताभिः' सूक्तप्रतिपद्भिः प्रज्ञाताभिर्भविष्यतीति शंसितृणा मभिप्रायः। यथा प्रौढायाः नावः समारोहणं यत्र क्वापि कर्त्तुं न शक्यते, किन्तु निर्येण्णादिसाधनेनैव कर्त्तुं शक्यते, तद्वदत्रापि द्रष्टव्यम्॥

* २ भा॰ ८८ पृ॰ २१ पं॰ व्याहावव्याख्यान मत्र द्रष्टव्यम्।

पुनरपि प्रकारद्वयेन प्रशंसति— "यद्वेवैना शंसन्तीन्द्र मेवैताभिर्निह्वयन्ते यथऋषभं वाशितायै, यद्वेवैनाः शंसन्त्यहीनस्य सन्तत्या अहीन मेव तत् सन्तन्वन्ति"–इति। "अप प्राच इन्द्र"–इतिश्रुतत्वादिन्द्राह्वानं भवति। अन्यत् पूर्ववद् व्याख्येयम् ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां चतुर्थाध्याये
(एकोनत्रिंशाध्याये) पञ्चमः खण्डः ॥ ५ (२१) ॥

---

॥ अथ षष्ठः खण्डः ॥

अप प्राच इन्द्र विश्वाँ अमित्रानिति मैत्रावरुणः पुरस्तात् सूक्तानामहरहः शंसत्यपापाचो अभिभूते नुदस्वापोदीचो अप शूराधराच उरौ यथा तव शर्मन् मदेमेत्यभयस्य रूप मभय मिव हि यन्निनीच्छति ब्रह्मणा ते ब्रह्मयुजा युनज्मीति ब्राह्मणाच्छंस्यहरहः शंसति युनज्मीति युक्तवती युक्त इव ह्यहीनो ऽहीनस्य रूप मुरुं नो लोक मनु नेषि विद्वानित्यच्छावाकोऽहरहः शंसत्यनु नेषीत्येतीव ह्यहीनो ऽहीनस्य रूपं नेषीति समायणरूपं ता वा एता अहरहः शस्यन्ते समानीभिः परिदध्युरोकः-

## सारी हैषा मिन्द्रो यज्ञ भवतीं३ - यथऋषभो वाशितां यथा वा गौः प्रज्ञातं गोष्ठ मेवं हैषा मिन्द्रो यज्ञ मेव गच्छति न शुनंहुवीययाहोनस्य परिदध्यात् चयियो ह राष्ट्रास्त्रावर्त्ते यो हैव पगो भवति त मभि ह्वयति ॥ ६ (२२)॥

यदुक्तं त्रिष्टुभः सूक्तप्रतिपदः शंसेयुरिति (३२५ पृ०), तत्रत्या-स्त्रिष्टुभः उदाहृत्य प्रदर्शयति— "अप प्राच इन्द्र विश्वां अमित्रानिति मैत्रावरुणः पुरस्तात् सूक्तानां महरहः शंसति"—इति। "अप प्राचः"—इत्येतां ऋचं (सं० १०. १३१. १.) मैत्रावरुणः प्रतिदिनं स्वकीयसूक्तादौ शंसेत्। हे इन्द्र! 'विश्वान् अमित्रान्' सर्वानपि शत्रून् 'प्राचः' प्राङ्मुखान् कृत्वा 'अप नुदस्व'—इतिवक्ष्यमाणेनान्वयः। सोऽयं प्रथमपादस्यार्थः॥

अवशिष्टं पादत्रयं पठति— "अपापाचो अभिभूते नुदस्व, अपोदीचो अप शूराधराच, उरौ यथा तव शर्मन्मदेमेति"—इति। हे 'अभिभूते' शत्रु मभिभवितुं समर्थ! 'अपाचः' दक्षिणान् शत्रून् प्रत्यङ्मुखांश्च कृत्वा अप नुदस्व। तथैव 'उदीचः' उदङ्मुखान् कृत्वा अप नुदस्व। हे शूर! 'अधराचः' अधोमुखान् कृत्वा अप नुदस्व। 'उरौ' विस्तीर्णे 'तव शर्मन्' त्वत्सम्बन्धिनि गृहे 'यथा मदेम' येन प्रकारेण हृष्टा भवेम तथा कुर्विति शेषः॥

ऋचस्तात्पर्यं दर्शयति— "अभयस्य रूप मभय मिव हि यन्तितीच्छति"—इति। एतत् मन्त्रवाक्य मभयस्य स्वरूपम्; शत्रु-

३ "भवतीं३" ख, घ, च।

निराकरणस्य स्वकीयहर्षस्य चात्र प्रार्थ्यमानत्वात्। भयरहित मेव स्थान मयं मैत्रावरुणो 'यन्' प्राप्नुवन् 'इच्छति' प्राप्तु मपेक्षते। तस्माद्योग्येय मृक्॥

ऋगन्तरं ब्राह्मणाच्छंसिनो विधत्ते— "ब्रह्मणा ते ब्रह्मयुजा युनज्मीति ब्राह्मणाच्छंस्यहरहः शंसति; युनज्मीति युक्तवती; युक्त इव ह्यहीनो ऽहीनस्य रूपम्"—इति। अस्या मृचि (सं० ३.३५.४.) युनज्मीतिश्रवणादिय मृग् युजिधात्वर्थवती। अहीनो ऽहर्गणश्च 'युक्त इव' अह्नां परस्परसम्बन्धवानेव; अतो युजिधात्वर्थ-युक्त' मन्त्रवाक्य महीनस्य रूपम्॥

अनुकूल मृगन्तर मच्छावाकस्य विधत्ते— "उरुं णो लोक मनुनेषि विद्वानित्यच्छावाको ऽहरहः शंसत्यनुनेषीत्येतीव ह्यहीनो ऽहीनस्य रूपम्"—इति। अत्र (सं० ६. ४७. ८.) यदेतदनु-नेषीति पद मस्ति, तस्यार्थः एतीव ह्यहीन इत्यनेनोच्यते। अय मह्नर्गणः 'एतीव' प्रवर्तत एव। 'अनुपेति' अनुक्रमेण 'नय' प्रवर्तयेति। एव मुच्यमानत्वात् प्रवर्तमानस्याहीनस्येदं वाक्य मनु-रूपम्॥

अनुनेषीतिपदस्याभिप्राय मुक्त्वा तन्मध्यगतस्य नेषीत्येतस्यार्थ माह— "नेषीति सत्रायणरूपम्"—इति। सत्रस्यायन मनुष्ठानं 'सत्रायणं', 'नेषि' नय, अनुष्ठापयेति तस्यार्थः; अत एतत् पदं सत्रायणस्यानुकूलम्॥

उदाहृतास्तिस्र ऋच उपसंहरति— "ता वा एता अहरहः शस्यन्ते"—इति *॥

अथ परिधानीया ऋचः स्तोतु मुपक्रमते— "समानीभिः परि-

* "अथ याम ०—० कद्वन्त याज्यानीया"—इति आश्व० श्रौ० ७ ४ ७।

दध्युः"-इति । 'समानीभिः' एकविधाभिः ऋग्भिर्मैत्रावरुणादयो होत्रकाः 'परिदध्युः' शस्त्रसमाप्तिं कुर्युः । "नू ष्टुत"-इति मैत्रावरुणस्य परिधानीया ( सं० ४. १८. ११. ) । "एवेदिन्द्रम्"-इति ( सं० ७. २३. ६. ) ब्राह्मणाच्छंसिनः परिधानीया । "नूनं सा ते"-इति ( सं० २. ११. २१.) अच्छावाकस्य परिधानीया ∗ । अनेन सूक्तसामान्यादेताः समान्य इत्युच्यन्ते ॥

दृष्टान्तद्वयेन परिधानीयां शंसति— "ओकसारी हैषा मिन्द्रो यज्ञं भवती"२ यथर्षभो वाशितां यथा वा गौः प्रज्ञातं गोष्ठमेवं हैषा मिन्द्रो यज्ञमेव गच्छति"-इति । 'ओकसारी ह' मार्जार इवेन्द्रः 'एषां' यजमानानां यज्ञं 'भवती"' पुनः पुनः प्राप्नोति । सानुनासिका प्लुतिः पूजार्था । यथा 'वाशितां' गर्भार्थिनीं गां वृषभो गच्छति ; यथा वा गौः 'प्रज्ञातं' प्रतिदिनगमनेनात्यन्तं परिज्ञातं गोष्ठं प्राप्नोति ; एव मेवाय मिन्द्रः 'एषां' यजमानानां यज्ञ मागच्छत्येव । अतस्तदागमनार्थं समान्यः परिधानीया इत्यर्थः ॥

समानीभिः परिदध्युरिति यदुक्तम् तत्र "अभितष्टेव"-इत्यच्छावाकस्याहरहःशस्यं सूक्तम् ( सं० ३. ३८. १-१०.)† ; तस्मिन् अन्त्या 'शुनं हुवेम"-इत्येषा ( १०. ) ; तया परिधानप्राप्तौ निषेधति—"न शुनंहुवीययाच्छावाकस्य परिदध्यात् ; क्षत्रियो ह राष्ट्राच्च्यवते यो ह्येव परो भवति तमभि ह्वयति"-इति । शुनं हुवेमेति यस्यामृचि श्रूयते सा 'शुनंहुवीया' ; अच्छावाकस्य शस्त्रे तया न परिदध्यात् । परिधाने हि 'क्षत्रियः' राजा स्वकीयाद्राष्ट्रात् च्यवते ; यस्तु 'परः' तदीयः शत्रुर्भवति, तम् 'अभि'लक्ष्य 'ह्वयति'

∗, । पृ० २५९—१५५ पृ० ६ । १, आश्व० श्रौ० ७. ४. ८—१०।

आह्वानं करोति ; हुवेमेत्यन्याह्वानस्य प्रतीयमानत्वात् । अत एव सूत्रकारो ब्राह्मणान्तर माश्रित्य "नूनं सा ते"-इत्येतां ( सं० २. ११. २१. ) परिधानीयां मुक्तवान् * ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे .
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां चतुर्थाध्याये
( एकोनत्रिंशाध्याये ) षष्ठः खण्डः ॥ ६ ( २२ ) ॥

---

॥ अथ सप्तमः खण्ड. ॥

अथातो ऽहीनस्य युक्तिश्च विमुक्तिश्च व्यन्तरिक्ष मतिरदित्यहीनं युङ्क्ष्व एवेदिन्द्र मिति विमुञ्चत्याहं सरस्वतीवतो र्नूनं सा त इत्यहीनं युङ्क्ते ते ब्राम देव वरुण नू ष्टुत इति विमुञ्चत्येष ह वा अहीनं तन्तु महंति य एनं योक्तुं च विमोक्तुं च वेद तद्यच्चतुर्विंशे ऽहन् युज्यन्ते सा युक्तिरथ यत्

---

* "उद् अप्रयच्छन्निति तृतीयसवनस्य हवने, नूनं सा त इत्येतत् सूक्तम्"-इति आश्व० श्रौ० ७. ९. १०। यद्यपीह ब्राह्मणे शुनःशेपीयाया परिधानीयात्वनिषेधमात्रं श्रूयते, न तु "नूनं सा ते"-इत्यस्या विधिरपि, तथापि तद्विधिर्ब्राह्मणान्तरादेवावगन्तव्य इत्यभिप्राय । तत्र ब्राह्मणान्तर सिद्धेर्वोपपत्त्यर्थं द्रष्टव्यम् "नूनं सा त इत्यहीनं युङ्क्ते"-इति । किञ्च अभिमतोऽत्र सूक्त यद्यपि संहितायां दशमं साक्षातम्, परं सिद्ध नूनं मित्यं-तश्च आरम्भादेशाद्यर्थं नैव तद्ग्रहणविधि सम्पन्न । अत एवाचार्य शायनजी नारायण ... सूक्तारम्भाद् दृष्टिकेन भवति-इति ।

पुरस्तादुदयनीयस्यातिरात्रस्य विमुच्यन्ते सा विमुक्तिस्तद्यच्चतुर्विंशे ऽहन्नैकाहिकाभिः परिदध्युर्यथैव यत्तं संस्थापयेयुर्नाहीनकर्म कुर्युरथ यदहीनपरिधानीयाभिः परिदध्युर्यथा श्रान्तो विमुच्यमान उत्क्रामेतैवं यजमाना उत्क्रामेयुरनुभयीभिः परिदध्युस्तद्यथा दीर्घाध्व उपविमोकं यायात् तादृक् तत् सन्ततो हैषां यज्ञो भवतीं३ व्यमुक्षन्त एकां द्वे न द्वयोः सवनयोः स्तोम मतिशंसेद्धौधारय्यानि ह वै भवन्ति यत्र बह्वीभिः स्तोमो ऽतिशस्यते ऽपरिमिताभिस्तृतीयसवने ऽपरिमितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याप्त्यै सन्ततो ह्यस्याभ्यारब्धो विस्रस्तो ऽहीनो भवति य एवं विद्वानहीनं तनुते ॥ ७ (२३) ॥

एवं तावत् षष्ठिनां होत्रकाणां प्रातस्सवने माध्यन्दिने च शस्त्राणि उक्तानि; तेषां च परिधानीयाः पूर्व मेव "उभय्यः परिधानीयाः"–इत्यत्र ( २४६ पृ० ) ऐकाहिका अहीनाश्च विसृष्टाः। अथेदानीं कतमास्ता इति विविनक्ति—"अयातो ऽहीनस्य युक्तिश्च विमुक्तिश्च"–इति। 'अथ' परिधानीयाकथनानन्तरं यतस्तद्विवेको ऽपेक्षितः, अतः कारणात् 'अहीनस्य' अहर्गणस्य युक्तिश्च विमुक्तिश्च विवेकार्योमे, वक्ष्येते इति शेषः। 'युक्तिः' योगः, स्वाधीनत्वेन क्रतोः सम्पादनम्; 'विमुक्तिः' विमोचनं, स्वाधीनतया निर्बन्धपरित्यागः; तदेतदुभयं परिधानीयावशेन सम्पद्यते ॥

तत्र ब्राह्मणाच्छंसिनः परिधानीया मुपजीव्य क्रतोर्योग-विमोकौ दर्शयति — "अन्तरिक्ष मतिरदित्यहीनं युङ्क्त एवेदिन्द्र मिति विमुञ्चति"-इति । प्रातस्सवने ब्राह्मणाच्छंसिनो "अन्तरिक्षम्"-इति ( सं० ८. १. ७-९.) पर्यासस्तृचः *, तस्य "इन्द्रेण रोचना दिवः"-इति ऋगुत्तमा ( ९. ) ; तया यत् परिधानं, तेन 'अहीनं' क्रतुं 'युङ्क्ते' स्वाधीनतया निबध्नाति । माध्यन्दिने सवने "एवेदिन्द्रम्"-इति ( सं० ७. २३. ६. ) परिधानीया † ; तया 'विमुञ्चति' स्वाधीनतया निगृहीत महीनक्रतुं विस्रम्भव्यवहाराय निग्रहपरित्यागेन विमुञ्चति ; स्वाधीनो हि क्रतुरवश्यं फलं दास्यतीति युक्तो बन्धविमोकः ॥

अथाच्छावाकस्य परिधानीयया योगविमोकौ दर्शयति— 'आहं सरस्वतीवतोर्नूनं सा त इत्यहीनं युङ्क्ते'-इति । अयं योगो विमोकस्याप्युपलक्षणार्थः । "आहम्"-इति ( सं० ८. ३८. १०.) प्रातस्सवने परिधानीया ‡ ; तया क्रतोर्योगो भवति । "नूनं सा ते"-इति ( सं० २. ११. २१.) माध्यन्दिने सवने परिधानीया § ; तया क्रतोर्विमोको भवति ॥

अथ मैत्रावरुणस्य परिधानीयया योगविमोकौ दर्शयति— "ते स्याम देव वरुण, नू ष्टुत इति विमुञ्चति"-इति । अत्र विमोको योगस्याप्युपलक्षणार्थः । "ते स्याम"-इति ( सं० ७. ६६. ९.) प्रातस्सवने परिधानीया ‖ ; तया अहीनस्य क्रतोर्योगः ।

---

*, ‡, ‖ पु० ६. २. ४। "ऊर्ध्वं ग्रावाणाम् मति वो सूर उदिते ( सं० ७. ६६. ७. ), अन्तरिक्ष मतिरम् ( सं० ८. १४. ७. ), स्वावानस्य युज्यतः ( सं० ८. ३८. ८. ) इति यथाः पर्यासा "-इति आश्व० श्रौ० ७, २. १२ । सूक्तानां पर्यासानां वा अन्त्या एव परिधानीयाः ।

†, § आश्व० श्रौ० ७. ४. ६ । पु० ( २, ५, २४८ पृ० द्र० ।

"नू ष्टुत"-इति ( मं० ४. १६. २१. ) माध्यन्दिने सवने परिधानीया * ; तया क्रतोर्विमोकः ॥

यद्यपि तृतीयसवने विमोको वक्तुं युक्तः, तथाप्यग्निष्टोमसंस्थेऽहनि होत्रकाणां तृतीयसवने शस्त्राभावात् सर्वेष्वहस्सु अनुगत्यर्थं माध्यन्दिने सवने विमोको ऽभिहितः ॥

यथोक्तयोगविमोकज्ञानं प्रशंसति—"एष ह वा अहीनं तन्तुमर्हति य एनं योक्तुं च विमोक्तुं च वेद"-इति । 'यः' पुमानुक्तप्रकारेण 'एनम्' अहीनं प्रातस्सवनपरिधानीयया योक्तुं माध्यन्दिनपरिधानीयया विमोक्तुञ्च जानाति, एष एव पुमानहर्गणं तन्तुं विस्तारयितुमर्हति । यथोक्तपरिधानीयानभिज्ञस्य नास्ति तत्राधिकार इत्यर्थः । एव मेकैक मह्नरपेक्ष्य योगविमोकावुक्तौ ॥

अथाहस्समूह मपेक्ष्य योगविमोकौ दर्शयति— "तद्यच्चतुर्विंशेऽहन् युज्यन्ते, सा युक्तिरथ यत् पुरस्तादुदयनीयस्यातिरात्रस्य विमुच्यन्ते, सा विमुक्तिः"-इति । गवामयनस्य संवत्सरसत्रस्याद्यन्ते अह्नी अतिरात्रसंस्थे । तत्रोपक्रमगतस्य प्रायणीयातिरात्रस्यानन्तरभाविनि चतुर्विंशाख्ये आरम्भणीये ऽहनि परिधानीयाभिः सर्वे ऽहर्विशेषा युज्यन्ते । सोऽयं गवामयनस्य योगः । अथोदयनीयस्यातिरात्रस्य पुरस्ताद् वर्त्तमाने महाव्रतीयेऽहनि परिधानीयाभिः सर्वेऽप्यहर्विशेषा विमुच्यन्त इति यदस्ति, सेयं गवामयनस्य विमुक्तिः ॥

तत्र योगविमोकहेतूनां परिधानीयाना मेकैकविधत्वं निन्दित्वा उभयविषयत्वं दर्शयति— "तद्यच्चतुर्विंशे ऽह्न्येकाह्निकाभिः परिदध्युरवाहैव यज्ञं संस्थापयेयुर्नाहीनकर्म कुर्युरथ यद-

---

* आश्व० श्री० ७ ४ १०। पृ० ६ २ ५ २४९ पं० ८०।

ह्लीनपरिधानीयाभिः परिदध्युर्यथा श्रान्तो विमुच्यमान उत्कृत्येतैवं यजमाना उत्कृत्येरन्नुभयीभिः परिदध्युः"—इति । 'अहन्' अहनि चतुर्विंशाख्ये यदि 'ऐकाहिकाभिः' प्रकृतिभूते एकाहे ज्योतिष्टोमे विद्यमानाभिः परिधानीयाभिः परिदध्युः, तदानीम् 'अत्रैव' चतुर्विंशाख्ये द्वितीयस्मिन् अहन्येव यज्ञं गवामयनं 'संस्थापयेयुः' समाप्तिं कुर्युः । अत्राहिल्यहशब्दः खेदे ; कष्ट मेतत् । अत्रैव समाप्तौ 'अहीनकर्म' कृत्स्नादर्शनकर्तव्यं न कुर्युः । एतदेव कष्टम् । 'अथ' पूर्वोक्तवैपरीत्येन ऐकाहिकाः परिधानीयाः परित्यज्य यद्यहीनपरिधानीयाभिरेव सर्वे होतकाः परिदध्युः, तदानीं यथा लोके रथशकटादौ युक्तो ऽश्वबलीवर्दादिः कियद् दूरं गत्वा श्रान्तः सन् यदि न विमुच्येत, तदानीम् 'उत्कृत्येत' उच्छिद्येत; तथैव यजमाना 'उत्कृत्येरन्' विनश्येयुः । सर्वेषां होतकाणामैकाहिकस्वीकारे समाप्तभावः, अहीनगतस्वीकारे यजमानोच्छेदः, इति दोषद्वयपरिहारार्थम् 'उभयीभिः' ऐकाहिकाभिरहीनगताभिश्च परिधानीयाभिः परिदध्युः । तत्र प्रकारविशेषः पूर्व मेवोक्तः,— मैत्रावरुण ऐकाहिकाभिरेव सवनद्वये परिदध्यात् ; अच्छावाको ऽहीनगताभिरेव सवनद्वये परिदध्यात् ; ब्राह्मणाच्छंसी तु प्रातःसवने अहीनगताभिः परिदध्यात्, माध्यन्दिनसवने चैकाहिकाभिरिति निर्णयः । अस्य निर्णयस्य पूर्व मेव सिद्धत्वेऽपि ( २४९,२५० पृ० ) प्रकारान्तरेण प्रशंसार्थं मत्र पुनरभिधानम् ॥

तदेतदुभयीभिः परिधानं दृष्टान्तेन प्रशंसति— "तद्यथा दीर्घाध्व उपविमोकं यायात् तादृक्तत्"—इति । लोके यथा यः 'दीर्घाध्वे' दूरमार्गं गच्छन् पुरुषः 'उपविमोकं' रथशकटादौ

योजित मश्वबलीवर्दादिकं तत्र तत्र उपविमुच्योपविमुच्य 'यायात्' श्रान्तिपरिहारेण शनैर्गच्छेत्, तादृगेव 'तत्' उभयविधपरिधानी ; यथा मार्गे वहनश्रमः विमोकेन निवर्तते, एवं मध्येऽन्तरिताभिरायासितः श्रमः एकाहिकाभिर्निवर्तते ॥

उभयविधपरिधाने दोषं परिहृत्य गुणं दर्शयति— "सन्ततो हैषां यज्ञो भवती३ व्युच्छन्तः"—इति । 'एषाम्' उभयविधपरिधानयुक्तानां पुरुषाणां यज्ञः 'सन्ततः' विच्छेदरहितो भवति । सानुनासिका प्लुतिः प्रशंसार्था । विशब्दादुपरितन उकार एवकारार्थः, तस्य दीर्घश्छान्दसः । यजमानाः श्रमं विमुञ्चन्त एव ॥

अथ स्तोमातिशंसने कञ्चिद्विशेषं दर्शयति— "एकां द्वे न द्वयोः सवनयोः स्तोम मति शंसेद्"—इति । यदा सामगैर्विहृतः स्तोमः क्रियते, तदानीं होत्रका: स्तोमसङ्ख्या मतिलङ्घ्य शंसनीयम्, तत्र 'द्वयोः' प्रातर्माध्यन्दिनयोः सवनयोः 'एकाम्' ऋचं वा 'द्वे' ऋचौ वातिक्रम्य न शंसेत्, किन्त्वेकया द्वाभ्यां वातिशंसेत् । पूर्वत्रायं नियमः प्रातस्सवन एवोक्तः, उत्तरयोस्तु सवनयोरपरिमिताभिः अतिशंसन मुक्तम् *; तथा सति माध्यन्दिने सवने पूर्वोत्तरविरोधः प्रसज्येतेति चेत्, तर्हि तत्रैकया द्वाभ्यां अपरिमिताभिर्विकल्पोऽस्तु † ॥

बहुभिरतिशंसने बाधं माह— "दीर्घारण्यानि ह वै भवन्ति, यत्र बह्वीभिः स्तोमो ऽतिशस्यते"—इति । यथा दीर्घेष्वरण्येषु गच्छतः पुरुषस्य विश्रामस्थानाभावात् महाप्रयासः, तथा बह्वीभिरतिशंसनं दुःखहेतुरित्यर्थः ॥

---

* "एकां द्वे न स्तोम मति शंसेत्०—०अपरिमिताभिरुत्तरयोः"—इति ११.२,२५.३५० ।

† "श्रुतिद्वैधं तु यत्र स्यात् तत्र धर्मावुभावपि"—इति म० सं० २. १४ ।

माध्यन्दिनसवन इव तृतीयसवने पक्षान्तर मस्तीति शङ्कां वारयितुं पूर्वोक्त मेवापरिमितत्वं पुनरप्यभिधत्ते— "अपरिमिताभिस्तृतीयसवने ऽपरिमितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याप्त्यै" –इति। 'अपरिमिताभि' नियतपरिमाणरहिताभिः। स्वर्गस्य भोगबाहुल्यादपरिमितत्वम् ॥

वेदनपूर्वक मनुष्ठानं प्रशंसति— "सन्ततो ह्यस्याभ्यारब्धो ऽविस्रस्तो ऽहीनो भवति य एव विद्वानहीनं तनुते"–इति। 'यः' पुमानुक्तप्रकारेणातिशंसनं जानन् अहीन मनुतिष्ठति, 'अस्य' पुरुषस्य 'अभ्यारब्धः' आभिमुख्येनोपक्रान्तोऽहर्गणः 'सन्तत' नैरन्तर्येण वर्त्तमानः, कदाचिदपि 'अविस्रस्तः' विनाशरहितो भवति ॥ ७॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां चतुर्थाध्याये
(एकोनत्रिंशाध्याये) सप्तमः खण्डः ॥ ७ (२९) ॥

---

॥ अथ अष्टम खण्डः ॥

देवा वै वलं गाः पर्यपश्यंस्ता यज्ञेनैवेप्संस्ताः षष्ठेनाह्नाप्नुवंस्ते प्रातस्सवने नभाकेन वल मनभयं-स्तं * यदनभया३नू अश्रथयन्नेवैनं तत् त उ तृतीयसवने वज्रेण वालखिल्याभिर्वाचःकूटेनैकपदया वलं विरुज्य गा उदाजंस्तथैवैतद्यजमानाः प्रात-

---

* "मनभर्यस्त" क, ख, ङ।

स्सवने नभाकेन वलं नभयन्ति तं यन्नभयन्तो*३ ॥ ७ ॥ थ्यथयन्त्येवैनं तत् तस्माद्वोचका: प्रातस्सवने नाभाकांस्तृचाञ्छंसन्ति य: ककुभो निधारय इति मैवावरुण: पूर्वीष्ट इन्द्रोप मातय इति ब्राह्मणाच्छंसी ता हि मध्यस्मराणा मित्यच्छावाकस्त उ तृतीयसवने वज्रेण वालखिल्याभिर्वाच:कूटेनैकपदया वलं विरुज्य गा आप्नुवन्ति पच्छ: प्रथमं षड् वालखिल्यानां सूक्तानि विहरत्यर्धर्चशो द्वितीय मृक्-शस्तृतीयं स पच्छो विहरन् प्रगाथे प्रगाथ एवैकपदां दध्यात्स वाच:कूटस्ता एता: पञ्चैकपदाश्चतस्रो दशमादर्क एका महाव्रताद्‌धाष्टाचरांणि माहानामनानि पदानि तेषां यावद्भि: सम्पद्येत तावन्ति शंसेन्नेतराण्याद्रियेताधार्धर्चशो विहरंस्तांश्चैवैकपदा: शंसेत्तानि चैवाष्टाचरांणि माहानामनानि पदान्यथ ऋक्शो विहरंस्तांश्चैवैकपदा: शंसेत्तानि चैवाष्टाचरांणि माहानामनानि पदानि स यत् प्रथमं षड् वालखिल्यानां सूक्तानि विहरति प्राणञ्च तद्वाचं च विहरति यद् द्वितीयं चक्षुश्च तन्मनश्च विहरति यत् तृतीयं श्रोत्रं च तदात्मानं च विहरति तदुपाप्तो विहारे कामं उपाप्तो वज्रे वालखिल्यासूपाप्तो

* "यन्नभयन्तीर" क, च।

वाचःकूट एकपदाया सुपाम्नः प्राणक्लृप्ता सविहृतानेव चतुर्थं प्रागाथाञ्छंसति पशवो वै प्रगाथाः पशूनामवरुद्ध्यै नाद्रियेतैकपदां व्यवदध्यादित्यैकपदां व्यवदध्याद्वाचःकूटेन यजमानात्पशून्निर्हण्याद्य एनं तत्र ब्रूयाद्वाचःकूटेन यजमानात्पशून्निरवधीरपशुमेनमकरिति शश्वत् तथा स्यात्तस्मान्नैकपदां व्यवदध्याद्द्वाववोत्तमे सूक्ते पर्यस्यति स एव तयोर्विहारस्तदेतत् सौवलाय सर्पिर्वात्सिः शशंस स होवाच भूयिष्ठानहं यजमाने पशून् पर्यग्रहैष सकनिष्ठा उ मा मागमिष्यन्तीति तस्मै ह यथा महद्भ्य ऋत्विग्भ्य एवं निनाय तदेतत्पशव्यञ्च स्वर्ग्यञ्च शस्त्रं तस्मादेतच्छंसति ॥ ८ (२४) ॥

अथ पृष्ठास्य, षडहस्य षष्ठेऽहनि शिल्पाख्यशस्त्रस्तुतिसिद्धां विधातुमाख्यायिकामाह—“देवा वै बले गाः पर्यपश्यंस्ता यज्ञेनैवैप्संस्ताः षष्ठेनाह्नाप्नुवंस्ते प्रातःसवने नभाकेन वलमनभयंस्तं यदनभयाश्नन् अश्रथयन्नेवैनं तत्, त उ तृतीयसवने यज्ञेन वालखिल्याभिर्वाचःकूटेनैकपदया वलं विरुज्य गा उदाजन्”—इति। वलनामकः कश्चिदसुरप्रभुः, तदीयभृत्याः बृहस्पतिप्रमुखानां देवानां गा अपहृत्य वलस्य गृहे स्थापितवन्तः। देवाश्च केनचिद्दूतमुखेन ‘बले’ वलस्य गृहे अवस्थापिता गाः ‘पर्यपश्यन्’ ज्ञातवन्तः। ज्ञात्वा च सामभेदादीन् लौकिकोपायान् परित्यज्य

'यज्ञेनैव' उपायेन 'ऐप्सन्' व्याप्तुं मिच्छां कृतवन्तः। कृत्वा च पृष्ठ्यषडहस्य यत् षष्ठ मह:, तदहरनुष्ठाय तत्सामर्थ्येन 'ताः' गाः प्रापुवन्। 'ते' देवाः प्रातस्सवने नभाकनाम्ना महर्षिणा, तद्-दृष्टेन मन्त्रेण वा, वलनामक मसुरम् 'अनभयन्' [ नभतिधातुर्हिं-सार्थः ] ताड़ितवन्त इत्यर्थः। 'तं' प्रतिबन्धकारणं वलनामान मसुरं यद्यपि 'अनभयन्' ताडितवन्तः [ श्रुतिस्ताडनप्रशंसार्था ] तदानी मेव गोपश्वं 'अश्रथयन्नेव' रचपार्यप्राकारद्वारोद्घाटनेन निरोधं शिथिलीकृतवन्तः; यद्वा वलनामान मसुर मेव वलस्य माषाद्य शिथिलीकृतवन्तः। 'ते उ' पुनरपि ते देवाः तृतीय-सवने वज्ररूपेणावस्थिताभिः 'वालखिल्याभिः' ऋग्भिः 'वाचःकूटे-नैकपदया' वलं 'विरुज्य' विशेषेण भग्न कृत्वा स्वकीया गाः 'उदाजन्' तदीयाद् दुर्गादुद्गमितवन्त। वाचःकूटशब्देन विहृतो मन्त्रविशेष उच्यत इत्युपरिष्टाद् दर्शयिष्यति; स एव वाचःकूट एकपदा भवति॥

अथ नभाकेन दृष्टान् तृचान् विधत्ते — "तथैवैतद्यजमानाः प्रातस्सवने नभाकेन वलं नभयन्ति; तं यन्नभयन्ति३ श्रथयन्त्येवैनं तत्; तस्माद्धोत्रकाः प्रातस्सवने नाभाकांस्तृचाञ्छंसन्ति"—इति। यथा देवा नभाकेन वलं हिंसितवन्तः, तथैवैतस्मिन् षष्ठेऽहनि यजमानाः प्रातस्सवने नभाकनाम्ना महर्षिणा दृष्टेन मन्त्रेण 'वलं' वलनामकासुरवत् प्रतिबन्धकं पाप्मानं 'नभयन्ति' हिंसन्ति। 'तं' वलं 'यद्' यदा नभयन्ति [ श्रुतिः पूर्ववत् ], 'तत्' तदैनं 'श्रथ-यन्ति' शिथिलं कुर्वन्ति। 'तस्मात्' कारणात् मैत्रावरुणाद्यो 'होत्रकाः' प्रातस्सवने 'नाभाकान्' नभाकेन दृष्टान् तृचान् शंसेयुः॥

तांस्तृचानुदाहरति — "यः ककुभो निधारय इति मैत्रा-

वरुणः, पूर्वीष्ट इन्द्रोप मातय इति ब्राह्मणाच्छंसी, ता हि मध्यभराणा मित्यच्छावाकः"–इति। "यः ककुभः"–इत्येकस्तृचः (सं० ८.४१.४–६.), "पूर्वीष्टे"–इति (सं० ८.४०.८–११.) द्वितीयः; "ता हि"–इति (सं० ८.४०.३–५.) तृतीयः; मैत्रावरुणादयः क्रमेण शंसेयुः * ॥

तांस्तृचान् विधाय शिल्पस्वरूपं विधत्ते — "त उ तृतीयसवने वज्रेण वालखिल्याभिर्वाचःकूटेनैकपदया वलं विरुज्य गा आप्नुवन्ति"–इति। 'त उ' ते तु मैत्रावरुणादयः 'वलं' प्रतिबन्धकं पाप्मानं वैरिणं वज्ररूपेण वालखिल्येन विनाश्य गोप्राप्ति विघ्नरहिताः सन्तो गाः प्राप्नुवन्ति। 'वालखिल्याभिर्वाचःकूटेनैकपदया'–इति, एतावता शिल्पस्वरूप मभिहितम् † ॥

तदेतद्विशदयति— "पच्छः प्रथमं षड् वालखिल्यानां सूक्तानि विहरत्यर्धर्चशो द्वितीय मृक्शस्तृतीयं, स पच्छो विहरन् प्रगाथे प्रगाथ एवैकपदां दध्यात् स वाचःकूटः"–इति। वालखिल्यनामकाः केचन महर्षयः, तेषां सम्बन्धीन्यष्टसूक्तानि विद्यन्ते; तानि वालखिल्यनामके ग्रन्थे समाम्नायन्ते ‡। तेष्वादौ यानि षट् सूक्तानि,

* "महावालभिद् ऐन्द्र सैन्द्रं मनुष्वेति वारुणीयाभ्यां वा नाभाकानृचानाद्वैरन् गायत्रीकारम्"–इत्यादि आश्व० श्रौ० ७.२.१६,१०। † पृ० २९८ पृ० '*' द्रष्टव्यम्।

‡ अध्यापक मोक्षमूलर मुद्रितपुस्तके अष्टमस्याष्टमोऽध्याय षष्ठानुवाकान्तरस्थात् वालखिल्यनामकान्येकादश सूक्तानि मुद्रितानि दृश्यन्ते। वस्तुतस्तु संहितायां मण्डलक्रमविभागे, न तत्र वालखिल्यानां सूक्तानां संनिवेशः; तान्येव संहिता मवलम्ब्य सायणाचार्येण भाष्यमकारि। अतएवोक्तं "वालखिल्यनामके ग्रन्थे"–इति। अष्टकविभक्तसंहितायां तु षष्ठाष्टकस्य चतुर्थाध्याये चतुर्दशाद्याः सप्तदश वर्गा वालखिल्यीया एवेति न तत्र वालखिल्यानां पृथक् ग्रन्थ इति। अथ मनुक्तमारण्यकभाष्ये 'संहितायां मानानि'–इति (५.२.५.२), तदपि वालखिल्यांशनामि पृथक् ग्रन्थ इत्यभिप्रायेण ।

तानि प्रथमं 'पच्छः' पादशो विहरेत् । ततो द्वितीयस्या माहत्ता यर्द्धर्चशो विहरेत् । तृतीयस्या माहत्तो ऋक्शो विहरेत् । यदा पच्छो विहरति, तदानीं मेकैकस्मिन् प्रगाथे एकैका मेकपदां दध्यात् । स प्रगाथैकपद्योः समूहो 'वाचःकूटः'-इत्यनेन शब्देनाभिधीयते । त मिमं विहारप्रकार माश्वलायन आह—"षट् सूक्तानि व्यतिमर्शं पच्छो विहरेद्, व्यतिमर्शं मर्द्धर्चशो, व्यतिमर्श मृक्शः, प्रगाथान्तेषु चानुपसन्तान् प्रगाथान् मेकपदाः शंसेत्"-इति ( श्रौ० ८. २. १९, २० ) । तेषु षट्सूक्तेषु प्रथमसूक्तादावृग्द्वय मेव माम्नातम्—

"अभि प्र वः सुराधस मिन्द्र मर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥ ( १ )
शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।
गिरे रिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः † (२)"-इति ।

द्वितीयसूक्तेऽपि ऋग्द्वय मेव माम्नातम्—

"प्र सु श्रुतं सुराधस मर्चा शक्र मभिष्टये ।
यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहते * ( १ )
शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।
गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता अमन्दिषुः § (२)"-इति ।

तत्र प्रथमसूक्तगत मेकं पादं च संयोजयेत् । सोऽयं विहारः । अस्मिन् विहारे 'व्यतिमर्शः' नाम कश्चिद्विशेषः । स च यथाक्रमं परित्यज्य प्रकारान्तरेण योजने सति सम्पद्यते । प्रथमसूक्तस्य प्रथमाया ऋचि प्रथमपाद मुक्त्वा द्वितीयसूक्तस्य द्वितीयाया ऋचि ( यद् ) द्वितीयपादं तेन संयोजयेत् । तद्यथा—

*, †, ‡, § एषु स्थानेषु 'ओम्'-इति अन्यपद आधपुस्तकेषु ।

"अभि प्र वः सुराधस मिन्द्रस्य सखियो मह्वीः"—इति।

द्वितीयसूक्तस्य द्वितीयस्या मृचि प्रथमपाद मुक्त्वा प्रथमसूक्तस्य प्रथमाया मृचि (यत्) द्वितीयपादं तेन संयोजयेत्। तद्यथा—

"शतानीका हेतयो अस्य दुष्टरा इन्द्र मर्चं यथा विदेम्"—इति।

अथ प्रथमसूक्तस्य प्रथमाया मृचि तृतीयपाद मुक्त्वा द्वितीयसूक्तस्य द्वितीयस्या मृचि (यत) चतुर्थपाद तेन संयोजयेत्। तद्यथा—

"यो जरितृभ्यो मघवा पुरुवसुर्यदीं सुता अमन्दिषुः"—इति।

द्वितीयसूक्तस्य द्वितीयस्या मृचि तृतीयपाद मुक्त्वा प्रथमसूक्तस्य प्रथमाया मृचि (यत्) चतुर्थपादं तेन संयोजयेत्। तद्यथा—

"गिरिर्न भुज्मा मघवत्सु पिन्वते सहस्रेणेव शिक्षतीम्"—इति।

तदिदं पादयोर्विहृत मृग्द्वय मेकः प्रगाथः सम्पद्यते। तस्य प्रगाथस्यान्ते "इन्द्रो विश्वस्य गोपतिः"—इत्येता मेकपदां सन्दध्यात्। सोऽयं समूहो वाच कूटसञ्ज्ञकः। अनेनैव न्यायेन सर्वेषु सूक्तेषु सर्वास्वृक्षु द्विष्मता पादयो र्व्यतिमर्षविहरण मूह्नेयम्।

अथार्धर्चशो विहार उच्यते। प्रथमसूक्तस्य प्रथमाया मृचि प्रथमार्धर्चं मुक्त्वा द्वितीयसूक्तस्य द्वितीयस्या मृचि (यत्) उत्तरार्धं तेन संयोजयेत्। तद्यथा—

"अभि प्र वः सुराधस मिन्द्र मर्च यथा विदे।
गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता अमन्दिषोम्"—इति।

एवं सर्व मूह्नेयम्।

ऋक्शो विहरेत्। तत्र प्रथमसूक्तस्य प्रथमा मृच मुक्त्वा तया सह द्वितीयसूक्तस्य द्वितीया मृचं योजयेत्। एवं सर्वत्रोहनीयम् *॥

* एष विहारो महाव्रतभिप्रायक, अन्यविधावपि विहारौ आश्वलायनेनैवाभिहितौ "पद वाऽर्धर्चशो विहरेत् •—• इति नु षौर्यिणो"—इति (८ २ ३—१०)।

अथ प्रगाथान्तेषु प्रक्षेपणीया एकपदा दर्शयति— "ता एताः पञ्चैकपदाश्चतस्रो दशमादह्न एका महाव्रताद्"–इति। या एकपदा ऋचः प्रक्षेप्तव्याः, ता एता एकपदाः पञ्चसङ्ख्याकाः। तासु चतस्र एकपदाः शुत्यन्तरेषु दशमेऽहनि पठिताः *। त आद्यमादह्न आश्चतस्र आनेतव्याः। तासु "इन्द्रो विश्वस्य गोपतिः"–इत्येषा प्रथमा, "इन्द्रो विश्वस्य भूपतिः"–इत्येषा द्वितीया, "इन्द्रो विश्वस्य चेतति"–इत्येषा तृतीया, "इन्द्रो विश्वस्य राजति"–इत्येषा चतुर्थी; अयावशिष्टा शुत्यन्तरेषु महाव्रते श्रुता †, सा च "इन्द्रो विश्वं विराजति"–इत्येताहशी; तस्मात् महाव्रतादानेतव्या। ता एताः पञ्च एकपदाः पञ्चसु प्रगाथेषु प्रक्षिपेत् ॥

अवशिष्टेषु प्रगाथेषु प्रक्षेपणीयान् पादान् दर्शयति — "अथाष्टाक्षराणि माहानाम्नानि पदानि; तेषां यावद्भिः सम्पद्येत, तावन्ति शंसेदितराण्याद्रियेत"–इति। अथ पञ्चसु प्रगाथेषु पञ्चानामेकपदानां प्रक्षेपादनन्तरं 'माहानाम्नानि' महानाम्नीशब्देन "विदा मघवन्"–इत्यादयो महानाम्नीसञ्ज्ञकाः (ऐ० आ० ४.) विधीयन्ते, तेषां महानाम्ना मृचां सम्बन्धीन्यष्टाक्षराणि पदानि "प्र चेतन प्र चेतया"–इत्येवमादीनि यानि सन्ति, तेषां मध्ये यावद्भिः अष्टाक्षरैः पादैरवशिष्टेषु प्रगाथेषु प्रक्षेपः सम्पद्येत, तावन्त्यष्टाक्षराणि पदानि शंसेत् ‡; इतराण्यष्टाक्षराणि पदानि महानाम्नीसम्बन्धीनि 'नाद्रियेत' न प्रक्षिपेत् ॥

---

* एतायतश्च माध्यन्दिनीया इति कल्पे प्रपञ्च विहिताः (आश्व० श्रौ० ८, २. २१.)।

† ऐ० आ० ५. २. १. २। "इत्येता मेकपदां अप्यवाक्रमन्तां पठेत्"–इति तत्र सा० भा०। "एकां महाव्रतादाहरेत्"–इति आश्व० श्रौ० ८. २. २२।

‡ "त्रयोविंशति मष्टाक्षरान् पादान् महानाम्नीभ्यः उपरीत्राप्य:"–इति आश्व० श्रौ० ८ २,२३।

एवं पच्छः शंसने प्रक्षेपणीय मभिधायार्धर्चशो विहरणे प्रक्षेपणीयं दर्शयति — "अथार्धर्चशो विहरंस्तार्क्ष्यैवैकपदाः शंसेत्; तानि चैवाष्टाक्षराणि माहानाम्नानि पदानि'–इति। यथा पच्छो विहरणे प्रगायान्ते प्रक्षेपः, एव मर्धर्चशो विहरणेऽपि योजनीयम् ॥

तद्वदृक्शो विहरणेऽपि प्रक्षेपं विधत्ते—"अथ ऋक्शो विहरंस्तार्क्ष्यैवैकपदाः शंसेत्; तानि चैवाष्टाक्षराणि माहानाम्नानि पदानि"–इति। पूर्ववत्प्रगायान्ते प्रक्षेपः ॥

यदुक्तं पच्छोऽर्धर्चश ऋक्श इति पर्यायत्रयेण त्रिविधं विहरणम्, तदेतत् प्रशंसति—"स यत्प्रथमं षड् वालखिल्यानां सूक्तानि विहरति, प्राणञ्च तद्वाचं च विहरति; यद् द्वितीयं, चक्षुश्च तन्मनश्च विहरति; यत् तृतीयं, श्रोत्रं च तदात्मानं च विहरति; तदुपाप्तो विहारे काम उपाप्तो वक्ते वालखिल्यासूपाप्तो वाचःकूट एकपदाया मुपाप्तः प्राणकृप्ताम्"–इति। 'सः' ऋत्विग्घोता 'प्रथमं' प्रथमे पर्याये वालखिल्यानां षट् सूक्तानि विहरतीति यदस्ति, तेन प्रथमेन पच्छो विहरणेन प्राणं वाचं 'विहरति' मिश्रीकरोति। द्वितीयपर्याये चार्धर्चशो विहरणेन चक्षुर्मनसोर्मिश्रीकरणम्। तृतीयपर्याये ऋक्शो विहरणेन श्रोत्रेन्द्रियशरीरात्मनोर्मिश्रीकरणम्। 'तत्' तथा सति विहरणे यः 'कामः' फलविशेषः, स 'उपाप्तः' प्राप्तो भवति। तथा यच्चदपासु वालखिल्यासु यः कामः, सोऽपि प्राप्तः। तथा वाचःकूटरूपाया मेकपदायां यः कामः, सोऽपि प्राप्तः। तथा प्राणवागादीनां क्लृप्तौ विहरणे यः कामः, सोऽपि प्राप्तो भवति ॥

चतुर्थपर्याये विहार मन्तरेण यथापाठं शंसनं विधत्ते—

"अविहृतानेव चतुर्थे प्रगाथाञ्छंसति; पशवो वै प्रगाथाः, पशूनामवरुद्ध्यै"–इति । प्रगाथानां पशुप्राप्तिहेतुत्वात् पशुत्वम् ॥

विहरणशंसनवदत्राप्येकपदाप्रक्षेपप्रसक्तौ निषेधति—"नात्रैकपदां व्यवदध्याद्"–इति । एकपदायाः प्रक्षेपे प्रगाथद्वयस्य मध्ये व्यवधानं स्यात्, तन्न कुर्यात् ॥

तत्करणे बाधं दर्शयति – "यदत्रैकपदां व्यवदध्याद्, वाचःकूटेन यजमानात् पशून्निर्हण्याद्; य एनं तत्र ब्रूयाद्, वाचःकूटेन यजमानात्पशून्निरवधीरपशुमेनं मकरिति शश्वत् तथा स्यात्"–इति । यदि 'अत्र' चतुर्थपर्याये एकपदाव्यवधानं कुर्यात्, तदानीं वाचःकूटरूपेण एकपदासहितप्रगाथेन वज्रेण पूर्वं विद्यमानान् पशून् यजमानादस्मात् 'निर्हण्यात्' निःशेषेण विनाशयेत् । एवं सति यः कोऽपि विरोधी सभामागत्य 'एनं' शंसितारं तत्र शंसनकाले 'ब्रूयात्' शपेत् । कीदृशः शाप इति सोऽभिधीयते— हे शंसितः ! त्वं वाचःकूटेन वज्रेण यजमानात् पशून् 'निरवधीः' निःसार्य हतवानसि । 'एनं' यजमानम् 'अपशुं' पशुरहितम् 'अकः' कृतवानसीति । तदानीं 'शश्वत्' अवश्यं 'तथा स्यात्' पशुरहित एव स्यात् ॥

विपक्षे बाधमुक्त्वा स्वपक्षमुपसंहरति—"तस्मात् तत्रैकपदां न व्यवदध्यात्"–इति ॥

वालखिल्यानां षट्सूक्तेषु विहारमुक्त्वा अवशिष्टयोः सप्तमाष्टमयोः सूक्तयोः* विपर्यासेन शंसनं विधत्ते—"द्वावुत्तमे सूक्ते पर्य-

---

* मुद्रितं शाकलसंहितापुस्तके तु वालखिल्यानामेकादश सूक्तानि दृश्यन्ते । विरोधस्त्वेष शाखाभेदकृत इत्यवनेयम् । अपि वा षडेव वालखिल्यानि, तदितराणि चोभे तु खिलसूक्तान्येवेति स्यात् समाधेयम् ।

स्यति, स एव तयोर्विहारः"–इति। ये द्वे उत्तमे सूक्ते, ते विपर्यस्येदेव; न तु विहरेत्। अष्टमं सूक्तं आदौ पठित्वा पश्चात् सप्तमस्य पाठो विपर्यासः। 'तयोः' द्वयोः सूक्तयोः (सं० ८. ६. ५५ ५६.) 'स.' एव विपर्यस्तपाठ एव विहारस्थानीयः॥

शिल्पनामकं शस्त्रं निरूप्य प्रशंसति—"तदेतत्सौबलाय सर्पिर्वात्सिः प्रशंस; स होवाच— भूयिष्ठानहं यजमाने पशून् पर्यैषचेष सकनिष्ठा उ मा नागमिष्यन्तीति; तस्मै ह यथा महद्भ्य ऋत्विग्भ्य एवं निनाय; तदेतत्पशव्यञ्च स्वर्ग्यञ्च शस्त्रं; तस्मादेतच्छंसति"–इति। 'सौबल'नामकः कश्चिद्यजमान', तस्मै वत्सस्य पुत्रः 'सर्पिः' –इत्येतन्नामक ऋत्विक्, 'तदेतत्' शिल्पशस्त्रं प्रशंस च। शंसनादूर्ध्वमेव मुवाच,— अहं अस्मिन् सौबलनामके 'यजमाने' 'भूयिष्ठान्' अतिशयेन प्रभूतान् पशून् 'पर्यैषचेषम्' परितः सम्पादितवानस्मि। तस्माद् 'सकनिष्ठा उ' श्रेष्ठा एव पशवो मा नागमिष्यन्ति। ततः सौबलो यजमानः यथा 'महद्भ्य ऋत्विग्भ्यः' होत्रध्वर्यूद्गातृब्रह्मभ्यो दक्षिणां दत्तवान्, अथापि शिल्पशंसिने होत्रकायापि वह्नी उत्तमाः गाः दक्षिणात्वेन निनाय। तस्मादेतत् शिल्पशस्त्रं इह लोके पशुसाधनं परलोके स्वर्गसाधनञ्च। तस्मात् 'एतत्' शिल्पं शंसेत्॥ ८॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां चतुर्थाध्याये
(एकोनत्रिंशाध्याये) अष्टमः खण्ड.॥८(२४)॥

---

॥ अथ नवमः खण्डः ॥

दूरोहणं रोहति तस्योक्तं ब्राह्मणं मैन्द्रे पशुकामस्य रोहे दैन्द्रा वै पशवस्तज्जागतं स्याज्जागता वै पशवस्तन्महासूक्तं स्याद्भूयिष्ठेष्वेव तत् पशुषु यजमानं प्रतिष्ठापयति वरौ रोहेत्तन्महासूक्तं च जागतं चैन्द्रावरुणे प्रतिष्ठाकामस्य रोहेदेतद्देवता वा एषा होत्रैतत्प्रतिष्ठा यदैन्द्रावरुणं तदेनत्स्वायामेव प्रतिष्ठायामन्ततः प्रतिष्ठापयति यद्वैन्द्रावरुणाद्द्व एषा ह वा अत्र निविन्निविदा वै कामा आप्यन्ते स यद्यैन्द्रावरुणे रोहेत् सौपर्णे रोहेत्तदुपाप्य ऐन्द्रावरुणे काम उपाप्तः सौपर्णे ॥ ९ (२५) ॥

शिल्पशंसन मभिधाय शंसनान्तर मभिधत्ते— "दूरोहणं रोहति, तस्योक्तं ब्राह्मणम्"–इति। दुःखकं रोहण सुखारणं यस्य शंसनस्य, तत् 'दूरोहणम्', तत् 'रोहति' शंसेदित्यर्थः। 'तस्य' दूरोहणस्य विषयकं ब्राह्मणं पूर्व मेव विषुवदहःप्रसङ्गे "आहूय दूरोहणम्"–इत्यत्राभिहितम् *। अत एव पूर्वाचार्या आहुः—

"स्वर्गो वै लोक इत्यादि पूर्वं विषुवति कृतौ।
दूरोहणब्राह्मणन्तु मागवोचाम वै स्फुटम्।
समरूपा हंसवती दूरोहण मितीरितम्"–इति।

हंसवती पच्छः, अर्धर्चशः, त्रिपदा, ऋक्शो ऽनवानम्,

* २ भा० ३१९ पृ० ४. १ ७ द्रष्टव्यम्।

पुनरपि त्रिपदया, अर्द्धर्चशः, पच्छ इति सप्तभिः प्रकारैः पठन मिति दूरोहणम् *। तदेतत् 'पूर्वं' तार्क्ष्यसूक्ते ऽभिहितम् †, इदानीं फलविशेषाय ऐन्द्रे सूक्ते तद् विधत्ते— "ऐन्द्रे पशुकामस्य रोहेदैन्द्रा वै पशव"–इति। इन्द्रदेवताके कस्मिंश्चित् सूक्ते पशुप्राप्त्यर्थं दूरोहणं 'रोहेत्' शंसेत्। इन्द्रस्य वृष्टिद्वारा पशुपोषकत्वात् पशव ऐन्द्राः ॥

तस्मिन् सूक्ते छन्दोविशेषं विधत्ते— "तज्जागतं स्याज्जागता वै पशवः"–इति। सोमाहरणप्रसङ्गे जगत्या पशूना मानीतत्वात् ‡ 'तत्' सूक्तं 'जागतम्' ॥

तस्य सूक्तस्य कञ्चिद्विशेषं विधत्ते –"तन्महासूक्तं स्याद् भूयिष्ठेष्वेव तत् पशुषु यजमानं प्रतिष्ठापयति"–इति। द्विविधं सूक्तं क्षुद्रं महच्च। अत एवारण्यकाण्डे वक्ष्यति— "ये क्षुद्रसूक्तायाभवन् महासूक्ताय"–इति ( २. २. २. ५. )। महासूक्तलक्षणं पूर्वाचार्यैरुक्तम्—"दशर्चताया अधिकं महासूक्तं विदुर्बुधाः"–इति। तेन महासूक्तेन 'भूयिष्ठेषु' अत्यन्तप्रभूतेष्वेव पशुषु यजमानं प्रतिष्ठापयति ॥

विवक्षितं सूक्तविशेषं दर्शयति— "वरो रोहेत्तन्महासूक्तं च जागतञ्च"–इति। वरुर्नाम कश्चित् महर्षिः, तेन दृष्टं सूक्त मपि वरुशब्देनोच्यते। तस्मिन् सूक्ते 'रोहेत्' दूरोहणं शंसेत्। "प्र ते महे"–इत्यादिकं ( सं० १०. ८६. ) वरुनामकं सूक्तम्। तच्च त्रयोदशर्चत्वान्महासूक्तं, जगतीच्छन्दस्कञ्च ॥

* "हंसः शुचिषदिति पच्छोऽर्धर्चशस्त्रिपदया चतुर्थं समवान सुक्तां ... पुन स्त्रिपदयार्धर्चशः पच्छ एव सप्तम मेतद् दूरोहणम्"–इति आश्व० श्रौ० ८. २. १४, १५।

† २ भा० १८८पृ० ४. ३. ६. द्रष्टव्यम्।

‡ २भा० १११—११०पृ० सौमाहरणकथा, तत्र ११३पृ० द्रष्टव्यम्।

फलान्तराय सूक्तान्तरं विधत्ते— "ऐन्द्रावरुणे प्रतिष्ठाकामस्य रोहेदेतद्देवता वा एषा होत्रैतत्प्रतिष्ठा यदैन्द्रावरुणा ; तदेनत्स्वाया मन्ततः प्रतिष्ठापयति"–इति। यथा पशुकामस्य समरूपहंसवत्यात्मकं दूरोहणम् ऐन्द्रसूक्ते रोहेत्, तथैव प्रतिष्ठाकामस्यैन्द्रावरुणके सूक्ते शंसेत्। शंसितुर्मैत्रावरुणस्य होतकस्य क्रिया 'होत्रा'; एषा चैतद्देवताका 'एतत्प्रतिष्ठा' इन्द्रावरुणदेवताकसमाप्तियुक्ता। यस्मादैन्द्रावरुणा, याज्येति शेषः। "इन्द्रावरुणा मधुमत्तमस्य"–इति ( सं ६. ६८. ११.) याज्याया इन्द्रावरुणदेवताकत्वात् समाप्तेरिन्द्रावरुणसम्बन्धः। तथा सति 'एनद्' दूरोहणं 'स्वाया मेव प्रतिष्ठाया' स्वस्योचिताया मेव समाप्तौ 'अन्ततः' शस्त्रान्ते प्रतिष्ठापयति॥

पुनरपि सूक्तं प्रशंसति— "यदेवैन्द्रावरुणाऽऽइ एवा ह वा अत्र निविन्निविदा वै कामा आप्यन्ते, स यदैन्द्रावरुणे रोहेत्, सौपर्णे रोहेत्तदुपाप्त ऐन्द्रावरुणे काम उपाप्तः सौपर्णे"–इति। 'यद्' यस्मात् कारणादैन्द्रावरुणे सूक्ते दूरोहणं रोहति, तस्मात् स्वाया मेव प्रतिष्ठापयतीति पूर्वेणान्वयः। यद्वा ऐन्द्रावरुणे सूक्ते दूरोहण मिति यदस्ति, एषैव दूरोहणक्रिया अत्र 'निवित्' [ इवशब्दोऽत्र लुप्तो द्रष्टव्यः] निवित्सदृशीत्यर्थः। तथाच दूरोहणरूपया 'निविदा' सर्वे कामाः आप्यन्ते। 'सौपर्णे' सूक्ते दूरोहणं रोहेदिति पक्षान्तरम्। खिलेषु * समाम्नातम् "इमानि वां भागधेयानि"–इति

* "यदा वर्धतेऽथोपरमितं भवति, खिल इति वै तदाचक्षते"–इति शत० ब्रा० ८. ३. ४. १। "पूर्वेणानुक्तं वक्तव्यत्वेन परिशिष्टं खिलमिति हि खिललक्षणम्"–इति शत० ब्रा० १४. ८. १. १. सु० भा०।

† मुद्रितशाकलसंहितायामेतत् पूर्वं वालखिल्येष्वन्त्यमेकादशम्।

( सं॰ ८. ५८. १ ) सूक्तं सौपर्णम् ; “इमानि वेति समर्चं सौपर्णं खैलिकं * विदुः”–इति । यद्वा “प्र धारा यन्त्विति ( आश्व॰ गृ॰ ३. १२. १४. ) गृह्योक्तं सूक्तं सौपर्णम् । ऐन्द्रावरुणे सौपर्णे वा दूरोहणशंसनेन तत्रोभयत्र यः कामः सम्भावितः, सः ‘उपाप्तः’ प्राप्तो भवति ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां चतुर्थाध्याये
( एकोनत्रिंशाध्याये ) नवमः खण्डः ॥ ९ ( २५ ) ॥

---

॥ अथ दशमः खण्डः ॥

तदाहुः संशंसेत् षष्ठे ऽहा३म् न संशंसे३त् इति संशंसेदित्याहुः कथ मन्येष्वहस्सु संशंसति कथ मत्र न संशंसेदित्यथो खल्वाहुर्नैव संशंसेत् स्वर्गो वै लोकः षष्ठ महरसमायी वै स्वर्गो लोकः कश्चिद्वै स्वर्गे लोके समेतीति स यत्संशंसेत्समानं तत्कुर्यादथ यन्न संशंसतौ३ † तत्स्वर्गस्य लोकस्य रूपं तस्मान्न संशंसेद् यदेव न संशंसतौ३ ‡ आत्मा वै स्तोत्रियः प्राणा वालखिल्याः स यत्संशंसेदेताभ्यां देवताभ्यां यजमानस्य प्राणान् वीयाद्य एनं तत्र ब्रूयादेताभ्यां देवताभ्यां यजमानस्य प्राणान् व्यगादाप्राण एनं हास्यतीति

* वालखिल्यसञ्ज्ञान्यपि शिल्पविशेषरूपेण । शत॰ ब्रा॰ ८. ३. ४. १. द॰ ।
†, ‡ “॰तौ” क, म, घ, ध ।

शस्त्रवत्तथा स्यात्तस्मान्न संशंसेत् स यदीचेतार्शंसिषं वालखिल्या हन्त पुरस्तात् दूरोहणस्य संशंसानीति नो एव तस्याशा मियात्तं यदि दर्प एव विन्देदुपरिष्टाद्दूरोहणस्यापि वहूनि शतानि शंसेद्यो तत् कामाय तथा कुर्यादेवैव तदुपाप्य मैन्द्रो वालखिल्यास्तासां द्वादशाक्षराणि पदानि तत्र स काम उपाप्तो य ऐन्द्रे जागते ऽथेद मैन्द्रावरुणं सूक्तं मैन्द्रावरुणी परिधानीया तस्मान्न संशंसेत्तदाहुर्यथा वाव स्तोत्र मेवं शस्त्रं विहृता वालखिल्याः शस्यन्ते विहृतां स्तोत्राँ३ अविहृताँ३ इति विहृत मिति ब्रूयादष्टाक्षरेण द्वादशाक्षर मिति तदाहुर्यथा वाव शस्त्र मेवं याज्या तिस्रो देवताः शस्यन्ते ऽग्निरिन्द्रो वरुण इत्यथैन्द्रावरुण्या यजति कथ मग्निरनन्तरित इति यो वा अग्निः स वरुणस्तदप्येतदृषिणोक्तं त्व मग्ने वरुणो जायसे यदिति तद्यदेवैन्द्रावरुण्या यजति तेनाग्निरनन्तरितो ऽनन्तरितः ॥ १० (२६) ॥

॥ इत्यैतरेयब्राह्मणे षष्ठपञ्चिकायां चतुर्थोऽध्यायः ॥ ४ ॥

अत्र किञ्चिद् विचार मुद्भावयति— "तदाहुः संशंसेत् षट्ठे ऽहा३न् न संशंसे३त् ? इति"—इति। 'तत्' तत्र सौपर्णे सूक्ते दूरोहणे शस्ते सति पश्चाद् ब्रह्मवादिनो विचार माहुः। यान्यैकाहिकानि

तद्दूर्ध्वं शंसनीयानि सन्ति, तान्यत्र षष्ठेऽहनि अन्यत्वैः सम्भूय किं शंसेत्, किं वा सम्भूय न शंसेदिति विचारः । श्रुतिर्विचारार्था ॥

तत्र प्रथमं पक्षं दर्शयति—"संशंसेदित्याहुः"-इति । सम्भूय शंसेदित्येवं केचिद्याज्ञिका इत्याहुः । तत्रोपपत्तिं पृच्छति—"कथम् ?"-इति । उत्तर माह—"अन्येष्वहस्सु संशंसति, कथ मत्र न संशंसेदिति"-इति । इतरेषु पञ्चस्वहस्सु मैत्रावरुणः सम्भूय शंसति । तथा सत्यहस्सामान्यादत्रापि कथं न संशंसेत् ? तत्परित्यागो न युक्तः, किन्तु तदनुष्ठान मेव युक्त मित्येकः पक्षः ॥

पक्षान्तरं दर्शयति—"अथो खल्वाहुर्नैव संशंसेत्"-इति । अहरन्तरवत् सम्भूय शंसनं कर्त्तव्य मित्यपरे कथयन्ति ॥

तत्रोपपत्ति माह—"स्वर्गो वै लोकः षष्ठ महरसमायी वै स्वर्गो लोकः कश्चिद्वै स्वर्गं लोकं समेतीति ; स यत् संशंसेत्समानं तत्कुर्यादथ यत्र संशंसती"१ तत्स्वर्गस्य लोकस्य रूपं ; तस्मान्न संशंसेयदेव न संशंसती"२"-इति । यदिदं षष्ठ महः, तदेतत् स्वर्गलोक एव ; प्रयोगबाहुल्येन दुस्साधनत्वात् । तदेवासमायीत्यादिना स्पष्टीक्रियते । बहुभिः सम्भूतैः 'एतुं' गन्तुं योग्यः 'समायो' [ "इण् गतौ"-इत्यस्माद्धातोरयं शब्दो निष्पन्नः ] तद्विपरीतो बहुभिर्गन्तु मशक्यः 'असमायी' ; तादृशो हि स्वर्गो लोकः । 'कश्चिदेव' पुण्यकृत् स्वर्गं लोकं 'समेति' समीचीनं भोगं प्राप्नोति, न तु सर्वैः ; स्वर्गहेतोः पुण्यस्य दुर्लभत्वात् । एवं सति मैत्रावरुणो यदि षष्ठेऽहनि भिन्नेनान्यानि सूक्तानि सम्भूय शंसेत्, तदानीं मीदृशं स्वर्गरूप मुत्तमं षष्ठ महरितरैरहोभिः समानं कुर्यात् ; तेषु शंसनीयानां मभिन्नमपि शंसनात् । अथ तद्वैपरीत्येन यदि षष्ठेऽहनि न संशंसति [ पूजार्था श्रुतिः ] 'तत्' एतद-

संशंसनं स्वर्गलोकरूपत्वात् पूज्यम्; तस्मात् सम्भूय न संशंसेत्। न संशंसतीति यदेवास्ति, तदेवातिपूज्यत्वम्। पूजार्थेयं श्रुतिः॥

इत्थं द्वितीयपक्ष मुपपाद्य पुनरपि प्रथमपक्षे दोषान्तर माह— "आत्मा वै स्तोत्रियः प्राणा वालखिल्या. स यत्संशंसेदेताभ्यां देवताभ्यां यजमानस्य प्राणान्वीयाद् य एनं तत्र ब्रूयादेताभ्यां देवताभ्यां यजमानस्य प्राणान् व्यगात्प्राण एन हास्यतीति शश्वत्तथा स्यात्; तस्मान्न संशंसेत्"—इति। अत्र संशंसनवादी प्रष्टव्यः,— किं वालखिल्याभ्यः पूर्वं मैत्रावरुणस्य शंसनं, किं वोपरिष्टात्? इति। तत्र प्रथमपक्षे दूषण मुच्यते,— योऽयं तत्र मिश्रशंसने 'स्तोत्रियः' सामसाध्यस्य स्तोत्रस्याधारभूतस्तृचोऽस्ति, सोऽयम् 'आत्मा वै' जीवस्थानीय एव। 'वालखिल्याः' ऋचः प्राणस्थानीयाः। तथा सति 'सः' मैत्रावरुणो यदि 'संशंसेत्' तदानीम् 'एताभ्याम्' इन्द्रावरुणदेवताभ्यां 'यजमानस्य' स्तोत्रियस्थानीयस्य 'प्राणान्' वालखिल्यस्थानीयान् 'वीयात्' विगतान् कुर्यात्, इन्द्रावरुणौ क्रुद्धौ यजमानस्य प्राणान् विनाशयेताम्। एवं सति 'यः' कश्चित् मैत्रावरुणस्य विरोधी समागत्य 'एनं' मैत्रावरुणं 'तत्र' तस्मिन् संशंसने 'ब्रूयात्' शपेत्। केन प्रकारेणेति, तदुच्यते —'एताभ्याम्' इन्द्रावरुणदेवताभ्यां यजमानस्य प्राणानसौ मैत्रावरुणो 'व्यगात्' विगतान् कृतवान्। तस्मात्प्राण. 'एनं' मैत्रावरुणं यजमानं वा 'हास्यति' परित्यजतीति। तदानीं तस्य शापेन 'शश्वत्' अवश्यं 'तथा स्यात्' प्राणवियोगो भवेत्। तस्मात् मैत्रावरुणो न संशंसेत्॥

एवं वालखिल्याभ्यः पूर्वं शंसने दोष मभिधायोर्द्ध मपि तत्संशंसने दोष माह— "स यदीचेतासंशिषं वालखिल्या इन्त पुर-

स्याद्दूरोहणस्य संशंसानीति, नो एव तत्साया मियात्"—इति। 'स' मैत्रावरुणो यदि मनस्येवम् 'ईक्षेत' विचारयेत्। कथ मिति, तदुच्यते — 'वालखिल्याः' अत्यन्तदुःसाध्याः, अहम् 'अशंसिषं' शंसितवानस्मि, 'इन्द्र' महाहर्षः सम्पन्नः ; इतः परं दूरोहणस्य पुरस्तात् ऐकाहिकं सम्पूर्ण शंसानीति। तदानीं तस्य शंसनस्य पूर्ववत् प्राणवियोगहेतुत्वात् 'तस्य' पचस्याया अपि 'नो एवेयात्' सर्वथा न प्राप्नुयादेव ; मानसो विचारोऽपि न कर्त्तव्यः, दूरे तत्संशंसन मित्यर्थः ॥

इदानीं स्थानविशेषेण तत्संशंसन मङ्गीकरोति— "तं यदि दर्प एव विन्देदुपरिष्टाद् दूरोहणस्यापि बहूनि शतानि शंसेयस्यो तत्कामाय तथा कुर्यादत्रैव तदुपासम्"—इति। तं मैत्रावरुणं यदि 'दर्प एव विन्देत्' गर्वोऽवश्यं लभेत [ अत्यन्तदुःशंसं मिल्प मह मशंसिषं, किं नाम मया शंसितु मशक्य मित्येताद्दशो दर्पः ] तदानीं तस्य मैत्रावरुणस्यौत्सुक्यानुसारेण दूरोहणस्योपरिष्टाद् बहून्यपि ऋक्षाणां शतानि शंसेत्। अस्त्येव तदानीं शंसनस्यानुज्ञा। 'यस्मो' यस्यैव फलस्य 'कामाय' प्राप्तये 'तद्' बहुविधं शंसनम् 'अत्रैव' स्थाने तथा कुर्यात्, 'तत्' फलम् 'उपासं' प्राप्तं भवति। एवं तावदैकाहिकानां सूक्तानां मशंऽसनं शंसनं वेति पक्षद्वय मप्यभिहितं भवति ॥

तत्र कस्य शंसन मङ्गीकृतं, कस्य वा निषिद्धम् ? इत्यपेक्षाया मुभयं विविच्य दर्शयति— "ऐन्द्रो वालखिल्यास्तासां द्वादशाक्षराणि पदानि ; तत्र स काम उपाप्तो य ऐन्द्रे जागते ऽथेद मैन्द्रावरुणं सूक्त मैन्द्रावरुणी परिधानीया ; तस्मात् संशंसेत्"—इति। "चर्षणी धृतम्"—इत्यादिकं ( सं० ३. ५१. ), यदेतदैन्द्रं

सूक्तमैकाहिकम्, तदेतन्निराकृत्य यत्सूक्तान्तरम् "आ वां राजानौ" –इति ( सं० ७. ८४. ), ऐन्द्रावरुणमैकाहिकम्, तदेतदङ्गीक्रियते। याः 'वालखिल्याः' ऋचस्ताः 'ऐन्द्रः' इन्द्रदेवताकाः। तासां मध्ये यानि द्वादशाक्षराणि 'पदानि' पादा विद्यन्ते, बृहती-सतोबृहतीद्वयात्मकेषु प्रगाथेषु बृहत्यास्तृतीयपादौ द्वौ द्वादशाक्षरौ, सतोबृहत्या आद्यस्तृतीययोर्भौ पादौ द्वादशाक्षरौ; तेषां पादानां मध्यरसङ्ख्या जागतत्वमस्ति। एवं सत्यैकाहिके जागते "वर्षणो धृतम्"–इत्यस्मिन्नैन्द्रे सूक्ते 'यः' कामो ऽपेक्षितः, स कामः 'तत्र' तेष्विन्द्रदेवताकवालखिल्यागतेषु द्वादशाक्षरपादेषु 'उपाप्तः' लब्धो भवति। तस्माद्वर्षणो धृत मित्येतदैकाहिकमैन्द्रं सूक्तं नत्र परित्याज्यम्। आ वां राजानावित्येतदैन्द्रावरुणं सूक्तम्; तत्रेयम् "इन्द्रं वरुणम्"–इति (सं० ७.८४.५.) परिधानीयाग्न्यैन्द्रावरुणी। तथा सत्येतस्य सूक्तस्यानुकूलतया तदेव भवेत्, तस्मादन्यत् न संशंसेत्। अन्यशब्दोऽत्राध्याहर्त्तव्यः। अत एव सूत्रकारः ऐन्द्रावरुणं सूक्तमङ्गीचकार— "आ वां राजानाविति नित्यमैकाहिकम्"–इति ( आश्व० श्रौ० ८.२.१६.)। इत्थं शिल्पाख्यं शस्त्रं व्यवस्थाप्य तस्योपरि सूक्तान्तरमध्यङ्गीकृतम्॥

इदानीं शस्त्रमेवोपजीव्य स्तोत्रे कञ्चिद्विचारं मुद्रावयति— "तदाहुर्यथा वाव स्तोत्रमेवं शस्त्रं; विहृता वालखिल्याः शस्यन्ते, विहृतांस्तोत्रा३ अविहृतां३ ? इति"–इति। स्तोत्रशस्त्रयोः सादृश्यस्यापेक्षितत्वात् शस्त्रगतासु वालखिल्यनामकास्वृक्षु विहरणं दृष्ट्वा सामगानां स्तोत्रेऽपि संशयो जायते, किमिदं स्तोत्रं विहृतमाहोस्विद् अविहृतम्? इति। श्रुतिरयं विचारार्थम्॥

तस्मिन् विचारे निर्णयमाह— "विहृत मिति ब्रूयादष्टाच-

रेण द्वादशाक्षर मिति”–इति। “अग्ने त्वं नो अन्तमः”–इत्यादिषु द्विपदासु सामगाः स्तुवते *। तत्र आद्याः पादा अष्टाक्षराः, द्वितीयाः पादा द्वादशाक्षराः; एवं तत्र छन्दो विहृत मित्युत्तरं ब्रूयात् ॥

अथ शस्त्र मुपजीव्य याज्यायां चोद्य मुद्भावयति— “तदाहुर्यथा वाव शस्त्र मेवं याज्या; तिस्रो देवताः शस्यन्ते ऽग्निरिन्द्रो वरुण इत्यथैन्द्रावरुण्या यजति, कथ मग्निरनन्तरित इति” –इति। ‘तत्’ तत्र शस्त्रयाज्यायां चोद्य माहुः। शस्त्रस्य तदीययाज्यायाश्च सादृश्य मपेक्षितम्। शस्त्रे च तिस्रो देवताः शस्यन्ते, — अग्निरिन्द्रो वरुणश्चेति। तत्र स्तोत्रियानुरूपयोरग्निर्देवता, वालखिल्यास्विन्द्रो देवता, “आ वां राजानौ”–इति सूक्ते (सं० ७. ८४.) इन्द्रो वरुणश्च। एवं सति याज्याया मपि देवतात्रय मपेक्षितम्, तत्तु नास्ति; “इन्द्रावरुणा मधुमत्तमस्य”–इति याज्याया मिन्द्रावरुणयोरुभयोरपि प्रतिपादितत्वेनाग्नेः परित्यक्तत्वात्। अथ सत्यग्निः ‘अनन्तरितः’ परित्यक्तो भवेदिति चोद्यम् ॥

तस्योत्तर माह— “यो वा अग्निः स वरुणस्तदप्येतदृषिणोक्तं,— त्व मग्ने वरुणो जायसे यदिति; तद्यदैन्द्रावरुण्या यजति, तेनाग्निरनन्तरितो ऽनन्तरितः”–इति। अग्निवरुणयोरत्यन्तभेदो नास्ति; परस्पर मतिप्रियत्वेनैकत्वोपचारात्। ‘तत्’ एकत्वम्

---

* “अग्ने त्वं न.”–इति द्वे, “त त्वा शोचिष्ठ”–इत्येका (स० ५. २४ १, २२४); एव मितिवी द्वैपदसूक्त स्तोत्रिय (ऐ० आ० ४ १ २२.)। अत्र द्वे सामनी अधीयेते (ऊ० गा० ३. २. १८; १२. २ १५.)। तयोराद्य ‘गूर्द’ नाम दशरात्रे, अपर ‘सत्रासाहीय’ त्वैकाहे इति निश्चेय। इह खलु गूर्दस्यैव ग्रहणम् “गूर्दो भवति”–इत्यादि वि ब्राह्मणम् (ता० ब्रा० १२ १२ ४, ५,)।

'ऋचिया' मन्त्रेणाप्युक्तम्। "त्वं मग्ने"-इत्यादिको मन्त्रः ( सं० ५. ३. १.* )। हे अग्ने! त्वं वरुणो भूत्वा 'जायसे' प्रादुर्भवसीति मन्त्रार्थः। तथा सत्यैन्द्रावरुण्या यजतीति यदेवास्ति, 'तेन' अग्नेर्वरुणे एवान्तर्भावात् अथ अग्निः 'अनन्तरितः' अपरित्यक्तः। अभ्यासोऽध्यायसमाप्त्यर्थः॥ १०॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायां चतुर्थाध्याये
( एकोनत्रिंशाध्याये ) दशमः खण्डः॥ १० ( २६ )॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायाः चतुर्थोऽध्यायः॥

---

* संहितायां मन्त्रस्यास्य व्याख्याने सायणाचार्येणैवं मुद्रितमद्भुतं,—"तं देवा विश्वे सोऽग्निं प्राविशन् ( तै० सं० ६ २ २ ६ )"-इति। अत्रुतोऽग्नेः सर्वदेवतात्मत्व मनेकत्र विश्रुतम्। निरु० 'अथापि ब्राह्मणं भवति,—अग्निः सर्वा देवता इति (३भा० २३१ पृ० १(पं०)। तस्योत्तरा भूयसे निर्वचनाय,— इन्द्रं मित्रं वरुणमग्निमाहु,०—० ( ऋ० सं० १६४.४६ )। इम मेवाग्निं महान्तमात्मानमेक मात्मानं बहुधा मेधाविनो वदन्ति"-इत्यादि ३भा० ३८७—३९० पृ०। ततः ४१६, ४२९ पृ०। ४भा० ७४ पृ० "ग" टिप्पनी चैतद्दर्शिका। पुनस्तत्परिशिष्टेऽपि ४भा० ४०८ पृ०। "अग्नि सर्वा देवता इति। तस्योत्तरा भूयसे निर्वचनाय,—आत्मेदसे मुनयाम ०—० ( ऋ० सं० १ ९९ १. )"-इति ४भा० ४०८—४१०पृ०।

## ॥ अथ पञ्चमाध्यायः ॥

( २४ )

॥ अथ प्रथमः खण्डः ॥

॥ ॐ ॥ शिल्पानि शंसन्ति देवशिल्पान्येतेषां वै शिल्पानामनुकृतीह शिल्पमधिगम्यते हस्ती कंसो वासो हिरण्यमश्वतरीरथः शिल्पं शिल्पं हास्मिन्नधिगम्यते य एवं वेद यदेव शिल्पानी३ आत्मसंस्कृतिर्वाव शिल्पानि छन्दोमयं वा एतैर्यजमान आत्मानं संस्कुरुते नाभानेदिष्ठं शंसति रेतो वै नाभानेदिष्ठो रेतस्तत् सिञ्चति तमनिरुक्तं शंसत्यनिरुक्तं वै रेतो गुहा योन्यां सिच्यते स रेतो मिश्रो भवति छ्नया रेतः सञ्जग्मानो निषिञ्चदिति रेतः समृद्धा एव तं स नाराशंसं शंसति प्रजा वै नरो वाक् शंसः प्रजास्वेव तद्वाचं दधाति तस्मादिमाः प्रजा वदन्त्यो जायन्ते तं हैके पुरस्ताच्छंसन्ति पुरस्तादायतना वागिति वदन्त उपरिष्टादेक उपरिष्टादायतना वागिति वदन्तो मध्य एव शंसेन्मध्यायतना वा इयं वागुपरिष्टान्नेदीयसीवोपरि-

* "शिल्पानी" क, ख, घ, च।

एाग्नेद्रीयसोत्र वा इयं वाक् होता रेतोभूतं सिक्ता मैत्रावरुणाय सम्प्रयच्छत्येतस्य त्वं प्राणान् कल्पयेति ॥ १ ( २७ ) ॥

स्तोत्रियस्यानुरूपत्वं सम्पाताय प्रगाथका: ।
त्रिष्टुभोऽथाहीनयुक्तिमोक्षौ शिल्पञ्च वर्णितम् ॥

अथ षष्ठपञ्चिकायां षष्ठेऽहनि शिल्पनामकानि शस्त्राणि विधत्ते—"शिल्पानि शंसति"–इति * ॥

शिल्पत्वं लौकिकनिदर्शनेन प्रशंसति— "देवशिल्पान्येतेषां वै शिल्पानां मनुकृतीह शिल्प मधिगम्यते,— हस्ती कंसो वासो हिरण्य मश्वतरीरथः शिल्पम्"–इति। शिल्पशब्दश्च आश्चर्यकरं कर्म ब्रूते। तच्च शिल्पं द्विविधम्—देवशिल्पं मानुषशिल्पञ्चेति। नाभानेदिष्ठादीनि यानि शिल्पानि सन्ति, तानि देवानां प्रीतिहेतुत्वाद्देवशिल्पानीत्युच्यन्ते। 'एतेषाम्' एव देवशिल्पानाम् 'अनुकृति' सदृशरूपम् 'इह' मनुष्यलोके शिल्पम् 'अधिगम्यते' प्रतीयते। हस्तीत्यादिना तदेवोदाह्रियते। लोके शिल्पिनः काष्ठमयाः मृद्दार्वादिभिः हस्तिसदृश माकारं निर्मिमीते। तथान्ये शिल्पिभिः 'कंस' दर्पणादि निर्मीयते। अपरैर्वासो विविधं निर्मीयते। अपरैः सुवर्णमयं कटकमुकुटादि निर्मीयते। अपरैरश्वतरीरथो निर्मीयते। गर्दभाश्वाभ्या मुत्पन्नो ऽश्वतरजाति, तद्युक्तो रथो ऽश्वतरीरथः। तदेतत्सर्वं मनुष्यैरधिगम्यमानं मानुषशिल्प मेतद्दृष्ट्वा नाभानेदिष्ठादि 'शिल्पम्' आश्चर्यकर मिति निश्चेतव्यम् ॥

* बालखिल्यादा मष्टानामेव पाठप्रकारे शिल्पत्व मभिहितम् ( ३४१—३४८ पृ० )।

वेदनं प्रशंसति— "शिल्पं ह्यस्मिन्नधिगम्यते य एवं वेद"–इति। 'अस्मिन्' वेदितरि 'शिल्प' कौशलं नानाविधं प्राप्यते ॥

सानुनासिकप्लुतेन शिल्पानां पूज्यत्वं दर्शयति— "यद्देव शिल्पानी३"–इति। यस्मान्नाभानेदिष्ठादीनि शिल्पशब्दवाच्यानि, तस्मात् सुवर्णाभरणादिवत् पूज्यानीत्यर्थः ॥

प्रकारान्तरेण शिल्पानि प्रशंसति— "आत्मसंस्कृतिर्वाव शिल्पानि छन्दोमयं वा एतैर्यजमान आत्मानं संस्कुरुते"–इति। वक्ष्यमाणानि नाभानेदिष्ठादिशिल्पानि 'आत्मसंस्कृतिः' जीवात्मनः संस्करणानि; तस्मादेतैर्यजमानो जीवात्मानं 'छन्दोमयं' वेदमयो यथा भवति तथा संस्कुरुते ॥

होतुः शिल्पं विधत्ते— "नाभानेदिष्ठं शंसति"–इति। नाभानेदिष्ठाख्येन महर्षिणा दृष्टम् "इदमित्था"–इत्यादि सूक्तं 'नाभानेदिष्ठम्' ( सं० १०.६१.१–२७. ); तद्धोता शंसेत् * ॥

तत् प्रशंसति – "रेतो वै नाभानेदिष्ठो रेतस्तत्सिञ्चति"–इति। एतैः शिल्पैर्यजमानस्यात्मसंस्कारो वेदमयजन्मरूपो योऽभिहितः, स एव क्रमेणोपवर्ण्यते। तत्र नाभानेदिष्ठाख्यः सूक्तविशेषो वक्ष्यमाणोत्पादकरेतःस्थानीयः; 'तत्' तेन सूक्तेन होता रेतः सिञ्चति ॥

तस्मिन् सूक्ते देवताविशेषवाचिनः पदस्य विस्पष्टप्रतीत्यभावादनिरुक्तत्वमस्ति, तत्प्रशंसति—"त मनिरुक्तं शंसत्यनिरुक्तं वै रेतो गुहा योन्यां सिच्यते"–इति। 'तं' नाभानेदिष्ठं सूक्तविशेषम् 'अनिरुक्तम्' अस्पष्टदेवताकं शंसेत्। लोके ततः 'अनिरुक्तम्' अस्पष्टमेव 'गुहा' गोप्ये अन्तःस्थाने योन्यां सिच्यते ॥

* "उद्धृत्य चोक्तम सूक्त शीर्षि"–इत्यादीनि आश्व० श्रौ० ८ १. १९—२४।

नाभानेदिष्टाख्येन सिक्तरेतसा यजमानस्य सम्बन्धं मन्त्रलिङ्ग-दर्शनेन द्रढयति—"स रेतो मिश्रो भवति; छया रेतः सज्जमानो निषिञ्चदिति रेतःसमृद्धा एव"—इति। 'सः' यजमानो नाभानेदिष्टेन रेतसा मिश्रितो भवति। तस्मिन्नर्थे "छया"—इत्यादिकः स्तत्सूक्तगतः कश्चिदृक्पादः प्रमाणम्। प्रजापतिर्यदा स्वां दुहितरं दिव मुषसं वा 'अधिष्कन्' अभ्यस्कन्दत्, तदानी मेव 'छया' भूम्या स्वदुहित्रा 'सज्जमानः' सङ्गं प्राप्तोऽस्मिंल्लोके रोहितो भूतो मृश्यो भूतो 'रेतो नि षिञ्चत्' रेतो निषिक्तवानिति *। अतः सूक्ते रेतस्सेकलिङ्ग मस्ति। तस्मादिदं सूक्तं रेतःसमृद्धार्थ मेव सम्पद्यते ॥

तस्य नाभानेदिष्टस्य सूक्तान्तरसाहित्ये विधत्ते—"तं स नाराशंसं शंसति; प्रजा वै नरो वाक् शंसः, प्रजास्वेव तद्वाचं दधाति; तस्मादिमाः प्रजा वदन्त्यो जायन्ते"—इति। 'तं' नाभानेदिष्टाख्यं सूक्तविशेषं नाराशंसाख्यसूक्तसहितं होता शंसेत्। 'नराः' अङ्गिरसो महर्षयः, मनुष्यजातावुत्पन्नत्वात्; तैं स्वस्यन्ते यस्मिन् "ये यज्ञेन"—इतिसूक्तविशेषे ( मं० १०. ६२. १–११. ) सोऽयं 'नाराशंसः', तेन सहितम् "इद मित्था रौद्रम्"—इत्येतन्नाभानेदिष्टं सूक्तं शंसेत् †। तत्र मनुष्यरूपाः प्रजा एव नरशब्देनाभिधीयन्ते, शंसशब्देन च वागुच्यते; तथा सति नराशंसशब्देन प्रजास्वेव वाच मवस्थापयति; तस्मात् कारणादिमाः प्रजाः 'वदन्त्यः' वाग्व्यवहारं कुर्वन्त्य उत्पद्यन्ते ॥

अथेदं चिन्तनीयम्— किं मिदं नाराशंससूक्तं नाभानेदिष्टसूक्तस्य पुरस्तात् पठनीयम्, उतोपरिष्टात्, अथवा मध्ये ? इति ॥

---

* २ भा० १४४ पृ० ३-३-६-८०। † आश्व० श्रौ० ८. १. २१।

तत्र प्रथमपक्षं दर्शयति— "तं हैके पुरस्ताच्छंसन्ति, पुरस्तादायतना वागिति वदन्तः"–इति। मनुष्यशरीरस्य 'पुरस्तात्' पूर्वभागे 'आयतनं' स्थानं यस्या वाचः, सेयं वाक् 'पुरस्तादायतना' 'इति' एव सुपपत्तिं वदन्तः केचिद् याज्ञिका नाभानेदिष्ठस्य पुरस्तान्नाराशंसं शंसन्ति ॥

द्वितीयं पक्षं दर्शयति— "उपरिष्टादेक उपरिष्टादायतना वागिति वदन्तः"–इति। शरीरस्य पूर्वभागेऽपि 'उपरिष्टात्' मूर्द्धनि 'आयतनं' वक्त्रादिरूपं स्थानं यस्या वाचः, सेयम् 'उपरिष्टादायतना वाक्' इति युक्तिं वदन्तः केचिदन्ये याज्ञिकाः नाभानेदिष्ठस्योपरिष्टान्नाराशंसं शंसन्ति ॥

तृतीयं पक्षं दर्शयति— "मध्य एव शंसेन्मध्यायतना वा इयं वाग्"–इति। शरीरस्याधोभागः पादरूपोऽपि वाच आयतनं न भवति, ऊर्ध्वभागः ललाटादिरपि वाचो नायतनम्, किन्त्वाधारादिवक्त्रान्तो मध्यभागः आयतनं यस्या वाचः, सेयं 'मध्यायतना'; तस्मान्नाभानेदिष्ठसूक्तस्य मध्य एव नाराशंससूक्तं शंसेत्। एवकारेण पूर्वोक्तौ पक्षौ व्यावर्त्तेते ॥

मध्यभागेऽपि स्थानविशेषं दर्शयति— "उपरिष्टान्नेदीयसी वोपरिष्टान्नेदीयसीव वा इयं वाग्"–इति। उपरिष्टान्नाभानेदिष्ठसूक्तस्यावसानभागो 'नेदीयान्' अत्यन्तसमीपवर्त्ती यस्य सूक्तस्य मध्यभागस्य, स मध्यभागः 'उपरिष्टान्नेदीयान्' 'इव'शब्द एवकारार्थः, तथाविध एव मध्यभागे नाराशंसं संशंसेत्। "इद मित्था"–इत्येतं नाभानेदिष्ठं सूक्तं सप्तविंशत्यृगात्मकम्, तत्रावसाने द्वे ऋचाववशिष्य पञ्चविंश ऊर्द्ध्वे मेव नाराशंसं सूक्तं शंसेत्। तथा चाश्वलायन आह— "इद मित्था रौद्र मिति प्राशुपोत्तमाया ये

यज्ञेनेत्यावपते''–इति ( यौ० ८. १. २१, २२. )। वागपि 'उपरिष्टान्नेदीयसि' अत्यन्तसमीपवर्त्तिन्येव शरीरमध्यभागे ताल्वोष्ठादौ वर्त्तते। तस्मात् सूक्तस्योक्तस्थानं युक्तम् * ॥

होतुः शंसन मुपसंहरन् मैत्रावरुणशस्त्रं प्रशौति—''तं होता रेतोभूतं सिक्त्वा मैत्रावरुणाय सम्प्रयच्छत्येतस्य त्वं प्राणान् कल्पयेति''–इति। उक्तशंसनेन होता 'तं' यजमानं 'रेतोभूतं', रेतःप्राप्तो यथा भवति तथा सिक्त्वा तस्मै मैत्रावरुणाय सम्प्रयच्छति। तदा केनाभिप्रायेणेति सोऽभिधीयते— हे मैत्रावरुण ! त्वम् 'एतस्य' यजमानस्य रेतोरूपस्य प्राणान् सम्पादय 'इति' अनेनाभिप्रायेण यजमानं तस्मै प्रयच्छति ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायां पञ्चमाध्याये
( त्रिंशाध्याये ) प्रथमः खण्डः ॥ १ (२७) ॥

---

॥ अथ द्वितीयः खण्डः ॥

वालखिल्याः शंसति' प्राणा वै वालखिल्याः'
प्राणानेवास्य तत्कल्पयति' ता विहृताः शंसति'

* नाभानेदिष्ठस्य वर्णनं पुरस्ताद् द्रष्टव्यम् ( ७७—८१ पृ० )।

विहृता वा इमे प्राणाः प्राणेनापानो ऽपानेन व्यानः स पच्छः प्रथमे सूक्ते विहरत्यर्धर्चशो द्वितीये ऋक्शस्तृतीये स यत् प्रथमे सूक्ते विहरति प्राणञ्च तद्वाचं च विहरति यद् द्वितीये चक्षुश्च तन्मनश्च विहरति यत्तृतीये श्रोत्रं च तदात्मानं च विहरति ते हैके सह बृहत्यौ सह सतोबृहत्यौ विहरन्ति तदुभाभ्यो विहारे कामो नेत्तु प्रगाथाः कल्पन्त ऽतिमर्शमेव विहरेत्तथा वै प्रगाथाः कल्पन्ते प्रगाथा वै वालखिल्यास्तस्मादतिमर्शमेव विहरेद्यदेवातिमर्शाँ३ आत्मा वै बृहती प्राणाः सतोबृहती स बृहती मशंसीत् स आत्माथ सतोबृहतीं ते प्राणा अथ बृहती मथ सतोबृहतीं तदात्मानं प्राणैः परिबृहन्नेति तस्मादतिमर्शमेव विहरेद्यद्देवातिमर्शाँ३ आत्मा वै बृहती पशवः सतोबृहती स बृहती मशंसीत् स आत्माथ सतोबृहतीं ते पशवोऽथ बृहती मथ सतोबृहतीं तदात्मानं पशुभिः परिबृहन्नेति तस्मादतिमर्शमेव विहरेद् द्वावोत्तमे सूक्ते पर्यस्यति स एव तयोर्विहारस्तस्य मैत्रावरुणः प्राणान् कल्पयित्वा ब्राह्मणाच्छंसिने सम्प्रयच्छत्येतं रथं प्रजनयेति ॥ २ ( २८ ) ॥

होतुः शिल्पशस्त्रं मुक्त्वा मैत्रावरुणस्य शिल्पशस्त्रं विधत्ते— "वालखिल्याः शंसति ; प्राणा वै वालखिल्याः, प्राणानेवास्य तत्कल्पयति"–इति । वालखिल्याख्यैर्मुनिभिर्दृष्टाः "अभि प्र वः सुराधसम्"–इत्यादिके ( सं० ६ अष्ट० ३ अ० ) अष्टके स्थिता ऋचो वालखिल्याभिधाः ; ता एव वालखिल्याख्ये ग्रन्थे समाम्नाताः * ता सर्वा मैत्रावरुणः शंसेत् । वालखिल्यानां शिल्पानां प्राणरूपत्वेन तच्छंसने सति 'अस्य' रेतोरूपस्य यजमानस्य प्राणानेव सम्पादयति ॥

इतरशस्त्रवदत्रापि यथापाठशंसनप्रसक्तौ विशेषं विधत्ते—"ता विहृताः शंसति ; विहृता वा इमे प्राणाः, प्राणेनापानो ऽपानेन व्यानः"–इति । 'ताः' वालखिल्या ऋचो 'विहृताः' परस्परव्यतिषक्ताः शंसेत्; प्राणाश्चेमे शरीरे 'विहृता वै' परस्परव्यतिषक्ता एव वर्तन्ते । ऊर्ध्वगामिना प्राणवायुना निरोधात् अपानवायुर्व्यतिषक्तः, तेन चापानवायुना तद्वायुद्वयमध्यवर्त्ती व्यानो व्यतिषक्तः ; "अथ यः प्राणापानयोः सन्धिः स व्यानः"–इतिश्रुत्यन्तरात् ( छा० उप० १. ३. ३. ) ॥

व्यतिषङ्गप्रकारं विधत्ते — "स पच्छः प्रथमे सूक्ते विहरत्यर्धर्चशो द्वितीये ऋक्शस्तृतीये"–इति । वालखिल्यानां अष्टसु सूक्तेषु सप्तमाष्टमे सूक्ते परित्यज्य यान्यवशिष्टानि षट् सूक्तानि, तेषु त्रीणि युग्मानि । तत्र प्रथमयुग्मगते द्वे सूक्ते 'सः' मैत्रावरुणः 'पच्छो विहरेत्' प्रथमसूक्तगतं पादं द्वितीयसूक्तगतेन पादेन योजयेत् । द्वितीययुग्मगते द्वे सूक्ते 'अर्धर्चशो विहरेत्' तस्मिन्

---

* अष्टकविभक्तायां बाष्कलसंहितायां वालखिल्यानां पञ्चाष्टकान्तर्गतत्वेऽपि सायणव्याख्यातायां दाशतय्यां शाकलसंहितायां तेषां मन्त्राभावात् यथान्तरम्थलम् ।

युग्मे एकसूक्तगत मर्धर्चं द्वितीयसूक्तगतेनार्धर्चेन योजयेत्। तृतीययुग्मगते द्वे सूक्ते 'ऋक्शो विहरेत्' तस्मिन् युग्मे एकसूक्तगता मृचं द्वितीयसूक्तगतयर्चा योजयेत् । तदुक्त माश्वलायनेन—"अथ वालखिल्या विहरेत्, तदुक्तं षोडशिना ; सूक्तानां प्रथमद्वितीये पच्छस्तृतीयचतुर्थे ऽर्धर्चश ऋक्शः पञ्चमषष्ठे"—इति ( श्रौ० ८. २. ३-६. )। यद्यपि पूर्वाध्याये "पच्छः प्रथमं षड्वालखिल्यानां सूक्तानि विहरत्यर्धर्चशो द्वितीय मृक्शस्तृतीयम्"—इति विहारो ऽभिहितः ( ३४२ पृ० ), तथाप्यत्रास्ति विशेषः । तत्र हि षण्णा मपि सूक्तानां पादविहारः, अर्धर्चविहार ; ऋग्विहार इति त्रिरावृत्तिरभिहिता ; अत्र तु प्रथमयुग्मे पादविहारः, द्वितीययुग्मे ऽर्धर्चविहार, तृतीययुग्मे ऋग्विहार इति । तथापि सकृदेव पादादिविहारः, न त्वावृत्तिः ; तथा चाव. सकृद्भावाभावाभ्या मप्यस्ति विशेषः । अत एवोभयत्र नामभेदोऽस्ति,—महावालभिद्विहार इति पूर्वस्य नामधेयम्, ह्रौष्पिङ्गनो विहार इति एतस्य नामधेयम् । अत एव सूत्रकारो नामधेयद्वयं दर्शयति—"इति तु ह्रौष्पिङ्गनावथ महावालभिद्"—इति ( आश्व० श्रौ० ८. २. १७, १८. ) हुष्पिङ्गनाख्येन महर्षिणा दृष्टौ द्वौ विहारौ, महावालभिदाख्येन महर्षिणा दृष्ट एको विहारः ✻ ॥

अत्रोक्तौ ह्रौष्पिङ्गनविहारौ प्रशंसति— "स यत्प्रथमे सूक्ते विहरति प्राणञ्च तद्वाचं च विहरति, यद् द्वितीये चक्षुश्च तन्मनश्च विहरति, यत्तृतीये श्रोत्रञ्च तदात्मानं च विहरति"—इति । पूर्ववद् व्याख्येयम् ( ३४६ पृ० ) ॥

योऽयं मत्रोक्तो ह्रौष्पिङ्गनविहारस्तस्यापि मतभेदेन द्वौ प्रकारौ ;

---

✻ पृ० ३४४पृ० " ✻ " टिप्पनी द्रष्टव्या ।

तत्र प्रथमप्रकार मुपन्यस्य, तत्र किञ्चिदपरितोषं दर्शयति—
"ते हैके सह बृहत्यौ सह सतोबृहत्यौ विहरन्ति, तदुपासो विहारे कामो नेत्तु प्रगाथाः कल्पन्ते"—इति। याः [ षट्त्रिंशदक्षरा बृहती, चत्वारिंशदक्षरा सतोबृहती ] वालखिल्यसूक्तेषु प्रथमा बृहती द्वितीया सतोबृहती, तृतीया बृहती, चतुर्थी सतोबृहती, इत्येवं मणिप्रवालन्यायेन एकान्तरिताः पठिताः, तत्र प्रथमाद्ययुजो बृहत्यः, द्वितीयचतुर्थ्यादियुजः सतोबृहत्यः। एवं सति प्रथमसूक्ते द्वितीयसूक्ते चादिभूते द्वे बृहत्यौ सह विहरेत्, तदनन्तरभाविन्यौ द्वे सतोबृहत्यौ सह विहरेत्। इत्थं विहारं 'ते' प्रसिद्धाः याज्ञिकाः केचिदिच्छन्ति। तस्मिन् पक्षे विहारस्य विद्यमानत्वात् विहारनिमित्तो यः कामः स उपासो भवेदेव, किन्तु प्रगाथाः 'नेत् कल्पन्ते' नैव सम्पद्यन्त इति। परिभवद्योतनार्थो नेच्छब्दः। छन्दोद्वयं मिलित्वा एक. प्रगाथो भवति। स्वाध्यायपाठे प्रगाथानां विद्यमानत्वात् विहारोऽपि प्रगाथान्त एवापेक्षितः। ते न केवलबृहतीभ्यां केवलसतोबृहतीभ्यां वा सम्पद्यन्ते, किन्तु छन्दोद्वयेन सम्पद्यन्ते। प्रग्रथनेन द्वयोर्व्वैचोर्वा बृहतीत्वसम्पादनार्थं प्रगाथाग्रथनम्। तच्च छन्दोद्वये सुकरम्। तथाहि— प्रथमा बृहती यथापाठ मेव पठितव्या, तत्तोऽष्टाक्षरचतुर्थपादं द्विरावर्त्त्य च सतोबृहत्याः प्रथमार्द्धगतेन द्वादशाक्षरपादेनाष्टाक्षरपादेन च द्वितीया बृहती सम्पद्यते; तं मप्यष्टाक्षरपादं द्विरभ्यस्य सतोबृहत्या उत्तरार्द्धगतेन द्वादशाक्षरपादेनाष्टाक्षरपादेन च तृतीया बृहती सम्पद्यते। अतः प्रगाथेषु छन्दोद्वय मपेक्षितम्; केवलयोर्बृहत्योः सतोबृहत्योर्वा यथोक्तप्रग्रथनासम्भावात् ॥

इत्थं चोदितविहारे प्रथमप्रकारं निराकृत्य द्वितीयं च प्रकारं

विधत्ते —"अतिमर्शमेव विहरेत्; तथा वै प्रगाथाः कल्पन्ते; प्रगाथा वै वालखिल्यास्तस्मादतिमर्श मेव विहरेद्यदेवातिमर्शाँ३"—इति। 'अतिमर्शम्' अतिमृश्यातिमृश्य, प्रथमसूक्तस्य प्रथमायामृचि प्रथमपाद मुक्त्वा तदनन्तरभावि सर्वमतिलङ्घ्य द्वितीयसूक्ते द्वितीयस्या मृचि द्वितीयपादेन योजयेत्; सोऽय मतिलङ्घ्य मृश्यमानत्वादतिमर्श इत्युच्यते। तत्र बृहतीपाद-सतोबृहतीपादयोर्मिश्र णरूपो विहारो भवति। एवकारेण पूर्वोक्तविहारो व्यावर्त्त्यते। स तु केवलबृहत्योः केवलसतोबृहत्योः सम्पद्यते, न तु मिलितयोः; अतो न तत्र प्रगाथभावः। इह तु 'तथा' सति, अतिमृश्य मेलने सति, छन्दोद्वयसम्बन्धात् प्रगाथाः सम्पद्यन्ते। या वालखिल्या ऋच आम्नातास्ताः प्रगाथरूपादय एव; तस्माद्विहारेऽपि प्रगाथरूपत्वं युक्तम्। तस्मादित्युपसंहारः। यदेवातिमृश्य विहरणं तत् पूज्य मिति श्रुतेरर्थः॥

अथ छन्दोद्वयं तदीय मतिमर्शनं च प्रशंसति— "आत्मा वै बृहती, प्राणाः सतोबृहती, स बृहती मशंसीत्, स आत्मानं सतोबृहतीं ते प्राणा अथ बृहती मथ सतोबृहतीं तदात्मानं प्राणैः परिबृहंति; तस्मादतिमर्श मेव विहरेत्"—इति। पूर्वोदाहृतं यदेवेति वाक्य मत्र योजनीयम्। अतिमृश्यातिमृश्य पूज्यं विहरणं यदस्ति, तस्मिन् विहरणे या बृहती 'आत्मा वै' मध्यदेह एव; या तु सतोबृहती, सा प्राणाः; तथा सति 'सः' मैत्रावरुणो यदादौ बृहतीः 'अशंसीत्' शंसनं कृतवान्, 'सः' बृहतीशंसनरूपः 'आत्मा' मध्यदेहः सम्पद्यते। 'अथ' अनन्तरं सतोबृहती मशंसीत्, 'ते' सतोबृहतीरूपाः प्राणाः सम्पद्यन्ते। 'अथ' पुनरपि बृहतीं, तत ऊर्ध्वं सतोबृहतीं वधुकृत्वः शंसति। 'तत्' तेन

व्यतिषक्तशंसनेन 'आत्मानं' मध्यदेहं 'प्राणैः' वायुविशेषैः 'परि-बृहन्' परितो वर्द्धयन् 'एति' गच्छति ॥

पुनरपि व्यतिषङ्गं मनूद्य प्रकारान्तरेण प्रशंसति— "यद्दे-वातिमर्शं३ आत्मा वै बृहती, पशवः सतोबृहती स बृहती मशं-सीत्; स आत्मानं सतोबृहतीं ते पशवोऽथ बृहती मथ सतो-बृहतीं, तदात्मानं पशुभिः परिबृहन्वेति; तस्मादतिमर्शं मेव विहरेत्"—इति। यदेवातिमृश्यातिमृश्य पूर्वं शंसन मस्ति, तत्र बृहती यजमानः, सतोबृहती पशुरूपा। अन्यत् सर्वं पूर्ववद् व्याख्येयम् ॥

इत्थं षण्णां सूक्तानां विहरण मुक्त्वा सप्तमाष्टमयोर्विपर्यासं विधत्ते—"हैरयोत्तमे सूक्ते पर्यस्यति, स एव तयोर्विहारः"—इति। अष्टमं सूक्त मादौ पठित्वा पश्चात् सप्तमं सूक्तं पठेदित्येव मन्तिमं सूक्तं विपर्यस्येदेव, न तु पादार्द्धर्चादि व्यतिषङ्गं कुर्यात्, 'सः' विप-र्यास एव तयोर्विहार इत्युच्यते ॥

मैत्रावरुणस्य शस्त्र मुपसंहरन् ब्राह्मणाच्छंसिनः शस्त्रं प्रस्तौति— "तस्य मैत्रावरुणः प्राणान् कल्पयित्वा ब्राह्मणाच्छं-सिने सम्प्रयच्छत्येतं त्वं प्रजनयेति"—इति। 'तस्य' होतृशस्त्रेण निष्पन्नस्य रेतोरूपस्य यजमानदेहस्य मैत्रावरुणः स्वकीयेन शस्त्रेण प्राणवायून् सम्पाद्य, तं प्राणविशिष्टं यजमानदेहं ब्राह्मणाच्छंसिने सम्प्रयच्छति। हे ब्राह्मणाच्छंसिन्! 'एतं' यजमानदेहं त्वं 'प्रज-नय' उत्पादयेति तस्याभिप्रायः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायां पञ्चमाध्याये
(त्रिंशाध्याये) द्वितीयः खण्डः ॥ २ (२८) ॥

॥ अथ तृतीयः खण्डः ॥

सुकीर्तिं शंसति देवयोनिर्वै सुकीर्तिस्तद्यज्ञा-द्देवयोन्यै यजमानं प्रजनयति वृषाकपिं शंसत्यात्मा वै वृषाकपिरात्मानमेवास्य तत् कल्पयति तं न्यूङ्खयत्यन्नं वै न्यूङ्खस्तदस्मै जातायान्नाद्यं प्रति-दधाति यथा कुमाराय स्तनं स पाङ्क्तो भवति पाङ्क्तो ऽयं पुरुषः पञ्चधा विहितो लोमानि त्वङ् मांस-मस्थि मज्जा स यावानेव पुरुषस्तावन्तं यजमानं संस्करोति तं ब्राह्मणाच्छंसी जनयित्वा ऽच्छावाकाय सम्प्रयच्छत्येतस्य त्वं प्रतिष्ठां कल्पयेति ॥ ३ (२९) ॥

ब्राह्मणाच्छंसिनः शस्त्रं विधत्ते— "सुकीर्तिं शंसति; देवयो-निर्वै सुकीर्तिस्तद्यज्ञाद्देवयोन्यै यजमानं प्रजनयति"–इति । "अप प्राचः"–इत्यादि सूक्तं ( सं० १०. १३१. १–७. ) सुकीर्त्तिशब्देनो-च्यते । तत् सूक्तं ब्राह्मणाच्छंसी शंसेत् * । सुकीर्त्तेर्देवप्रियत्वात् देवयोनित्वम् । तस्य देवयोनिरूपात् सुकीर्त्याख्यकत्वात्, यज्ञावय-वाद्यजमानं ब्राह्मणाच्छंसी 'प्रजनयति' उत्पादयति ॥

तस्यैव सूक्तान्तरं विधत्ते— "वृषाकपिं शंसत्यात्मा वै वृषा-कपिरात्मानमेवास्य तत् कल्पयति"–इति । "वि हि सोतो-रसृक्षत"–इत्यादिकं सूक्तं ( सं० १०. ८६. १–२३. ) वृषाकपिना दृष्टत्वात् तच्छब्देनाभिधीयते † । तस्य वृषाकपिसूक्तस्य जीवात्म-

---

* "सुकीर्तिं ब्राह्मणाच्छंसी"–इति आश्व० श्रौ० ८ ४ ९ ।

† "वृषाकपिञ्च पङ्क्तिशंसम्"–इति आश्व० श्रौ० ८, ४ ९ ।

स्थानीयत्वात्। तेन 'अस्य' यजमानदेहस्य जीवात्मान मेव सम्पादयति ॥

तस्य सूक्तस्य मध्ये न्यूङ्खं विधत्ते— "तं न्यूङ्खयत्यन्नं वै न्यूङ्खस्तदस्मै जातायान्नाद्यं प्रतिदधाति, यथा कुमाराय स्तनम्"–इति। 'तं' इयाकपिं 'न्यूङ्खयति' न्यूङ्खयुक्तं कुर्यात्। इस्वैस्त्रयोदशभिरोकारैर्युक्ता दीर्घास्त्रय ओकारा मिलित्वा न्यूङ्खा भवन्ति। एतच्च पूर्वं मेवोक्तम् ( २१, २४ पृ० ) न्यूङ्खस्यान्नसाधनत्वेनान्नरूपत्वात् तेन न्यूङ्खेन 'अस्मै' यजमानायोत्पन्नाय अन्नाद्यं समर्पयति ;— यथोत्पन्नाय कुमाराय माता स्तनं प्रयच्छति, तद्वत् ॥

सूक्तगतं छन्दः प्रशंसति— "स पाङ्क्तो भवति ; पाङ्क्तोऽयं पुरुषः,—पञ्चधा विहितो लोमानि त्वङ् मांस मस्थि मज्जा ; स यावानेव पुरुषस्तावन्तं यजमानं संस्करोति"–इति। 'सः' इयाकपिनामकः सूक्तविशेषः पङ्क्तिच्छन्दोयुक्तो भवति, पुरुषोऽपि लोमादिभिः पञ्चधा दृष्टत्वात् पञ्चसङ्ख्यायोगेन 'पाङ्क्तः'। तथा सति 'सः' पुरुषः स्वकीयैरवयवैर्यावानेव भवति, तावन्तं सर्व मपि यजमान मनेन संस्करोति ॥

ब्राह्मणाच्छंसिनः शस्त्र मुपसंहरन् अच्छावाकस्य शस्त्रं प्रस्तौति— "तं ब्राह्मणाच्छंसी जनयित्वाच्छावाकाय सम्प्रयच्छत्येतस्य त्वं प्रतिष्ठां कल्पयेति"–इति। 'तं' यजमानं ब्राह्मणाच्छंसी स्वकीयेन शस्त्रेणोत्पाद्य प्रतिष्ठासम्पादनार्थ मच्छावाकाय सम्प्रयच्छति। हे अच्छावाक ! 'एतस्य' यजमानस्य त्वं प्रतिष्ठां सम्पादयेति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायां पञ्चमाध्याये
( त्रिंशाध्याये ) तृतीयः खण्डः ॥ ३ ( २८ ) ॥

॥ अथ चतुर्थः खण्डः ॥

एवयामरुतं शंसति प्रतिष्ठा वा एवयामरुत्प्रतिष्ठा मेवास्य तत् कल्पयति तं न्यूङ्खयत्यन्नं वै न्यूङ्खो ऽन्नाद्य मेवास्मिंस्तद्दधाति स जागतो वातिजागतो वा सर्वं वा इदं जागतं वातिजागतं वा स उ मारुत आपो वै मरुत आपो ऽन्न मभिपूर्वं मेवास्मिंस्तदन्नाद्यं दधाति तान्येतानि सहचराणीत्याचक्षते नाभानेदिष्ठं वाल-खिल्या वृषाकपि मेवयामरुतं तानि सह वा शंसेत् सह वा न शंसेद् यदेनानि नाना शंसेद्यथा पुरुषं वा रेतो वा विच्छिन्द्यात् तादृक्तत्तस्मादेनानि सह वा शंसेत् सह वा न शंसेत् सह बुलिल आश्वतर आश्विव-र्वैश्वजितो होता सन्नीचाञ्चक्र एषां वा एषां शिल्पानां विश्वजिति सांवत्सरिके द्वे मध्यन्दिन मभि प्रत्येतो-ऽर्न्हाद मित्थ मेवयामरुतं शंसयानीति तद्ध तथा शंसयाञ्चकार तद्ध तथा शस्यमाने गौश्ल आज-गाम स होवाच होतः कथा ते शस्त्रं विचक्रं प्लवत इति किं ह्यभूदित्येवयामरुदय मुत्तरतः शस्यत इति स होवाचेन्द्रो वै मध्यन्दिनः कथेन्द्रं मध्यन्दिनान्नि-नीषसीति नेन्द्रं मध्यन्दिनान्निनीषामीति होवाच छन्दस्त्विद ममध्यन्दिनसाच्ययं जागतो वाति-

जागतो वा सर्वं वा इदं जागतं वातिजागतं वा स उ मारुतो मैव शंसिष्टेति स होवाचाश्माच्छावाकेत्यथ हास्मिन्ननुशासन मीषे स होवाचैन्द्र मेव विष्णुं न्यङ्गं शंसत्वथ त्व मेतं होतरुपरिष्टाद्रौद्र्यै धाय्यायै पुरस्तान्मारुतस्याप्यस्याथा इति तद्ध तथा शंसयाञ्चकार तदिद मप्येतर्हि तथैव शस्यते ॥ ४ ( ३० ) ॥

अच्छावाकस्य शस्त्रं विधत्ते—"एवयामरुतं शंसति ; प्रतिष्ठा वा एवयामरुत्प्रतिष्ठा मेवास्य तत् कल्पयति"–इति। "प्र वो महे मतयः"–इत्यादिकं ( सं० ५. ८७. १–९. ) सूक्तम 'एवयामरुत्'–शब्देनोच्यते। तत् सूक्त मच्छावाकः शंसेत्। तच्च 'प्रतिष्ठा वै' प्रतिष्ठारूपत्वात्। तेन यजमानस्य प्रतिष्ठा मेव सम्पादयति * ॥

तस्मिन् सूक्ते न्यूङ्खं विधत्ते—"त न्यूङ्खयत्यन्नं वै न्यूङ्खोऽन्नाद्य मेवास्मिंस्तद्दधाति"–इति। पूर्ववद् व्याख्येयम् ॥

सूक्तगतं छन्दः प्रशंसति—"स जागतो वातिजागतो वा, सर्वं वा इदं जागतं वातिजागतं वा"–इति। सूक्तविशेषो द्वादशाक्षरपादत्वात् जगतीच्छन्दस्को भवति, चतुर्थपादे षोडशाक्षरत्वात् अतिच्छन्दस्त्वादतिजगतीच्छन्दस्कोऽपि भवति। 'सर्वम्' अप्येतत् प्राणिजातं जगच्छब्दाभिधेयत्वात् जागत मतिजागतं वा भवति। अतः सर्वरूपत्वेन छन्दोद्वयं प्रशस्तम् ॥

देवताद्वारेण सूक्तं प्रशंसति— "स उ मारुत आपो वै मरुत

* "एवयामरुदुग्नो वृषाकपिना"–इति आश्व० श्रौ० ८. ४, २।

आपो ऽस्य अभिपूर्वमेवास्मिंस्तदन्नाद्यं दधाति"–इति। 'सु ह' सोऽपि सूक्तविशेषो 'मारुतः' मरुद्देवताकः। मरुतश्च वृष्टिद्वारे 'आपो वै' आप एव। अपां चान्नहेतुत्वादन्नत्वम् 'अभिपूर्वमेव' उक्तानुपूर्व्येण वायुसम्पादितजलद्वारा यजमाने अन्नं स्थापयति॥

होत्रादिभिः प्रयोक्तव्यानां सूक्तानां चतुर्णां शिल्पानामेकस्मिन्नहनि प्रयोगसहभावं विधत्ते— "तान्येतानि सहचराणीत्याचक्षते,—नाभानेदिष्ठं वालखिल्या वृषाकपिमेवयामरुतं; तानि सह वा शंसेत्, सह वा न शंसेत्"–इति। नाभानेदिष्ठादीनि चत्वारि शिल्पानि यान्युक्तानि, तानि एतानि 'सहचराणि' एकस्मिन्नहनि सह वर्तन्त 'इति' एव अभिज्ञा आचक्षते *। तस्माद्यस्मिन्नहनि शंसनीयानि, तस्मिन् चत्वार्यपि शंसेत्; यस्मिन्न शंसनीयानि, तस्मिंश्चत्वार्यपि परित्यजेत्॥

विपक्षे बाधकमुक्त्वा स्वपक्षमुपसंहरति—"यदेनानि नाना शंसेद् यथा पुरुषं वा रेतो वा विच्छिन्द्यात्, तादृक्तत्; तस्मादेनानि सह वा शंसेत्, सह वा न शंसेत्"–इति। तदेकस्मिन्नहनि 'एतानि' चत्वारि शिल्पानि 'नाना शंसेत्' नाना विच्छिद्य विच्छिद्य अवशिष्ट अहरन्तरे शंसेत्, तदानीं लोके यथा सम्पूर्णगर्भादुत्पन्नं 'पुरुषं वा', तत्कारणं 'रेतो वा', 'विच्छिन्द्यात्' वियासयेत्, तादृशं तद्भवेत्। 'तस्मात्' कारणादेतेषां चतुर्णां साहित्यमेव; न तु परस्परवियोगः कर्तव्यः॥

अथ शिल्पेष्वेव कञ्चिद्विशेषं वक्तुमाख्यायिकामाह—"स ह बुडिल आश्वतर आश्विर्वैश्वजितो होता सन्नीक्षाञ्चक्रे एषां वा

* 'तानीमानि सहचराणीत्याचक्षते'–इत्युक्तं [illegible] (८४४०)।

एषां शिल्पानां विश्वजिति सांवत्सरिके द्वे मध्यन्दिन मभि प्रत्येतो-
रिन्द्राद् मित्थ मेवयामरुतं शंसयानीति ; तद्ध तथा शंसयाञ्चकार"-
इति । 'ह'-शब्द ऐतिह्यद्योतनार्थः * । 'सः' प्रसिद्धः बुडिलनामको
महर्षिः, 'आश्वतरः' अश्वतरनाम्नो महर्षेर्गोत्रे समुत्पन्नः, 'आश्विः'
अश्वनाम्नो महर्षेः पुत्रः †, कदाचित् "वैश्वजितः" विश्वजिद्याग-
सम्बन्धी होता सन्, स्वमनसि 'ईचाञ्चक्रे' विचारितवान् । सांव-
त्सरिके गवामयनाख्यसंवत्सरसत्रसम्बन्धिनि 'विश्वजिति' विषुवतो-
ऽह्नः ऊर्ध्वं मुत्तरपक्षगते विश्वजिन्नामके ‡ चतुर्थेऽहनि 'एषां'
होत्रमैत्रावरुणादीनां सम्बन्धीनि शस्त्राणि शिल्पनामकानि
चत्वारि सन्ति, 'एषां शिल्पानां' मध्ये द्विशिल्पे मैत्रावरुण-ब्राह्म-
णाच्छंसिनोः सम्बन्धिनी, मध्यन्दिनसवनम् 'अभि'लक्ष्य 'प्रत्येतोः'
प्रत्येतुं, कुशलोऽस्मीति शेषः । 'हन्त' हृष्टोऽहं मेवयामरुतं
शंसयानीत्येवं महर्षिर्विचारितवान् । अय मर्थः । तृतीयसवन-
गतान्येतानि शिल्पशस्त्राणि तान्यन्येष्वहस्सु सम्भवन्ति, विश्व-
जिति त्वग्निष्टोमे तृतीयसवने होत्रकाणां शस्त्राभावात् मैत्रा-
वरुण-ब्राह्मणाच्छंसिनोः सम्बन्धि शस्त्रद्वयं माध्यन्दिने सवने
समानेतुं तावदच्छावाक मपि मध्यन्दिने एवयामरुतं शंस-
यानि । तथा सति ततः पूर्वभाविनोः मैत्रावरुणब्राह्मणाच्छंसि-

* 'इति ह'-इति निपातसमुदायः, उक्तो कोषकारः ऐतिह्यम् (अम० ५. ८. २५) ।
"स्मृति प्रत्यक्ष मैतिह्य मनुमानचतुष्टयम्"-इति तै० आ० १. २. १ । 'ऐतिह्यम्-इति-
हासपुराणमहाभारतब्राह्मणादिकम्'-इति तद्भाष्ये सायण० ।

† बुडिल इति वाजसनेयिच्छान्दोग्यब्राह्मणयो पाठ ( शत० ब्रा० ४. ६. १. ९, १०.
६ १. १, १४. ८. १५ ११ ; छा० उप० ५ ११. १ ।

‡ विश्वजित्परिचयः पूर्वत्र विस्पष्टः ( २१०पृ० ) ।

शस्त्रयोरर्थात् माध्यन्दिने सवने समाकर्षणं भवति। 'इति' इत्थं बुलिलः स्वमनसि विचार्य 'तद' तस्मिन् एव माध्यन्दिने सवने, तथा स्वविचारितक्रमेण 'एवयामरुतं' सूक्तम् अच्छावाकं 'शंसयाञ्चकार' बलादाज्ञाप्य शंसनं कारितवान् ॥

तत्र दोषं काश्चमुखेनोद्भावयति— "तद तथा शस्यमाने गौश्ल आजगाम; स होवाच,— होतः कथा ते शस्त्रं विचक्रं प्लवत इति ?"–इति। 'तद' तस्मिन्नेव माध्यन्दिने सवने 'तथा' तेन क्रमेण बुलिलप्रेरितेनाच्छावाकेनैवयामरुन्नामके शस्त्रे शस्यमाने सति, तदानीं गौश्लनामकः कश्चित् * महर्षिरागत्य बुलिलनामकं होतारं प्रत्येव मुवाच। हे होत! 'ते' त्वदीय मच्छावाकप्रयुक्त मेवयामरुन्नामकं शस्त्रं 'प्लवते' विनश्यति। तत्र दृष्टान्तः—'विचक्रं' चक्ररहितं शकट मिव। चयूयमाणोऽपि इवशब्दोऽत्राध्याहर्त्तव्यः। अतः 'कथा' तदेतत् सर्वं कथं घटते ? इत्याक्षेपः॥

तत ऊर्द्धं बुलिलस्य वचनं दर्शयति— "किं ह्यभूदिति ?"–इति। अच्छावाकेन शस्यमाने सति किं वा दूषण मभूत् ? नास्ति कश्चिदपि दोष इत्यर्थः॥

तत ऊर्द्धं गौश्लेनोक्तं दोषं दर्शयति— "एवयामरुदय मुत्तरतः शस्यत इति; स होवाचेन्द्रो वै मध्यन्दिनः; कथेन्द्रं मध्यन्दिनान्निनीषसीति ?"–इति। होतुर्धिष्ण्यादुत्तरतो ह्यच्छावाकस्य धिष्ण्यम्; तत्समीपे ऽवस्थितेनाच्छावाकेनैवयामरुन्नामको

* गौश गौश ऋषिः। शाङ्खा० श्रौ० १६.८,२२ ४। स च गुर्वेरपत्यम्। ऋषि कुशिय स्यादभिन्न। अ स्रेक "कुशिर्गौश्रवसः"–इति ऋक० आ० १० ६. ५ ८, पदपाठे "कुशिर्गौश्रवसः"–इति ऋक० आ० १४ ८ ४ ३३, १० ६ ४ १।

यः शस्त्रविशेषः, स पठनीय इति तस्याशय इत्युक्त्वा, पुनरपि 'सः' गौश्र एव उवाच। 'मध्यन्दिनः' तत्सवनीयः 'ऐन्द्रः' इन्द्रदेवताकः ; तथा सति हे होतः ! त मेत मिन्द्र मस्मात् माध्यन्दिनसवनात् 'कथा निनीषसि' केन प्रकारेणापनेतु मिच्छसि ? नैव सपनयनेच्छैव त्वदीयाच्छावाकशंसने दोष इति गौश्रस्याभिप्रायः ॥

त मभिप्राय मजानतो बुलिलस्य वाक्यं दर्शयति— "नेन्द्रं मध्यन्दिनान्निनीषामीति होवाच"—इति। अस्मात् माध्यन्दिनसवनात् तस्मान्निन मिन्द्र मपनेतु महं नेच्छामि ; तद्विषयस्य कस्यचिदपि अननुष्ठितत्वात्। 'इति' एवं बुलिल उक्तवान् ॥

ततो विहृतार्थानुष्ठानप्रदर्शनार्थं गौश्रस्य वाक्यं दर्शयति— "छन्दस्त्विद ममाध्यन्दिनसाचिय जागतो वातिजागतो वा सर्वं वा इदं जागतं वातिजागतं वा ; स उ मारुतो नैव शंसिष्टेति"—इति। हे होतः। त्वं स्वमनसेन्द्र मपनेतुं नेच्छसि, किन्त्विदं छन्दो ऽच्छावाकेन प्रयुज्यमानं शस्त्रगतम् 'अमध्यन्दिनसाचि' मध्यन्दिनसवनसम्बन्धार्हं न भवति। कथ मिति चेत्, तदुच्यते— 'अयं' सूक्तविशेषो 'जागतो वातिजागतो वा' द्वादशाक्षरपादेन षोडशाक्षरपादेन चोपेतत्वात्। सर्वं चेदं जागत मतिजागतं च सम्बजात जागते तृतीयसवने एव योग्यम्, न तु त्रैष्टुभे मध्यन्दिने सवने ; 'स उ' सोऽपि सूक्तविशेषो 'मारुतः' मरुद्देवताको न ऐन्द्रः। अतोऽपि कारणात् तृतीयसवने एव योग्यम्। तस्मादय मच्छावाको 'नैव शंसिष्ट' शंसनं सर्वथा मा करोत्विति दोषं दर्शितवान् ॥

तत ऊर्ध्वं बुलिलकृत्यं दर्शयति—"स होवाचारमाच्छावाकेत्यथ हास्मिन्ननुशासन मीषे"-इति। हे अच्छावाक ! त्वम्

'आरम' शंसनादुपरतो भव। 'इति' एवं बुलिल उवाच। 'अथ' अनन्तरं मिदं मप्युवाच—'हा' कष्टं सम्पन्नम्। इतः परं मह्यम् 'अस्मिन्' गौश्ले गुरौ 'अनुशासनम्' अनुष्ठेयोपदेशनम् 'इषे' इच्छामि। एतस्मादवगत्य सर्वं मनुष्ठास्यामीति तस्याभिप्रायः॥

अथ गौश्लस्योपदेशवाक्यं दर्शयति— "स होवाचेन्द्र मेव विष्णु न्यङ्गं शंसलय त्वमेतं होतरुपरिष्टाद्रौद्रैः धाय्यायै पुरस्तान्मारुतस्यावपस्वाधा इति"–इति। 'सः' गौश्ल एव मुवाच,— 'एषः' अच्छावाकः 'ऐन्द्रम्' इन्द्रदेवताकं 'विष्णुन्यङ्गं' * विष्णुलिङ्गोपेतं शंसतु। एवयामरुतं त्वच्चा "स्तोनं य इन्द्र"–इति प्रत्येवयामरुन्नामकं † यदैन्द्रं सूक्तं मस्ति (सं० ६. २०. १-१३.), तस्मिन् सूक्ते द्वितीयस्या मृचि चतुर्थपादे एव माम्नायते—"इन्द्रजोषिन् विष्णुना सचानः"–इति; अत इदं विष्णुचिह्नोपेतं सूक्तं शंसतु। हे 'होतः' बुलिल। त्वम् 'एतम्' एवयामरुतं ‡ त्वदीयशस्त्रे 'अवस्याधाः' प्रक्षिपेः। तत्र स्थानविशेष उच्यते— तृतीयसवने "मन्त्रः करति"–इति (सं० १. ४३. ६.) रुद्रदेवताका येयं धाय्या, तस्या उपरिष्टात्, मारुतसूक्तस्य § पुरस्तात्, तयोरुभयोर्मध्ये प्रक्षेपस्थानम्। एवं गौश्लोपदेशः॥

अथानुष्ठानं दर्शयति— "तत्र तथा शंसयाञ्चकार; तदिद मप्येतर्हि तथैव शस्यते"–इति। 'तत्र' गौश्लेन यदुक्तं तत् सर्वं, तथैव बुलिलः 'शंसयाञ्चकार' माध्यन्दिनसवने ऽच्छावाकं प्रति

* "विष्णुन्यङ्गम्"–इति च पाठ एव भाष्यसम्मतो दृश्यते।

† "एवयामरुदित्येतदावपते"–इति आश्व० श्रौ० ८. ४. ११।

‡ एवयामरुतं— एतद्देवयामरुतम्।

§ "क ई व्यक्ता"–इत्येवयामरुतात्पूर्वं भव मारुतं सूक्तम्। ऋ०सं० ७. ५६. १।

एवयामरुच्छस्त्रे प्रेषितवान्, अथ तृतीयसवने आग्निमारुतशस्त्र-मध्ये धाय्यामारुतसूक्तयोर्मध्ये एवयामरुतं प्रक्षिप्य शंसनं कृतवान्। तस्मादिदानी मपि तदिदं सर्वं होतकैस्तथैव प्रस्तूते ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकाया पञ्चमाध्याये
( त्रिंशाध्याये ) चतुर्थः खण्डः ॥ ४ ( ३० ) ॥

---

॥ अथ पञ्चमः खण्ड ॥

तदाहुर्यदस्मिन् विश्वजित्यतिरात्र एवं षष्ठे ऽहनि कल्पते यज्ञः कल्पते यजमानस्य प्रजातिः कथ मच्छावाक एवं नाभानेदिष्ठो भवत्यथ मैत्रावरुणो वालखिल्याः शंसति ते प्राणा रेतो वा अग्रे ऽथ प्राणा एवं ब्राह्मणाच्छंसिनस्त एवं नाभानेदिष्ठो भवत्यथ वृषाकपिं शंसति स आत्मा रेतो वा अग्रे ऽथात्मा कथ मव यजमानस्य प्रजातिः कथं प्राणा अविक्लृप्ता भवन्तीति यजमानं ह वा एतेन सर्वेण यज्ञक्रतुना संस्कुर्वन्ति स यथा गर्भो योन्या मन्तरेवं सम्भवञ्छेते न वै सकृदेवाग्रे सर्वः सम्भवत्येकैकं वा अङ्गं सम्भवतः सम्भवतीति सर्वाणि चेत्समाने ऽहन् क्रियेरन् कल्पत एव यज्ञः कल्पते यजमानस्य प्रजातिरथैतं होतैवया-

मरुत्वतीयं तृतीयसवने शंसति तद्यास्य प्रतिष्ठा तस्या मेवैनं तदन्ततः प्रतिष्ठापयति ॥ ५ (३१) ॥

संवत्सरसत्रे यदहरग्निष्टोमसंस्थं विश्वजिदाख्य मस्ति, तत्र शिल्पानां शस्त्राणां क्लृप्ति पूर्वत्राभिहिता (३६०–३८० पृ०); तत्र किञ्चिचोद्य मुद्भावयति—"तदाहुर्यदस्मिन् विश्वजित्यतिरात्र एवं षष्ठे ऽहनि कल्पते यज्ञः, कल्पते यजमानस्य प्रजातिः; अथ सत्रायस्त एव नाभानेदिष्ठो भवत्यथ मैत्रावरुणो वालखिल्याः शंसति; ते प्राणा, रेतो वा अग्रे ऽथ प्राणा एवं ब्राह्मणाच्छं-स्ययस्त एव नाभानेदिष्ठो भवत्यथ वृषाकपिं शंसति; स आत्मा, रेतो वा अग्रे ऽथात्मा; अथ सत्र यजमानस्य प्रजातिः, कथं प्राणा अविलुप्ता भवन्तीति"—इति। द्विविधो हि विश्वजित्,—अति-रात्रसंस्थोऽग्निष्टोमसंस्थश्च। तत्रातिरात्रसंस्थः स्वतन्त्र एकाहः। तत्र तृतीयसवने होत्रकाणां शस्त्राणि विद्यन्ते। तथा सति पूर्वोक्तक्रमेण होता नाभानेदिष्ठं शस्त्वा रेतः सिञ्चति, मैत्रावरुणो वालखिल्याः शस्त्वा प्राणानवस्थापयति, ब्राह्मणाच्छंसी सुकीर्तिं शस्त्वा प्रजनयति, अच्छावाक एवयामरुतं शस्त्वा प्रतिष्ठां करो-तीत्ययं क्रम उपपन्नः। एवं पृष्ठ्यषळहस्य यदहः षष्ठ मस्ति, तस्याप्युक्तसंस्थत्वेन तृतीयसवने होत्रकशस्त्रसद्भावात् पूर्वोक्ता यजमानोत्पत्तिरुपपद्यते। यथा विश्वजिदतिरात्रे षष्ठेऽहनि च शस्त्ररूपो यज्ञः 'कल्पते' उपपद्यते, तदनुसारेण यजमानस्य 'प्रजातिः' जनन मप्युपपद्यते। तथा संवत्सरसत्रगते ऽग्निष्टोम-संस्थे विश्वजिदहनि तदुपपादयितुं न शक्यते। तथाहि— तत्राग्निष्टोमसंस्थे विश्वजिति होता नाभानेदिष्ठं माध्यन्दिनसवने

ग्रस्त एव भवति ; तृतीयसवने वैश्वदेवशस्त्रे ग्रस्यमानत्वात् । अथैवं सति मैत्रावरुणो वालखिल्याः प्रथमं शंसति ; तृतीयसवने होत्रकाणां शस्त्राभावेऽपि माध्यन्दिने सवने तेषां शस्त्राणां बुलिलाख्येन महर्षिणा समाकृष्टत्वात् । 'ते' च वालखिल्यात्मकाः प्राणा इत्युक्तम् ( ३६५ पृ० ) । लोके तु रेत एव 'अग्रे' प्रथमं सिक्तं भवति, पश्चात् सिक्ते रेतसि प्राणानां प्रवृत्तिरिति क्रमः । इह तु नाभानेदिष्ठराहित्येन रेतःसेको नास्ति, वालखिल्यानां सद्भावेन प्राणा क्रियन्ते, कथ मेतदुपपद्यते ? इत्येकं चोद्यम् । एवं चोद्यान्तर मस्ति । ब्राह्मणाच्छंसी मध्यन्दिने वृषाकपिं शंसति । 'सः' वृषाकपिर्यजमानस्य प्रजायमानस्य 'आत्मा' देहः । तत्रापि नाभानेदिष्ठो ग्रस्त एव भवति, अतो रेतो नास्ति । लोके तु रेत एवाग्रे सिच्यते, 'अथ' पश्चादात्मदेहो जायते ; अतो लोकवैपरीत्ये सति कथ मत्र यजमानस्य 'प्रजातिः' जन्म ? इति द्वितीयं चोद्यम् । यजमानस्य जन्मसम्भवे वालखिल्यरूपाः 'प्राणाः' 'अविक्लृप्ताः' विशेषेण स्थानक्लृप्तिरहिताः 'कथं भवति' केन प्रकारेण वर्त्तन्ते ? 'इति' एवं ब्रह्मवादिनश्चोद्य माहुः ॥

तस्य परिहारं दर्शयति—"यजमानं ह वा एतेन सर्वेण यज्ञक्रतुना संस्कुर्वन्ति ; स यथा गर्भो योन्या मन्तरेवं सम्भवञ्छेते ; न वै सकृदेवाग्रे सर्वः सम्भवत्येकैकं वा अङ्ग' सम्भवतः सम्भवतीति"—इति । इह 'यज्ञक्रतु'शब्देन तत्साधनभूतः शिल्पसमूहो विवक्षितः । 'एतेन' सर्वेणापि शिल्पसमूहेन यजमानं 'संस्कुर्वन्ति' प्राणप्राप्तरहेतुः संस्कारः, स एव चात्र क्रियते ; न तु यजमानस्य मरणजन्मबहुभिः शिल्पैः क्रमेण संस्कारे दृष्टान्तः । यथा योन्याम् 'अन्तः' मध्ये 'सः' प्रसिद्धो गर्भो भवति, एव मयं यजमानः

क्रमेण 'सम्भवन्' संस्कृताकारेणोत्पद्यमानः 'शेते' अवतिष्ठते। लोकेऽपि गर्भः 'अग्रे' प्रथमं रेतस्सेककाले एव 'सर्वः' सम्पूर्णाङ्गः सकृदेव 'न वै सम्भवति' नैवोत्पद्यते; किन्तु 'सम्भवतः' उत्पद्यमानस्य पुरुषस्य एकैक मङ्गं क्रमेण 'सम्भवति' निष्पद्यते। तथा च गर्भोपनिषद्यामाम्नातम्—"एकरात्रोषितं कललं भवति, सप्तरात्रोषितं बुद्बुदं भवति"-इत्यादि। अतो गर्भवत्क्रमेण संस्कारो युक्त इत्यर्थः ॥

उक्त मेवोत्तरं पुनरपि विस्पष्टयति—"सर्वाणि चेत्समाने ऽहन् क्रियेरन्, कल्पत एव यज्ञः, कल्पते यजमानस्य प्रजातिर्यत्रैतं होतैवयामरुत्तं तृतीयसवने शंसति; तदास्य प्रतिष्ठा, तस्या मेवैनं तदन्ततः प्रतिष्ठापयति"-इति। 'सर्वाणि' शिल्पशस्त्राण्येकस्मिन्नेवाहनि क्रियेरन्। तदानीं तावतैवायं यज्ञो यजमानसंस्कारे हेतुः शिल्पसमूह उपपद्यते। यजमानस्य 'प्रजातिः' जननोपचार उपपद्यते। अतः सर्वशस्त्रानुष्ठान मेव संस्कारसाधनम्, न तु होतुः शस्त्रस्य प्रथमभावित्वादिक्रमविशेषः संस्कारोपयोगी। नन्वत्र सर्वशस्त्रानुष्ठानं नास्ति माध्यन्दिनसवने; एवयामरुन्नाम्नः सूक्तस्याच्छावाकेनाननुष्ठानात्। नायं दोषः। तत्र तदभावेऽपि तृतीयसवने होतुरेवयामरुच्छस्त्र मस्ति, 'तत्' तथा सति यजमानस्य सर्वशस्त्रानुष्ठानेन या प्रतिष्ठा अपेक्षिता, तस्या मेव प्रतिष्ठायाम्, 'एनं' यजमानं तत् 'अन्ततः' शस्त्रस्या मन्ते प्रतिष्ठापयति ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य पञ्चपञ्चिकायां पञ्चमाध्याये
(शिल्पाध्याये) पञ्चमः खण्डः ॥ ५ (३१) ॥

॥ अथ षष्ठः खण्डः ॥

छन्दसां वै षष्ठेनाह्नाप्तानां रसो ऽत्यनेदत्तं प्रजापतिरबिभेत् पराङयं छन्दसां रसो लोकानत्येष्यतीति तं परस्ताच्छन्दोभिः पर्यगृह्णान्नाराशंस्या गायत्र्या रैभ्या त्रिष्टुभः पारिक्षित्या जगत्याः कारव्ययानुष्टुभस्तत्पुनश्छन्दस्सु रस मदधात् सरसैर्हास्य छन्दोभिरिष्टं भवति सरसैश्छन्दोभिर्यज्ञं तनुते य एवं वेद नाराशंसीः शंसति प्रजा वै नरो वाक् शंसः* प्रजास्वेव तद्वाचं दधाति तस्मादिमाः प्रजा वदन्त्यो जायन्ते य एवं वेद यदेव नाराशंसीः शंसन्तो वै देवाश्च ऋषयश्च स्वर्गं लोक मायंस्तथैवैतद्यजमानाः शंसन्त एव स्वर्गं लोकं यन्ति ताः प्रगाह्यं शंसति यथा वृषाकपिं वार्षाकपं हि वृषाकपेस्तन्याय मेति तासु न न्यूङ्खयेन्नीवीव नर्देत् स हि तासां न्यूङ्खो रैभीः शंसति रेभन्तो वै देवाश्च ऋषयश्च स्वर्गं लोक मायंस्तथैवैतद्यजमाना रेभन्त एव स्वर्गं लोकं यन्ति ताः प्रगाह्यं शंसति यथा वृषाकपिं वार्षाकपं हि वृषाकपेस्तन्याय मेति तासु न न्यूङ्खयेन्नीवीव नर्देत् स हि तासां न्यूङ्खः पारिक्षितीः शंसत्यग्निर्वै परिक्षिदग्नि-

* "वाक्शंसः" ङ ।

ह्रीमाः प्रजाः परिचेत्यग्निं ह्रीमाः प्रजाः परिचियन्त्यग्नेरेव सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद यदेव पारिचितीः२ः संवत्सरो वै परिचित् संवत्सरो ह्रीमाः प्रजाः परिचेति संवत्सरं ह्रीमाः प्रजाः परिचियन्ति संवत्सरस्यैव सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद ताः प्रगाहं शंसति यथा वृषाकपिं वार्षाकपं हि वृषाकपेस्तन्याय मेति तासु न न्यूङ्खयेन्नेदीव नर्दत् स हि तासां न्यूङ्खः कारव्याः शंसति देवा वै यत्किञ्च कल्याणं कर्माकुर्वंस्तत्कारव्याभिरवाप्नुवंस्तथैवैतद्यजमाना यत्किञ्च कल्याणं कर्म कुर्वन्ति तत्कारव्याभिराप्नुवन्ति ताः प्रगाहं शंसति यथा वृषाकपिं वार्षाकपं हि वृषाकपेस्तन्याय मेति तासु न न्यूङ्खयेन्नेदीव नर्दत् स हि तासां न्यूङ्खो दिशांक्लृप्तीः शंसति दिश एव तत् कल्पयति ताः पञ्च शंसति पञ्च वा इमा दिशश्चतस्रस्तिरश्चा ॰ एकोर्ध्वा तासु न न्यूङ्खयेन्नेदेव च निनर्दयेन्नेदिमा दिशो न्यूङ्खयानीति ता अर्धर्चशः शंसति प्रतिष्ठाया एवं जनकल्पाः शंसति प्रजा वै जनकल्पा दिश एव तत् कल्पयित्वा तासु प्रजाः प्रतिष्ठापयति

॰ "॰तिरश्च" क, ख, ग।

तासु न न्यूंखयेन्नैव च निनर्देन्नेदिमाः प्रजा न्यूंखयानीति ता अर्धर्चशः शंसति प्रतिष्ठाया एवेन्द्रगाथाः शंसतीन्द्रगाथाभिर्वै देवा असुरानभिगायाथैनानत्यायंस्तथैवैतद्यजमाना इन्द्रगाथाभिरेवाप्रियं भ्रातृव्यमभिगायाथैनमति यन्ति ता अर्धर्चशः शंसति प्रतिष्ठाया एव ॥ ६ (३२) ॥

पूर्वत्र ब्राह्मणाच्छंसिन शिल्पे प्रस्तावे 'सुकीर्तिं शंसति', 'वृषाकपिं शंसति' इति यत्सूक्तद्वयं विहितम् ( ३७२ पृ० ), तत ऊर्ध्वं कुन्तापाख्यं सूक्तं खिले कुन्तापनामके ग्रन्थे समाम्नातं विंशदृचं * वक्तव्यमिति तदितिहास माह— "छन्दसां वै षष्ठेनाह्नाप्तानां रसो ऽत्यनेदत्, स प्रजापतिरबिभेत्पराङयं छन्दसां रसो लोकानत्येष्यतीति ; तं परस्ताच्छन्दोभिः पर्यगृह्णान्नाराशंस्या गायत्र्या, रैभ्या त्रिष्टुभा," पारिक्षित्या जगत्याः, कारव्ययानुष्टुभस्तमुन-

* अस्ति चतुरध्यायात्मक खिलरूप ऋक्परिशिष्टो ग्रन्थ । तत्राद्यो निविदध्याय, कुन्तापाध्यायो द्वितीय, पुरोरुगध्यायस्तृतीय, तत प्रैषाध्यायो ऽन्तिम । तत्र कुन्तापाध्याये आदौ नाराशंस्यस्तिस्र, अथ रैभ्यस्तिस्र, अथ पारिक्षित्यश्चतस्र, अथ कारव्याश्चतस्र, अथ दिशांक्लृप्तय पञ्च, अथ जनकल्पा षट्, अथेन्द्रगाथा चतस्र इति [illegible] एतावदेव कुन्तापसूक्तम्, तत्रैवान्यत्प्रवापनामपदसप्तति । अथ प्रवह्लिका ऋच षट्, अथ आजिज्ञासेन्या ऋचश्चतस्र, अथ षट्पदात्मक प्रतिराध, अथातिवाद एक, अथ सप्तदश-पदात्मको देवनीथ, अथ भूतेच्छद्द्विक, अथाहनस्या ऋच षडिति पञ्चदशविधा मन्त्रा समाम्नाता । त एवैते ब्राह्मणाध्यायसमाप्ति यावत् पञ्चसु खण्डेषु क्रमाद् विधीयन्ते । तत्रास्मिन् खण्डे त्विन्द्रगाथानां कुन्तापसूक्तीयानां मन्त्राणां विधानम्, अत उच्यते विंशदृच मिति ।

म्छन्दःसु रस मदधात्"–इति। पूर्वप्रकृतस्य सम्बन्धिनां पृष्ठे-नाम्ना प्रसिद्धानां गायत्र्यादीनां छन्दसां 'रसः' सारः 'अत्यनेदत्' अतिक्रम्यागच्छत्। तदानीं 'सः' प्रजापतिः 'अबिभेत्' भीतवान्। केनाभिप्रायेणेति, सोऽभिधीयते— अयं छन्दसां रसः 'पराङ्' पराङ्मुखो लोकान् 'अत्येष्यति' अतिक्रम्य गमिष्यति'इति' अनेनाभि-प्रायेण। ततो भीतः प्रजापतिः 'तं' रसं 'परस्तात्' परभागे 'छन्दोभिः' गायत्र्यादिभिः 'पर्यगृह्णात्' परितो निरुद्धवान्। गायत्र्यादीनां मध्ये कस्याः सम्बन्धि रसं कया पर्यगृह्णादिति, तदुच्यते— गायत्र्याः सम्बन्धि रसं नाराशंस्या पर्यगृह्णात्। नरा-शंसशब्दो यस्या ऋगृजातावस्ति, सेयं 'नाराशंसी'। तथा त्रिष्टुभः सारं 'रैभ्या' रेभशब्दोपेतया ऋग्जात्या पर्यगृह्णात्। जगत्याः सारं 'पारिक्षित्या' परिक्षिच्छब्दोपेतया ऋग्जात्या पर्यगृह्णात्। अनुष्टुभः सारं 'कारव्यया' कारुशब्दोपेतया ऋग्जात्या पर्य-गृह्णात्। 'तत्' तस्मात्परिग्रहादूर्ध्वं पुनः 'छन्दःसु' गायत्र्यादिषु 'तं' रसम् 'अदधात्' अवस्थापितवान्॥

वेदनं प्रशंसति—"सरसैर्हास्य छन्दोभिरिष्टं भवति, सरसै-श्छन्दोभिर्यज्ञं तनुते, य एवं वेद"–इति। 'अस्य' वेदितुः दर्श-पूर्णमासादिकं सारयुक्तैर्गायत्र्यादिभिरिष्टं भवति, अथ अग्निष्टो-मादिकं सोमयज्ञं वेदिता सारयुक्तैश्छन्दोभिः 'तनुते' विस्तारयति॥

इदानीं कुन्तापगतगता ऋचो विधत्ते—"नाराशंसीः शंसति; प्रजा वै नरो वाक् शंसः, प्रजास्वेव तद्वाचं दधाति; तस्मादिमाः प्रजा वदन्त्यो जायन्ते य एवं वेद; यदेव नाराशंसीः"–इति। "इदं जनाः"–इत्याद्यास्तिस्रर्चो नाराशंस्यः (ऋ०पं०२.१.१–३.); तत्र "नराशंसस्तविष्यते"–इति नराशंसशब्दस्य श्रुतत्वात्। तास्ति-

स्वर्गो ब्राह्मणाच्छंसी शंसेत् *। तत्र नर इत्यनेन प्रजा विव चिता, शंस इत्यनेन वाक् विवचिता। अतस्तच्छंसनेन प्रजास्वेव वाच मवस्थापयति। 'तस्मात्' कारणादिमाः प्रजा लोके 'वदन्त्यः' वाग्व्यवहारयुक्ता उत्पद्यन्ते। य एवं वेद, तस्य वाचः व्यवहारक्षमाः प्रकाशयन्त इति शेषः। नाराशंसीरिति यदेवास्ति, तत् पूज्य मिति श्रुतेरभिप्रायः॥

ता ऋचः पुनः प्रशंसति— "शंसन्तो वै देवाय स्वर्गं लोक मायंस्तथैवैतद्यजमाना. शंसन्त एव स्वर्गं लोकं यन्ति"-इति। स्पष्टोऽर्थः॥

तच्छंसने किञ्चिद्विशेषं विधत्ते—"ता प्रगाह्यं शंसति, यथा वृषाकपिं; वार्षाकपं हि वृषाकपेस्तन्न्याय मेति"-इति। 'ताः' नाराशंसीस्तिस्रर्चः 'प्रगाह्यं' पादे पादे प्रग्रह्य, अवसाय शंसेत्; यथा वृषाकपिसूक्तं पादे पादे विगृह्य शंसति, तद्वदेतत् †। वृषाकपिसूक्ते प्रग्रहविधिरर्थसिद्धो द्रष्टव्यः। 'हि' यस्मात् कारणात् इद ऋचां शंसनं 'वार्षाकपं' वृषाकपिसम्बन्धं कर्त्तव्यम्, 'तत्' तस्मात्कारणात् 'वृषाकपेः' एतन्नामकस्य सूक्तस्य 'न्याय' प्रकारम् 'एति' प्राप्नोति। विग्रह एवात्र तन्न्यायः ‡॥

---

* नाराशंस्यादीनां भिन्दग्राथानानां विग्रहणं कुन्तापसूक्त मिति समाख्या। "तस्माद् (वृषाकपे) ऊर्ध्वं कुन्तापम्"-इति आश्व० श्रौ० ८ ३ ७।

† "तस्य (कुन्तापस्य) आदितश्चतुर्दश (कारव्यान्ता) विग्राह निनद शंसेत्"-इति आश्व० श्रौ० ८ ३ ८। इह त्वित उत्तर मेव निनर्दं विधास्यति।

‡ "अथ वृषाकपिं शंसेद यथा होताज्यायाश्चतुर्थे"-इति आश्व० श्रौ० ८ ३. ४। आज्यायधर्मास्तु अर्धर्चशंसनम्, विग्राह, निरथ्याश, न्यूङ्ख, निनर्दं, प्रतिगरश्चेति षट् (७ ११ १-२१)। अर्धर्चशंसनादिदेश वारयितुं वत उक्तम् "पच्छ्रमन्त्रिक '-इति (५)।

वृषाकपिसूक्ते न्यूङ्खनिनर्दावपि विहितौ, अतोऽत्रापि तदुभय-प्राप्तौ न्यूङ्खं निराकृत्य इतरं विधत्ते— "तासु न न्यूङ्खयेन्नीवीव नर्देत्, स हि तासां न्यूङ्ख"-इति। 'तासु' नाराशंसीषु न्यूङ्खं न कुर्यात्, किन्तु 'नीवीव नर्देदेव' विशेषेण निनर्द मेव कुर्यात्। 'सः' एव निनर्दः 'तासां' नाराशंसीनां न्यूङ्खस्थानीयः। तृतीय-पादस्य द्वितीयस्वरे त्रयोदशभिरोकारैस्तत्र चावसानं कृत्वा त्रयाणां त्रिमात्राणा मोकाराणा मुच्चारणं न्यूङ्ख (२१,२४ पृ०)। तृतीयपादस्य प्रथमाक्षर मनुदात्तत्वेन द्वितीयाक्षर मुदात्तत्वेनो-च्चारयेदिति यदस्ति, सोऽयं निनर्दः * ॥

ऋगन्तराणि विधत्ते—"रैभीः शंसति"-इति। रैभशब्दो-पेता ऋचो रैभ्य। "वच्यस्व रेभ वच्यस्व"-इत्याद्यास्तिस्रः ( ऋ० प० २. २. १-३. ), ताः शंसेत् ॥

ता ऋचः प्रशंसति—"रेभन्तो वै देवाश्च ऋषयश्च स्वर्गं लोक मायंस्तथैवैतद्यजमाना रेभन्त एव स्वर्गं लोकं यन्ति"-इति। 'रेभन्तः' शब्द कुर्वन्तः, कीर्तिं कुर्वन्त इत्यर्थः ॥

विग्रहादिकं विधत्ते—"ताः प्रगाह्यं शंसति, यथा वृषाकपिं; वार्षाकपं हि वृषाकपेस्तन्न्याय मेति; तासु न न्यूङ्खयेन्नीवीव नर्देत्स हि तासां न्यूङ्खः"-इति।

पूर्ववत् ऋगन्तराणि विधत्ते—"पारिक्षितीः शंसति"-इति। परिक्षिच्छब्दोपेताः "राज्ञो विश्वजनीनस्य"-इत्याद्यायतस्र ऋचः

---

* "तृतीयेषु पादेषूत्तम मनुदात्तपरं यत् प्रथमं तन्निनर्दत्। तदपि निदर्शनायो-दाहरिष्याम —'इदं जना उपश्रुत। नराशंसस्तविष्यते। षष्टिं सहस्रा नवतिं च कौरम आ रुशमेषु दद्महे'-इति"-इति आश्व० श्रौ० ८. ३. ८, १०। इह मकारो ऽनुदात्त, इकार उदात्त, सन्दर्भश्रुतिः।

पारिचित्यः; तासु "परिचितः चेम मकरत्"—इतिपरिचिच्छब्दस्य श्रुतत्वात्। ता ऋचः प्रशंसेत् ॥

ताः प्रशंसति— "अग्निर्वै परिचिदग्निर्हीमाः प्रजाः परिचेत्यग्निं हीमाः प्रजाः परिचियन्ति"—इति। तासृचु परिचिच्छब्देनाग्निरेवाभिधीयते। अग्निर्हीमाः सर्वाः प्रजाः दाहपाकादिना परिपालयन् 'चेति' निवसति, प्रजाश्चेमा अग्निं परितः सेवमानाः 'चियन्ति' निवसन्ति; अतः कर्त्तरि कर्मणि वा व्युत्पत्त्या अत्र अग्निः परिचिद्भवति ॥

वेदनं प्रशंसति—"अग्नेरेव सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद"—इति। सहवास-समानरूप-समानलोकत्वानि वेदिता प्राप्नोति ॥

तासामृचां श्रुतेन पूज्यत्वं दर्शयति—"यदेव पारिचितीः"—इति ॥

प्रकारान्तरेण ताः प्रशंसति— "संवत्सरो वै परिचित्, संवत्सरो हीमाः प्रजाः परिचेति; संवत्सरं हीमाः प्रजाः परिचियन्ति"—इति। अग्निवाक्यवद् व्याख्येयम् ॥

वेदनप्रशंसां प्रयाहविधिं च दर्शयति —"संवत्सरस्यैव सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद; ताः प्रयाहं शंसति, यथा वृषाकपि; वार्षाकपं हि वृषाकपेस्तन्न्याय मेति; तासु न न्यूंखयेन्नोवीव नर्दस्य हि तासां न्यूङ्खः"—इति। पूर्ववद् व्याख्येयम् ॥

ऋगन्तराणि विधत्ते— "कारव्याः शंसति"—इति। कारुशब्दोपेताः 'कारव्याः', "इन्द्रः कारु मबूबुधद्"—इत्याद्याश्चतस्रः ( ऋ० प० २. ४. १-४. ), ताः शंसेत् ॥

ताः प्रशंसति— "देवा वै यत् किञ्च कल्याणं कर्माकुर्व-

स्तत् कारव्याभिरवाप्नुवंस्तथैवैतद्यजमाना यत्किंच कल्याणं कर्म कुर्वन्ति, तत्कारव्याभिराप्नुवन्ति"–इति। 'कल्याणं' काम्यफलार्थं कर्म कृतवतां कारव्याभिर्ऋग्भिस्तत्फलप्राप्तिर्भवति ॥

विप्रश्चादिकं विधत्ते—"ताः प्रगाह्णं शंसति, यथा वृषाकपिं; वार्षाकपं हि वृषाकपेस्तथाय मेति; तासु न न्यूङ्खयेन्नीवीव नर्दम्त हि तासां न्यूङ्कः"–इति। पूर्ववद् व्याख्येयम् * ॥

ऋगन्तराणि विधत्ते— "दिशांक्लृप्तीः शंसति; दिश एव तत्कल्पयति"–इति। "यः सभेयो विदथ्यः"–इत्याद्या ऋचः (ऋ० प० २. ५. १–५.) दिशांक्लृप्तीः शंसेत्। प्राच्यादिदिग्वत्वात्, "ते देवाः प्रागकल्पयन्"–इति क्लृपिधातुयत्रणाच दिशांक्लृप्तित्वम्; तच्छंसनेन दिश एव 'कल्पयति' स्वप्रयोजनक्षमाः करोति ॥

तासां ऋचां सङ्ख्यां दर्शयति— "ताः पञ्च शंसति; पञ्च वा इमा दिशश्चतस्रस्तिरश्च एकोर्ध्वा"–इति। दिशांक्लृप्तिसञ्ज्ञकास्ता ऋचः पञ्च शंसेत्। यर्थमा उपलभ्येत्वाद्या दिशः पञ्चसङ्ख्याका एव; ऐन्द्री, याम्यी, वारुणी, सौम्यी, चेत्येवं 'तिरश्चः' तिर्यग्वस्थिता दिशश्चतस्रः, ऊर्ध्वं चैका; इत्थं पञ्च सङ्ख्या प्रपद्यते ॥

न्यूङ्खनिनर्दौ निषेधति— "तासु न न्यूङ्खयेन्नैव च निनर्देन्नेदिमा दिशो न्यूंखयानीति"–इति। 'तासु' दिशांक्लृप्तिषु न्यूंखं न कुर्यात्, तथा निनर्दं मपि नैव कुर्यात्। 'एव', 'च' इति पदद्वयं विषययोः समुच्चयार्थम्। न्यूंखवर्ज्जने कोऽभिप्रायः, सोऽभिधीयते— इमा दिशो 'नेत् न्यूंखयानि' नैव चालयानि 'इति' अनेनाभिप्रायेण। न्यूंखनिनर्दयोरभिधानादेव वर्ज्जनसिद्धौ निषेधो नित्यानुवादः, पूर्वमन्यदृष्टान्तेन शङ्कितयोर्निषेधार्थो वा ॥

* "चतुर्दशाक्षम् (कारव्यचतुर्थाम्) एकेन दाभाच विग्रहः"–इति चान्द्र० श्रौ० ८.३.१२।

शंसने निषेधं दर्शयति— "ता अर्द्धर्चशः शंसति, प्रतिष्ठाया एव"–इति। पूर्वासु मृचां पादे पादे अवसाय शंसन मुक्तम्, तासु दिशांक्लृप्तीरर्द्धर्चे ऽर्द्धर्चे ऽवसाय शंसेत्। अर्द्धर्चस्य प्रत्यृचं द्वित्वात्तच्छंसनं प्रतिष्ठायै सम्पद्यते ॥

ऋगन्तराणि विधत्ते— "जनकल्पाः शंसति ; प्रजा वै जनकल्पा, दिश एव तत्कल्पयित्वा तासु प्रजाः प्रतिष्ठापयति"–इति। "योऽनाक्ताचः"–इत्याद्याः षड्ऋचो जनकल्पाभिधाः ( ऋ० प० २. ६. १–६. ), ताः शंसेत्। अनाक्ताच इत्यादिना पुरुषविशेषानुपन्यस्यते †, ताः कल्पेषु ‡ कल्पशब्दाभिधानादेव 'जनकल्पाः'; तासां प्रजारूपत्वात्, पूर्वोक्तदिग्रूपाभिर्ऋग्भिर्दिश सम्पाद्य 'तासु' दिक्षु प्रजाः प्रतिष्ठापयति ॥

पूर्ववत् न्यूङ्खनिनर्दनिषेध मर्द्धर्चेऽवसानं च दर्शयति— "तासु न न्यूङ्खयेन्नैवेव च निनर्देन्नेदिमाः प्रजा न्यूङ्खयानीति ; ता अर्द्धर्चशः शंसति प्रतिष्ठाया एव"–इति ॥

ऋगन्तराणि विधीयन्ते— "इन्द्रगाथाः शंसतीन्द्रगाथाभिर्वै देवा असुरानभिगायायैनानत्यायंस्तथैवैतद्यजमाना इन्द्रगाथाभिरेवाप्रियं भ्रातृव्य मभिगायायैन मति यन्ति"–इति। "यदिन्द्रो दाशराज्ञे"–इत्याद्याः पञ्चर्च इन्द्रगाथाभिधाः ( ऋ० प० २. ७. १–५. ), ताः शंसेत्। इन्द्रो गाप्यते कथ्यते यास्वृक्षु ताः 'इन्द्रगाथाः', ताभिर्देवा असुरानभिगाय योद्धु माभिमुख्येन प्राप्य युद्धेनैनान् 'अत्यायन्' अतिक्रान्तवन्तः, जयं प्रापा इत्यर्थः। देववद् यजमाना अपि एताभिर्वैरिणं जयन्ति ॥

---

* "प्रैषोऽर्द्धर्चशः"–इति आश्व० श्रौ० ८. ३. १३।

†, ‡ जनकल्पाभिधास ऋक्षु द्रष्टव्यम्।

पूर्ववदर्धर्चेऽवसानं विधत्ते— "ता अर्धर्चशः शंसति, प्रतिष्ठाया एव"—इति ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां पञ्चमाध्याये
(त्रिंशाध्याये) षष्ठः खण्डः ॥ ६ (३२) ॥

॥ अथ सप्तमः खण्डः ॥

एतशप्रलापं शंसत्येतशो ह वै मुनिरग्नेरायुर्ददर्श यज्ञस्यायातयाम मिति हैक आहुः सोऽब्रवीत्पुत्रान् पुत्रका अग्नेरायुरदर्शं तदभिलपिष्यामि यत् किञ्च वदामि तन्मे मा परिगातेति स प्रत्यपद्यतैता अश्वा आप्लवन्ते प्रतीपं प्रातिसत्वन मिति तस्याभ्यग्निरैतशायन एत्याकाले ऽभिहाय मुख मप्यगृह्णादृदपन्नः पितेति तं होवाचापेह्य लसो ऽभूर्यो मे वाच मवधीः शतायुं गा मकरिष्यं सहस्रायुं पुरुषं पापिष्ठां ते प्रजां करोमि यो मेत्थ मसक्था इति तस्मादाहुरभ्यग्नय ऐतशायना और्वाणां पापिष्ठा इति तं हैके भूयांसं शंसन्ति स न निषेधेयावत्कामं शंसेत्येव ब्रूयादायुर्वा एतशप्रलाप

आयुरेव तद्यजमानस्य प्रतारयति य एवं वेद यद्वै-
वैतशप्रलापा३ः छन्दसां ह्येष रसो यदेतशप्रलाप-
श्छन्दस्स्वेव तद्रसं दधाति सरसैर्हास्य छन्दोभिरिष्टं
भवति सरसैश्छन्दोभिर्यज्ञं तनुते य एवं वेद यद्वैवै-
तशप्रलापा३ः अयातयामा वा अक्षितिरैतशप्र-
लापो ऽयातयामा मे यज्ञे ऽसदक्षितिर्मे यज्ञे ऽस-
दिति तं वा एत मैतशप्रलापं शंसति पदावग्राहं
यथा निविदं तस्योत्तमेन पदेन प्रणौति यथा निविदः
प्रवह्लिकाः शंसति प्रवह्लिकाभिर्वै देवा असुरान्
प्रवह्लाय्यैनानत्यायंस्तथैवैतद्यजमानाः प्रवह्लिकाभि-
रेवाप्रियं भ्रातृव्यं प्रवह्लाय्यैन मति यन्ति ता अर्द्ध-
र्चश: शंसति प्रतिष्ठाया एवाजिज्ञासेन्याः शंस-
त्याजिज्ञासेन्याभिर्वै देवा असुरानाज्ञायाथैनान-
त्यायंस्तथैवैतद्यजमाना आजिज्ञासेन्याभिरेवाप्रियं
भ्रातृव्य माज्ञायाथैन मति यन्ति ता अर्द्धर्चशः शंसति
प्रतिष्ठाया एव प्रतिराधं शंसति प्रतिराधेन वै
देवा असुरान्प्रतिराध्याथैनानत्यायंस्तथैवैतद्यजमानाः
प्रतिराधेनैवाप्रियं भ्रातृव्यं प्रतिराध्याथैन मति
यन्त्यातिवादं शंसत्यतिवादेन वै देवा असुरानत्यु-
द्याथैनानत्यायंस्तथैवैतद्यजमाना अतिवादेनैवाप्रियं

* "तद्राधं" क।

भ्रातृव्य मत्युद्यार्थैन मति यन्ति त मईचेंशः शंसति प्रतिष्ठाया एवं ॥ ७ (३३) ॥

कुन्तापनामकं विंशदृचं सूक्तं विधायैतशप्रलापनामकं समति-सङ्ख्याकं पदसमूहं ( ऋ० प० २. ८. १–१०.) विधत्ते—"ऐतश-प्रलापं शंसति"–इति। ऐतशाख्येन मुनिना दृष्टः 'ऐतशः', अनन्वितानामर्थानां वचसां जापः 'प्रलापः'; तं ब्राह्मणाच्छंसी शंसेत् ॥

तमेतशप्रलापं स्तोतुमाख्यायिकामाह— "ऐतशो ह वै मुनिरग्नेरायुर्ददर्श, यज्ञस्यायातयाममिति हैक आहुः; सोऽब्रवीत् पुत्रान्,— पुत्रका अग्नेरायुरदर्शं, तदभिलपिष्यामि, यत्किंच वदामि, तन्मे मा परिगातेति, स प्रत्यपद्यतैता अश्वा आप्लवन्ते, प्रतीपं प्रातिसत्वनमिति"–इति। ऐतशनामकः कश्चित् मुनिः 'अग्नेरायुः'–इत्येतन्नामकं मन्त्रकाण्डं ददर्श। पूर्व-वदग्नेः प्रियत्वात् तस्य काण्डस्याग्नेरायुरिति नाम सम्पन्नम्। 'एके' याज्ञिकाः 'यज्ञस्यायातयामम्'–इति तस्य मन्त्रकाण्डस्य नामधेयमाहुः। पुनः-पुनः-पठितैः सायंकैर्मन्त्रजातैरसौ यज्ञो गतसारोऽभूत्, तस्य यज्ञस्यालस्यपरिहारेण सारोत्पादनादस्य-स्यैतशप्रलापरूपस्य मन्त्रकाण्डस्य 'अयातयामम्'–इति नाम सम्प-न्नम्। 'सः' मुनिरैतशः स्वकीयान् 'पुत्रान्' प्रत्येवमब्रवीत्,— हे 'पुत्रकाः' कुत्सिताः पुत्राः! अहमग्नेरायुरित्येतन्नामकं मन्त्र-काण्डं दृष्टवानस्मि, तदहं भवतामग्रे अभिलपिष्यामि। तस्मिन् मद्वाक्यैस्य कस्याप्यभावात् यत् किंचिद्वाङ्मात्रं वदामि, 'तत्' मे वचनं यूयं 'मा परिगात' मम वचनस्य निन्दां मा कुरुत। एवं

पुत्रान् मन्त्रयित्वा 'सः' मुनिः 'प्रत्यपद्यत' प्रलापं प्रारब्धवान् । सप्ततिसङ्ख्याकपदरूपे तस्मिन् "एता अश्वा आप्लवन्ते"–इति प्रथमं पदम्, "प्रतीपम्प्रातिसत्वनम्"–इति द्वितीयं पदम् । 'इति'शब्दः प्रदर्शनार्थः, इत्यादिकं सप्ततिपदसमूहं मुक्तवान् * ॥

तदीयपुत्रवृत्तान्तं दर्शयति— "तस्याभ्यग्निरैतशायन एत्याकाले ऽभिहाय मुख मप्यगृह्णादद्दपन्नः पितेति"–इति । तस्य मुख मित्यन्वयः । ऐतशस्य पुत्रः 'ऐतशायनः', स च 'अभ्यग्निः' –इति एतन्नामकः, एतादृशः सः प्रलपन्तं पितरं दृष्ट्वा सहसा समेत्य, तदानीम् 'अकाले' प्रलापसमाप्तिकालाभावेऽपि 'अभिहाय' आभिमुख्येनोत्थाय तस्य पितुर्मुखं मपि 'अग्रहात्' हस्तेनाच्छादितवान् । केनाभिप्रायेणेति, सोऽभिधीयते—'नः' अस्माकं पिता तदानीम् 'अद्दपत्' दर्पं प्राप्तः, उन्मत्त इत्यभिप्रायेण ॥

अथ मुनेर्वृत्तान्त माह —"तं होवाचापेह्यलसो ऽभूर्यो मे वाच मवधीः, शतायुं गां मकरिष्यं, सहस्रायुं पुरुषं, पापिष्ठां ते प्रजां करोमि, यो मेत्थ मसक्था इति"–इति । 'तम्' अभ्यग्निनामकं पुत्रं मुखपिधाने प्रवृत्तं पिता एव मुवाच । हे पुत्र ! त्वम् 'अपेहि' अस्माद् देशादपागच्छ, 'अलसोऽभूः' मदीयं श्रोतु मालस्ययुक्तस्त्व मभूः । यस्त्वं मे मदीयां वाचम् 'अवधीः' मुखपरिधानेन विनाशितवानसि ; अहं मुन्मत्त इति तव बुद्धिः ; न त्वहं मुन्मत्तः, किन्तु मन्त्रकाण्ड मीदृशम् । सामर्थ्यन्तु मदीयं शृणु,— अश्वायुष्यं गां 'शतायुं' शतसंवत्सरायुष्काम् 'अकरिष्यं' कर्त्तुं शक्तोमि, तथा शतायुं पुरुषं 'सहस्रायुं' सहस्रसंवत्सरायुष्कं कर्त्तुं

* "एता अश्वा आप्लवन्त इति सप्ततिपदानि"–इत्यादीनि शाङ्ख० श्रौ० ८.३.१४—१७ । 'सप्ततिपदं मध्यान्तरे कश्चित् षट्सप्ततिपदानि समाप्ति पदर्शनार्थम्'–इति तत्रषी ।

शक्नोमि। अतो मा मवजानतस्ते 'प्रजां' पुत्रादिरूपां 'पापिष्ठाम्' अतिशयेन दारिद्र्यादिहेतुयुक्तां करोमि। यस्त्वं मा मित्रम् 'असकृथाः' अभिभूतवानसि, तस्मात्तव शापो युक्त इत्येवं पितोवाच ॥

पितुः शापं लोकप्रसिद्धया द्रढ़यति—"तस्मादाहुरश्यग्नय ऐतशायना और्वाणां पापिष्ठा इति"–इति। यस्मात् पित्रा शापो दत्तः, 'तस्मात्' कारणात् तद्वृत्तान्ताभिज्ञा जना एव माहुः,— 'और्वाणाम्' और्वगोत्रोत्पन्नानां पुरुषाणां मध्ये 'ऐतशायनाः' ऐतशस्य मुनेः सम्बन्धिनः 'अभ्यग्नयः' अभ्यग्निप्रमुखाः पुरुषाः 'पापिष्ठाः' अत्यन्तपापयुक्ता इति * ।

ऐतशप्रलापस्य बाहुल्यं विधत्ते—"तं हैके भूयांसं शंसन्ति' –इति। 'तम्' ऐतशप्रलाप मभिज्ञाः केचिदाज्ञिकाः अतिशयेन बहुलं शंसन्ति। तथाचाश्वलायन आह— "सप्ततिं पदान्यष्टादश वा"–इति (श्रौ० ८. ३. १४, १५.)॥

तत्र किञ्चिन्नियमं विधत्ते— "स न निषेधेद्यावत्कामं शंसेत्येव ब्रूयादायुर्वा ऐतशप्रलापः"–इति। 'सः' यजमान औत्सुक्येनैतशप्रलापं शंसन्तं ब्राह्मणाच्छंसिनं 'न निषेधेत्' माभूदयं प्रलाप इति निषेधं न कुर्यात्, किन्तु 'यावत्कामं' त्वदीयेच्छानुसारेण शंस इत्येव ब्रूयात्। अय मैतशप्रलापः आयुःस्वरूपः; तस्मादत्र प्रवर्त्तमानस्य निषेधनं न युक्तम् ॥

वेदनं प्रशंसति—"आयुरेव तद्यजमानस्य प्रतारयति य एवं वेद"–इति ॥

प्लुतेन पूज्यत्वं दर्शयति— "यदेवैतशप्रलापा३:"–इति ॥

* "तस्मादैतशायना आजानेया, भृगूणां पापिष्ठा "–इति शाङ्खा० ब्रा० ३०.५।

प्रकारान्तरेण प्रशंसति— "छन्दसां हैव रसो यदेतशप्रलाप-श्छन्दस्स्वेव तद्रसं दधाति"–इति। योऽय मेतशप्रलापः, स एषः 'छन्दसां' वेदानां मध्ये 'रसः' सारः; अत एव तच्छंसनेन 'छन्दस्सु' वेदेष्वेव रस मवस्थापयति॥

वेदनं प्रशंसति— "सरसैर्हास्य छन्दोभिरिष्टं भवति, सर-सैश्छन्दोभिर्यज्ञं तनुते य एवं वेद"–इति। पूर्ववद् व्याख्येयम्॥

पुनरपि श्रुतेन पूज्यत्वं दर्शयति— "यद्वेवैतशप्रलापा३ः"–इति। 'उ' अपिचेत्यर्थः॥

प्रकारान्तरेण प्रशंसति— "अयातयामा वा अक्षितिरेतश-प्रलापो ऽयातयामा मे यज्ञे ऽसदक्षितिर्मे यज्ञे ऽसदिति"–इति। योऽय मेतशप्रलापः, स 'यातयामत्वम्' असारत्वं, तद्वैपरीत्यात् 'अयातयामः' सारयुक्त इत्यर्थः। अत एव 'अक्षितिः' अक्षय-फलहेतुः। तस्मान्मे यज्ञे प्रयोगोऽयम् 'अयातयामा' रसतः सरसः अस्तु, तथा मे यज्ञे प्रयोगोऽयम् 'अक्षितिः' रसवदक्षय्य-फलहेतुत्व मभिप्रेत्य शंसेत्॥

तत्रैकस्मिन् पदे ऽवसानं विधत्ते— "तं वा एत मेतशप्रलापं शंसति, पदावग्राहं यथा निविदम्"–इति। पदे पदे अवगृह्य यथा निविदं शंसति, तथैवैतशप्रलापं पदे पदे अवगृह्यावगृह्य शंसेत्॥

अन्ते प्रणवं विधत्ते— "तस्योत्तमेन पदेन प्रणौति, यथा निविदः"–इति। निविदः पदानां शंसने चरमे पदे यथा प्रणवं करोति। तद्वदत्राप्युत्तमे पदे प्रणवं कुर्यात्॥

एतशप्रलापं विधाय प्रवह्लिकाख्या ऋचो विधत्ते— "प्रव-ह्लिकाः शंसति; प्रवह्लिकाभिर्वै देवान् असुरान् प्रवह्लायैना

नयायंस्तथैवैतद्यजमानाः प्रवह्लिकाभिरेवाप्रियं भ्रातृव्यं प्रवह्लार्थेन मति यन्ति"–इति। "विततौ किरणौ द्वौ"–इत्याद्याः षड् नुष्टुभः ( ऋ० प० २.९.१–६.) प्रवह्लिकाख्याः। पुरा किलैताभिः ऋग्भिर्देवाः असुरान् 'प्रवह्ला' अमनस्कं प्रिय मुक्त्वा, ततस्तानसुरानतिक्रम्यागच्छत्। प्रवह्लनं निर्हृदयं सान्त्ववचन मित्युक्तवान्। अमनःपूर्वकेण प्रियवचनेन विरोधिनो ऽसुरान् वञ्चयित्वा तदीयदेशं मतिक्रम्य गतवन्त इत्यर्थः। देवदृष्टान्तेन यजमानाना मपि तथैव भवति * ॥

तास्वृक्षु अर्धर्चं अवसानं विधत्ते—"ता अर्धर्चशः शंसति, प्रतिष्ठाया एव"–इति। अर्धर्चयोर्द्वित्वात् पादद्वयसाम्येन प्रतिष्ठात्वम् ॥

शाखान्तरगताः प्रवह्लिकाख्या ऋचो विधाय तथैव शाखान्तरगता आजिज्ञासेन्या ऋचो विधत्ते— "आजिज्ञासेन्याः शंसत्याजिज्ञासेन्याभिर्वै देवा असुरानाज्ञायाथैनानत्यायंस्तथैवैतद्यजमाना आजिज्ञासेन्याभिरेवाप्रियं भ्रातृव्य माज्ञायाथैन मति यन्ति; ता अर्धर्चशः शंसति, प्रतिष्ठाया एव"–इति। आकारोऽत्र अवग्रब्दार्थे वर्तते; आज्ञातु मवज्ञातु मिच्छा 'आजिज्ञासा', ता मर्हन्तीति तत्साधनीभूता ऋचः. 'आजिज्ञासेन्याः' आज्ञायासुराणा मवज्ञां कृत्वेत्यर्थः। अन्यत्पूर्ववद् व्याख्येयम्। "इहेत्थ प्रागपागुदग्"–इति शाखान्तरपठितास्तस्र ऋच आजिज्ञासेन्याः ( ऋ० प० २. १०. १–४.) ॥

तासां शंसनं विधाय प्रतिराधाख्यस्य मन्त्रस्य शंसनं विधत्ते—"प्रतिराधं शंसति; प्रतिराधेन वै देवा असुरान् प्रतिराध्याथैना-

* आश्व० श्रौ० ८. ३. १८।

नत्वायंस्तथैवैतद्यजमानाः प्रतिराधेनैवाप्रियं भ्रातृव्यं प्रतिराध्याथैन मति यन्ति"—इति । सूत्रे "भुगित्यभिगत इति त्रीणि पदानि"—इत्यादिना ( आश्व० श्रौ० ८. ३. २२. ) योऽयं मन्त्र उक्तः, सोऽयं 'प्रतिराधः' ( ऋ० प० २. ११. १. )। विरोधिनां राधं समृद्धिं प्रतिबध्नाति, प्रतिराधत्वम् ; 'असुरान् प्रतिराध्य' तदीयां समृद्धिं प्रतिबध्येत्यर्थः ॥

प्रतिराधाख्यं शाखान्तरगतं मन्त्रं विधाय *, अतिवादाख्यं शाखान्तरगत मेव † मन्त्रं विधत्ते—"अतिवादं शंसत्यतिवादेन वै देवा असुरानत्युद्याथैनानत्यायंस्तथैवैतद्यजमाना अतिवादेनैवाप्रियं भ्रातृव्य मत्युद्याथैन मति यन्ति ; त मर्धर्चशः शंसति प्रतिष्ठाया एव"—इति। "वीमे देवा अक्रंसत"—इत्याद्यनुष्टुप् शाखान्तरपठिता अतिवाद इत्युच्यते ( ऋ० प० २. १२. १. )। विरोधिनां उल्कार प्रतिलङ्घ्याधिक्षेपरूपो वादः 'अतिवादः', तस्मासर्थसाधनत्वात् क्रमप्यतिवाद इत्युच्यते । 'अत्युद्य' अतिक्रम्योक्त्वा, अधिक्षिप्येत्यर्थः । अन्यत् पूर्ववद् व्याख्येयम् ‡ ॥ ७ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां पञ्चमाध्याये
( त्रिंशाध्याये ) सप्तमः खण्डः ॥ ७ ( ३३ ) ॥

---

*, † शाखान्तरगतमन्त्रस्य विधाने तत्स्वरूपज्ञानायैतद्ब्राह्मणे एव तत्पठनस्यौचित्यम्, यथा पठ्यते चेह सर्वत्रैव । दृश्यते चानयोः पाठः परिशिष्टग्रन्थे कुन्तापाध्याये । आश्वलायनेनापि नायं प्रपठ्य विहितः, प्रत्युत प्रतीकग्रहणत एव ( आश्व० श्रौ० ८. ३. २१, २२ )। यदिमौ मन्त्रौ न शाखान्तरीयावित्यस्याकम् ।

‡ "वीमे देवा अक्रंसतेत्यनुष्टुप्"—इति आश्व० श्रौ० ८. ३. २६, २७ ।

॥ अथ अष्टमः खण्डः ॥

देवनीथं शंसत्यादित्याश्च ह वा अङ्गिरसश्च स्वर्गे लोके ऽस्पर्धन्त वयं पूर्व एष्यामो वय मिति ते हाङ्गिरसः पूर्वे श्वः सुत्यां स्वर्गस्य लोकस्य ददृशुस्ते ऽग्निं प्रजिघ्युरङ्गिरसां वा एको ऽग्निः परेह्यादित्येभ्यः श्वः सुत्यां स्वर्गस्य लोकस्य प्रब्रूहीति ते हादित्या अग्नि मेव दृष्ट्वा सद्यः सुत्यां स्वर्गस्य लोकस्य ददृशुस्तानेत्याब्रवीच्छ्वः सुत्यां वः स्वर्गस्य लोकस्य प्रब्रूम इति ते होचुरथ वयं तुभ्यं सद्यः सुत्यां स्वर्गस्य लोकस्य प्रब्रूमस्त्वयैव वयं होत्रा * स्वर्गं लोक मेष्याम इति स तथेत्युक्त्वा प्रत्युक्तः पुनराजगाम ते होचुः प्रावोचा३ः इति प्रावोच मिति होवाचाथो मे प्रति प्रावोचन्निति नो हि न प्रत्यज्ञास्था३ः इति प्रति वा अज्ञास मिति होवाच यशसा वा एषो ऽभ्यैति य आर्त्विज्येन तं यः प्रतिरुन्धेद्यशः स प्रतिरुन्धेत् तस्मान्न प्रत्यरौत्सीति यदि त्वष्टादपोज्जिगांसेद्यज्ञे-नाष्टादपोदियात् यदि त्वयाज्यः † स्वय मपोदितं तस्मात् ॥ ८ (३४) ॥

---

* "होता"—इति सविसर्गपाठः क ख ग-पुस्तकेषु।

† स्व विसर्गाभाव आदिषु ग घ पुस्तकेषु।

अथ देवनीथाख्यं समुदयानां पदानां समूहं विधत्ते—"देवनीथं शंसति"–इति। सूत्रकारेण "आदित्या ह जरितरङ्गिरोभ्यो दक्षिणा मनयन्निति समुदय पदानि"–इति (आश्व० श्रौ० ८. ३. २५.) योऽयं पदसमूहो ऽभिहितः, स 'देवनीथः' (ऋ० प० २. १३. १–१७.); देवलोकनयनहेतुत्वात् ॥

तं प्रशंसितु माख्यायिका माह—"आदित्याश्च ह वा अङ्गिरसश्च स्वर्गे लोके ऽस्पर्धन्त,— वयं पूर्व एष्यामो वय मिति; ते हाङ्गिरसः पूर्वे श्वः सुत्यां स्वर्गस्य लोकस्य ददृशुस्ते ऽग्निं प्रजिघ्युरङ्गिरसां वा एको ऽग्निः परेह्यादित्येभ्यः श्वः सुत्यां स्वर्गस्य लोकस्य प्रब्रूहीति; ते हादित्या अग्नि मेव दृष्ट्वा सद्यः सुत्यां स्वर्गस्य लोकस्य ददृशुस्तानेत्याब्रवीच्छ्वः सुत्या वः स्वर्गस्य लोकस्य प्रब्रूम इति; ते होचुरथ वयं तुभ्यं सद्यः सुत्यां स्वर्गस्य लोकस्य प्रब्रूमस्त्वयैव वयं होत्रा स्वर्गं लोक मेष्याम इति; स तथेत्युक्त्वा प्रत्युक्तः पुनराजगाम"–इति। अदितेः पुत्राः 'आदित्याः' देवाः, 'अङ्गिरसः' महर्षयः; ते द्विविधाः स्वर्गे लोके प्रति परस्पर मस्पर्धन्त। तत्रादित्या एव मुक्तवन्तः,— वय मेव 'पूर्वे' प्रथमं प्रवृत्ताः सोमयाग मनुष्ठाय स्वर्गं मेष्याम इति। तथा अङ्गिरसोऽपि वय मेव 'पूर्वे' प्रथमं प्रवृत्ताः स्वर्गं गमिष्याम इत्यवोचन्। तदानीं 'ते' अङ्गिरसो महर्षयः 'पूर्वे' प्रथमं प्रवृत्ताः सन्तः स्वर्गस्य लोकस्य निमित्तभूतां 'सुत्यां' सोमाभिषवं 'श्वो ददृशुः' परेद्युः करिष्याम इति निश्चितवन्तः। निश्चित्य च 'ते' अङ्गिरसः आदित्यानां समीपे स्वकीय मग्निं 'प्रजिघ्युः' प्रहितवन्त इत्यर्थः। अङ्गिरसा मेव महर्षीणां मध्ये अग्निनामको महर्षिरेकोऽस्ति, तं प्रत्येव मुक्तवन्तः। हे अग्ने! त्वं 'परेहि' परागच्छ। आदित्यानां समीपे

गत्वा 'श्वः सुत्यां' परेद्युरस्माभिः करिष्यमाणं सोमयागं, स्वर्गस्य लोकस्य निमित्तभूतम्, आदित्येभ्यः प्रब्रूहि। हे आदित्या ! परेद्युरङ्गिरसः सुत्यां करिष्यन्ति, यूय मागत्यार्त्विज्यं कुरुतेति कथयेत्यर्थः। 'ते' त्वादित्या दूरादागच्छन्त मग्निं दृष्ट्वैव तदभिप्राय मवगत्य भविष्यतस्तदीययज्ञात् पूर्वं मेव स्वर्गस्य लोकस्य साधनभूतां 'सद्यः सुत्याम्' अद्यतनसोमयागं कर्मविशेषं 'ददृशुः' निश्चितवन्तः। तदानीं मग्निः 'तान्' आदित्यान् 'एत्य' प्राप्येदं वचन मब्रवीत्,— हे आदित्याः। स्वर्गस्य लोकस्य साधनभूतां मङ्गिरोभिः करिष्यमाणां श्वः सुत्यां 'वः' युष्मभ्यं 'प्रब्रूमः' अहं प्रब्रवीमि— यूय मागत्यार्त्विज्यं कुरुतेति। ततः 'ते' आदित्या अग्नि मूचुः। 'अथ' तद्वचनश्रवणानन्तरं वयं तुभ्यं ब्रूमः,— स्वर्गस्य लोकस्य साधनभूता सुत्या अस्माभिः सद्यः क्रियते ; तस्मादिदानीं मागतेन त्वयैव 'होत्रा' आर्त्विज्यं कुर्वता सह वयं प्रथमतः स्वर्गं लोक मेष्याम इति। सोऽग्निस्तथेत्युक्त्वा 'प्रत्युक्तः' तैरादित्यैरुक्तं प्रतिवचनं प्राप्तः, स्वकीयाना मङ्गिरसां समीप माजगाम ॥

अङ्गिरसा मग्नेश्च परस्परं संवादं दर्शयति—"ते होचुः प्रावोचा३ः इति ; प्रावोच मिति होवाचाथो मे प्रति प्रावोचन्निति ; नो हि न प्रत्यज्ञास्था३ः इति ; प्रति मा अज्ञास मिति होवाच"— इति। 'ते' त्वाङ्गिरसस्त मग्नि मूचुः,— हे अग्ने ! त्व मादित्याना मग्रे किं मस्मदीयं मभिप्रायं प्रावोचाः ? इति। प्लुतिः प्रश्नार्था। सोऽग्निस्त मभिप्रायं प्रावोच मित्युक्त्वा पुनरप्येतदुवाच,—'अथ' अनन्तरं 'मे' मम 'प्रति प्रावोचन्' त आदित्याः प्रत्युत्तर मेव मुक्तवन्त इति। तदीया मुक्ति मनूदितवान्। ता मुक्तिं श्रुत्वा तेऽङ्गिरस एवं पप्रच्छुः,— हे अग्ने ! 'नो हि न प्रत्यज्ञास्था३ः ?'

प्रतिज्ञान मार्त्विज्याङ्गीकारः, तन्निषेधो ऽनङ्गीकारः, तस्यापि निषेधः अवश्याङ्गीकारः ; किं मदीयमार्त्विज्यं परिहृत्य अङ्गीकृतवानसि ? प्लुतिः प्रश्नार्था । ततोऽग्निः अहं तत् 'प्रत्यज्ञास मेव' प्रतिज्ञा अङ्गीकारं कृतवानित्युक्तवान् ॥

अङ्गिरसा मनभीष्टस्यापि स्वकीयार्त्विज्यस्याङ्गीकारे युक्तिं दर्शयति —"यजस्व मा यजो ऽभ्येति, य आर्त्विज्येन ; तं यः प्रतिरुन्ध्याद् यज्ञः स प्रतिरुन्ध्येत् ; तस्मान्न प्रत्यरौत्सीति"—इति । 'यः' पुमानार्त्विज्येन चरति, एष पुरुषो यज्ञस्यैव युक्तः 'अभ्येति' अभितः सञ्चरति । आर्त्विज्य मत्यन्तं यज्ञद्वार मित्यर्थः । 'यः' पुमान् परेण प्रार्थित मार्त्विज्यं परित्यज्य 'तं' तदीययागं 'प्रतिरुन्ध्येत्' यागस्य प्रतिरोधं कुर्यात्, स पुमान् स्वकीयं याग एव 'प्रतिरुन्ध्येत्' विनाशयेत् । 'तस्मात्' कारणादहं 'न प्रत्यरौत्सि' तदीययज्ञस्य प्रतिरोधं न कृतवानस्मि, किन्त्वार्त्विज्यं मयाङ्गीकृत मिति ॥

तर्हि कीदृशे विषये परिहर्तव्य मार्त्विज्य मित्याशङ्क्य परिहारयोग्यं विषयं दर्शयति—"यदि त्वस्मादपोज्जिगांसेद्यज्ञेनास्मादपोद्दियाद्; यदि त्वयाज्यः, स्वय मपोद्दित तस्मात्"—इति । पूर्वं त्वार्त्विज्यं परिहर्तुं मशक्य मित्युक्तम्, तद्वैलक्षण्यार्थः 'तु'-शब्दः । यदि कथञ्चिद् 'अस्माद्' आर्त्विज्यात् 'अपोज्जिगांसेत्' अपेत्योद्गन्तु मिच्छेत्, तदानीं 'यज्ञेन' स्वकीयेन निमित्तभूतेन 'अस्माद्' आर्त्विज्याद् 'अपोद्दियात्' अपक्रम्योद्गच्छेद् । यस्मिन् दिने त्वं यज्ञं करिष्यसि, तस्मिन्नेवाह मपि करिष्यामीत्युक्त्वा तदार्त्विज्यं परिहर्तुं शक्यम् । एककालीनस्वकीयानुष्ठान मेकं परिहार-निमित्तम् । निमित्तान्तर मप्युच्यते— 'यदि तु' यदि कथञ्चिद् 'अयाज्यः' यागार्थी पुरुषः शास्त्रनिषेधाद् अयोग्यः स्यात्,

तादृशादयाज्यात् पुरुषात् स्वकीय मार्त्विज्यं 'स्वय मपोदितं' शास्त्रेणैव निषिद्धम्; तादृशे विषये नास्त्यार्त्विज्यपरिहारे दोष इत्यर्थः ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां पञ्चमाध्याये
( त्रिंशाध्याये ) अष्टमः खण्डः ॥ ८ ( ३४ ) ॥

---

॥ अथ नवमः खण्डः ॥

ते ह्यादित्यानङ्गिरसो ऽयाजयंस्तेभ्यो याजयद्भ्य इमां पृथिवीं पूर्णां दक्षिणाना मददुस्तानियं प्रतिगृहीतातपत्तान्यवृञ्जन्त्सा (हि ०) सिंही भूत्वा विजृम्भती जनानचरत्तस्याः शोचत्या इमे प्रदराः प्रादीर्यन्त ये ऽस्या इमे प्रदराः समेव हैव ततः पुरा तस्मादाहुर्न निवृत्तदक्षिणां प्रतिगृह्णीयान्नेन्मा शुचा विद्धा शुचा विध्यादिति यदि त्वेनां प्रतिगृह्णीयादप्रियायैनां भ्रातृव्याय दद्यात्परा हैव भवत्यथ योऽसौ तपतीँ३ एषो ऽश्वः श्वेतो रूपं कृत्वाश्वाभिधान्यपिहितेनात्मना प्रतिचक्रम इमं वो नयाम इति स एष देवनीथो ऽनूच्यत आदित्या ह जरित-

* "हि" नास्ति क पुस्तकादन्यत्र ।

रङ्गिरोभ्यो दक्षिणामनयन्। तां ह जरितर्नः प्रत्या-यन्निति न हि त इमां प्रत्यायंस्तामु ह जरितः प्रत्यायन्निति प्रति हि तेऽमु मायंस्तां ह जरितर्नः प्रत्यगृभ्णन्निति न हि त इमां प्रत्यगृभ्णंस्तामु ह जरितः प्रत्यगृभ्णन्निति प्रति हि तेऽमु मगृभ्ण-न्नहा नेतसन्न विचेतनानीत्येष ह वा यज्ञं विचेत-यिता यज्ञा नेतसन्न पुरोगवास इति दक्षिणा वै यज्ञानां पुरोगवी यथा ह वा इदं मनो पुरोगवं रिष्यत्येवं हैव यज्ञोऽदक्षिणो रिष्यति तस्मादाहु-र्दातव्यैव यज्ञे दक्षिणा भवत्यप्यल्पिकाप्युत श्वेत आशु पत्वा। उतो पद्याभिर्जविष्ठः। उतेमाशु मानं पिपर्ति। आदित्या रुद्रा वसवस्त्वेळते। इदं राधः प्रतिगृभ्णीह्यङ्गिर इति प्रतिगृह्य मेव तद्राधस ऐच्छन्निदं राधो बृहत्पृथु। देवा ददत्वा वरम्। तद्वो अस्तु सुचेतनम्। युष्मे अस्तु दिवे दिवे। प्रत्येव गृभायतेति प्रत्येवैन मेतद्ग्राभयैषं तं वा एतं देव-नीथं शंसति पदावग्राहं यथा निविदं तस्योत्तमेन पदेन प्रणौति यथा निविदः ॥ ८ ( ३५ ) ॥

योऽयं देवनीथः पूर्वं सूक्तः, तस्य सूक्तत्वं कथयापि पूर्वं विवक्षि-दर्शिता; तं कथयेयं देवनीथप्रतिपाद्यस्तुतिकामाय दर्शयति— “ते चादित्याश्चाङ्गिरसो स्वर्गेभ्यो याजयद्भ्य इमां पृथिवीं

पूर्णां दक्षिणाना मदुदुस्तानियं प्रतिगृहीतातपत्तान्यवृञ्जन्सा सिंही भूत्वा विजृम्भन्ती जनानचरत्; तस्याः शोचत्या इमे प्रदराः प्रादीर्यन्त ; ये ऽस्या इमे प्रदराः, समेव हैव ततः पुरा"–इति । अङ्गिरसां मध्ये य एकोऽग्निः, सोऽय मादित्यानां यागे आर्त्विज्य मङ्गीचकार । त मङ्गीकार मनुसरन्तस्ते सर्वे अङ्गिरसो गत्वा तानादित्यानयाजयन् । याजयन्तः 'तेभ्यः' अङ्गिरोभ्य ऋत्विग्भ्यः आदित्याः इमां पृथिवीं 'पूर्णां' चतुःसागरपरिवेष्टिताम् 'अददुः' दत्तवन्तः । कदा ? दक्षिणाकाले इति शेषः । मध्यन्दिने हि सवने दक्षिणा नीयन्ते, तस्मिन् काले दक्षिणार्थं दत्ता च 'इयं' पृथिवी तैरङ्गिरोभिः प्रतिगृहीता सती, 'तान्' परिगृहीतॄन् 'अतपत्' तापयुक्तानकरोत् । तदानीं अङ्गिरसः 'तां' पृथिवीं 'न्यवृञ्जन्' नितरां वर्जितवन्तः । तैरङ्गिरोभि परित्यक्ता सा पृथिवी सिंह-रूपयुक्ता भूत्वा 'विजृम्भन्ती' शिरः कम्पयन्ती, वेगेन धावन्ती, पुरतोऽवस्थितान् 'जनान्' 'अचरत्' अभक्षयत् । तदानीं भीत्या सर्वेषु जनेषु पलायितेषु 'शोचत्याः' क्षुधाग्निना सन्तापयुक्तायाः 'तस्याः' भूमेः 'इमे' अस्माभिर्दृश्यमानाः 'प्रदराः' रेखाकारा विदारणविशेषाः 'प्रादीर्यन्त' प्रकर्षेणाभवन् । 'अस्याः' भूमेः सम्बन्धिनो य इमे प्रदराः, सर्वैर्जनैस्तत्र तत्र दृश्यन्ते ; ते सर्वे परितो भूमेरुपरि विदारणेन निष्पन्नाः ; 'ततः' शोकात् पुरा भूमिः सम-तलैवासीत् । 'इव-ह-एव'–इति निपातत्रयसमूहो ऽवधार-णार्थः । तदानीं समतलत्वेन 'प्रदरः' विदारणरूपः छिद्रविशेषो न कोऽप्यासीदित्यर्थः ॥

अङ्गिरसां भूमिपरित्यागप्रसङ्गेन किञ्चिच्छास्त्रज्ञानं वचन मुदाहरति— "तस्मादाहुर्न निहृत्तदक्षिणां प्रतिगृह्णीयाश्मेत्या

शुचा विद्धा शुचा विध्यादिति"–इति। यस्मादङ्गिरोभिर्भूरूप-दक्षिणा सर्वात्मना परित्यक्ता, तस्मादन्येऽपि शास्त्रज्ञा एव माहुः— 'निवृत्तदक्षिणां' केनापि कारणेन परित्यक्तां दक्षिणां पुनर्न प्रतिगृह्णीयात्। गोभूहिरण्यरूपादिदक्षिणा ऋत्विग्भिः स्वीकृता सती यदि किञ्चिद्दोषं दृष्ट्वा परित्यजेत्, तदानीं पुनरपि द्रव्यलोभेन तत्प्रतिग्रहं न कुर्यात्। केनाभिप्रायेणेति, सोऽभिधीयते— इयं दक्षिणा 'शुचा' शोकोपलक्षितेन दोषेण विद्धा सती, सा अपि 'शुचा' शोकोपलक्षितदोषेण विध्यात्; सैवं विध्यत्विति भीतो न प्रतिगृह्णीयात् ॥

प्रमादात्तु पुनः प्रतिग्रहे कर्त्तव्यं दर्शयति— "यदि त्वेनां प्रतिगृह्णीयादप्रियायैनां भ्रातृव्याय दद्यात्तथा हैव भवति"–इति। पुनःप्रतिग्रहपक्षे प्रतिगृहीतां दुष्टां दक्षिणां मत्यन्तविरोधिने शत्रवे कृत्स्नां दद्यात्। ततः शत्रुः पराभवत्येव ॥

मासङ्गिकं परिसमाप्य दक्षिणान्तरं दर्शयन्नुपाख्यानस्य देवनीथोपयोग माह —"अथ योऽसौ तपति३ एषो ऽश्वः श्वेतो रूपं कृत्वाश्वाभिधान्यपिहितेनात्मना प्रतिचक्रम इमं वो नयाम इति; स एष देवनीथो ऽनूच्यते"–इति। 'अथ' अङ्गिरोभिः पृथिवीरूपदक्षिणायां परित्यक्तायां ततोऽनन्तरम्, अदितिपुत्राणां यजमानानां सङ्कल्पवशाद 'योऽसौ' मण्डलमध्ये सूर्यस्तपति, एषः 'प्रतिचक्रमे' सम्मुख माजगामेत्यर्थः। सानुनासिका प्लुतिः पूजार्था। 'असौ' मण्डलवर्ती पुरुषः तेजसा तपन्नपि भूमिवर्त्तिपीड़ातुल्यं सन्तापं न करोति, तस्मादस्य पूज्यत्वम्। सूर्यः केन रूपेणागच्छतीति, तद्रूप मुच्यते— लोके श्वेतोऽश्वो यादृग्रूपवान्, तादृशं रूपं कृत्वा, ततः 'अश्वाभिधान्यपिहितेन' अश्वस्य

बन्धनार्था रज्जुः 'अश्वाभिधानी', तया अपिहित आच्छादित आत्मा अश्वदेहः, तेन देहेन युक्तः सन्नागत इत्यर्थः। स्वसङ्कल्पितं न मश्वरूपं सूर्यं दृष्ट्वा, त आदित्या एव मब्रुवन्, हे अङ्गिरसः! 'वः' युष्माकम् 'इमम्' अश्वं नयामः दक्षिणात्वेन समर्थयामः। 'इति' यस्यां कथायां यो वृत्तान्तो ऽभिहितः, स एष देवनीथो भूत्वा वेदेनानूच्यते ॥

तस्य देवनीथस्य सप्तदश पदानि ; तेषु प्रथमं पद माह— "आदित्या ह जरितरङ्गिरोभ्यो दक्षिणा मनयन्"–इति। आदित्याख्या यजमानाः पुरा 'जरितृभ्यः' स्तोतृभ्यः अङ्गिरोभ्यः भूरूपां दक्षिणाम् 'अनयन्' दत्तवन्तः ॥

द्वितीयं पद मनूद्य व्याचष्टे—"तां ह जरितर्न प्रत्यायन्निति ; न ह्वि त इमां प्रत्यायन्"–इति। 'जरितः।' जरितारः स्तोतारो अङ्गिरसः 'तां ह' तां तु पृथिवीरूपां दक्षिणां 'न प्रत्यायन्' नैव प्रतिगृहीतवन्तः। अस्मिन् पदे प्रोक्ताः 'ते' अङ्गिरसः 'इमां' भूमिं न प्रतिगृहीतवन्त इत्यर्थः। प्रसिद्ध इति 'ह'-शब्देन द्योतयति ॥

तृतीयं पद मनूद्य व्याचष्टे—"ता मु ह जरितः प्रत्यायन्निति ; प्रति ह्वि ते ऽमु मायन्"–इति। 'ता मु ह' ता मादित्यरूपां दक्षिणां 'जरितः प्रत्यायन्' स्तोतारः प्रतिगृहीतवन्तः। अस्मिन् (तस्मिन्?) पदे प्रोक्ताः 'ते' अङ्गिरसः 'अमुम्' आदित्यं प्रत्यायन्। निषेधोऽर्थः प्रसिद्धः (भूप्रतिग्रहनिषेधोऽर्थसिद्धः?) ॥

द्वितीयपदार्थवैशद्याय प्रवृत्त चतुर्थं पद मनूद्य व्याचष्टे –"तां ह जरितर्न प्रत्यगृभ्णन्निति ; न ह्वि त इमां प्रत्यगृभ्णन्"–इति। पूर्वपद व्याख्यानयोरर्थः स्पष्टः ॥

तृतीयपदार्थवेदनाय पञ्चमं पद मनूद्य व्याचष्टे—"ता सु ह अरितः प्रयन्त्यभ्यन्निति ; प्रति हि ते ऽस्नु मन्त्रमन्न्"–इति। पूर्वपदवद् व्याख्यानयोरर्थो विस्पष्टः ॥

षष्ठं पद मनूद्य व्याचष्टे— "अहा नेत सन्नविचेतनानीत्येष ह वा यज्ञं विचेतयिता"–इति। हे अङ्गिरसः! अयं सूर्यः सन् युष्माकं समीपेऽस्ति, तस्माद् 'अविचेतनानि' विशेषप्रकाशरहितानि 'अहा' तमोयुक्तान्यहानि 'नेत' न गच्छत। 'एषः' आदित्योऽङ्गं विचेतयिता ॥

सप्तमं पद मनूद्य व्याचष्टे—"अन्ना नेत सन्नपुरोगवास इति ; दक्षिणा वै यज्ञानां पुरोगवो, यथा ह वा इद मनो पुरोगवं रिष्यत्येवं हैव यज्ञो ऽदक्षिणो रिष्यति ; तस्मादाहुर्दातव्यैव यज्ञे दक्षिणा भवत्यप्यल्पिकापि"–इति। हे 'अन्नाः' ज्ञानयुक्ताः, अङ्गिरसः! अयमादित्यः सन् भवत्समीपे वर्त्तते, तस्माद् 'अपुरोगवासः' मार्गप्रदर्शनेन पुरोगामिना रहिता यूयं 'नेत' न गच्छत। अस्मिन् पदे पुरोगन्त्रपेक्षा दर्शिता। यज्ञानां तु दक्षिणैव पुरोगवो। अत्र दृष्टान्तः— यथा ह वा इदम् 'अनो ऽपुरोगवं' बलीवर्दरहितं शकटं 'रिष्यति' विनश्यति। 'एवं हैव' अनेनैव प्रकारेण 'अदक्षिणः' दक्षिणारहितो यज्ञः 'रिष्यति' विनश्यति। तस्मात्कारणाद् याज्ञिका एव आहुः—द्रव्यहीनेनापि यजमानेन 'अल्पिकापि' अत्यन्तस्वल्पापि दक्षिणा यज्ञे दातव्या भवति ॥

अष्टमं पद माह—"उत श्वेत आशुपत्वा"–इति। 'उत' अपि तु हे अङ्गिरस! युष्माकं मयं श्वेतरूपोऽश्व आदित्यः 'आशुपत्वा' शीघ्रगामी ; तस्मादस्ति पुरोगन्तेत्यर्थः ॥

नवमं पद माह— "उतो पद्याभिर्जविष्ठः"–इति। 'उतो'

अपि च 'पद्याभिः' पादविक्षेपैर्हेतुभिः 'जविष्ठः' अयं सूर्योऽतिशयेन वेगवान् ॥

दशमं पद माह—"उते माश्व मानं पिपर्त्ति"—इति। 'उत' अपि च 'ईम्' ईदृशं 'मानं' सत्कारम् 'आशु पिपर्त्ति' असौ सूर्यः शीघ्रं पूरयति ॥

एकादशं पद माह—"आदित्या रुद्रा वसवस्त्वेळते"—इति। हे सूर्य ! आदित्याद्या देवगणाः 'त्वा' त्वाम् 'ईळते' स्तुवन्ति ॥

द्वादशं पद मनूद्य व्याचष्टे—"इदं राधः प्रति गृभ्णीह्यङ्गिर इति; प्रतिग्रह मेव तद्राधस ऐच्छन्"—इति। हे 'अङ्गिर' जाताबेकवचनम्; अङ्गिरोऽभिधमहर्षिजाते। 'इदम्' अस्माभिर्दीयमानं 'राधः' सर्वसुखसाधक मादित्यरूपं धनम् 'प्रति गृभ्णीहि' दक्षिणारूपेण प्रतिगृहाणेति यदस्ति, तेन पदेन 'राधसः' सुखसाधनस्यादित्यस्य 'प्रतिग्रह मेव' स्वीकार मेव 'ऐच्छन्' अङ्गिरस इच्छन्ति स्म ॥

त्रयोदशं पद माह— "इदं राधो वृहत्पृथु"—इति। 'इदम्' अस्माभिर्दीयमानं 'राधः' सुखसाधक मादित्यरूपं 'बृहद्' गुणैः प्रवृद्धम्, 'पृथु' स्वरूपेण विस्तृतम् ॥

चतुर्दशं पद माह—"देवा ददत्वा वरम्"—इति। 'देवाः' इन्द्राद्याः 'आ' समन्ताद् 'वरं' श्रेष्ठ मादित्यरूपं 'ददत' प्रयच्छन्तु ॥

पञ्चदशं पद माह—"तद्वो अस्तु सुचेतनम्"—इति। हे अङ्गिरसः। 'वः' युष्माकं 'तत्' आदित्यस्वरूपं 'सुचेतनं' सुष्ठु प्रकाशक मस्तु ॥

षोडशं "युष्मे अस्तु दिवे-दिवे"—इति। हे

अङ्गिरसः ! 'दिवे-दिवे' प्रतिदिनं तदादित्यस्वरूपं 'युष्मे' युष्मास्वेव तिष्ठताम् ॥

समदशं पद मनूद्य व्याचष्टे — "प्रत्येव गृभायतेति ; प्रत्यैवैन मेतदजग्रभैषम्"—इति * । हे अङ्गिरसः ! 'प्रतिगृभायतैव' अवश्य मादित्यरूपां दक्षिणां प्रतिगृह्णीतेति यत्पद मस्ति, 'एतत्' एतेन पदेन अङ्गिरसः एत मादित्यं दक्षिणारूपं 'प्रत्यग्रभैषमेव' अवश्यं प्रत्यग्रहीषुः ॥

देवनीयाख्यस्य पदसमूहस्य समदशानि पदानि व्याख्याय तच्छंसनप्रकारविशेषं विधत्ते — "तं वा एतं देवनीथं शंसति, पदावग्राहं यथा निविदं; तस्योत्तमेन पदेन प्रणौति यथा निविदः"—इति । 'तं वा' आदित्याह जरितरित्यादिकं प्रत्येव गृभायतेत्यन्तम्, 'एतम्' इदानीं मुक्तं 'देवनीथं' निविद्दृष्टान्तेन 'पदावग्राहं शंसति' यथा निविदः पदे-पदेऽवस्थायावस्थाय शंसनम्, तद्वदत्राप्यवगन्तव्यम् । यथा च निविद उत्तमेन पदेन 'प्रणवः' ॐकारः, एव मत्रापि अन्तिमे पदे प्रणवो द्रष्टव्यः ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां पञ्चमाध्याये
( लिंगाध्याये ) नवमः खण्डः ॥ ८ ( ३५ ) ॥

---

* यदिहेमानि देवनीथाख्यसप्तदशपदानि प्रपठ्य विहितानि, ततो ऽवगम्यते यस्याः शाखायाः एतद्ब्राह्मणं सैतरेयक नाम, न तस्यां मिमानि पठितानीति ; अश्वद्दृष्टसंहिता-परिशिष्टे तु पठितान्येव । आश्वलायनेनापि प्रतीकग्रहणाभावेनैवेमानि विहितानि ( श्री० ८. ३ २५. ) ।

॥ अथ दशमः खण्डः ॥

भूतेच्छदः शंसति भूतेच्छद्भिर्वै देवा असुरानुपास-न्नोतेव युद्धेनोतेव मायया तेषां वै देवा असुराणां भूतेच्छद्भिरेव भूतं छादयित्वाथैनानत्यायंस्तथैवै-तद्यजमाना भूतेच्छद्भिरेवाप्रियस्य भ्रातृव्यस्य भूतं छादयित्वाथैन मति यन्ति ता अर्द्धर्चशः शंसति प्रति-ष्ठाया एवाहनस्याः शंसत्याहनस्याद्वै रेतः सिच्यते रेतसः प्रजाः प्र जायन्ते प्रजातिमेव तद्दधाति ता दश शंसति दशाक्षरा विराळन्नं विराळन्नाद्रेतः सिच्यते रेतसः प्रजाः प्र जायन्ते प्रजातिमेव तद्द-धाति ता न्यूङ्खयत्यन्नं वै न्यूङ्खोऽन्नाद्रेतः सिच्यते रेतसः प्रजाः प्र जायन्ते प्रजातिमेव तद्दधाति दधि-क्राव्णो अकारिष मिति दाधिक्रीं शंसति देवपवित्रं वै दधिक्रा इदं वा इदं व्याहनस्यां वाच मवादीत् तद्देवपवित्रेण वाचं पुनीते सानुष्टुब् भवति वाग्वा अनुष्टुप् तत्स्वेन छन्दसा वाचं पुनीते सुतासो मधु-मत्तमा इति पावमानीः शंसति देवपवित्रं वै पाव-मान्य इदं वा इदं व्याहनस्यां वाच मवादीत्तद्देव-पवित्रेणैव वाचं पुनीते ता अनुष्टुभो भवन्ति वाग्वा अनुष्टुप् तत्स्वेनैव छन्दसा वाचं पुनीते ऽव द्रप्सो

अंशुमती मतिष्ठदिरयैन्द्रावार्हस्पत्य तृच शंसति
विशो अदेवीरभ्याचरन्तीर्बृहस्पतिना युजेन्द्रः ससाह
इत्यसुरविशं ह वै देवानभ्युदाचार्य आसीत् स इन्द्रो
बृहस्पतिनैव युजासुर्यं वर्ण मभि दासन्त मपाहं-
स्तथैवैतद्यजमाना इन्द्राबृहस्पतिभ्या मेव युजासुर्यं
वर्ण मभि दासन्त मप घ्नते तदाहुः संशंसेत् षष्ठे-
ऽहा३न् न संशंसे३त् इति संशंसेदित्याहुः कथ
मन्येष्वहःसु संशंसति कथ मत्र न संशंसेदित्यथो
खल्वाहुर्नैव संशंसेत् स्वर्गो वै लोकः षष्ठ महरसमायी
वै स्वर्गो लोकः कश्चिद्वै स्वर्गे लोके समेतोति स,
यत्संशंसेत् समानं तत्कुर्यादथ यन्न संशंसती३ तत्
स्वर्गस्य लोकस्य रूप तस्मान्न संशंसेद्यदेव न संशं-
सती३ एतानि वा अशीक्थानि नाभानेदिष्ठो वाल-
खिल्यो वृषाकपिरेवयामरुत् स यत्संशंसेदपैव स
एतेषु कामं राध्नुयादैन्द्रो वृषाकपिः सर्वाणि छन्दा-
स्यैतशप्रलापस्तेन स काम उपाप्तो य ऐन्द्रे जागते
ऽथैन्द्र मैन्द्रावार्हस्पत्यं सूक्तं मैन्द्रावार्हस्पत्या परि-
धानीया तस्मान्न संशंसेन्न संशंसेत् ॥ १० (३६) ॥

॥ इत्यैतरेयब्राह्मणे षष्ठपञ्चिकायां पञ्चमोऽध्यायः ॥५॥

अथ त्व मिन्द्र शर्मेत्येतामाद्यास्तिस्रोऽनुष्टुभो विधत्ते—"भूतेच्छदः शंसति"–इति। 'भूते' भूतिर्वैरिणा मैश्वर्यं छादयन्ति तिरस्कुर्वन्तीत्युदाहृता अनुष्टुभो 'भूतेच्छदः' ॥

ता. प्रशंसति—"भूतेच्छद्भिर्वै देवा असुरानुपासचन्तोतेव युद्धेनोतेव मायया, तेषां वै देवा असुराणां भूतेच्छद्भिरेव भूतं छादयित्वाथैनानत्यायं स्तथैवैतद्यजमाना भूतेच्छद्भिरेवाप्रियस्य भ्रातृव्यस्य भूतं छादयित्वाथैन मति यन्ति"–इति। भूतेच्छन्नामधेयाभिरनुष्टुब्भिर्देवा असुरान् युद्धेन च मायया च 'उपासचन्त' समीपे समवेताः। 'उतेव'–इति निपातसमूहः समुच्चयार्थः। छद्मयुद्धेनासुरान् विनाशयितुं समागता इत्यर्थः। आगत्य च देवाः 'तेषाम्' असुराणां 'भूतम्' ऐश्वर्यं एताभिर्ऋग्भिराच्छाद्य, अनन्तरम् 'एनाम्' अतिक्रम्यागच्छन्। तथैवैतद्यजमाना अपि कुर्वन्ति * ॥

तासा मृचा मर्द्धर्चावसानं विधत्ते—"ता अर्द्धर्चशः शंसति, प्रतिष्ठाया एव"–इति ॥

अथ शाखान्तरे समाम्नाताः "यदस्या अंहुभेद्याः"–इत्याद्या ऋचः (ऋ० प० २.१५.१–८.) विधत्ते—"आहनस्याः शंसति" –इति। 'आहनस्याः' आहननं स्त्रीपुरुषयोः परस्परसंयोगः, तद्व्रजोत्पत्तिहेतुत्वात् ऋचोऽप्याहनस्याः † ॥

ता ऋचः प्रशंसति—"आहनस्याद्वै रेतः सिच्यते, रेतसः प्रजाः प्र जायन्ते; प्रजाति मेव तद्दधाति"–इति। आहनस्य' मिथुन मित्युक्तम्, स्पष्ट मन्यत् ॥

* "त मिन्द्र शर्मरिवेति भूतेच्छदस्तिस्र एता अनुष्टुभः"–इति आश्व० श्रौ० ८. ३. २७।
† "यदस्या अंहुभेद्या इत्याहनस्याः"–इति आश्व० श्रौ० ८. ३. २८।

: ऋक्सङ्ख्यां प्रशंसति—"ता दश शंसति ; दशाक्षरा विराळन्नं विराळन्नाद्रेतः सिच्यते ; रेतसः प्रजाः प्र जायन्ते ; प्रजाति मेव तद्दधाति"—इति। स्पष्टोऽर्थः * ॥

• षोड़शीकारान् विधत्ते— "ता न्यूङ्खयत्यन्नं वै न्यूङ्खो ऽन्नाद्रेतः सिच्यते, रेतसः प्रजाः प्र जायन्ते; प्रजाति मेव तद्दधाति"—इति। 'ताः' ऋचो 'न्यूङ्खयति' श्रोकारविशिष्टाः कुर्वन्ति †। न्यूङ्खस्यान्नहेतुत्वादन्नत्वम् ॥

ऋगन्तरं विधत्ते— "दधिक्राव्णो अकारिष मिति (सं० ४. ३९. ६.) दाधिक्रीं शंसति ; देवपवित्रं वै दधिक्रा, इदं वा इदं व्याहनस्यां वाच मवादीत्, तद्देवपवित्रेण वाचं पुनीते"—इति। दधिक्रेतिशब्दयुक्तत्वादियं 'दाधिक्री'। दधिक्राख्या देवता। 'देवपवित्रं' देवानां शोधकं वाक्यम्। तथा सति 'व्याहनस्यां वाचं' विशिष्टमैथुनयुक्तां तदङ्गभूतां वाचं यदवादीत् [ इद मिति तस्य ग्राम्यवाक्यजातस्य विस्पष्टत्वेनाभिधानम् ], 'तत्' सर्वं ग्राम्यवाक्यजात मसत्य मपि 'वाचं' वाचोच्चारित मनेन देवपवित्रेण 'पुनीते' शुद्धं करोति ॥

तस्या ऋचि छन्दः प्रशंसति— "सानुष्टुब् भवति ‡ ; वाग्वा अनुष्टुप्, तत् स्वेन छन्दसा वाचं पुनीते"—इति। वाग्देवताया

---

* यद्यप्यदृष्टे ऋक्परिशिष्टे ऽस्यैवाहनस्या, परं नैतरेयक नाम शाखा यस्याः संहितायाः, तस्यां दृष्टैव स्यु। आश्वलायनेन तु आहनस्यानां विधानं कृतं तत्र उत्तर भि सह प्रशंसनीये ऽपरे ऽपि ऋचौ विहिते ( ८.३.२८,३० ), ते एव नवमदशमी आश्वलायनसंहितादीना मिति ध्येयम्।

† आश्व० श्रौ० ८. ३ ३१ सू० द्रष्टव्यम्।

‡ "दधिक्राव्णो अकारिष मित्यनुष्टुप्"—इति आश्व० श्रौ० ८ ३ २९।

अनुष्टुप्छन्दोऽभिमानित्वाद्वाचोऽनुष्टुप्त्वम् । अतस्तच्छन्दो वाचः स्वकीयं, तेन वाचं शोधयति ॥

तृगन्तराणि विधत्ते—"सुतासो मधुमत्तमा इति पावमानीः शंसति"-इति । "सुतासः"-इत्याद्यास्तिस्रः ( सं० ९. १०१. ४. ) शुद्धिहेतुत्वात् पावमान्यः * ॥

ता ऋचः प्रशंसति—"देवपवित्रं वै पावमान्य इदं वा इदं व्याहनस्यां वाच रथादीत्तद्देवपवित्रेणैव वाचं पुनीते ; ता अनुष्टुभो भवन्ति ; वाग्वा अनुष्टुप् , तत्स्वेनैव छन्दसा वाचं पुनीते"-इति । पूर्ववद् व्याख्येयम् ॥

अन्यासां ऋचां तृचं विधत्ते—"अव द्रप्सो अंशुमतीमतिष्ठदित्यैन्द्राबार्हस्पत्यं तृचं ( सं० ८. ९६. १३. † ) शंसति"-इति ॥

इन्द्राबृहस्पतिदेवताकत्वं दर्शयितुं तृचस्यान्तिम मर्धर्चं पठति —"विशो अदेवीरभ्याचरन्तीर्बृहस्पतिना युजेन्द्रः ससाह इति"-इति । 'अदेवीः' देवविरुद्धाः 'अभि' सर्वतः 'आचरन्तीः', 'विशः' आसुरीः प्रजाः सर्वाः 'युजा' सहकारिणा 'बृहस्पतिना' युक्तः 'इन्द्रः' 'ससाहे' तिरस्कृतवानित्यर्थः ॥

अस्यार्धर्चस्यार्थं प्रशंसति—"असुरविशं ह वै देवानभ्युदाचार्य आसीत् ; स इन्द्रो बृहस्पतिनैव युजासुर्यं वर्णमभि दासन्तमपाघ्नंस्तथैवैतद्यजमाना इन्द्राबृहस्पतिभ्यामेव युजासुर्यं वर्णमभिदासन्तमप घ्नते"-इति । 'असुरविशम्' असुरप्रजाः सैन्यरूपाः 'देवान्' इन्द्रादीन् 'अभि' लक्ष्य 'उदाचार्य' उल्लङ्घनरूपमाचरणं कृत्वा तिरस्कृत्य 'आसीत्' देवसमीपे अवस्थिता । तदानीं 'सः' इन्द्रो

---

* "सुतासो मधुमत्तमा इति च तिस्र"-इति आश्व० श्रौ० ८. १. २१ ।

† "अव द्रप्सो अंशुमतीमतिष्ठदिति तिस्रः"-इति आश्व० श्रौ० ८. ३ २१ ।

वृहस्पतिनैव 'युजा' सहकारिणा युक्तः सन्, 'असुर्यम्' असुरसैन्यं 'वर्ण' विचित्रपताकादियुक्तम् 'अभिदासन्तं' देवोपक्षयहेतुम् 'अपाहन्' विनाशितवान् । देववद् यजमाना अपि द्वयप्रतियाज्याभ्याम् 'इन्द्रावृहस्पतिभ्याम्' एव युक्ताः 'असुर्यं वर्णं' बाधकं विचित्रम् 'अभिदासन्तम्' उपक्षयहेतुं पापं विनाशयन्ति ॥

अथात्र प्र सप्रुचिद्याय्योत्यादिना ( सं० १. ५७. १. ) प्राकृतेन वैकृतायाः सभूय शंसनं विचार्य, पूर्वोत्तरपक्षाभ्यां निश्चिनोति—
"तदाहुः संशंसेत् षडेऽहाश्न्, न संशंसेत् ? इति ; संशंसेदित्याहुः ; कथ सन्येष्वहस्सु संशंसति, कथ मत्र न संशंसेदित्यथो खल्वाहुर्नैव संशंसेत्, स्वर्गो वै लोकः षड मक्कसमायी वै स्वर्गो लोकः, कथिदे स्वर्गे लोके समेतीति ; स यत्संशंसेत्समानं तत् कुर्यादथ यत्र संशंसतो ३, तत् स्वर्गस्य लोकस्य रूपं ; तस्मान्न संशंसेयदेव न संशंसतो ३"–इति । पूर्वाध्यायस्यान्तिमखण्डवद् व्याख्येयम् * ॥

संशंसनपक्षे दोषान्तरं दर्शयति— "एतानि वा अत्रोक्थानि नाभानेदिष्ठो वालखिल्या वृषाकपिरेवयामरुत् स यत्संशंसेदपैव स एतेषु कामं राध्नुयात्"–इति । नाभानेदिष्ठादीनि चत्वारि शिल्पानि यानि सन्ति, एतान्येवात्र षष्ठेऽहनि 'उक्थानि' प्रधानशस्त्राणि । तथा सति 'सः' पुमान् यदि प्राकृतेन "प्र सप्रुचिद्याय"–इत्यनेन सभूय शंसेत्, तदानीं 'सः' पुरुषः 'एतेषु' प्रधानशस्त्रेषु 'कामं' फलम् 'अप राध्नुयाद्' विनाशयेत् ॥

एवं तर्हि प्र सप्रुचिद्याय्योतेत्यस्मिन्नैन्द्रे लभ्यः कामोऽत्र न लभ्येतेत्याशङ्क्याह—"ऐन्द्रो वृषाकपिः, सर्वाणि छन्दांस्यैतप्रलापस्तत्र

* ए० ६. अ० ४. ख० १० २६२, २६३ पृष्ठे द्र० ।

स काम उपाप्तो य ऐन्द्रे जागते ऽथैन्द्र मैन्द्राबार्हस्पत्यं सूक्तं मैन्द्राबार्हस्पत्या परिधानीया; तस्मात्र संशंसेव संशंसेत्"-इति। ब्राह्मणाच्छंसिना शंसितव्यो योऽयं 'वृषाकपिः' सोऽय मैन्द्रः, एतश-प्रलापश्च सर्वच्छन्दस्थानीयः; तथा सति "प्र मंहिष्ठाय"-इत्यादिके इन्द्रदेवताके जगतीच्छन्दस्के यः कामोऽस्ति, स कामः 'तत्र' वृषाकपौ एतशप्रलापे च प्राप्तो भवति। 'अथ' अपि चेदम् "अव द्रप्सः"-इत्यादिकं (सं० ८. ८६. १३.) सूक्त मैन्द्राबार्हस्पत्यम्, अन्तिमा* परिधानीया चैन्द्राबार्हस्पत्या†; तत्रोभयत्रेन्द्रनिमित्तः काम उपाप्तो भवति। तस्मात् कारणात् प्राकृत मत्र सम्भूय न संशंसेत्। अभ्यासोऽत्राध्यायसमाप्त्यर्थः ॥ १० ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायां पञ्चमाध्याये
(त्रिंशाध्याये) दशमः खण्डः ॥ १० (३६) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये
ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायाः पञ्चमाध्यायः ॥

---

* "तचन्द्राग्निमा" भा।

† "अच्छा म इन्द्रं मतिः (ऋ० १०. ४३. १.) इत्येतैकादिकम्"-इति आश्व० श्रौ० ८। १२।

देवा ह वै वीथि(१) । देवा वै यज्ञं पञ्च(२) । आ त्वा वहन्त्वष्टौ(३) । यः श्वः स्तोत्रियो दश(४) । शिल्पानि दश(५) ॥ ६ * ॥

देवा ह वा, असावि देवं, कस्त मिन्द्र, तदाहु-र्यदास्मिन्, विश्वजिति षट् ॥ ६ † ॥

॥ इति षष्ठपञ्चिका समाप्ता ॥

---

* २१३, २२१, २५७, ३०१, ३६० पृ० ( ३—५—८—१०—१०—३६ ख० ) ।

† २१९, २६५, ३२२, ३८१ पृ० ( १०—१०—१०—६—३६ ख० ) । आ० २३१२० † ६० ।

# BIBLIOTHECA INDICA ;

A

## Collection Of Oriental Works

PUBLISHED BY

THE ASIATIC SOCIETY OF BENGAL,

NEW SERIES, NOS. 895, 898, 903, 926, 930, 1145, 1146 & 1147.



# THE AITAREYA BRAHMANA

OF THE RIG-VEDA,

WITH THE

COMMENTARY OF SAYANA ACHARYA.

EDITED BY

ACARYA SATYAVRATA SAMASRAMI,

*Associate Member of the Asiatic Society of Bengal, Editor, Author, Commentator, Annotator, Compiler, Translator, & Publisher of different Vedic Works &c &c.*

VOL. IV.

CALCUTTA :

Printed by H. V. Chatterji, SATYA PRESS.

1906.

# ॥ ऐतरेयब्राह्मणम् ॥

( ऋग्वेदस्य )

भगवत्सायणाचार्यकृत-'वेदार्थप्रकाश'-नामभाष्ययुतम् ।

—·—

वङ्गदेशीयासियायितिकसमितेरनुमत्या व्ययेन च,

सामश्रमिश्रीसत्यव्रतशर्म्मणा

यथामति संशोध्य सटीकय च सम्पादितम् ।

॥ चतुर्थभागः ॥

( सप्तमाष्टमपञ्चिकात्मकः )

———

कलिकाता-राजन्वत्याम्

१९६२-संवत्समायां सत्ययन्त्रेण यन्त्रतो मुद्रितम् ॥

# ॥ अथैतरेयालोचनविषयसूची ॥

अथ

# ॥ ऐतरेयब्राह्मणम् ॥

## ॥ अथ सप्तमपञ्चिका ॥

( तत्र )

### ॥ खण्डैकात्मकः प्रथमाध्यायः ॥

॥ ॐ ॥ अथातः पशोर्विभक्तिस्तस्य विभागं वक्ष्यामो हनू सजिह्वे प्रस्तोतुः श्येनं वक्ष उद्गातुः कण्ठः काकुद्रः प्रतिहर्तुर्दक्षिणा श्रोणिर्होतुः सव्या ब्रह्मणो दक्षिणं सक्थि मैत्रावरुणस्य सव्यं ब्राह्मणाच्छंसिनो दक्षिणं पार्श्वं सांसमध्वर्योः सव्यमुपगातॄणां सव्योंसः प्रतिप्रस्थातुर्दक्षिणं दोर्नेष्टुः सव्यं पोतुर्दक्षिण * ऊरुरच्छावाकस्य सव्य आग्नीध्रस्य दक्षिणो बाहुरात्रेयस्य सव्यः सदस्यस्य सदञ्चानूकञ्च गृहपतेर्दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य सव्यौ पादौ गृहपतेर्भार्यायै व्रतप्रदस्यौष्ठ एनयोः साधारणो भवति तं गृहपतिरेव प्रशिंष्याज्जाघनीं पत्नीभ्यो हरन्ति तां ब्राह्मणाय दद्युः स्कन्ध्याश्च मणिकास्तिस्रश्च कीकसा यावस्तुतस्तिस्रश्चैव

* “॰र्दक्षिणा” ग, घ ।

कीकसा अर्द्धञ्च वैकर्त्तस्योन्नेतु रर्द्धमेव वैकर्त्तस्य क्लोमा च शमितुस्तद् ब्राह्मणाय दद्याद्यद्यब्राह्मण: * स्याच्छिर: सुब्रह्मण्यायै य: श्वस्सुत्यां प्राह तस्याजिन मिळा सर्वेषां होतुर्वा ता वा एता: षट्त्रिंशत मेकपदा यज्ञं वहन्ति षट्त्रिंशदक्षरा वै बृहती बार्हता: स्वर्गा लोका: प्राणांश्चैव तत् स्वर्गांश्च लोकानाप्नुवन्ति प्राणेषु चैव तत् स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति स एष:स्वर्ग्य: पशुर्य एन मेवं विभजन्त्यथ ये ऽतो ऽन्यथा तद्यथा सेळगा † वा पापकृतो वा पशुं विमथ्नीरंस्तादृक्तत् ता वा एतां पशोर्विभक्तिं श्रौत ऋषिर्देवभागो विदाञ्चकार ता मु हाप्रोच्यैवास्माल्लोकादुच्चक्राम ता मु ह गिरिजाय बाभ्रव्यायामनुष्य: प्रोवाच ततो हैना मेतदर्वाङ् मनुष्या अधीयते ऽधीयते ॥ १ ॥

॥ इत्यैतरेयब्राह्मणे सप्तमपञ्चिकायां प्रथमोऽध्याय: ॥

॥ श्रीगणेशाय नम: ॥

वर्णितं शस्त्रजातन्तु होतृहोत्रकगोचरम् ।
पशोरुपव्रतीयस्य विभागस्त्वथ कथ्यते ॥

आश्वलायन. सवनीया धर्मेष्वेव माह— "सुत्यासु हविरुच्छिष्टभक्षा एव स्यु', धाना. करम्भ: परिवाप: पुरोळाश: पयस्येति ।

* ख-प-ऊ-ष-पुस्तकेषु एवमादिषु विसर्गो लुप्त ।

† "सैलगा' क, ख, घ, च ।

तेषां यद्यत् कामयेरंस्तत् तदुप वि गुल्फयेयुः।"–इति ( श्रौ० १२. ८.३२,३३. ) । प्राणधारणाय यथा पर्याप्नुते, तथा हविःशेषस्याधिक्येन सम्पादनम् 'उपविगुल्फनम्' । एवं बहुविधान् हविःशेषभक्षानुक्त्वा पुनरप्यन्त एव सुवाच— "अपि वान्यत्र सिद्धं गार्हपत्ये पुनरधिश्रित्योपमन्त्रयेरन्नन्यान् वा पथ्यान् भक्षान्ना मूलफलेभ्य एतेन वर्त्तयेयुः पशुना च"–इति (श्रौ०१२.८.३९-४१. *) 'अन्यत्र सिद्धं' गृहे पक्वमन्नं पुनरपि गार्हपत्ये सन्तापयित्वा 'उपमन्त्रयेरन्' उपभुञ्जीरन् । 'अन्यान् वा' लड्डुक-मण्डकादीन् 'भक्षान्' 'पथ्यान्' अजीर्णादिदोषरहितान्, मूलफलपर्यन्तं भिक्षया स्वीकुर्युः । 'एतेन' सुत्यादिनेषु सन्निहितेन सवनीयपशुना च 'वर्त्तयेयुः' जीवनरूपां वृत्तिं सम्पादयेयुः । इत्येवं सवनीयपशुरूपस्य हविषः शेषभक्षणेन ऋत्विजां जीवनं समभिहितम् । तस्मिन् पशौ कस्य को विभाग इति जिज्ञासया तद्विभागकथनं प्रतिजानीते— "अथातः पशोर्विभक्तिस्तस्य विभागं वक्ष्यामः"–इति । 'अथ' होतृ-होतृक-ग्रहनिर्णयानन्तरम् †, यतः भक्षाद्यनुष्ठायिना ऋत्विजा जीवनोपायो ऽपेक्षितः, 'अतः' कारणात् सवनीयस्य 'पशोः' विभक्तिः कथ्यते । विभक्तिशब्दस्यैव व्याख्यानं तस्येत्यादि ॥

---

* "तेषां मध्यानि,— पशौ दीक्षायाः, व्यतिनीय काल सुपसदां चतुर्थे भिक्षया दुग्धेन, तावदेव पिबि सनैसावद्द धाना मिश्रेण तावदेव। सुत्यासु०—०गुल्फयेयुः । यामिरदुग्धो दध्यर्थं, सौम्य वा विगुल्फ निवर्त्तयेयुरिति श्रौतको यावच्छपाव मन्येरन् । वैश्वदेव मिश्रे, वार्हस्पत्य मिश्रे, सर्वान् वानुसवनम् । अपि वा०—०पशुना च"–इति सदाव्यवपाठ (१–४१.) ।

† २भा० १८४४० द्वादश मक्षाधि— 'कल्पयत्नी, निष्केवल्यमरुत्वतीये, वैश्वदेवादिमारुते इति होतृ भक्षाणि षट्, तदा होतृकाणां अपि षट्'–इति । 'षयाणां मामधाच्छस्यावाक इति भक्षिणी होतृका '–इति आप० श्रौ० ५. १०. १० । विशेषतस्तु २भा० २४८४० टीप्पणी द्रष्टव्यम् ।

वक्ष्याम इति प्रतिज्ञातो यो विभागस्तं दर्शयति— "हनू सजिह्वे प्रस्तोतुः, श्येनं वक्ष उद्गातुः, कण्ठः काकुद्रः प्रतिहर्तुर्, दक्षिणा श्रोणिर्होतुः, सव्या ब्रह्मणो, दक्षिणं सक्थि मैत्रावरुणस्य, सव्यं ब्राह्मणाच्छंसिनो, दक्षिणं पार्श्वं सांस मध्वर्योः, सव्यमुपगातृणां, सव्योऽंसः प्रतिप्रस्थातुर्, दक्षिणं दोर्नेष्टुः, सव्यं पोतुर्, दक्षिण ऊरुरच्छावाकस्य, सव्य आग्नीध्रस्य, दक्षिणो बाहुरात्रेयस्य, सव्यः सदस्यस्य, सदं चानूकं च गृहपतेर्, दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य, सव्यौ पादौ गृहपतेर्भार्यायै व्रतप्रदस्यौष्ठ एनयोः साधारणो भवति, तं गृहपतिरेव प्रशिंष्याज्जाघनीं पत्नीभ्यो हरन्ति, तां ब्राह्मणाय दद्युः ; स्कन्ध्याश्च मणिकास्तिस्रश्च कीकसा ग्रावस्तुतस्, तिस्रश्चैव कीकसा अर्धं च वैकर्तस्योन्नेतुरर्धं चैव वैकर्तस्य, क्लोमा च शमितुस्तद्ब्राह्मणाय दद्याद्यद्यब्राह्मणः स्याच्छिरः सुब्रह्मण्यायै, यः श्वःसुत्यां प्राह तस्याजिनं मिळा सर्वेषां होतुर्वा"—इति। जिह्वया सहितं हनुद्वयं प्रस्तोतुर्भागः। श्येनाकारं वक्ष उद्गातुर्भागः *। यः कण्ठः, यश्च 'काकुद्रः' काकुदं, तदुभयं प्रतिहर्तुर्भागः। श्रोणिः जघनमूलं, तदुभयं दक्षिणसव्यरूपं क्रमेण होतुर्ब्रह्मणोर्भागः। जघनेऽधोभागः 'सक्थि', तदुभयं क्रमेण मैत्रावरुण-ब्राह्मणाच्छंसिनोर्विभागः। दक्षिणांसेन युक्तं दक्षिणं पार्श्वं मध्वर्योर्भागः। सव्यं पार्श्वमात्रमुपगातृणां भागः। सव्यः अंसः प्रतिप्रस्थातुर्भागः। 'दोः' बाहुः, तदुभयं क्रमेण नेष्टृपोत्रोर्भागः। ऊरुद्वयं क्रमेण अच्छावाकाग्नीध्रयोर्भागः। सक्थिशब्देन अधोभागस्याभिहितत्वात् ऊर्ध्वभाग ऊरुशब्देन विवक्षितः। बाहुद्वयं क्रमेण आत्रेयसदस्ययो-

* 'श्येन मस्य वक्ष'-इत्यादि (भा० २२।४० द्र०)।

भागः । दोर्बाहुशब्दयोरर्थैक्येऽप्यधोभागोर्द्ध्वभागाभ्यां भेदो द्रष्टव्यः । प्रदानूकशब्दौ पूर्वाचार्यैर्व्याख्यातौ—

"अनूकं मूत्रवस्तिः स्यात्, साक्षेत्येके वदन्ति च ।
प्रदन्तु पृष्ठवंशः स्यादेतद् गृहपतेर्द्वयम्"—इति ।

यः पुमान् गृहपतेर्व्रतप्रदो भोजनदायी, तस्य दक्षिणौ पादौ भागः । गृहपतेर्या भार्या, तस्यै च व्रतप्रदो यः पुमान्, तस्यैव सव्यौ पादौ भागः । अत्र पुरोवर्त्तिनोः पादयोर्बाहुत्वेनाभिहितत्वात्, पाश्चात्यावेव पादशब्देन विवक्षितौ । तत्रैकस्मिन्नपि दक्षिणे पादे द्विवचनं अवयवापेक्षम् । एवमुत्तरत्रापि । योऽयमोष्ठः, सोऽयम् 'एनयोः' व्रतप्रदयोः 'साधारणः' भागो भवति । 'तं' भागं गृहपतिरेव 'प्रशिंष्यात्' तव अयं तव अयमिति विभज्य प्रदद्यात् । 'जाघनीं' पुच्छं पत्नीभ्यो 'हरन्ति' दद्युः ; ताश्च पत्न्यः 'तां' जाघनीं ब्राह्मणाय कस्मैचित् दद्युः । स्कन्धे भवाः 'स्कन्ध्याः', मणिसदृशा मांसखण्डा 'मणिकाः', एकस्मिन् पार्श्वे स्थिता मांसशलाकास्तिस्रः 'कीकसाः' ; मणिकाः कीकसाश्चेत्युभयं ग्रावस्तुतो भागः । इतरपार्श्वे स्थिताः तिस्रः कीकसाः ; 'वैकर्त्तः' प्रौढो मांसखण्डः, तस्यार्द्धं पूर्वोक्तकीकसात्रयं चोन्नेतुर्भागः । यत्तु वैकर्त्तस्येतरदर्द्धं, यश्च हृदयपार्श्ववर्त्ती क्लोमशब्दाभिधो मांसखण्डः, तदुभयं शमितुर्भागः । अयं शमिता यदि अब्राह्मणः स्यात्, तदा स्वेन स्वीकृतं तदुभयमन्यस्मै ब्राह्मणाय दद्यात् । यच्छिरोऽस्ति, तत् सुब्रह्मण्याभिधानर्त्विजे दद्यात् । श्वःसुत्येति निगदनाम *, तां चाग्नीध्रो ब्रूते । तथा चाश्वलायन आह—

* "आग्नीध्रो निगदस्व सोमस्य मम आवक्ष चोदितान्या उक्षाणी मूलकेतो जातवेदो विश्वंय चाङ्गिरस आङ्गण्याङ्गिरसश्चार्षेति प्राक् सुत्याईमान्"—इति आश्वा० श्रौ० १. ४ ।

“आग्नीध्रः स्वरस्तुत्या प्राह”–इति (श्रौ०१२.८.१४.)। ‘अजिनं’ चर्म, तदाग्नीध्रस्य भागः। ‘इळा’ सवनीयपश्वोः सम्बन्धी योऽयमिळाभागः, स सर्वेषां साधारणः; यद्वा होतुरसाधारणः ॥ ॥

उक्तानां पशुविभक्तीनां सङ्ख्यां प्रशंसति— “ता वा एताः षट्त्रिंशतमेकपदा यज्ञं वहन्ति; षट्त्रिंशदक्षरा वै बृहती, बार्हताः स्वर्गा लोकाः; प्राणांश्चैव तत् स्वर्गांश्च लोकानाप्नुवन्ति; प्राणेषु चैव तत् स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति”–इति। ‘ता वै’ हन्वादय इळान्ताः स्तुत्वा उक्ताः, अस्माभिरपि दृश्यमानाः ‘षट्त्रिंशतं’ षट्त्रिंशत्–सङ्ख्याकाः ‘एकपदाः’ हनुः जिह्वेत्येवमेकैकेन पदेन अभिधीयमानाः पशुविभक्तयो ‘यज्ञं वहन्ति’ यज्ञस्य निर्वाहं कुर्वन्ति। सङ्ख्या चेयं पूर्वाचार्यैर्व्याख्याता—

“तत्र पादौ द्वौ तौ द्वावन्यौ द्वात्रिंशदेव हि।
हन्वादि इळान्त मुक्त षट्त्रिंशद्भक्तयः पशोः”–इति।

अतः सङ्ख्यासाम्यादियं विभक्तिः बृहतीरूपा; स्वर्गलोकाश्च बृहत्या सम्पादयितुं शक्यत्वात् ‘बार्हताः’। ‘तत्’ तेन पशुविभागेन ऋत्विजः प्राणान् स्वर्गलोकानपि प्राप्नुवन्ति। पश्ववयवानां प्राणाधारत्वात् तेन विभागेन ऋत्विजोऽस्मिन् जन्मनि प्राणेषु प्रतिष्ठिता वर्तन्ते, जन्मान्तरेषु बृहतीद्वारा स्वर्गेषु लोकेषु प्रतिष्ठिता वर्तन्ते ॥

पशुं प्रशंसति— “स एषः स्वर्ग्यः पशुर्य एन मेवं विभजन्ति”–इति। ‘ये’ ऋत्विजः ‘एन’ पशुं ‘एवम्’ उक्तेन प्रकारेण विभक्तं

‘पशुश्रोधनार्थमस्या निगदा’–इति निगदमन्त्रपठनम्। तद्विचारस्तु मीमांसायां द्रष्टव्यः। जै० द० ३.१.१८–२५ सू०, ११ अधि०।

* ऋत्विजां परिचय० आश्व० श्रौ० ४.१.१–८, इमा० ९।५५० ; द्रष्टव्य।

कुर्वन्ति, तेषां सर्वेषां स एषः पशुः 'स्वर्ग्यः' स्वर्गाय हितो भवति * ॥

प्रकारान्तरेण विभागं निन्दति— "अथ येऽतोऽन्यथा तद्यथा सेलगा वा पापकृतो वा पशुं विमथ्नीरंस्तादृक्तत्"–इति । 'अथ' उक्तविभागप्रशंसानन्तरम्, इतरनिन्दोच्यत इति शेषः । 'ये' ऋत्विजः 'अतः' पूर्वोक्तविभागात् 'अन्यथा' प्रकारान्तरेण, विभजन्त इत्यनुवर्तते ; 'तत्' तेषां निदर्शनं सूच्यते । इलाशब्देन अन्नं सूच्यते, तेन सह वर्तत इति 'सेलः' अन्नबहुलो देशः, तं गच्छन्तीति 'सेलगाः', विहितकर्माननुष्ठायिनः केवलोदरपोषण-परायणा इत्यर्थः ; 'पापकृतः' प्रतिषिद्धकर्मकारिणः ; ते च द्विविधाः यथा पशुं 'विमथ्नीरन्' केवलं मांसभक्षणार्थमेव हन्युः ; तादृगेव 'तत्' अन्यथा विभजनं द्रष्टव्यम् ॥

उक्तं पशुविभागं तद्द्रष्टृमहर्षिद्वारा प्रशंसति— "तां वा एतां पशोर्विभक्तिं श्रौत ऋषिर्देवभागो विदाञ्चकार ; तामु हाप्रोच्यै-वास्माल्लोकादुच्चक्रामत्"–इति । 'तां एतां' पूर्वोक्तां पशुविभक्तिं श्रुतनामकस्य † मुनेः पुत्रो देवभागाख्यो महर्षिः 'विदाञ्चकार' ज्ञातवान् । 'तामु ह' तामेव स्वेन ज्ञातां विभक्तिम् 'अप्रोच्यैव' रहस्यविद्येति मत्वा कस्मै चिदप्यकथयित्वैव अस्मात् लोकात् 'उच्चक्रामत्' उत्क्रान्तवान्, मृत इत्यर्थः ॥

कथं तर्हि तत्सम्प्रदायः ? इत्याशङ्क्याह— "तामु ह गिरिजाय बाभ्रव्यायामनुष्यः प्रोवाच, ततो हैनामेतदर्वाङ् मनुष्या अधीयतेऽधीयते"–इति । 'तामु ह' तामेव पशु-

* 'स सुप्रायो यज्ञ॰—॰भविष्यन् चैव लोकिकस्य च'–इति (आ॰ १५।१४॰ ।

† 'श्रुतर्षि'–इति ऋ॰ सं॰ १०, ३० । ; तै॰ ब्रा॰ २ ५, ६, १ ।

विभक्तिम् 'अमनुष्य:' मनुष्यव्यतिरिक्तः, कश्चिद् गन्धर्वादिः 'बाभ्रव्याय' बभ्रोरपत्याय गिरिजनामकाय * महर्षये प्रोवाच । 'एतदर्वाङ् मनुष्या:' एतस्माद् गिरिजाख्यात् महर्षेरर्वाचीना: सर्वे मनुष्याः 'ततः' तस्य गिरिजाख्यस्य सकाशात् 'एनां' पशुविभक्ति मधीयते । पदाभ्यासोऽध्यायसमाप्त्यर्थः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां प्रथमाध्याये
( एकत्रिंशाध्याये ) प्रथमः खण्डः † ॥ १ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमार्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'-नामभाष्ये
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायाः प्रथमोऽध्यायः ॥

---

* "गिरिजा एतयामन्त्"-इति स्व० सं० ५ ८७ १ ।

† एष खण्डः सूत्रतो यथावदाश्वलायनीयश्रौतसूत्रे ( १२ ९ १-१८ ) ।

## ॥ अथ द्वितीयाध्यायः ॥

( तत्र )

### ॥ प्रथमः खण्डः ॥

---

तदाहुर्यं आहिताग्निरुपवसथे म्रियेत कथ मस्य यज्ञः स्यादिति नैनं याजयेदित्याहुरनभिप्राप्तो हि यज्ञं भवतीति तदाहुर्यं आहिताग्निरधिश्रिते ऽग्निहोत्रे सान्नाय्ये वा हविष्षु वा म्रियेत का तत्र प्रायश्चित्तिरित्यचैवैनान्यनुपर्यादध्याद् यथा सर्वाणि सन्दह्येरन्त्सा तत्र प्रायश्चित्तिस्तदाहुर्यं आहिताग्नि-रासन्नेषु हविष्षु म्रियेत का तत्र प्रायश्चित्तिरिति याभ्य एव तानि देवताभ्यो हवींषि गृहीतानि भवन्ति ताभ्यः स्वाहेत्येवैनान्याहवनीये सर्वहुन्ति जुहुयात्सा तत्र प्रायश्चित्तिस्तदाहुर्यं आहिताग्निः प्रवसन्म्रियेत कथ मस्याग्निहोत्रं स्यादित्यभिवान्यवत्सायाः पयसा जुहुयादन्यदिवैतत्पयो यदभिवान्यवत्साया अन्यदिवै-तदग्निहोत्रं यत्प्रेतस्यापि वा यत एवं कुतश्च पयसा जुहुयुरथाप्याहुरेव मेवैनानजस्रानजुह्वत इन्धीरन्ना शरीराणा माहर्तोरिति यदि शरीराणि न विद्येरन् पर्णशरः षष्टिस्त्रीणि च शतान्याहृत्य तेषां पुरुषरूपक

मिव कृत्वा तस्मिंस्ता मावृतं कुर्युर्यथैनाञ्छरीरै *-राहृतैः संस्पर्शयेयुरध्यर्द्धशतं कार्यं सक्थिनो द्विपञ्चाशे च विंशे चोरू द्विपञ्चविंशे शेषं तु शिरस्युपरि दध्यात्सा तत्र प्रायश्चित्तिः ॥ १ (२) ॥

सत्रिणां मर्णितं कार्यं प्रायश्चित्तं ब्रवीत्यथ ।
चोद्योत्तरप्रकारेण सुस्पष्ट मिति गम्यताम् ॥

तत्र प्रथमे चोद्योत्तरे दर्शयति— "तदाहुर्य आहिताग्निरुपवसथे म्रियेत, कथ मस्य यज्ञः स्यादिति ; नैनं याजयेदित्याहुरनभिप्राप्तो हि यज्ञ भवतीति"–इति । तत्र यज्ञवैकल्यविषये केचिद् ब्रह्मवादिनः पृच्छन्ति— 'यः' पुमान् आहिताग्निः सन् उपवसथाख्ये सुत्यादिनात् पूर्वदिने म्रियेत, अस्य यज्ञः कथं प्रवर्त्तते ? इति प्रश्नः । तस्येद मुत्तरम्— 'एनं' मृतं न याजयेदित्यभिज्ञा आहुः । तत्रेय मुपपत्तिः— सुत्याया अनुपक्रान्तत्वादयं यज्ञ मनभिप्राप्त एव भवति ; तस्माद् यागो न युक्तः ॥

द्वितीये प्रश्नोत्तरे दर्शयति— "तदाहुर्य आहिताग्निरधिश्रिते ऽग्निहोत्रे सान्नाय्ये वा हविःषु वा म्रियेत, का तत्र प्रायश्चित्तिरित्यत्रैवैनान्यनुपर्यादध्याद् यथा सर्वाणि सन्दह्येरंस्ता तत्र प्रायश्चित्तिः"–इति । 'अग्निहोत्रे' तत्साधनभूते पयसि कार्यार्थं वह्नावधिश्रिते सति, तथा 'सान्नाय्ये' दर्शपूर्णमासार्थे क्षीरे अधिश्रिते सति, तथा 'हविःषु' पुरोडाशादिषु अधिश्रितेषु, यजमानस्य मरणे किं प्रायश्चित्तम् ? इति प्रश्नः । प्रायो नाम तस्य चित्तं समाधानम् । 'अत्रैव' यजमानदहनदेशे एव 'एनानि' क्षीरादीनि 'अनु-

---

* सर्वेषु पुस्तकेषु "॰रथैनाञ्छरीरै॰"-इत्येव पाठो लिपिकरप्रमादादिजन्य एव ।

कर्त्तृकम् ; अतः प्रेतस्याधिकाराभावेऽपि पुत्रादेरधिकारसद्भावात् अनुष्ठान मुपपद्यते इत्यर्थः * ॥

तत्रैव पक्षान्तर माह— "अपि वा यत एव कुतश्च पयसा जुहुयुः"–इति । अभिवान्यवत्साया इति नियमो नास्ति, किन्तु 'यतः कुतः' यस्याः कस्याश्चिद्गोः पयसा पुत्रादयो जुहुयुरिति † ॥

पुनरपि पक्षान्तर माह— "अथाप्याहुरेव मेवैनानजस्रान-जुह्वत इन्धीरन्ना शरीराणा माहर्त्तोः"–इति । अपि च अन्ये याज्ञिकाः पक्षान्तर माहुः । देशान्तरे मृतस्य प्रेतस्य 'शरीराणाम्' अस्थ्यादिप्रेतावयवानाम् 'आ आहर्त्तोः' आहरणपर्यन्तम् 'एनान्' आहवनीयादीन् त्रीनग्नीन् 'अजस्रान्' उपशमरहितान् 'अजुह्वतः' होमरहितान् 'एव मेव' अनुपसातेनैव प्रकारेण 'इन्धीरन्' प्रज्वालयेयुरिति । होमाभावेऽपि अग्नयोऽग्नयो यथा नोपशाम्यन्ति, तथा प्रेतास्थिसमानयनपर्यन्तं प्रज्वालयेदित्यर्थः ॥

प्रेतास्थिविनाशे किं कर्त्तव्य मित्याशङ्क्याह— "यदि शरीराणि न विद्येरन् , पर्णशरः षष्टिस्त्रीणि च शतान्याहृत्य तेषां पुरुष-रूपक मिव कृत्वा तस्मिंस्ता माहुतिं कुर्युरथैनाञ्छरीरैराहृतैः संस्पर्शोद्वासयेयुः"–इति । यदि कथञ्चित् 'शरीराणि' अस्थ्या-दीनि 'न विद्येरन्' विनश्येयुः, तदा 'पर्णशरः' पलाशवृक्षस्य छिन्नान् वृन्तान् षष्ट्युत्तरशतत्रयसङ्ख्याकानाहृत्य, 'तेषां' वृन्तानां सम्बन्धि 'पुरुषरूपक मिव कृत्वा' मनुष्यसदृशं किञ्चिद्रूपं निर्माय, 'तस्मिन्' रूपे 'ता माहुतिं' प्रेतशरीरोचितप्रकारं दहनपिण्डदानादिरूपं

---

* 'अथ प्रमीतस्याभिवान्यवत्सायाः पयसाग्निहोत्रं तूष्णीं सर्वं हुत जुहुयात् समवा-प्तात्'—इत्यादि आश्व० श्रौ० ३. १०. १७ ।

† "योऽविनश्येत् मेध्यान्"—इत्यादि कात्या० श्रौ० २५. ८. ९ ।

कुर्युः । 'अथ' तदानीं कृत्रिमरूपदहनकाले 'एनान्' आहवनीयाद्यग्नीन् श्मशाने नीत्वा समाहृतैस्तैः पलाशवृन्तनिर्मितैः शरीरावयवैः 'संस्पर्श्य' संस्पृष्टं कृत्वा उद्वासयेयुः * ॥

पुरुषरूपनिर्माणप्रकारं दर्शयति— "अध्यर्द्धशतं काये, सक्थिनी द्विपञ्चाशे च विंशे, ऊरू द्विपञ्चविंशे, शेषन्तु शिरस्युपरि दध्यात्; सा तत्र प्रायश्चित्तिः"—इति । आनीतानां पलाशवृन्तानाम् 'अध्यर्द्धशतम्' अधिकेनार्द्धेन पञ्चाशद्रूपेण युक्तं शतं 'काये' मध्यशरीरस्थाने 'दध्यात्' परितः प्रक्षिपेत् । पञ्चाशत्सङ्ख्याकानां वृन्तानां समूहरूपं 'पञ्चाशं', द्विसङ्ख्याके पञ्चाशे 'द्विपञ्चाशे'; विंशतिसङ्ख्याकानां समूहरूपं विंशं; 'द्विपञ्चाशे च विंशे च सक्थिनी दध्यात्' चत्वारिंशदधिकेन शतेन सक्थिद्वयं निष्पादयेदित्यर्थः । पञ्चविंशतिसङ्ख्याकानां समूहरूपं पञ्चविंशं, द्विसङ्ख्याके पञ्चविंशे, ते 'ऊरू दध्यात्' पञ्चाशत्सङ्ख्याकैर्वृन्तैरूरुद्वयं निष्पादयेदित्यर्थः । एवं नवत्यधिकशतद्वये गते सति 'शेषं' सप्ततिसङ्ख्याकं शिरस्युपरि प्रक्षिपेत् । प्रकृतो सततमाग्निहोत्रवैकल्यप्रायश्चित्तं निगमयति— "सा तत्र प्रायश्चित्तिः"—इति । 'सा' प्रोक्तक्रिया 'तत्र' वैकल्ये 'प्रायश्चित्तिः' समाधानकरणम् ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां द्वितीयाध्याये
( द्वात्रिंशाध्याये ) प्रथमः खण्डः ॥ १ ( २ ) ॥

---

* "शरीरस्थाने चोषि यदि शतानि पलाशवृन्तानां कृत्वाग्निं पूर्ववत्"—इति कात्या० श्रौ० २५. ८. १४ ।

॥ अथ द्वितीयः खण्डः ॥

तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत् का तत्र प्रायश्चित्तिरिति तामभिमन्त्रयेत यस्माद्भीषा निषीदसि ततो नो अभयं कृधि पशून्नः सर्वान् गोपाय नमो रुद्राय मीळ्हुष इति तामुत्थापयेदुदस्थाद्देव्यदितिरायुर्यज्ञपतावधात् इन्द्राय कृण्वती भागं मित्राय वरुणाय चेत्यथास्या उदपात्रमूधसि च मुखे चोपगृह्णीयादथैनां ब्राह्मणाय दद्यात्सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना वाश्येत का तत्र प्रायश्चित्तिरित्यशनायां ह वा एषा यजमानस्य प्रतिख्याय वाश्यते तामन्नमप्यादयेच्छान्त्यै शान्तिर्वा अन्नं सूयवसाद्भगवती हि भूया इति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना स्पन्देत का तत्र प्रायश्चित्तिरिति सा यत्तत्स्कन्दयेत्तदभिमृश्य जपेद्यदद्य दुग्धं पृथिवीमसृप्त यदोषधीरत्यसृपद्यदापः पयो गृहेषु पयो अघ्न्यायां पयो वत्सेषु पयो अस्तु तन्मयीति तत्र यत्परिशिष्टं स्यात्तेन जुहुयाद्यद्यलं होमाय स्याद्यद्यु वै सर्वं सिक्तं स्यादथान्यामाहूय तां दुग्ध्वा तेन जुहुयादा त्वेव श्रद्धायै होतव्यं सा तत्र प्रायश्चित्तिः ० ॥ २ ( ३ ) ॥

○ सर्वं मेतत् [illegible] द्रष्टव्यम् (२भा० १८७०)।

पञ्चमे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्याग्निहोत्र्युपावसृष्टा, दुह्यमानोपविशेत्, का तत्र प्रायश्चित्तिरिति ; ता मभिमन्त्रयेत" -इति । अग्निहोत्रहविरर्थं दोग्धव्या धेनुः 'अग्निहोत्री' । 'यस्य' अग्निहोत्रिणः सम्बन्धिनी सा धेनुः 'उपावसृष्टा' वत्सेन संयोजिता दुह्यमाना सती दोहनस्य विघ्नं कृत्वा यद्युपविशेत्, तदानीं वक्ष्यमाणेन मन्त्रेण ता मभिमन्त्रयेत । यद्यप्येतत् पञ्चविंशाध्यायस्य द्वितीयखण्डे * वर्णितं, तथापि तत्र बुद्धिस्थसङ्गतिः, अत्र तु प्रायश्चित्तप्राधान्येनोपक्रमात् साक्षादेव सङ्गत मित्यभिप्रेत्य पुनरप्याम्नातम् ॥

तत्रोत्तरशेषं दर्शयति— "यस्माद्भीषा निषीदसि, ततो नो अभयं कृधि, पशून्नः सर्वान् गोपाय, नमो रुद्राय मीळ्हुष इति, ता मुत्थापयेदुदस्थाद्देव्यदितिरायुर्यज्ञपतावधात्, इन्द्राय कृण्वती भागं, मित्राय वरुणाय चेत्यथास्या उदपात्र मूधसि च मुखे चोपगृह्णीयादथैनां ब्राह्मणाय दद्यात् ; सा तत्र प्रायश्चित्तिः"-इति । एतत् सर्वं पूर्वत्रैव † व्याख्यातम् ॥

षष्ठे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्याग्निहोत्र्युपावसृष्टा, दुह्यमाना वाश्येत, का तत्र प्रायश्चित्तिरित्यशनायां ह्येषा यजमानस्य प्रतिख्याय वाश्यते, ता मन्न मप्यादयेच्छान्त्यै ; शान्तिर्वा अन्नं ; सूयवसाद्भगवती हि भूया इति ; सा तत्र प्रायश्चित्तिः"-इति । एतदपि पूर्वत्र ‡ व्याख्यातम् ॥

सप्तमे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्याग्निहोत्र्युपावसृष्टा,

---

* पृ॰ १८७३॰ द॰ । आश्व॰ श्रौ॰ ३, ११ । आप॰ श्रौ॰ ९, ५ ।

† पृ॰ १८८७॰ १९पं॰—१८९१॰ ९पं॰ । आश्व॰ श्रौ॰ ३, ११, १-१ ।

‡ पृ॰ १८९४॰ १०-२२पं॰ । आश्व॰ श्रौ॰ ३, ११, ३ ।

दुह्यमाना स्पन्देत, का तत्र प्रायश्चित्तिरिति ; सा यत्तत्र स्कन्द्येत्तदभिमृश्य जपेद्यदद्य दुग्धं पृथिवीं मसृप्त यदोषधीरत्यसृपद्यदापः, पयो गृहेषु पयो अघ्न्यायां, पयो वत्सेषु पयो अस्तु तन्मयीति ; तत्र यत् परिशिष्टं स्यात्तेन जुहुयाद्यद्यलं होमाय स्यात् ; यद्यु वै सर्वं सिक्तं स्यादथान्यां आहूय तां दुग्ध्वा तेन जुहुयादा त्वेव श्रद्धायै होतव्यं ; सा तत्र प्रायश्चित्तिः"–इति । एतदपि पूर्ववत् * व्याख्यातम् ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां द्वितीयाध्याये
( द्वात्रिंशाध्याये ) द्वितीय. खण्डः ॥ २ ( ३ ) ॥

---

॥ अथ तृतीयः खण्डः ॥

तदाहुर्यस्य सायं दुग्धं सान्नाय्यं दुष्येद्वापहरेद्वा का तत्र प्रायश्चित्तिरिति प्रातर्दुग्धं द्वैधं कृत्वा तस्यान्यतरां भक्तिमातच्य तेन यजेत सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य प्रातर्दुग्धं सान्नाय्यं दुष्येद्वापहरेद्वा का तत्र प्रायश्चित्तिरित्यैन्द्रं वा माहेन्द्रं वा पुरोळाशं तस्य स्थाने निरुप्य तेन यजेत सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य सर्वमेव सान्नाय्यं दुष्येद्वापहरेद्वा का तत्र प्रायश्चित्तिरित्यैन्द्रं वा माहेन्द्रं वेति समानं सा

* १आ० ११९४० २४०–१०१९० ३५०। आप० श्रौ० ९ ११. ७–१०।

तत्र प्रायश्चित्तिस्तदाहुर्यस्य सर्वाण्येव हवींषि दुष्ये-युर्वापहरेयुर्वा का तत्र प्रायश्चित्तिरित्याज्यस्यैनानि यथादेवतं परिकल्प्य तयाज्यहविषेष्ट्या यजेताथो ऽन्या मिष्टि मनुल्बणां तन्वीत यज्ञो यज्ञस्य प्रायश्चित्तिः ॥ २ ( ४ ) ॥

अष्टमे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्य सायं दुग्धं सान्नाय्यं दुष्येद्वापहरेद्वा, का तत्र प्रायश्चित्तिरिति ; प्रातर्दुग्धं द्वैधं कृत्वा तस्यान्यतरां भक्तिं मातच्य तेन यजेत, सा तत्र प्रायश्चित्तिः"–इति । दर्शपूर्णमासयोर्दध्यर्थं सायङ्काले दुग्धं पयः सान्नाय्यरूपं *, यदि कीटादिभिर्दुष्येत् , यः कश्चिदपहरेद्वा, तदानीं परेद्युः प्रातर्दुग्धं पयो भागद्वयं कृत्वा तत्रैकभागं मातच्य, तेन संस्कृत्य दधिस्थानीयेन तेन यजेत ॥

नवमे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्य प्रातर्दुग्धं सान्नाय्यं दुष्येद्वापहरेद्वा, का तत्र प्रायश्चित्तिरित्यैन्द्रं वा माहेन्द्रं वा पुरोडाशं तस्य स्थाने निरुप्य तेन यजेत, सा तत्र प्रायश्चित्तिः"–इति ।

* "स प्रजापतिः पयसश्चैवेदमग्ने समभवतेति , तत् पयस सोमपीथो ऽप्यात्मानम-नयन् ; तत् प्रत्यदुहन् ; यत् समनयन् , तत् सान्नाय्यस्य सान्नाय्यत्वम्"–इति तै० सं० २. ५. ३. ५ । तदेतस्मात् पयःपयसो सान्नाय्यस्य समभ्यवे । सोऽस्य इति, एतदस्मात्प्रवचन-व्याख्यायां सायणः । "सोमः खलु वै सान्नाय्यम्"–इति तै० ब्रा० १. ४. ३. ११ । पौर्ण-मासं हविः सान्नाय्यम्'–इति शत० ब्रा० १. ६. २. ६ । 'सान्नाय्य' दधिपयोरूपम्'–इति शत० ब्रा० ११. ९. ६. ६ भाष्ये सायण० । 'सम्यक् नीयते होमार्थं मग्निं प्रति इति सान्नाय्यं हविर्विशेष.'–इति पा० ३. १. १२९–सूत्रस्थे दीक्षित. । 'सान्नाय्य' दुग्धदधिरूपं हविः'–इति कात्या० श्रौ० ४. २. १० सू० भाष्ये याज्ञिकदेवः ।

प्रातर्दुग्धरूपस्य सान्नाय्यस्य दोषापहाराभ्यां वैकल्ये सति, तस्य दुग्धस्य स्थाने इन्द्रदेवताकं महेन्द्रदेवताकं वा पुरोडाशं कृत्वा, तेन यजेत। इन्द्रयाजि महेन्द्रयाजि-भेदाद्देवताव्यवस्था ॥

दशमे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्य सर्वमेव सान्नाय्यं दुष्येदापहरेद्वा, का तत्र प्रायश्चित्तिरित्यैन्द्रं वा माहेन्द्रं वेति समानं, सा तत्र प्रायश्चित्तिः"–इति। सायं दुग्धं प्रातर्दुग्धं चेत्युभयं 'सर्वम्' ॥

एकादशे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्य सर्वाण्येव हवींषि दुष्येयुर्वापहरेयुर्वा, का तत्र प्रायश्चित्तिरित्याज्यस्यैनानि यथादेवतं परिकल्प्य तयाज्यहविषेष्ट्या यजेतातो ऽन्यां मिष्टि मनुल्बणां तन्वीत यज्ञो यज्ञस्य प्रायश्चित्तिः"–इति। पुरोडाशदधिपयोरूपाणि हवींषि 'सर्वाणि' इत्युच्यन्ते। आज्यस्य सम्बन्धीनि 'एनानि' त्रीणि हवींषि, तत्तद्देवता अनतिक्रम्य तत्तदनुसारेण परिकल्प्य आज्यहविर्युक्तया तया इष्ट्या यजेत। इष्ट्वा च तत्तदूर्ध्वं मन्या मिष्टिम् 'अनुल्बणाम्' अन्यूनानधिकां यथाशास्त्रं 'तन्वीत' विस्तारयेत्। यथाशास्त्रमनुष्ठितो 'यज्ञः' पूर्वस्य विकलस्य 'यज्ञस्य' प्रायश्चित्तिः * ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां द्वितीयाध्याये
( द्वात्रिंशाध्याये ) तृतीयः खण्डः ॥ ३ ( ४ ) ॥

---

* आश्व० श्रौ० ३ । १० । १९ सू० द०।

॥ अथ चतुर्थः खण्डः ॥

तदाहुर्यस्याग्निहोत्र मधिश्रितं ममेध्य मापद्येत का तत्र प्रायश्चित्तिरिति सर्व मेवैनत्स्रुच्यभिपर्यासिच्य प्राङुदेत्याहवनीये हैतां समिध मभ्यादधात्यथोत्तरत आहवनीयस्योष्णं भस्म निरूह्य जुहुयान्मनसा वा प्राजापत्यया वर्चा तद्धुतं चाहुतं च स यद्येकस्मिन्नु-न्नीते यदि द्वयोरेव एव कल्पस्तच्छेद् व्यपनयितुं मक्नु-यान्निष्षिच्यैतद्दुष्ट मदुष्ट मभिपर्यासिच्य तस्य यथो-न्नीतो स्यात्तथा जुहुयात्सा तत्र प्रायश्चित्तिस्तदाहुर्य-स्याग्निहोत्र मधिश्रितं स्कन्दति वा विष्यन्दते वा का तत्र प्रायश्चित्तिरिति तदद्भिरुपनिनयेच्छान्त्यै शान्ति-र्वा आपो ऽथैनद्दक्षिणेन पाणिना ऽभिमृश्य जपति दिवं तृतीयं देवान् यज्ञो ऽगात् ततो मा द्रविण मा-ष्टान्तरिक्षं तृतीयं पितॄन् यज्ञो ऽगात् ततो मा द्रविण माष्ट पृथिवीं तृतीयं मनुष्यान् यज्ञो ऽगात् ततो मा द्रविण माष्ट यतो रोजसा स्कभिता रजांसीति वैष्णु वारुणी मृचं जपति विष्णुर्वै यज्ञस्य दुरिष्टं पाति वरुण * स्विष्टं तयोरुभयोरेव शान्त्यै सा तत्र प्राय-श्चित्तिस्तदाहुर्यस्याग्निहोत्र मधिश्रितं प्राङुदायंस्स्ख-लते वापि वा भंशते का तत्र प्रायश्चित्तिरिति स यद्युप-

* "स्वष्ट-" (स्विष्टं) च।

निवर्तयेत्स्वर्गाल्लोकाद्यजमान मावर्त्तयेद्वेत्राश्मा उपविष्टायैत मग्निहोत्रपरीशेष * माहरेयुस्तस्य यथोन्नीतो स्यात् तथा जुहुयात् सा तत्र प्रायश्चित्तिस्तदाहुरथ यदि स्रुग्भिद्येत का तत्र प्रायश्चित्तिरित्यन्यां स्रुच माहृत्य जुहुयादथैतां स्रुचं भिन्नां माहवनीये ऽभ्यादध्यात् प्राग्दण्डां प्रत्यक्पुष्करां सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याहवनीये ह्यग्निर्विद्येताथ गार्हपत्य उपशाम्येत् का तत्र प्रायश्चित्तिरिति स यदि प्राञ्च मुद्धरेदायतनाच्यावेत यव्ययच्च मसुरवद्यच्चं तन्वीत यन्मन्येद् भ्रातृव्य यजमानस्य जनयेद् यदनुगमयेच्याणो यजमानं जह्यात् सर्व मेवैनं सह भस्मानं समोप्य गार्हपत्यायतने निधायाथ प्राञ्च माहवनीय मुद्धरेत् सा तत्र प्रायश्चित्तिः ॥ ४ ( ५ ) ॥

द्वादशे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्याग्निहोत्र मधिश्रित ममेध्य मापद्येत, का तत्र प्रायश्चित्तिरिति ; सर्व मेवैतत् स्रुच्यभिपर्यासिच्य प्राङुदेत्याहवनीये हैता समिध मभ्यादधात्यथोत्तरत आहवनीयस्योष्ण भस्म निरूह्य जुहुयात्, मनसा वा प्राजापत्यया वर्चा तद्धुत माहुतञ्च, स यद्येकमभिन्नुधीते यदि दयोरेव एव कल्पस्तञ्चेद् व्यपनयितुं शक्नुयाविष्णिचैतद दुष्ट मदुष्ट मभिपर्यासिच्य तस्य यथोन्नीतो स्यात्तथा जुहुयात्, सा तत्र प्रायश्चित्ति."

---

* 'परिशय' क, ग, घ।

-इति । अग्निहोत्रार्थं पयो गार्हपत्ये पाकार्थं यदधिश्रितम्, तद्यदि किञ्चिद् 'अमेध्यं' यज्ञानर्हं केशकीटादिकम् 'आपद्येत' प्राप्नुयात्; तदानीम् 'एतत्' हविः सर्वमप्यग्निहोत्रहवण्यां 'स्रुचि' साकल्येन सिक्त्वा, प्राङ्मुख 'उदेत्य' उत्थाय आहवनीयं प्रति गत्वा, तस्मिन् 'एतां' नित्यां समिधमादध्यात्। 'अथ' अनन्तरमाहवनीयस्योत्तरभागे किञ्चिदुष्णं भस्म ततो निस्सार्य तस्मिन् 'मनसा' नित्याग्निहोत्रमन्त्रमनुस्मृत्य 'वाचा वा' "प्रजापते न त्वदेतानि"–इति (ऋ० सं० १०. १२१. १०.) मन्त्रमुच्चार्य जुहुयात्। 'तत्' एतद्धुतमप्यहुतमपि भवति, भस्मनि हुतत्वाद्धुतमपि भवति, अग्निराहित्यादहुतमपि भवति। न केवलमधिश्रित एवामेध्यतया एतत् प्रायश्चित्तम्; किं तर्हि ? चतुरुन्नयनावस्थायां यद्येकस्मिन् उन्नीते, यदि वा द्वयोरुन्नीतयोरमेध्यपातः, तदानीमेष एव 'कल्पः' प्रकारः। उन्नयनं नामाग्निहोत्रहवण्यां सेचनम्। तत्र केशकीटादिदूषितमग्निहोत्रहवण्या युन्नीतं यद्यपनेतुं शक्नुयात्, तदानीमेतत् दुष्टं 'निष्पिच्य' निरस्य, स्थाल्यामवस्थितम् 'अदुष्टं' क्षीरमग्निहोत्रहवण्यामभिपर्यासिच्य 'यथोन्नीतं स्यात्' उन्नीतं येन प्रकारेण भवति, तेन प्रकारेण जुहुयात्; 'अदुष्ट' द्रव्यान्तरमधिश्रयणादिना संस्कृत्य जुहुयादित्यर्थः ७ ॥

त्रयोदशे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्याग्निहोत्रमधिश्रितं स्कन्दति वा विष्यन्दते वा, का तत्र प्रायश्चित्तिरिति; तदद्भिरुपनिनयेच्छान्त्यै; शान्तिर्वा आपो ऽथैनद्दक्षिणेन पाणिना ऽभिमृश्य जपति"–इति। अग्निहोत्रद्रव्यं गार्हपत्ये पाकार्थं

७ "आपद्यामि यद्योदि ऽमध्यकीटपतङ्गैर्वा यद्वाऽऽमेध्यं:०—० प्रजापते न त्वदेतान्यन्य इति०—० जुहुयात्"–इति आप० श्रौ ९. १०, २०–२१।

मधिश्रितं सत्, कदाचित् 'स्कन्दति' स्खलति, क्षीरबिन्दुरधः पततीत्यर्थः। 'विष्यन्दते' विशेषेण स्यन्दनं दाहाधिक्येन स्थाली-मुखस्योपरि उद्गमनं; तत् स्कन्नं विष्यन्दितं वा द्रव्यं दक्षिणेन पाणिना स्पृष्ट्वा वक्ष्यमाणं मन्त्रं जपेत् ॥

तं दर्शयति— "दिवं तृतीयं देवान् यज्ञो ऽगात्, ततो मा द्रविण माष्टान्तरिक्षं तृतीयं पितॄन् यज्ञो ऽगात्, ततो मा द्रविण माष्ट; पृथिवीं तृतीयं मनुष्यान् यज्ञो ऽगात्, ततो मा द्रविण माष्ट"–इति *। अस्य स्कन्नस्य विष्यन्दितस्य वा पयसः 'तृतीयम्' अंशस्वरूपं 'दिवं' स्वर्गलोकम् 'अगात्' प्राप्नोतु। तेन यज्ञोऽपि देवान् प्राप्नोतु। प्रापणाद् वैकल्यपरिहारे सति 'मा' मा मत्थि-ष्टोविषय 'द्रविण माष्ट' धनं प्राप्नोतु। तथैवापरं 'तृतीयं' द्रव्यांशस्वरूप मन्तरिक्ष मगात्। तेन यज्ञोऽपि पितॄन् प्राप्नोति। ततः प्रापणात् मां धनं प्राप्नोतु। पुनरप्यपरं 'तृतीयं' द्रव्यांशस्व-रूपं पृथिवी मगात्। तेन यज्ञोऽपि मनुष्यानगात्। ततस्तदुभय-प्रापणात् मां 'द्रविणं' धनम् 'माष्ट' प्राप्नोतु ॥

मन्त्रान्तरजपं विधत्ते— "ययो रोजसा स्कभिता रजांसीति वैष्णुवारुणी मृचं जपति; विष्णुर्वै यज्ञस्य दुरिष्टं पाति, वरुण स्विष्टं, तयोरुभयोरेव शान्त्यै"–इति। "ययोरोजसा"–इत्याद्यृक् सूक्ते पठिता †। तस्यायतुर्थपादे "विष्णू अगन् वरुणा पूर्वहूतौ"–इतिश्रुतत्वादियं विष्णुवरुणदेवताका। यज्ञस्य यद्

* सांहितायां माष्ट इति माष्टेति प्रतीकं पाठः।

† "ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा।
या पत्येते अप्रतीता सहोभिर्विष्णू अगन् वरुणा पूर्वहूतौ॥"
–इति ऋग्० सं० ७, ५, ७, ७। "इदं वै विष्णु"– इत्यादि च तत्र ज्ञातव्यम्।

'दुरिष्टम्' अङ्गवैकल्यं, तच्छमयित्वा विष्णुः पाति ; यज्ञस्य यत् 'स्विष्टं' यथाशास्त्र मनुष्ठित मङ्गं, तद्वरुणः पाति । फलप्रतिषेधनिवारणं तत्प्रतिपालनम् । तस्मादयं जपः 'तयोरुभयोः' दुरिष्टस्विष्टयोर्यथोक्तप्रकारेण शान्त्यर्थं सम्पद्यते । उत्तरवाक्य मुपसंहरति— "सा तत्र प्रायश्चित्तिः"—इति ॥ ;

चतुर्दशे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्याग्निहोत्र मधिश्रितं प्राङुदायन्स्खलते वा ऽपि वा भ्रंशते, का तत्र प्रायश्चित्तिरिति; स यद्युपनिवर्तयेत्स्वर्गाल्लोकाद्यजमान मावर्तयेद् दक्षिणाञ्चा उपविष्टायेत मग्निहोत्रपरीशेष माहरेयुस्तस्य यथोन्नीती स्यात् , तथा जुहुयात् ; सा तत्र प्रायश्चित्तिः"—इति । अग्निहोत्रद्रव्यं गार्हपत्ये ऽधिश्रितं, पाकादुर्ध्व मादाय प्राङ्मुख माहवनीयं प्रति 'उदायन्' उद्गच्छन् अध्वर्युर्यदा भवति, तदानीं तद्द्रव्यं 'स्खलते' यद्वा 'भ्रंशते' । बिन्दुपतनं स्खलनम् , साकल्येन द्रव्यपतनं भ्रंशः । पुनरप्यग्निहोत्रस्थाल्या द्रव्यं ग्रहीतुं सोऽध्वर्युर्यदि पश्चिमाभिमुखो निवृत्तो भवेत् , तदानीं स्वर्गप्राप्तं यजमानं तस्माल्लोकादावर्तयेत् । अतो निवृत्ति मकृत्वा स्खलन-भ्रंशदेशे एवोपविष्टाय 'अस्मै' अध्वर्यवे स्थालीगत मग्निहोत्रद्रव्यशेष मन्ये पुरुषाः आहरेयुः । 'तस्य' द्रव्यस्य स्वीकारेण अध्वर्युर्यथोन्नीती स्यात् , तथा जुहुयात् । 'उन्नीतम्' उन्नयनं स्थालीगतस्य द्रव्यस्याग्निहोत्रहवण्यां चतुर्वारं प्रक्षेपः ; "चतुरुन्नयति"—इति श्रुतत्वात् । उन्नयनादिसंस्कारपूर्वकं जुहुयादित्यर्थः * ॥

पञ्चदशे प्रश्नोत्तरे दर्शयति—"तदाहुरथ यदि स्रुग्भिद्येत, का तत्र प्रायश्चित्तिरित्यन्यां स्रुच माहृत्य जुहुयादथैतां स्रुचं भिन्ना

* आप० श्रौ० ९. १०. ११ सू० द्र० ।

माहवनीये ऽभ्यादध्यात् प्राग्दण्डां प्रत्यक्पुष्करां; सा तत्र प्राय- श्चित्तिः"-इति। 'स्रुग्' अग्निहोत्रहवणी, तद्वेदे स्रुगन्तरेण हुत्वा भिन्नां स्रुच माहवनीये पक्षिपेत्। तदानीं तदीयो दण्डः प्राच्यां मवस्थितः, तदीयं 'पुष्कर' बिलं प्रतीच्यां मवस्थितम्, यथा भवति तथा प्रक्षिपेत् ॥ *

षोडशं प्रश्नोत्तरं दर्शयति— "तदाहुर्यस्याहवनीये ऽग्निर्वि- द्येताथ गार्हपत्य उपशाम्येत्, का तत्र प्रायश्चित्तिरिति; स यदि प्राञ्च मुद्धरेदायतनाच्यवेत, यत्प्रत्यञ्च मसुरवयज्ञं तन्वीत, यन्मन्थेद् भ्रातृव्यं यजमानस्य जनयेद्, यदनुगमयेत्प्राणो यजमानं जह्यात्; सर्वमेवैनं सह भस्मानं समोप्य, गार्हपत्यायतने निधायाथ प्राञ्च माहवनीय मुद्धरेत्; सा तत्र प्रायश्चित्तिः"-इति। प्रतिदिन माहवनीयाग्निर्होमादूर्द्ध मुपशाम्यति; गार्हपत्याग्निस्तु सर्वदा धार्यते; तस्माद्गार्हपत्यात् तत्तद्धोमकाले चाहवनीयार्थं मग्निं विहरेदित्येषो ऽनुष्ठानक्रमः। एवं सति यदि कदाचिदाहव- नीयस्य स्थाने ऽग्निरनुपशान्तो विद्येत, तदानीं गार्हपत्यश्चेप- शाम्येत्; तत्तद्वैकल्यस्य परिहाराय पक्षाः पञ्चविधाः सम्भवन्ति। विद्यमान माहवनीयं गार्हपत्यतया सम्भाव्य, ततोऽपि पूर्वदेशे चाहवनीयं कर्तुं तस्मात् पूर्वसिद्धाहवनीयात् प्राञ्च मग्निं मुद्धरे- दिति प्रथमः पक्षः। तस्मिन् पक्षे यजमान.'आयतनात्' स्वकीय- स्थानात् प्रच्यवेत; चाहवनीयस्थानात् प्रच्युतत्वात्। अथ गार्ह- ... पूर्वसिद्धादाहवनीयात् प्रत्यञ्च मग्निं मुद्धरेदिति द्वितीयः ... ऽस्मिन् द्वितीयपक्षे यज्ञ एषो ऽसुरयज्ञसमानः स्यात्। ... तानसुरान् प्रकृत्यैव माम्नायते— "त

* अनुष्ठानक्रमस्थि।

श्चाहवनीय मग्र श्रा दधत, अथ गार्हपत्यम्, अथान्वाहार्यपचनम्"–इति (तै० ब्रा० १. १. ४. ४.) । तदीयदोषोऽपि तत्रैवाम्नातः—"भद्रा भूत्वा परा भविष्यन्ति"–इति। गार्हपत्यार्थमग्निमन्थनं कर्तव्य मिति तृतीयः पक्षः। तदानीं विद्यमान श्चाहवनीये तद्विरोधिनोऽग्न्यन्तरस्य मन्थनाद्यजमानस्य भ्रातृव्यमुत्पादयेत्। पुनराधानं कर्तुं विद्यमान माहवनीयम् 'अनुगमयेत्' उपशमयेदिति चतुर्थः पक्षः। तस्मिन् पक्षे विद्यमानस्य विनाशनात् प्राणो यजमानं परित्यजेत्। आहवनीयगतं भस्मसहितं सर्वमप्यग्निं कस्मिंश्चित् पात्रे प्रक्षिप्य, नीत्वा, गार्हपत्यस्थाने प्रक्षिप्य, अनन्तरं ततो गार्हपत्यात् प्राञ्च माहवनीयं मुद्धरेदिति पञ्चमः पक्षः। अस्मिन् पक्षे दोषाभावात् सैव प्रायश्चित्तिर्भवति * ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां द्वितीयाध्याये
(द्वात्रिंशाध्याये) चतुर्थः खण्डः ॥ ४ (५) ॥

---

॥ अथ पञ्चमः खण्डः ॥

तद्याहुर्यस्याग्नावग्नि मुद्धरेयुः का तत्र प्रायश्चित्तिरिति स यद्यनुपश्येदुद्धृत्य पूर्व मपरं निदध्याद्यद्यनानुपश्येत्सो ऽग्नये ऽग्निवते ऽष्टाकपालं पुरोळाशं

---

* आप० श्रौ० ३. १२ द्र०।

माहवनीये ऽभ्यादध्यात् प्रागदण्डां प्रत्यक्पुष्करां ; सा तत्र प्रायश्चित्तिः"–इति। 'स्रुग्' अग्निहोत्रहवणी, तद्भेदे स्रुगन्तरेण हुत्वा भिन्नां स्रुच माहवनीये प्रक्षिपेत्। तदानीं तदीयो दण्डः प्राच्या मवस्थितः, तदीयं 'पुष्कर' बिलं प्रतीच्या मवस्थितम्, यथा भवति तथा प्रक्षिपेत् ॥ ❁

षोडशे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्याहवनीये ऽग्निर्विद्येताथ गार्हपत्य उपशाम्येत्, का तत्र प्रायश्चित्तिरिति ; स यदि प्राञ्च मुद्धरेदायतनाच्च्यवेत, यत्प्रत्यञ्च मसुरवद्यज्ञं तन्वीत, यन्मन्थेद् भ्रातृव्यं यजमानस्य जनयेद्, यदनुगमयेत्प्राणो यजमानं जह्यात् ; सर्व मेवैनं सह भस्मानं समोप्य, गार्हपत्यायतने निधायाथ प्राञ्च माहवनीय मुद्धरेत् ; सा तत्र प्रायश्चित्तिः"–इति। प्रतिदिन माहवनीयाग्निर्होमादूर्द्ध मुपशाम्यति ; गार्हपत्याग्निस्तु सर्वदा धार्यते ; तस्माद्गार्हपत्यात् तत्तद्धोमकाले आहवनीयार्थ मग्निं विहरेदित्येषो ऽनुष्ठानक्रमः। एवं सति यदि कदाचिदाहवनीयस्य स्थाने अग्निरनुपशान्तो विद्येत, तदानीं गार्हपत्यश्चोपशाम्येत् ; तत्रत्यवैकल्यस्य परिहाराय पक्षाः पञ्चविधाः सम्भवन्ति। विद्यमान माहवनीयं गार्हपत्यतया सम्भाव्य, ततोऽपि पूर्वदेशे आहवनीयं कर्तुं तस्मात् पूर्वसिद्धाहवनीयात् प्राञ्च मग्निं मुद्धरेदिति प्रथमः पक्षः। तस्मिन् पक्षे यजमानः 'आयतनात्' स्वकीयस्थानात् प्रच्यवेत ; आहवनीयस्थानात् प्रच्युतत्वात्। अथ गार्हपत्यार्थं पूर्वसिद्धादाहवनीयात् प्रत्यञ्च मग्निं मुद्धरेदिति द्वितीयः पक्षः। अस्मिन् द्वितीयपक्षे यज्ञ एषो ऽसुरयज्ञसमानः स्यात्। असुरयज्ञश्च शाखान्तरे तानसुरान् प्रकृत्यैव माम्नायते— "त

❁ भाष्यपुस्तकभिन्नेष्वनुपलब्धमिदम्।

आह्वनीय मग्र आ दधत, अथ गार्हपत्यम्, अथान्वाहार्यपचनम्"–इति ( तै० ब्रा० १. १. ४. ४. ) । तदीयदोषोऽपि तत्रैवाम्नातः— "भद्रा भूत्वा परा भविष्यन्ति"–इति । गार्हपत्यार्थ मग्निमन्थनं कर्तव्य मिति तृतीयः पक्षः । तदानीं विद्यमान आहवनीये तद्विरोधिनोऽन्यस्य मन्थनाद्यप्रमाणस्य प्रत्युत्पादयेत् । पुनराधानं कर्तुं विद्यमान माहवनीयम् 'अनुगमयेत्' उपशमयेदिति चतुर्थः पक्षः । तस्मिन् पक्षे विद्यमानस्य विनाशनात् प्राणो यजमानं परित्यजेत् । आहवनीयगतं भस्मसहितं सर्वं मप्यग्नि कस्मिंश्चित् पात्रे प्रक्षिप्य, नीत्वा, गार्हपत्यस्थाने प्रक्षिप्य, अनन्तरं ततो गार्हपत्यात् प्राच माहवनीय मुद्धरेदिति पञ्चमः पक्षः । अस्मिन् पक्षे दोषाभावात् सैव प्रायश्चित्तिर्भवति ० ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां द्वितीयाध्याये
( द्वात्रिंशाध्याये ) चतुर्थ खण्डः ॥ ४ ( ५ ) ॥

---

॥ अथ पञ्चमः खण्डः ॥

तदाहुर्यस्याग्नावग्नि मुद्धरेयुः का तत्र प्रायश्चित्ति रिति स यद्यनुपश्येदुद्धृत्य पूर्व मपरं निदध्याद्यद्यना-नुपश्येत्सो ऽग्नये ऽग्निवते ऽष्टाकपालं पुरोळाशं

आश्व० श्रौ० ३. १३ ४० ।

निर्वपेत्तस्य याज्यानुवाक्ये अग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निनेत्याहुतिं वाहवनीये जुहुयादग्नयेऽग्निवते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य गार्हपत्याहवनीयौ मिथः संसृज्येयातां का तत्र प्रायश्चित्तिरिति सोऽग्नये वीतयेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्न आयाहि वीतये यो अग्निं देववीतय इत्याहुतिं वाहवनीये जुहुयादग्नये वीतये स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य सर्व एवाग्नयो मिथः संसृज्येरन् का तत्र प्रायश्चित्तिरिति सोऽग्नये विविचयेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये स्वर्णं वस्तोरुषसा मरोचि त्वा मग्ने मानुषीरोळते विश इत्याहुतिं वाहवनीये जुहुयादग्नये विविचये स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्नयोऽन्यैरग्निभिः संसृज्येरन् का तत्र प्रायश्चित्तिरिति सोऽग्नये क्षामवतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अक्रन्ददग्नि* स्तनयन्निव द्यौरधा यथा नः पितरः परास इत्याहुतिं वाहवनीये जुहुयादग्नये क्षामवते स्वाहेति सा तत्र प्रायश्चित्तिः ॥ ५ ( ६ ) ॥

* [illegible]

सप्तदशे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्याग्नावग्निं मुद्धरेयुः, का तत्र प्रायश्चित्तिरिति; स यद्यनुपश्येदुद्धृत्य पूर्वं मपरं निदध्याद् यद्यनानुपश्येत्, सो ऽग्नये ऽग्निवते ऽष्टाकपालं पुरोळाशं निर्वपेत्; तस्य याज्यानुवाक्ये 'अग्निनाग्निः समिध्यते'–'त्वं ह्यग्ने अग्निनेत्याहुतिं वाहवनीये जुहुयादग्नये ऽग्निवते स्वाहेति; सा तत्र प्रायश्चित्तिः"–इति । सायम्प्रातराहवनीयेऽग्नौ स्थित एवं सति पुनरपि गार्हपत्याग्निं य उद्धरेयुः, तदानीं मुद्धृतस्याग्नेः प्रक्षेपात् पूर्वं मेव विद्यमानस्याग्नेः दर्शनम्। तं 'पूर्वं' विद्यमान मग्निम् 'उद्धृत्य' तस्मादाहवनीयस्थानादुद्धृत्य, तस्मिन् स्थाने पुनः 'अपरम्' इदानीं मानीत मग्निं निदध्यात् । यदि विद्यमानं ("अनानुपश्येत्") नानुपश्येत्, तदानीं मानीत मग्निं तत्र प्रक्षिप्य, पश्चादग्निद्वय मवगत्य 'अग्निवते ऽग्नये' देवतायै पुरोडाशं निरुप्य, तस्यैते याज्यानुवाक्ये कुर्यात् । "अग्निनाग्निः"–इति (ऋ० सं० १. १२. ६.) पुरोनुवाक्या, "त्वं ह्यग्ने अग्निना"–इति (ऋ० सं० ८. ४३. १४.) याज्या । सोऽयमेकः पक्षः । दर्विहोमवद्याज्यानुवाक्ये परित्यज्य "अग्नये ऽग्निवते स्वाहा"–इतिमन्त्रेण आहवनीये आज्यं जुहुयादिति * द्वितीयः पक्षः ॥

अष्टादशे प्रश्नोत्तरे दर्शयति—"तदाहुर्यस्य गार्हपत्याहवनीयौ मिथः संसृज्येयातां, का तत्र प्रायश्चित्तिरिति; सो ऽग्नये वीतये ऽष्टाकपालं पुरोळाशं निर्वपेत्; तस्य याज्यानुवाक्ये 'अग्न आ याहि वीतये'–'यो अग्निं देववीतय इत्याहुतिं † वाहवनीये जुहुयादग्नये

* आग्नेयीष्विष्टिषु एषा चन्द्रतमाप्तिवतीष्टि। तथाहि "अथाग्नेय्य इष्टयः"–इत्यधिकारे "साग्नावग्निमथनेऽग्निवते"–इति आप० श्रौ० ९ । १२ २. १३ ।

† ऋ० सं० ६ । १६ । १०, १, १२ ८ ।

वीतये स्वाहेति; सा तत्र प्रायश्चित्ति"–इति। अग्न्युद्धरणादूर्ध्वं व्यवस्थितयोराहवनीयगार्हपत्ययोः सतोर्यदि गार्हपत्यगतोऽङ्गार आहवनीये प्रमादात् पतेत्, आहवनीयगतो वा गार्हपत्ये पतेत्, सोऽयं 'मिथः संसर्गः'; तत्र प्रायश्चित्तार्थस्य पुरोडाशस्य 'वीति'-गुणयुक्तोऽग्निर्देवता *। अन्यत् पूर्ववद् व्याख्येयम्॥

एकोनविंशे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्य सर्व एवाग्नयो मिथः संसृज्येरन्, का तत्र प्रायश्चित्तिरिति; सोऽग्नये विविचयेऽष्टाकपालं पुरोळाशं निर्वपेत्; तस्य याज्यानुवाक्ये 'स्वर्ण वस्तो-रुषसामरोचि'–'त्वामग्ने मानुषीरीळते विशः' इत्याहुतिं † वाहवनीये जुहुयादग्नये विविचये स्वाहेति; सा तत्र प्रायश्चित्तिः" –इति। आहवनीय–गार्हपत्य–दक्षिणाग्नीनां सर्वेषां परस्पर-संसर्गे सति 'विविचि'-गुणयुक्तोऽग्निः पुरोडाशदेवता ‡। अन्यत् पूर्ववद् व्याख्येयम्॥

विंशे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्याग्नयोऽन्यैरग्निभिः संसृज्येरन्, का तत्र प्रायश्चित्तिरिति; सोऽग्नये क्षामवतेऽष्टाकपालं पुरोळाशं निर्वपेत्; तस्य याज्यानुवाक्ये 'अक्रन्ददग्नि स्तनयन्निव द्यौः'–'अधा यथा नः पितरः परास' इत्याहुतिं § वाहवनीये जुहुयादग्नये क्षामवते स्वाहेति; सा तत्र प्रायश्चित्तिः" –इति। 'यस्य' अग्निहोत्रिणः सम्बन्धिन आहवनीयाद्यग्नयोऽन्यदीयैराहवनीयादिभिर्लौकिकाग्निभिर्वा संसृज्येरन्, तस्य प्राय-

---

* "गार्हपत्याहवनीययोर्वीतये"–इति आश्व० श्रौ० ३ १२ ५।

† ऋ० सं० ७ १० २, ५ ८ ३।

‡ "मिथश्चेद् विविचय"–इति आश्व० श्रौ० ३ १२, ५।

§ ऋ० सं० १० ४५ ४, ४ २ १६।

चित्तार्थे पुरोडाशे 'क्षामवद्'–गुणयुक्तो ऽग्निर्देवता *। अन्यत् पूर्ववद् व्याख्येयम् ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां द्वितीयाध्याये
( द्वात्रिंशाध्याये ) पञ्चमः खण्डः ॥ ५ ( ६ ) ॥

---

॥ अथ षष्ठः खण्डः ॥

तदाहुर्यस्याग्नयो ग्राम्येणाग्निना सन्दह्येरन् का तत्र प्रायश्चित्तिरिति सो ऽग्नये संवर्गायाष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये कुवित्सु नो गविष्टये मा नो अस्मिन्महाधन इत्याहुतिं वाहवनीये जुहुयादग्नये संवर्गाय स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्नयो दिव्येनाग्निना संसृज्येरन् का तत्र प्रायश्चित्तिरिति सो ऽग्नये ऽप्सुमते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अप्स्वग्ने सधिष्टव

---

* आश्व० श्रौ० ३, १३, ४। तै० ब्रा० ३, ७, ४, ५। तै० सं० २, २, २, ४, ५। मी० द० जै० सू० ६, ४, १०-२१, अधि ५। "क्षामवत्यादिना यद्वत् कर्मणा प्रतनायते। वेदीपादकरणे जाते दोषकदस्तदे। क्षौमेनैतेन दोषाणां सर्वेषां यत्र मादिशेत्"–इति भ० पु०। 'एकश्च एकमार्गदिनेनाग्निक्षेपात् क्षामवतीष्टिः सर्वत्र इत्याद.'–इति मु० ना०।

मयो दधे मेधिरः पूतदक्ष इत्याहुतिं वाहवनीये जुहुयादग्नयेऽप्सुमते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्नयः शवाग्निना संसृज्येरन् का तत्र प्रायश्चित्तिरिति सोऽग्नये शुचयेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्निः शुचिव्रततम उदग्ने शुचयस्तवेत्याहुतिं वाहवनीये जुहुयादग्नये शुचये स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्नय आरण्येनाग्निना सन्दह्येरन् का तत्र प्रायश्चित्तिरिति समे वारोपयेद्दर्भो वोल्मुकं वा मोक्षयेद्यद्याहवनीयाद्यदि गार्हपत्याद्यदि न शक्नुयात्सोऽग्नये संवर्गायाष्टाकपालं पुरोळाशं निर्वपेत्तस्योक्ते याज्यानुवाक्ये आहुतिं वाहवनीये जुहुयादग्नये संवर्गाय स्वाहेति सा तत्र प्रायश्चित्तिः ॥ ६ (७) ॥

एकविंशे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्याग्नयो ग्राम्येणाग्निना सन्दह्येरन्, का तत्र प्रायश्चित्तिरिति; सोऽग्नये संवर्गायाष्टाकपालं पुरोळाशं निर्वपेत्; तस्य याज्यानुवाक्ये 'कुवित्सु नो गविष्टये'-'मा नो अस्मिन् महाधन इत्याहुतिं ७ वाहवनीये जुहुयादग्नये संवर्गाय स्वाहेति; सा तत्र प्रायश्चित्तिः"-इति। 'ग्राम्योऽग्निः' महानसादिगतः। स कदाचित् प्रमादेन प्रवृद्धो ग्रामगतानि गृहाणि दहन्नग्निहोत्रशालागतानाहवनीयादीन-

७ ऋ० सं० ८. ७५. ११, १२।

ग्नीन् सम्यग् दहति, तदानीं प्रायश्चित्तस्य पुरोडाशस्य 'संवर्ग'-गुणयुक्तो ऽग्निर्देवता *। अन्यत् पूर्ववत् ॥

द्वाविंशे प्रश्नोत्तरे दर्शयति—"तदाहुर्यस्याग्नयो दिव्येनाग्निना संसृज्येरन्, का तत्र प्रायश्चित्तिरिति ; सो ऽग्नये ऽप्सुमते ऽष्टाकपालं पुरोळाशं निर्वपेत् ; तस्य याज्यानुवाक्ये 'अप्स्वग्ने सधिष्टव'-'मयो दधे मेधिरः पूतदक्ष इत्याहुतिं † वाहवनीये जुहुयादग्नये ऽप्सुमते स्वाहेति ; सा तत्र प्रायश्चित्तिः"–इति । 'दिव्याग्निः' वैद्युतः । अशनिपाते सति तदीयेनाग्निना आहवनीयादीनां संसर्गे प्रायश्चित्तस्य पुरोडाशस्य 'अप्सुमान्' अग्निर्देवता ‡। अन्यत् पूर्ववत् ॥

त्रयोविंशे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्याग्नयः शवाग्निना संसृज्येरन्, का तत्र प्रायश्चित्तिरिति ; सो ऽग्नये शुचये ऽष्टाकपालं पुरोळाशं निर्वपेत् ; तस्य याज्यानुवाक्ये 'अग्निः शुचिव्रततम'-'उदग्ने शुचयस्तवेत्याहुतिं § वाहवनीये जुहुयादग्नये शुचये स्वाहेति ; सा तत्र प्रायश्चित्तिः"–इति । प्रेतदहनाय प्रवृत्तोऽग्निः 'शवाग्निः'। तत्संसर्गे पुरोडाशस्य 'शुचि'-गुणयुक्तो ऽग्निर्देवता ‖। अन्यत् पूर्ववद् व्याख्येयम् ॥

चतुर्विंशे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्याग्नय आरण्येनाग्निना सन्दह्येरन्, का तत्र प्रायश्चित्तिरिति ; समे वारोपयेदरणी योल्मुकं वा मोचयेद् ; यद्याहवनीयाद्यदि गार्हपत्याद् ; यदि न

* "अग्नये संवर्गाय"–इति आश्व० श्रौ० ३ १२ ७।

† ऋ० सं० ८, ४३ ९, २ १.३।

‡ "वैद्युतेऽप्सुमते"–इति आश्व० श्रौ० ३ १३.८।

§ ऋ० सं० ८, ४४, २१, १०।

‖ "शुचये ससर्जनेऽपिनाग्नीन" इति आश्व० श्रौ० ३, १३.४

अनुयात्, सोऽग्नये संवर्गायाष्टाकपालं पुरोळाशं निर्वपेत्; तस्योक्ते याज्यानुवाक्ये *आहुतिं वाहवनीये जुहुयादग्नये संवर्गाय स्वाहेति; सा तत्र प्रायश्चित्तिः"–इति। दावाग्निररण्यादागत्य अग्निहोत्रशालां दहन्नाहवनीयादीन् यदा सम्यग् दहति, तदानीं तद्दहनात् पूर्वमेवाग्नीन् 'अरणी' द्वयोररण्योः सह समारोपयेदेव। तदशक्तौ गार्हपत्याहवनीयात् 'उल्मुकं मोचयेत्' सहसोल्मुकमादाय परितो गच्छेत्। समारोपणं वोल्मुकमोचनं वेति पक्षद्वयस्य अग्निदाहत्वरया यदा न शक्तिः, तदा 'संवर्ग'–गुणयुक्तोऽग्निः पुरोडाशदेवता †। तदीययाज्यानुवाक्ये च पूर्वमेवाभिहिते (२१पृ० १२पं०) ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकाया द्वितीयाध्याये
(द्वात्रिंशाध्याये) षष्ठः खण्डः ॥ ६ (७) ॥

---

॥ अथ सप्तमः खण्डः ॥

तदाहुर्यं आहिताग्निरुपवसथेऽश्रु कुर्वीत का तत्र प्रायश्चित्तिरिति सोऽग्नये व्रतभृतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये त्वमग्ने व्रतभृच्छुचिर्व्रतानि बिभ्रद् व्रतपा अदब्ध इत्याहुतिं

---

* ऋ० ५-८ ४४ २१, १७।

† "संवर्ग अग्निर्यस्य देवताऽष्टाकपालस्य"–इति आपस्त० श्रौ० ९, ४, २१।

वाहवनीये जुहुयादग्नये व्रतभृते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निरुपवसथे ऽव्रत्य मा पद्येत का तत्र प्रायश्चित्तिरिति सो ऽग्नये व्रतपतये ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये त्व मग्ने व्रतपा असि यद्वो वयं प्र मिनाम व्रतानीत्या-हुतिं वाहवनीये जुहुयादग्नये व्रतपतये स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निरमावास्यां पौर्णमासीं वातीयात् * का तत्र प्रायश्चित्तिरिति सोऽग्नये पथिकृते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये वेत्था हि वेधो अध्वन आ देवाना मपि पन्था मगन्मेत्याहुतिं वाहवनीये जुहुयादग्नये पथिकृते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य सर्व एवाग्नय उपशाम्येरन् का तत्र प्रायश्चित्तिरिति सो ऽग्नये तपस्वते जनद्वते पावकवते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये आ याहि तपसा जनेष्वा नो याहि तपसा जनेष्वित्याहुतिं वाहवनीये जुहुयादग्नये तपस्वते जनद्वते पावकवते स्वाहेति सा तत्र प्रायश्चित्तिः ॥ ७ ( ८ ) ॥

षड्विंशे प्रश्नोत्तरे दर्शयति— "तदाहुर्य आहिताग्निरुपवसथे ऽश्रु कुर्वीत , का तत्र प्रायश्चित्तिरिति ; सो ऽग्नये व्रतभृते

* "वा पतीयात्" क।

ऽष्टाकपालं पुरोळाशं निर्वपेत्; तस्य याज्यानुवाक्ये 'त्वमग्ने व्रत-भृच्छुचिर्'-'व्रतानि बिभ्रद् व्रतपा अदब्ध' इत्याहुतिं वाहवनीये जुहुयादग्नये व्रतभृते स्वाहेति; सा तत्र प्रायश्चित्तिरि"ति ।
'उपवसथे' यजनीयदिनात् पूर्वदिने [illegible] दिना तदानीं
स्मरणादिना वा नेत्रयोरश्रुमोचने पुरोडा [illegible] रोपये-
ऽग्निर्देवता । त्वमग्ने व्रतभृदित्यादिके सूत्र [illegible] सह-
नुवाक्ये * ॥

षड्विंशे प्रश्नोत्तरे दर्शयति— "[illegible] उपव-
सथे ऽव्रत्यमापद्येत, का तत्र प्राय[illegible]त्तिरिति; [illegible] ऽग्नये व्रत-
पतये ऽष्टाकपालं पुरोळाशं निर्वपेत्; तस्य याज्यानुवाक्ये 'त्व
मग्ने व्रतपा असि'-'यद्वो वयं प्र मिनाम व्रतानी'त्याहुतिं † वा-
हवनीये जुहुयादग्नये व्रतपतये स्वाहेति; सा तत्र प्रायश्चित्तिः"-
इति । व्रतविरुद्धं निषिद्धाचरणम् 'अव्रत्यं' दिवास्वापादिकम् 'आ
पद्येत' प्राप्नुयात्, तत्र 'व्रतपति'-गुणोऽग्निः पुरोडाशदेवताः ॥

सप्तविंशे प्रश्नोत्तरे दर्शयति "[illegible] आहिताग्निरमा-
वास्यां पौर्णमासीं वातीयात्, का तत्र प्रायश्चित्तिरिति; सो ऽग्नये
पथिकृते ऽष्टाकपालं पुरोळाशं निर्वपेत्; तस्य याज्यानुवाक्ये
'वेत्था हि वेधो अध्वन'-'आ देवाना मपि पन्था मगन्मे'त्याहुतिं ‡
वाहवनीये जुहुयादग्नये पथिकृते स्वाहेति; सा तत्र प्रायश्चित्तिः"

* "अग्निर्व्रतभृद् । त्वमग्ने व्रतभृच्छुचिरग्ने—व्रतानि बिभ्रद् व्रतपा—एवं वार्ध्यानुपाते"—इति आश्व० श्रौ० ३ १३ १२-१४ ।

† ऋ० सं० ८ ११ १, १० २ ४ ।

‡ "अग्निरपथी अध्वपतये"—इति आश्व० श्रौ० ३ १ २ ।

§ ऋ० सं० ६ १६ ३, १० २ ३ ।

इति । आहिताग्निरमावास्येष्टिं पौर्णमास्येष्टिं वा यदि कदाचिदतिक्रामेत् , तदा 'पथिकृद्'-गुणयुक्तोऽग्निः पुरोडाशदेवता* ॥

षष्टाविंशे प्रश्नोत्तरे दर्शयति— "तदाहुर्यस्य सर्व एवाग्नय उपशाम्येरन् , का तत्र प्रायश्चित्तिरिति , सो ऽग्नये तपस्वते जनद्वते पावकवते ऽष्टाकपालं पुरोळाशं निर्वपेत् ; तस्य याज्यानुवाक्ये 'आ याहि तपसा जनेषु'—'आ नो याहि तपसा जनेष्वित्याहुतिं'† वाहवनीये जुहुयादग्नये तपस्वते जनद्वते पावकवते स्वाहेति ; सा तत्र प्रायश्चित्तिः"—इति । आहवनीय-गार्हपत्य-दक्षिणाग्नीनां सर्वेषां युगपच्छान्तौ 'तपस्वज्जनद्वत्पावकवद्'-गुणयुक्तोऽग्निः पुरोडाशदेवता ‡ ॥ ७ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकाया द्वितीयाध्याये
( द्वात्रिंशाध्याये ) सप्तमः खण्डः ॥ ७ ( ८ ) ॥

---

॥ अथ अष्टमः खण्डः ॥

तदाहुर्य आहिताग्निराग्रयणेनानिष्ट्वा नवान्नं प्राश्नीयात् का तत्र प्रायश्चित्तिरिति सो ऽग्नये वैश्वानराय द्वादशकपालं पुरोळाशं निर्वपेत्तस्य याज्यानु-

---

* "यदि तृतीयामावास्या पौर्णमासीं वा"—इति आश्व० श्रौ० ३ १० १०-१२ ।

† आश्व० श्रौ० ३ १२ २७ द्र० ।

‡ तत इदिरग्निस्तपस्वान् जनद्वान् पावकवान् —इति आश्व० श्रौ० ३ १२ २६ ।

वाक्ये वैश्वानरो अजीजनत् पृष्टो दिवि पृष्टो अग्निः पृथिव्या मित्याहुतिं वाहवनीये जुहुयादग्नये वैश्वानराय स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि कपालं नश्येत् का तत्र प्रायश्चित्तिरिति सो ऽश्विभ्यां द्विकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अश्विना वर्त्तिरस्मद् आ गोमता नासत्या रथेनेत्याहुतिं वाहवनीये जुहुयादश्विभ्यां स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि पवित्रं नश्येत् का तत्र प्रायश्चित्तिरिति सो ऽग्नये पवित्रवते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये पवित्रं ते विततं ब्रह्मणस्पते तपोष्पवित्रं विततं दिवस्पद इत्याहुतिं वाहवनीये जुहुयादग्नये पवित्रवते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि हिरण्यं नश्येत् का तत्र प्रायश्चित्तिरिति सो ऽग्नये हिरण्यवते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये हिरण्यकेशो रजसो विसार आ ते सुपर्णा अभिनन्तँ एवैरित्याहुतिं वाहवनीये जुहुयादग्नये हिरण्यवते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि प्रातरस्नातो ऽग्निहोत्रं जुहुयात् का तत्र प्रायश्चित्तिरिति सो ऽग्नये वरुणा-

याष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये त्वं नो अग्ने वरुणस्य विद्वान्त्स त्वं नो अग्ने ऽवमो भवोतीत्याहुतिं वाहवनीये जुहुयादग्नये वरुणाय स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि सूतकान्नं प्राश्नीयात् का तत्र प्रायश्चित्तिरिति सो ऽग्नये तन्तुमते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये तन्तुं तन्वन्नजसो भानु मन्विह्युयावतो नह्यत नोत सोम्या इत्याहुतिं वाहवनीये जुहुयादग्नये तन्तुमते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्जीवे मृतशब्दं श्रुत्वा का तत्र प्रायश्चित्तिरिति सोऽग्नये सुरभिमते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्निर्होता न्यसीदद्यजीयानस्साध्वी मकर्देववीतिं नो अद्येत्याहुतिं वाहवनीये जुहुयादग्नये सुरभिमते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यस्य भार्या गौर्वा यमौ जनयेत् का तत्र प्रायश्चित्तिरिति सो ऽग्नये मरुत्वते त्रयोदशकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये मरुतो यस्य हि क्षये ऽरा इवेदचर मा अहेवेत्याहुतिं वाहवनीये जुहुयादग्नये मरुत्वते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुरपत्नीको-

ऽग्निहोत्र माहरे३त् नाहरे३त् इति आहरेदित्याहुर्यदि नाहरेदनद्धापुरुषः को ऽनद्धापुरुष इति न देवान्न पितॄन्न मनुष्या इति तस्मादपत्नीको ऽप्यग्निहोत्र माहरेत्तदेषाभियज्ञगाथा गीयते यजेत् सौत्रामण्या मपत्नीको ऽप्यसोमपः मातापितृभ्या मनृणार्थाद्यजेति वचनाच्छ्रुतिरिति तस्मात् सौम्यं याजयेत् ॥ ८ ( ९ ) ॥

एकोनत्रिंशे प्रश्नोत्तरे दर्शयति— "तदाहुर्य आहिताग्निराग्रयणेनानिष्ट्वा नवान्न प्राश्नीयात्, का तत्र प्रायश्चित्तिरिति; सो ऽग्नये वैश्वानराय द्वादशकपालं पुरोळाशं निर्वपेत्; तस्य याज्यानुवाक्ये 'वैश्वानरो अजीजनत्'-'पृष्टो दिवि पृष्टो अग्निः पृथिव्या मित्याहुतिं * वाहवनीये जुहुयादग्नये वैश्वानराय स्वाहेति; सा तत्र प्रायश्चित्तिः"-इति। गृहेषु नवधान्ये समागते सति, आग्रयणेष्टिं कृत्वा पश्चात् नवान्नं भोक्तव्यम्; तस्या इष्टेरकरणे 'वैश्वानर'-गुणयुक्तो ऽग्निः † पुरोडाशदेवता।

त्रिंशे प्रश्नोत्तरे दर्शयति— "तदाहुर्य आहिताग्निर्यदि कपालं नश्येत्, का तत्र प्रायश्चित्तिरिति; सो ऽश्विभ्यां द्विकपालं पुरोळाशं निर्वपेत्; तस्य याज्यानुवाक्ये 'अश्विना वर्तिरस्मद्'-'आ गोमता नासत्या रथेनेत्याहुतिं ‡ वाहवनीये जुहुयादश्विभ्यां

* आश्व० श्रौ० ३.१३.२ द्र०।
† आश्व० श्रौ० ३.१३.८। ऋ० ३.६.८।
‡ ऋ० सं० १.९२.१६; ७.७२.१।

स्वाहेति ; सा तत्र प्रायश्चित्ति."–इति । 'य आहिताग्नि.' यस्य आहिताग्नेः पुरोडाशनिष्पादकं 'कपालं' यदि नश्येत् , तदानीमश्विनौ पुरोडाशदेवते * ॥

एकविंशे प्रश्नोत्तरे दर्शयति—"तदाहुर्यं आहिताग्निर्यदि पवित्रं नश्येत् , का तत्र प्रायश्चित्तिरिति ; सोऽग्नये पवित्रवतेऽष्टाकपालं पुरोळाशं निर्वपेत् ; तस्य याज्यानुवाक्ये 'पवित्रं ते विततं ब्रह्मणस्पते'–'तपोष्पवित्रं विततं दिवस्पद' इत्याहुतिं † वाहवनीये जुहुयादग्नये पवित्रवते स्वाहेति ; सा तत्र प्रायश्चित्तिः"–इति । आहिताग्नेः पवित्रनाशे 'पवित्रवद्'–गुणयुक्तोऽग्निः ‡ पुरोडाशदेवता ॥

द्वात्रिंशे प्रश्नोत्तरे दर्शयति—"तदाहुर्यं आहिताग्निर्यदि हिरण्यं नश्येत् , का तत्र प्रायश्चित्तिरिति ; सोऽग्नये हिरण्यवतेऽष्टाकपालं पुरोळाशं निर्वपेत् ; तस्य याज्यानुवाक्ये 'हिरण्यकेशो रजसो विसारे'–'आ ते सुपर्णा अमिनन्तँ एवैरित्याहुतिं § वाहवनीये जुहुयादग्नये हिरण्यवते स्वाहेति ; सा तत्र प्रायश्चित्ति."–इति । आहिताग्नेर्हिरण्यनाशे 'हिरण्यवद्'–गुणयुक्तोऽग्निः पुरोडाशदेवता ॥

त्रयस्त्रिंशे प्रश्नोत्तरे दर्शयति—"तदाहुर्यं आहिताग्निर्यदि प्रातरस्नातोऽग्निहोत्रं जुहुयात् , का तत्र प्रायश्चित्तिरिति ; सोऽग्नये वरुणायाष्टाकपालं पुरोळाशं निर्वपेत् ; तस्य याज्यानुवाक्ये-

---

* आश्व० श्रौ० ३ ।१२ ८, १० ।

† ऋ० सं० ९ ८३ १, २ ।

‡ आश्व० गृ० ३, ९ ।

§ ऋ० सं० १ ७९, १, २ ।

'त्वं नो अग्ने वरुणस्य विद्वान् स त्वं नो अग्ने ऽवमो भवोती'त्याहुतिं * आहवनीये जुहुयादग्नये वरुणाय स्वाहेति ; सा तत्र प्रायश्चित्तिः"—इति । आहिताग्नेः स्नान मन्तरेणाग्निहोत्रहोमे 'वरुण'—गुणको ऽग्निः पुरोडाशदेवता * ॥

चतुस्त्रिंशे प्रश्नोत्तरे दर्शयति—"तदाहुर्य आहिताग्निर्यदि सूतकान्नं प्राश्नीयात्, का तत्र प्रायश्चित्तिरिति ; सो ऽग्नये तन्तुमते ऽष्टाकपालं पुरोळाशं निर्वपेत् ; तस्य याज्यानुवाक्ये 'तन्तुं तन्वन्रजसो भानुमन्विहि'—'अक्षानहो नह्यतनोत सोम्या' इत्याहुतिं † आहवनीये जुहुयादग्नये तन्तुमते स्वाहेति ; सा तत्र प्रायश्चित्तिः"—इति । आहिताग्नेः सूतकान्नप्राशने 'तन्तुमद्'—गुणको ऽग्निर्देवता ‡ ॥

पञ्चत्रिंशे प्रश्नोत्तरे दर्शयति—"तदाहुर्य आहिताग्निर्जीवे मृतशब्दं श्रुत्वा, का तत्र प्रायश्चित्तिरिति ; सोऽग्नये सुरभिमते ऽष्टाकपालं पुरोळाशं निर्वपेत् ; तस्य याज्यानुवाक्ये 'अग्निर्होता न्यसीदद्यजीयान्'—'साध्वीमकर्देववीतिं नो अद्ये'त्याहुतिं § आहवनीये जुहुयादग्नये सुरभिमते स्वाहेति ; सा तत्र प्रायश्चित्तिः"—इति । आहिताग्निः स्वस्मिन् जीवत्येव स्वकीयमरणशब्दं यदा वैरिमुखाच्छृणुयात्, तदानीं 'सुरभि'—मद्गुणयुक्तो ऽग्निर्देवता ‖ ॥

षट्त्रिंशे प्रश्नोत्तरे दर्शयति—"तदाहुर्य आहिताग्निर्यस्य

---

* ऋ० सं० ४, १, ४, ५ ।

† ऋ० सं० १०, ५३, ६, ७ ।

‡ आप० श्रौ० ९, ८, ५, ६० । शाङ्खा० श्रौ० ५, ४ ।

§ ऋ० सं० ५, १, ६, १०, ५३, ३ ।

‖ "सुरभय एव यद्यधीयीत मृतशब्द."—इति आप० श्रौ० ३, १९, ११ ।

भार्या गौर्वा यमौ जनयेत्, का तत्र प्रायश्चित्तिरिति ; सोऽग्नये मरुत्वते त्रयोदशकपालं पुरोळाशं निर्वपेत् ; तस्य याज्यानुवाक्ये 'मरुतो यस्य हि क्षये'–'ऽरा इवेदचरमा अहेवेत्याहुतिं * वाहवनीये जुहुयादग्नये मरुत्वते स्वाहेति ; सा तत्र प्रायश्चित्तिः"–इति । आहिताग्निर्योऽस्ति, तस्येत्यस्मिन्नर्थे यस्येति शब्दः प्रयुक्तः, 'तस्य' आहिताग्नेर्भार्या वा तद्गृहावस्थिता गौर्वा 'यमौ' अपत्यद्वयं सह जनयेत्, तदानीं 'मरुत्वद्'–गुणयुक्तो ऽग्निर्देवता† ॥

समर्तिंशे पर्याये कञ्चिद्विचारमुद्भावयति—"तदाहुरपत्नीको ऽप्यग्निहोत्रमाहरेत्, नाहरे३त्?"–इति । पुरुषे जीवति सति तदा भार्या म्रियते, तदानीं माहितैरग्निभिर्भार्याया दाह इत्येकः पक्षः । तथा च मनुः (५. १६७.)—

"भार्यायै पूर्वमारिण्यै दत्त्वाग्नीनन्त्यकर्मणि ।
पुनर्दारक्रियां कुर्यात् पुनराधानमेव च ॥"–इति ।

आहितेभ्यो ऽग्निभ्योऽन्येनाग्निना भार्यां दहेदिति द्वितीयः । तथा चाश्वलायनः—"आहार्येणानाहिताग्निं पत्नीं च"–इति (श्रौ० ६. १०. ८, १०.) । भारद्वाजोऽप्याह—"निर्मन्थ्येन पत्नीम्"–इति । अस्मिन् पक्षे पुनरपि विवाहेच्छारहितत्वादयमपत्नीक एव वर्तते, सोऽग्निहोत्रम् 'आहरेत्' अनुतिष्ठेन्नेति श्रुतिद्वयं विचारार्थम्‡ ॥

तत्र निर्णयं दर्शयति—"आहरेदित्याहुः"–इति ।

अननुष्ठाने बाधं दर्शयति—"यदि नाहरेदनद्धापुरुषः"–इति ।

---

* ऋ० सं० १. ८६. १, ५. ५८, ५ ।

† "यस्य भार्या गौर्वा यमौ जनयेदिष्टिर्मरुत्."–इति आश्व० श्रौ० ३. १२ १२ ।

‡ "विचार्यमाणानाम्"–इति पा० ८. २. ९७ सू० ।

ऋतेति सत्यनाम *, तद्वैपरीत्यादनृतः पुरुषः 'अनद्धापुरुष', अननुष्ठानेनानृतो भवेदित्यर्थः ॥

प्रश्नोत्तराभ्यां शब्दार्थं निश्चिनोति— "को ऽनद्धापुरुष इति, न देवान्न पितॄन्न मनुष्यानिति ‖"–इति । अनद्धापुरुषशब्देन को विवक्षितः? इति प्रश्नः । यः पुमान् 'देवान्' पूजयेदिति शेषः, पितॄनपि न पूजयेत्, 'मनुष्यान्' अतिथीनपि न पूजयेत्; तादृशः पुमान् 'अनद्धापुरुषः' इत्युत्तरम् । अग्निहोत्रस्याननुष्ठाने सत्यनद्धापुरुषो भवेदिति ‡ ॥

विपक्षे बाधं मुक्त्वा स्वपक्ष मुपसंहरति— "तस्मादपत्नीको ऽप्यग्निहोत्र माहरेत्"–इति ॥

उक्तार्थदार्ढ्याय शाखान्तरगतां गाथा मुदाहरति – "तदेषाभियज्ञगाथा गीयते"–इति । 'तत्' तस्मिन् अवश्यानुष्ठानरूपे ऽर्थे 'एषा' वक्ष्यमाणा 'यज्ञम्' अभिलक्ष्य सर्वैर्गीयमाना 'यज्ञगाथा' याज्ञिकैः 'गीयते' पठ्यते ॥

तां गाथां दर्शयति— "यजेत् सौत्रामण्या सपत्नीको ऽप्यसोमपः । मातापितृभ्या मनृणार्थायजेति वचनाच्छ्रुतिः"–इति । सौत्रामणीयाग मपि कुर्यात्, किं सुताग्निहोत्रादिकम्? हविर्यज्ञेष्वप्यधिकारोऽस्तीत्यर्थः § । तद्वत् सोमयागेष्वधिकारमङ्गीकार्या

---

* निघ० ३. १० ४ ।

‖ भाति रिक्तसर्वमूलपुस्तकेषु 'मनुष्या इति'–इति पाठः ।

‡ "अनद्धापुरुषं पुरुषादेव ह वा अनद्धापुरुषो यो न देवानवति, न पितॄन् न मनुष्यान्"–इति शत० ब्रा० ६ ३ १ २४ । "अनद्धापुरुष मोघते देवपितृमनुष्यानर्थकम्"–इति कात्या० श्रौ० १६ २. १३ ।

§ "सायम्प्रातर्होमौ स्थालीपाको नवश्च यः । बलिश्च पितृयज्ञश्चाष्टका प्रथमः पशुरित्येते पाकयज्ञाः ॥ अग्न्याधेय मग्निहोत्रं पौर्णमास्यमावास्ये । नवेष्टिश्चातुर्मास्यानि पशु

तद्यथाहत्यर्थं मग्निहोत्र मुच्यते । यथा पत्नीरहितोऽपि मात्रे पित्रे चान्नमाच्छादनादिकं ददाति, तद्वदग्निहोत्र मपि कुर्यादिति शेषः । अत्र हेतुः 'अनृणार्थात्'-इति, ऋणपरिहारनिमित्तम् । तथा च शाखान्तरे श्रूयते— "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते । ब्रह्मचर्येणर्षिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः ; एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी"-इति ( तै० सं० ६. ३.१०. ) । अनेनैवाभिप्रायेण 'स्मृतिः' स्मृतेः । 'यजेति' वचन मस्ति; यज देवान्, अधीष्व वेदान्, प्रजा मुत्पादयेति शाखान्तरे वचन मस्ति ; तस्माद् वचनादनुष्ठानपक्ष एव युक्त इति गाथाया अर्थः । तथा च विष्णुः स्मरति—

"मृताया मपि भार्यायां वैदिकं न त्यजेद् द्विजः ।
उपाधिनापि यत् कर्म यावज्जीवं समापयेत् ॥"-इति ।

उपाधिः कुशमय्यादिपत्नीकल्पना । तथा च स्मृत्यन्तरम्—

"अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः ।
अग्निहोत्र मुपासन्ते यावज्जीव मनुव्रताः ॥"-इति ।

तथा च मैत्रायणीयश्रुतिरप्याम्नायते—

"यस्तु स्त्रैरग्निभिर्भार्यां संस्करोति कथञ्चन ।
असौ मृतः स्त्री भवति स्त्री चैवास्य पुमान् भवेत् ॥"-इति ।

---

ग्नीध्र सप्तम इत्येते हविर्यज्ञाः ॥ अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशिमानतः । वाजपेयोऽतिरात्रश्चाप्तोर्यामाश्च सप्त इत्येते सुत्या."—इति गौ० आ० १.५.२३ । "अष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी । चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्था. । अग्न्याधेय मग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः । अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्य, षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति सप्त सोमसंस्था."—इति गौ० ध० सू० ८अ० । २भा० २००पृ० १०प० सायणेनोक्त चान्यविधं द्रष्टव्यम् ॥

तस्मात् मृतभार्योऽपि स्वकीयानग्नीनवस्थाप्याग्निहोत्र माहरेत् ॥

तदेतदभिप्रेत्योपसंहरति—"तस्मात् सौम्य याजयेत्"—इति। ऋणापकरणार्थी दोषराहित्यात् 'सौम्यः'; तादृश मवश्य मग्निहोत्राद्यनुष्ठापयेत् ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां द्वितीयाध्याये
( हार्त्रिंयाध्याये ) अष्टमः खण्डः ॥ ८ ( ८ ) ॥

---

॥ अथ नवमः खण्डः ॥

तदाहुर्यांचापत्नीको ऽग्निहोत्रं कथ मेव जुहोति निविष्टे मृता पत्नी नष्टा वाग्निहोत्रं कथ मग्नि-होत्रं जुहोति पुत्रान् पौत्रान्नप्तॄनित्याहुरस्मिंश्च लोके ऽमुष्मिंश्चास्मिल्लोके * ऽयं स्वर्गो ऽस्वर्गेण स्वर्गं लोका मारुरोहेत्यमुष्येव लोकस्य सन्ततिं धार-यति यस्यैषां पत्नीं नेच्छेत् तस्मादपत्नीकाप्याधानं कुर्वन्त्यपत्नीको ऽग्निहोत्रं कथ मग्निहोत्रं जुहोति

* "॰स्मिन् लोक" क, "॰स्मिंल्लोक" ग, घ, ङ, च।

श्रद्धा पत्नी सत्यं यजमानः श्रद्धा सत्यं तदित्युत्तमं मिथुनं श्रद्धया सत्येन मिथुनेन स्वर्गांल्लोका* ञ्जयतीति ॥ ९ † ( १० ) ॥

अत ऊर्द्ध्वं खण्डद्वयं देशविशेषेषु केचिदामनन्ति, केचिन्नामनन्ति। अत एव पूर्वनिबन्धकाराः पाठरहितदेशानुसारेण तद्व्याख्यान मुपेक्षितवन्तः; अस्माभिस्तु पाठोपेतदेशानुसारेण तद् व्याख्यायते ॥

पूर्वं मपत्नीकस्य वाचिकं मानसं च द्विविध मग्निहोत्रं प्रतिपादनीयम्, तत्र वाचिकविषयं प्रश्न मुद्भावयति— "तदाहुर्वा अपत्नीको ऽग्निहोत्रं कथ मेव जुहोति ?"–इति। यो ऽपत्नीकः पुरुषः, तस्य वाचा निष्पाद्यं यदग्निहोत्रं, तत् केन प्रकारेण अनुष्ठातव्यम् ? इति प्रश्नः ॥

त मेव प्रश्नं पुनर्विस्पष्टयति— "निविष्टे मृता पत्नी नष्टा वाग्निहोत्रं, कथ मग्निहोत्रं जुहोति ?"–इति। नैष्ठिकब्रह्मचर्यादावप्यपत्नीकत्व मस्ति, तत्राग्निहोत्रप्रसङ्ग एव नास्ति, विध्यभावात्; अतो ऽपत्नीकत्वं विशेष्यते। विवाहादूर्द्ध्वं मग्निहोत्रे 'निविष्टे' अनुष्ठातु मुपक्रान्ते सति, यदा पत्नी मृता भवति; तादृशोऽत्रापत्नीकः। तस्याग्निहोत्रं 'नष्टा वा' नष्ट मेव भवति; पूर्वसिद्धैरग्निभिः पत्नीदाहपक्षे पुनरग्निहोत्रहेतूना मग्नीना मभावात्। अतो ऽपत्नीकः कथ मग्निहोत्रं जुहोति ? इति प्रश्नः ॥

---

*. "स्वर्गां लोकां" क, ख, घ, "स्वर्गा ल्लोका" ङ, "स्वर्गां लोकान्" च।

† ख-नामसूलपुस्तके भाष्यपुस्तकयोरेव खण्डौ दशमो दशमस्तु नवमः।

तस्योत्तर माह— "पुत्रान् पौत्रानमूनित्याहुरस्मिंश्च लोके ऽमुष्मिंश्चास्मिल्लोके ऽयं स्वर्गो ऽसर्गेण स्वर्गं लोक मारोहेत्य-मुष्यैव लोकस्य सन्ततिं धारयति, यस्यैषां पत्नीं नेच्छेत्; तस्मा-दपत्नीकस्याधानं कुर्वन्ति"–इति। यो ऽपत्नीको ऽग्निरहितः स्वविरत्वेनाशक्तात् ममत्वाय, तादृशः पुमान्, पुत्रादीन् प्रत्येवं ब्रूयात्। आहुरिति बहुवचनं छान्दसम्। हे पुत्र-पौत्र-प्रपौत्राः! शृणुत। अस्मिन् लोके, 'अमुष्मिन्' स्वर्गलोके च श्रेयः सम्पाद-नीयम्। अस्मिन् लोके तु स्थितैः पुरुषैर्योऽयं स्वर्गः, शास्त्रेण श्रुत इति शेषः। तं स्वर्गलोकम् 'असर्गेण' स्वर्गविलक्षणेन कामकर्माकामानुष्ठानेन 'आरोह' आरोहेत्। इत्येवं पुत्रादीन् प्रति वाचोपदिशति। एतदेव वाजसनेयिभिर्विस्पष्ट माम्नायते— "तस्मात् पुत्र मनुशिष्टं लोक्य माहुः, तस्मादेन मनु शासति"– इति (शत० ब्रा० १४. ४. ३. २६.)। अनेन पुत्राद्यनुशासनेन अमुष्यैव लोकस्य 'सन्ततिम्' अविच्छेदं 'धारयति' सम्पादयति; कुलपरम्परयाग्निहोत्रानुष्ठानेन सर्वेषां स्वर्गप्राप्तौ तद्विच्छेदा-भावात्। 'यस्य' यः पुमान् 'एषां पत्नीं नेच्छेत्' स्वस्याशक्तत् ममत्वेन पुनर्विवाहसाध्या मेतां पत्नीं नापेक्षेत, तस्मात् तस्य अपत्नीकस्य वाचा प्रेरिताः पुत्रपौत्रादय आधानं कुर्वते। तदा-धानपूर्वक मग्निहोत्र मपत्नीकस्य वाचिक मित्युच्यते॥

अथ मानस मग्निहोत्रं प्रश्नोत्तराभ्यां दर्शयति— "अपत्नीको ऽग्निहोत्रं कथ मग्निहोत्रं जुहोति? श्रद्धा पत्नी, सत्यं यजमानः; श्रद्धा सत्यं तदित्युत्तमं मिथुनं; श्रद्धया सत्येन मिथुनेन स्वर्गांल्लोका-ञ्जयतीति"–इति। पूर्वोक्तः स्थविरो ऽपत्नीको वा अग्निहोत्रं स्वय मेव मनसा जुहोमीति, यदीच्छेदिति शेषः; तदानीं केन प्रकारेण

तस्य मानसो होमः ? इति प्रश्नः । श्रद्धेत्यादिकं तदुत्तरम् । येयं कर्मश्रद्धा, सैव पत्नी ; यत् तु 'सत्यं' सत्यवाक्यं वैदिकमन्त्रोच्चारणं, स एव यजमानः । श्रद्धा सत्यं चेति यदुभय मस्ति, तदुक्तेन प्रकारेण भावितं सदुत्तमं मिथुनं भवति ; तादृशेन श्रद्धासत्यरूपेण 'मिथुनेन' मानस मनुष्ठानं निष्पाद्य स्वर्गान् लोकान् जयतीत्येव मुत्तरं सम्पन्नम् ॥ ९ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां द्वितीयाध्याये
( द्वात्रिंशाध्याये ) नवमः खण्डः ॥ ९ ( १० ) ॥

---

॥ अथ दशमः खण्डः ॥

तदाहुर्यद्दर्शपूर्णमासयोरुपवसति न ह वा अव्रतस्य देवा हविरश्नन्ति तस्मादुपवसत्युत मे देवा हविरश्नीयुरिति पूर्वां पौर्णमासी मुपवसेदिति पैङ्ग्य मुत्तरा मिति कौषीतकं या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका या पूर्वामावास्या सा सिनीवाली योत्तरा साकुहूर्यां पर्यस्त मियादभ्युदियादिति सा तिथिः पूर्वां पौर्णमासी मुपवसेदनिर्ज्ञाय पुरस्तादमावास्यायां चन्द्रमसं यदुपैति यद्यजते तेन

सोमं क्रीणन्ति तेनोत्तरा मुत्तरा मुपवसेदुत्तराणि ह वै सोमो यजते सोम मनु दैवत मेतद्वै देवसोमं यच्च-न्द्रमास्तस्मादुत्तरा मुपवसेत् ॥ १० ( ११ ) ॥

तद्व्रतनिमित्त मुपवासं विधत्ते – "तदाहुर्यद्दर्शपूर्णमासयो-रुपवसति, न ह वा अव्रतस्य देवा हविरश्नन्ति ; तस्मादुपवसत्युत मे देवा हविरश्नीयुरिति"–इति। 'तत्' तस्मिन् नित्यानुष्ठान-विषये ब्रह्मवादिन एव माहुः। यः कोऽप्यनुष्ठाता दर्शपूर्णमासयो रुपवासं कुर्यात्। यागरूपं व्रतं निश्चित्य गार्हपत्याद्यग्निसमीपे यो वासः, स उपवासः। यदि वा अस्यापि यजेः समीपे वसन्तीति एतदीयो ऽनुष्ठानसङ्कल्प उपवासः। अग्न्युपस्तरणादिना तदीयो ऽनुष्ठाननिश्चयो ऽवगन्तव्यः। अत एव शाखान्तरे श्रूयते— "उपास्मिञ्छ्वो यक्ष्यमाणे देवता वसन्ति, य एवं विद्वानग्नि मुपस्तृणाति"–इति ( तै० सं० १. ६. ७. १.)। 'अव्रतस्य' नियम-विशेषस्वीकाररूपव्रतरहितस्य पुरुषस्य हविः देवा नैवाश्नन्ति। तस्मात् कारणादुत 'मे' ममापि हविर्देवा अश्नीयुरित्यभिप्रेत्य नियमं स्वीकृत्याग्निसमीपे उपवसेत्। एतदेवाभिप्रेत्य आपस्तम्ब आह— "आहवनीयागारे गार्हपत्यागारे वा शेते"–इति ( श्रौ० ४. ३. १०. ७ )। यद्वा ग्राम्यागमनपरित्याग उपवासः। तत् परित्यज्य आरण्यागमनरूपं नियमं स्वीकुर्यात्। अत एव शाखा-न्तरीया आहुः— "यद् ग्राम्यानुपवसति, तेन ग्राम्यानवरुन्धे ; यदारण्यस्याश्नाति, तेनारण्यान् ; यदनाश्वानुपवसेत् पितृदेवत्यः स्यादारण्यस्याश्नाति"–इति ( तै० सं० १. ६. ७. ३ )॥

---

* "[illegible]"–इत्यादीनि [illegible] दृश्यन्ते।

अत्रोपवासतिथिविषये शाखाभेदवचन माश्रित्य 'विकल्प' दर्शयति— "पूर्वां पौर्णमासी मुपवसेदिति पैङ्ग्य मुत्तरा मिति कौषीतकं; या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका"–इति। खण्डतिथिवशाद् यदा दिनद्वये पौर्णमासी तिथिः सम्पद्यते, तदानीं पूर्वां 'पौर्णमासी मुपवसेत्' पूर्वदिने उपवासं कृत्वा परेद्युः यजेतेति सामशाखाप्रवर्तकस्य पैङ्गेर्मंहर्षेर्मतम् * । 'उत्तरां पौर्णमासी मुपवसेत्' उत्तरस्मिन् दिने उपवासं कृत्वा ततोऽपि परेद्युर्यजेतेत्यृक्शाखाप्रवर्तकस्य कौषीतकिमहर्षेर्मतम् † । एतदेव मतद्वय मुपजीव्य स्मार्त्ता एवं वर्णयन्ति—

"पर्वप्रतिपदोः सन्धिर्मध्याह्ने पूर्वतोऽपि वा।
अन्वाधानं पूर्वदिने तद्दिने याग इष्यते॥
परतश्चेत् परेऽह्नीष्टिस्तद्दिने ऽन्वाहितिर्भवेत्॥"–इति।

एतच्च पौर्णमासीदयसद्भावे वेदितव्यम्; अनुमतिराकाशब्दाभ्यां पौर्णमासीभेदस्य सर्वत्र व्यवहृतत्वात्। तयोः स्वरूप मभिधान-कार आह— "कलाहीने सानुमतिः, पूर्णे राका निशाकरे"– इति (अम० को० १.४.८.)। चतुर्दशीसंयोगाच्चन्द्रमसि कला-हीने सत्यनुमतिरित्युच्यते; तत्संयोगाभावेन चन्द्रमण्डलपूर्णे सति राकेत्युच्यते॥

* पा० ४, ३, १०५ सू० 'पिङ्गेन प्रोक्तः पैङ्गीकल्पः'। अनु० पृ० २, ३; ४; १०; ९, ७; ११. ८। शाङ्खा० ब्रा० ३, १; १९. ९, २४. ९। शाङ्खा०श्रौ० ४.२.११ इत्यादि। "मधुकः पैङ्ग्यः"–इति शत० ब्रा० १४. ९. २. १७। 'मधुक- कौर्यष्टिकाख्यः पची, तद्-भोचने यस्य; अन्वेव मधुकं चोद्र', वदन् पिङ्गलेन इति वा'–इति महा० भा० १२ प० ११८७ श्लो० व्याख्याने नीलकण्ठः।

† ऋग्वेदस्य एकविंशतिशाखोऽपि वस्तुतो द्विविधः। तत्र शैशिरीयादयः पञ्च शाकल-भेदाः, कौषीतक्यादयस्तु षोडश शाङ्खायनभेदाः।

पौर्णमासीन्याय ममावास्याया मपि दर्शयति— "या पूर्वामावास्या सा सिनीवाली, योत्तरा सा कुहूः"—इति। अत्रापि चतुर्दशीयोगाच्चन्द्रदर्शने सत्यमावास्या सिनीवाली उच्यते ; तद्योगराहित्येन चन्द्रदर्शनाभावे कुहूरिति। तदप्यभिधानकारेणोक्तम्— "सा दृष्टेन्दुः सिनीवाली, सा नष्टेन्दुकला कुहूः"—इति ( अम॰ को॰ १.४,८. )। अत्राप्युपवासयागनिर्णये मतभेदः पूर्ववद्द्रष्टव्यः ॥

अत्र पूर्वोत्तरविभागनिर्णयाय कर्मोपयोगिन्यास्तिथेः स्वरूपं दर्शयति—"यां पर्यस्त मियादभ्युदियादिति सा तिथिः"—इति। अमावास्यां पौर्णमासीं वा, यां परिप्राप्य सूर्योऽस्त मियात्, तथा या मभिलक्ष्य सूर्यं उदियात्, सेय मुदयास्तमयव्यापिनी कर्मोपयुक्ता तिथिः। तादृश्यां तिथौ उदयास्तमययोर्मध्ये पूर्वोत्तराभ्यां चतुर्दशीप्रतिपद्भ्यां मिश्रत्वे सति पर्वणो द्वैविध्यं भवति ; तस्मिन् द्वैविध्ये पूर्वोक्तं मतद्वयं द्रष्टव्यम् ॥

तदेतदुपसंहरति— "पूर्वां पौर्णमासी मुपवसेदनिर्ज्ञाय पुरस्तादमावास्यायां चन्द्रमसं यदुपैति, यद्यजते, तेन सोमं क्रीणन्ति; तेनोत्तरा मुत्तरा मुपवसेदुत्तराणि ह वै सोमो यजते, सोम मनु दैवत मेतद्द दैवसोमं यच्चन्द्रमास्तस्मादुत्तरा मुपवसेत्"—इति। पूर्वां मिति पैङ्गिमतस्योपसंहारः। अमावास्यादिने 'पुरस्तात्' पूर्वस्यां दिशि चन्द्रमसम् 'अनिर्ज्ञाय' च शास्त्रमार्गेण चन्द्र मदृष्ट्वा चन्द्रोदयो न भविष्यतीति निश्चित्य 'यत् उपैति' उपवसति प्रारभत इति यदस्ति, 'यद् यजते' परेद्युर्यागं करोतीति यदस्ति, 'तेन' उपवासेन यागेन च 'उत्तरा मुत्तराम्' आगामिपक्षगतां पौर्णमासी ममावास्यां चोपवसेत्। 'उत्तराणि' उपवासदिना दुत्तरेषु दिनेषु यजते। स यागः 'सोमो भवति'

सोमयागसदृशो भवति। तं सोम मनु सर्वं मपि दैवतं तृप्यतीति शेषः। योऽयं चन्द्रमा अस्ति, एतदेव 'सोमं' देवाना मपेक्षित' सोमद्रव्यसदृश वस्तु; यस्माच्चन्द्रमण्डलं देवानां प्रियम्, तस्मात् मण्डलं सम्पूर्णं मभिलक्ष्योत्तरां पौर्णमासी मुपवसेदिति कौषीतकिमतस्योपसंहारः * ॥ १० ( ११ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां द्वितीयाध्याये
( द्वात्रिंशाध्याये ) दशमः खण्डः ॥ १० ( ११ ) ॥

---

॥ अथैकादशः खण्डः ॥

तदाहुर्यस्याग्नि मनुद्धृत मादित्यो ऽभ्युदियाद्वा ऽभ्यस्तमियाद्वा प्रणीतो वा प्राग्घोमादुपशाम्येत् का तत्र प्रायश्चित्तिरिति हिरण्यं पुरस्कृत्य साय मुद्धरे-ज्ज्योतिर्वै शुक्रं हिरण्यं ज्योतिः शुक्र मसौ तदेव तज्ज्योतिः शुक्रं पश्यन्नुद्धरति रजत मन्तर्धाय प्रातरु-द्धरेदेतद् रात्रिरूपं पुरा सक्षोदाच्छायाना माहवनीय मुद्धरेन् मृत्युर्वै तमश्छाया तेनैव तज्ज्योतिषा मृत्युं

* "उभयीं पौर्णमासी मुपवसे दुत्तरा मित्येके"—इत्यादीनि सूत्राणि शा० वै० गौ० स० १ ५, २—११ द्रष्टव्यानि।

तमश्छायां तरति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य गार्हपत्याहवनीयावन्तरेणानो वा रथो वा श्वा वा प्रतिपद्येत का तत्र प्रायश्चित्तिरिति नैनन् मनसि कुर्यादित्याहुरात्मन्यस्य हिता भवन्तीति तच्चेन्मनसि कुर्वीत गार्हपत्यादविच्छिन्ना मुदकधारां हरेत् तन्तुं तन्वन्रजसो भानु मन्विहीत्याहवनीयात् सा तत्र प्रायश्चित्तिस्तदाहुः कथ मग्नीनन्वादधानो ऽन्वाहार्यपचन माहारये३त् नाहारये३त् इति* आहारयेदित्याहुः प्राणान्वा एषो ऽभ्यात्मन् धत्ते यो ऽग्नीनाधत्ते तेषा मेषो ऽन्नादतमो भवति यदन्वाहार्यपचनस्तस्मिन्नेता माहुतिं जुहोत्यग्नये ऽन्नादायान्नपतये स्वाहेत्यन्नादो हान्नपतिर्भवत्यश्नुते प्रजयान्नाद्यं य एवं वेदान्तरेण गार्हपत्याहवनीयौ होष्यन्संचरेतैतेन ह वा एनं सञ्चरमाण मग्नयो विदुरय मस्मासु होष्यतीत्येतेन ह वा अस्य सञ्चरमाणस्य गार्हपत्याहवनीयौ पाप्मान मपहतः सो ऽपहतपाप्मोर्ध्वः स्वर्गं लोक मेतीति वै ब्राह्मण मुदाहरन्ति तदाहुः कथ मग्नीन् प्रवत्स्यन्नुपतिष्ठेत प्रोष्य वाप्रत्येत्याहरहर्वेति तूष्णी मित्याहुस्तूष्णीं वै श्रेयस आकाङ्क्षन्ते ऽथाप्याहुरहरहर्वा एते यजमानस्याश्वयोरासनादश्नावनाद्

* 'नाहारयेइति'- ख।

बिभ्यति तानुपतिष्ठतेऽवाभयं वोभयं मे ऽस्त्वित्यभयं हैवास्मै भवत्यभयं हैवास्मै भवति ॥ ११ ( १२ ) ॥

॥ इत्यैतरेयब्राह्मणे सप्तमपञ्चिकायां द्वितीयोऽध्यायः ॥

इत्थ मग्निहोत्रप्रायश्चित्तप्रसङ्गागत मपत्नीकाग्निहोत्रादिकं परिसमाप्य प्रकृत मेव प्रायश्चित्त मनुसरन् प्रश्न मुत्थापयति— "तदाहुर्यस्याग्नि मनुद्धृत मादित्यो ऽभ्युदियाद्वा ऽभ्यस्तमियाद्वा प्रणीतो वा प्राग्घोमादुपशाम्येत्, का तत्र प्रायश्चित्तिरिति"— इति। सायङ्काले आदित्यस्यास्तमयात् पुरा अग्निहोत्रार्थं गार्हपत्यादग्नि मुद्धरेत्, प्रातःकाले तु सूर्योदयात् पुरोद्धरेदित्याम्नातम्*। एवं सति 'यस्य' अग्निहोत्रिणो ऽनुद्धृत मग्नि मभिलक्ष्यादित्यः 'उदियाद्वा अस्तमियाद्वा' अभ्युदयणात् प्रागेवोदयास्तमयौ भवत इत्यर्थः। अथवा स्वस्वकाले प्रणीतोऽग्निराहवनीयदेशे स्थित्वा होमात् पूर्वं मुपशाम्येत्। तेषु त्रिषु विषयेषु प्रायश्चित्तं पृच्छते॥

तस्योत्तर माह — "हिरण्यं पुरस्कृत्य साय मुद्धरेज्ज्योतिर्वै शुक्रं हिरण्यं, ज्योतिः शुक्र मसौ, तदेव तज्ज्योतिः शुक्रं पश्यन्नुद्धरति; रजत मन्तर्धाय प्रातरुद्धरेदेतद्रात्रिरूपम्; पुरा सभेदाच्छायाना माहवनीय मुद्धरेन्मृत्युर्वै तमश्छाया, तेनैव तज्ज्योतिषा मृत्युं तमश्छायां तरति; सा तत्र प्रायश्चित्तिः"—इति। यदा सूर्यास्तमयादूर्ध्व मुद्धरणीयम्, तदानीं हिरण्यं 'पुरस्कृत्य' अग्रेऽवस्थाप्य, वह्नि मुद्धरेत्। यदेतद्धिरण्य मस्ति, तदेतत् 'शुक्रं ज्योतिर्वै' अत्यन्तं भास्वरः प्रकाशः; 'असौ' आदित्योऽपि 'शुक्रं ज्योतिः' अत्यन्तं

* आप श्रौ० ६ ८.१-१८।

भास्वरः प्रकाशः। तथा सति 'तदेव' हिरण्य मेव 'तज्ज्योतिः' आदित्यप्रकाशः। अतः 'शुक्रं' दीप्तिमद्धिरण्यं पश्यन्नेवाग्नि मुद्धरेत्। प्रातःकाले तु रजतम् 'अन्तर्धाय' उपर्यवस्थाप्याग्नि मुद्धरेत्। 'एतत्' च रजतं रात्रेः स्वरूपम्; रात्रौ हि चन्द्रतारादिकं रजतसमानं दृश्यते, अतो रजतेन सूर्योदयात् प्राचीनो रात्रिकाल एवं सम्पद्यते। यद्यप्येतावतैव त्रिविधप्रश्नोत्तरं सम्पन्नम्, तथापि तत्प्रसङ्गात् नित्य मुद्धरणं, पुरेत्यादिना प्रदर्श्यते। छायानां 'सम्भेदः' एकीभावः। सूर्यास्तमये सत्येषा मनुष्यच्छाया एषा वृक्षच्छायेति विभागो न ज्ञायते, सोऽयं सम्भेदः। तस्मात् पुरा सूर्यप्रकाशवशाच्छायाविशेषो विज्ञायते। तस्मिन्नेव काले सायं-होमार्थं माहवनीय मुद्धरेत्। तत्रोपपत्तिर्मृत्युरित्यादिः। यदिदं तमः, या च छाया, तदुभयं मृत्युस्वरूप मेव; अतः सत्यादित्यप्रकाशे तेनैव ज्योतिषा मृत्युरूपं तमस्तद्रूपां छायां च 'तरति' उल्लङ्घयति *। सेय मुक्ता तत्र वैकल्ये प्रायश्चित्तिः। नित्योद्धरणस्यापि वैकल्यविरोधित्वादुपचरितं प्रायश्चित्तत्वम्॥

पूर्वत्र सप्तत्रिंशे पर्याये पत्नीरहितस्याग्निहोत्रं विधाय, अष्टत्रिंशे पर्याये दर्शपूर्णमासयोरुपवासनिर्णयः, एकोनचत्वारिंशे पर्याये वाचिकं मानसं वाग्निहोत्र सपत्नीकस्य विधाय, चत्वारिंशे यज्ञोद्धरणकालातिक्रमे प्रायश्चित्त मुक्तम्॥

अथैकचत्वारिंशे प्रश्नोत्तरे दर्शयति—"तदाहुर्यस्य गार्हपत्याहवनीयावन्तरेणानो वा रथो वा श्वा वा प्रतिपद्येत, का तत्र प्रायश्चित्तिरिति? नैतन् मनसि कुर्यादित्याहुरात्मन्यस्य हिता भवन्तीति; तथेन् मनसि कुर्वीत, गार्हपत्यादविच्छिन्नया मुदकधारां

---

* आप० श्रौ० ६। १२। १८-२०।

हरेत्, तन्तुं तन्वन्नजसो भानुमन्विहीत्याहवनीयात्; सा तत्र प्रायश्चित्तिः"–इति। गार्हपत्याहवनीययोर्मध्ये शकटं वा रथो वा श्वा वा यदागच्छेत्, तदानीमेतच्छकटादिकं मनसि न कुर्यात्; 'अस्य' अनुष्ठातुः 'आत्मनि' स्वकीये पारमार्थिकस्वरूपे वेदान्तप्रतिपाद्ये वस्तुनि 'श्रिता भवन्ति' तानि शकटादीन्यवतिष्ठन्ते। अतः शकटादिरूपबुद्धिं परित्यज्य परमात्मबुद्धिं कुर्यात्। यद्यात्मविवेकाभावेन तच्छकटादिकं मनसि कुर्वीत, शकटादिबुद्धिं न परित्यजेत्, तदानीं गार्हपत्यादारभ्याहवनीयपर्यन्तमविच्छिन्नामुदकधारां हरेत् *। तत्र "तन्तुं तन्वन्"–इति (ऋ० सं० १०. ५३. ६.) मन्त्रः॥

अथ द्विचत्वारिंशे पर्याये कञ्चिद्विचारमुद्भावयति— "तदाहुः कथमग्नीनन्वादधानोऽन्वाहार्यपचनमाहारयेऽत्, नाहारयेऽत्? इति"–इति। अन्वाहार्यनामक ओदनः पच्यते यस्मिन् दक्षिणाग्नौ, सोऽयम् 'अन्वाहार्यपचनः'; तस्य 'आहरणम्' अभिज्वलनम्, इतरेराग्नावन्वाधानकाले दक्षिणाग्नेरभिज्वलनं कुर्यान्न वा? इति। विचारार्थं श्रुतिद्वयम्॥

तत्र निर्णयं दर्शयति – "आहारयेदित्याहुः; प्राणान्वा एषोऽस्यात्मन् धत्ते, यो ऽग्नीनाधत्ते; तेषामेषो ऽन्नादतमो भवति, यदन्वाहार्यपचनस्तस्मिन्नेता माहुतिं जुहोत्यग्नये ऽन्नादायान्नपतये स्वाहेति"–इति। 'आहारयेत्' प्रज्वलयेदित्येव अभिज्ञा आहुः। तत्रेयमुपपत्तिः। 'यः' पुमानग्नीनाधत्ते, 'एषः' एव पुमान् 'अस्यात्मन्' स्वात्मस्वरूपे प्राणानेव धारयति। 'यः' अयमन्वाहार्यपचनोऽस्ति, एष 'तेषाम्' आहितानां चाग्नीनां मध्ये अति-

* आश्व० श्रौ० ३. ११. १५।

यथैनानादः ; तस्मात् प्राणधारिणा मन्त्रभक्षणसिद्धये सोऽयं प्रज्व-लनीयः ; प्रज्वलिते 'तस्मिन्' दक्षिणाग्नौ "अन्नयेऽन्नादाय"–इत्यादिमन्त्रेण एता माहुतिं जुहुयात् * ॥

वेदन प्रशंसति—"अन्नादो ह्यन्नपतिर्भवत्यश्नुते प्रजयान्नाद्यं य एवं वेद"–इति । वेदिता स्वयम् 'अन्नादः' रोगराहित्येन भोक्तुं समर्थः, 'अन्नपतिः' अन्नस्वामी च भवति । तथा 'प्रजया' हि पुत्रादिरूपया सहान्नाद्यं प्राप्नोति ॥

पूर्वं गार्हपत्याहवनीययोर्मध्ये शकटादिगमनं निषिद्धम्, तद्-यागकर्त्तुरपि मध्ये सञ्चारनिषेधशङ्कायां तद्व्यावर्त्तयितु माह—"अन्तरेण गार्हपत्याहवनीयौ होष्यन्सञ्चरेतैतेन ह वा एनं सञ्चरमाण मग्नयो विदुरय मस्मासु होष्यतीत्येतेन ह वा अस्य सञ्चरमाणस्य गार्हपत्याहवनीयौ पाप्मान मपहतः सो ऽपहत-पाप्मोर्द्ध्वः स्वर्गं लोक मेतीति वै ब्राह्मण मुदाहरन्ति"–इति । यः पुमान् होष्यति, स पुमान् 'गार्हपत्याहवनीयावन्तरेण' तन्मध्य-गतेन मार्गेण सञ्चरेत । 'एतेन' मार्गेण सञ्चरमाणम् 'एनं' होमक-र्त्तार मग्नयः स्वमनसैवं विदुः 'अय मस्मासु होष्यति'–इति । तस्मादग्नीना मभीष्टत्वात् तस्य सञ्चारो युक्तः। किञ्च होमार्थं सञ्चरमाणस्य पाप्मान मुभावग्नी विनाशयतः । स च पापरहित, ऊर्द्ध्वगामी स्वर्गं लोकं प्राप्नोति । अस्मिन्नर्थे शाखान्तरगत बहुविधं ब्राह्मण मभिज्ञा उदाहरन्ति ॥

अथ विचलारिणे प्रश्नोत्तरे दर्शयति—"तदाहुः कथ मस्तोन् प्रवरस्यनुपतिष्ठेत, मोथ वा, प्रत्येत्याहरहर्वेसि ? तूष्णी मित्याहुः ; तूर्ष्णी वै श्रेयस आकाङ्क्षन्ते ; ऽयाप्याहुरहरहर्वा एते यजमानस्या-

* आग्नमेव एष एव मन्त्र ।

अग्नयोहासनात्प्लावनाद् बिभ्यति, तानुपतिष्ठेतैवाभयं वोऽभयं मे ऽस्त्वित्यभयं हैवास्मै भवत्यभयं हैवास्मै भवति"—इति। यदाग्निहोत्री स्वगृह एवाग्नीनवस्थाप्य स्वयं ग्रामान्तरं प्रतिवसति, तदानीं 'प्रवत्स्यन्' अग्निहोत्री प्रवासकाले कथमग्नीनुपतिष्ठेत ? अथ वा 'प्रोष्य' ग्रामान्तरे गत्वा 'प्रत्येत्य' पुनरागत्य कथमुपतिष्ठेत? अथ वा स्वगृहे तिष्ठन्नपि 'अहरहः' प्रतिदिनं कथमुपतिष्ठेत ? इत्येतस्य प्रश्नत्रयस्य तूष्णीमित्यादिकमुत्तरम्। नात्र मन्त्रपाठः कश्चिदस्ति, किन्तु तूष्णीमेवाञ्जल्यादिना विनयं प्रदर्शयन्नुपतिष्ठेत; लोकेऽपि सेवकाः तूष्णीम्भूता एव सन्तो विनीताः 'श्रेयसः' श्रेष्ठान् राजगुर्वादीन् पुरुषान् 'आकाङ्क्षन्ते' आगत्य स्वाभीष्टं प्रार्थयन्ते। तस्मात् तूष्णीमुपस्थानमित्येकः पक्षः।

'अथाप्याहुः' अपि च अभिज्ञाः केचिदेव पक्षान्तरं वदन्ति। 'अहरहर्वै' प्रतिदिनमेव 'एते' अग्नयो 'बिभ्यति'। भयकारणं यजमानस्येत्यादिनोच्यते। होमे निष्पन्ने सति पश्चादुपयोगाभावात् यजमानस्य अग्निष्वश्रद्धा भवति; अतोऽयं अग्नीनुद्वासयेदित्येको भयहेतुः *। 'प्लावयेत्' लौकिकपाकार्थं नीत्वा प्लावनं † वा कुर्यादिति द्वितीयो भयहेतुः। अतो भयपरिहाराय तानेतेन मन्त्रेण सर्वेणोपतिष्ठेत। हे अग्नयः! मत्तः सकाशाद् 'वः' युष्माकम्

---

* प्रमापणादिपर्यायेषु हिंसार्थनामसु पठितम् अमरसिंहेन उद्वासनमिति (२, ८, ११२-११५.)। वस्तुत उद्वासनं निर्वासनमित्यनर्थान्तरम्। "प्रोषितश्चेत् प्रेयात् प्राचीनावीती निवान्यां दुग्ध्वा दक्षिणतोऽग्निमग्न्योरुद्वासने"—इति कात्या० श्रौ० २५, ८, ९। 'उष्णे भस्मन्यधिश्रयणमुद्वासनं च गार्हपत्याद् दक्षिणस्यां दिशि कुर्यात्'—इति तट्टीकायाम्।

† प्लावनशब्दार्थः ९भा० २२६पृ० द्रष्टव्यः। "यस्मिन् कुम्भे ऋजीषं भवति, तं प्लावयति समुद्रे"—इति शत० ब्रा० ४, ४, ५, २०।

अभय मस्तु ; युष्मत्सकाशात् ममाप्यभय मस्त्विति मन्त्रार्थः । एव मुपस्थानं कुर्वते 'अस्मै' यजमानाय अभय मेव भवति । अभ्यासो ऽध्यायसमाप्त्यर्थः ॥ ११ ( १२ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां द्वितीयाध्याये
( द्वात्रिंशाध्याये ) एकादशः खण्डः ॥ ११ ( १२ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'–नामभाष्ये
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायाः द्वितीयोऽध्यायः ॥

———

## ॥ अथ तृतीयाध्यायः ॥

(३३)

### ॥ अथ प्रथमः खण्डः ॥

—○.○—

॥ ॐ ॥ हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजाऽपुत्र आस तस्य ह शतं जाया बभूवुस्तासु पुत्रं न लेभे तस्य ह पर्वतनारदौ गृह ऊषतुः स ह नारदं पप्रच्छ यन्विमं पुत्रमिच्छन्ति ये विजानन्ति ये च न किंस्वित्पुत्रेण विन्दते तन्म आ चक्ष्व नारदेति स एकया पृष्टो दशभिः प्रत्युवाच ऋणमस्मिन्त्संनयत्यमृतत्वं च गच्छति पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखं यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि यावन्तो अप्सु प्राणिनां भूयान् पुत्रे पितुस्ततः शश्वत्पुत्रेण पितरोऽत्यायन् बहुलं तमः आत्मा हि जज्ञ आत्मनः स इरावत्यतितारिणी किन्नु मलं किमजिनं किमु श्मश्रूणि किं तपः पुत्रं ब्रह्माण इच्छध्वं स वै लोकोऽवदावदः अन्नं ह प्राणः शरणं ह वासो रूपं हिरण्यं पशवो विवाहाः सखा ह जाया कृपणं ह दुहिता ज्योतिर्ह पुत्रः परमे व्योमन् पतिर्जायां प्र विशति गर्भो भूत्वा स मातरं तस्यां पुनर्नवो भूत्वा दशमे

मासि जायते तज्जाया जाया भवति यदस्यां जायते पुनः आभूतिरेषा भूतिर्बीज मेतन्निधीयते देवाश्चैता मृषयश्च तेजः समभरन्महत् देवा मनुष्यानब्रुवन्नेषा वो जननी पुनः नापुत्रस्य लोकोऽस्तीति तत् सर्वे पशवो विदुः तस्मात्तु पुत्रो मातरं स्वसारं चाधिरोहति एष पन्था उरुगायः सुशेवो यं पुत्रिण आ क्रमन्ते विशोकाः तं पश्यन्ति पशवो वयांसि च तस्मात् ते मात्रापि मिथुनीभवन्तीति ह स्मा आख्याय ॥ * १ ( १३ ) ॥

॥ श्रीगणेशाय नमः ॥

आहिताग्नेर्मृतावग्निहोत्राङ्गे विकृते तथा ।
प्रायश्चित्तं सपत्नीकाहोम इत्यादि वर्णितम् ॥ १ ॥
उक्तं द्वात्रिंशदध्यायैः कर्म वर्णत्रयान्वितम् ।
अथ षड्भिरध्यायैर्वर्ण्यते राजकर्मकम् ॥ २ ॥
तत्र क्रतौ राजसूये वह्निष्टिपशुसोमके ।
मध्येऽभिषेचनीयेऽह्नि शौनःशेपं श्रुतं श्रुतौ ॥ ३ ॥
त्रयस्त्रिंशोऽयमध्यायः शौनःशेपेति नामवान् ।
हरिश्चन्द्रकथा तत्र कथिता बहुपुत्रदा ॥ ४ ॥

तदेतदुपाख्यानं दर्शयति— "हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजाऽपुत्र आस ; तस्य ह शतं जाया बभूवुः, तासु पुत्रं न

* च-छ-पुस्तकयोरेव खण्डाङ्कानि सन्ति, नान्येषु पुस्तकेष्विति ।

लेभे ; तस्य ह पर्वतनारदौ गृह ऊषतुः ; स ह नारदं पप्रच्छ''–इति । हरिश्चन्द्रो नाम राजर्षिः ; "प्रस्कण्वहरिश्चन्द्रावृषी"–इति (६.१.१५३.) पाणिनिना सूचितत्वात् । स च वेधसो नृपतेः पुत्रः, इक्ष्वाकुवंशोद्भवो राजा पुत्रहीनः आस । स च शतसङ्ख्यानां मध्ये कस्याञ्चिदपि जायायां पुत्रं न लेभे । तस्य राज्ञो गृहे पर्वत-नारद–नामानौ ऋषी , तौ निवासं चक्रतुः । तयोर्मध्ये नारद मृषि मेतया गाथया राजा पप्रच्छ ॥

तां गाथां दर्शयति— "यं न्विमं * पुत्र मिच्छन्ति, ये वि जानन्ति, ये च न ; किंस्वित्पुत्रेण विन्दते, तन्म आ चक्ष्व नार-देति''–इति । 'ये' देवमनुष्यादयो 'वि जानन्ति' विवेकज्ञान-युक्ताः , 'ये' च पश्वादयो 'न वि जानन्ति' विवेकज्ञानरहिताः, ते सर्वेऽपि 'नु' क्षिप्रं 'यम् इमं' पुत्र मिच्छन्ति, तेन पुत्रेण 'किंस्विद्विन्दते' किं नाम फलं पिता लभते ? हे नारद ! 'मे' मह्यं 'तत्' फलम् आ चक्ष्व । 'इति' राज्ञः प्रश्नः ॥

तस्योत्तर मवतारयति— "स एकया पृष्टो दशभिः प्रत्युवाच" –इति । 'सः' नारदः 'एकया' गाथया पृष्टः सन् 'दशभिः' गाथाभिः प्रत्युत्तर मुक्तवान् ॥

तत्र प्रथमां गाथा माह— "ऋण मस्मिन्त्संनयत्यमृतत्वञ्च गच्छति , पिता पुत्रस्य जातस्य, पश्येच्चेज्जीवतो मुखम्''–इति । उत्पन्नस्य सुखेन जीवतः पुत्रस्य मुखं पिता यदि पश्येत् , तदा-नीम् 'अस्मिन्' पुत्रे स्वकीय मृणं लौकिकं वैदिकं च 'सन्नयति' सम्यगवस्थापयति । लौकिकस्य अवस्थापनात् पुत्रपौत्रादिभिः ऋणं प्रत्यर्पणीय मिति स्मृतिकारा आहुः । वैदिकं तु "त्रिभि-

* मूलपुस्तकेषु सर्वेष्वेव 'य न्विमं'–इति मुद्रानुसारपाठः ।

ऋणेन वा जायते"—इत्यादि श्रुत्युक्तं पूर्वमेवोदाहृतम् ( ४३पृ० ) । तस्य च पुत्रावस्थापनं सम्प्रत्तिनामकेन सम्पद्यते । तच्च कर्म वाजसनेयिभिराम्नातम् —"अथातः सम्प्रत्तिः । यदा प्रेष्यन् मन्यते, अथ पुत्र माह, त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति । स पुत्रः प्रत्याह । अहं ब्रह्म अहं लोक अहं यज्ञः"—इति ( शत० ब्रा० १४. ४. ३. २५. * ) । 'ब्रह्म' मया कर्त्तव्यं वेदाध्ययनम् , मयानुष्ठेयो यज्ञश्च, मया सम्पाद्या उत्तमा लोकाश्चेत्येतत् सर्वं पुत्रेण त्वयैव सम्पादनीय मिति पितृवाक्यस्यार्थः । सर्वं मह सम्पादयिष्यामीति पुत्रवाक्यस्यार्थः । अत्राप्यारण्यककाण्डे सङ्क्षिप्य सन्दर्शयिष्यते — "सोऽस्यायं आत्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते"—इति ( ऐ० आ० २.५.४.१०. ) । एव मयं पुत्रे समर्पयति । तथैव 'अमृतत्वं' मरणरहितं मुक्तिपदं च गच्छति ; पुत्रार्पितलौकिकवैदिकभारस्याविघ्नेन तत्त्वज्ञानसम्पादनात् ॥

द्वितीयां गाथा माह— "यावन्तः पृथिव्यां भोगा, यावन्तो जातवेदसि , यावन्तो अप्सु प्राणिनां, भूयान् पुत्रे पितुस्ततः"— इति । 'पृथिव्यां भोगाः' स्वस्य निवासादयः, 'जातवेदसि' अग्नौ भोगा दहनपचनादयः, 'अप्सु' भोगाः स्नानपानादयः । प्राणिना मेते सर्वे भोगा यावन्तः सन्ति । ततस्तावद्भ्यः सर्वेभ्यो भोगेभ्यो 'भूयान्' अभ्यधिकः पितुः पुत्रे भोगो विद्यते ; अत्यन्तसुखहेतुत्वात् । तथा च आहुः— "पुत्रोत्पत्तिविपत्तिभ्यां नापरं सुखदुःखयोः"—इति ॥

* "अथ त्रयो वाव लोकाः । मनुष्यलोकः पितृलोको देवलोक इति । सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो, नान्येन कर्मणा ; कर्मणा पितृलोको, विद्यया देवलोको ; देवलोको वै लोकानां श्रेष्ठस्तस्माद् विद्यां प्रशंसन्ति"—इति च तत्पुरस्तादेव ।

तृतीयां गाथा माह—"शश्वत् पुत्रेण पितरो ऽत्यायन् बहुलं तमः, आत्मा हि जज्ञ आत्मनः, स इरावत्यतितारिणी"—इति। 'पितरः' जनकाः उत्पन्नेन पुत्रेण 'शश्वत्' सर्वदा लोकद्वयेऽपि 'बहुलम्' अभ्यधिकं 'तमः' ऐहिकं आमुष्मिकञ्च दुःखम् 'अत्यायन्' अतिक्रामन्ति। तथा च बौधायन आह—

"पुदिति नरकस्याख्या, दुःखञ्च नरकं विदुः।
पुदस्त्राणात्ततः पुत्र मिहेच्छन्ति परत्र च॥"—इति *।

किञ्च 'हि' यस्मात् कारणात् पितुः पुत्र उत्पन्न इत्युक्ते सति पिता स्वस्मात् स्वय मेव 'जज्ञे' उत्पन्न इत्युक्तं भवति। ततः पिता यथा 'स्वयं' स्वकीयं दुःखं विनाशयति, तथा पुत्रोऽप्येतदीयं दुःखं विनाशयतीति द्रष्टव्यम्। तस्मात् 'सः' पुत्रः 'इरावती' अन्नयुक्ता 'अतितारिणी' नदीसमुद्रादेरतितरणहेतुर्नौरिति शेषः। यथा नौः दुर्घटं नद्यादिकं तारयति, एवं पुत्रोऽप्यैहिकं आमुष्मिकञ्च दुःखं तारयतीत्यर्थः॥

चतुर्थीं गाथा माह—"किन्नु मलं, किं मजिनं, किं मु श्मश्रूणि, किं तपः; पुत्रं ब्रह्माण इच्छध्वं, स वै लोको ऽवदावदः"—इति। अथ मलाजिनश्मश्रुतपःशब्दैः आश्रमचतुष्टयं विवक्षितम्। मलरूपाभ्यां शुक्रशोणिताभ्यां संयोगात् मलशब्देन गार्हस्थ्यं विवक्षितम्। कृष्णाजिनसंयोगादजिनशब्देन ब्रह्मचर्यं विवक्षितम्। क्षौरकर्मराहित्यात् श्मश्रुशब्देन वानप्रस्थं विवक्षितम्। इन्द्रियनियमसद्भावात् तपःशब्देन पारिव्राज्यं विवक्षितम्। 'मल' गार्हस्थ्यं 'किन्नु' किं नाम सुखं करिष्यति? न किञ्चि-

* एष श्लोको हरिवंशेऽप्युद्धृत। मनुसंहितायामर्थेन मेव ९ १३८। महा॰ भा॰ १४, २७५२। रामा॰ २ १०७ १२। मार्क॰ पु॰ ७५ १६।

दित्यर्थः । एव मुत्तरत्रापि योज्यम् । हे 'ब्राह्मणः' विप्राः ! विप्रक्षत्रियाद्याः ! सर्वे यूयं सुखहेतुत्वात् पुत्र मिच्छध्वम् । 'स वै' स एव पुत्रः 'अवदावदो लोकः' वदितु मयोग्यानि निन्दावाक्यान्यवदाः, तैर्वाक्यैर्नोद्यते न कथ्यत इत्यवदावदः; एवं प्रघट्टेन तेन कथ्यत इति 'अवदावदः' दोषराहित्यात् निन्दानर्ह इत्यर्थः । तादृशो 'लोकः' भोगहेतुः पुत्रः । तस्मादायमेभ्योऽप्याधिक्येन पुत्रेच्छा कर्त्तव्या । यद्यपि हरिश्चन्द्र एवात्र प्रष्टा, तथापि तेन सह ऋषीणां बहूनां सभाया मवस्थानात् ब्राह्मण इति सम्बोधनम् ॥

पञ्चमीं गाथा माह— "अन्नं ह प्राणः, शरणं ह वासो, रूपं हिरण्यं, पशवो विवाहाः ; सखा ह जाया कृपणं ह दुहिता, ज्योतिर्ह पुत्रः, परमे व्योमन्"—इति । अन्नादयो लोके सुखहेतुत्वेन प्रसिद्धाः । तथा हि शरीरे प्राणावस्थितहेतुत्वादन्न मेव प्राणः । वासः शीतोपद्रवाद्रक्षकत्वेन 'शरणं' गृहसमानम् । 'हिरण्य' कर्णाभरणादिकं दृष्टिप्रियत्वाद् रूपसम्पादकम् । 'पशवः' गवाश्वादयः विवाहविशेषेण निर्वाहकाः । जाया भोगे सहकारित्वात् 'सखा ह' सखिस्वरूपैव । एव मेते सुखहेतुत्वेन प्रसिद्धा अपि तात्कालिक मल्प मेव सुखं प्रयच्छन्ति । 'दुहिता ह' पुत्री इति तु 'कृपणं' केवलदुःखकारित्वाद् दैन्यहेतुः । तथा च स्मर्यते—

"भवे स्वजनदुःखकारिका सम्प्रदानसमये ऽर्थहारिका ।

यौवनेऽपि बहुदोषकारिका दारिका हृदयदारिका पितुः॥"—

इति । 'पुत्रो ह' पुत्रस्तु ज्योतिःस्वरूपम् ; तमोनिवारकत्वेन प्रकाशरूपत्वेन । स हि पितरं 'परमे व्योमन्' उत्कृष्टे आकाशे परब्रह्मरूपे अवस्थापयति । "आकाशस्तल्लिङ्गात्"—इत्यनेन (१. १. २२.) व्याससूत्रेण आकाशव्योमादिशब्दानां ब्रह्मपरत्वं

निर्णीतम् *। पुत्रस्य च ब्रह्मज्ञानहेतुत्वं पूर्वमेवामृतत्वञ्च गच्छतीत्यत्र प्रतिपादितम् (६१पृ० १८पं०)॥

षष्ठीं गाथामाह— "पतिर्जायां प्रविशति, गर्भो भूत्वा स मातरम्; तस्यां पुनर्नवो भूत्वा, दशमे मासि जायते"—इति। पत्युराकारद्वयमस्ति,— वर्त्तमानपुरुषाकार एकः, रेतोरूपेण गर्भाकारो द्वितीयः। जायाया अपि आकारद्वयमस्ति,— पतिरूपमाकारं प्रति जाया भवति, गर्भरूपमाकारं प्रति माता भवति। अतः 'सः' तादृशः पतिः, स्वयं रेतोरूपेण गर्भो भूत्वा, पूर्वमवस्थितां जायां भविष्यदाकारेण मातरं सतीं प्रविशति। 'तस्यां' मातरि 'पुनर्नवो भूत्वा' पूर्वमन्यस्यां मातरि उत्पन्नो जरठः, इदानीं पुनर्नूतनबालो भूत्वा 'तस्याम्' इदानीन्तन्यामस्यां मातरि गर्भपाके सति दशमे मासि उत्पद्यते। तस्मात् पुत्रः स्वस्मात् अन्यो न भवति॥

सप्तमीं गाथामाह—"तज्जाया जाया भवति, यदस्यां जायते पुनः; आभूतिरेषा भूतिर्बीजमेतन्निधीयते"—इति। 'यद्' यस्मात् कारणात् 'अस्या' गर्भधारिण्याम् 'अयं' पिता पुत्ररूपेण पुनर्जायते, 'तत्' तस्मात् कारणात् लोकप्रसिद्धा या जायास्ति, सा जायते ऽस्यामिति व्युत्पत्त्या जायाशब्दवाच्या भवति। किञ्च एषा भूत्याभूतिशब्दाभ्यामभिधीयते। भवत्यस्यां पुत्ररूपेण पतिरित्येषा 'भूति'-शब्दवाच्या; रेतोरूपेणागत्य अस्यां पुत्ररूपेण भवतीति

* "आकाश इति होवाचेत्यत्र च ब्रह्म वाच खम्।
शब्दस्य तत्र रूढत्वात्, वाय्वादेः सर्जनादपि॥
साकाशजगदुत्पत्तिहेतुत्वाच्चोपकटित।
एवकारादिना चात्र ब्रह्मैवाकाशशब्दितम्॥"—इति तथाष्टमाधिकरणम्।

'आभूति'-शब्दवाच्या। 'एतत्' एतस्यां स्त्रियां 'बीजं' रेतोरूपं 'निधीयते' प्रक्षिप्यते। तस्मादुक्ताः शब्दा उपपद्यन्ते ॥

अष्टमीं गाथा माह— "देवाश्चैता मृषयश्च, तेजः समभरन्महत्; देवा मनुष्यानब्रुवन्नेषा वो जननी पुनः"--इति। 'एताम्' एतस्यां योषिति देवाश्च महर्षयश्च स्वकीयं 'महत् तेजः' रेतोरूपं सारं 'समभरन्' पुत्रोत्पादनाय सम्पादितवन्तः। स्वय मेव सम्पाद्य ततो मनुष्यानित्यब्रुवन्। हे मनुष्याः! येयं मिदानीं जायारूपेण वर्त्तते, येयं पुनः 'वः' युष्माकं पुत्ररूपे जन्मनि जननी भवति ॥

नवमीं गाथा माह— "नापुत्रस्य लोकोऽस्तीति, तत् सर्वे पशवो विदुः; तस्मात् तु पुत्रो मातरं, स्वसारं चाधिरोहति"--इति। 'लोकः' लोकजन्यं सुखम्, अपुत्रस्य नास्ति; न हि पुत्रदर्शनेन यत् सुखं, तदन्यदर्शनेन क्वचिदपि दृश्यते। 'इति' यदस्ति, तत् 'सर्वे' गोमहिष्यादयो जानन्ति यस्मात्, तस्मादेव कारणात् पशुजातः 'पुत्रः' वत्सः स्वकीयां मातरं भगिनीं वा पुत्रोत्पादनार्थं मधिरोहति ॥

दशमीं गाथा माह— "एष पन्था उरुगायः सुशेवो, यं पुत्रिण आक्रमन्ते विशोकाः; तं पश्यन्ति पशवो वयांसि च, तस्मात्ते मात्रापि मिथुनीभवन्ति"--इति। 'पुत्रिणः' पुत्रवन्तो देवमनुष्यादयो 'विशोकाः' शोकरहिताः सन्तो 'यं' पन्थानं सुखानुभवरूपं मार्गम् 'आक्रमन्ते' प्राप्नुवन्ति, 'एष पन्थाः' पुत्रसुखानुभवरूपो मार्गः 'उरुगायः' उरुभिर्महद्भिः शास्त्रज्ञैः राजामात्यादिभिश्च गीयते। तथा 'सुशेवः' सुष्ठु सेवितुं योग्यः; सुखाधिक्यस्य विद्यमानत्वात्। 'तं' पुत्रसुखानुभवरूपं 'पशवः' गवादयो 'वयांसि' पक्षिणः 'पश्यन्ति' जानन्ति। तस्मात् 'ते' पशुपक्ष्यादयः पुत्रसुखार्थं

'मात्रा' सदापि मिथुनीभवन्ति, किं मुत अन्यया क्रिया सहेत्यर्थः ॥

नारदेनोक्तां दशगाथां निगमयति— "इति ह स्मा आख्याय" -इति । 'इति ह' अनेनैव प्रकारेण ('स्मे') 'अस्मै' तस्मै हरिश्चन्द्राय 'आख्याय' उत्तर मभिधायावस्थित इति शेषः ॥ १ (१३) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां तृतीयाध्याये
( त्रयस्त्रिंशाध्याये ) प्रथमः खण्डः ॥ १ ( १३ ) ॥

---

॥ अथ द्वितीयः खण्डः ॥

अथैन मुवाच वरुणं राजान मुपधाव पुत्रो मे जायतां तेन त्वा यजा इति तथेति स वरुणं राजान मुपससार पुत्रो मे जायतां तेन त्वा यजा इति तथेति तस्य ह पुत्रो जज्ञे रोहितो नाम तं होवाचाजनि वै ते पुत्रो यजस्व मानेनेति स होवाच यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति निर्दशो न्वस्त्वथ त्वा यजा इति तथेति स ह निर्दश आस तं होवाच निर्दशो न्वभूद्यजस्व मानेनेति स होवाच यदा वै पशोर्दन्ता जायन्तेऽथ स मेध्यो भवति दन्ता न्वस्य जायन्ता मथ त्वा यजा इति तथेति तस्य ह

दन्ता जज्ञिरे तं होवाचाज्ञत वा अस्य दन्ता यजस्व मानेनेति स होवाच यदा वै पशोर्दन्ताः पद्यन्तेऽथ स मेध्यो भवति दन्ता न्वस्य पद्यन्तामथ त्वा यजा इति तथेति तस्य ह दन्ताः पेदिरे तं होवाचापत्सत वा अस्य दन्ता यजस्व मानेनेति स होवाच यदा वै पशोर्दन्ताः पुनर्जायन्तेऽथ स मेध्यो भवति दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति तथेति तस्य ह दन्ताः पुनर्जज्ञिरे तं होवाचाज्ञत वा अस्य पुनर्दन्ता यजस्व मानेनेति स होवाच यदा वै क्षत्रियः सान्नाहुको भवत्यथ स मेध्यो भवति सन्नाहं नु प्राप्नोत्वथ त्वा यजा इति तथेति स ह सन्नाहं प्रापत्तं होवाच सन्नाहं नु प्राप्नोद्यजस्व मानेनेति स तथेत्युक्त्वा पुत्र मामन्त्रयामास ततायं वै मह्यं त्वा मददाद्धन्त त्वयाहमिमं यजा इति स ह नेत्युक्त्वा धनुरादायारण्य मपातस्थौ स संवत्सर मरण्ये चचार ॥ २ ( १४ ) ॥

पुत्रनिमित्तलाभप्रतिपादका नारदोक्ता दश गाथा उदाहृत्य पुत्रजन्मोपायोपदेशपरं नारदवाक्य मवतारयति— "अथैन मुवाच,— वरुणं राजान मुपधाव, पुत्रो मे जायतां तेन त्वा यजा इति"–इति । 'अथ' पुत्रेच्छानिमित्तकथनानन्तरम् 'एनं' पुत्रार्थिनं हरिश्चन्द्रं नारद उवाच । हे हरिश्चन्द्र । वरुणं राजानम् 'उपधाव' प्रार्थयस्व । येन प्रकारेण प्रार्थनीयः, सोऽभिधीयते—

हे वरुण ! त्वत्प्रसादात् मे पुत्रो जायतां, ततस्तेन पुत्रेण 'त्वां यजे' त्वा मुद्दिश्य यज्ञं करवाणीति ॥

प्रार्थनप्रकारं नारदोपदेश मुक्का हरिश्चन्द्रवृत्तान्तं दर्शयति— "तथेति ; स वरुणं राजान मुपससार, पुत्रो मे जायतां तेन त्वा यजा इति ; तथेति ; तस्य ह पुत्रो जज्ञे रोहितो नाम"–इति । नारदोपदेश मङ्गीकृत्य हरिश्चन्द्रो वरुणम् 'उपससार' प्रार्थयामास । 'सः' वरुणोऽपि तथास्त्विति तदीयपुत्रोत्पत्त्यै वरं दत्तवान् । तेन च वरेणोत्पन्नस्य 'रोहितः'–इत्येतन्नामाभूत् ॥

अथ बहुभिः पर्यायैर्वरुणस्योक्तिर्हरिश्चन्द्रस्य प्रत्युक्तिश्चेत्युभयं प्रतिपाद्यते ; तत्र प्रथमं पर्यायं दर्शयति— "तं होवाचाजनि वै ते पुत्रो यजस्व मानेनेति ; स होवाच, यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति, निर्दशो न्वस्त्वथ त्वा यजा इति ; तथेति"–इति । 'तं' हरिश्चन्द्रं वरुण उवाच । हे हरिश्चन्द्र ! ते पुत्रः 'अजनि वै' उत्पन्न एव, अनेन पुत्रेण मा मुद्दिश्य यागं कुर्विति । एवं वरुणेनोक्ते हरिश्चन्द्रः पुनः प्रत्युवाच । यागार्थः पशुर्यदा निर्दशो भवति, तदा स पशुः 'मेध्यः' यागयोग्यो भवति । निर्गतानि अशौचदिनानि दशसङ्ख्याकानि यस्मात् पशोः सोऽयं 'निर्दशः' । तस्मादयं 'नु' क्षिप्रं निर्दशोऽस्तु, 'अथ' अनन्तरं त्वां प्रति अहं 'यजै' इत्येतद्वाक्यम् । वरुणः 'तथा अस्तु' इति अङ्गीचकार ॥

द्वितीय मुक्तिप्रत्युक्तिपर्यायं दर्शयति— "स ह निर्दश आस ; तं होवाच, निर्दशो न्वभूद्यजस्व मानेनेति ; स होवाच, यदा वै पशोर्दन्ता जायन्तेऽथ स मेध्यो भवति ; दन्ता न्वस्य जायन्ता मथ त्वा यजा इति ; तथेति"–इति । दशदिनाशौचापगमे शुद्-

त्वात् यथा यागयोग्यत्वं, तथा दन्तोत्पन्नत्वादवयवसम्पूर्त्या याग-योग्यत्व मित्यभिप्रायः। स्पष्ट मन्यत् ॥

तृतीयं पर्यायं दर्शयति—"तस्य ह दन्ता जज्ञिरे ; तं होवा-चाप्नत वा अस्य दन्ता यजस्व मानेनेति ; स होवाच, यदा वै पशोर्दन्ताः पद्यन्ते ऽथ स मेध्यो भवति ; दन्ता न्वस्य पद्यन्ता मथ त्वा यजा इति ; तथेति"–इति। 'अप्नत वै' जाता एव 'पद्यन्ते' पतन्ति। प्रथमोत्पन्नानां दन्तानां मस्थायित्वेन मुख्यपशुवयवत्वा-भावात्। तथात्वे सति पशोर्मेध्यत्वम् ॥

चतुर्थं पर्यायं दर्शयति— "तस्य ह दन्ताः पेदिरे; तं होवाचा-पत्सत वा अस्य दन्ता, यजस्व मानेनेति ; स होवाच, यदा वै पशोर्दन्ताः पुनर्जायन्ते ऽथ स मेध्यो भवति ; दन्ता न्वस्य पुन-र्जायन्ता मथ त्वा यजा इति ; तथेति"–इति। 'अपत्सत वै' पतिताः। पुनरुत्पन्नानां दन्तानां स्थिरत्वेन सम्पूर्णावयवत्वात् पशोर्मेध्यत्वम् ॥

पञ्चमं पर्यायं दर्शयति— "तस्य ह दन्ताः पुनर्जज्ञिरे ; तं होवाचाज्ञत वा अस्य पुनर्दन्ता यजस्व मानेनेति ; स होवाच, यदा वै क्षत्रियः सान्नाहुको भवत्यथ स मेध्यो भवति ; सन्नाहं नु प्राप्नोत्वथ त्वा यजा इति ; तथेति"–इति। 'अज्ञत वै' जाता एव। पशुजातस्य पुनर्दन्तोत्पत्तिमात्रेण मेध्यत्वेऽपि अस्य पशोः क्षत्रियत्वात् स्वजात्युचितधनुर्धारणकवचादिसन्नाहयोग्यत्वे सति जात्युचितव्यापारसम्पूर्त्या मेध्यत्वम् ; तस्मात् 'नु' क्षिप्र मेवासौ सन्नाहं प्राप्नोतु, अनन्तर मेव यजा इत्युत्तरं वरुणोऽङ्गीचकार ॥

षष्ठं पर्यायं दर्शयति— "स ह सन्नाहं प्रापत् ; तं होवाच, सन्नाहं नु प्राप्नोद्यजस्व मानेनेति ; स तथेत्युक्त्वा पुत्र मामन्त्र्या-

मास ; ततायं वै मह्यं त्वा मददादन्त त्वयाहं मिमं यजा इति"—इति। सन्नाहप्राप्तेरूर्द्धं 'सः' हरिश्चन्द्रो वरुणोक्तिं मङ्गीकृत्य पुत्रमामन्त्र्यैव मुवाच। उपलालनार्थं पुत्रे पितृवाचि तत-शब्दप्रयोगः। हे 'तत' पुत्र! 'अयम्' एव वरुणो मह्यं 'त्वां' पुत्रं वरेण दत्तवान्; 'हन्त' हृष्टः सन्नहम् 'इमं' वरुणं यत् 'त्वया' पुत्रेण 'यजै' यागरूपां पूजां करवाणीति हरिश्चन्द्रस्योक्तिः॥

अथ रोहितनाम्नः पुत्रस्य कृत्यं दर्शयति— "स ह नेत्युक्त्वा धनुरादायारण्यं मपातस्थौ ; स संवत्सरं मरण्ये चचार"—इति। 'स ह' स खलु रोहिताख्यः पुत्रः पितुर्वाक्यं निषिध्य, स्वरक्षणार्थं धनुः स्वीकृत्य मरण्यं प्रत्युपगतोऽभूत्। कस्मिंश्चिदरण्ये नैरन्तर्येण 'सः' रोहितः संवत्सरं चचार॥ २ (१४)॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां तृतीयाध्याये
(त्रयस्त्रिंशाध्याये) द्वितीयः खण्डः॥ २ (१४)॥

---

॥ अथ तृतीयः खण्डः॥

अथ हैक्ष्वाकं वरुणो जग्राह तस्य होदरं जज्ञे तदु ह रोहितः शुश्राव सोऽरण्याद् ग्राम मेयाय त मिन्द्रः पुरुषरूपेण पर्येत्योवाच नाना श्रान्ताय श्रीरस्तीति रोहित शुश्रुम पापो* नृषद्वरो जन इन्द्र इच्च-

* "पापुकापापी" घ, च।

रतः सखा चरैवेति चरैवेति वै * मा ब्राह्मणो ऽवोच-
दिति ह द्वितीयं संवत्सर मरण्ये चचार सो ऽरण्याद्
ग्राम मेयाय त मिन्द्रः पुरुषरूपेण पर्येत्योवाच पुष्पि-
ण्यौ चरतो जङ्घे भूष्णुरात्मा फलग्रहिः शेरे ऽस्य सर्वे
पाप्मानः श्रमेण प्रपथे हताश्चरैवेति चरैवेति वै मा
ब्राह्मणो ऽवोचदिति ह तृतीयं संवत्सर मरण्ये चचार
सो ऽरण्याद् ग्राम मेयाय त मिन्द्रः पुरुषरूपेण पर्ये-
त्योवाच आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः शेते
निपद्यमानस्य चराति चरतो भगश्चरैवेति चरैवेति
वै मा ब्राह्मणो ऽवोचदिति ह चतुर्थं संवत्सर मरण्ये
चचार सो ऽरण्याद् ग्राम मेयाय त मिन्द्रः पुरुषरूपेण
पर्येत्योवाच कलिः शयानो भवति सञ्जिहानस्तु द्वापरः
उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरंश्चरैवेति
चरैवेति वै मा ब्राह्मणो ऽवोचदिति ह पञ्चमं संव-
त्सर मरण्ये चचार सोऽरण्याद् ग्राम मेयाय त मिन्द्रः
पुरुषरूपेण पर्येत्योवाच चरन्वै मधु विन्दति चर-
न्स्वादु मुदुम्बरं सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते
चरंश्चरैवेति चरैवेति वै मा ब्राह्मणो ऽवोचदिति ह
षष्ठं संवत्सर मरण्ये चचार सोऽजीगर्तं सौयवसि
मृषि मशनया परीत मरण्य उपेयाय तस्य ह त्रयः

* "चरेयति वै"—इति ख, ग। एव मितोत्तरत्रापि चिह्नस्थानपार्थक्यम्।

पुत्रा आसुः शुनःपुच्छः शुनःशेपः शुनोलाङ्गूल इति तं होवाच ऋषे ऽहं ते शतं ददाम्यहमेषा मेकेना-त्मानं निष्क्रीणा इति स ज्येष्ठं पुत्रं निगृह्णान उवाच न न्विम मिति नो एवेम मिति कनिष्ठं माता तौ ह मध्यमे सम्पादयाञ्चक्रतुः शुनःशेपे तस्य ह शतं दत्त्वा स त मादाय सो ऽरण्याद् ग्राम मेयाय स पितर मेत्योवाच तत हन्ताह मनेनात्मानं निष्क्रीणा इति स वरुणं राजान मुपससारानेन त्वा यजा इति तथेति भूयान् वै ब्राह्मणः क्षत्रियादिति वरुण उवाच तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच त मेत मभिषेचनीये पुरुषं पशु मालेभे ॥ ३ ( १५ ) ॥

रोहितस्यारण्ये संवत्सरचरणानन्तरभाविनं हरिश्चन्द्रादीनां वृत्तान्तं दर्शयति — "अथ हैक्ष्वाकं वरुणो जग्राह , तस्य होदरं जज्ञे ; तदु ह रोहितः शुश्राव ; सो ऽरण्याद् ग्राम मेयाय ; त मिन्द्रः पुरुषरूपेण पर्येत्योवाच, नाना श्रान्ताय श्रीरस्तीति रोहित शुश्रुम , पापो नृषद्वरो जन , इन्द्र इच्चरतः सखा, चरैवेति" –इति । 'अथ' रोहितस्यारण्ये संवत्सरवासानन्तर मेव 'ऐक्ष्वाकं' इक्ष्वाकुवंशोत्पन्नं हरिश्चन्द्रं 'वरुणः' देवो रोगरूपेण जग्राह । वरुणेन गृहीतस्य हरिश्चन्द्रस्य 'उदरं जज्ञे' जलेन पूरित मुच्छूनं महोदरनामकं रोगस्वरूप मुत्पन्नम् । 'तदु ह' तदपि सर्वं मरण्ये स्थितो 'रोहितः' पुत्रो मनुष्यमुखाच्छुश्राव । श्रुत्वा च 'सः' रोहितः पितरं द्रष्टु मरण्याद् ग्रामं प्रत्याजगाम । आगच्छन्तं

रोहितं मार्गमध्ये इन्द्रः केन चिद् ब्राह्मणरूपेण प्राप्य इद मुक्त-वान्,—आ समन्ताच्छ्रान्त आश्रान्तः, सर्वत्र पर्यटनेन श्रान्तिं प्राप्तः, तद्विपरीतो ऽनाश्रान्तः एकत्रैव निवासशील:, तादृशाय; तथाविधस्य पुरुषस्य 'श्रीः' बहुविधा सम्पन्नास्ति। यद्वा, नानेति पदच्छेदः। 'श्रान्ताय' सर्वत्र पर्यटनेन श्रान्तस्य 'नाना श्रीः' बहुविधा सम्पदस्ति। 'इति' अनेन प्रकारेण रोहित! वयं नीतिकुशलानां पुरुषाणां मुखात् शुश्रुम। 'वरो जनः' विद्यादिभिः श्रेष्ठो ऽपि पुरुषः 'नृषत् पापः' नृषु मनुष्येषु सीदतीति 'नृषत्' श्रेष्ठोऽपि बन्धुगृहेषु सर्वदावस्थितः तैरवज्ञातः 'पापः' तुच्छो भवेत्। अतस्तव पितृगृहे वासो न युक्तः। न च अरण्ये चरतो मम सहायो नास्तीति शङ्कनीयम्; 'इन्द्र एव' परमेश्वर एव 'चरतः' तव सखा भविष्यति। तस्मात् 'चरैव' सर्वथा अरण्ये चरस्वेति। एव मुवाच। एवं बहुष्वपि पर्यायेषु द्रष्टव्यम्॥

तत्रेन्द्ररोहितयोः संवादे द्वितीयं पर्यायं दर्शयति— "चरैवेति वै मा ब्राह्मणो ऽवोचदिति ह द्वितीयं संवत्सर मरण्ये चचार; सो ऽरण्याद् ग्राम मेयाय; त मिन्द्रः पुरुषरूपेण पर्येत्योवाच, पुष्पिण्यौ चरतो जङ्घे, भूष्णुरात्मा फलग्रहिः, शेरे ऽस्य सर्वे पाप्मानः, श्रमेण प्रपथे हतायरैवेति"—इति। ब्राह्मणरूपस्येन्द्रस्य वाक्यं श्रुत्वा ब्राह्मणोऽयं मरण्ये चरैवेत्येवं मा मुक्तवानिति मनसि ब्राह्मणवाक्ये महान्त मादरं कृत्वा पुनरप्येकं संवत्सर मरण्ये चरित्वा ग्रामात् पितरं द्रष्टुं ग्रामे त मागच्छन्तं पुनरपि इन्द्रो ब्राह्मणरूपेण आगत्य एव मुवाच। 'चरतः' पर्यटनं कुर्वतः पुरुषस्य 'जङ्घे' 'पुष्पिण्यौ' भवतः। यथा पुष्पयुक्ता वृक्षशाखा लता वा, सुगन्धोपेता सेव्या भवति, एवं चरतो जङ्घे श्रमजयेन सेव्ये

भवतः । तथैव 'श्रात्मा' मध्यदेहः 'भूष्णुः' वर्धिष्णुः 'फलग्रहिः' आरोग्यरूपं फलं गृह्णाति । तथैव 'अस्य' चरतः पुरुषस्य 'सर्वे पाप्मानः' सर्वपापानि 'प्रपथे' प्रकृष्टे तीर्थचैत्यादिमार्गे 'श्रमेण' सत्तदेवतादिदर्शने तीर्थयात्रादिप्रयासेन 'हताः' विनाशिताः सन्तः 'शेरे' शेरते, शयाना इव भवन्ति । यथा शयानाः पुरुषाः स्वकार्यं कृषिवाणिज्यादिकं कर्तुं समर्थाः, एवं पुण्येन विनष्टाः पाप्मानो नरकं दातुमसमर्था इत्यर्थः । तस्मात् सर्वथा चरणे चर, न पितुर्गेहे ऽवतिष्ठस्व ॥

तृतीयं पर्यायं दर्शयति— "चरैवेति वै मा ब्राह्मणो ऽवोचदिति ह तृतीयं संवत्सरमरण्ये चचार ; सोऽरण्याद् ग्राममेयाय ; तं मिन्द्रः पुरुषरूपेण पर्येत्योवाच, आस्ते भग आसीनस्योर्ध्व-स्तिष्ठति तिष्ठतः, शेते निपद्यमानस्य चराति चरतो भगश्चरैवेति" —इति । 'भगः' सौभाग्यम् । 'आसीनस्य' उपविष्टस्य 'आस्ते' तथैव तिष्ठति, न तु वर्धते ; अभिवृद्धिहेतोरुद्योगस्याभावात् । 'तिष्ठतः' उपवेशनं परित्यज्योत्थानं कुर्वतः पुरुषस्य भगः 'ऊर्ध्वः' अभिवृद्धेरभ्युपस्थितिष्ठति ; कृषिवाणिज्याद्युद्योगस्य सम्भावितत्वात् । 'निपद्यमानस्य' भूमौ शयानस्य भगः 'शेते' निद्रां करोति ; विद्यमानधनरक्षादिचिन्ताया अप्यभावात् सर्वथैव विनश्यति । 'चरतः' तेषु तेषु देशेषु अर्जनार्थं पर्यटनां कुर्वतः पुरुषस्य 'भगः' सौभाग्यं 'चराति' दिने-दिने वर्धते । तस्मात् त्वं चरैवेति, न स्थिरस्तिष्ठ ॥

चतुर्थं पर्यायं दर्शयति—"चरैवेति वै मा ब्राह्मणो ऽवोचदिति ह चतुर्थं संवत्सरमरण्ये चचार ; सो ऽरण्याद् ग्राममेयाय ; तं मिन्द्रः पुरुषरूपेण पर्येत्योवाच, कलिः शयानो भवति, सञ्जि-

ह्वानस्तु द्वापरः, उत्तिष्ठंस्त्रेता भवति, कृतं सम्पद्यते चरंश्चरैवेति"—इति। चतस्रः पुरुषस्यावस्थाः। निद्रा, तत्परित्यागः, उत्थानं, सञ्चरणं चेति। तासोत्तरोत्तरस्य श्रेष्ठत्वात् कलि–द्वापर–त्रेता–कृत-युगैः समानाः। ततश्च सञ्चरणस्य सर्वोत्तमत्वाच्चरैवेति॥

पञ्चमं पर्यायं दर्शयति—"चरैवेति वै मा ब्राह्मणो ऽवोचदिति ह पञ्चमं संवत्सरं मरण्ये चचार; सो ऽरण्याद् ग्राम मेयाय, त मिन्द्रः पुरुषरूपेण पर्येत्योवाच, चरन् वै मधु विन्दति, चरन्त्स्वादु मुदुम्बरं, सूर्यस्य पश्य श्रेमाणं, यो न तन्द्रयते चरंश्चरैवेति"—इति। 'चरन्' एव पुरुषः क्वचिद् वृक्षाग्रे 'मधु' माक्षिकं लभते, क्वचित् 'स्वादुं' मधुर मुदुम्बरादिफलविशेषं लभते। एतदुभय मुपलक्षणम्। तत्र तत्र विद्यमानं भोगविशेषं लभते। तत्र सूर्यो दृष्टान्तः। 'यः' सूर्यः सर्वत्र चरन्नपि 'न तन्द्रयते' कदाचिद-प्यलसो न भवति, तस्य सूर्यस्य 'श्रेमाणं' श्रेष्ठत्वं जगद्वन्द्यत्वं पश्य। तस्माच्चरैव॥

इत्थ मिन्द्रकृतेनोपदेशेन चरतो रोहितस्य स्वजीवने पितु-रारोग्ये च कारणभूतं श्रेयोलाभं दर्शयति—"चरैवेति वै मा ब्राह्मणो ऽवोचदिति ह षष्ठं संवत्सर मरण्ये चचार; सो ऽजीगर्त्तं सौयवसि मृषि मशनया परीत मरण्य उपेयाय"—इति। षष्ठे संवत्सरे पूर्ववदरण्यसञ्चारी 'स ह' रोहितः कञ्चिदृषिं तस्मिन्न-रण्ये 'उपेयाय' प्राप्तवान्। कीदृश मृषिम्? अजीगर्त्तनामकं, सूयवसस्य पुत्रम्, 'अशनया परीतम्' अन्नालाभेन क्षुत्पीड़ितम्॥

अथाजीगर्त्तरोहितयोः संवादं दर्शयति—"तस्य ह त्रयः पुत्रा आसुः,—शुनःपुच्छः शुनःशेपः शुनोलाङ्गूल इति; तं होवाच, ऋषे ऽहं ते शतं ददाम्यह मेषा मेकेनात्मानं निष्क्रीणा

इति; स ज्येष्ठं पुत्रं निगृह्णान उवाच, न न्विम मिति ; नो एवेम मिति कनिष्ठं माता ; तौ ह मध्यमे सम्पादयाञ्चक्रतुः शुनःशेपे ; तस्य ह शतं दत्त्वा स त मादाय सोऽरण्याद् ग्राम मेयाय"–इति । 'तस्य' अजीगर्त्तस्य शुनःपुच्छादिनामकास्त्रयः पुत्रा आसुः । 'तं' पुत्रवन्तं ऋषिं रोहितः उवाच । हे ऋषे ! 'ते' तुभ्यं मह्यं गवां शतं ददामि । 'ज्येष्ठं पुत्रं' शुनःपुच्छनामकं हस्तेन 'निगृह्णानः' स्वसमीपे समाकर्षन् रोहितं प्रत्येव मुवाच,— तुभ्य मेकः पुत्रो दीयते, 'इमं नु' शुनःपुच्छन्तु 'न' ददामि ; मम प्रियत्वादिति । ततो माता कनिष्ठं हस्तेन गृहीत्वैव मुवाच—'इमं' शुनोलाङ्गूलं तु मम प्रियं 'नो एव' सर्वथा न ददामीति । ततः 'तौ' उभौ मातापितरौ 'मध्यमे' पुत्रे शुनःशेपे दाने 'सम्पादयाञ्चक्रतुः' अङ्गीकृतवन्तौ । ततः 'तस्य' अजीगर्त्तस्य 'सः' रोहितो गवां शतं दत्त्वा 'तं' शुनःशेपम् आदायावस्थितः * । ततः 'सः' रोहितः तेन शुनःशेपेन सहारण्यात् स्वकीयं ग्रामं प्रत्याजगाम ॥

तदागमनादूर्ध्वकालीनं वृत्तान्तं दर्शयति— "स पितर मेत्योवाच,— तत हन्ताह मनेनात्मानं निष्क्रीणा इति ; स वरुणं राजान मुपससारानेन त्वा यजा इति ; तथेति , भूयान् वै ब्राह्मणः क्षत्रियादिति वरुण उवाच ; तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच,

---

* "षष्ठ्या आक्रोशे"–इति पा० ६. ३. २१ । "शेपपुच्छलाङ्गूलेषु शुनः"–तत्रैव वा०५ । "उभे वनस्पत्यादिषु युगपत्"–इति पा० ६. २. १४० । शुनःशेपम् । शुनःशेफ इति पाठोऽपि महाभारतादौ ( १३. ३. ६. ) । शेपः इति, वैतसः इति च द्वे पदे निघण्टुसमाम्नाये पठिते । "शेपो वैतस इति पुंस्प्रजननस्य । शेपः शपतेः स्पृशतिकर्मणो, वैतसो वितस्तं भवति"–इति निरु० ३. ४ ४ । "स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते, न पुंसः ; पुंसोऽपीत्येके, शौनःशेपे दर्शनात्"–इति चाह यास्कः ( ३. १ ४. ) ।

त मेत मभिषेचनीये पुरुषं पशु मालेभे”–इति । ‘सः’ रोहितः पितर मागत्यैव मुवाच । हे ‘तत’ पितः । ‘हन्त’ आवयोः हर्षः सम्पन्नः । अहम् ‘अनेन’ शुनःशेपरूपेण मूल्येन ‘आत्मानं’ मदीयं वरुणात् ‘निष्क्रीणै’ मूल्यं दत्त्वा आत्मानं मोचयामीत्यर्थः । तथोक्ते ‘सः’ हरिश्चन्द्रो वरुण मुपेत्य ‘अनेन’ शुनःशेपेन ब्राह्मणेन ‘त्वा’ त्वां यक्ष्यामीत्युक्तवान् । ‘सः’ वरुणोऽपि तथेत्यङ्गीकृत्यैव मुवाच— ‘क्षत्रियात्’ तव पुत्रात् रोहितादप्ययं ब्राह्मणो ‘भूयान्’ अभ्यधिक एव, मम प्रियः ; इत्युक्त्वा ‘तस्मै’ हरिश्चन्द्राय कर्त्तव्यत्वेन राजसूय मुपदिदेश च । ‘सः’ हरिश्चन्द्रो राजसूयं प्रक्रम्य तस्य मध्ये यो ऽभिषेचनीयाख्यः * एकाहः सोमयागः, तस्मिन् ‘त मेतं’ शुनःशेपं पुरुषं पशुम् ‘आलेभे’ सवनीयपशुत्वेनालब्धुं निश्चितवान् ॥ २ ( १५ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां तृतीयाध्याये
( त्रयस्त्रिंशाध्याये ) तृतीयः खण्डः ॥ ३ ( १५ ) ॥

---

* “सप्तदशान्ते समानपक्षे ऽभिषेचनीय दशपेयौ, ऊर्ध्वं ब्रह्मपूर्व उभयसामाभिषेचनीय ’–इति आश्व० श्रौ० [illegible] ३ ७, ८ । तत्राहनि अभिषेकार्थाना मपां ग्रहणं भवति । तद्विशेषास्तु कात्या० श्रौ० १५ ४ २१–५, ६ एतेषु द्रष्टव्यानि । ‘राजानो भविष्यत्स्वभिषेचनीया ०—०विशोऽवभिषेचनीया ”–इति च शत० ब्रा० १२ ४ २ १७ ।

॥ अथ चतुर्थः खण्डः ॥

तस्य ह विश्वामित्रो होतासीज्जमदग्निरध्वर्युर्वसिष्ठो ब्रह्मा ऽयास्य उद्गाता तस्मा उपाकृताय नियोक्तारं न विविदुः स होवाचाजीगर्त्तः सौयवसिर्मह्य मपरं शतं दत्ताह मेनं नियोक्ष्यामीति तस्मा अपरं शतं ददुस्तं स निनियोज तस्मा उपाकृताय नियुक्तायाप्रीताय पर्यग्निकृताय विशसितारं न विविदुः स होवाचाजीगर्त्तः सौयवसिर्मह्य मपरं शतं दत्ताह मेनं विशसिष्यामीति तस्मा अपरं शतं ददुः सोऽसिं निःशान एयायाथ ह शुनःशेप ईक्षाञ्चक्रे ऽमानुष मिव वै मा विशसिष्यन्ति हन्ताहं देवता उपधावामीति स प्रजापति मेव प्रथमं देवताना मुपससार कस्य नूनं कतमस्यामृताना मित्येतयर्चा तं प्रजापतिरुवाचाग्निर्वै देवानां नेदिष्ठस्त मेवोपधावेति सोऽग्नि मुपससाराग्नेर्वयं प्रथमस्यामृताना मित्येतयर्चा त मग्निरुवाच सविता वै प्रसवाना मीशे त मेवोपधावेति स सवितार मुपससाराभि त्वा देव सवितरित्येतेन तृचेन तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसीति त मेवोपधावेति स वरुणं राजान मुपससारात उत्तराभिरेकत्रिंशता तं वरुण उवाचाग्निर्वै देवानां मुखं

सुहृदयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या त मग्निरुवाच विश्वान् नु देवान् स्तुह्यथ * त्वोत्स्रक्ष्याम इति स विश्वान् देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चा तं विश्वे देवा ऊचुरिन्द्रो वै देवाना मोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स इन्द्रं तुष्टाव यच्चिद्धि सत्य सोमपा इति चैतेन सूक्तेनोत्तरस्य च पञ्चदशभिस्तस्मा इन्द्र † स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ त मेतया प्रतीयाय शश्वदिन्द्र इति त मिन्द्र उवाचाश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽश्विनौ तुष्टावात उत्तरेण तृचेन त मश्विना ऊचतुरुषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स उषसं तुष्टावात उत्तरेण तृचेन तस्य ह स्मर्च्यृच्युक्तायां वि पाशो मुमुचे कनीय ऐक्ष्वाकस्योदरं भवत्युत्तमस्या मेवर्च्युक्तायां वि पाशो मुमुचेऽगद ऐक्ष्वाक आस ॥ ४ ( १६ ) ॥

हरिश्चन्द्रस्य राजसूयानुष्ठानं दर्शयति— "तस्य ह विश्वामित्रो होतासीज्जमदग्निरध्वर्युर्वसिष्ठो ब्रह्माऽयास्य उद्गाता; तस्मा उपाकृताय नियोक्तारं न विविदुः ; स होवाचाजीगर्त्तः सौयवसि-र्मह्य मपरं शतं दत्ताह मेनं नियोक्ष्यामीति ; तस्मा अपरं शतं

* "देवान्स्तुह्यथ" घ।     † "इन्द्रः" क, घ, ञ।

ददुस्तं स निनियोज"—इति। विश्वामित्रादयो महर्षयः 'तस्य' हरिश्चन्द्रस्य यागे राजसूये होत्रादयश्चत्वारो महर्त्विज आसन्। तत्र जमदग्निरध्वर्युरभिषेचनीये सोमयागे 'तं' शुनःशेपं सवनीयपशुत्वेनोपाकृतवान्। बर्हिर्युक्तया प्लक्षशाखया मन्त्रपुरःसरं समुपस्पृश्य स्वीकारः 'उपाकरणम्'। तत ऊर्ध्वं यूपबन्धनं 'नियोजनम्'। तस्य क्रूरकर्मत्वादध्वर्युः नियोजने ऽप्रवृत्तः। ततः 'उपाकृताय तस्मै'* उपाकरणेन संस्कृतस्य शौनःशेपस्य 'नियोक्तारं' यूपे बन्धनकर्त्तारं कञ्चिदपि पुरुषं 'न विविदुः' न लेभिरे। तदानीं सूयवसस्य पुत्रः, शुनःशेपस्य पिता, 'सः' अजीगर्त्तः 'मह्यं' पूर्वस्माच्छतादपेतम् 'अपरं' गोशतं हे यजमानर्त्विजः! दत्त, अहम् 'एनं' शुनःशेपं यूपे 'नियोक्ष्यामि' रशनया कण्ठे शिरसि पादयोश्च बद्धा रशनापस्य यूपे बन्धनं 'नियोजनम्' तदहं करिष्यामीति। 'तस्मै' अजीगर्त्ताय अपरं गोशतं ददुः; 'तं' च शुनःशेपं 'सः' अजीगर्त्तो निनियोज। धातोर्द्विर्भावं परित्यज्योपसर्गस्य द्विर्भावश्छान्दसः॥

अथ विशसनप्रवृत्तिं दर्शयति—"तस्मा उपाकृताय नियुक्तायाप्रीताय पर्यग्निकृताय विशसितारं न विविदुः; स होवाचाजीगर्त्तः सौयवसिर्मह्यमपरं शतं दत्ताहमिमं विशसिष्यामीति; तस्मा अपरं शतं ददुः, सोऽसिं निःशान एयाय"—इति। उपाकरण-नियोजने पूर्वमुक्ते। आप्रीसञ्ज्ञिताभिरेकादशभिः प्रयाजयाज्याभिः यद् यजनं तद् 'आप्रीणनम्'। दर्भरूपेणोल्मुकेन त्रिः प्रदक्षिणीकरणं तत् 'पर्यग्निकरणम्'। तथाविधसंस्कारचतुष्टययुक्ताय† 'तस्मै'‡ तस्य शुनःशेपस्य 'विशसितारं' हिंसितारं क्रूरा-

*, ‡ "षष्ठ्यर्थे चतुर्थीति वाच्यम्"—इति पा० २. ३. ६२ वा०।

† तदेतच्चतुष्टयमिष्ट्यादिकम् १भा० २२३—२५४ पृष्ठेषु द्रष्टव्यम्।

त्मानं कञ्चिदपि पुरुषं न लेभिरे। ततोऽजीगर्त्तः पूर्ववदपरं गोशतं गृहीत्वा मारयितुम् 'असिं' खड्गं 'निःशानः' निशितं तीक्ष्णं कुर्वन्नेव 'एयाय' आजगाम ॥

पितुरजीगर्त्तस्य पुत्रमारणोद्योगानन्तरं वृत्तान्तं दर्शयति— "अथ ह शुनःशेप ईक्षाञ्चक्रे ऽमानुष मिव वै मा विशसिष्यन्ति, हन्ताहं देवता उपधावामीति; स प्रजापति मेव प्रथमं देवताना मुपससार, कस्य नूनं कतमस्यामृतानाम् मित्येतयर्चा"—इति। 'अथ' पितुः पुत्रमारणोद्योगानन्तरं 'शुनःशेपः' पुत्रो मनस्येवं 'ईक्षाञ्चक्रे' विचारितवान्। "अन्यत्र पर्यग्निकृतं पुरुष मारण्यायोत्सृजन्ति अहिंसायै"—इतिश्रुतेः पर्यग्निकरणादूर्द्ध्वं मनुष्यं परित्यजन्ति। एते तु 'मा' माम् 'अमानुष मिव' मनुष्यव्यतिरिक्तं मजादिपशु मिव 'विशसिष्यन्ति' मारयिष्यन्ति। 'हन्त' हा कष्ट मेतत् सम्पन्नम्। अह मितः परं रक्षार्थं देवताः 'उपधावामि' भजामि। 'इति' एतद् विचार्य देवानां मध्ये 'प्रथमं' मुख्यं प्रजापति मेव "कस्य नूनम्"—इत्यृचा (ऋ० सं० १. २४. १.) 'उपससार' सेवितवान् ॥

तस्य प्रजापतेः सहकारित्वेनाग्नेः सेवां दर्शयति— "तं प्रजापतिरुवाचाग्निर्वै देवानां नेदिष्ठस्त मेवोपधावेति सोऽग्नि मुपससाराग्नेर्वय मिति प्रथमस्यामृतानां मित्येतयर्चा"—इति। 'तं' सेवकं शुनःशेपं प्रजापतिरेव मुक्तवान्। अग्निः सर्वेषां देवानां 'नेदिष्ठः' हविर्वहनेनातिसमीपवर्त्ती, अतस्त मेवोपास्वेत्युक्तः 'सः' शुनःशेपः "अग्नेर्वयम्"—इत्यृचा (ऋ०सं०१.२४.२.) अग्नि मुपासितवान् ॥

तस्य चाग्नेः सहकारित्वेन सवितुरुपासनं दर्शयति— "त मग्निरुवाच, सविता वै प्रसवाना मीशे, त मेवोपधावेति; स

सवितार मुपससाराभि त्वा देव सवितरित्येतेन ऋचेन"–इति। 'प्रसवानां' सर्वेषु कार्येषु प्रेरणारूपाणा मनुज्ञानात् सविता 'ईशे' स्वामी भवति। तस्मात् तमेवोपधावेत्यग्निनोपदिष्टः "अभि त्वा" -इति (ऋ०सं०१.२४.३-५.) ऋचेन सवितार मुपासितवान्॥

तस्य च सवितुः सहकारित्वेन वरुणस्योपासनं दर्शयति—"तं सवितोवाच, वरुणाय वै राज्ञे नियुक्तो ऽसीति, त मेवोपधावेति; स वरुणं राजान मुपससारात उत्तराभिरेकत्रिंशता"–इति। हे शुनःशेप! वरुणार्थे त्वं यूपे बद्धोऽसि, अतो वरुण मुपास्वेति सवित्रोक्तः, पूर्वस्मात् सवितृविषयात् ऋचात् उत्तराभिरेकत्रिंशत्-सङ्ख्याकाभिर्ऋग्भिर्वरुण मुपासितवान्। "न हि ते क्षत्रम्"–इत्याद्याः सूक्तशेषभूता दशर्चः (ऋ० सं० १. २४. ६-१५.), "यच्चिद्धि ते विशः"–इत्यादिक मेकविंशत्यृचं सूक्तम् (ऋ० सं० १. २५.), इत्येवं एकत्रिंशत् सङ्ख्या द्रष्टव्या॥

तस्य च वरुणस्य सहकारित्वेन पुनरप्यग्नेरुपासनं दर्शयति—"तं वरुण उवाचाग्निर्वै देवानां मुखं सुहृदयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति; सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या"–इति। अयं अग्निः सर्वेषां देवानां 'मुखं' मुखस्थानीयः; अग्नि-द्वारेणैव सर्वैर्देवैर्हविस्स्वीकारात्। अत एव प्रीत्या हविर्वहना-दतिशयेन सुहृदयः 'सुहृदयतमः'। 'तम्' अग्निं 'नु' क्षिप्रं स्तुहीति वरुणेनोक्तः पूर्वोक्ताभ्यः ऋग्भ्यः उत्तराभिर्द्वाविंशतिसङ्ख्याकाभि-ऋग्भिरग्निं तुष्टाव। "वसिष्वा हि"–इत्यादिकं दशर्चं सूक्तम् (ऋ० सं० १. २६.), "अश्वं न त्वा"–इत्यादिकं त्रयोदशर्चं सूक्तम् (ऋ०सं०१.२७.), तत्रान्त्यां परित्यज्य वसिष्वादिसूक्तद्वय-गता ऋचो द्वाविंशतिसङ्ख्याकाः॥

अग्नेः सहकारित्वेन विश्वेषां देवाना मुपासनं दर्शयति— "त मग्निरुवाच, विश्वान् नु देवान् स्तुह्यथ त्वोत्स्रक्ष्याम इति ; स विश्वान् देवांस्तुष्टाव, नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चा"— इति । यद्यपि वरुणपाशेन बद्धत्वात् वरुण एव शुनःशेप मुत्स्रष्टुं समर्थः, तथाप्यग्न्यादीनां सहकारित्ववचनं दार्ढ्यार्थं द्रष्टव्यम् । विश्वे देवा गणरूपा न भवन्ति, किन्तु सर्वे देवाः, तान् "नमो महद्भ्यः"-इत्येतयर्चा ( ऋ० सं० १. २७. १३. ) उपासितवान् ॥

तेषां च विश्वेषां देवानां सहकारित्वेनेन्द्रस्योपासनं दर्शयति— "तं विश्वे देवा ऊचुरिन्द्रो वै देवाना मोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति ; स इन्द्रं तुष्टाव, यच्चिद्धि सत्य सोमपा इति चैतेन सूक्तेनोत्तरस्य च पञ्चदशभिः"—इति । ओजोबलादिशब्दाः पूर्वाचार्यैरेवं व्याख्याताः—

"ओजो दीप्तिर्बलं दार्ढ्यं, प्रसह्यकरणे सहः ।

सुजनः सन्, पारयिष्णुरुपक्रान्तसमाप्तिकृत्"—इति ।

इष्ठप्रत्यय-तमप्प्रत्ययाभ्यां तत्र तत्रातिशय उच्यते । तादृश मिन्द्रं "यच्चिद्धि सत्य सोमपाः"—इत्यनेन सप्तर्चेन सूक्तेन ( ऋ० सं०१.२८. ), उत्तरस्मिन्नपि "आ व इन्द्रम्"—इत्यादिके द्वाविंशत्यृचे सूक्ते ( ऋ० सं० १. ३०. ) पञ्चदशभिर्ऋग्भिश्च तुष्टाव ॥

पूर्वं सम्यगुपदेश चरैवेत्येव मिन्द्रो रोहितं प्रत्युपदिदेश ; तस्योपदेशस्य फलपर्यवसायित्व मनुस्मरतः तस्येन्द्रस्य शुनःशेपस्तुतौ प्रीत्यतिशयं दर्शयति— "तस्मा इन्द्र स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ, त मेतया प्रतीयाय शश्वदिन्द्र इति"—इति । शुनःशेपेनेन्द्रः स्तूयमानः प्रीतो भूत्वा 'तस्मै' शुनःशेपाय सुवर्णमयं दिव्यं रथ मारोहणार्थं स्वकीयेन मनसैव ददौ । शुनःशेपोऽपि

तदीय मनुग्रह मवगत्य पूर्वोक्ताभ्यः पञ्चदशभ्यः 'उत्तरया' "शश्व-दिन्द्रः"-इत्येतया ( ऋ० सं० १.३०.१६. ) ऋचा 'तं' रथं 'प्रती-याय' मनसैव प्रतिजगाम * ॥

इन्द्रस्य सहकारित्वेनाश्विनोरुपासनं दर्शयति—"तमिन्द्र उवाचाश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम इति; सोऽश्विनौ तुष्टावात उत्तरेण तृचेन"-इति । पूर्वोक्तायाः शश्वदिन्द्र इत्यस्याः 'उत्तरेण' "आश्विनावश्वावत्या"-इति ( ऋ० सं० १. ३०. १७-१९. ) तृचे-नाश्विनौ स्तुतवान् ॥

अश्विनोः सहकारित्वेनोषस उपास्तिं दर्शयति— "तमश्विना ऊचतुरुषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति; स उषसं तुष्टावात उत्तरेण तृचेन"-इति । "कस्त उषः"-इत्यादिः ( ऋ० सं० १. ३०. २०-२२. ) उत्तरस्तृचः ॥

अथोक्तानां सर्वासां देवतानां मनुग्रहेण शुनःशेपस्य बन्धमोचं हरिश्चन्द्रस्यारोग्यं च दर्शयति— "तस्य ह स्मर्च्यृच्युक्तायां वि पाशो मुमुचे, कनीय ऐक्ष्वाकस्योदरं भवत्युत्तमस्यामेवर्च्युक्तायां वि पाशो मुमुचे ऽगद ऐक्ष्वाक आस"-इति । 'तस्य' पूर्वोक्तस्य तृचस्य सम्बन्धिन्याम् 'ऋचि-ऋचि' एकैकस्यामृच्युक्तायां क्रमेण शुनःशे-पस्य पाशो 'विमुमुचे' विशेषेण मुक्तोऽभूत् † । 'ऐक्ष्वाकस्य' हरिश्च-न्द्रस्य यत् महोदरं, तदपि क्रमेण 'कनीयः' अल्पत्वं भवति । उत्त-

* "स्तूयमानं यदादित्यं शौनःशेपो मनसा ददौ ।
शुनःशेपाय दिव्यं तु रथं सर्वं हिरण्मयम् ॥"-इति बृ० दे० ३ १०१ ।

† "शुनःशेपं वाजीगर्तिं वरुणोऽगृह्णात्, स एतां वारुणीमपश्यत्, तया वै स आत्मानं वरुणपाशादमुञ्चत्"-इति तै० सं० ५. २. २. ३ । "शौनःशेपं माप्स्यापद्यते, वरुणपाशादेवैनं मुञ्चति"-इति तै० ब्रा० १. ७. १०. ६ ।

मस्या मृत्युत्वायां पाशो विमुमुचे, एवं सर्वात्मना मुक्तो ऽभूत्, ऐक्ष्वाकोऽपि 'अगदः' निःशेषेण रोगरहित आस * ॥ ४ ( १६ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां तृतीयाध्याये
( त्रयस्त्रिंशाध्याये ) चतुर्थः खण्डः ॥ ४ ( १६ ) ॥

---

॥ अथ पञ्चमः खण्डः ॥

त ऋत्विज ऊचुस्त्वमेव नो ऽस्याह्नः संस्थामधिगच्छेत्यथ हैतं शुनःशेपो ऽञ्जःसवं ददर्श तमेताभिश्चतसृभिरभिसुषाव यच्चिद्धि त्वं गृहेगृह इत्यथैनं द्रोणकलशमभ्यवनिनायोच्छिष्टं चम्वोर्भरेत्येतयर्चा ऽथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवाञ्चकाराथैनमवभृथमभ्यवनिनाय त्वं नो अग्ने वरुणस्य विद्वानित्येताभ्यामथैनमत ऊर्ध्वमग्निमाहवनीयमुपस्थापयाञ्चकार शुनश्चिच्छेपं निदितं सहस्रादित्यथ ह शुनःशेपो विश्वामित्रस्याङ्कमाससाद स होवाचाजीगर्तः सौयवसिरृषे पुनर्मे पुत्रं देहीति

* इदं हैवाख्यानं रामायणेऽपि बहु व्यतिक्रम्याख्यातम् १. ६१, ६२ सर्गयोः । भागवते ऽप्येतदुपाख्यानम् ९. ८,१६ अध्याययोः । तथा महाभारतेऽपि १३. ३. ६-८ । हरिवंशेऽपि २७. ४०-६० ।

नेति होवाच विश्वामित्रो देवा वा इमं मह्यं मरासतेति स ह देवरातो वैश्वामित्र आस तस्यैते कापिलेय-बाभ्रवाः स होवाचाजीगर्त्तः सौयवसिस्त्वं वेहि विह्वयावहा इति स होवाचाजीगर्त्तः सौयवसिराङ्गिरसो जन्मनास्याजीगर्त्तिः श्रुतः कविः ऋषे पैतामहात् तन्तोर्मा ऽपगाः पुनरेहि मा मिति स होवाच शुनःशेपो ऽदर्शुस्त्वा शासहस्तं न यच्छूद्रेष्वलप्सत गवां त्रीणि शतानि त्वमवृणीथा मदङ्गिर इति स होवाचाजीगर्त्तः सौयवसिस्तद्वै मा तात तपति पापं कर्म मया कृतं तदहं निह्नुवे तुभ्यं प्रतियन्तु शता गवामिति स होवाच शुनःशेपो यः सकृत्पापकं कुर्यात् कुर्यादेनत्ततो ऽपरं नापागाः शौद्रान्यायाऽ*दसन्धेयं त्वया कृत मित्यसन्धेय मिति ह विश्वामित्र उपपपाद स होवाच विश्वामित्रो भीम एव सौयवसिः शासेन विशिशासिषुः अस्थान् मैतस्य पुत्रो भूर्ममैवोपेहि पुत्रता मिति स होवाच शुनःशेपः स वै यथा नो ज्ञपया राजपुत्र तथा वद यथैवाङ्गिरसः सन्नुपेयां तव पुत्रता मिति स होवाच विश्वामित्रो ज्येष्ठो मे त्वं पुत्राणां स्यास्तव श्रेष्ठा प्रजा स्यात् उपेया दैवं मे दायं तेन वै त्वोपमन्त्रय इति स होवाच शुनःशेपः सञ्ज्ञानानेषु

* "शौद्रान्याया"–इति ज, ञ ।

वै ब्रूयात्सौहार्दाय मे श्रियै यथा ऽहं भरत ऋषभोपेयां तव पुत्रता मित्यथ ह विश्वामित्रः पुत्रानामन्त्रयामास मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः ये के च भ्रातरः स्थ नास्मै ज्यैष्ठ्याय कल्पध्व मिति ॥ (५) १७ ॥

बन्धनात् मुक्तस्य शुनःशेपस्योत्तरकालीनं वृत्तान्तं दर्शयति—"त मृत्विज ऊचुस्त्व मेव नो ऽस्याह्नः संस्था मधिगच्छेत्यथ हैतं शुनःशेपो ऽञ्जःसवं ददर्श ; त मेताभिश्चतसृभिरभिसुषाव, यच्चिद्धि त्वं गृहे गृह इत्यथैनं द्रोणकलश मभ्यवनिनायोच्छिष्टं चम्वोर्भरेत्येतयर्चा ; ऽथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवाञ्चकारार्थेन मवभृथ मभ्यवनिनाय, त्वं नो अग्ने वरुणस्य विद्वानित्येताभ्या मथैन मत ऊर्ध्व मग्नि माहवनीय मुपस्थापयाञ्चकार, शुनश्चिच्छेपं निदितं सहस्रादिति"—इति। देवताअनुग्रहयुक्तं 'तं' शुनःशेपं विश्वामित्रादयः सर्वे 'ऋत्विजः' एव मूचुः,— हे शुनःशेप। त्व मेव 'नः' अस्माकम् 'अस्याह्नः' अभिषेचनीयाख्यस्य 'संस्थां' समाप्तिम् 'अधिगच्छ' प्राप्नुहि, अनुष्ठापयेत्यर्थः। तदैव सूक्ते सत्यनन्तरं शुनःशेपः 'एतम्' अभिषेचनीयाख्यं सोमयागम् 'अञ्जःसवं' ददर्श। 'अञ्जसा' ऋजुमार्गेण 'सवः' सोमाभिषवो यस्मिन् यागे सोऽञ्जःसवः, तादृशं प्रयोगप्रकारं निश्चितवान्। निश्चित्य च 'तं' सोमं "यच्चिद्धि"—इत्यादिभिः चतसृभिः (ऋ० सं० १. २८. ५–२८.) ऋग्भिरभिषुतं कृतवान्। अथ 'एनम्' अभिषुतं सोमम् 'एतया' "उच्छिष्टं चम्वोः"—इत्यृचा (ऋ० सं० १.२८.९.) द्रोणकलश मभिलक्ष्य 'अवनिनाय' द्रोणकलशे प्रक्षिप्तवान्। 'अथ' अनन्तरम् 'अस्मिन्' हरिश्चन्द्रे 'अन्वारब्धे'

शुनःशेपदेह मुपसृष्टवति सत्युत्थाय ऋग्भ्यः 'पूर्वाभिः' "यत्र ग्रावा"-इत्यादिभिश्चतसृभिर्ऋग्भिः ( ऋ० सं० १. २८, १-४. ) स्वाहाकारसहिताभिः सोमं जुहवाञ्चकार। "यत्र ग्रावा"-इत्यादिकं सूक्तं नवर्चम् ; तत्र यच्चिद्धीति पञ्चमी ; ता मारभ्य चतसृभिः ऋग्भिरभिषवः ; "उच्छिष्टम्"-इत्यादिका नवमी , तया द्रोणकलशे प्रक्षेपः ; "यत्र ग्रावा"-इत्यादिभिश्चतसृभिर्होमः ; इत्येवं कृत्स्नस्य सूक्तस्य विनियोगः। 'अथ' होमानन्तर मेव कर्त्तव्यम् अवभृथम् 'अभि'लक्ष्य 'अवनिनाय' सर्वं मवभृथसाधनं तदेव नीत्वा, "त्वं नो अग्ने"-इत्यादिकाभ्याम् ( ऋ० सं० ४.१.४,५. ) आप्स्ववभृथयागं कृतवान् । 'अथ' तथा कृत्वा, तत ऊर्ध्वम् 'एनम्' आहवनीय मग्निं "शुनश्चित्"-इत्यादिना 'उपस्थापयाञ्चकार' हरिश्चन्द्र मुपस्थाने प्रेरयामास। सोऽयं मञ्जसवः ; इष्टिपशुसाङ्गत्यं मन्तरेण 'अञ्जसा' ऋजुमार्गेणानुष्ठितत्वात् ॥

विश्वामित्राजीगर्त्तयोः कञ्चित् संवादं दर्शयति— " अथ ह शुनःशेपो विश्वामित्रस्याङ्क माससाद ; स होवाचाजीगर्त्तः सौयवसिर्ऋषे पुनर्मे पुत्रं देहीति; नेति होवाच विश्वामित्रो, देवा वा इमं मह्य मरासतेति , स ह देवरातो वैश्वामित्र आस , तस्यैते कापिलेय-बाभ्रवाः"—इति । 'अथ' अभिषेचनीयसमाप्तेरनन्तरं हरिश्चन्द्रसहितेष्वृत्विक्षु विस्मितेषु, स शुनःशेपः इत ऊर्द्ध्वं कस्य पुत्रोऽस्त्विति विचारे सति तदीयेच्छैव नियामिकेति महर्षीणां वचनं श्रुत्वा शुनःशेपः स्वेच्छया विश्वामित्रपुत्रत्व मङ्गीकृत्य सहसा तदीय मङ्क माससाद ; पुत्रो हि सर्वत्र पितुरङ्के निषीदति । तदानीं सूयवसपुत्रो ऽजीगर्त्तो विश्वामित्रं प्रत्येव मुवाच । हे महर्षे ! मदीयं पुत्र मेनं पुनरपि मह्यं देहीति । स विश्वामित्रो

नेति निराकृत्यैव सुवाच। प्रजापत्यादयो 'देवाः' एवं 'इमं' शुनःशेपं मह्यम् 'अरासत' दत्तवन्तः; तस्मात् तुभ्यं न दास्यामीति। 'सः' च शुनःशेपो देवैर्दत्तत्वात् 'देवरातः'–इति–नामधारी विश्वामित्रपुत्र एवास। 'तस्य' च देवरातस्य 'एते' कपिलगोत्रोत्पन्नाः बभ्रुगोत्रोत्पन्नाश्च बन्धवो ऽभवन् ॥

अथ शुनःशेपाजीगर्त्तयोः संवादं दर्शयति— "स होवाचाजीगर्त्तः सौयवसिस्त्वं वेहि विह्वयावहा इति; स होवाचाजीगर्त्तः सौयवसिराङ्गिरसो जन्मनास्याजीगर्त्तिः श्रुतः कविः, ऋषे पैतामहात् तन्तोर्मा ऽपगाः पुनरेहि मा मिति; स होवाच शुनःशेपो ऽदर्शुस्त्वा शासहस्तं न यच्छूद्रेष्वलप्सत, गवां त्रीणि शतानि त्व मवृणीथा मदङ्गिर इति"–इति। विश्वामित्रेण निराकृतः सो ऽजीगर्त्तः शुनःशेपं प्रत्येव सुवाच। हे पुत्र! 'त्वं वा' त्व मेव विश्वामित्रादपगतः सन् 'इहि' अस्मद्गृहे गच्छ। त्वदीयमाता चाहञ्चोभावावां 'विह्वयावहै' विशेषेण तवाह्वानं करवावहै;— इत्युक्त्वा तूष्णी मवस्थिते तं शुनःशेपं प्रति पुनरपि कया चिन्नायैव सुवाच,— हे शुनःशेप! 'त्वं' जन्मना 'आङ्गिरसः' अङ्गिरोगोत्रोत्पन्नः, अजीगर्त्तस्य पुत्रः, 'कविः' विद्वान्, 'श्रुतः' इत्येवं सर्वत्र प्रसिद्धः; अतो हे 'ऋषे' शुनःशेप! 'पैतामहात्' पितामहेन प्रजापतिना सम्पादितात् 'तन्तोः' सन्तानात् अङ्गिरोवंशात् 'मा अपगाः' अपगतो मा भव; तस्मात् पुनरपि 'मा मेहि' मद्गृहे समागच्छ। इत्युक्तः शुनःशेपः स्वय मपि गाथया प्रत्युत्तरं ददौ। गाथो विस्मयनहेतुः पद्यः; हे अजीगर्त्त! मद्वधाय 'शासहस्तं' त्वां मर्योऽपि 'अदर्शुः' दृष्टवन्तः। 'यत्' मूर' कर्म शूद्रेषु अत्यन्तनीचेष्वपि 'नालप्सत' न सम्प्रयन्तो लौकिका जनाः, तादृशं क्रौर्यं

त्वया कृतम् । हे 'अङ्गिर.' आङ्गिरसगोत्रोत्पन्न ! अजीगर्त्त ! 'मत्' मां निमित्तीकृत्य त्वं गवां शतानि त्रीणि 'अदथीयाः' हृतवानसि, तदिदं मत्यन्तकष्टम् 'इति' उक्तवान् ॥

पुनरप्यजीगर्त्तशुनःशेपयोरुक्तिप्रत्युक्ती दर्शयति— "स होवाचाजीगर्त्तः सौयवसिस्तद्वै मा तात तपति, पाप कर्म मया कृतं; तदहं निह्नवे तुभ्यं प्रतियन्तु शता गवा मिति ; स होवाच शुनःशेपो यः सकृत्पापकं कुर्यात्, कुर्यादेनत्ततो ऽपरं ; नापागाः शौद्रान्न्यायादसन्धेयं त्वया कृत मिति"–इति । शुनःशेपेनोपालब्धो ऽजीगर्त्तः स्वकीय मनुतापं दर्शयितुं काञ्चिद्गाथा मेव मुवाच,— हे 'तात' पितृवदुपलालनीय शुनःशेप ! मया यत्पापं कृतं, 'तद्' 'मा तपति' तदेव मां मनसि सन्तप्तं करोति ; अहं 'तत्' पापं 'निह्नवे' परिहरामि ; 'गवां शतानि' पूर्वं मया स्वीकृतानि त्रीणि यानि, तानि 'तुभ्यं' त्वदर्थं 'प्रतियन्तु' प्रत्येक मेव प्राप्नुवन्तु ; इतरयोः पुत्रयोर्गावो मा भूवन्, तवैव सर्वाः सन्त्विति । ततः 'सः' शुनःशेपो गाथया प्रत्युत्तरं ददौ । 'यः' पुमान् धर्मशास्त्रभीतिरहितः सकृत्पापकं कुर्यात्, स पुमान् ततः पापादन्यत् 'एनत्' पापं तदभ्यासवशात् कुर्यादेव ; त्वं तु 'शौद्रात् न्यायात्' नीचजातिसम्बन्धिनः क्रूराचारणात् 'नापागाः' अपगतो न भवसि ; 'असन्धेयं' प्रतिसमाधानरहितं पापं त्वया कृतम् 'इति' एषा शुनःशेपस्य प्रत्युक्तिः ॥

अथ विश्वामित्रस्य कृत्यं दर्शयति— "असन्धेय मिति ह विश्वामित्र उपपपाद ; स होवाच विश्वामित्रो भीम एव सौयवसिः शासेन विशिशासिषुः अस्थात्, मैतस्य पुत्रो भूर्ममैवोपेहि पुत्रता मिति"–इति । 'असन्धेयम्' अप्रतिसमाधेयं पाप मिति

शुनःशेपेन यदीरितम्, तदेतदप्रतिसमाधेयत्वं विश्वामित्रः 'उप-पपाद' युक्तिभिरुपपादितवान्। तदुपपादनार्थमेव विश्वामित्र इमां गाथा मुवाच। सूयवसस्य पुत्रो ऽजीगर्त्तः 'शौम एव' भय-हेतुरेव सन् 'शासेन' हस्तगतखड्गेन सः 'विचिगासिषुरस्थात्' विश-सनं कर्त्तुं मिच्छुरवस्थितवान्। अतो हे शुनःशेप! 'एतस्य' पापिष्ठस्य पुत्रो मा भूः, किन्तु ममैव पुत्रता मुपेहि॥

अथ शुनःशेपविश्वामित्रयोरुक्तिप्रत्युक्ती दर्शयति— "स होवाच शुनःशेपः, स वै यथा नो ज्ञपया राजपुत्र तथा वद, यथैवाङ्गि-रसः सन्नुपेयां तव पुत्रता मिति; स होवाच विश्वामित्रो ज्येष्ठो मे त्वं पुत्राणां स्याः, तव श्रेष्ठा प्रजा स्यात्, उपेया दैवं मे दायं, तेन वै त्वोपमन्त्रय इति"–इति। विश्वामित्रेणैवम्बोधितः शुनःशेपः पुनरपि गाथया विश्वामित्रं प्रत्येव मुवाच। अयं विश्वा-मित्रो जन्मना क्षत्रियः सन् स्वकीयेन तपोमहिम्ना ब्राह्मण्यं प्राप्तवानित्येव तद्वृत्तान्तं सूचयितुं हे राजपुत्रेति सम्बोधित-वान्। 'स वै' तथाविधो राजजातीय एव सन् 'यथा' येन प्रकारेण 'नः' अस्माभिः सर्वैः 'आ' समन्तात् 'ज्ञपय' ब्राह्मणत्वेन ज्ञायसे, तथैवास्मद्विषये अपि त्वं वद। कथं वदितव्य मिति तदुच्यते— अह मिदानी मङ्गिरोगोत्रः सन्, तत्परित्यागेन तव पुत्रत्वं येनैव प्रकारेणोपेयाम्, तथैवानुज्ञापयेति शेषः। एतद्वा-क्याभिप्रायः पूर्वैः सङ्क्षिप्य दर्शितः—

"पुराऽसाने नृपं विप्रं तपसा कृतवानसि।
पय माङ्गिरसं मा त्वं वैश्वामित्र मपे कुरु"–इति।

ततो विश्वामित्रो गाथया प्रत्युत्तर मुक्तवान्। हे शुनःशेप! त्वं मे पुत्राणां मध्ये 'ज्येष्ठः स्याः' ज्येष्ठो भव, तव पुत्रादिरूपा

'प्रजा' अपीतरस्याः श्रेष्ठा स्यात् । 'मे' मह्यं विश्वामित्राय 'दैवं' देवैः प्रसवैर्दत्तं 'दायं' पुत्रत्वरूपलाभम् 'उपेयाः' प्राप्नुहि; 'तेन वै' तेनैव कारणेन 'त्वोपमन्त्रये' त्वां पुत्रत्वेन व्यवहरामि ॥

पुनरपि शुनःशेपविश्वामित्रयोर्वृत्तान्तं दर्शयति— "स होवाच शुनःशेपः, सञ्ज्ञानानेषु वै ब्रूयात्, सौहार्दाय मे श्रियै, यथा ऽहं भरत ऋषभोपेयां तव पुत्रता मिति* अथ ह विश्वामित्रः पुत्राना-मन्त्रयामास,— मधुच्छन्दाः शृणोतन, ऋषभो रेणुरष्टकः, ये के च भ्रातरः स्थ, नास्मै ज्यैष्ठ्याय कल्पध्व मिति"—इति । विश्वा-मित्रेण प्रलोभितः शुनःशेपः स्वकार्यदार्ढ्याय गाथयैव मुवाच । 'सञ्ज्ञानानेषु' मद्विषयैकमत्यं प्राप्तेषु त्वदीयपुत्रेषु 'वै' अपि मां ब्रूयात्, ज्येष्ठभ्रातृत्वेन व्यवहरतु; तच्च 'मे' मम 'सौहार्दाय' भ्रातृभिरितरैः स्नेहातिशयाय 'श्रियै' धनलाभाय च सम्पद्यते। हे 'भरतर्षभ' भरतवंशश्रेष्ठ विश्वामित्र! अहं तव पुत्रतां यथो-पेयां, तथैवैतेषां पुत्राणां मये अनुग्रहणीयेति शेषः । ततो विश्वा-मित्र इतरान् पुत्रानाहूय गाथयैव मात्रापितवान्,— यो मधु-च्छन्दो नाम ऽ, यऋषभः, योऽपि रेणुः, योऽप्यष्टकः, एते मुख्याः † हे पुत्रका! 'शृणोतन' मदीयां मात्रां शृणुत; ये केचिद् यूयं

* "अथापि भौक्त ऋष्यादि प्रथमं मण्डलं प्रति ।
अर्धर्चिनस्तु विज्ञेया ऋषयः शतर्चिनः ॥
तेषां पूर्वो मधुच्छन्दा, मेधातिथिरनन्तरः ।
शुनःशेपस्तृतीयोऽयं, हिरण्यस्तूप उत्तरः ॥"—इत्यादि आर्षानु० १, २, २ ।

† ऋक्संहिता-सूक्तेषु केषाञ्चिद् द्रष्टारो ऽष्टौ वैश्वामित्राः प्रायशो आर्षानुक्रमण्यादितः। तत्र मधुच्छन्दसः १, १-१०; ९, १। ऋषभस्य ३, १३; १४; ९, ७१। रेणोः ९.७०, १०, ८९। अष्टकस्य १०, १०४। प्रजापतेः ३, ३८, ५४-५६। पूरणस्य १०. १६०। कतस्य ३, १७, १८। देवरातस्य (शुनःशेपस्य) १, २४-३०।

सर्वे भ्रातरः स्थ, ते सर्वेऽपि 'अस्मै' शुनःशेपादस्मादपि 'ज्यैष्ठाय न कल्पध्वं' ज्येष्ठत्वाभिमानं मा कुरुत, किं त्वसावेव युष्माकं मध्ये ज्येष्ठो भूत्वावतिष्ठता मिति ॥ ५ ( १७ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां तृतीयाध्याये
( त्रयस्त्रिंशाध्याये ) पञ्चमः खण्डः ॥ ५ ( १७ ) ॥

---

॥ अथ षष्ठः खण्डः ॥

तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत् कनीयांसस्तद्ये ज्यायांसो न ते कुशलं मेनिरे ताननु व्याजहारान्तान्वः प्रजा भक्षीष्टेति त एतेऽन्ध्राः पुण्ड्राः शबराः * पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठाः स होवाच मधुच्छन्दाः पञ्चशता सार्धं यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयं पुर-

* 'शवरा' ग।

स्त्वा सर्वे कुर्महे त्वा मन्वञ्चो वयं स्मसीत्यथ ह विश्वामित्रः प्रतीतः पुत्रांस्तुष्टाव ते वै पुत्राः पशुमन्तो 'वीरवन्तो भविष्यथ 'ये मानं मे ऽनुगृह्णन्तो 'वीरवन्तमकर्त मा पुर एत्रा वीरवन्तो देवरातेन गाथिनाः सर्वे राध्या * स्थ पुत्रा 'एष वः सद्विवाचनम् 'एष वः कुशिका वीरो देवरातस्तमन्वित युष्मांश्च दायं म उपेता 'विद्यां या मु च विद्मसि 'ते सम्यञ्चो वैश्वामित्राः सर्वे साकं सरातयः देवरातायतस्थिरे 'धृत्यै श्रैष्ठ्याय गाथिनाः 'अधीयत देवरातो' रिक्थयोरुभयोरृषिः जह्नूनामाधिपत्ये' दैवे वेदे च गाथिनां 'तदेतत्परऋक् शतगाथं† शौनःशेप माख्यानं 'तद्धोता राज्ञेऽभिषिक्तायाचष्टे 'हिरण्यकशिपावासीन आचष्टे 'हिरण्यकशिपावासीनः प्रतिगृणाति 'यशो वै हिरण्यं यशसैवैनं तत् समर्धयत्यो मित्यृचः प्रतिगर एवं तथेति गाथाया ओ मिति वै दैवं 'तथेति मानुषं 'दैवेन चैवैनं तन् मानुषेण च पापादेनसः प्रमुञ्चति तस्माद्यो राजा विजिती स्यादप्ययजमान आख्यापयेतैवैतच्छौनःशेप माख्यानं 'न हास्मिन्नल्पं च 'नैनः परिशिष्यते 'सहस्र माख्यात्रे दद्याच्छतं प्रतिगरित्र एते चैवासने 'श्वेतश्चाश्वतरीरथो होतुः पुत्रकामा हा‡प्याख्यापयेरन्

* "राध्या" क, ङ। † "शतगाथ" ख, घ। ‡ "ष्या" ग।

लभन्ते * ह पुत्रान् लभन्ते† ह पुत्रान् ॥ ६ (१८) ॥
इत्यैतरेयब्राह्मणे सप्तमपञ्चिकायां तृतीयोऽध्यायः॥३॥

अथ विश्वामित्रपुत्राणां वृत्तान्त माह— "तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः, पञ्चाशदेव ज्यायांसो मधुच्छन्दसः, पञ्चाशत् कनीयांसः"—इति। मधुच्छन्दोनामकः कश्चित् पुत्रो मध्यमः; ततोऽपि ज्येष्ठाः कनिष्ठाश्च प्रत्येकं पञ्चाशत्सङ्ख्याका इत्येवम् 'एकशतं' तस्य पुत्राः ॥

तेषां मध्ये ज्येष्ठानां वृत्तान्त माह— "तद्ये ज्यायांसो न ते कुशलं मेनिरे; ताननु व्याजहारान्तान्वः प्रजा भक्षीष्टेति; त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठाः"—इति। 'तत्' तेषु एकशतसङ्ख्याकेषु पुत्रेषु मध्ये 'ये' मधुच्छन्दसो ज्येष्ठाः पञ्चाशत्सङ्ख्याकाः सन्ति, 'ते' शुनःशेपस्य विश्वामित्रपुत्रत्वं 'कुशलं' न मेनिरे' इदं समीचीन मित्येवं नाङ्गीकृतवन्तः। 'तान्' ज्येष्ठान् पञ्चाशत्सङ्ख्याकान् 'अनु'-लक्ष्य विश्वामित्रो 'व्याजहार' व्याहरणं शापरूपं वाक्य मुक्तवान्। हे ज्येष्ठपुत्राः! युष्माकं मदीयाज्ञातिलङ्घिनां 'प्रजाः' पुत्रादिकाः 'अन्तान् भक्षीष्ट' चण्डालादिरूपान् नीचजातिविशेषान् भजता मिति। 'त एते' शप्ताः सन्तोऽन्ध्रादिपञ्चविधनीचजातिविशेषा भवन्ति। 'इति'-शब्दस्य तत्पदर्थंगत्वादन्येऽपि नीचजातिविशेषाः सर्वे विवक्षिताः। उद्गतोऽन्तः 'उदन्तः' अत्यन्तनीचजातिः, तत्र भवाः 'उदन्त्याः'। ते 'बहवः' अनेकविधाः वैश्वामित्रसन्ततिजाः

* "॰रखमन्ते" क, ख, घ, च, "-रन्तभन्ते" ङ।
† "पुत्रं भमन्ते" घ, "पुत्रान्नभन्ते" ङ, "पुत्राव्रभन्ते" च।

'दस्यूनां' तस्कराणां मध्ये 'भूयिष्ठाः' अत्यधिकाः ॥ ज्येष्ठानां वृत्तान्तं मुक्त्वा मधुच्छन्दसः तत्कनिष्ठानाञ्च वृत्तान्तं गाथया दर्शयति— "स होवाच मधुच्छन्दाः पञ्चाशता सार्द्धं, यन्नः पिता सञ्जानीते तस्मिंस्तिष्ठामहे वयं, पुरस्त्वा सर्वे कुर्महे, त्वा मन्वञ्चो वयं स्मसीति"-इति । कनिष्ठपुत्राणां पञ्चाशता सह मधुच्छन्दो-नामकः 'सः' मध्यमः पुत्रः, शुनःशेपं प्रत्येव मुवाच— हे शुनः-शेप ! 'नः' अस्माकं 'पिता' विश्वामित्रो 'यत्' कार्यं त्वदीयज्येष्ठ-पुत्रत्वरूपं 'सञ्जानीते' सम्यक् जानाति, अङ्गीकरोति ; 'तस्मिन्' कार्ये वयं 'तिष्ठामहे' तत् कार्यं मङ्गीकुर्मः । 'सर्वे' वयं 'त्वा' शुनःशेपनामानं त्वां 'पुरस्कुर्महे' पुरस्कृत्य ज्येष्ठं कृत्वा वर्त्तामहे । 'त्वा मन्वञ्चः' शुनःशेप मनु गच्छन्तः 'स्मसि' भवाम इत्युक्तवान् ॥

विश्वामित्रवृत्तान्तं दर्शयति— "अथ ह विश्वामित्रः प्रतीतः पुत्रांस्तुष्टाव"-इति । 'अथ' मधुच्छन्दस्सहितानां पञ्चाशत्-कनिष्ठपुत्राणां शुनःशेपविषयज्येष्ठपुत्रत्वाङ्गीकारानन्तरं स विश्वा-मित्रः 'प्रतीतः' तेषु प्रत्ययं मदनुकूला इति विश्वासं प्राप्तः प्रीत्या पुत्रान् गाथाभिस्तुष्टाव ॥

तत्र प्रथमां गाथा माह— "ते वै पुत्राः पशुमन्तो वीरवन्तो भविष्यथ, ये मानं मेऽनुगृह्णन्तो वीरवन्त मकर्त्त मा"-इति । हे मधुच्छन्दःप्रमुखाः कनिष्ठपुत्राः! 'ये' यूयं 'मे मानं' मदीयं मतम् 'अनुगृह्णन्तः' आनुकूल्येन स्वीकुर्वन्तो 'मां' विश्वामित्रं 'वीरवन्तं'-स्वधर्मशूरपुत्रयुक्तम् 'अकर्त्त' कृतवन्तः, 'ते वै' तादृशा यूयं बहु-विधपशुपुत्रयुक्ताश्च भविष्यथ ॥

द्वितीयां गाथा माह— "पुर एत्रा वीरवन्तो देवरातेन गाथिनाः, सर्वे राध्याः स्थ पुत्रा एष वः सद्विवाचनम्"-इति ।

गाथिनशब्दो विश्वामित्रस्य पितरं माचष्टे। हे 'गाथिनाः' गाथिनपौत्राः * 'पुर एता' युष्माकं पुरतो एता, मुख्येन देवरातेन सह यूयं सर्वे 'वीरवन्तः' श्रेष्ठपुत्रयुक्ताः 'राध्याः स्थ' सर्वैः पुरुषैराराधनीयाः पूज्या भवथ; हे 'पुत्राः' मधुच्छन्दःप्रभृतयः! 'एषः' देवरातो 'वः' युष्माकं 'सहिवाचनम्' सन्मार्गस्य विशेषतो ऽध्यापकं, करिष्यतीति शेषः ॥

तृतीयां गाथा माह— "एष वः कुशिका वीरो देवरातस्त मन्वित, युष्मांश्च दायं म उपेता विद्यां या सु च विद्मसि"–इति। हे 'कुशिकाः' कुशिकनाम्नो मत्पितामहस्य सम्बन्धिनो मधुच्छन्दःप्रभृतयः! 'एषः' देवरातः 'वः' युष्माकं, ज्येष्ठभ्रातेति शेषः। 'तं' देवरातं यूयम् 'अन्वित' अनुगता भव। मे 'मदीयं' 'दायं' धनं युष्मांश्च 'उपेता' प्राप्स्यति; चकाराद् देवरातश्च। 'या सु च' या मपि काश्चिद् वेदशास्त्रादिरूपां 'विद्यां' 'विद्मसि' वयं जानीमः, सापि युष्मान् 'उपेता' प्राप्स्यति ॥

चतुर्थीं गाथा माह— "ते सम्यञ्चो वैश्वामित्राः सर्वे साकं सरातयः, देवराताय तस्थिरे धृत्यै श्रैष्ठ्याय गाथिनाः"–इति। हे 'वैश्वामित्राः' विश्वामित्रस्य मम पुत्राः! ये 'गाथिनाः' गाथिनगोत्राः, 'ते' यूयं सर्वेऽपि 'सम्यञ्चः' समीचीनबुद्धयः, ये 'साकं' देवरातेन सार्धं 'सरातयः' रातिर्धनसम्पत्तिस्तया युक्ताः सन्तो 'देवराताय' मदीयश्रेष्ठपुत्रस्य देवरातस्य 'धृत्यै' धारणं युष्मत्पोषणम्, 'श्रैष्ठ्याय' युष्माकं मध्ये श्रेष्ठत्वञ्च 'तस्थिरे' अङ्गीकृतवन्तः ॥

पञ्चमीं गाथा माह— "अधीयत देवरातो रिक्थयोरुभयोऋषिः, जह्नूनाञ्चाधिपत्ये दैवे वेदे च गाथिनाम्"–इति। "इक्

* "रेवूनां वैश्वामित्रगाथिनरैवतेति"–इति आश्व० श्रौ० १२ १४.६।

स्मरणे''-इति धातुः । 'अधीयत' स्मृतिकारैर्महर्षिभिः स्मर्यते । कथ मिति तदुच्यते— अयं देवरातो द्व्यामुष्यायणत्वाद् 'उभयोः' अजीगर्त्तविश्वामित्रयोः सम्बन्धिनी ये 'रिक्थे' धने, तयोः 'ऋषिः' द्रष्टा, तदुभय मर्हतीत्यर्थः । अजीगर्त्तस्य कूटस्थ ऋषिर्जह्नुसञ्ज्ञकः ; तस्य वंशे जाताः सर्वे जह्नवः ; तेषां च 'आधिपत्ये' स्वामित्वे देवरातो योग्यः । तथा 'दैवे' देवसम्बन्धिनि यागादिकर्मणि, 'वेदे' च मन्त्ररूपे समर्थः । 'गाथिनाम्' अस्मत्पितृवंशोत्पन्नानाञ्च सर्वेषा माधिपत्ये योग्यः ॥

उक्त मुपाख्यान मुपसंहरति— "तदेतत्परऋक्शतगाथं शौनःशेप माख्यानम्"-इति । "कस्य नूनं ०—० नि धारय"-इत्यन्ताः सप्ताधिकनवतिसङ्ख्याका ऋचः *, "त्वं नः"-"स त्वम्"-इत्यादिकास्तिस्र ऋचः †, एव मृचां शतम् ; 'परः'शब्दोऽधिकवाची ; पूर्वोक्तादृक्शतात् 'पराः' अधिका एकविंशतिसङ्ख्याकाः "यच्चिद्धि"-इत्याद्या गाथाः ‡ यस्मिन्नाख्याने तदेतत् 'परऋक्शतगाथं' । शुनःशेपेन दृष्टाः सप्ताधिकनवतिसङ्ख्यायुक्ता ऋचो याः सन्ति, अन्येन दृष्टास्तिस्र ऋचो याः सन्ति, ब्राह्मणे प्रोक्ता एकविंश-

---

* ऋक्संहितायां सप्त शौनःशेपेन दृष्टानि सप्त सूक्तान्याम्नातानि । तत्र प्रथमसप्तकस्य षडनुवाकात्मकानि सप्त, प्रथममण्डलीयचतुर्थैकम् । इह प्रथममण्डलीयानां ग्रहण मिष्टम्, तेषां सैकानि प्रतीकधृतान्यादित्य समुल्लेखात् । तदुक्तं कस्य नून मिति प्रथमसूक्ताद्भाग मि धारयेति तु सप्तमसूक्तान्तभाग इति बोध्यम् । तदेवं १सू० १५ऋ०, २सू० २१ऋ०, ३सू० १०ऋ, ४सू० १३ऋ०, ५सू० ९ऋ०, ६सू० ७ऋ०, ७सू० २२ऋ० । संकलनया ९७ ऋचो भवन्ति ।

† तत्र त्वं न इत्यस्या ( ऋ० सं० ४ १. ४. ) स त्व मिति तदुत्तरस्याश्च वामदेवऋषि दृतीयस्याः शुनःशेप मित्यस्याः ( ५. २ ७ ) कुमारो द्वयो वृशो वा ऋषी ।

‡ यच्चिद्धि पुत्र मिच्छन्तीति ८८पृ० ७पं० द्रष्टव्यम् ।

ह्रायाविशेषा याः सन्ति, तैः सर्वैरुपेतं "हरिश्चन्द्रो ह वैधसः"–इत्यादिकं (५८पृ० ५पं०) सर्वं शुनःशेपविषय माख्यानम् ॥

तस्याख्यानस्य राजसूयक्रतौ विनियोगं दर्शयति— "तद्धोता राज्ञेऽभिषिक्तायाचष्टे"–इति। राजसूयक्रतावभिषेचनीयाख्ये कर्मणि यदा राजा अभिषिक्तो भवति, तदानीं तस्मै 'राज्ञे' 'तत्' आख्यानं होता कथयेत् * ॥

तत्रेतिकर्त्तव्यं दर्शयति— "हिरण्यकशिपावासीन आचष्टे; हिरण्यकशिपावासीनः प्रतिगृणाति; यशो वै हिरण्यं, यशसैवैनं तत् समर्द्धयति"–इति †। होता यदा उपाख्यानं कथयति, तदानीं 'हिरण्यकशिपौ' सुवर्णनिर्मितसूत्रैर्निष्पादिते कशिपौ स होतोपविशेत्। तदाख्यानमध्ये अध्वर्युश्च हिरण्यकशिपावासीनो वक्ष्यमाणं 'प्रतिगरं' ब्रूयात्। हिरण्यस्य यशोहेतुत्वात् यशस्त्वम्; तथा सति 'एनं' यशसैव समृद्धं करोति ॥

अध्वर्युणा प्रयोक्तव्यं प्रतिगरविशेषं दर्शयति— "ओ मित्यृचः प्रतिगर, एवं तथेति गाथाया; ओ मिति वै दैवं, तथेति मानुषं; दैवेन चैवैनं तन् मानुषेण च पापादेनसः प्रमुञ्चति"–इति ‡। होत्रा प्रयुक्ताया एकैकस्या ऋचोऽन्ते "अध्वर्योऽरोम्"–इत्येतादृशः प्रतिगरो भवति। ओ मित्येतच्छन्दोरूपं 'दैवं' देवैरङ्गीकारार्थं प्रयुज्यते; तत् तथेत्यन्तं 'मानुषं' मनुष्या अङ्गीकारे तथेति शब्दं

---

* "अथ राजसूया."–इति प्रक्रम्य श्रौत आश्वलायनेन— "अभिषिक्ते मरुत्वतीये दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनो ऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे शौन शेप माचक्षीत"–इति श्रौ० ९. ३ ९।

† एष एव पाठ. समुद्धृत आश्वलायनेन। श्रौ० ९. ३ १०।

‡ तद्वदेव पाठ आश्व० श्रौ० ९ ३ ११, १२।

प्रमुच्यते । 'तत्' तेन प्रतिगरखेन दैवेन मानुषेण चाध्वर्युः 'एनं' राजानं 'पापात्' ऐहिकादपकीर्त्तिरूपात्, 'एनसः' नरकहेतोश्च 'प्रमुञ्चति' प्रमुक्तं करोति ॥

क्रत्वर्थत्वेनोपाख्यानं विधाय क्रतुनिरपेक्षपुरुषार्थत्वेन विधत्ते—"तस्माद्यो राजा विजिती स्यादप्ययजमान आख्यापयेतैवैतच्छौनःशेपमाख्यानं ; न हास्मिन्नल्पञ्चनैनः परिशिष्यते"—इति *। यस्मादुपाख्यानं पापप्रशमनहेतुः, 'तस्माद्' 'अयजमानः अपि' राजसूयक्रतुरहितोऽपि राजा 'विजिती' यदि विजयोपेतः स्यात्, तदानीमेतच्छौनःशेपमाख्यानम् 'आख्यापयेत्' तस्य राज्ञो यः कश्चिद् ब्राह्मण उपाख्यानं ब्रूयात् । तथा सति 'तस्मिन्' राजनि 'अल्पञ्चन' किञ्चिदपि 'एनः' पापं 'न ह वै परिशिष्यते' सर्वं पापं नश्यतीत्यर्थः ॥

आख्यानप्रयुक्तां दक्षिणां विधत्ते—"सहस्रमाख्यात्रे दद्याच्छतं प्रतिगरित्र, एते चैवासने श्वेतश्चाश्वतरीरथो होतुः"—इति †। योऽयमाख्याता होता, तस्मै क्रत्वर्थदक्षिणामन्तरेण उपाख्यानप्रयुक्तां दक्षिणां गोसहस्ररूपां दद्यात् । 'प्रतिगरित्रे' अध्वर्यवे गोशतं दद्यात् । ये हिरण्यकशिपुरूपे द्वे 'आसने' स्तः, एते अपि ताभ्यामेव दद्यात् । अश्वतरीभ्यां सङ्कीर्णजातियुक्ताभ्यां अधिकशक्तिभ्यां युक्तो रथः 'अश्वतरीरथः', स च रजतेनालङ्कृतत्वात् श्वेतः, सोऽपि तादृशो होतुर्देयः ॥

पूर्वं सयज्ञसंयुक्तः कल्पो विजयिनो राज्ञो अभिहितः, इदानीं पुत्रकामानामपि सर्वेषां विधत्ते—"पुत्रकामा हा-

---

* पाठ एष यथोद्धृत आश्व० श्रौ० ९. ३. १९।

† "सहस्रमाख्यात्रे दद्याच्छतं प्रतिगरित्रे हिरण्यासने"—इति आश्व० श्रौ० ९,३,१८-१९।

ख्यापयेरन्; लभन्ते ह पुत्रान्, लभन्ते ह पुत्रान्''–इति। ये पुत्रकामाः सन्ति, ते 'ह' प्रसिद्ध मेतदुपाख्यानम् 'आख्यापयेरन्' ब्राह्मणमुखाच्छृणुयुरित्यर्थः। ते पुत्रान् लभन्ते। अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ६ (१८) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां तृतीयाध्याये
(त्रयस्त्रिंशाध्याये) षष्ठः खण्डः ॥ ६ (१८) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'–नामभाष्ये
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायाः तृतीयोऽध्यायः ॥

---

## ॥ अथ चतुर्थाध्यायः ॥

( तत्र )

### ॥ अथ प्रथमः खण्डः ॥

—○•○—

॥ ॐ ॥ प्रजापतिर्यज्ञमसृजत यज्ञं सृष्टमनु ब्रह्म-
क्षत्रे असृज्येतां ब्रह्मक्षत्रे अनु द्वय्यः प्रजा असृज्यन्त
हुतादश्चाहुतादश्च ब्रह्मैवानु हुतादः क्षत्रमन्वहुताद
एता वै प्रजा हुतादो यद् ब्राह्मणा अथैता अहु-
तादो यद्राजन्यो वैश्यः शूद्रस्ताभ्यो यज्ञ उदक्रामत्तं
ब्रह्मक्षत्रे अन्वैतां यान्येव ब्रह्मण आयुधानि तैर्ब्र-
ह्मान्वैद् यानि क्षत्रस्य तैः क्षत्रमेतानि वै ब्रह्मण
आयुधानि यद्यज्ञायुधान्यथैतानि क्षत्रस्यायुधानि यद-
श्वरथः कवच इषुधन्व तं क्षत्रमनन्वाप्यन्यवर्तता-
युधेभ्यो ह स्मास्य विजमानः पराङेवैत्यथैनं ब्रह्मा-
न्वैत् तमाप्नोत् तमाप्त्वा परस्तान्निरुध्यातिष्ठत् स आप्तः
परस्तान्निरुद्धस्तिष्ठञ्ज्ञात्वा स्वान्यायुधानि ब्रह्मोपाव-
र्तत तस्माद्धाप्येतर्हि यज्ञो ब्रह्मण्येव ब्राह्मणेषु प्रति-
ष्ठितोऽथैनत् क्षत्रमन्वागच्छत्तदब्रवीदुप माऽस्मिन्
यज्ञे ह्वयस्वेति तत् तथेत्यब्रवीत् तद्वै निधाय स्वान्या-
युधानि ब्रह्मण एवायुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा

यज्ञ मुपावर्त्तस्वेति तथेति तत्क्षत्रं निधाय स्वान्यायुधानि ब्रह्मण एवायुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञ मुपावर्त्तत तस्माद्धाप्येतर्हि क्षत्रियो यजमानो निधायैव स्वान्यायुधानि ब्रह्मण एवायुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञ मुपावर्त्तते ॥ १ ( १९ ) ॥

॥ श्रीगणेशाय नमः ॥

शौनःशेपप्रसङ्गेन याः क्रिया राजकर्त्तृकाः ।
तद्विशेषविधानार्थ मध्यायोऽत्र प्रवक्ष्यते ॥ १ ॥

अत्रादौ किञ्चिदुपाख्यान माह— "प्रजापतिर्यज्ञ मसृजत ; यज्ञं सृष्ट मनु ब्रह्मक्षत्रे असृज्येतां ; ब्रह्मक्षत्रे अनु द्वय्यः प्रजा असृज्यन्त, हुतादश्चाहुतादश्च ; ब्रह्मैवानु हुताद ; एता वै प्रजा हुतादो यद् ब्राह्मणा, अथैता अहुतादो यद्राजन्यो वैश्यः शूद्रः"–इति । पुरा प्रजापतिर्ज्योतिष्टोमाख्यं यज्ञं सृष्ट्वा तदनन्तरं ब्राह्मणक्षत्रियजातिद्वयम् ; तत ऊर्द्ध्वं हुतादश्चाहुतादश्चेत्युभयविधाः प्रजा असृज्यन्त । तत्र ब्राह्मणजाति मेवानु तद्वाक्तिभूता हुतादः सृष्टाः, क्षत्रियजाति मनु तद्वाक्तिसजातीया अहुतादः प्रजाः सृष्टाः । ये ब्राह्मणाः सन्ति, 'एताः' प्रजा आर्त्विज्यसद्भावाद्धुतशेष मदन्ति भक्षयन्तीति 'हुतादः', ये राजन्य–वैश्य–शूद्राः 'एताः' प्रजाः आर्त्विज्याभावात् हुतशेषं न भक्षयन्तीति 'अहुतादः' । इत्थं यज्ञं चतुरो वर्णान् च प्रजापतिः सृष्टवान् ॥

अथ सृष्टस्य यज्ञस्य वृत्तान्त माह—"तास्यो यज्ञ उदक्रामत्, तं ब्रह्मक्षत्रे अन्वैतां ; यान्येव ब्रह्मण आयुधानि तैर्ब्रह्मान्वैद्, यानि क्षत्रस्य तैः क्षत्रम् ; एतानि वै ब्रह्मण आयुधानि यद्यज्ञा-

युधान्येतानि सर्वस्यायुधानि यदश्वरथः कवच इषुधन्व"–इति । स यज्ञः 'ताभ्यः' प्रजाभ्यो ऽपरक्त उत्क्रम्य दूरे ऽगच्छत् । तं 'गच्छन्तं' यज्ञं ब्राह्मणजाति–क्षत्रियजाती द्वे 'अन्वैतां' पश्चाद् गच्छताम् । ब्राह्मणस्य योग्यानि यान्यायुधानि, तैः सह ब्राह्मणजातिर्यज्ञ मन्वगच्छत् ; क्षत्रियस्य योग्यानि यान्यायुधानि, तैः सह क्षत्रियजातिर्यज्ञ मन्वगच्छत् । यानि यज्ञायुधत्वेन शाखान्तरे श्रूयन्ते "स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पञ्च कृष्णाजिनञ्च शम्या चोलूखलञ्च मुसलञ्च दृषच्चोपला चैतानि वै दश यज्ञायुधानि"–इति ( तै० सं० १,६.८.२,३. ), तान्येव ब्राह्मणजातेरुचितान्यायुधानि । योऽयं मश्वयुक्तो रथो यश्च कवचः यदपि बाणयुतं धनुः, एतान्यपि क्षत्रियजातेरुचितान्यायुधानि ॥

यज्ञ मनुगच्छन्त्योर्ब्राह्मणक्षत्रियजात्योर्मध्ये ब्राह्मणजातेर्यज्ञप्राप्तिं दर्शयति—"तं क्षत्र मनन्वाप्य न्यवर्त्ततायुधेभ्यो ह स्मास्य विजमानः पराङेवैत्यथैनं ब्रह्मान्वैत्, तमाप्नोत्, त माप्त्वा परस्तान्निरुध्यातिष्ठत्, स आप्तः परस्तान्निरुद्धस्तिष्ठञ्ज्ञात्वा स्वान्यायुधानि ब्रह्मोपावर्त्तत ; तस्माद्धाप्येतर्हि यज्ञो ब्रह्मण्येव ब्राह्मणेषु प्रतिष्ठितः"–इति । 'क्षत्रं' क्षत्रियजातिः, 'तं' यज्ञम् 'अनन्वाप्य' अनुगमनेन अलब्ध्वा, तस्मादनुगमनात् न्यवर्त्तत । यज्ञस्तु क्षत्रियस्यायुधेभ्यो धनुरादिभ्यो 'विजमानः' भीतिं प्राप्नुवन् 'पराङेव' पुनरावृत्तिरहित एव 'एति स्म' पलाय्य दूरे गतः । 'अथ' अनन्तरम् 'एनं' यज्ञ 'ब्रह्म' ब्राह्मणजातिः 'अन्वैत्' अन्वगच्छत्, अनुगम्य च 'तं' यज्ञ माप्नोति स्म । आप्त्वा च 'तं' यज्ञ मतिक्रम्य 'परस्तात्' परभागे 'निरुद्ध' यज्ञगमनं प्रतिबध्यातिष्ठत् । स च यज्ञ आप्तः, तथा ब्राह्मणजात्या प्राप्तः, 'परस्तात्' परभागे 'निरुद्धः'

गमनात् प्रतिबद्धः । तत्रैव तिष्ठन् ब्राह्मणस्य हस्ते स्फाकपाला- दीनि स्वकीयान्यायुधानि त्यक्त्वा ब्राह्मणजातिं प्रति 'उपावर्तत' समीपं आगच्छत् । यस्मादेवं तस्मादिदानीमपि यज्ञो 'ब्रह्मण्येव' आर्त्विज्ययोग्यायां ब्राह्मणजातावेव, तत्रापि प्रयोगकुशलेषु 'ब्राह्म- णेषु' प्रतिष्ठितो वर्त्तते ॥

अथ क्षत्रियस्य यज्ञप्राप्तिं दर्शयति— "अथैनत् क्षत्र मन्वाग- च्छत्तदब्रवीदुप माऽस्मिन् यज्ञे ह्वयस्वेति ; तत् तथेत्यब्रवीत् ; तद्वै निधाय स्वान्यायुधानि ब्रह्मण एवायुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञ मुपावर्त्तस्वेति, तथेति; तत्क्षत्रं निधाय स्वान्यायुधानि ब्रह्मण एवायुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञ मुपावर्त्तत; तस्मादप्येतर्हि क्षत्रियो यजमानो निधायैव स्वान्यायुधानि ब्रह्मण एवायुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञ मुपावर्त्तते"*–इति ८। 'अथ' ब्राह्मणस्य यज्ञप्राप्तेरनन्तरम्, 'एनत्' ब्रह्म ब्राह्मणजातिं 'क्षत्रं' क्षत्रियजातिम् 'अन्वागच्छत्' । आगत्य च 'तद्' ब्रह्म प्रत्येव मब्रवीत् । हे ब्राह्मण ! मां क्षत्रिय मस्मिन् यज्ञे 'उपह्वयस्व' अनुजानीहि, मा माहूय यज्ञेन संयोजयेत्यर्थः । 'तत्' उक्तं कार्यं तथैवास्त्विति ब्राह्मणो ऽब्रवीत् । उक्त्वा च क्षत्रियायैवं बुद्धिप्रदानं कृतवान्—हे क्षत्रिय ! 'तद्वै' तथा सति तव यज्ञप्राप्तौ अपेक्षायां सत्यां स्वकीयानि धनुरादीनि 'आयुधानि' क्वचित् स्थापनीयानि ; तान्यवस्थाप्य ब्राह्मणस्यैव योग्यैः स्फाकपालाद्यायुधैर्ब्राह्मणस्य योगेन शान्ति- प्रधानुत्वयुक्तेन 'रूपेण' वेषेण च युक्तो 'ब्रह्म भूत्वा' ब्राह्मणसदृशो भूत्वा यज्ञं प्रत्युपावर्त्तस्वेति । 'तत् क्षत्रम्' स च क्षत्रियः 'तथेति' अङ्गीकृत्य स्वकीयानि धनुरादीन्यायुधानि 'निधाय'

* अत्रपरेव आम्नातम्— "स एव यथायुधो यजमानः"–इति शत॰ ब्रा॰ १२,५,२,८ ।

परित्यज्य, प्रान्तवेषेण यज्ञं प्राप्तवान्। यस्मादादिष्टौ एवं सम्भवं, तस्मादिदानी मपि क्षत्रियो ब्राह्मणवेषेण धनुरादिरहितेन यज्ञ मनुतिष्ठति ॥ १ (१८) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां चतुर्थाध्याये
(चतुस्त्रिंशाध्याये) प्रथमः खण्डः ॥ १ (१८) ॥

---

॥ अथ द्वितीयः खण्डः ॥

अथातो देवयजनस्यैव याञ्चा-*-स्तदाहुर्यद् ब्राह्मणो राजन्यो वैश्यो दीक्षिष्यमाणः क्षत्रियं देवयजनं याचति कं क्षत्रियो याचेदिति दैवं क्षत्रं याचेदित्याहुरादित्यो वै दैवं क्षत्र मादित्य एषां भूताना मधिपतिः स यदहर्दीक्षिष्यमाणो भवति तदहः पूर्वाह्ण एवोद्यन्त मादित्य मुपतिष्ठेतेदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं देव सवितर्देवयजनं मे देहि देवयज्याया इति देवयजनं याचति स यत् तत्र याचित उत्तरां सर्पत्यों तथा ददामीति दैव तदाह तस्य ह न काचन रिष्टि†र्भवति देवेन सवित्रा प्रसूतस्योत्तरोत्तरिणीं ह श्रिय मश्नुते ऽश्नुते ह प्रजाना मैश्वर्यं

---

* "या तस्य" क, ग, "याचन" ख। † "रिष्टि" ग।

माधिपत्यं य एव मुपस्माय याचित्वा देवयजन मध्यवसाय दीक्षते क्षत्रियः सन् ॥ २ ( २० ) ॥

क्षत्रियस्य यज्ञप्राप्ति मुक्त्वा देवयजनलाभं वक्तुं प्रश्न मुद्भावयति—"अथातो देवयजनस्यैव याञ्चास्तदाहुर्यद् ब्राह्मणो राजन्यो वैश्यो दीक्षिष्यमाणः क्षत्रियं देवयजनं याचति; कं क्षत्रियो याचेदिति"–इति। 'अथ' क्षत्रियस्य यज्ञेच्छानन्तरम्, यतो देवयजन मपेक्षितम्, 'अतः' कारणाद् 'देवयजनस्यैव' देवा इज्यन्ते यस्मिन् देशे स देवयजनस्तस्यैव 'याञ्चाः' * याचन मभिधीयत-इति शेषः। 'तत्' तत्र देवयजने ब्रह्मवादिनः प्रश्न माहुः। 'यद्' यस्मात् कारणाद् ब्राह्मणादयस्त्रयो वर्णाः 'क्षत्रियम्' अभिषिक्तं राजानं प्रति देवयजनं याचति; तस्माद्राज्ञोऽपि देवयजनो याचितव्यः। 'क्षत्रियः' राजा 'कम्' अन्यं स्वामिनं याचेदिति प्रश्नः॥

तस्योत्तर माह—"दैवं क्षत्रं याचेदित्याहुरादित्यो वै दैवं क्षत्र मादित्य एषां भूताना मधिपतिः"–इति। राज्ञो मनुजेषु मध्ये स्वाम्यन्तराभावे ऽपि देवसम्बन्धिक्षत्रियजातेः स्वामित्वात् तत्रैव याचन मुचित मित्युत्तर माहुः। योऽय मादित्योऽस्ति, असावेव 'दैवं' देवसम्बन्धि 'क्षत्रं' क्षत्रियजातिः। अय मादित्य एषां प्राणिनां तमोनिवारणेनाधिष्ठाता पालयिता; ततः स्वामित्वात् तत्समीपे याचन मुचितम्॥

*तस्य प्रकारं दर्शयति*— "स यदहर्दीक्षिष्यमाणो भवति, तदहः पूर्वाह्ण एवोद्यन्त मादित्य मुपतिष्ठेतेदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमम्, देव सवितर्देवयजनं मे देहि देवयज्याया इति

---

* "याञ्चाय स्तवत"–इति भष०स०१२,४,६०। "याञ्चा" शत०ब्रा० ९. ३. ४. ४।

देवयजनं याचति"—इति । 'सः' राजा यस्मिन्नेवाहनि दीक्षितु मुद्युक्तः, तस्याह्नः पूर्वाह्नकाले एव 'उद्यन्तम्' ऊर्द्ध्वं गच्छन्त मादित्य मृग्यजुर्भ्या मुपतिष्ठेत् । "इदं श्रेष्ठम्"—इत्यृचः प्रतीकम्, "देव सवितः"—इत्यादिकं यजुषः । हे देव सवितः ! 'देवयज्यायै' देवसम्बन्धियागार्थं 'मे' मह्यं 'देवयजनं' देवोचितयागदेशं देहि, 'इति' अनेन प्रकारेण देवं याचेत् । ऋचोपस्थानं, यजुषा याचन मिति व्यवस्थया द्रष्टव्यम् ॥

राज्ञा याचितस्यादित्यस्य प्रत्युत्तरं सम्पादयति— "स यत् तत्र याचित उत्तरां सर्पत्योमि तथा ददामीति हैव तदाह"—इति । आदित्यो 'यत्' यदि 'तत्र' तदानीं अनेन राज्ञा याचितः सन् 'उत्तरां' यत्र स्वयं तिष्ठति तस्मादनन्तरभाविनीं दिशं प्रति 'सर्पेति' गच्छेत्, तदानीं 'तत्' तेन सर्पणेन 'ॐ तथा ददामि' इत्येव मुत्तरम् 'आह' ब्रूते । लोकेऽपि दृष्टः पुरुषो वाचा वा हस्तशिरश्चालनादिना वोत्तरं प्रयच्छति, तद्वदत्रापि सर्पण मेवोत्तर मस्तु । सर्पणस्याभिप्रायः ॐ तथा ददामीत्यनेन कथितः । 'ॐ' त्वदुक्त मङ्गीकरोमि, 'तथा' तेनैव प्रकारेण देवयजनं ददामि ॥

ता मेतां देवयजनयाच्ञां प्रशंसति— "तस्य ह न काचन रिष्टि-र्भवति, देवेन सवित्रा प्रसूतस्योत्तरोत्तरिणीं ह श्रियं मश्नुते; श्नुते ह प्रजानां मैश्वर्यं माधिपत्यं य एव मुपस्थाय याचित्वा देवयजन मध्यवसाय दीक्षते क्षत्रियः सन्"—इति । 'यः' पुमान् 'क्षत्रियः' स्वयं राजा सन्, 'एवम्' ऋचादित्य मुपस्थाय, यजुषा याचित्वा, ततो देवयजनं निश्चित्य, 'दीक्षते' दीक्षां प्राप्नोति ; 'तस्य' राज्ञः सविता देवेन 'प्रसूतस्य' अनुज्ञातस्य 'रिष्टिः' हिंसा 'काचन' काचिदपि न भवति । न केवलं हिंसाराहित्यं, किन्तु 'उत्तरो-

त्तरियौ' दिने दिने वर्धमानां श्रियम् 'अश्नुते' प्राप्नोति ; किञ्च 'प्रजानां' सर्वासाम् 'ऐश्वर्यम्' ईश्वरत्वं नियमनसामर्थ्यम्, 'आधिपत्यम्' अधिष्ठाय पालयितृत्वम्, तत्तद्योगक्षेमसम्पादनम् 'अश्नुते' प्राप्नोति ॥ २ (२०) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां चतुर्थाध्याये
(चतुस्त्रिंशाध्याये) द्वितीयः खण्डः ॥ २ (२०) ॥

---

॥ अथ तृतीयः खण्डः ॥

अथात इष्टापूर्त्तस्यापरिज्यानिः ।क्षत्रियस्य यजमानस्य स पुरस्ताद् दीक्षाया आहुतिं जुहुयाच्चतुर्गृहीत माज्य माहवनीय ।इष्टापूर्त्तस्यापरिज्यान्यै ।पुनर्न इन्द्रो मघवा ददातु ।ब्रह्म पुनरिष्टं पूर्त्तं दात् स्वाहे-त्यथानूबन्ध्याये । समिष्टयजुषा मुपरिष्टात् ।पुनर्नो अग्निर्जातवेदा ददातु क्षत्रं पुनरिष्टं पूर्त्तं दात्स्वाहेति सैषेष्टापूर्त्तस्यापरिज्यानिः क्षत्रियस्य यजमानस्य । यदेते आहुती तस्मादेते होतव्ये ॥ ३ (२१) ॥

तस्यैव क्षत्रियस्य होमं विधत्ते— "अथात इष्टापूर्त्तस्यापरिज्यानिः क्षत्रियस्य यजमानस्य ; स पुरस्ताद् दीक्षाया आहुतिं जुहुयाच्चतुर्गृहीत माज्य माहवनीय इष्टापूर्त्तस्यापरिज्यान्यै"—

इति । 'अथ' देवयजननिश्चयानन्तरम्, यस्मादनुष्ठेयस्य इष्टापूर्त्तस्य 'अपरिज्यानिः' विनाशाभावोऽपेक्षितः, 'अतः' कारणाद् यजमानस्य 'क्षत्रियस्य' राज्ञः इष्टापूर्त्तापरिज्यानिसञ्ज्ञको होमः, अभिधीयते इति शेषः। इष्टापूर्त्तशब्दार्थः पूर्वाचार्यैर्दर्शितः—

"वर्णाश्रमान्वयी धर्म इष्टम्, पूर्त्तं मथेतरत्।
प्रपा-तटाकादिरूपं तच्च सर्वत्र दृश्यते।
स्मार्त्तं पूर्त्तं श्रौत मिष्ट मिति केचिदिहोचिरे"–इति।

'सः' राजा दीक्षायाः पूर्वं माहुतिं जुहुयात्। 'चतुर्गृहीत माज्यं' द्रव्यम्; 'आहवनीयः' होमस्थानम्; अनुष्ठेयस्येष्टापूर्त्तस्य फलपर्यवसायित्वलक्षणो विनाशाभावः प्रयोजनम्॥

होमे मन्त्रं दर्शयति— "पुनर्न इन्द्रो मघवा ददातु, ब्रह्म पुनरिष्ट' पूर्त्तं दात् स्वाहेति"–इति। "पुनर्नः"–इत्यादिका ऋचः प्रतीकम्, "ब्रह्म"–इत्यादिकं यजुः। 'ब्रह्म' वेदरूपो मन्त्रः, 'इष्टं पूर्त्तं' यथोक्तलक्षणे 'पुनर्दात्' भूयो ददातु। तदर्थ मिदं 'स्वाहा' स्वाहुत मस्तु॥

दीक्षणीयेष्टेः पूर्वकालीनं होमं विधायानुबन्ध्याख्यपश्वोरुत्तरकालीनं होमं विधत्ते— "यथानूबन्ध्यायै समिष्टयजुषा मुपरिष्टात् पुनर्नो अग्निर्जातवेदा ददातु क्षत्रं पुनरिष्ट' पूर्त्तं दात् स्वाहेति"–इति। 'अथ' प्राचीनहोमकथनानन्तरम्, उच्यत इति शेषः। 'अनूबन्ध्यायै' अनुबन्ध्याख्यपशोः सम्बन्धीनि यानि त्रीणि समिष्टयजूंषि सन्ति, तेषा मुपरिष्टात् जुहुयादिति शेषः * ।

---

* "१भा० ८७पृ० १७पं०, ३९५पृ० २०पं०, २भा० २३६ पृ० द्र०। "संस्थितायां मैत्रावरुण्यनूबन्ध्या"–इति आप० श्रौ० ६.१४.७। "अथ मात्र. ०—० "मैत्रावरुणीं वशा मनूबन्ध्या मालभते"–इति शत० ब्रा० २.४.४.१४।

'पुनर्नः'-इत्यृचः प्रतीकम्; इयं, पूर्वोक्ता चेत्यृग्द्वयं शाखान्तरगतम्। 'चत्रं' चत्रियजातिरिष्टं पूर्त्तं च 'पुनर्दात्' भूयो ददातु। तदर्थं स्वाहुत मिदमस्तु ॥

पूर्वोत्तरकालीन माहुतिद्वयं प्रशंसयति— "सैषेष्टापूर्त्तस्यापरिज्यानिः क्षत्रियस्य यजमानस्य, यदेते आहुती; तस्मादेते होतव्ये"-इति। योऽयं क्षत्रियो राजा यजमानः, तस्य 'एते' पूर्वोत्तरकालीने आहुती विद्येते; 'सा एषा' आहुतिक्रिया इष्टस्य पूर्त्तस्य च 'अपरिज्यानिः' अविनाशहेतुः; तस्मात् कारणात् 'एते' उभे आहुती होतव्ये ॥ ३ (२१) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां चतुर्थाध्याये (चतुस्त्रिंशाध्याये) तृतीयः खण्डः ॥ ३ (२१) ॥

---

॥ अथ चतुर्थः खण्डः ॥

तदु ह स्माह सौजात आराळ्हिरजीतपुनर्वण्यं वा एतद्यदेते आहुती इति यथा ह कामयेत तथैते कुर्याद्य इतो ऽनुशासनं कुर्यादितीमे त्वेव जुहुयाद् ब्रह्म प्रपद्ये ब्रह्म मा क्षत्राद् गोपायतु ब्रह्मणे स्वाहेति तत्तदिति[१] ब्रह्म वा एष प्रपद्यते यो यज्ञं

---

१ "यत्तदितीह" क., ख., घ.।

प्रपद्यते ब्रह्म वै यज्ञो यज्ञादु ह वा एष पुनर्जायते यो दीक्षते तं ब्रह्म प्रपन्नं क्षत्रं न परिजिनाति ब्रह्म मा क्षत्राद्गोपायत्वित्याह यथैनं ब्रह्म क्षत्राद्गोपायेद् ब्रह्मणे स्वाहेति तदेनत्प्रीणाति तदेनत्प्रीतं क्षत्राद्गोपायत्यथानूबन्ध्यायै समिष्टयजुषा मुपरिष्टात् क्षत्रं प्रपद्ये क्षत्रं मा ब्रह्मणो गोपायतु क्षत्राय स्वाहेति तत्तदिती ३* क्षत्रं वा एष प्रपद्यते यो राष्ट्रं प्रपद्यते क्षत्रं हि राष्ट्रं तं क्षत्रं प्रपन्नं ब्रह्म न परिजिनाति क्षत्रं मा ब्रह्मणो गोपायत्वित्याह यथैनं क्षत्रं ब्रह्मणो गोपायेत् क्षत्राय स्वाहेति तदेनत्प्रीणाति तदेनत्प्रीतं ब्रह्मणो गोपायति सैषेष्टापूर्तस्यैवापरिज्यानिः क्षत्रियस्य यजमानस्य यदेते आहुती तस्मादेते एव होतव्ये ॥ ४ ( २२ ) ॥

अथ प्रकारान्तरेणाहुतिद्वयं विधत्ते— "तदु ह स्माह सौजात आराळ्हिरजीतपुनर्वण्यं वा एतद् यदेते आहुती इति; यथा ह कामयेत तथैते कुर्याद्, य इतोऽनुशासनं कुर्यादितीमे त्वेव जुहुयाद्"—इति। 'तदु ह' तत्रैव पूर्वोक्तहोमस्थाने, सौजातनामकः कश्चिदृषिः, स चाराळ्हनामकस्य पुत्रः, एव मुवाच। कथ मिति तदुच्यते— 'एते' वक्ष्यमाणे आहुती 'इति' यदस्ति, तदेतद् 'अजीतपुनर्वण्यं वै' नष्ट मप्राप्तं वा यद्वस्तु तदेतदजीतं,

* "तत्तदितीमु३" ख।

तस्य पुनरपि वनसाधनं प्राप्तिकारण मजीतपुनर्वण्यम् , वक्ष्यमाण माहुतिद्वय मेतन्नामक मित्यर्थः । 'इति' यदेतत्सौजातस्य मतं, तदेव यथेत्यादिना प्रशस्यते । 'यः' पुमान् 'इतः' सौजातवाक्याद् 'अनुप्रासनम्' उपदिष्ट मनुष्ठानं कुर्यात् , स पुमान् 'यथा' येनैव प्रकारेण कामयेत, 'तथा' तेनैव प्रकारेण सिद्धं फल मुद्दिश्य 'एते कुर्यात्' एतदनुष्ठानेन काम्यमानं फलं सिध्यति ; तस्मात् कारणात् 'इमे' एवाहुती जुहुयात् ; न तु पूर्वे ॥

तत्र दीक्षणीयेष्टेः प्राचीनं होममन्त्रं दर्शयति— "ब्रह्म प्रपद्ये, ब्रह्म मा क्षत्राद् गोपायतु, ब्रह्मणे स्वाहेति"–इति । 'ब्रह्म' ब्राह्मणजातिं 'प्रपद्ये' रक्षकतया प्राप्नोमि । 'ब्रह्म मा' ब्राह्मण-जातिर्मां 'क्षत्रात्' क्षत्रियजातेः 'गोपायतु' पालयतु । 'ब्रह्मणे' ब्राह्मणजातये स्वाहुत मिद मस्तु । अनेन मन्त्रेण आहवनीये चतुर्गृहीत माज्यं जुहुयात् ॥

अस्याहुतेः पूज्यता दर्शयति— "तत्तदिती३"–इति । सर्वे ऽपि याज्ञिकाः , पूज्यहोमप्रसङ्गे तदा तदा 'तत्तत् इति' एवम् एतदेव मनुष्ठान मुदाहरन्ति । पूजायां सानुनासिकप्लुतिः ॥

अथ मन्त्रतात्पर्यं दर्शयति— "ब्रह्म वा एष प्रपद्यते , यो यज्ञं प्रपद्यते ; ब्रह्म वै यज्ञो, यज्ञादु ह वा एष पुनर्जायते, यो दीक्षते ; तं ब्रह्म प्रपन्नं क्षत्रं न परिजिनाति ; ब्रह्म मा क्षत्राद्गोपायत्वि-त्याह, यथैनं ब्रह्म क्षत्राद्गोपायेद् ; ब्रह्मणे स्वाहेति तदेनत्प्रीणाति, तदेनत् प्रीतं क्षत्राद्गोपायति"–इति । 'यः' पुमान् 'यज्ञं' 'प्रपद्यते' प्रारभते, एष पुमान् 'ब्रह्म वै' ब्राह्मणजाति मेव प्रारभते । 'ब्रह्म वै' ब्राह्मणजातिरेव यज्ञः ; तया जात्या साध्यत्वात् । एवं सति 'यः' पुमान् 'दीक्षते' दीक्षां प्राप्नोति, 'एषः' पुमान् पूर्वं जातो ऽपि

'यज्ञादु ह वै' अनुष्ठीयमानात् यज्ञादेव पुनरपि जायते। 'ब्रह्म प्रपन्नं' यज्ञोपक्रमेण यज्ञरूपत्वाद्ब्राह्मणजातिं प्रपन्नं 'तं' यजमानं 'क्षत्रं' क्षत्रियजातिः 'न परिजिनाति' नैव छिनत्ति। एतावता "ब्रह्म प्रपद्ये"—इत्यस्य मन्त्रपादस्य तात्पर्यं दर्शितम्। यस्तु मध्यमो मन्त्रभागो "ब्रह्म मा क्षत्राद् गोपायतु"—इत्येवं ब्रूते, तस्मिन् भागे ब्राह्मणजातिः 'एनं' यजमानं क्षत्रियजातेर्यथा 'गोपायेत्' रक्षेत्, तथा स मध्यमभागो ब्रूते। "ब्रह्मणे स्वाहा"—इत्येतादृशो यस्तृतीयभागः, 'तत्' तेन भागेन 'ब्रह्म' ब्राह्मणजातिः 'प्रीणाति' तर्पयति। 'तदेनद्' ब्रह्म प्रीतं सत् यजमानं क्षत्रियजातेः 'गोपायति' रक्षति॥

पूर्वकालीनं होमं विधायोत्तरकालीनं होमं विधत्ते—"अथानूबन्ध्यायै समिष्टयजुषा मुपरिष्टात्"—इति। पूर्ववद् व्याख्येयम् (१११पृ०)॥

तस्मिन् होमे मन्त्रं तदीयतात्पर्यञ्च दर्शयति— "क्षत्रं प्रपद्ये, क्षत्रं मा ब्रह्मणो गोपायतु, क्षत्राय स्वाहेति; तत्तदितीं २; क्षत्रं वा एष प्रपद्यते, यो राष्ट्रं प्रपद्यते; क्षत्रं हि राष्ट्रं, तं क्षत्रं प्रपन्नं ब्रह्म न परिजिनाति; क्षत्रं मा ब्रह्मणो गोपायत्वित्याह, यथैनं क्षत्रं ब्रह्मणो गोपायेत्; क्षत्राय स्वाहेति तदेनत्प्रीणाति; तदेनत्प्रीतं ब्रह्मणो गोपायति"—इति। पालनीयो देशो 'राष्ट्रं' तच्च क्षत्रियेण पालनीयत्वात् क्षत्रस्वरूपम्। अन्यत्सर्वं ब्रह्मवाक्यवद् व्याख्येयम् (११४पृ०)॥

तदेतदाहुतिद्वयं प्रशंसति— "सैषेष्टापूर्तस्यैवापरिज्यानिः, क्षत्रियस्य यजमानस्य यदेते आहुती; तस्मादेते एव होतव्ये"—इति। पूर्वोक्ताहुतिद्वयविषयवाक्यवद् (११२पृ०) व्याख्येयम्।

एवकारः पूर्वोक्ताहुतिद्वयव्यावृत्त्यर्थः । एतदेव सौजाताख्यस्य महर्षेर्मतं प्रशस्तम् ॥ ४ (२२) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां चतुर्थाध्याये (चतुस्त्रिंशाध्याये) चतुर्थः खण्डः ॥ ४ (२२) ॥

---

॥ अथ पञ्चमः खण्डः ॥

अथैन्द्रो वै देवतया क्षत्रियो भवति त्रैष्टुभश्छन्दसा पञ्चदश स्तोमेन सोमो राज्येन राजन्यो बन्धुना स ह दीक्षमाण एव ब्राह्मणता मभ्युपैति यत्कृष्णाजिन मध्यूहति यद्दीक्षितव्रतं चरति यदेनं ब्राह्मणा अभि सङ्गच्छन्ते तस्य ह दीक्षमाणस्येन्द्र एवेन्द्रिय मादत्ते त्रिष्टुब् वीर्यं पञ्चदशस्तोम आयुः सोमो राज्यं पितरो यशस्कीर्तिं मन्यो वा अय मस्मद्भवति ब्रह्म वा अयं भवति ब्रह्म वा अय मुपावर्त्तत इति वदन्तः स पुरस्ता-द्दीक्षाया आहुतिं हुत्वाऽऽहवनीय मुपतिष्ठेत नेन्द्राद्देव-ताया एमि न त्रिष्टुभश्छन्दसो न पञ्चदशात्स्तोमान्न सोमाद्राज्ञो न पित्र्याद् बन्धोर्मा म इन्द्र इन्द्रिय मादित मा त्रिष्टुब् वीर्यं मा पञ्चदशस्तोम आयुर्मा

सोमो राज्यं मा पितरो यशस्कीर्तिं स इन्द्रियेण वीर्येणायुषा राज्येन यशसा बन्धुनाग्निं देवता मुपैमि गायत्रीच्छन्दस्त्रिवृतं स्तोमं सोमं राजानं ब्रह्म प्रपद्ये ब्राह्मणो भवामीति तस्य ह नैन्द्र इन्द्रिय मादत्ते न त्रिष्टुब् वीर्यं न पञ्चदशस्तोम आयुर्नं सोमो राज्यं न पितरो यशस्कीर्तिं य एव मेता माहुतिं हुत्वा ऽऽहवनीय मुपस्थाय दीक्षते क्षत्रियः सन् ॥ ५ ( २३ ) ॥

क्षत्रियस्याहवनीयोपस्थानं विधातुं प्रस्तौति— "यथेन्द्रो वै देवतया क्षत्रियो भवति, त्रैष्टुभश्छन्दसा, पञ्चदश स्तोमेन, सोमो राज्येन, राजन्यो बन्धुना ; स ह दीक्षमाण एव ब्राह्मणता मभ्युपैति,— यत् कृष्णाजिन मध्यूहति, यद् दीक्षितव्रतं चरति, यदेनं ब्राह्मणा अभि सङ्गच्छन्ते ; तस्य ह दीक्षमाणस्येन्द्र एवेन्द्रिय मादत्ते, त्रिष्टुब् वीर्यं, पञ्चदशस्तोम आयुः, सोमो राज्यं, पितरो यशस्कीर्तिं, मन्यो वा अय मस्मादभवति, ब्रह्म वा अयं भवति, ब्रह्म वा अय मुपावर्त्तत इति वदन्तः"–इति । 'अथ' होमकथनानन्तरम्, उपस्थान मुच्यत इति शेषः । योऽयं क्षत्रियोऽस्ति', सोऽयं देवतया 'ऐन्द्रो वै' इन्द्रसम्बन्धी एव भवति ; देवतानां मध्ये इन्द्रः क्षत्रियस्याभिमानी देवतेत्यर्थः । तथा 'छन्दसा त्रैष्टुभः' छन्दसां मध्ये त्रिष्टुप् एतदभिमानिनी । स्तोमानां मध्ये 'पञ्चदशः' एतदभिमानी । राज्येन निमित्तेनायं सोमरूपः, सोम एव तदीयराज्याभिमानी । 'बन्धुना' पितृपितामहादिबन्धुवर्गेण

'राजन्यो' राजजातीयः। एवं सति 'स ह' स खलु क्षत्रियो 'दीक्षमाण एव' दीक्षां स्वीकुर्वन्नेव ब्राह्मणत्वजातिं प्राप्नोति। कथ मिति तदुच्यते— ब्राह्मणयजमानवत् कृष्णाजिनम् 'अध्यूहति' आच्छादयतीति यदस्ति, तथा 'दीक्षितव्रतं' मुष्टिबन्धनवाङ्नियमादिकं चरतीति यदस्ति, तथा 'ब्राह्मणाः' ऋत्विजो भूत्वा 'एनं' क्षत्रिय मभितः 'सङ्गच्छन्ते' सङ्गता भवन्तीति यदस्ति, तेन सर्वेण संस्कारेणायं क्षत्रियो ब्राह्मण्यं प्राप्नोति। 'तस्य ह' तादृशस्यैव क्षत्रियस्य 'दीक्षमाणस्य' दीक्षां प्राप्नुवतः 'इन्द्रियं' चक्षुरादिपाटवं इन्द्र एव 'आदत्ते' अपहरति, तथा 'वीर्यं' युद्धादिसामर्थ्यं त्रिष्टुप् अपहरति, पञ्चदशस्तोम आयुरपहरति, सोमो राज्य मपहरति। पितरो यशः कीर्त्तिं मपहरन्ति। ऐहिकं युद्धादिविषयकं यशः, आमुष्मिको यज्ञदानविषया कीर्त्तिः। एव मपहरतां मिन्द्रत्रिष्टुबादीनां को ऽभिप्रायः? सोऽभिधीयते— 'अयं' क्षत्रियः 'अस्मात्' इन्द्रादिभ्यः 'अन्यो वै' स्वतन्त्र एव भवति। पूर्वं मस्मदधीनः सन्, इदानीं यागं कुर्वन् 'ब्रह्म वै' ब्राह्मण एव 'अयं' भवति। कथ मिति तदुच्यते— 'अयं' क्षत्रियो 'ब्रह्म वै' ब्राह्मणजाति मेव कृष्णाजिनाच्छादनादिभिरुपेत्य वर्त्तते; तथा सत्यस्मदपेक्षा मन्तरेणैव सर्वपुरुषार्थसाधनसमर्थत्वात्, अस्मदधीनतां परित्यज्यान्य एव स्वतन्त्रो भवतीति स्वाभिप्रायं परस्परं वदन्तः सर्वं मप्येतदीय मपहरन्ति॥

तस्योपद्रवस्य शान्त्यर्थं मुपस्थानं विधत्ते— "स पुरस्ताद्दीक्षाया आहुतिं हुत्वा ऽऽहवनीय मुपतिष्ठेत"–इति। दीक्षणीयेष्टेः पूर्वोक्ता माहुतिं हुत्वा, तत आहवनीयं वक्ष्यमाणेन मन्त्रेणोपतिष्ठेत॥

तं मन्त्रं दर्शयति—"नैन्द्राद् देवताया एमि, न त्रिष्टुभश्छन्दसो, न पञ्चदशात् स्तोमान्न सोमाद्राज्ञो, न पित्र्याद् बन्धोर्मा म इन्द्र इन्द्रिय मादित, मा त्रिष्टुब्वीर्यं, मा पञ्चदशस्तोम आयुर्, मा सोमो राज्यं, मा पितरो यशस्कीर्त्तिं ; स इन्द्रियेण वीर्येणायुषा राज्येन यशसा बन्धुनाग्निं देवता मुपैमि ; गायत्रीच्छन्दस्त्रिवृतं स्तोमं सोमं राजानं ब्रह्म प्रपद्ये, ब्राह्मणो भवामीति"—इति । क्षत्रियोऽहं इन्द्ररूपायाः मदीयदेवतायाः 'नैमि' पृथग्भूतो न गच्छामि, तथा मय्यभिमानिभ्यः छन्दस्तोमराजबन्धुभ्यो नापगच्छामि ; अथ मिन्द्रो मदीय मिन्द्रियम् 'मा आदित' मा अपहरतु, तथा त्रिष्टुबादयो वीर्यादीन् मापहरन्तु ; तेषा मिन्द्रादीना मनुग्रहादह मिन्द्रियादिभिः सहावस्थितो भूत्वा तत्पालनसमर्थ मग्निं देवता मुपैमि ; तथा गायत्री-त्रिवृत्स्तोम-ब्राह्मणजातीः 'प्रपद्ये' प्राप्नोमि ; तेषा मग्न्यादीना मनुग्रहात् ब्राह्मणो भवामि ॥

अनेन मन्त्रेण यदुपस्थानं, तत् प्रशंसति— "तस्य ह नैन्द्र इन्द्रिय मादत्ते, न त्रिष्टुब् वीर्यं, न पञ्चदशस्तोम आयुर्, न सोमो राज्यं, न पितरो यशस्कीर्त्तिं, य एव मेता माहुतिं हुत्वाऽऽहवनीय मुपस्थाय दीक्षते-क्षत्रियः सन्"—इति । 'यः' पुमान् क्षत्रियजातियुक्तः सन् उक्तक्रमेण दीक्षायाः प्राचीना माहुतिं हुत्वा, "नैन्द्रात्"—इत्यादिमन्त्रेण आहवनीय मुपस्थाय, पश्चाद् दीक्षां प्राप्नोति, 'तस्य' क्षत्रियस्येन्द्रियादीनिन्द्रादयो नापहरन्ति ॥ ५ ( २३ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां चतुर्थाध्याये
( चतुस्त्रिंशाध्याये ) पञ्चमः खण्डः ॥ ५ ( २३ ) ॥

॥ अथ षष्ठः खण्डः ॥

अथाग्नेयो वै देवतया क्षत्रियो दीक्षितो भवति गायत्रश्छन्दसा त्रिवृत् स्तोमेन ब्राह्मणो बन्धुना स होदवयन्नेव क्षत्रियता मभ्युपैति तस्य होदवयतो ऽग्निरेव तेज आदत्ते गायत्री वीर्यं त्रिवृत्स्तोम आयुर्ब्राह्मणा ब्रह्म यशस्कीर्तिं मन्यो वा अय मस्मद्भवति क्षत्रं वा अयं भवति क्षत्रं वा अय मुपावर्त्तत इति वदन्तः सो ऽनूबन्ध्यायै समिष्टयजुषा सुपरिष्टाद्धुत्वाहुति माहवनीय मुपतिष्ठेत नाग्नेर्देवताया एमि न गायत्राश्छन्दसो न त्रिवृतः स्तोमान्न ब्रह्मणो बन्धो-र्मा मे ऽग्निस्तेज आदित मा गायत्री वीर्यं मा त्रिवृत्स्तोम आयुर्मा ब्राह्मणा ब्रह्म यशस्कीर्तिं स ह तेजसा वीर्येणायुषा ब्रह्मणा यशसा कीर्त्येन्द्रं देवता मुपैमि त्रिष्टुभं छन्दः पञ्चदशं स्तोमं सोमं राजानं क्षत्रं प्रपद्ये क्षत्रियो भवामि देवाः पितरः पितरो देवा यो ऽस्मि स सन्यजे स्वं म इष्ट मिष्टं स्वं पूर्त्तं स्वं श्रान्तं स्वं हुतं तस्य मे य मग्निरुपद्रष्टाय वायुरुपश्रोता ऽसावादित्यो ऽनुख्यातेदं मह य एवास्मि सो ऽस्मीति तस्य ह नाग्निस्तेज आदत्ते न गायत्री वीर्यं न त्रिवृत्स्तोम आयुर्न ब्राह्मणा ब्रह्म यशस्कीर्त्ति

**य एव सेता माहुतिं हुत्वा ऽऽहवनीय मुपस्थायोद्-वस्यति क्षत्रियः सन् ॥ ६ ( २४ ) ॥**

पूर्वहोमानन्तर मुपस्थानं विधायोत्तरहोमादूर्द्ध मुपस्थानं विधातुं प्रस्तौति—"अथाग्नेयो वै देवतया क्षत्रियो दीक्षितो भवति, गायत्रश्छन्दसा, त्रिवृत् स्तोमेन ब्राह्मणो बन्धुना, स ह्युदवस्यन्नेव क्षत्रियता मभ्युपैति ; तस्य ह्युदवस्यतो ऽग्निरेव तेज आदत्ते, गायत्री वीर्यं, त्रिवृत्स्तोम आयुर्, ब्राह्मणा ब्रह्म यशः-कीर्त्तिम् ; अन्यो वा अस्य सम्भवति, अन्नं वा अस्य मुपावर्त्तत इति वदन्तः"—इति । 'अथ' पूर्वोपस्थानानन्तरम्, उत्तरोपस्थानं वक्ष्यत इति शेषः । अयं यजमानः पुरा क्षत्रियोऽपि इदानीं दीक्षितः सन् ब्राह्मण्यं प्राप्य देवतया अग्निसम्बन्धी भवति, अग्निरस्य ब्राह्मणस्य स्वामी । एवं गायत्री-त्रिवृद् ब्राह्मणजाति-सम्बन्धो द्रष्टव्यः । तादृश इदानीं ब्राह्मणः सन् 'उदवस्यन्नेव' उदवसानीयेष्टा सोमयागं समापयन् एव * ब्राह्मण्यं परित्यज्य क्षत्रियत्वं प्राप्नोति । तस्माद् उदवसानीयेष्टिं कुर्वतोऽस्य यजमानस्य तेजःप्रभृतीनग्न्यादयो ऽपहरन्ति । 'ब्रह्म' वेदः, तदध्ययननैष्ठिकं 'यशः', तदनुष्ठाननिमित्ता आमुष्मिकी 'कीर्त्तिः' । अपहरता मग्न्यादीनां कोऽभिप्रायः ? सोऽभिधीयते । 'अयम्' इदानीं ब्राह्मणः सन् 'अस्मादन्यः' स्वतन्त्रो भवति ; अयं 'अन्नं वै'

---

* उपरिष्टाद् वक्ष्यति "अथ यथादुरैत्य अनूबन्ध्ययेष्टोदवस्यति"—इति ८. ९. १ । "अथो वै दीर्घसत्त्र आसीरन्, संवत्सरं वा भूयो वा——। अथोदवसानीयेष्ट्या यजते ——अथ यदैवैषोदवसानीयेष्टिः सन्तिष्ठते ऽथ सायं आहुतिं जुहोति, काल एव प्रातराहुतिम्" —इति शत० ब्रा० ४. ५. १. १२-१६ ।

क्षत्रिय एव भवति । तदपि कथ मिति तत् उच्यते — 'अथ' यागकाले ब्राह्मणः सन्, यागादूर्ध्वं ब्राह्मण्यं परित्यज्य स्वकीयां क्षत्रियजाति मेव उपेत्य वर्त्तते ; तस्मादस्मात्तोऽन्यत्व मिति परस्परं वदन्तो ऽग्न्यादयः तेजआदीनपहरन्ति ॥

तच्छान्त्यर्थं मुपस्थानं विधत्ते — "सो ऽनूबन्ध्याये समिष्टयजुषा मुपरिष्टाद्धुत्वाहुति माहवनीय मुपतिष्ठेत"–इति । पूर्ववद् व्याख्येयम् ( १११,११८ पृ० ) ॥

तत्रोपस्थाने मन्त्र माह— "नाग्नेर्देवताया एमि, न गायत्र्याश्छन्दसो, न त्रिवृतः स्तोमान्न ब्रह्मणो वक्षोर् ; मा मे ऽग्निस्तेज आदित, मा गायत्री वीर्यं, मा त्रिवृत् स्तोम आयुर्, मा ब्राह्मण ब्रह्म यशस्कीर्त्तिं ; स ह तेजसा वीर्येणायुषा ब्रह्मणा यशसा कीर्त्त्येन्द्रं देवता मुपैमि, त्रिष्टुभं छन्द, पञ्चदशं स्तोमं, सोमं राजानं, क्षत्रं मपद्ये, क्षत्रियो भवामि, देवाः पितरः पितरो देवा यो ऽस्मि स सन् यजे ; स्वं म इद मिष्टं, स्वं पूर्त्तं, स्वं श्रान्तं, स्वं हुतं ; तस्य मे ऽय मग्निरुपद्रष्टाय वायुरुपश्रोता ऽसावादित्यो ऽनुख्यातेद महं य एवास्मि सो ऽस्मीति"–इति । अत्र नाग्नेर्देवताया इत्यादि, क्षत्रियो भवामीत्यन्तं पूर्वमन्त्रवद् ( ११८पृ० ) व्याख्येयम् । हे 'देवाः' अग्न्यादयः ! 'पितरः' पालकाः ! यूयं, शृणुतेति शेषः । पितरो देवा इति पुनर्वचन मादरार्थम् । भवदनुग्रहात् कृष्णाजिनाच्छादनादिसंस्कारेण 'यः' ब्राह्मणो ऽस्मि यज्ञसमाप्तिपर्यन्तं, स एव वाह्मणः सन् 'यजे' यागं कुर्वे । 'मे' मम इदम् 'इष्टं' श्रौतं कर्म 'स्व' स्वाधीनं जातम् । तथा 'पूर्त्तं' स्मार्त्त मपि कर्म 'स्व' स्वाधीनं जातम् । तथा 'श्रान्तं' श्रमरूपं तपो ऽपि 'स्व' स्वाधीनं जातम् । 'हुतम्' अन्यदपि काम्यहोमा-

दिकं 'स्वं' स्वाधीनं जातम् । 'तस्य' तादृशस्येष्टापूर्त्तादियुक्तस्य 'मे' मम 'घस्त्र' भूलोकावस्थितोऽस्मि: 'उपद्रष्टा' समीपे स्थित्वा साक्षित्वेनावलोकयिता ; 'अयम्' अन्तरिक्षावस्थितो वायुः 'उपश्रोता' तस्याग्नेर्मुखादस्मद्वृत्तान्तं श्रोष्यति ; 'असौ' द्युलोकावस्थित आदित्यः, तम् 'अनु' पश्चात् 'ख्याता' स्वर्गलोके कथयिष्यति— इदं कर्मोऽहं कृतवानिति । एवं फलपर्यन्तकर्मणि समाप्ते सति कर्मोपक्रमात् पूर्वं य एव क्षत्रियोऽस्मि स एवोऽहं क्षत्रियो भूत्वा तिष्ठामीति ॥

अनेन मन्त्रेण यदुपस्थानं, तत् प्रशंसति— "तस्य ह नाग्निस्तेज आदत्ते, न गायत्री वीर्यं, न त्रिवृत्स्तोम आयुर्, न ब्राह्मणा ब्रह्म यशस्कीर्त्तिं ; य एव मेता आहुतिं हुत्वा ऽऽहवनीय मुपस्थायोदवस्यति क्षत्रियः सन्"—इति। पूर्वं "तस्य ह नैन्द्र इन्द्रियम्"—इत्यादि यद्वाक्य मुक्तम् (११८पृ०), तद्वद् व्याख्येयम् ॥ ६ (२४) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां चतुर्थाध्याये
( चतुस्त्रिंशाध्याये ) षष्ठः खण्डः ॥ ६ ( २४ ) ॥

---

॥ अथ सप्तमः खण्डः ॥

अथातो दीक्षाया आवेदनस्यैव तदाहुर्यद् ब्राह्मणस्य दीक्षितस्य ब्राह्मणो ऽदीक्षिष्टेति दीक्षामावेदयन्ति कथं क्षत्रियस्यावेदयेदिति यथैवैतद् ब्राह्म-

यस्य दीक्षितस्य ब्राह्मणो ऽदीक्षिष्टेति दीक्षा मावेदयन्त्येव मेवैतत् क्षत्रियस्यावेदयेत् पुरोहितस्यार्षेयेणेति तत्तदितो*३० निधाय वा एष स्वान्यायुधानि ब्रह्मण एवायुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञ मुपावर्त्तते तस्मात् तस्य पुरोहितस्यार्षेयेण दीक्षा मावेदयेयुः पुरोहितस्यार्षेयेण प्रवरं प्रवृणीरन् ॥ ७ (२५) ॥

क्षत्रियस्य दीक्षितत्वावेदनमन्त्रे सन्देहात् प्रश्न मुत्थापयति— "अथातो दीक्षाया आवेदनस्यैव ; तदाहुर्यद् ब्राह्मणस्य दीक्षितस्य ब्राह्मणो ऽदीक्षिष्टेति दीक्षा मावेदयन्ति , कथं क्षत्रियस्यावेदयेदिति"–इति । 'अथ' दीक्षानन्तरम् , देवानां मनुष्याणां चाग्रे यत एतदीयदीक्षा कथनीया , 'अतः' कारणाद् दीक्षायाः 'आवेदनस्य' प्रकटीकरणस्यैव कश्चित् निर्णय उच्यते । 'तत्' तस्मिन् आवेदने सन्दिहाना ब्रह्मवादिनः प्रश्न माहुः— ब्राह्मणस्य दीक्षाया ऊर्द्धम् "अदीक्षिष्टायं ब्राह्मणः"–इति † मन्त्रेण दीक्षा प्रख्यापनीया । तथा च तैत्तिरीया आमनन्ति— अदीक्षिष्टायं ब्राह्मण इति त्रिरुपांश्वाह , देवेभ्य एवैनं प्राह ; त्रिरुच्चैरुभयेभ्य एवैनं देवमनुष्येभ्यः प्राह"–इति ( सं० ६. १. ४. ३. ) । एवं सति क्षत्रियस्य दीक्षावेदने किं अस्मिन् मन्त्रे ब्राह्मणशब्दः

---

* "तत्पदितोरि" ख, ग, घ ।

† "अदीक्षिष्टायं ब्राह्मणः"–एतन्मात्र मेव मन्त्रस्वरूपम् । न चेष मन्त्रः साहितिकः, तदुक्तं तैत्तिरीयसंहिताभाष्ये सायणेन "अध्वर्यु. कश्चिन्मन्त्र मुच्चाय विनियुङ्क्ते अदीक्षिष्टाय ब्राह्मण इति॰—॰।"–इति ( १ २ १ )। एतदेव दीक्षितावेदन मुच्यते ।

क्षत्रियपरत्वेनोहनीयः, आहोस्विदविकृत एव पठनीयः ? इति प्रश्नाभिप्रायः ॥

तत्रोत्तर माह— "यद्येवैतद्‌ ब्राह्मणस्य दीक्षितस्य ब्राह्मणो ऽदीक्षिष्टेति दीक्षा मावेदयन्त्येव मेवैतत्‌ क्षत्रियस्यावेदयेत्‌ पुरोहितस्यार्षेयेणेति"—इति । अत्र शब्दो नोहितव्यः, अविकृत एव ब्राह्मणशब्दः क्षत्रियदीक्षावेदनेऽपि प्रयोक्तव्यः । यदि ब्राह्मणप्रवरो ऽपेक्षितः, तदानीं 'पुरोहितस्य' ब्राह्मणस्य सम्बन्धिनार्षेयेण प्रयोगः कर्त्तव्यः । तथा चापस्तम्बः क्षत्रियवैश्ययोरपि ब्राह्मणशब्देनैवावेदनं दर्शयति— "अदीक्षिष्टायं ब्राह्मणो ऽसावमुष्यपुत्रो ऽमुष्यपौत्रो ऽमुष्यनप्ता ऽमुष्याः पुत्रो ऽमुष्याः पौत्रो ऽमुष्या नप्तेति ; ब्राह्मणो वा एष जायते, यो दीक्षते *; तस्माद्राजन्यवैश्या अपि ब्राह्मण इत्येवावेदयति"—इति ( श्रौ० १०. ११. ५, ६. † ) ॥

ईदृशस्यावेदनस्य पूज्यतां दर्शयति— "तत्तदितीद्"—इति । पूर्ववद्‌ ( ११४पृ० ) व्याख्येयम्‌ ॥

ब्राह्मणत्वेनावेदन मुपपादयति — "निधाय वा एष स्वान्यायुधानि ब्रह्मण एवायुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञ मुपावर्त्तते; तस्मात्‌ तस्य पुरोहितस्यार्षेयेण दीक्षा मावेदयेयुः, पुरोहितस्यार्षेयेण प्रवरं प्रवृणीरन्‌"—इति । 'स्वान्यायुधानि' धनुरादीनि, 'ब्रह्मण आयुधानि' स्फ्यकपालादीनि ‡; यस्मात्‌ स्वायुधपरित्यागपूर्वकं ब्रह्मायुधस्वीकारेण ब्राह्मणो भूत्वा यज्ञं प्राप्तवान्‌,

---

* 'मातुरग्रेऽधिजननं, द्वितीयं मौञ्जिबन्धने।
तृतीयं यज्ञदीक्षायां, द्विजस्य श्रुतिचोदनात्‌ ॥"—इति म० सं० २. १६९ ।

† "सर्वेणं पित्र्याद्यावेदयति, त्रिवर्षैः"—इति पदान्वयः ।

‡ १०२पृ० 'एतानि वै'—इत्यादि मन्त्रेऽस्य द्रष्टव्यम्‌ । १०५पृ० ७पं० अपि द० ।

तस्मात् 'तस्य' यजमानस्य पुरोहितसम्बन्धिना गोत्रेण दीक्षावेदनम्, तथा प्रवरोऽपि विज्ञेयः * ॥ ७ ( २५ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां चतुर्थाध्याये
( चतुस्त्रिंशाध्याये ) सप्तमः खण्डः ॥ ७ ( २५ ) ॥

---

॥ अथ अष्टमः खण्डः ॥

अथातो यजमानभागस्यैव तदाहुः प्राश्नीयात् क्षत्रियो यजमानभागा३ं† न प्राश्नीया३त् इति यत् प्राश्नीयादहुताद्धुतं प्राश्य पापीयान्स्याद् यन्न प्राश्नीयाद् यज्ञादात्मान मन्तरियाद् यज्ञो वै यजमानभागः स ब्रह्मणे परिहृत्यः पुरोहितायतनं वा एतत् क्षत्रियस्य यद् ब्रह्मार्धात्मो ह वा एष क्षत्रियस्य यत् पुरोहित उपांशु परोक्षेणैव प्राशितरूप माप्नोति नास्य प्रत्यक्षम्भक्षितो भवति यज्ञ उ ह वा एष प्रत्यक्षं यद् ब्रह्मा ब्रह्मणि हि सर्वो यज्ञः प्रतिष्ठितो

---

* अयमपि श्रौतपरिशिष्टादिष्वेव पञ्चमाध्यायीयपञ्चमखण्डे "पुरोधयैव दीक्षयैव प्रवरेणैव"-इति।

† "यजमानभागा३ं" ख, ग, घ, ।

यज्ञे यजमानो यज्ञ एव तद् यज्ञ मप्यत्यर्जन्ति यथाऽप्स्वापो यथाऽग्नावग्निस्तद्वै नातिरिच्यते तदेनं न हिनस्ति तस्मात् स ब्रह्मणे परिहृत्यो ऽग्नौ हैके जुह्वति प्रजापतेर्विभान्नाम लोकस्तस्मिंस्त्वा दधामि सह यजमानेन स्वाहेति तत्तथा न कुर्याद् यजमानो वै यजमानभागो यजमानं ह सो ऽग्नौ प्रवृणक्ति य एनं तत्र ब्रूयाद् यजमान मग्नौ प्रावार्क्षीः प्राणाग्निः प्राणान् धक्ष्यति मरिष्यति यजमान इति शश्वत् तथा स्यात् तस्मात्तस्याशां नेयादाशां नेयात्॥ ८ (२६)॥

## इत्यैतरेयब्राह्मणे सप्तमपञ्चिकायां चतुर्थोऽध्यायः॥४॥

दर्शपूर्णमासयोः यजमानभागप्राशनं विहितम् *, तदत्र दीक्षणीयादीष्टिषु चोदकप्राप्तम् †; क्षत्रियस्य तत्प्राशने निर्णयं वक्तुं विचार मवतारयति— “अथातो यजमानभागस्यैव; तदाहुः प्राश्नीयात् क्षत्रियो यजमानभागाँ३, न प्राश्नीयात३ ? इति”- इति। ‘अथ’ दीक्षावेदननिर्णयानन्तरम्, दीक्षणीयादीष्टयो यतो वृत्तिस्थाः, ‘अतः’ कारणात्, तत्र यजमानभागस्यैव, प्रकारविशेष

---

* “प्राग् स्विष्टकृतो यजमानभागम्”-इति आप० श्रौ० १.१९.२। “अथ यद् पूर्वार्धं पुरोडाशस्य मध्यं पुरस्ताद् ध्रुवायै निदधाति, यजमानो वै ध्रुवा, तद् यजमानस्य प्राशितं भवति”-इति शत० ब्रा० १.८.१.३८।

† “पौर्णमासेनेष्टिपशुसोमा उपदिष्टाः”-इति आप० श्रौ० ६.१.१।

उच्यत इति शेषः । 'तत्' तस्मिन् भागे ब्रह्मवादिनो विचार माहुः। क्षत्रियो ब्राह्मणवत् किं यजमानभागं प्राश्नीयात्, उत न? इति। विचारार्थं प्लुतिद्वयम् ॥

पक्षद्वये दोष मुद्भावयति—"यत्प्राश्नीयादहुतादुतं प्राश्य पापीयान्त्स्याद्, यन्न प्राश्नीयाद् यज्ञादात्मान मन्तरियाद्; यज्ञो वै यजमानभागः"–इति। हुत मत्तीति 'हुतात्', तादृशो न भवतीति 'अहुतात्'; "अथैता अहुतादो यद्राजन्यो वैश्यः शूद्रः" –इति पूर्व मुक्तम् (१०३पृ०); अतोऽयं क्षत्रियः 'अहुतात्' योग्यतारहितो यदि हुतशेषं प्राश्नीयात्, तदानीं 'पापीयान्' अत्यन्तपापयुक्तो भवेत्। अप्राशनपक्षे तु यज्ञादात्मानम् 'अन्तरियाद्' विच्छिन्द्यात्; यजमानभागस्य यज्ञहेतुत्वेन यज्ञस्वरूपत्वात् तद्भागराहित्ये यज्ञात् स्वयं विच्छिन्नो भवति ॥

उक्तं दोषद्वयं परिहर्तुं पक्षान्तर माह— "स ब्रह्मणे परिहृत्यः"–इति। 'सः' यजमानभागः ऋत्विग्विशेषाय 'ब्रह्मणे' 'परिहृत्यः' परितः सर्वात्मना समर्पणीयः ॥

तत्समर्पणे दोषद्वयराहित्यं दर्शयति— "पुरोहितायतनं वा एतत् क्षत्रियस्य, यद् ब्रह्मार्धात्मो ह वा एष क्षत्रियस्य; यत् पुरोहित उपाह्न परोक्षेणैव प्राशितरूप माप्नोति, नास्य प्रत्यक्षं भक्षितो भवति"–इति। ऋत्विग्रूपो 'ब्रह्मा' इति यदस्ति, एतत् क्षत्रियस्य पुरोहितायतनम्; पुरोहितो योऽस्ति, एषः क्षत्रियस्य 'अर्धात्मा ह वै' अर्धदेह एव। उ ह वा इति निपातसमूहो ऽवधारणार्थः। अर्धशरीरस्थानीयपुरोहितरूपेण ब्रह्मणा तस्मिन् भागे भक्षिते 'परोक्षेणैव' व्यवधानेनैव 'प्राशितरूपं' प्राशितसादृश्यं प्राप्नोति। एवशब्द उपशब्दश्च मिलित्वा अवधारणार्थौ। 'अस्य'

क्षत्रियस्य 'प्रत्यक्षम्' अव्यवधानेन स्वमुखे स भागो भक्षितो न भवति ; एवं सति व्यवधानेन भक्षितत्वाद् यज्ञान्तरायो न भविष्यति, स्वमुखेन भक्षणाभावादयं पापीयानपि न भविष्यति ॥

ब्राह्मणस्तद्भागप्राशनं प्रशंसति— "यज्ञ उ ह वा एष प्रत्यक्षं यद् ब्रह्मा, ब्रह्मणि हि सर्वो यज्ञः प्रतिष्ठितो, यज्ञे यजमानो, यज्ञ एव तद् यज्ञ मप्यर्जन्ति ; यथा ऽप्स्वापो यथा ऽग्नावग्निं, तद्वै नातिरिच्यते तदेनं न हिनस्ति तस्मात् स ब्रह्मणे परिहृत्यः"— इति । यो ब्रह्मास्ति, एष 'प्रत्यक्षम्' अव्यवधानं यथा भवति तथा 'यज्ञ उ ह वै' यज्ञस्वरूप एव ; तत्साधकत्वात् । किञ्च ब्रह्मण्येव सर्वो यज्ञः प्रतिष्ठितः ; वेदत्रयवैकल्यपरिहर्त्तृत्वेन ब्रह्मणो भिषग्रूपत्वस्योक्तत्वात् * । तस्मिंश्च प्रतिष्ठिते यज्ञे, यजमानो ऽपि प्रतिष्ठितः; तत्फलभागित्वात् । एवं सति 'तत्' तेन भागप्राशनेन 'यज्ञे एव' ब्रह्मरूपे भागरूपं 'यज्ञम्' अपि 'अप्यर्जन्ति' सम्यक् प्रक्षिपन्ति । तत्र दृष्टान्तः—यथा लोके अप्सु प्रक्षिप्ता आपः एकत्वेन संसृज्यन्ते , यथा वाग्नौ प्रक्षिप्तमग्निमेकीभूतं पश्यामः , 'तद्वै' तथा ब्रह्मण्याशितं हविः 'नातिरिच्यते' अतिरिक्तं न भवति किन्तु यज्ञरूपेण ब्रह्मणा सहैकीभूतं हविः 'एनं' क्षत्रियं 'न हिनस्ति' न बाधते। तस्मात् 'सः' यजमानभागो ब्रह्मणे 'परिहृत्यः' समर्पणीयः ॥

पक्षान्तरमुपन्यस्य दूषयति— "अग्नौ हैके जुह्वति ; प्रजापतेर्विभावाम लोकस्तस्मिंस्त्वा दधामि सह यजमानेन स्वाहेति ; तत्तथा न कुर्याद् ; यजमानो वै यजमानभागो यजमानं ह सो ऽग्नौ प्रवृणक्ति ; य एनं तत्र ब्रूयाद् यजमान मग्नौ प्रावार्क्षीः ,

* ५. ५. ६,—इभा॰ २०७४॰ इंध॰ द०।

मास्याग्निः प्राणान् धक्ष्यति,– मरिष्यति यजमान इति ; प्रश्वत् तथा स्यात् ; तस्मात्तस्याशां नेयादाशां नेयात्''–इति । 'एके' याज्ञिकाः , तं यजमानभागं अग्नौ जुह्वति । तत्र ''प्रजापतेः''–इत्यादिको मन्त्रः । प्रजापतेः सम्बन्धी यो लोकः, तस्य ''विभान्'' –इति तन्नामधेयम् ; विशेषेण भातीति तद्व्युत्पत्तेः । हे यजमानभाग ! यजमानेन सह त्वां तस्मिन् लोके 'दधामि' प्रक्षिपामि , तदर्थ मिदं स्वाहुत मस्तु । अनेन मन्त्रेण यत् होमानुष्ठान मस्ति, तत्तथा न कुर्यात् । यजमानभागस्य यजमानस्वरूपत्वेन तस्य भागस्य होमे 'सः' होमकर्त्ता यजमान मेवाग्नौ 'प्रहणक्ति' प्रहर्ता दग्धं करोति । 'तत्र' तदानीं 'यः' प्रतु रागत्य 'एनं' कर्त्तारं 'ब्रूयात्' शपेत । कथ मिति तदुच्यते— हे होमकर्त्तस्त्वं यजमान मग्नौ 'प्रावार्क्षीः' प्रहृतवान् दग्धवानसि , 'अस्य' यजमानस्य प्राणानग्निः प्रकर्षेण धक्ष्यति, यजमानो मरिष्यतीति ; स शापो ऽवश्यं तथैव स्यात् । तस्मात् 'तस्य' होमस्य 'आशाम्' इच्छा मपि 'नेयात्' न प्राप्नुयात् । अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ८(२९) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां चतुर्थाध्याये
( चतुस्त्रिंशाध्याये ) अष्टमः खण्डः ॥ ८ ( २९ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'–नामभाष्ये
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायाः चतुर्थोऽध्यायः ॥

## ॥ अथ पञ्चमाध्यायः ॥

( ३५ )

॥ अथ प्रथमः खण्डः ॥



॥ ॐ ॥ विश्वन्तरो ह सौषद्मनः श्यापर्णान् परिचक्षाणो विश्यापर्णं यज्ञ माजह्रे तद्धानुबुध्य * श्यापर्णास्तं यज्ञ माजग्मुस्ते ह तदन्तर्वेद्यासाञ्चक्रिरे तान् ह † दृष्ट्वोवाच पापस्य वा इमे कर्मणः कर्त्तार आसतेऽपूताये वाचो वदितारो यच्छ्यापर्णा इमानुत्थापयतेमे मेऽन्तर्वेदि मासिषतेति तथेति तानुत्थापयाञ्चक्रुस्ते होत्थाप्यमाना रुरुविरे ये तेभ्यो भूतवीरेभ्योऽसितमृगाः कश्यपानां सोमपीथ मभिजिग्युः पारिक्षितस्य जनमेजयस्य विकश्यपे यज्ञे तैस्ते तत्र वीरवन्त आसुः क‡ स्वित्सोऽस्मा-कास्ति वीरो य इमं सोमपीथ मभिजेष्यतीत्ययं मह मस्मि वो वीर इति होवाच रामो मार्गवेयो रामो हास मार्गवेयोऽनूचानः श्यापर्णीयस्तेषां होत्ति-ष्ठता मुवाचापि नु राजन्नित्थंविदं वेदेरुत्थापय-न्तीति यस्त्वं कथं वेत्थ ब्रह्मबन्धविति ॥ १ ( २७ ) ॥

---

* "तद्धानुबुध्य." क, ख, ग, ङ, च, परं आर्षविरुद्धः ।

† "तान् हा" ख।

‡ "क."—इति सर्वसम्मतपाठः क पुस्तके।

॥ श्रीगणेशाय नमः ॥

क्षत्रियो यजमानो यस्तस्य होमादि वर्णितम् ।

फलनामा तु चमसस्तस्यैवात्रोपवर्ण्यते ॥ १ ॥

तत्रादौ क्षत्रियस्य सोमभक्षराहित्यप्रदर्शनार्थं मुपाख्यान माह— "विश्वन्तरो ह सौषद्मनः श्यापर्णान् परिचक्षाणो विश्यापर्णं यज्ञ माजह्रे; तद्धानुबुध्य श्यापर्णास्तं यज्ञ माजग्मुस्ते ह तदन्तर्वेद्यासाञ्चक्रिरे; तान् ह दृष्ट्वोवाच,— पापस्य वा इमे कर्मणः कर्त्तार आसते, ऽपूतायै वाचो वदितारो यच्छ्यापर्णा, इमानुत्थापयतेमे मेऽन्तर्वेदि मासिषतेति *; तथेति, तानुत्थापयाञ्चक्रुः" —इति। शोभनं सद्म राजगृहं यस्य राज्ञः, सोऽयं 'सुषद्मा', तस्य पुत्रः 'सौषद्मनः'। स च 'विश्वन्तर'नामकः। स कदाचिद् यागं चिकीर्षुः 'श्यापर्णान्' तन्नामकान् ब्राह्मणविशेषान् 'परिचक्षाणः' परिवर्जयन् निराकुर्वन् 'विश्यापर्णं यज्ञ माजह्रे' श्यापर्णनामकब्राह्मणविरहित मेव यज्ञ मनुष्ठितवान्। 'तद्ध' तत्सर्वं श्यापर्णनामका ब्राह्मणाः 'अनुबुध्य' मनुष्यमुखादवगत्य, विश्वन्तरेण राज्ञा तदानी मनाहूता एव तं यज्ञ माजग्मुः। आगत्य 'ते ह' त एव श्यापर्णाः 'तदन्तर्वेदि' तस्य यज्ञस्य वेदिमध्ये 'आसाञ्चक्रिरे' राजानुज्ञा मन्तरेण स्वय मेवोपविष्टवन्तः। राजा 'तान्' उपविष्टान् श्यापर्णान् दृष्ट्वा, स्वकीयान् वेत्रपाणीन् पुरुषानुवाच। 'यत्' ये श्यापर्णाः सन्ति, इमे 'अपूतायै वाचो वदितारः' अपूतां वाचं मदीयावज्ञारूपां वदन्तः 'पापस्य कर्मणः कर्त्तारः' धौर्त्यरूपं व्यापारं कर्त्तुं मुद्यता इहासते; 'इमे' श्यापर्णाः 'मेऽन्तर्वेदि'

* 'मा आसिषत' सप्तमीतोपविष्टा मा भवन्त्वित्यर्थं एषाम न्यायः स्यात्, अथवा मूर्खे मुखो नास्त्वो ऽव्याख्यात एव मवेदिति खेदम्।

मदीयाया वेदेर्मध्ये 'मासिषत' स्वय मेवोपविष्टाः ; इमान् भूतवीरान् हे वेतपाण्यः ! उत्थापयत । 'इति' एवं राज्ञोक्ता वेतपाण्यः 'तथा'—इत्यङ्गीकृत्य 'तान्' श्यापर्णानुत्थापयाञ्चक्रुः ॥

तेषां श्यापर्णानां वृत्तान्त माह— "ते होत्थाप्यमाना रुरुविरे; ये तेभ्यो भूतवीरेभ्यो ऽसितमृगाः कश्यपानां सोमपीथ मभिजग्मुः पारिक्षितस्य जनमेजयस्य विकश्यपे यज्ञे, तैस्ते तत्र वीरवन्त आसुः ; क स्वित्सो ऽस्मास्विह वीरो य इमं सोमपीथ मभिजेष्यतीति"—इति । वेतपाणिभिरुत्थाप्यमानाः 'ते' श्यापर्णा ब्राह्मणाः 'रुरुविरे' इमं शब्दं परस्पर मुच्चैर्ध्वनिं कृतवन्तः । तत्र दृष्टाः केचिद् अन्यान् प्रति काञ्चित्पुरातनीं कथा मूचुः । परिक्षितपुत्रो जनमेजयाख्यो यो राजा, स कदाचित् कश्यपवंशोत्पन्नान् ब्राह्मणान् विहाय 'विकश्यपं' यज्ञं भूतवीरसञ्ज्ञकैर्ब्राह्मणैर्ऋत्विग्भिः कारयामास । तदानीं कश्यपानां मध्ये 'ये' केचिद् असितमृगनामकाः पुरुषाः 'सोमपीथं' जनमेजयसम्बन्धिनं सोमयागं 'तेभ्यः' भूतवीरसञ्ज्ञकेभ्यो ब्राह्मणेभ्यः बलादाकृष्य स्वयम् 'अभिजिग्मुः' अभितो जयं प्राप्ताः, ( बहुषु यज्ञप्रयोगेषु विजिगीषुकथां कृत्वा ) 'तान्' भूतवीरान् ब्राह्मणान् पराजयं प्रापय्य स्वय मसितमृगनामानो जितवन्तः ; 'तैः' असितमृगैः 'ते' काश्यपाः 'तत्र' जनमेजयस्य यज्ञे 'वीरवन्तः' शूरपुरुषोपेता आसुः । एतां कथा मुदाहृत्य श्यापर्णाः स्वकीयानेवं पृच्छन्ति,— 'अस्माकं' राज्ञा तिरस्कृताना मस्माकं मध्ये 'यः' पुमान् 'इमं सोमपीथं' विश्वन्तरस्य राज्ञः सोमयाग मभिजेष्यति, स तादृशो वीरः 'कस्विदस्ति' यः कोऽपि अस्ति ? 'इति' एव मुच्चैः शब्दं चक्रुः ॥

---

* अस्माकेष्वदमशब्दोऽप्यदीप्यतनः, ततो विभक्तेर्लुक् इयम् ( ऋ०सं०१.८०.१ )।

तस्य प्रश्नस्य श्यापर्णानां मध्ये केनचिदुक्त मुत्तरं दर्शयति— "अयमहमस्मि वो वीर इति होवाच रामो मार्गवेयः"–इति। मृगयुर्नाम काचिद् योषित्, तस्याः पुत्रो रामनामा कश्चिद् ब्राह्मण एवमुवाच — हे श्यापर्णाः! 'वः' युष्माकं मध्ये 'वीरः' परकीयान् विजेतुं शूरः 'अयमहमस्मि' भवतां पुरतो वर्त्तमानोऽस्मीति ॥

तस्य रामस्य वृत्तान्त माह— "रामो हास मार्गवेयोऽनूचानः श्यापर्णीयस्तेषां होत्तिष्ठता मुवाचापि नु राजन्नित्थंविदं वेदेरुत्थापयन्तीति; यस्त्वं कथं वेत्थ ब्रह्मबन्धविति"–इति। 'श्यापर्णीयः' श्यापर्णानां ब्राह्मणानां सम्बन्धी*, मृगयुपुत्रो रामः 'अनूचानः' साङ्गवेदशास्त्रपारङ्गत आस। तत्रावस्थितानां तेषां श्यापर्णानां वेदेरुत्तिष्ठतां मध्ये ऽवस्थितो रामो विप्रान्तरं प्रत्येव मुवाच,— हे राजन्! 'इत्थंविदं' यागसम्बन्धिप्रयोगप्रकाराभिज्ञ मा मपि त्वदीया वेत्रपाणय: 'अनु' चिप्रं वेदेरुत्थापयन्ति, तदेतदयुक्त मिति। तच्छ्रुत्वा विप्रान्तरो राजैव मुवाच— हे 'ब्रह्मबन्धो' ब्राह्मणाधम राम! यस्त्वं धार्ष्ट्यात् ब्रवीषि, स त्वं कथं वेत्थ? इति। अत्र राजोवाचेत्यध्याहर्त्तव्यम् ॥ १ (२७) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां पञ्चमाध्याये
(पञ्चत्रिंशाध्याये) प्रथमः खण्डः ॥ १ (२७) ॥

---

* अस्ति श्यापर्णशब्दो बिदाद्यन्तर्गणोपगवादिगणे पठित (पा०२,४,६७.), कार्त्तकौजपादिगणे च पैलश्यापर्णेया कपिश्यापर्णेया इति (पा०६,२,३७.)। तथिदान्ध्यापर्ण. सायकायन आह"–इति शत० ब्रा०१० ४,१,१०। तत्रैवान्यत्राप्य च ६,२,१,३९;९,५,२,१।

॥ अथ द्वितीयः खण्डः ॥

यत्रेन्द्रं देवताः पर्यवृञ्जन् विश्वरूपं त्वाष्ट्रमभ्यमंस्त वृत्रमस्तृत यतीन्त्सालावृकेभ्यः प्रादादरुर्मघानवधीद् बृहस्पतेः प्रत्यवधीदिति तत्रेन्द्रः सोमपीथेन व्यार्ध्यतेन्द्रस्यानु व्यृद्धिं क्षत्रं सोमपीथेन व्यार्ध्यतापीन्द्रः सोमपीथे ऽभवत् त्वष्टुरामुष्य सोमं तद् व्यृद्धमेवाद्यापि क्षत्रं सोमपीथेन स यस्तं भक्षं विद्यात् क्षत्रस्य सोमपीथेन व्यृद्धस्य येन क्षत्रं समृध्यते कथं तं वेदेत्यथापयन्तीति वेत्थ ब्राह्मण त्वं तं भक्षा३ं वेद हीति तं वै नो ब्राह्मण ब्रूहीति तस्मै वै ते राजन्निति होवाच ॥ २ (२८) ॥

अथ रामः स्वकीयं वेदनं राज्ञोऽग्रे दर्शयति— "यत्रेन्द्रं देवताः पर्यवृञ्जन्; विश्वरूपं त्वाष्ट्रमभ्यमंस्त, वृत्रमस्तृत, यतीन्त्सालावृकेभ्यः प्रादादरुर्मघानवधीद्, बृहस्पतेः प्रत्यवधीदिति; तत्रेन्द्रः सोमपीथेन व्यार्ध्यतेन्द्रस्यानु व्यृद्धिं क्षत्रं सोमपीथेन व्यार्ध्यतापीन्द्रः सोमपीथे ऽभवत् त्वष्टुरामुष्य सोमं; तद् व्यृद्धमेवाद्यापि क्षत्रं सोमपीथेन; स यस्तं भक्षं विद्यात् क्षत्रस्य सोमपीथेन व्यृद्धस्य येन क्षत्रं समृध्यते, कथं तं वेदेत्यथापयन्तीति"—इति । हे विश्वन्तर! मदीयं वेदनं शृणु । पुरा कदाचिद् देवताः इन्द्रस्योपरि पञ्चापराधान् सम्पाद्य इन्द्रं 'पर्यवृञ्जन्' यज्ञेषु परितो वर्जितवन्तः । 'यत्र' यदा वर्जनं कृतं, तत्र तत्रेन्द्रः 'सोमपीथेन व्यार्ध्यत' सोमपानेन वियुक्तो ऽभूत् । इन्द्रस्य ये ऽपराधास्ते ऽभिधीयन्ते ।

त्वष्टुः पुत्रं विश्वरूपनामानं ब्राह्मणम् 'अभ्यमंस्त' इन्द्रो हिंसितवान्। तथा तेन त्वष्ट्रेत्यादिश्रुतं वृत्रनामानं ब्राह्मणम् 'अस्तृत' हिंसितवान्। एतदुभयं तैत्तिरीयैः "विश्वरूपो वै त्वाष्ट्रः"– "त्वष्टा हतपुत्रः"– इत्यनुवाकद्वये विस्पष्ट माम्नातम् *। तथा यतिवेषधरानसुरान् अस्त्रेण छित्त्वा 'सालावृकेभ्यः' आरण्यश्वभ्यः प्रादात् †। तथा अन्यानप्यरुर्मघनामकान् ब्राह्मणवेषानसुरान् अवधीत्। तथा स्वगुरोर्बृहस्पतेर्वाक्यं स्वकीयेन वाक्येन प्रत्यवधीत्। सोऽयं प्रतिघातो न युक्तः; तथा चापस्तम्बः स्मरति— "वाक्येन वाक्यस्य प्रतिघात माचार्यस्य वर्जयेच्छ्रेयसां च"–इति। एते पञ्चापराधाः तैर्निमित्तभूतैरिन्द्रस्य सोमपाने निवारिते सति 'व्यृद्धिं' तन्निवारणम् अनु 'क्षत्रं' सर्वोऽपि क्षत्रियजातिः 'सोमपीथेन व्यार्ध्यत' सोमपानेन वियुक्ताऽभूत्। तदूर्ध्वं 'सोमपीथे' सोमपानेऽपि स प्रवृत्तोऽभूत्। कथ मिति तदुच्यते— 'अमुष्य त्वष्टुः सोमम् आ', बलादपिबदिति शेषः। तथाच तैत्तिरीया आमनन्ति— "स यज्ञवेशसं कृत्वा प्रासहा सोम मपिबत्"–इति ‡। 'तत्' तथा सति, इन्द्रेण बलात्सोमे पीते सति, क्षत्रियान्तरस्य तत्सामर्थ्याभावादिदानी मपि क्षत्रं 'सोमपीथेन व्यृद्ध मेव' सोमपानरहित मेव

---

* तै० सं० २ ५, १ १; २, १।

† "इन्द्रो यतीन्त्सालावृकेभ्यः प्रायच्छत्"–इति तै० सं० ६ २, ७, ५। ता० ब्रा० ८, १, ४। 'वेदविरुद्धनियमोपेतान् यतीन्'–इति तत्र सायणः। ता० ब्रा० १२, ४, १०, 'यतीन्—एतन्नामकान् यज्ञविरोधिजनान्' इति तु तत्र सायणः।

‡ तै० सं० २, ५, ९ १। "इन्द्रो यज्ञवेशसम्"–इत्यादिः संहितापाठः। "इन्द्राणी देवी प्रासहा ददाना"–इति तै० ब्रा० २, ४, २, ७। "इन्द्रस्य प्रिया जाया वावाता प्रासहा नाम"–इति पुरस्तादाम्नात मिहैव (९८पृ० २पं०)।

ऽवतिष्ठते । 'येन' भक्षविशेषेण सर्वं समृद्धं भवति, तादृशो योऽन्योर भक्षः, सोमपानेन वियुक्तस्य चत्रस्य सम्भवति, तं भक्षं यः पुमान् विद्यात्, 'तं' तादृशं चत्रियभक्षविद मस्मदादिपुरुषं कथ मेते वेत्तपाणयो वेदेकत्यापयतीति रामस्योपालम्भः ॥

अथ रामविश्वन्तरयोरुक्तिप्रत्युक्ती दर्शयति— "वेत्थ ब्राह्मण त्वं तं भक्षा३ ? वेद हीति ; तं वै नो ब्राह्मण ब्रूहीति ; तस्मै वै ते राजन्निति होवाच"—इति । हे 'ब्राह्मण' राम ! त्वं तादृशं भक्षं किं वेत्थ ? इति विश्वन्तरस्य प्रश्नः ; तदर्था प्लुतिः । 'वेद हि' जानास्येवेति रामो ऽब्रवीत् । हे ब्राह्मण! 'तं वै' त्व मेव चत्रिय-भक्षं 'नः' अस्माकं ब्रूहीति विश्वन्तरः पप्रच्छ । हे राजन्! 'तस्मै ते वै' तादृशाय पृच्छते तुभ्य मेव, कथयामीति राम उवाच ॥ (२) २८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां पञ्चमाध्याये
(पञ्चत्रिंशाध्याये) द्वितीयः खण्डः ॥ २ (२८) ॥

---

॥ अथ तृतीयः खण्डः ॥

त्रयाणां भक्षाणा मेक माहरिष्यन्ति सोमं वा दधि वा ऽपो वा स यदि सोमं ब्राह्मणानां स भक्षो ब्राह्मणांस्तेन भक्षेण जिन्विष्यसि ब्राह्मणकल्पस्ते प्रजाया माजनिष्यत आदाय्यापाय्यावसायी यथा-

कामप्रयाप्यो यदा वै क्षत्रियाय पापं भवति ब्राह्मणकल्पो ऽस्य प्रजायामाजायत ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा ब्राह्मणता मभ्युपेतोः स ब्रह्मबन्धवेन जिज्यूषितो ऽथ यदि दधि वैश्यानां स भक्षो वैश्यांस्तेन भक्षेण जिन्विष्यसि वैश्यकल्पस्ते प्रजायामाजनिष्यते ऽन्यस्य बलिकृदन्यस्याद्यो यथाकामज्येयो यदा वै क्षत्रियाय पापं भवति वैश्यकल्पो ऽस्य प्रजायामाजायत ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा वैश्यता मभ्युपेतोः स वैश्यतया जिज्यूषितो ऽथ यद्यपः शूद्राणां स भक्षः शूद्रांस्तेन भक्षेण जिन्विष्यसि शूद्रकल्पस्ते प्रजायामाजनिष्यते ऽन्यस्य प्रेष्यः कामोत्थाप्यो यथाकामवध्यो यदा वै क्षत्रियाय पापं भवति शूद्रकल्पो ऽस्य प्रजायामाजायत ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा शूद्रता मभ्युपेतोः स शूद्रतया जिज्यूषितः ॥ ( ३ ) २९ ॥

क्षत्रियस्य हेया भक्षास्त्रिविधाः, उपादेयो भक्ष एकः ; तत्र हेयान् भक्षान् दर्शयति— "त्रयाणां भक्षाणा मेकं माहरिष्यन्ति, सोमं वा दधि वा ऽपो वा"-इति । हेयानां त्रयाणां मध्ये भक्ष मेकं क्षत्रियस्य तव अनभिज्ञा ऋत्विज आहरिष्यन्ति । कं भक्ष मित्याशङ्का सोमं वा दधि वा जलं वेत्युक्तम् ॥

तत्र सोमपक्षे दोषं दर्शयति— "स यदि सोमं, ब्राह्मणानां स

भक्षो, ब्राह्मणांस्तेन भक्षेण जिन्विष्यसि ; ब्राह्मणकल्पस्ते प्रजाया माजनिष्यत,— आदाय्यापाय्यावसायी यथाकामप्रयाप्यो ; यदा वै क्षत्रियाय पापं भवति, ब्राह्मणकल्पोऽस्य प्रजाया माजायत, ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा ब्राह्मणता मभ्युपैतोः, स ब्रह्मबन्धवेन जिज्यूषितः"—इति। 'सः' यजमानः ऋत्विग् यदि वै विप्रकृतस्य क्षत्रियस्य 'सोमं' भक्षम्, आहरेदिति शेषः, 'सः' सोमो ब्राह्मणानां योग्यो भक्षः, तेन भक्षेण ब्राह्मणान् 'जिन्विष्यसि' प्रीणयिष्यसि ; न तु क्षत्रियस्य तव प्रीतिः। तथा सति 'ते' तव राज्ञः 'प्रजायां' सन्ततौ 'ब्राह्मणकल्पः' ईषदसमाप्तो ब्राह्मणः* आजनिष्यते। क्षत्रियधर्मेण शौर्येण रहितत्वात् तस्य ब्राह्मणसदृशत्वम्। स च पुत्रो ब्राह्मणवत् वक्ष्यमाणगुणचतुष्टयोपेतो भवति। आदानं प्रतिग्रहः, तच्छीलः 'आदायी' ; प्रतिग्रहश्च ब्राह्मणगुणः। ऋत्विग्भूत्वा सोमम् 'आ' समन्तात् पाययतीति 'आपायी' ; तदेतद् याजन मपि ब्राह्मणगुणः। अवस मन्नं तस्य सम्बन्धि याचन मावसः, त मावस मेति प्राप्नोति 'आवसायी' ; परगृहे सदा भोजनयाचन मपि ब्राह्मणगुणः। काम मिच्छा मनतिक्रम्य यथाकामं, तदनुसारेण 'प्रयाप्यः' निर्वासयितुं शक्यः ; क्षत्रियवैश्यादिवत् शौर्य्यधनाद्यभावात् यः कोऽप्यागत्य दुर्बलं ब्राह्मणं तद्गृहात् तदीयग्रामाद्वा निष्कासयितु मिच्छति, तदानी मयं ब्राह्मणो दुर्बलत्वात् तेन निःसारयितुं शक्यते। एव मेते चत्वारो धर्माः ब्राह्मणगुणाः। सोमं भक्षयतो राज्ञः, एतद्गुणकः पुत्रो जायते। किञ्च यदा प्रमादात् 'क्षत्रियाय पापं' क्षत्रियस्य किञ्चिन्निषिद्धाचरणं भवति, तदानीं तेन पापेन तस्य क्षत्रियस्य

* "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः"—इति पा॰ ५। ३। ६७ सू॰।

'प्रजायां' सन्ततौ 'ब्राह्मणकल्पः' शौर्यराहित्यादिना ब्राह्मणसदृशः पुत्र आजायते । 'अस्मात्' पापिनः क्षत्रियात् 'द्वितीयो वा तृतीयो वा' पुत्रो वा पौत्रो वा 'ब्राह्मणताम् अभ्युपैतोः' शौर्यादि-गुणरहितं ब्राह्मण्यं प्राप्तुं 'ईश्वरः'* समर्थो भवति । 'सः' ब्राह्मण-सदृशः क्षत्रियपुत्रो 'ब्राह्मणबन्धवेन' ब्राह्मणानां अधमबन्धुत्वेन ब्राह्मणोचितयाच्ञादिना 'जिज्यूषितः' जीवितुं मिष्टः, नीचरूप-दैन्यवृत्त्या जीवितुं प्रवृत्तो भवतीत्यर्थः ॥

सोमस्य भक्षणे दोषमुक्त्वा दध्नो भक्षणे दोषमाह— "अथ यदि दधि, वैश्यानां स भक्षो, वैश्यांस्तेन भक्षेण जिन्विष्यसि, वैश्यकल्पस्ते प्रजायामाजनिष्यते,— अन्यस्य बलिकृदन्यस्याद्यो यथाकामप्रज्येयो; यदा वै क्षत्रियाय पापं भवति, वैश्यकल्पोऽस्य प्रजायामाजायत, ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा वैश्यतामभ्युपैतोः, स वैश्यतया जिज्यूषितः"-इति । यदि ते दधिरूपं भक्षमाहरेत्, तदा दध्नो वैश्यभक्षत्वात् तेन वैश्यान् प्रीणयिष्यसि । ततस्तव सन्ततौ वैश्यसमानः पुत्र आजनिष्यते । वैश्यश्च वाणिज्यं कुर्वन् 'अन्यस्य' राज्ञो 'बलिकृत्' बलिं पूजां करोति, करं प्रयच्छतीत्यर्थः । अत एव 'अन्यस्य' राज्ञः 'आद्यः' भक्ष्योऽधीनो भवतीत्यर्थः । तस्य राज्ञः काममिच्छामनतिक्रम्य 'ज्येयः' अभिभवनीयो भवति । "ज्या अभिभवे"-इति धातुः † । त एते करप्रदान-पराधीनत्व-तिरस्कार्यत्वाख्या वैश्यगुणाः । यदा क्षत्रियस्य किञ्चित् पापं सम्भवति, तदा तस्य सन्ततौ वैश्यसदृशो

---

* "ईश्वरे तोसुन्-कसुनौ"-इति पा० ३. ४. १३ सू० ।

† "चतुर्भिर्धर्मैरेनमभिभवन्ति" श्रुतिः— अर्चया च, दानेन च, अज्येयतया च अवध्यतया च" -इति शत० ब्रा० ११. ५. ७. १ । 'ज्यानिर्हानिर्वयोहानिरभिभवः'-इति तृ० ब्रा० भा० ।

जायते । 'यस्मात्' क्षत्रियात् पापिनो ऽन्यः पुत्रः पौत्रो वा वैश्यतां प्राप्तुं समर्थो भवति । स च 'वैश्यतया' वैश्यत्वेन करप्रदानादिना जीवितुं प्रवृत्तो भवति ॥

दधिभक्षे दोष मुक्त्वा जलभक्षे दोष माह— "अथ यदपः, शूद्राणां स भक्षः, शूद्रांस्तेन भक्षेण जिन्विष्यसि ; शूद्रकल्पस्ते प्रजाया माजनिष्यते,—ऽन्यस्य प्रेष्य, कामोत्थाप्यो यथाकाम-वध्यो ; यदा वै क्षत्रियाय पापं भवति , शूद्रकल्पो ऽस्य प्रजाया माजायत , ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा शूद्रता मभ्युपैतोः, स शूद्रतया जिज्यूषितः"-इति । यदि ते क्षत्रियस्य कश्चिहत्विक् 'अपः' जलं भक्ष माहरेत् , तदानीं 'सः' जलात्मकः शूद्राणा भक्षः, तेन भक्षेण शूद्रान् प्रीणयिष्यसि । ततस्तव सन्ततौ शूद्रसदृशः पुत्र उत्पद्यते । शूद्रश्च 'अन्यस्य' उत्तमवर्णत्रयस्य 'प्रेष्यः' प्रेषणीयो भृत्यो भवति । तथा 'कामोत्थाप्यः' मध्य-रात्रादौ यदा कदाचिद् द्विजे इच्छा भवति , तदानी मयं मुत्था-प्यते । तथा तदीयं 'कामम्' इच्छाम् अनतिक्रम्य 'वध्यः' कुपितेन स्वामिना ताड्यो भवति । एते शूद्रगुणाः । क्षत्रियस्य कदाचित् पापे सति शूद्रसमानः पुत्रो जायते । 'यस्मात्' क्षत्रि-यात् अन्यः पुत्रः पौत्रो वा शूद्रत्वं प्राप्तुं समर्थो भवति । 'सः' पुत्रः शूद्रवर्णतया दासत्ववृत्त्या जीवितु प्रवृत्तो भवति ॥ ( ३ ) २९ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां पञ्चमाध्याये ( पञ्चत्रिंशाध्याये ) तृतीयः खण्डः ॥ ३ ( २९ ) ॥

॥ अथ चतुर्थः खण्डः ॥

एते वै ते त्रयो भक्षा राजन्निति होवाच येषा माशां नेयात् क्षत्रियो यजमानो ऽथास्यैष स्वो भक्षो न्यग्रोधस्यावरोधाश्च फलानि चौदुम्बराण्याश्वत्थानि प्लाक्षाण्यभिषुणुयात्तानि भक्षयेत् सो ऽस्य स्वो भक्षो यतो वा अधि देवा यज्ञेनेष्ट्वा स्वर्गं लोक मायंस्तत्रै-तांश्चमसान् न्युब्जंस्ते न्यग्रोधा अभवन् न्युब्जा इति हाप्येनानेतर्ह्याचक्षते कुरुक्षेत्रे ते ह प्रथमजा न्यग्रो-धानां तेभ्यो हान्ये ऽधिजातास्ते यन्नयञ्चो ऽरोहंस्त-स्मान्न्यङ् रोहति न्यग्रोहो न्यग्रोहो वै नाम तन्न्य-ग्रोहं सन्तं न्यग्रोध इत्याचक्षते परोक्षेण परोक्ष-प्रिया इव हि देवाः ॥ (४) ३० ॥

अथ क्षत्रियोचितं भक्षं दर्शयितुं मुक्तानां भक्षाणां क्षत्रियेषु हेयतां प्रकृत्याह— "एते वै ते त्रयो भक्षा राजन्निति होवाच ; येषा माशां नेयात् क्षत्रियो यजमानः"–इति । क्षत्रियो यागं कुर्वन् 'येषां' भक्षाणाम् 'आशाम्' इच्छा मपि 'नेयात्' न प्राप्नु-यात् । हे 'राजन्' विश्वन्तर । ते त्रयोऽपि 'एते' पूर्वं मुक्ताः ॥

उपादेयं भक्षं दर्शयति— "अथास्यैष स्वो भक्षो न्यग्रोधस्या-वरोधाश्च फलानि चौदुम्बराण्याश्वत्थानि प्लाक्षाण्यभिषुणुयात् तानि ; भक्षयेत् ; सो ऽस्य स्वो भक्षः"–इति । 'अथ' हेयभक्ष-कथनानन्तरम्, उपादेयो भक्षः कथ्यत इति शेषः । 'अस्य' राज्ञ एव 'एष' वक्ष्यमाणः स्वो भक्षः । को ऽसौ ? इति, सोऽभि धीयते — 'न्यग्रोधस्यावरोधाः' शाखाभ्यो ऽवाङ्मुखत्वेन प्ररोहन्तो

मूलविशेषाः, तथैवोदुम्बराश्वत्थप्लक्षाख्यानां वृक्षाणां फलानि च, 'तानि' सर्वाणि 'अभिषुणुयात्'; अभिषुत्य च यो रसो भवति, तं भक्षयेत्; 'सः' अयम् 'अस्य' क्षत्रियस्य सोचितो भक्षः ॥

अथ न्यग्रोधप्रशंसार्थं तदुत्पत्तिं दर्शयति— "यतो वा अधि देवा यज्ञेनेष्ट्वा स्वर्गं लोकमायंस्तत्रैतांश्चमसान् न्युब्जंस्ते न्यग्रोधा अभवन्, न्युब्जा इति हाप्येनानेतर्ह्याचक्षते; कुरुक्षेत्रे ते ह प्रथमजा न्यग्रोधानां, तेभ्यो हान्ये ऽधिजाताः"–इति। देवाः पुरा 'यतो वा अधि' यस्मात्प्रदेशस्य कुरुक्षेत्रस्योपरि यज्ञेनेष्ट्वा स्वर्गं लोकम् 'आयन्' प्राप्नुवन्, 'तत्र' तस्मिन् यज्ञप्रदेशे 'तान्' सोमचमसान् 'न्युब्जान्' अधोमुखानेतानस्थापयन्; अधोमुखाः 'ते' चमसाः न्यग्रोधवृक्षा अभवन्। 'एतर्हि' इदानीमपि तस्मिन् कुरुक्षेत्रे 'एनान्' न्यग्रोधवृक्षान् 'न्युब्जाः'–'इति' अनेन नाम्ना आचक्षते। 'ते' कुरुक्षेत्रदेशस्था वृक्षा भूलोकवर्त्तिनां सर्वेषां न्यग्रोधवृक्षाणां मध्ये 'प्रथमजाः' प्रथमत उत्पन्नाः; 'तेभ्यः' तद्देशवर्त्तिन्यग्रोधवृक्षेभ्यः 'अन्ये' देशान्तरवर्त्तिनो न्यग्रोधाः 'अधिजाताः' आधिक्येनोत्पन्नाः ॥

न्यग्रोधशब्दं निर्वक्ति— "ते यन्न्यञ्चो ऽरोहंस्तस्मान्न्यङ् रोहति न्यग्रोहो, न्यग्रोहो वै नाम; तन्न्यग्रोहं सन्तं न्यग्रोध इत्याचक्षते परोक्षेण; परोक्षप्रिया इव हि देवाः"–इति। 'ते' चमसाः 'यद्' यस्मात् कारणात् 'न्यञ्चः' अधोमुखाः 'अरोहन्' प्रादुर्भूताः, 'तस्मात्' कारणात् 'न्यङ्' अधोमुखो 'रोहति' प्रादुर्भवतीति व्युत्पत्त्या 'न्यग्रोहः' सम्पन्नः। स च वस्तुतो न्यग्रोह इत्येव नामाऽऽसीत्, तस्य नाम्नो व्युत्पत्त्यनुसारित्वात्; तथापि न्यग्रोहं सन्तं वृक्षं लौकिका हकारस्य धकारादेशं कृत्वा न्यग्रोध इति परोक्ष-

नाम्ना व्यवहरन्ति; 'देवानां' पूज्यानां आचार्योपाध्यायादीनां परोक्षनामप्रियत्वात् ॥ (४) ३० ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकाया पञ्चमाध्याये
(पञ्चत्रिंशाध्याये) चतुर्थः खण्डः ॥ ४ (३०) ॥

---

॥ अथ पञ्चमः खण्डः ॥

तेषां यच्चमसानां रसो ऽवाङैत्से ऽवरोधा अभवन्नथ य ऊर्ध्वस्तानि फलान्येष ह वाव क्षत्रियः स्वाद्भक्षाद्भवति यो न्यग्रोधस्यावरोधांश्च फलानि च भक्षयत्युपा ह परोक्षेणैव सोमपीथ माप्नोति नास्य प्रत्यक्षं भक्षितो भवति परोक्ष मिव ह वा एष सोमो राजा यन्न्यग्रोधः परोक्ष मिवैष ब्रह्मणो रूप मुपनिगच्छति यत् क्षत्रियः पुरोधयैव दीक्षयैव प्रवरेणैव क्षत्रं वा एतद् वनस्पतीनां यन्न्यग्रोधः क्षत्रं राजन्यो नितत इव ह्येषु क्षत्रियो राष्ट्रे वसन् भवति प्रतिष्ठित इव नितत इव न्यग्रोधो ऽवरोधैर्भूम्यां प्रतिष्ठित इव तद्यत् क्षत्रियो यजमानो न्यग्रोधस्यावरोधांश्च फलानि च भक्षयत्यात्मन्येव तत् क्षत्रं वनस्पतीनां प्रतिष्ठापयति क्षत्र आत्मानं क्षत्रे ह वै स

आत्मनि क्षत्रं वनस्पतीनां प्रतिष्ठापयति न्यग्रोध इवावरोधैर्भूम्यां प्रति राष्ट्रे तिष्ठत्युग्रं हास्य राष्ट्रमव्यथ्यं भवति य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानः ॥ ५ ( ३१ ) ॥

न्यग्रोधवृक्षस्योत्पत्तिमुक्त्वा तदीयानामवरोधानां फलानां चोत्पत्तिं दर्शयति— "तेषां यद्यमसानां रसो ऽवाङैत्, ते ऽवरोधा अभवन्नथ य ऊर्ध्वस्तानि फलानि"—इति । 'तेषाम्' अधोमुखत्वेनावस्थितानां चमसानां वटवृक्षत्वे सति चमसगतो यो रसः, सः 'अवाङैत्' अधोमुखो ऽगच्छत् । 'ते' रसविशेषाः 'अवरोधाः' अधोमुखत्वेनोत्पन्नाः वटशाखाभ्यो निर्गता मूलविशेषा अभवन् । 'अथ' तद्वैलक्षण्येन यो रस ऊर्ध्वो निरगच्छत्, 'तानि' रसरूपाणि वटफलानि अभवन् ॥

तेषामेवावरोधानां फलानाञ्च क्षत्रियभक्षत्वेन प्रशंसति— "एष ह वाव क्षत्रियः स्वाद्भक्षान्नैति, यो न्यग्रोधस्यावरोधांश्च फलानि च भक्षयत्युपो ह परोक्षेणैव सोमपीथमाप्नोति ; नास्य प्रत्यक्षं भक्षितो भवति ; परोक्षमिव ह्येष सोमो राजा यन्न्यग्रोधः, परोक्षमिवैष ब्रह्मणो रूपमुपनिगच्छति, यत् क्षत्रियः पुरोधयैव दीक्षयैव प्रवरेणैव"—इति । 'यः' पुमान् न्यग्रोधवृक्षस्य 'अवरोधांश्च' अधोमुखानि मूलानि च, तत्फलानि च भक्षयति, एष एव क्षत्रियः स्वोचिताद्भक्षान्नापैति । किञ्चायं क्षत्रियः 'परोक्षेणैव' न्यग्रोधव्यवधानेनैव 'सोमपीथं' सोमपानम् 'उपो ह प्राप्नोति' सर्वथा प्राप्नोति । 'अस्य' क्षत्रियस्य 'प्रत्यक्षम्' अव्यवधानं यथा भवति तथा सोमो भक्षितो न भवति ; न्यग्रोधेन व्यव-

हितत्वात्। योऽयं न्यग्रोधः, एष परोक्ष मेवं यथा भवति तथा वर्त्तमानः सोमो राजा; योऽयं क्षत्रियोऽस्ति, एषोऽपि 'परोक्ष मिव' व्यवधानेनैव ब्राह्मणो भूत्वा 'रूपं' तदीयवेषम् उपनिगच्छति; 'पुरोधयैव' पुरोहितद्वारेण, 'दीक्षयैव' दीक्षारूपसंस्कारेण च, 'प्रवरेणैव' पुरोहितगोत्रेण च, ब्राह्मणस्य सम्पादितत्वादिति शेषः॥

प्रकारान्तरेण न्यग्रोधक्षत्रिययोः साम्य मापाद्य प्रशंसति— "क्षत्रं वा एतद् वनस्पतीनां यन्न्यग्रोधः, क्षत्रं राजन्यो; नितत इव हीह क्षत्रियो राष्ट्रे वसन् भवति प्रतिष्ठित इव, नितत इव न्यग्रोधो ऽवरोधैर्भूम्यां प्रतिष्ठित इव"—इति। यो न्यग्रोधोऽस्ति, 'एतत्' न्यग्रोधस्वरूपं वनस्पतीनां मध्ये क्षत्रियजातिरेव, 'राजन्यः' देशाधिपतिरपि 'क्षत्रं' मनुष्याणां मध्ये क्षत्रियजातिः। किञ्चायं क्षत्रियः 'इह राष्ट्रे' स्वदेशे वसन् 'नितत इव हि' तत्तद्ग्रामेषु सञ्चरणेन नितरां सन्नत एव भवति, तथा 'प्रतिष्ठित इव' राज्य-स्थैर्येण चलनरहित एव भवति; न्यग्रोधवृक्षोऽपि अधोमुखैः अवरोधैः 'नितत इव' नितरां व्याप्त एव भवति, तथा भूम्यां 'प्रतिष्ठित इव' स्थिर एव भवति। तस्मादस्त्युभयोः साम्यम्॥

न्यग्रोधभक्ष मुपसंहरति— "तद्यत् क्षत्रियो यजमानो न्यग्रोध-स्यावरोधांश्च फलानि च भक्षयत्यात्मन्येव तत् क्षत्रं वनस्पतीनां प्रतिष्ठापयति, क्षत्र आत्मानम्"—इति। 'तत्' तस्मात् न्यग्रोध-क्षत्रिययोः सादृश्यसद्भावाद् यः 'क्षत्रियः' पुरुषो यागं कुर्वन् न्यग्रोधवृक्षस्यावरोधान् फलानि च भक्षयेत्, तदानीं वनस्पतीनां सम्बन्धि 'क्षत्रं' क्षत्रियजातिम् 'आत्मन्येव' स्वोदरमध्ये एव प्रतिष्ठा-पयति; तथैव 'आत्मानं' स्वस्वरूपं वनस्पतिसम्बन्धिनि 'क्षत्रे' न्यग्रोधे प्रतिष्ठापयति॥

उपसंहृतं तं भक्षं पुनरपि प्रशंसति— "क्षत्रे ह वै स आत्मनि क्षत्रं वनस्पतीनां प्रतिष्ठापयति, न्यग्रोध इवावरोधैर्भूम्यां प्रति राष्ट्रे तिष्ठत्युग्रं हास्य राष्ट्रमव्यथ्यं भवति य एव मेतं भक्षं भक्षयति क्षत्रियो यजमानः"–इति । 'यः' क्षत्रियो यागं कुर्वन् 'एतं' न्यग्रोधसम्बन्धिनं भक्षं भक्षयति, स क्षत्रियः स्वयं वनस्पतीनां सम्बन्धिनि 'क्षत्रे' न्यग्रोधे प्रतिष्ठितः सन् 'आत्मनि' स्वस्मिन् वनस्पतीनां सम्बन्धि 'क्षत्रं' न्यग्रोधं प्रतिष्ठापयति; यथा न्यग्रोधो ऽवरोधैर्भूम्यां प्रतिष्ठितः, एव मयं राजा राष्ट्रे प्रतितिष्ठति । अस्य राष्ट्रम् 'उग्रं' तेजस्वि सत् 'अव्यथ्यं' केनापि व्यथितुमशक्यं भवति ॥ ५ ( ३१ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां पञ्चमाध्याये
( पञ्चत्रिंशाध्याये ) पञ्चमः खण्डः ॥ ५ ( ३१ ) ॥



॥ अथ षष्ठः खण्डः ॥

अथ यदौदुम्बराण्यूर्जो वा एषो ऽन्नाद्याद् वनस्पतिरजायत यदुदुम्बरो भौज्यं वा एतद् वनस्पतीनामूर्जमेवास्मिंस्तदन्नाद्यं भौज्यञ्च वनस्पतीनां क्षत्रे दधात्यथ यदाश्वत्थानि तेजसो वा एष वनस्पतिरजायत यदश्वत्थः साम्राज्यं वा एतद् वनस्पतीनां तेज एवास्मिंस्तत्साम्राज्यञ्च वनस्पतीनां क्षत्रे दधा-

त्यथ यत् प्राचार्यं यशसो वा एष वनस्पतिरजायत यत् प्लक्षः स्वाराज्यञ्च ह वा एतद् वैराज्यञ्च वनस्पतीनां यश एवास्मिंस्तत् स्वाराज्यवैराज्ये च वनस्पतीनां क्षत्रे दधात्येतान्यस्य पुरस्तादुपक्लृप्तानि भवन्त्यथ सोमं राजानं क्रीणन्ति ते राज्ञ एवावृतोपवसथात्प्रतिवेशैश्चरन्त्यथौपवसथ्ये महरेतान्यध्वर्युः पुरस्तादुपकल्पयेताधिषवणं चर्माधिषवणे फलके द्रोणकलशं दशापवित्रं मद्रीन् पूतभृतं चाधवनीयञ्च स्थाली मुदञ्चनं चमसञ्च तद्यदेतद् राजानं प्रातरभिषुण्वन्ति तदेनानि द्वेधा विगृह्णीयाद्भ्यन्यानि सुनुयात् माध्यन्दिनायान्यानि परिशिष्यात् ॥ ६ ( ३२ ) ॥

न्यग्रोधस्यावरोधान् फलानि च प्रशस्य, औदुम्बरादिप्रशंसां क्रमेण दर्शयति— "अथ यदौदुम्बराण्यूर्जो वा यतो ऽन्नाद्याद् वनस्पतिरजायत यदुदुम्बरो ; भौज्यं वा एतद् वनस्पतीना मूर्जमेवास्मिंस्तदन्नाद्यं भौज्यञ्च वनस्पतीनां चत्रे दधाति"–इति। 'अथ' न्यग्रोधप्रशंसानन्तरम्, उदुम्बरप्रशंसा कथ्यते— 'यद्' यानि 'औदुम्बराणि' फलानि भचत्वेनोक्तानि, तेषा मुत्पादको यदुम्बरो ऽस्ति, एषः 'ऊर्जः' रसात्, अन्नाद्याच्च वनस्पतिरूपो ऽजायत। 'एतद्' उदुम्बरफलं वनस्पतीनां मध्ये 'भौज्यं वै' भोजनार्हमेव। 'तत्' तेनौदुम्बरभक्षेण अस्मिन् चत्रे 'ऊर्जं मेव' रस मेव तथान्नाद्यं वनस्पतीनां मध्ये भोजनयोग्यं द्रव्य मवस्थापयति ॥

अश्वत्थफलानि प्रशंसति— "अथ यदाश्वत्थानि, तेजसो वा एष वनस्पतिरजायत यदश्वत्थ:; साम्राज्यं वा एतद् वनस्पतीनां, तेज एवास्मिंस्तत्साम्राज्यञ्च वनस्पतीनां चत्रे दधाति"–इति। 'अथ' औदुम्बरप्रशंसानन्तरम्, अश्वत्थफलानि प्रशस्यन्ते। यान्यश्वत्थफलानि सन्ति, तेषां जनको यो ऽश्वत्थ:, एष वनस्पति: तेजस एवोदपद्यत। 'एतद्' अश्वत्थफलं वनस्पतीनां सम्बन्धि साम्राज्यस्वरूप मेव; 'तत्' तेन अश्वत्थफलभक्षेण तेज एव वनस्पतीनां साम्राज्यञ्च अस्मिन् चत्रे स्थापयति ॥

प्लक्षफलानि प्रशंसति— "अथ यत् प्लाक्षाणि, यशसो वा एष वनस्पतिरजायत यत् प्लक्ष:; स्वाराज्यञ्च ह वा एतद् वैराज्यञ्च वनस्पतीनां, यश एवास्मिंस्तत् स्वाराज्यवैराज्ये च वनस्पतीनां चत्रे दधाति"–इति। 'अथ' अश्वत्थप्रशंसानन्तरम्, यानि प्लक्षफलानि विद्यन्ते, तानि प्रशस्यन्ते। यो ऽयं प्लक्षो ऽस्ति, एष वनस्पति: यशस एवोत्पन्न:। 'एतत्' प्लक्षफलं वनस्पतीनां सम्बन्धि स्वाराज्यवैराज्यरूपम्। स्वातन्त्र्येण राजत्वं 'स्वाराज्यं', विशेषेण राजत्वं 'वैराज्यम्'। 'तत्' तेन प्लक्षफलेन 'अस्मिन्' चत्रे यशश्च स्वाराज्यवैराज्ये च सम्पादयति ॥

भक्षद्रव्यं प्रशस्य तस्य प्रयोग माह— "एतान्यस्य पुरस्तादुपक्लृप्तानि भवन्त्यथ सोमं राजानं क्रीणन्ति; ते राज्ञ एवावतोऽवसथात्प्रतिवेशैश्चरन्त्यथौपवसथ्य मह्न्येतान्यध्वर्यु: पुरस्तादुपकल्पयेताधिषवणं चर्माधिषवणे फलके द्रोणकलशं दशापवित्र मद्रीन् पूतभृतं चाधवनीयञ्च स्थाली मुदचनं चमसञ्च; तद्यदेतद् राजानं प्रातरभिषुण्वन्ति, तदेनानि द्वेधा विगृह्णीयादभ्यन्यानि सुनुयान्, माध्यन्दिनायान्यानि परिशिंषात्"–इति। 'एतानि' न्यग्रोधा-

वरोधादीनि 'अस्य' राज्ञोऽर्थे सोमक्रयात् पूर्वम् 'उपक्लृप्तानि' सम्पादितानि भवन्ति। तत ऊर्द्ध्वं सोमक्रयः। ततः 'ते' अध्वर्युप्रभृतयः 'राज्ञ एवावृता' सोमस्यैव प्रकारेण उपवसथदिनात् पूर्वं 'प्रतिवेशैः' प्रसिद्धैः क्रियाविशेषैः * 'चरन्ति' अनुतिष्ठेयुः। 'अथ' अनन्तरम्, औपवसथ्य महः। औपवसथ्येऽहनि अध्वर्युः 'पुरस्तात्' प्रथमं 'एतानि' वक्ष्यमाणानि चर्मादीनि 'उपकल्पयेत' सम्पादयेत्। यस्मिंश्चर्मणि सोमोऽभिषूयते, तत् चर्माधिषवणाख्यम्†। ययोः फलकयोरभिषूयते, ते फलके अधिषवणसञ्ज्ञे‡। द्रोणकलशं प्रौढं दारुपात्रम्§। दशापवित्रं वस्त्रम्‖। अद्रयोऽभिषे-

---

* "प्रतिवेशं पचेयुः। तस्मान्नीयात्। यदमीध्येव भवति। नास्य यज्ञो व्यृध्यते"—इति तै॰ ब्रा॰ १, ४, ७, १। प्रातिस्विकत्वेन पृथ्वीं विशतीति प्रतिवेशः पचनार्थं ओदनः, तं दक्षिणाग्नौ पक्वाः पचेयुः'—इत्यादि तद्भाष्यम् (तै॰ स॰ १, ८, ४,)। "दक्षिणाग्नौ पचनाः प्रतिवेशमोदनं पचति"—इति आप॰ श्रौ॰ ८, १०, १०। "प्रतिवेशा अपि पचन्ते"—इति च तत्रैव ८, ११, ११। इह तु तहानसपाचका प्रतिवेशा विवक्षिताः।

† "अधिषवणं परिक्षप्य भवति"—इत्यादि शत॰ ब्रा॰ ३, ५, ३, २९। 'अधि उपरि सोमः सूयत इत्यधिषवणम्। सर्वरोहितमिति वचनाद् रौषणं'—इत्यादि ला॰ श्रौ॰ ८, ५, २९ टी॰। नाभिप्रमाणा अरत्निमात्री शुक्रवल्मूता औदुम्बरी मञ्चिका आसन्दीत्युच्यते। तस्यां आसन्द्यां अधिषवणफलकयोरुपरि ग्रीवेव शुक्लरोम यत् चर्म आस्तृणाति, तदेवाधिषवणाख्यम्। अभिमेवालौर्थे चर्मणि वातीमद्र मेव सोमं स्थापयति। तदेतत् कात्या॰ श्रौ॰ ७, ९, २७—३० सूत्रेषु स्पष्टम्।

‡ उपरवाणां उपरि अरत्नीन् प्रागग्रानुदगग्रान् वा दर्भानास्तीर्य अधिषवणफलके उपदधाति। अधि उपरि सूयते सोमो ययोः, ते। ते च चारवे प्रादेशपरिमितस्थूले अरत्निपरिमितदैर्घ्ये भवतः। तदेवमादिकं वर्णनं कात्या॰ श्रौ॰ ८, ५, २५ सू॰ टी॰ द्रष्टव्यम्। "अथाधिषवणे फलके उपदधाति"—इत्यादि च शत॰ ब्रा॰ ३, ४, ५, २२।

§ "द्रोणकलश—द्रुममयः कलशाकारो वैकङ्कतः; यस्योपरि धारायहा गृह्यन्ते"—इत्यादि ला॰ श्रौ॰ ८, ७, ५, या॰ टी॰। धारायहाणां परिचयस्तु अपूर्वः (२भा॰ २१०)।

‖ औपवसथ्या येतरोमयपितनूननिर्मिते सोमरसपावनार्थे ऊर्णापवित्रे द्वे भवतः।

चणार्था ग्रावाणः * । पूतभृदाधवनीयौ पात्रविशेषौ † । स्थाली कुम्भः ‡ । उदचनम् उदयनपात्रम् § । चमसा भक्षार्थं दारुपात्रम् ‖ । एतान्यध्वर्युः सम्पाद्य, तत ऊर्द्ध्वं 'यद्' यदा 'एतत्' एतं राजानं प्रातःकाले अभिषुखन्ति, 'तत्' तदानीम् 'एमानि' न्यग्रोधावरोधादीनि द्वेधा विभजेत् । तत्र 'अन्यानि' एकभाग-

---

तस्यैकं यजमानसंस्कारविभावम्, तदेव द्रोणकलशे स्थाप्यते; अपादरं माहेन्द्रभाजम्, तदेव परिप्लवार्थे युज्यते । तदिदम् द्वितीयमूर्णापवित्रं अपस्तुभयतोदश मिति दशापवित्रं चोच्यते । का० श्रौ० ८. २. १६, १७ द्रष्टव्यम् ।

* "अथ ग्राव्ण उपावहरति"–इत्यादि शत० ब्रा० ३. ५. ४. २४; "तस्मिन् ग्राव्णः पञ्च, वैष्णवाः स्युरिति ( का० सं० ५, ५५, )"–इति कात्या० श्रौ० ८. ५. २८ ।

† पूतभृद् आधवनीयौ— पूतं सोमं बिभर्त्तीति पूतभृत् । एतत्संज्ञकः प्रयुक्तो महाकलशो भवति । आधवनीयश्च तद्रूप एव; आधूयते मथ्यते सोमोऽस्मिन्निति स एव प्रकृतिप्रत्ययगतोऽर्थविशेषः ( का० श्रौ० ९. २. ३०. ) । यद्यपि आधवनीयशब्दस्यैव प्राथम्यम्, तथापि 'अल्पाच्तरं ( पूर्वम् )'–इति शास्त्रानुशासनाद् ( पा० सू० २. २ ३४. ) इत्थं तत्र पदप्रयोगः पूतभृदाधवनीयाविति ।

‡ स्थाल्युदचन.— 'आग्रयणोक्थ्यादिग्रहार्थाम्'–इति का० श्रौ० ९. ९. १४ सूत्रव्याख्यायां याज्ञिकदेवः ।

§ उदचनी— पूतभृदाधवनीययोः कुम्भयोः सोमोदकस्य उदचनपात्रभूतौ मृन्मयपात्रविशेषौ । का० श्रौ० ८. २. २१, ९. ६. १५; १०. ५. १. भाष्याणि द्रष्टव्यानि । 'उदङ्कोऽनुदके'–इति पा० सू० ३. ३. १२३ । 'घृतोदकस्य धर्मस्य' आख्यम् । अनुदके किम्? उदकोदञ्चनः'–इति तत्र दीक्षितः ( सि० कौ० ) ।

‖ दश चमसाः— सोमपानपात्राणि । 'चमसो देवपानः'–इति ऋ० सं० १०. १६. ८ । 'योऽद्धर्य्ये चमसेन चतुःसक्तिना'–इति शत० ब्रा० ७. २. ११. २ । 'दश चमसाः सकन्तानधः'–इति का० श्रौ० ८. २. २२ । 'चमसवः'–इति च मानवसूत्रम् । तथा च मुष्टिग्राह्याणि । न्यग्रोधरोहितकपर्णाश्वत्थमकाष्ठनिर्मितानि । होतुः, ब्रह्मणः, उद्गातुः, यजमानस्य, प्रशास्तुः, ब्राह्मणाच्छंसिनः, पोतुः, नेष्टुः, आग्नीध्रस्य, अच्छावाकस्येति दश । कात्या० श्रौ० ( ९. ९. २५; १२. १३. ) भाष्यं द्रष्टव्यम् ।

गतानि 'तस्मिन्' प्रातस्सवने अभिषुणुयात्, इतरभागगतानि तु माध्यन्दिनसवनाय स्थापयेत् ॥ ६ (३२) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां पञ्चमाध्याये (पञ्चत्रिंशाध्याये) षष्ठः खण्डः ॥ ६ (३२) ॥

---

॥ अथ सप्तमः खण्डः ॥

तद्यचैतां*श्चमसानुन्नयेयुस्तदेतं यजमानचमस मुन्नयेत् तस्मिन् द्वे दर्भतरुणके प्रास्ते† स्यातां तयो-र्वषट्कृते ऽन्तःपरिधि पूर्वं प्रास्येद् दधिक्राव्णो अ-कारिष मित्येतयर्चा सस्वाहा‡कारयानुवषट्कृते परमा दधिक्राः शवसा पञ्चकृष्टीरिति तद्यचैतांश्चम-सानाहरेयुस्तदेतं यजमानचमस माहरेत् तान्यचोद्-गृह्णीयुस्तदेन मुपोद्गृह्णीयात् तद्यदेळां होतो-पह्वयेत यदा चमसं भक्षयेदथैन मेतया भक्षयेद् यदत्र शिष्टं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः। इदं तदस्य मनसा शिवेन सोमं राजान मिह भक्ष-

* "तद्यत् वेतां"—इति क। † "प्राश्ने"—इति ग।
‡ "स. स्वाहा॰"—इति क, "सह स्वाहा॰"—इति म।

यामीति शिवो ह वा अस्मा एष वानस्पत्यः शिवेन मनसा भक्षितो भवत्युग्रं ह्यस्य राष्ट्रमव्यथ्यं भवति य एव मेतं भक्षं भक्षयति क्षत्रियो यजमानः शन्न एधि हृदे पीतः प्र ण आयुर्जीवसे सोम तारीरित्या-त्मनः प्रत्यभिमर्श ईश्वरो ह वा एषो ऽप्रत्यभिमृष्टो मनुष्यस्यायुः प्रत्यवहर्त्तोरनर्हन् मा भक्षयतीति तद् यदेतेनात्मान मभिमृशत्यायुरेव तत्र तिरत आ प्या-यस्व समेतु ते सं ते पयांसि स मु यन्तु वाजा इति चमस माप्याययत्यभिरूपाभ्यां यद् यज्ञे ऽभिरूपं तत् समृद्धम् ॥ ७ ( ३३ ) ॥

अथास्य फलचमसस्य* उन्नयनादिप्रयोगं दर्शयति— "तद्यत्रै-तांश्चमसानुन्नयेयुस्तदेतं यजमानचमस मुन्नयेत् ; तस्मिन् द्वे दर्भ-तरुणके प्रास्ते स्याताम्, तयोर्वषट्कृतेऽन्तःपरिधि पूर्वं प्रास्येद्, दधि क्राव्णो अकारिष मित्येतयर्चा सम्राड्वाकारयानुवषट्कृते ऽपरं मा दधिक्राः शवसा पञ्चकृष्टीरिति"—इति । तत ऊर्ध्वं 'यत्र' यदा 'एतान्' ब्रह्मादिचमसान् दशसङ्ख्याकानुन्नयेयुः, 'तत्' तदानीं 'यजमानस्य' राजसूयमसम् 'उन्नयेत्' अभिषुतेन न्यग्रोधादिना पूर-येत् । 'तस्मिन्' पूरिते चमसे ऽल्पं दर्भद्वयं प्रक्षिप्य तयोर्मध्ये प्रथम-प्रक्षिप्तं दर्भं 'वषट्कृते' वषट्कारे कृते सति "दधिक्राव्णः"—

* न्यग्रोधफलान्यङ्कुरांश्चाहृत्य सम्पिष्य चूर्णयित्वा दध्ना मिश्रं कृत्वा राजन्यवैश्ययो-रन्यतरस्य यजमानस्य भक्षणाय चमसनामपात्रे रचितो भवति, स एव यजमानचमस' फलचमस इत्युच्यते, तत्र इतरान् सोमचमसानपि उन्नेयो भवति । कात्या० श्रौ० १० ९ २०—२२ सूत्रेषु द्रष्टव्यम् ।

इत्येतयर्चा स्वाहाकारसहितया परिधीनां मध्ये प्रक्षिपेत्। 'अनुवषट्कृते' अनुवषट्कारे कृते सत्यपरं दध्नः "आ दधिक्राः"–इत्यनयर्चा पूर्ववत् स्वाहाकारसहितया परिधीनां मध्ये प्रक्षिपेत् * ॥

अथास्य फलचमसस्य भक्षणं विधत्ते— "तस्य यत्रैतांश्चमसाना-हरेयुस्तदेतं यजमानचमस आहरेत्; तान्यत्रोदग्रगृह्णीयुस्तदेन-मुपोदग्रगृह्णीयात्; तस्येळां होतोपह्वयेत, यदा चमसं भक्षयेदथैन-मेतया भक्षयेद्"–इति । ततो होमादूर्ध्वं 'यत्र' यदा 'एतान्' होत्रादीनां चमसान् ऋत्विज आहरेयुः, 'तद्' तदानीम् एतं 'यजमानस्य' राजन्यचमस माहरेत्। 'तान्' आहृतान् होत्रादि-चमसान् 'यत्र' यदा 'उदग्रगृह्णीयुः' भक्षणार्थं मूर्द्धं धारयेयुः, 'तत्' तदानीम् 'एतं' यजमानस्य राजन्यचमसम् 'उपोदग्रगृह्णीयात्' ऊर्द्ध्वं धारयेत्। तत ऊर्द्ध्वं यदा होतेळा मुपह्वयेत, उपहूय च स्वकीयं चमसं यदा भक्षयेत्, 'अथ' तदानीम् 'एनं' यजमानचमसम् 'एतया' वक्ष्यमाणयर्चा राजा भक्षयेत् ॥

तामृचं पठति— "यदत्र शिष्टं रसिनः सुतस्य, यदिन्द्रो अपिबच्छचीभिः । इदं तदस्य मनसा शिवेन, सोमं राजान मिह भक्षयामीति"–इति । 'रसिनः' रसयुक्तस्य 'सुतस्य' अभिषुतस्य न्यग्रोधादिद्रव्यस्य 'अत्र' पात्रे 'यच्छिष्टं' योऽवशिष्टो भागः, 'यत्' च पात्रस्थं द्रव्य मिन्द्रः 'शचीभिः' कर्मविशेषैः संस्कृत मपिबत्। शचीशब्दः कर्मनामसु पठितः † । 'अस्य' द्रव्यस्य सम्बन्धि

---

* "एतेषु सोमचमसेषु भ्रियमाणेषु एवं फलचमस चमसाध्वर्युरेव क्रमतरुदेन चमसान् प्रक्षेप्स्य जुहोति"–इति आश्व० श्रौ० १०, ८. १२ सू० टी० ।

† निघण्टौ वाङ्नामसु ( १ ११. ) ४८, कर्मनामसु ( २. १. ) १२, प्रज्ञा-नामसु च ( ३. ९. ८ ) ।

'तदिद' शिष्ट' 'शिवेन' भक्तियुक्ततया मङ्गलेन मनसा 'इह' कर्मणि 'सोमं राजानं' सोमराजरूपं भावयित्वा भक्षयामि ॥

तदिद' समन्त्रकभक्षणं प्रशंसति— "शिवो ह वा अस्मा एष वानस्पत्यः , शिवेन मनसा भक्षितो भवत्युग्रं हास्य राष्ट्र मव्यथ्य' भवति , य एव मेतं भक्षं भक्षयति क्षत्रियो यजमानः"-इति ।' 'यः' क्षत्रियो यजमानः, 'एवम्' उक्तेन प्रकारेण 'एतं' फलचमसरूपं भक्षं भक्षयति, 'अस्मै' यजमानाय एष 'वानस्पत्यः' भक्षः 'शिवो ह वै' मङ्गलो हितकारी भूत्वा 'शिवेन मनसा' भक्तियुक्तेन मङ्गलेन मनसा भक्षितो भवति । 'अस्य' राज्ञो राष्ट्रम् 'उग्रम्' शत्रूणा मभिभवनायोग्यरूपं भूत्वा केनापि 'अव्यथ्य'' व्यथयितु मशक्यं भवति । भय' चलन' वा कदाचिदपि नास्य राष्ट्रस्य भवतीत्यर्थः ॥

भक्षणादूर्द्ध' मन्त्रेण आत्मस्पर्श विधत्ते— "शन्न एधि हृदे पीतः, प्र ण आयुर्जीवसे सोम तारीरित्यात्मनः प्रत्यभिमर्शः"- इति । हे 'सोम' सोमस्थानीयावरोधादिभक्ष ! अस्माभिः पीतः सन् 'नः' अस्माकं हृदये 'श मेधि' सुखहेतुर्भव । 'जीवसे' चिरजीवनाय 'नः' अस्माक मायुः 'प्रतारीः' प्रकर्षेण सम्पादय । 'इति' अनेन मन्त्रेण 'आत्मनः' स्वकीयहृदयस्य 'प्रत्यभिमर्शः' हस्तेन सम्पूर्ण स्पर्शः कर्त्तव्यः ॥

अथान्वयव्यतिरेकाभ्या मभिमर्शं प्रशंसति— "ईश्वरो ह वा एषो ऽप्रत्यभिमृष्टो मनुष्यस्यायुः प्रत्यवहर्त्तोरनर्हंमा भक्षयतीति ; तद्यदेतेनात्मान मभिमृशत्यायुरेव तत्र तिरते"-इति । 'एषः' अवरोधादिभक्षः 'अप्रत्यभिमृष्टः' मन्त्रपूर्वकात्मस्पर्शरहितः सन् 'मनुष्यस्य' राज्ञः आयुः 'प्रत्यवहर्त्तोः' विनाशयितु मीश्वरः समर्थो

भवति। केनाभिप्रायेणेति, सोऽभिधीयते— 'अनर्हन्' भक्षयितुमयोग्यः सन् मां भक्षयतीति तस्य भक्षस्याभिप्रायः। सोऽयं व्यतिरेकः, तदादित्यादिरन्वयः। 'तत्' तदा भक्षणादूर्द्धं यदा 'एतेन' शत्र इत्यादिमन्त्रेणाभिमृशति, 'तत्' तेनाभिमर्शनेनायुरेव 'प्रतिरते' प्रकर्षेण वर्द्धयति ॥

द्वाभ्यामृग्भ्यां तस्य चमसस्य पूरणं विधत्ते— "आ प्यायस्व समेतु ते (ऋ० सं० १.९१.१६.), सं ते पयांसि स मु यन्तु वाजा इति (ऋ० सं० १. ९१. १८.) चमस माप्याययत्यभिरूपाभ्यां; यद्यज्ञे ऽभिरूपं तत्समृद्धम्"–इति। प्रथमाया ऋच्या प्यायस्वेति श्रवणात्, द्वितीयस्यास्तृतीयपादे चाप्यायमान इति श्रवणादिदं मन्त्रद्वय माप्यायनस्य 'अभिरूपम्' अनुकूलम्। यज्ञे 'यद्' अङ्गम् 'अभिरूपम्' अनुकूलं क्रियते, 'तद्' अङ्गं 'समृद्धं' सम्पूर्णं भवति ॥ ७ (३३) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां पञ्चमाध्याये
(पञ्चत्रिंशाध्याये) सप्तमः खण्डः ॥ ७ (३३) ॥

---

॥ अथ अष्टमः खण्डः ॥

तद्यत्रैतांश्चमसान्त्सादयेयुस्तदेतं यजमानचमसं सादयेत्तान्यत्र प्रकल्पयेयुस्तदेन मनु प्रकल्पयेद्येन साद्रत भक्षयेन्नराशंसपीतस्य देव सोम

ते मतिविद ऊमैः पितृभिर्भक्षितस्य भक्षयामीति प्रातस्सवने नाराशंसो भक्ष ऊर्वैरिति माध्यन्दिने काव्यैरिति तृतीयसवनं ऊमा वै पितरः प्रातस्सवनं ऊर्वा माध्यन्दिने काव्यास्तृतीयसवने तदे-तत् पितॄनेवामृतान्त्सवनभाजः करोति सर्वो हैव सो ऽमृत इति ह स्माह प्रियव्रतः सोमापो यः कश्च सवनभागित्यंमृता ह वा अस्य पितरः सवनभाजो भवन्त्युप हास्य राष्ट्रं मव्यथ्यं भवति य एव मेतं भक्षं भक्षयति क्षत्रियो यजमानः समान आत्मनः प्रत्य-भिमर्शः समान माप्यायनं चमसस्य प्रातस्सवन-स्यैवावृता प्रातस्सवने चरेयुर्माध्यन्दिनस्य माध्यन्दिने तृतीयसवनस्य तृतीयसवने त मेव मेतं भक्षं प्रोवाच रामो मार्गवेयो विश्वन्तराय सौषद्मनाय तस्मिन् होवाच प्रोक्ते सहस्रमु ह ब्राह्मण तुभ्यं दद्मः सश्या-पर्ण* उ मे यज्ञ† इत्येत मु हैव प्रोवाच तुरः कावषेयो जनमेजयाय पारिक्षितायैत मु हैव प्रोचतुः पर्वत-नारदौ सोमकाय साहदेव्याय सहदेवाय सार्ञ्ज-याय‡ बभ्रवे दैवावृधाय भीमाय वैदर्भाय नग्नजिते

* "स श्यापर्णं"–इति ङ । † "यज"–इति ग ।

‡ "साञ्जयाय"–इति क, "सांजैयाय"–इति ख, "सार्ञ्जयाय"–इति ग, "साञ्जयाय"–इति घ, "सार्ञ्जयाय"–इति ज, ञ ।

गान्धारायेतत्प्रोवाचाग्निः सनश्रुतायारिन्दमाय क्रतुविदे जानकय एतमु हैव प्रोवाच वसिष्ठः सुदासे पैजवनाय ते ह ते सर्वे एव महज्जग्मुरेतं भक्षं भक्षयित्वा सर्वे हैव महाराजा आसुरादित्य इव ह स्म श्रियां प्रतिष्ठितास्तपन्ति सर्वाभ्यो दिग्भ्यो बलिमावहन्त आदित्य इव ह वै श्रियां प्रतिष्ठितस्तपति सर्वाभ्यो दिग्भ्यो बलिमावहस्युग्रं हास्य राष्ट्रमव्यथ्यं भवति य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानो यजमानः ॥ ८ ( ३४ ) ॥

॥इत्यैतरेयब्राह्मणे सप्तमपञ्चिकायां पञ्चमोऽध्यायः॥५॥

भक्षिताप्यायितस्य नाराशंससञ्ज्ञस्य चमसस्य* प्रयोगं विधत्ते—"तद्यदैतांश्चमसानासादयेयुस्तदेतं यजमानचमसं सादयेत् ; तान्यत्र प्रकम्पयेयुस्तदेनमनु प्रकम्पयेदथैन माहृतं भक्षयेन्नराशंसपीतस्य देव सोम ते मतिविद ऊमैः पितृभिर्भक्षितस्य भक्षयामीति प्रातःसवने नाराशंसो भक्ष, ऊर्वैरिति माध्यन्दिने, काव्यैरिति तृतीयसवने"–इति । 'तत्' तस्मादाप्यायनात् ऊर्ध्वं 'यत्र' यदा 'एतान्' होत्रादीनां चमसानाप्यायितान् सादयेयुः, तदानीमेतं 'यजमानस्य' राजचमसं सादयेत् । 'तान्' होत्रादीनां चमसान् यदा प्रकम्पयेयुः, तदैव 'एनम्' राजचमसमनु प्रकम्पयेत् । 'अथ'

---

* "आप्यायितांश्चमसान् सादयन्ति, ते नराशंसा भवन्ति"–इति आश्व० श्रौ० ५. ५. ६. २० । 'इदमिदं भक्षिता आप्यायिताश्चमसा नाराशंसाः'–इति सा० भा० ( ता० ब्रा० १०. ११, वै० मा० २. ७. ) ।

अनन्तर मेतं चमसं भक्षणार्थं माहृतं नराशंसेत्यादिमन्त्रेण भक्षयेत् । हे सोमसहश फलचमस देव! 'नराशंसपीतस्य' नरा मनुष्या ऋभुप्रमुखाः शस्यन्ते यस्मिन् सवनविशेषे सोऽयं नराशंसः, तत्र देवैः पीतस्य, ऊमनामभिः पितृभिश्च भक्षितस्य, 'मतिविदः' अस्मदभिप्रायाभिज्ञस्य ते भक्षयामि 'इति' अनेन मन्त्रेण प्रातस्सवने नराशंसचमससम्बन्धी भक्षः कर्त्तव्यः । इतरयोस्तु सवनयोस्तस्मिन् मन्त्रे 'ऊमैरिति' अस्य पदस्य स्थाने 'ऊर्वैः'-'काव्यैः'-इति पदद्वयं क्रमेण पठनीयम् ॥

त्रिविधं मन्त्रतात्पर्यं दर्शयति— "ऊमा वै पितरः प्रातस्सवन, ऊर्वा माध्यन्दिने, काव्यास्तृतीयसवनं, तदेतत् पितृनेवामृतान्सवनभाजः करोति"-इति । ऊमा, ऊर्वाः, काव्याः,-इत्येते सवनत्रयगताः पितृविशेषाः ; अतस्तच्छब्दप्रयोगेण तान् पितृन् सवनभाजः करोति । पितरश्च द्विविधाः ; मृता अमृताश्च । इदानीं मनुष्याः सन्तो मरणादूर्ध्वं पितृलोकं प्राप्ताः 'मृताः', सृष्टिमारभ्य पितृलोके अवस्थिताः 'अमृताः' ; ऊमादयस्तथाविधत्वादमृतशब्देन विशेष्यते ॥

अथ मन्त्रतात्पर्यं मतान्तरं दर्शयति— "सर्वो हैव सो ऽमृत इति ह स्माह प्रियव्रतः सोमापो यः कश्च सवनभागिति"-इति ॥ न केवल मूमादय एव पितरः प्रसिद्धा अमृताः, किन्तु यः कोऽपि पीत्वा सवनभाग् भवति, स सर्वोऽप्यूमादिशब्दैरुपलक्षितत्वादमृत एव भवतीति* 'सोमापः' सोमपः प्रियव्रताख्यो महर्षिराह स्म ॥

इदानीं नराशंसचमसभक्षं प्रशंसति— "अमृता ह वा अस्य

---

* तथाहि— "अपाम सोमममृता अभूम, अगन्म ज्योतिरविदाम देवान्" इति, "भक्षितेऽस्याम सोम मधुना अभूम, शत्रो भव हृद आपीत इन्द्-विति मुखदृदये अभिमृशेत्"-इति आश्व० श्रौ० ५, ६, २६ ।

पितरः सवनभाजो भवन्त्युग्रं हास्य राष्ट्रमव्यथं भवति, य एव मेतं भक्षं भक्षयति क्षत्रियो यजमानः"—इति । 'अस्य' राज्ञो भक्षयितुः 'पितरः' पितृपितामहादयः सर्वेऽपि सवनभाजः सन्तः 'अमृताः' मरणरहिता देवा भवन्ति । उग्र मित्यादि पूर्ववत् (१५५पृ०) । यत्र इत्यादिमन्त्रेण स्वदेहस्पर्शनम्, आ प्यायस्वेतिमन्त्रद्वयेन (१५६पृ०) चमसपूरणञ्च ॥

प्रातस्सवने यदुक्तं तदुत्तरयोः सवनयोरतिदिशति— "समान आत्मनः प्रत्यभिमर्शः, समान माप्यायनं चमसस्य"—इति ॥

फलचमसे विद्यमानं प्रयोगविशेष मभिधाय अवशिष्टं सोमचमसगतं प्रयोगं सवनत्रयेऽप्यतिदिशति— "प्रातस्सवनस्यैवावृता प्रातस्सवने चरेयुर्, माध्यन्दिनस्य माध्यन्दिने, तृतीयसवनस्य तृतीयसवने"—इति । सोमविषयस्य प्रातस्सवनस्यैव 'आवृता' प्रकारेण फलचमसविषयप्रातस्सवने 'चरेयुः' अनुतिष्ठेयुः । एव मितरत्रापि योज्यम् ॥

उक्तं फलचमसभक्ष मुपसंहरति— "त मेव मेतं भक्षं प्रोवाच रामो मार्गवेयो विश्वन्तराय सौषद्मनाय"—इति ।

अथ विश्वन्तरस्य वाक्यं दर्शयति— "तस्मिन् होवाच प्रोक्ते सहस्र मु ह ब्राह्मण तुभ्यं दद्मः सश्यापर्णं उ मे यज्ञ इति"—इति । 'तस्मिन्' राजभक्षे रामेण 'प्रोक्ते' सति स राजा रामं प्रत्येव मुवाच—हे 'ब्राह्मण' राम । तुभ्यं वयं 'सहस्र मु ह' गवां सहस्रं सम्पूर्णं दद्मः । पुरा मे यज्ञो विश्यापर्ण आसीत् *; इदानीं तु 'सश्यापर्णः' एवास्तु; भवदीयाः श्यापर्णनामकाः सर्वे ब्राह्मणाः अस्मिन् यज्ञे वसन्त्विति ॥

---

* तदुक्तं पुरस्तात्— "विश्यापर्णं यज्ञ माहरे"—इति १३१ पृ० ।

इदानीं सम्प्रदायकथनेन भक्षं प्रशंसति— "एत मु हैव प्रोवाच तुरः कावषेयो जनमेजयाय पारिक्षिताय; एत मु हैव प्रोचतुः पर्वतनारदौ सोमकाय साहदेव्याय, सहदेवाय सार्ञ्जयाय, बभ्रवे दैवावृधाय, भीमाय वैदर्भाय, नग्नजिते गान्धाराय; एत मु हैव प्रोवाचाग्निः सनश्रुतायारिन्दमाय, क्रतुविदे जानकये; एत मु हैव प्रोवाच वसिष्ठः सुदासे पैजवनाय; ते ह ते सर्वे एव महज्जग्मुरेतं भक्षं भक्षयित्वा सर्वे हैव महाराजा आसुरादित्य इव ह स्म श्रियां प्रतिष्ठितास्तपन्ति, सर्वाभ्यो दिग्भ्यो बलि मावहन्ते"— इति। 'एतं' पूर्वोक्त मेव भक्ष' कवषस्य पुत्रस्तुरो नाम महर्षिः, परिक्षित्पुत्राय जनमेजयसञ्ज्ञकाय प्रोवाच। अय मेकः सम्प्रदायः। तथैव 'एतं भक्ष' पर्वतनारदाख्यावृषी सहदेवस्य पुत्राय सोमकाय प्रोचतुः। सोमकश्चान्यस्मै सहदेवाय प्रोवाच। सहदेवश्च सार्ञ्जयाय प्रोवाच। सार्ञ्जयश्च बभ्रवे प्रोवाच। बभ्रुश्च दैवावृधाय प्रोवाच। दैवावृधश्च भीमाय प्रोवाच। भीमश्च वैदर्भाय प्रोवाच। वैदर्भश्च नग्नजिते प्रोवाच। नग्नजिच्च गान्धाराय प्रोवाच। अथ द्वितीयः सम्प्रदायः। तथा 'एतम्' एव भक्ष मग्निनामको महर्षिः सनश्रुताय प्रोवाच। सनश्रुतश्चारिन्दमाय प्रोवाच। अरिन्दमश्च क्रतुविदे प्रोवाच। क्रतुविच्च जानकये प्रोवाच। अथ तृतीयः सम्प्रदायः। अथ 'एतम्' एव भक्ष' वसिष्ठो महर्षिः सुदासे महर्षये प्रोवाच। सुष्ठु धनं दासतीति सुदाः, अथवा सुष्ठु शत्रून् दस्यत्युपक्षयतीति सुदाः। स च पैजवनाय प्रोवाच। यद्वा* सहदेवाय सार्ञ्जयायेत्यादिषु वाक्येषु सहदेवादिनाम्नां सार्ञ्जयादि-

* सुदासः पैजवनोऽस्यैव यष्टिः। तथाहि— ऋ० स० ७.१८.२२-२५ ऋक्षु 'सुदासः पैजवनस्य'-इति। "विश्वामित्र ऋषि सुदास. पैजवनस्य पुरोहित."—इत्यादिर्निरुक्तएनस्य

पदानि विशेषणतया योज्यानि । द्वितीयस्तु च्छन्द एतच्छब्दार्थः । 'ते ह' एते तुरादयः पैजवनान्ताः सर्वे एव पुरुषाः 'एतं' फलचमसभक्षं भक्षयित्वा 'महज्जग्मुः' महत्त्वं प्राप्ताः । महत्त्वस्यैव सर्वे ह्येत्यादिकं विवरणम् । सर्वेऽप्येते 'महाराजाः' सार्वभौमा आसुः । यथा आदित्यो द्युलोके प्रतिष्ठितस्तपति, एवमेते 'श्रियां' गजाश्वादिकायां सम्पदि प्रतिष्ठिताः सन्तः 'तपन्ति' शत्रूणां तापं कुर्वन्ति । तथा 'सर्वाभ्यो दिग्भ्यः' सर्वदिगवस्थितेभ्यो राजभ्यः सकाशाद् 'बलिं आवहन्ते' करमाददानाः स्वामिनो भवन्ति ॥

नराशंसभक्षं पुनरपि फलकथनेन प्रशंसति— "आदित्य इव ह वै श्रियां प्रतिष्ठितस्तपति, सर्वाभ्यो दिग्भ्यो बलिं आवहत्युग्रं हास्य राष्ट्रं मव्यथ्यं भवति य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानो यजमानः"–इति । पूर्ववद् व्याख्येयम् । अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ८ ( ३४ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां पञ्चमाध्याये
( पञ्चत्रिंशाध्याये ) अष्टमः खण्डः ॥ ८ ( ३४ ) ॥

---

( ९.७.२. ) । अत एव पूर्वोक्तस्य 'सहदेवस्य सार्ञ्जयस्य'–इत्यादि व्याख्यानस्यायुक्तत्वमनुभूय सयुक्तं व्याख्यानं वक्तुमक्षमते यदेति । सहदेवस्य सृञ्जयापत्यत्वेन सार्ञ्जयत्वम् । नग्नजितश्च गान्धारदेशवासित्वेन गान्धारत्वं शतपथे प्रसिद्धम् ( २. ४. ४. ४ ; ८. १. ४. १०. ) । एवमन्येष्वपि दशादिशीयपनिदानान्यन्वेष्टव्यानि ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरसाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'-नामभाष्ये
ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायाः पञ्चमोऽध्यायः ॥

अथातः पशोरेकः[1] । तदाहुर्य आहिताग्नि-रेकादश[2] । हरिश्चन्द्रः षट्[3] । प्रजापतिर्यज्ञ मष्टौ[4] । विश्वन्तरोऽष्टौ[5] ॥ ७० ॥

अथातः पशोस्, तदाहुर्यद्दर्शपूर्णमासयोर्, अथात इष्टापूर्त्तस्य, तेषां यज्ञमसानां चत्वारि॥७†॥

॥ इति सप्तमपञ्चिका समाप्ता ॥

---

* १, ८, ११, १०२, १३१ पृ० ( १—११—६—८—८=३४ ख० ) ।
† १, ४७, ११०, १४४ पृ० (१०—१०—१०—४ =३४ख० । १मा० २६२पृ० द्र०।

# ॥ ऐतरेयब्राह्मणम् ॥

## ॥ अथाष्टमपञ्चिका ॥

(८म)

### ॥ प्रथमाध्यायस्य प्रथमः खण्डः ॥

॥ ॐ ॥ अथात * स्तुतशस्त्रयोरेवैकाहिकं प्रातस्सवनं मैकाहिकं तृतीयसवन मेते वै शान्ते क्लृप्ते प्रतिष्ठिते सवने यदैकाहिके शान्त्यै क्लृप्त्यै प्रतिष्ठित्या अप्रच्युत्या उभौ माध्यन्दिनः पवमानो य उभयसाम्नो बृहत्पृष्ठ्योभे हि सामनी क्रियेते आ त्वा रथं यथोतय इदं वसो सुत मन्ध इति राथन्तरी प्रतिपद् राथन्तरो ऽनुचरः पवमानोक्थं वा एतद् यन्मरुत्वतीयं पवमाने वा अत्र रथन्तरं कुर्वन्ति बृहत्पृष्ठं सवीवधतायै तदिदं रथन्तरं स्तुत माभ्यां प्रतिपदनुचराभ्या मनुशंसत्यथो ब्रह्म वै रथन्तरं क्षत्रं बृहद् ब्रह्म खलु वै क्षत्रात् पूर्वं ब्रह्मपुरस्तान् म उग्रं राष्ट्र मव्यथ्य मसदित्यथान्नं वै रथन्तरं मन्न मेवास्मै तत् पुरस्तात् कल्पयत्यथेयं वै पृथिवी रथन्तरं मियं खलु वै

---

* "अथात"–इति सविसर्गं क, ज।

**प्रतिष्ठा प्रतिष्ठा मेवास्मै तत् पुरस्तात् कल्पयति समान इन्द्रनिहवोऽविभक्तः सोऽह्ना मुदान् ब्राह्मणस्पत्य उभयसाम्नो रूपमुभे हि सामनी क्रियेते समान्यो धाय्या अविभक्तास्ता अह्ना सैकाह्निको मरुत्वतीयः प्रगाथः ॥ १ ॥**

॥ श्रीगणेशाय नमः ॥

फलाख्यचमसो भक्षो राज्ञो यज्ञे प्रकीर्त्तितः ।
उच्यते राजयज्ञेऽस्मिन् विशेषः स्तोत्रशस्त्रयोः ॥

तदेतत् प्रतिजानीते— "अथातः स्तुतशस्त्रयोरेव"–इति । 'अथ' राज्ञो यज्ञे भक्षविशेषकथनानन्तरम्, यतः स्तुतशस्त्रयोर्विशेषो जिज्ञासितः, 'अतः' कारणात् तयोरेव, विशेष उच्यत इति शेषः ॥

तं विशेषं वक्तुमादौ विशेषरहितमंशं दर्शयति— "ऐकाहिकं प्रातस्सवन मैकाहिकं तृतीयसवन मेते वै शान्ते क्लृप्ते प्रतिष्ठिते सवने यदैकाहिके, शान्त्यै क्लृप्त्यै प्रतिष्ठित्या अप्रच्युत्यै"–इति । एकाहे प्रकृतिरूपे * यत् प्रातस्सवनं यच्च तृतीयसवनं सुक्लृप्तम्†, तदुभयं राज्ञो विकृतावपि तथैव प्रयोक्तव्यम्; न तु तयोः कश्चिद् विशेषोऽस्ति । ऐकाहिके ये उभे प्रातस्सवन-तृतीयसवने, ते 'एते' एव 'शान्ते' सुखकरे 'क्लृप्ते' समर्थे 'प्रतिष्ठिते' सम्पन्ने; अतस्तयोः प्रकृतिवदनुष्ठानं 'शान्त्यै' सुखार्थं, 'क्लृप्त्यै' सामर्थ्यार्थं, 'प्रतिष्ठित्यै' सम्पत्त्यर्थम्, 'अप्रच्युत्यै' विनाशराहित्यार्थं च भवति ॥

---

* ३भा० २४म्पृ० द्र० ।

† १भा० ३६३पृ०—२भा० ५०३पृ०, २भा० ११५—१८०पृ० द्र० ।

यथा प्रातस्सवन-तृतीयसवनयोः प्राकृताद् विशेषो नास्ति, तथा माध्यन्दिनसवनेऽपि मरुत्वतीय मैकाहिकं शेत्रकशस्त्राणि चैकाहिकानि *; स्तोत्रे तु विशेषोऽस्ति, त मिमं दर्शयति— "उक्तो माध्यन्दिनः पवमानो य उभयसाम्नो बृहत्पृष्ठस्योभे हि सामनी क्रियेते"–इति। बृहद्रथन्तरं चेत्युभयविधं साम यस्मिन् अभिजिदादौ सोऽय मुभयसामा; बृहत्साम पृष्ठस्तोत्रं यस्मिन् अभिजिदादौ सोऽयं 'बृहत्पृष्ठः'। तादृशस्य 'उभयसाम्नो बृहत्पृष्ठस्य' अभिजिदादेर्यो माध्यन्दिनः पवमान उक्तः †, स एवात्र राजयज्ञे माध्यन्दिनः पवमानो द्रष्टव्यः। न चोभयसामत्वं बृहत्पृष्ठत्वं चोभयं व्याहत मिति शङ्कनीयम्; माध्यन्दिनपवमानस्तोत्रे रथन्तरं साम, पृष्ठस्तोत्रे बृहत्सामेत्येव मुभयसामत्वस्य व्यवस्थितत्वात्। 'उभे हि'–इत्यनेनैव मेव व्यवस्था स्पष्टीक्रियते॥

(यद्यपि मरुत्वतीयशस्त्रावयवाः प्रतिपदादयः प्राकृता एव, तथापि तदनुवादेनात्र प्रशंसा क्रियते ‡) तत्र प्रतिपदनुचरौ दर्शयति— "आ त्वा रथं यथोतय, इदं वसो सुत मन्ध इति राथन्तरो प्रतिपद्, राथन्तरो ऽनुचरः; पवमानोक्थं वा एतद् यन् मरुत्वतीयम्; पवमाने वा अत्र रथन्तरं कुर्वन्ति, बृहत्पृष्ठं, सर्वोवधृतायै; तदिदं रथन्तरं सुत साम्भ्यां प्रतिपदनुचराभ्या मनुशंसति"–इति। "आ त्वा रथम्"–इति (ऋ० सं० ८. ६८. १.) यस्यृचः, सोऽयं मरुत्वतीयशस्त्रस्य प्रतिपत् §। अस्मिंस्तृचे रथन्तरं साम उद्गातृभिर्गीयते, तस्मादियं प्रतिपद् 'राथन्तरी'। "इदं वसो सुतम्"–इत्ययं (ऋ० सं० ८.२.१.)

---

* २भा० ४१—११४पृ० द्र०। † १भा० ११४पृ० द्र०।
‡ अस्मोभिरत्रतायत्रयो अत्र-प्रश्न नास्ति। § २भा० १५,११पृ० द्र०।

तृचो ऽनुचरः ; छन्दोदेवतादिना पूर्वेण समानत्वात् * । रथन्तरसामाधारस्य पूर्वस्य तृचस्य अनुसारित्वादस्यापि रथन्तरत्वम् । यत् मरुत्वतीयं शस्त्रं मस्ति, एतत् 'पवमानोक्थं वै' पवमानस्तोत्रानुसारेण शस्यमानत्वात् । 'उक्थं' शस्त्रम्, तद् द्विविधं पवमानोक्थं यज्ञोक्थञ्च; अतोऽत्र पवमानोक्थ मिति विशेष्यते । अस्मिंश्च माध्यन्दिनपवमानस्तोत्रे सामगा रथन्तरं साम कुर्वन्ति, पृष्ठस्तोत्रन्तु बृहत्सामोपेतं कुर्वन्ति, तदेतदुभयं 'सवीवधतायै' सम्पद्यते । उभयतः शिक्यद्वयेन जलकुम्भद्वयं वोढुं यः काष्ठविशेषः पुरुषाणां अंसे ध्रियते, स वीवध इत्युच्यते । सामद्वयोपेतस्य माध्यन्दिनसवनप्रयोगस्य वीवधसदृशत्वाद् वीवधेन सह वर्त्तत इति सवीवधत्वम् † । यदि रथन्तरं साम माध्यन्दिने पवमाने स्तुतम्, तदिदम् 'आभ्याम्' "आ त्वा रथम्"– "इदं वसो सुतम्"-इत्येताभ्यां प्रतिपदनुचराभ्या मनुशंसेत् ॥

ब्रह्मपृथिवीरूपत्वेन रथन्तरं प्रशंसति— "अथो ब्रह्म वै रथन्तरं, क्षत्रं बृहद्; ब्रह्म खलु वै क्षत्रात् पूर्वं, ब्रह्मपुरस्तान् म उग्रं राष्ट्र मव्यथ्य मसदित्यथाव वै रथन्तर मन्न मेवास्मै तत् पुरस्तात् कल्पयत्यथेयं वै पृथिवी रथन्तर मियं खलु वै प्रतिष्ठा, प्रतिष्ठा मेवास्मै तत् पुरस्तात् कल्पयति"–इति । यद् 'रथन्तरं' साम, तद् ब्राह्मणजातिस्वरूपम्; उभयोः प्रजापतिमुखजत्वात् ।

---

* ९भा० ८९५ पृ० द्र० ।

† 'विवधवीवधशब्दौ उभयतोबद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्त्तेते'-इति सि० कौ० (पा० ६.४.२७ सू०) । ता० ब्रा० ४.५.१९; १४.१.१० । आप० श्रौ० ११२.९ । विवध इति इत्यादिपाठश्चोभिरीयाणाम् ७.३.५.४; ७.६ । विवध इति पदगर्भमध्यपाठोऽपि क्वाचित्कः ।

तथा 'बृहत्'साम-क्षत्रियजात्योः प्रजापतिबाहुजत्वसाम्यादेकत्वम्। ब्राह्मणजातिः क्षत्रियजातेः पूर्वभाविनी, अतो बृहत्सामसाध्यात् पृष्ठस्तोत्रात् पूर्वं रथन्तरसामसाध्यस्य पवमानस्तोत्रस्य अनुष्ठाने इय मभिप्रायः। 'ब्रह्म' ब्राह्मणजातिः 'पुरस्तात्' पूर्वकाले यस्य राष्ट्रस्य, तदिदं 'ब्रह्मपुरस्तात्' 'मे' राज्ञो राष्ट्रम् उग्र मप्रधृष्यम् 'असद्' भवेदित्यभिप्रायः *। किञ्च ब्रह्महेतुत्वाद् 'रथन्तर' साम ब्रह्मात्मकम्; 'तत्' तेन रथन्तरप्रयोगेण 'अस्मै' राज्ञे ब्रह्म मेव 'पुरस्तात् कल्पयति' प्रथमतः सम्पादयति। किञ्चेदं 'रथन्तरं' साम 'इयं पृथिवी' भूमिस्वरूप मेव; इयञ्च भूमिः प्राणिनां 'प्रतिष्ठा' आधारः; 'तत्' तेन रथन्तरप्रयोगेण 'अस्मै' यजमानाय राज्ञे प्रतिष्ठा मेव कल्पयति॥

"इन्द्र नेदीय एदिहि"–"उत्तिष्ठ ब्रह्मणस्पते"–इत्येतं प्रगाथ-द्वयं (ऋ० सं० ८. ५३. ५. ६; १. ४०. १०२.) प्रशंसति— "समान इन्द्रनिहवो ऽविभक्तः; सोऽङ्गं सुहान्, ब्राह्मणस्पत्य उभयसाम्नो रूप मुभे हि सामनी क्रियेते"–इति। इन्द्रो नितरा माहूयते यस्मिन् प्रगाथे, सोऽत्र च प्रकृतौ च 'समानः' एक एव। तस्यैवेदं व्याख्यानम् 'अविभक्तः'–इति, अविकृत इत्यर्थः †। 'सः' च प्रगाथः 'अङ्गं', रूप मिति शेषः। अङ्गःप्रयोगस्य निष्पादकत्वात् तद्रूपत्वम्। यः प्रगाथः 'सुहान्' उच्छब्दवान् 'ब्राह्मणस्पत्यः' ब्रह्मणस्पतिदेवताकय; "उत्तिष्ठ ब्रह्मणस्पते"–इत्येवं श्रुतत्वात्। सोऽपि प्रशंसनीयः। किञ्चासौ प्रगाथ उभयसाम्नो रूपम्; 'हि' यस्मात् 'उभे' बृहद्-रथन्तरे सामनी, तस्मिन् प्रगाथे सामगैर्गीयेते ‡॥

* आ० श्रौ० ११. १ २—४ द्र०।   † २आ० ६७—७४पृ० द्र०।
‡ 'सामवेदेऽभिधीयते'–इति ख।

धाय्यानां सर्वां प्रकृतौ विकृतौ चैकत्व माह—"समान्यो धाय्या अविभक्तास्ता यज्ञाम्"–इति । 'समान्यः'–इत्यस्य व्याख्यानम् 'अविभक्ताः'–इति । ताश्चाद्दविशेषनिष्पादकत्वात् तत्स्वरूपाः * ॥

"प्र व इन्द्राय वृहते"–इत्यस्य ( ऋ० सं० ८. ८८. ३, ४. ) मरुत्वतीयप्रगाथस्य प्रकृतिविकृत्योरेकत्वं दर्शयति— "ऐकाहिको मरुत्वतीयः प्रगाथः"–इति † ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य षष्टमपञ्चिकायां प्रथमाध्याये ( षट्त्रिंशाध्याये ) प्रथमः खण्डः ॥ १ ॥

---

॥ अथ द्वितीयः खण्डः ॥

जनिष्ठा उग्रः सहसे तुरायेति सूक्तं सुयवत् सह-स्वत्तत् चत्रस्य रूपं मन्द्र ओजिष्ठ इत्योजस्वत्तत्चत्रस्य रूपं बहुलाभिमान इत्यभिवदभिभूत्यै रूपं तदेका-दशर्चं भवत्येकादशाचरा वै त्रिष्टुप् त्रैष्टुभो वै राजन्य ओजो वा इन्द्रियं वीर्यं त्रिष्टुबोजः चत्रं वीर्यं राज-न्यस्तदेन मोजसा चत्रेण वीर्येण समर्धयति तद्गौरि-वीतं भवत्येतद् वै मरुत्वतीयं समृद्धं यद्गौरिवीतं

* २आ० ७८–८१पृ० द्र० । † २आ० ८१पृ० द्र० ।

तस्योक्तं ब्राह्मणं त्वामिद्धि हवामह इति बृहत्पृष्ठं भवति क्षत्रं वै बृहत् क्षत्रेणैव तत् क्षत्रं समर्धयत्यथो क्षत्रं वै बृहदात्मा यजमानस्य निष्केवल्यं तद्यद् बृहत्पृष्ठं भवति क्षत्रं वै बृहत् क्षत्रेणैवैनं तत्समर्धयत्यथो ज्यैष्ठ्यं वै बृहज्ज्यैष्ठ्येनैवैनं तत्समर्धयत्यथो श्रैष्ठ्यं वै बृहच्छ्रैष्ठ्येनैवैनं तत्समर्धयत्यभि त्वा शूर नोनुम इति रथन्तर मनुरूपं कुर्वन्त्ययं वै लोको रथन्तर मसौ लोको बृहदस्य वै लोकस्यासौ लोको ऽनुरूपो ऽमुष्य लोकस्यायं लोकोऽनुरूपस्तद्यद् रथन्तर मनुरूपं कुर्वन्त्युभावेव तल्लोकौ यजमानाय सम्भोगिनौ कुर्वन्त्यथो ब्रह्म वै रथन्तरं क्षत्रं बृहद् ब्रह्मणि खलु वै क्षत्रं प्रतिष्ठितं क्षत्रे ब्रह्माथो साम्न एव सयोनितायै यद्वावानेति धाय्या तस्या उक्तं ब्राह्मण मुभयं शृणवच्च न इति सामप्रगाथ उभयसाम्नो रूप मुभे हि सामनी क्रियेते ॥ २ ॥

मरुत्वतीये शस्त्रे निविद्धानीयं सूक्तं प्रशंसति— "जनिष्ठा उग्रः सहसे तुरायेति सूक्त मुग्रवद्भद्रवत्तत्क्षत्रस्य रूपं, मन्द्र ओजिष्ठ इत्योजस्वत्तत् क्षत्रस्य रूपं, बहुलाभिमान इत्यभिवदभिभूत्यै रूपं; तदेकादशर्चं भवत्येकादशाक्षरा वै त्रिष्टुप्, त्रैष्टुभो वै राजन्य, ओजो वा इन्द्रियं वीर्यं त्रिष्टुबोजः क्षत्रं वीर्यं राजन्यस्तदेन मोजसा क्षत्रेण वीर्येण समर्धयति; तद्गौरिवीतं भवत्येतद्वै मरुत्वतीयं

समृद्धं यद्गौरिवीतं ; तस्योक्तं ब्राह्मणम्”—इति । “जनिष्ठाः”—इत्यस्मिन् पादे * उग्रशब्द सहःशब्दयोर्विद्यमानत्वात् तदेतत् सूक्तम् ‘उग्रवत्सहस्वत्’ । तचोभयं क्षत्रियजातेः स्वरूपम् ; क्षत्रियोऽपि क्रूरो बलवांश्च । द्वितीयपादस्य * पूर्वभागे “मन्द ओजिष्ठः” —इतिश्रुतत्वात् सूक्तम् ‘ओजस्वत्’ ओजःशब्दोपेतम् । ओजो नाम बलहेतुरष्टमो धातुः ; तस्य च धातोः क्षत्रिये सम्पूर्णत्वात् ओजःशब्देपेतं सूक्तं क्षत्रियस्य स्वरूपम् । तदुत्तरभागे * “बहुलाभिमानः”—इतिश्रुतत्वात् ‘अभिवत्’ अभिशब्दोपेतम् । तच ‘अभिभूत्यै’ शत्रूणा मभिभवस्य स्वरूपम् । किञ्च ‘तत्’ सूक्त मेकादशर्चं भवति †, त्रिष्टुप् चैकादशाक्षरा:, राजन्यश्च त्रिष्टुप्सम्बन्धी ; तयोरुभयोः प्रजापतिबाहुजत्वात् । किञ्चेयं त्रिष्टुबोजःप्रभृतीनां हेतुत्वात् तत्स्वरूपम् । ओजो बलहेतुरष्टमो धातुः, वीर्यं शरीरादिबलम्, इन्द्रियं चक्षुरादिपाटवम् ; राजन्यश्चौजःप्रभृतीनां स्वरूपभूतः । तत्रौजः पूर्व मेवोक्तम्, ‘क्षत्रं’ क्षत्रियजातियुक्तत्वम्, ‘वीर्यं’ शरीरादिबलम् । एवञ्च राजयज्ञे ‘तत्’ तेन त्रिष्टुप्छन्दस्कसूक्तपाठेन ‘एनं’ राजानं ओजःक्षत्रवीर्यं-समृद्धं करोति । किञ्च ‘एतत्’ सूक्तं गौरिवीत्याख्येन महर्षिणा दृष्टत्वात् गौरीवीताख्यं भवति ‡ । यस्मादेतद् गौरिवीतं, तस्मात् ‘एतत्’ मरुत्वतीयं शस्त्रं ‘समृद्धं’ सम्पूर्णं भवति । ‘तस्य’ च गौरिवीतनाम्नः सूक्तस्य ‘ब्राह्मणं’ “यद्वा एतद् यजमानजननम्”—इत्यादिना पूर्व मेवोक्तम् § ॥

* सोऽयमर्धर्चः — “जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः”—इति ।

† ऋ० सं० १० ७३ १—११ ऋच ।  ‡ २आ० ८४पृ० १७प० द्र० ।

§ २प० २ख० ८खु०—३आ० ८२पृ० १०प० द्र० ।

अथ निष्केवल्यशस्त्र माह— "त्वा मिद्धि हवामह इति बृहत्पृष्ठं भवति ; क्षत्रं वै बृहत्, क्षत्रेणैव तत् क्षत्रं समर्द्धयत्यथो क्षत्रं वै बृहदात्मा यजमानस्य निष्केवल्यं ; तद्यद् बृहत्पृष्ठं भवति, क्षत्रं वै बृहत्, क्षत्रेणैवैनं तत्समर्द्धयत्यथो ज्यैष्ठ्यं वै बृहज्ज्यैष्ठ्येनैवैनं तत्समर्द्धयत्यथो श्रैष्ठ्यं वै बृहच्छ्रैष्ठ्येनैवैनं तत्समर्द्धयति"–इति ।

"त्वा मिद्धि"–इत्यादिकस्तृचो निष्केवल्यशस्त्रस्य स्तोत्रियप्रतिपद्रूपः, बृहत्साम्न आधारत्वाद् बृहद्रूपः, तेन च साम्ना पृष्ठस्तोत्रस्य निष्पाद्यत्वात् पृष्ठसङ्ग्रश्च भवति । "त्वा मिद्धि"–इत्यस्या मृच्युत्पन्नं बृहत्साम 'क्षत्रं वै' क्षत्रियजातिरूप मेव ; अतः 'क्षत्रेणैव' त्वा मिद्धीति बृहद्रूपेण 'तत्' क्षत्रं यजमानरूपं समृद्धं करोति । 'अथो' अपि चोक्तरीत्या क्षत्र मेव बृहद्रूपं निष्केवल्यशस्त्रं च यजमानस्य 'आत्मा' देहभूतः ; 'तत्' तथा सति 'यद्' यदि बृहत्पृष्ठमन्दद्दयपार्थं त्वा मिद्धीत्यादिकं निष्केवल्यं भवेत्, 'तत्' तेन निष्केवल्येन, क्षत्रं वै बृहदिति पूर्वं मुक्तत्वात् 'क्षत्रेणैव' त्वा मिद्धीत्यादिना बृहद्रूपेण निष्केवल्येनैव 'एनं' यजमानं समृद्धं करोति । 'अथो' अपि च त्वा मिद्धीत्यादिकं बृहद्रूपं 'ज्यैष्ठ्यं वै' वयोवृद्धेः स्वरूपम्, अतो 'ज्यैष्ठ्येनैव, वयोवृद्धेन 'एनं' राजानं समृद्धं करोति । 'अथो' अपि च त्वा मिद्धीत्यादिकं बृहद्रूपं 'श्रैष्ठ्यं वै' गुणोत्कर्ष एव ; तथा सति 'श्रैष्ठ्येनैव' गुणोत्कर्षेणैव यजमानं समृद्धं करोति ॥

निष्केवल्यशस्त्रस्य प्रतिपद मुक्त्वा अनुरूप माह— "अभि त्वा शूर नोनुम इति रथन्तर मनुरूपं कुर्वन्त्ययं वै लोको रथन्तर मसौ लोको बृहदस्य वै लोकस्यासौ लोको ऽनुरूपो ऽमुष्य लोकस्यायं लोको ऽनुरूपस्तद्यद् रथन्तर मनुरूपं कुर्वन्त्युभावेव तल्लोकौ

यजमानाय सयोगिनी कुर्वन्त्यथो ब्रह्म वै रथन्तरं, चत्रं बृहद्; ब्रह्मणि खलु वै चत्रं प्रतिष्ठितं, चत्रे ब्रह्माथो साम्न एव सयोनितायै"–इति। "अभि त्वा शूर"–इत्येतं तृचं निष्केवल्यशस्त्रस्यानुरूपं कुर्युः *। यद्यपि त्वा मिद्धाभि त्वेत्येती प्रगाथौ ऋग्द्वयात्मकौ, तथापि प्रग्रथनेन तृचत्वं सम्पाद्य प्रतिपदनुचरत्वं द्रष्टव्यम्। अभि त्वेत्ययं तृचो रथन्तरसाम्न आधारत्वाद् रथन्तरमित्युच्यते। बृहद्रथन्तरशब्दाभ्यां विवचितं त्वा मिद्धाभि त्वेति तृचद्वयं मिलित्वा प्रशस्यते। भूलोको रथन्तरस्वरूपः, स्वर्गलोको बृहत्स्वरूपः; तावेतौ लोकौ परस्परानुरूपौ; अस्मिंल्लोके दत्तेन हविषा देवाः स्वर्गे जीवन्ति, स्वर्गादागतया वृष्ट्या मनुष्या जीवन्ति, तदेतत् परस्पर मनुरूपत्वम्। एवं सति बृहद्रथन्तररूपाभ्यां प्रतिपदनुचराभ्यां तुभावेव लोकौ यजमानार्थं समीचीनभोगयुक्तौ कुर्वन्ति। 'अथो' अपि च प्रजापतिमुखजत्वसाम्येन रथन्तरस्य ब्राह्मणरूपत्वात्, तदीयबाहुजत्वसाम्येन बृहतः चत्रियरूपत्वाच्च † बृहद्रथन्तराभिधानयोस्तृचयोरनुष्ठानेन ब्रह्मचत्रयोः परस्परा प्रतिष्ठा भवति। 'अथो' अपि च तृचद्वयानुष्ठानं निष्केवल्यशस्त्रस्य तृचद्वयाश्रितसाम्नश्च 'सयोनितायै' समानस्थानत्वाय सम्पद्यते॥

धाय्यां दर्शयति— "यद्वावानेति (सं०१०.७४.६) धाय्या; तस्या उक्तं ब्राह्मणम्'–इति। 'तस्याः' धाय्यायाः प्रशंसारूपं 'ब्राह्मणं' "तं देवा अब्रुवंस्त्वं वा अवोचथाः"–इत्यादिना पूर्व मेवोक्तम् ‡॥

---

* 'इत्येष तृचः निष्केवल्यस्यानुरूपः कार्य.'–इति ख।

† १भा० १९पृ० ५प०, २०३पृ० १२पं०—तै०स०७, १, १, ४।

‡ ३पं० २ख० १० ख०—२भा० ८४पृ० ४पं० द्र०।

सामाधारभूतं प्रगाथं दर्शयति— "उभयं शृणवच्च न इति सामप्रगाथ उभयसाम्नो रूप मुभे हि सामनी क्रियेते"–इति । उभय मित्यादिप्रगाथो बृहद्रथन्तरसामद्वयस्य स्वरूपम् ; यस्मादेते उभयसामनी तस्मिन् प्रगाथे सामगैर्गीयेते, तस्मात् तद्रूपत्वं युक्तम् * ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां प्रथमाध्याये (षट्त्रिंशाध्याये) द्वितीयः खण्डः ॥ २ ॥

---

॥ अथ तृतीयः खण्डः ॥

त मु ष्टुहि यो अभिभूत्योजा इति सूक्त मभिवदभिभूत्वै रूप मषाळ्ह मुग्रं सहमान माभिरित्युभयवत् सहमानवत् तत्क्षत्रस्य रूपं तरपञ्चदशं भवत्योजो वा इन्द्रियं वीर्यं पञ्चदश ओजः क्षत्रं वीर्यं राजन्यस्तदेन मोजसा क्षत्रेण वीर्येण समर्धयति तद्भारद्वाजं भवति भारद्वाजं वै बृहदार्षेयेण सलोमैष ह वाव क्षत्रियो यज्ञः समृद्धो यो बृहत्पृष्ठस्तस्माद् यत्र क्व च क्षत्रियो यजेत बृहदेव तत्र पृष्ठं स्यात् तत् समृद्धम् ॥ ३ ॥

---

* २आ० १०-१—११३४० द्र० ।

निष्केवल्यशस्त्रे निविद्धानीयसूक्तं दर्शयति— "त मु ष्टुहि यो अभिभूत्योजा इति ( सं०६.१८.१-१५. ) सूक्त मभिवदभिभूत्यै रूपम्"-इति । 'अभिवत्' अभिशब्दोपेतं सूक्तम् । तस्माद् 'अभिभूत्यै' शत्रूणा मभिभवस्य स्वरूपम् * ॥

तस्या ऋचः तृतीयपाद मनूद्य प्रशंसति— "अषाळ्हमुग्र' सहमान माभिर्गीर्भिरुग्रवत् , सहमानवत् , तत् क्षत्रस्य रूपम्"-इति । उग्रशब्द-सहमानशब्द-युक्त मिदं सूक्तम् ; तच्च शब्दद्वयवाच्यं क्षत्रियजातेः स्वरूपम् ; क्षत्रियो ह्युग्रो भूत्वा शत्रून् अभिभवति ॥

तत्सूक्तगता मृक्संख्यां प्रशंसति— "तत् पञ्चदशर्चं भवत्योजो वा इन्द्रियं वीर्यं पञ्चदश, ओजः क्षत्रं वीर्यं राजन्यस्तदेन मोजसा क्षत्रेण वीर्येण समर्धयति"-इति । पूर्वोक्तत्रिष्टुप्-प्रशंसावाक्यवत् ( १७१ पृ० ) इदं पञ्चदशस्तोमप्रशंसावाक्यं व्याख्येयम् † ॥

तद्विहारा सूक्तं प्रशंसति— "तद्भारद्वाजं भवति ; भारद्वाजं वै बृहदार्षेयेण सलोमा"-इति । भरद्वाजेन दृष्टत्वादिदं सूक्तं 'भारद्वाजम्', 'बृहत्' सामापि तथा भारद्वाजम् । तादृशबृहद्-योगादयं क्रतुः 'आर्षेयेण सलोमा' आर्षेयो भरद्वाजमुनिसम्बन्धः, लोमशब्देन केशयुक्तो मूर्धोपलक्ष्यते ; 'सलोमा' सशिरस्कः, सम्पूर्णं इत्यर्थः । भरद्वाज-मुनिदृष्टस्य बृहतः सम्पूर्णत्वाद् बृहद्द्वारा मुनिसम्बन्धे ‡ सति क्रतोरपि सम्पूर्णत्वं द्रष्टव्यम् ॥

इदानीं बृहद्रथन्तरसामोपेतप्रकृतयज्ञक्रतुसंस्त्वि § मुपजीव्यैक-

---

* प्रकृतौ तु इन्द्रस्य नु वीर्याणि इति विहितम् ( पृभा० ११३पृ० ) द्र० ।

† "पिबा सोमं व स दुरोति मध्यन्दिन" , तयोरैकाहिके पृष्ठ्यादन्ये वा प्रवेयुः"-इति आश्व० श्रौ० ८, ५, ७, ५ ।

‡ 'सम्पूर्णत्वाद भरद्वाजमुनिसम्बन्धे'-इति ख । § '०क्रतुसम्बन्ध'-इति ख ।

सामकेऽपि क्षत्रिययज्ञे पृष्ठस्तोत्रस्य बृहत्सामसाध्यत्वं विधत्ते— "एष ह वाव क्षत्रिययज्ञः समृद्धो यो बृहत्पृष्ठस्तस्माद् यत्र क्व च क्षत्रियो यजेत, बृहदेव तत्र पृष्ठं स्यात्, तत् समृद्धम्"— इति। 'यः' क्रतुः त्रिसामकत्वेन * बृहत्पृष्ठेऽपेतः, एष एव क्षत्रिययज्ञः 'समृद्धः' सम्पूर्णः। यस्मादेवं, तस्माद् 'यत्र क्व च' एकसामकेन अपि क्रतुना क्षत्रियो यजेत, तत्र पृष्ठस्तोत्रं बृहत्सामयुक्तमेव कुर्यात्। 'तत्' एतदनुष्ठानं 'समृद्धं' सम्पूर्णं भवति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां प्रथमाध्याये
( षट्त्रिंशाध्याये ) तृतीयः खण्डः ॥ ३ ॥

---

॥ अथ चतुर्थः खण्डः ॥

ऐकाहिका होत्रा एता वै शान्ताः क्लृप्ताः प्रतिष्ठिता होत्रा यदैकाहिकाः शान्त्यै क्लृप्त्यै प्रतिष्ठित्या अप्रच्युत्यै ताः सर्वरूपा भवन्ति सर्वसमृद्धाः सर्वरूपतायै सर्वसमृद्ध्यै सर्वरूपाभिर्होत्राभिः सर्वसमृद्धाभिः सर्वान् कामानवाप्नवामेति तस्माद् यत्र क्व चैकाहा असर्वस्तोमा असर्वपृष्ठा ऐकाहिका एव तत्र होत्राः†

* 'त्रिसामको'—इति ख।

† "होत्रा"—इति त्रिविसर्गपाठ ब, ड। एव सुमनसापि यथ्पदे सकारे।

स्युस्तत्समृद्धं मुक्थ्य एवायं पञ्चदशः स्यादित्याहु-रोजो वा इन्द्रियं वीर्यं पञ्चदश ओजः क्षत्रं वीर्यं राजन्यस्तदेन मोजसा क्षत्रेण वीर्येण समर्द्धयति तस्य त्रिंशत्स्तुतशस्त्राणि भवन्ति त्रिंशदक्षरा वै विराड् विराळन्नाद्यं विराज्यैवैनं तदन्नाद्ये प्रति-ष्ठापयति तस्मात् तदुक्थ्यः पञ्चदशः स्यादित्याहु-र्ज्योतिष्टोम एवाग्निष्टोमः स्याद् ब्रह्म वै स्तोमानां त्रिवृत् क्षत्रं पञ्चदशो ब्रह्म खलु वै क्षत्रात् पूर्वं ब्रह्म पुरस्तान् म उग्रं राष्ट्र मव्यथ्य मसदिति विशः सप्त-दशः शौद्रो वर्णं एकविंशो विशञ्चैवास्मै तच्छौद्रञ्च वर्णं मनुवर्त्मानौ कुर्वन्त्यथो तेजो वै स्तोमानां त्रिवृ-द्वीर्यं पञ्चदशः प्रजातिः सप्तदशः प्रतिष्ठैकविंशस्तदेनं तेजसा वीर्येण प्रजात्यां प्रतिष्ठयान्ततः समर्द्धयति तस्माज्ज्योतिष्टोमः स्यात् तस्य चतुर्विंशति स्तुतशस्त्रा-णि भवन्ति चतुर्विंशत्यर्द्धमासो वै संवत्सरः संवत्सरे कृत्स्न मन्नाद्यं कृत्स्न एवैनं तदन्नाद्ये प्रतिष्ठाप-यति तस्माज्ज्योतिष्टोम एवाग्निष्टोमः स्यादग्नि-ष्टोमः स्यात् ॥ ४ ॥

॥इत्यैतरेयब्राह्मणेऽष्टमपञ्चिकायां प्रथमोऽध्यायः॥ १ ॥

माध्यन्दिनसवने होतुः शस्त्रविशेष मभिधाय होत्रकाणां विशेषाभावं दर्शयति— "ऐकाहिका होत्रा; एता वै शान्ताः क्लृप्ताः प्रतिष्ठिता होत्रा, यदैकाहिकाः शान्त्यै क्लृप्त्यै प्रतिष्ठित्या अप्रच्युत्यै; ताः सर्वरूपा भवन्ति सर्वसमृद्धाः, सर्वरूपतायै सर्वसमृद्ध्यै, सर्वरूपाभिर्होत्राभिः सर्वसमृद्धाभिः, सर्वान् कामानवाप्नवामेति, तस्माद् यत्र क्व चैकाहा असर्वस्तोमा असर्वपृष्ठा ऐकाहिका एव तत्र होत्राः स्युस्तत्समृद्धम्"–इति। मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां याः क्रियास्ताः 'होत्राः' *, ताश्च 'ऐकाहिकाः' एकाहे प्रकृतिरूपे विहिता एवात्र विकृतिरूपे ऽहर्विशेषे कर्त्तव्याः। 'एताः' च होत्राः शान्तत्वादिगुणकाः। शान्तादिशब्दार्थाः पूर्ववद् ( ११५पृ० ) व्याख्येयाः। 'ताः' चैकाहिका होत्राः 'सर्वरूपाः सर्वसमृद्धाश्च भवन्ति' तत्तद्विकृतिषु होत्रकाणां ये ये विशेषा उक्ताः, तद्रूपत्वं सर्वरूपत्वम्; तत्तत्फलसमृद्धिः सर्वसमृद्धिः; एतच्चोभय मिन्द्राभिष्टवनेन सवितृस्य प्रतिपादनसामर्थ्यात् सम्पद्यते। अतः 'सर्वरूपतायै' सर्वलोकप्राप्त्यर्थं, तच्च सर्वभोगसमृद्ध्यर्थम्, उक्ता होत्रकाः सम्पद्यन्ते। ततः क्षत्रियाः पुरुषाः सर्वरूपाभिः सर्वसमृद्धाभिरैकाहिकाभिर्होत्राभिः सर्वान् कामानवाप्नवामेति अभिप्रायेण ऐकाहिकानुष्ठानं कुर्युः †। एकाहाश्च द्विविधाः,— सर्वस्तोम-सर्वपृष्ठाः, तद्विपरीताश्च। पृष्ठेन पळङ्गे प्रतिपादिताः त्रिवृत्-पञ्चदश-सप्तदश-एकविंश-त्रिणव-त्रयस्त्रिंशरूपाः षट्सङ्ख्याकाः सर्वे स्तोमाः। तस्मिन्नेव पृष्ठ्यषळहे रथन्तर-बृहद्-वैरूप-वैराज-शाक्वर-रैवतानि षट्सङ्ख्याकानि सर्व-

* ३भा० २४०पृ० १८पं०, २७७पृ० १७पं० द्र०।

† 'ऐकाहिकहोत्रानुष्ठान'-इति घ।

पृष्ठानि * । तैः सर्वैः स्तोमैः पृष्ठैश्च युक्तेभ्य एकाहेभ्यो व्यतिरिक्ताः कतिपयस्तोमपृष्ठयुक्ता एकाहाः 'असर्वस्तोमा असर्वपृष्ठाः' च । यस्माद् ऐकाहिका होत्राः पूर्वोक्तरीत्या प्रशस्ताः, तस्मात् यत्र क्वापि असर्वस्तोमा असर्वपृष्ठाश्चैकाहा अनुष्ठीयन्ते, तत्र सर्वत्र ऐकाहिका एव होत्राः स्युः; न तु नूतनो विशेषः कश्चिदस्ति । 'तत्' तादृशं कर्म 'सम्प्रदं' फलेन सम्पूर्णम् ॥

अथ क्षत्रियस्य संस्थाविशेषो निर्णेतव्यः, तदर्थं आदौ केषाञ्चित् पक्ष मुपन्यस्यति— "उक्थ्य एवायं पञ्चदशः स्यादित्याहुरोजो वा इन्द्रियं वीर्यं पञ्चदश, ओजः क्षत्रं वीर्यं राजन्यस्तदेन मोजसा क्षत्रेण वीर्येण समर्धयति"–इति । 'अयं' क्षत्रियस्य उक्थ्यसंस्थ एव †; सर्वेष्वपि स्तोत्रेषु पञ्चदशस्तोम एव स्यादित्येवं एके ब्रह्मवादिन आहुः । ओजो वा इत्यादिकं पूर्ववद् ( १७५पृ० ) व्याख्येयम् ॥

उक्थ्ये स्तोत्रशस्त्रसङ्ख्यां प्रशंसति— "तस्य त्रिंशत् स्तुतशस्त्राणि भवन्ति ; त्रिंशदक्षरा वै विराड्, विराळन्नाद्यं विराज्यैवैनं तदन्नाद्ये प्रतिष्ठापयति ; तस्मात् तदुक्थ्यः पञ्चदशः स्यादित्याहुः"–इति । 'तस्य' उक्थ्यस्य पञ्चदश स्तोत्राणि, पञ्चदश शस्त्राणि ‡ इत्येवं त्रिंशत् सङ्ख्या ; तथा सत्यक्षरद्वारा विराड्रूपत्वाद्, विराजश्चान्नसाधनत्वात् 'एनं' यजमानं विराट्सामर्थ्येन अन्नाद्ये प्रतिष्ठापयति, 'तस्मात्' एवं पञ्चदशस्तोत्रशस्त्रत्वात्

---

* १भा० ८४पृ० ॐ, १८६— १८८पृ० द्र० ।

† उक्थ्यक्रतुपयोक्तृ पृ० १.प० ( १भा० २१४—२१८पृ० ) द्र० ।

‡ "पञ्चदशोक्थ्यस्य स्तोत्राणि पञ्चदश शस्त्राणि"–इति २भा० १८०पृ० । "पञ्चदश स्तोत्राणि पञ्चदश शस्त्राणि, स मास."–इति ता० ब्रा० ३. २. ९ ।

'तदुक्थ्यः' स क्षत्रिययज्ञ उक्थ्यसंस्थः पञ्चदशस्तोमयुक्तः स्यात् । इत्येवं केचिदाहुः ॥

अथ स्वपक्ष माह— "ज्योतिष्टोम एवाग्निष्टोमः स्याद्"–इति । योऽयं क्षत्रियाणां ज्योतिष्टोमः, सोऽग्निष्टोमसंस्थ एव स्यात् ॥

तस्मिन्नग्निष्टोमे ये त्रिवृदादयश्चत्वारः स्तोमास्तान् ब्राह्मणादि-वर्णचतुष्टयरूपेण तेजआदिगुणचतुष्टयरूपेण च प्रशंसति— "ब्रह्म वै स्तोमानां त्रिवृत् , क्षत्रं पञ्चदशो , ब्रह्म खलु वै क्षत्रात् पूर्वं , ब्रह्म पुरस्तान् म उग्रं राष्ट्रं मव्यथ्य मसदिति ; विशः सप्तदशः ; शौद्रो वर्ण एकविंशो ; विशञ्चैवास्मै तच्छौद्रं च वर्णं मनुवर्त्मानौ कुर्वन्त्यथो तेजो वै स्तोमानां त्रिवृद्, वीर्यं पञ्चदशः, प्रजातिः सप्तदशः, प्रतिष्ठैकविंशस्तदेनं तेजसा वीर्येण प्रजात्या प्रतिष्ठयान्ततः समर्धयति ; तस्माज्ज्योतिष्टोमः स्यात्"–इति । प्रजापतेर्मुखबाहु-मध्यदेशपादेभ्य उत्पत्तिसाम्यात् त्रिवृदादिस्तोमानां ब्राह्मणादि-वर्णचतुष्टयरूपत्वम् *। तत्र ब्राह्मणपूर्वकं राष्ट्रं मदीय मुग्रं मव्यथ-नीयं चास्त्वित्यभिप्रायेण क्षत्रियस्य त्रिवृत्–पञ्चदशौ क्रमेण अनु-ष्ठेयौ । सप्तदशैकविंशयोरनुष्ठानेन वैश्यशूद्रौ वर्णौ क्षत्रियस्यानुगा-मिनौ कुर्वन्ति । त्रिविदादिस्तोमानां तेजोवीर्यप्रजननप्रतिष्ठासाध-नत्वात् तत्तद्रूपत्वम् । तेषा मनुष्ठानेन 'एनं' क्षत्रियम् 'अन्ततः' यज्ञस्यान्ते तेजआदिभिः समृद्धं करोति । तस्मात् क्षत्रियस्य त्रिविदादिस्तोमचतुष्टयविशिष्टो ज्योतिष्टोमः स्यात् ॥

अग्निष्टोमसंस्थे तस्मिन् स्तोत्रशस्त्रसङ्ख्यां प्रशंसति— "तस्य चतुर्विंशति स्तुतशस्त्राणि भवन्ति ; चतुर्विंशत्यर्धमासो वै संवत्सरः, संवत्सरे कृत्स्न मन्नाद्यं , कृत्स्न एवैनं तदन्नाद्ये प्रतिष्ठापयति ;

* १भा० १८४० ५५०, २०३४० १२५०—तै० सं० ७, १, १, ४ ।

तस्माज्ज्योतिष्टोम एवाग्निष्टोमः स्यादग्निष्टोमः स्यात्"–इति । 'तस्य' अग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य द्वादश स्तोत्राणि द्वादश शस्त्राणि, एवं चतुर्विंशतिसङ्ख्या ; ततोऽर्द्धमासद्वारा संवत्सरत्वम् ; संवत्सरे च हि: शस्यानां पच्यमानत्वादन्नाद्यं 'कृत्स्नं' सम्पूर्णं भवति* । तेन 'एनं' यजमानं सम्पूर्ण एव अन्नाद्ये प्रतिष्ठापयति । तस्मात् क्षत्रियस्य ज्योतिष्टोमो अग्निष्टोमसंस्थ एव स्यात्, न तूक्थ्यसंस्थः । अभ्यासोऽध्यायपरिसमाप्त्यर्थः † ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां प्रथमाध्याये
( षट्त्रिंशाध्याये ) चतुर्थः खण्डः ॥ ४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'–नामभाष्ये
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायाः प्रथमोऽध्यायः ॥

---

* "चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि"–इति इत० उप०( २भा० ३२।१० )। सं-
हि० ब्रा० ४, ३. १२ पत्र मिः ।

† "अथ राजसूयाः ( ८, १. १ )"–इत्यादावस्याध्ययनस्य दशाधीषः ।

## ॥ अथ द्वितीयाध्यायः ॥

( ब्र )

॥ अथ प्रथमः खण्डः ॥

---

अथातः पुनरभिषेकस्यैवं सूयते ह वा अस्य क्षत्रं यो दीक्षते क्षत्रियः सन्त्स यदा ऽवभृथादुदेत्यानूबन्ध्ययेष्ट्वोदवसानीयायां संस्थितायां पुनरभिषिञ्चति तथैते पुरस्तादेव सम्भारा उपक्लृप्ता भवन्त्यौदुम्बर्यासन्दी तस्यै प्रादेशमात्राः पादाः स्युररत्निमात्राणि शीर्षण्यानूच्यानि मौञ्जं विवयनं व्याघ्रचर्मास्तरणमौदुम्बरश्चमस उदुम्बरशाखा तस्मिन्नेतस्मिंश्चमसे ऽष्टातयानि निषुतानि भवन्ति दधि मधु सर्पिरातपवर्ष्या आपः शष्पाणि च तोक्मानि च सुरा दूर्वा तद्येषा दक्षिणा स्फ्यावर्त्तनिर्वेदेर्भवति तत्रैतां प्राचीमासन्दीं प्रतिष्ठापयति तस्या अन्तर्वेदि द्वौ पादौ भवतो बहिर्वेदि द्वावियं वै श्रीस्तस्या एतत् परिमितं रूपं यदन्तर्वेद्यथैष भूमा ऽपरिमितो यो बहिर्वेदिं तद्यदस्या अन्तर्वेदि द्वौ पादौ भवतो बहिर्वेदि द्वा उभयोः कामयोरुपाप्त्यै यश्चान्तर्वेदि यश्च बहिर्वेदि ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥

सुतस्तत्त्विशेषोऽस्य क्षत्रियस्योपवर्णितः ।

क्रतौ समाप्ते ऽथ पुनरभिषेकोऽत्र वर्ण्यते ॥

तमेतमभिषेकं प्रतिजानीते— "अथातः पुनरभिषेकस्यैव" –इति । 'अथ' क्रतुसमाप्त्यनन्तरम्, यतः क्षत्रियो ऽभिषेकमर्हति, 'अतः' कारणात् पुनरभिषेकस्यैव, विधिरुच्यत इति शेषः *। राज्ञः पूर्वमभिषिक्तत्वादयं पुनरभिषेको भवति। इतरस्यापि क्षत्रियस्य माहेन्द्रग्रहाय प्रस्तुते सत्यभिषेकस्य आध्वर्यवस्य विद्यमानत्वात् † अयं पुनरभिषेको भवति ॥

तमेव विधत्ते— "सूयते ह वा अस्य क्षत्रं यो दीक्षते क्षत्रियः सन्त्स यदा ऽवभृथादुदेत्यानूबन्ध्ययेष्ट्वोदवस्यत्यथैनमुदवसानीयायां संस्थितायां पुनरभिषिञ्चति"–इति । 'यः' पुमान् क्षत्रियः सन् 'दीक्षते' दीक्षां प्राप्नोति, 'अस्य' क्षत्रस्य पुरुषस्य 'क्षत्रं' सर्वेषां प्राणिनां क्षतात् पापम् 'सूयते' प्रवर्तते। तस्मात् 'सः' क्षत्रियो यदा 'अवभृथादुदेत्य' अवभृथाख्यं कर्म समाप्तं कृत्वा, 'अनूबन्ध्यया' तदाख्यया कया चित् पशुस्थानीयया 'इष्ट्वा' यागं कृत्वा, पश्चात् 'उदवस्यति' उदवसानीयाख्येष्ट्या कर्मविधानं करोति, 'अथ' तदानीम् 'एनं' क्षत्रियमुदवसानीयेष्टौ समाप्तायां पुनरपि, कर्माङ्गत्वेन ऋत्विजो ऽभिषिञ्चेयुः ॥

---

* "तं वै प्राञ्चं तिष्ठन्तमभिषिञ्चति पुरस्तात् ब्राह्मणो ऽभिषिञ्चत्यध्वर्युर्वा, यो वास्य पुरोहितो भवति; पश्चादितरे •—• इदं सर्वं यो राजसूयेन यजते"–इत्यादि शत० ब्रा० ५. ४. २. १—५ ।

† "तं वै माध्यन्दिने सवने ऽभिषिञ्चति •—• अगृहीते माहेन्द्रे"–इत्यादि शत० ब्रा० ५.३.५.१ । 'माहेन्द्रे ग्रहे अगृहीते सोमरसेनापूर्णे, मरुत्वतीयान्ते इत्यर्थः'–इति तत्र सा० भा० ।

तस्याभिषेकस्य साधनानि विधत्ते— "तस्यैते पुरस्तादेव सम्भारा उपक्लृप्ता भवन्त्यौदुम्बर्यासन्दी ; तस्यै प्रादेशमात्राः पादाः स्युररत्निमात्राणि शीर्षण्यानूच्यानि ; मौञ्जं विवयनं, व्याघ्रचर्मास्तरण, औदुम्बरश्चमस , उदुम्बरशाखा ; तस्मिन्नेतस्मिंश्चमसेऽष्टातयानि निषुतानि भवन्ति,— दधि मधु सर्पिरातपवर्ष्या आपः शष्पाणि च तोक्मानि च दूर्वा"—इति । 'तस्य' पुनरभिषेकस्य 'एते' वक्ष्यमाणाः 'सम्भाराः' सम्पादनीया द्रव्यविशेषाः 'पुरस्तादेवोपक्लृप्ताः' अभिषेककालात्प्रागेव सम्पादिता भवेयुः । के वस्तुविशेषाः सम्पादनीयाः ? ते ऽभिधीयन्ते । उदुम्बरकाष्ठैर्निर्मिता का चिदासन्दी । 'तस्यै' तस्या आसन्द्याः चत्वारः पादाः प्रादेशपरिमिताः ; तेषां पादानां शिरस्युपरिभागे ऽवस्थितानि 'शीर्षण्यानि' , अन्वक्तिर्यगवस्थितानि काष्ठानि 'अनूच्यानि', तानि शीर्षण्यनूच्यानि' * अरत्निपरिमितानि । प्रादेशद्वय मरत्निः । 'विवयनं' विविधं वयनं रज्ज्वा ओतप्रोतरूपेण संयोजनम् , तच्च 'मौञ्जं' मुञ्जतृणेन निर्मितम् । ईदृश्या आसन्द्या उपरि आस्तरणं व्याघ्रचर्म । दध्यादिप्रक्षेपार्थः प्रौढ उदुम्बरकाष्ठनिर्मितश्चमसः । तथा काचित् सूक्ष्मा 'उदुम्बरशाखा' । 'तस्मिन्नेतस्मिन् औदुम्बरे' प्रौढे चमसे वक्ष्यमाणदध्यादिद्रव्याणि 'अष्टातयानि' । अत्र द्वितयत्रितयादिवत् "सङ्ख्याया अवयवे तयप्"—इति ( पा० ५.२.४२.सू० )

---

* यथास्मत्परिदृष्टात् वतीयाध्यायीयायज्ञभाष्ये — 'अनूच्ये पार्श्वद्वयवर्तिनी फलके'—इति । "आसन्दी समभरन् । तस्या ग्रीष्मश्च वसन्तश्च द्वौ पादावास्तां, शरच्च वर्षाश्च द्वौ । बृहच्च रथन्तरं चानूच्ये आस्तां, यज्ञायज्ञियं च वामदेव्यं च तिरश्च्ये"—इति अथ० सं० १५. ३. ३-५ । "चतु[illegible] पादा भवन्ति, चतु[illegible]नूच्यानि"—इति शत० ब्रा० ६. ७. १. १५ । "चत्वारः पादाश्चत्वार्यनूच्यानि"—इति च तत्रैव २८ ।

सूत्रेण तदर्थ प्रत्ययः । अष्टसङ्ख्याका अवयवा येषां दध्यादीनां तान्यष्टतयानि । दीर्घश्छान्दसः । तानि च 'नियुतानि' नितरां युतानि प्रक्षिप्तानि भवन्ति । यमसे प्रक्षेपणीयान्यष्ट-द्रव्याणि कानि ? इति, तान्युच्यन्ते— दधि, मधु, सर्पिरित्येतानि त्रीणि प्रसिद्धानि ; आतपयुक्तवर्षभवाः 'आतपवर्ष्याः' *, तादृश्य आपश्चतुर्थं द्रव्यम् ; 'शष्पाणि' श्यामतृणानि , पञ्चमं द्रव्यम् ; 'तोक्मानि' अङ्कुराणि षष्ठं द्रव्यम् ; सुरा, दूर्वेति द्रव्यद्वयं प्रसिद्धम् ॥

सम्पादितायाः आसन्द्याः प्रतिष्ठापनं विधत्ते— "तस्यै वा दक्षिणा स्फ्यावर्त्तनिर्वेदिर्भवति , तस्यैतां प्राचीं आसन्दीं प्रतिष्ठापयति ; तस्या अन्तर्वेदि द्वौ पादौ भवतो बहिर्वेदि द्वाविय' वै श्रीस्तस्या एतत्परिमितं रूपं यदन्तर्वेद्यथैष भूमा ऽपरिमितो यो बहिर्वेदि ; तद् यदस्या अन्तर्वेदि द्वौ पादौ भवतो, बहिर्वेदि द्वा, उभयोः कामयोरुपाप्त्यै यच्चान्तर्वेदि यच्च बहिर्वेदि"–इति । पुरा वेदिपरिग्रहार्थं स्फ्येन लेखाद्वयं कृतम्— दक्षिणा प्रतीच्युदीची च । तत्र देवयजनदेशे येयं वेदेः सम्बन्धिनी दक्षिणा 'स्फ्यवर्त्तनिः' स्फ्यस्य रेखा भवति , 'तत्र' तस्यां रेखायाम् 'एताम्' आसन्दीं 'प्राचीं' प्रागग्राम् अवस्थापयेत् । "तस्याः" आसन्द्या उत्तरदिग्गतौ द्वौ पादावन्तर्वेदि तिष्ठतः ; दक्षिणदिग्गतौ द्वौ पादौ बहिर्वेदि स्थापनीयौ । 'इयं' भूमिः 'श्रीर्वै' सम्पद्रूपैव । 'तस्याः' भूमेरन्तर्वेदि यद् रूप मस्ति , एतत् 'परिमितम्' अल्पम् , अथ बहिर्वेदि 'यः' प्रदेशोऽस्ति , एष 'भूमा' बहुलः अत एव 'अपरि-

* "अन्तरिक्षात् प्रतिष्ठावर्ष्याः"–इति कात्या॰ श्रौ॰ १५. ४. ५ । 'आतपे वर्षन्ति, ताः अन्तरिक्षात् प्रविष्टस्य भूमिपतनात् प्रागेव आकाशात् पततीरादाय गृह्णाति' –इति यद-व्याख्यानम् ।

मित.' इयानिति परिच्छेदरहितः। एवं सति वेदेर्मध्ये बहिश्चान्या द्वौ द्वौ पादाविति यदस्ति, तदुभयोः कामयोः प्राप्त्यै भवति,— यश्च कामो वेदिमध्ये लभ्यते, यश्च अन्यः कामो वेदेर्बहिर्लभ्यते, तदुभयसिद्धार्थं मेवं स्थापन मिति ॥ १ (५) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां द्वितीयाध्याये (सप्तत्रिंशाध्याये) प्रथमः खण्डः ॥ १ (५) ॥

---

॥ अथ द्वितीयः खण्डः ॥

व्याघ्रचर्मणास्तृणात्युत्तरलोम्ना प्राचीनग्रीवेण क्षत्रं वा एतदारण्यानां पशूनां यद् व्याघ्रः क्षत्रं राजन्यः क्षत्रेणैव तत्क्षत्रं समर्धयति तां पश्चात् प्राङुपविश्याच्य जानु दक्षिण मभिमन्त्रयत उभाभ्यां पाणिभ्यां मालभ्याग्निष्ट्वा गायत्र्या सयुक् छन्दसारोहतु सवितोष्णिहा सोमो ऽनुष्टुभा बृहस्पतिर्बृहत्या मित्रावरुणौ पङ्क्त्येन्द्रस्त्रिष्टुभा विश्वेदेवा जगत्या तानह मनु राज्याय साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्या-

याधिपत्याय स्वावश्यायातिष्ठायारोहामीत्येता मासन्दी मारोहेद्दक्षिणेनाग्रे जानुनाथ सव्येन तत्तदितीरे*
चतुरुत्तरैर्वै देवाश्छन्दोभिः सयुग् भूत्वैतां श्रिय मारोहन्यस्या मेत एतर्हि प्रतिष्ठिता अग्निर्गायत्र्या सवितोष्णिहा सोमो ऽनुष्टुभा बृहस्पतिर्बृहत्या मित्रावरुणौ पङ्क्त्येन्द्रस्त्रिष्टुभा विश्वेदेवा जगत्या ते एते अभ्यनूच्येते अग्नेर्गायत्र्यभवत्सयुग्वेति कल्पते ह वा अस्मै योगक्षेम उत्तरोत्तरिणीं ह श्रिय मश्नुते ऽश्नुते ह प्रजाना मैश्वर्यं माधिपत्यं य एव मेता अनु देवता एता मासन्दी मारोहति क्षत्रियः सन्नथैन मभिषेक्ष्यन्नपां शान्तिं वाचयति शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे । सर्वाँ** अग्नीँ रप्सुषदो हुवे वो मयि वर्चो बल मोजो निधत्तेति नैतस्याभिषिषिचानस्याशान्ता आपो वीर्यं निर्हणन्निति † ॥ २ ( ६ ) ॥

प्रतिष्ठिताया आसन्द्या उपरि चर्मास्तरणं विधत्ते — "व्याघ्रचर्मणास्तृणात्युत्तरलोम्ना प्राचीनग्रीवेण ; क्षत्रं वा एतदारण्यानां पशूनां यद् व्याघ्रः, क्षत्रं राजन्यः, क्षत्रेणैव तत् क्षत्रं समर्द्धयति"— इति । उत्तर मूर्द्धभागे लोमानि यस्य चर्मणस्तत् 'उत्तरलोम', प्राच्यां दिशि ग्रीवा यस्य चर्मणस्तत् 'प्राचीनग्रीवम्' । तादृशेन

* "सर्वाँ"—इति ख, ग । † "निर्हणन्निति"—इति ख, ग, ङ ।

व्याघ्रचर्मणा तां मासन्दीं मास्तृणीयात् । अरण्ये एवावस्थिता आरण्याः पशवो हरिणादयः। यो व्याघ्रोऽस्ति एतदारण्यपशूनां मध्ये 'क्षत्रं वै' क्षत्रियवच्छूरः ; योऽयं 'राजन्य' यजमानः, सोऽपि 'क्षत्र' क्षत्रियजातित्वाच्छूरः। अतस्तयोर्धमोस्तरणाद् व्याघ्रचर्मरूपेण 'क्षत्रेणैव' यजमानरूपं 'क्षत्रं' समृद्धं करोति ॥

आसन्द्या अभिमन्त्रणं विधत्ते— "तां पश्चात्प्राङुपविश्याच्य जानु दक्षिण मभिमन्त्रयत उभाभ्यां पाणिभ्या मालभ्य"-इति। प्रतिष्ठापितायाः आसन्द्याः पश्चाद् भागे यजमानः प्राङ्मुख उपविश्य, दक्षिणं यत् जान्वस्ति, तत् 'आच्य' भूमिस्पृष्टं यथा भवति तथा न्यग्भूतं कृत्वा, सव्यजानु ऊर्ध्वमुख मेवावस्थाप्य, उभाभ्यां पाणिभ्या मासन्दीम् 'आलभ्य' स्पृष्ट्वा, वक्ष्यमाणमन्त्रेणाभिमन्त्रयेत् ॥

तं मन्त्रं दर्शयति— "अग्निष्टा गायत्र्या सयुक् छन्दसारोहतु, सवितोष्णिहा, सोमो ऽनुष्टुभा, बृहस्पतिर्बृहत्या, मित्रावरुणौ पङ्क्त्येन्द्रस्त्रिष्टुभा, विश्वेदेवा जगत्या, तानहमनु राज्याय साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठायारोहामीति"-इति। हे आसन्दि ! 'त्वा' त्वां गायत्र्या छन्दसा 'सयुक्' सहितः अग्निः आरोहतु। 'उष्णिहा' छन्दसा सहितः सविता आरोहतु। एवं सोमबृहस्पतिमित्रावरुणेन्द्रविश्वेदेवाः अनुष्टुबादिच्छन्दोभिः सहिताः त्वा मारोहन्तु। 'तान्' अग्न्यादीन् देवान् 'अनु' पश्चाद् अहम् आरोहामि। किमर्थम् ? राज्यादिसिद्ध्यर्थम्। 'राज्यं' देशाधिपत्यम्। 'साम्राज्यं' धर्मेण पालनम्। 'भौज्यं' भोगसमृद्धिः। 'स्वाराज्यम्' अपराधीनत्वम्। 'वैराज्यम्' इतरेभ्यो भूपतिभ्यो वैशिष्ट्यम्। एतदुक्ता मैहिकम्, अथामुष्मिक मुच्यते—

'पारमेष्ठ्यम्' प्रजापतिलोकप्राप्तिः। तत्र 'राज्यं' ऐश्वर्यम्। 'माहाराज्यं' तत्त्रत्येभ्योऽप्याधिक्यम्। 'आधिपत्यं' इतरान् प्रति स्वामित्वम्। 'स्वावश्यम्' अपारतन्त्र्यम्। 'आतिष्ठत्वं' चिरकालवासित्वम्॥

अनेन मन्त्रेणाभिमन्त्रणादूर्ध्वं मारोहणं विधत्ते— "इत्येतामासन्दीमारोहेद्दक्षिणेनाग्रे जानुनाथ सव्येन"–इति। 'इति'–शब्दः पूर्वोक्तमभिमन्त्रणमन्त्रं परामृशति। तेनैव मन्त्रेण 'एताम्' आसन्दीमारोहेत्। तत्रायं प्रकारः — दक्षिणेन जानुना प्रथमं समारोहेत्, ततः सव्येनारोहेत्॥

आरोहणं प्रशंसति— "तत्तदितीश्"–इति। 'तत्' आरोहणम्, 'तत्' आरोहणम्, 'इति' एवं सर्वे जनाः पूजयन्ति। पूजार्थेयं श्रुतिः॥

मन्त्रतात्पर्यं दर्शयति— "चतुरुत्तरैर्वै देवाश्छन्दोभिः सयुग्भूत्वैतां श्रियमारोहन् यस्या मेत एतर्हि प्रतिष्ठिता; अग्निर्गायत्र्या, सवितोष्णिहा, सोमोऽनुष्टुभा, बृहस्पतिर्बृहत्या, मित्रावरुणौ पङ्क्त्येन्द्रस्त्रिष्टुभा, विश्वेदेवा जगत्या"–इति। चत्वार्यक्षराण्येकैकस्माच्छन्दसः 'उत्तराणि' अधिकानि येषु गायत्र्यादिषु जगत्यन्तेषु छन्दस्सु, तानि 'चतुरुत्तराणि'; तादृशैश्छन्दोभिः 'सयुग्भूत्वा' साहित्यं प्राप्य, 'देवाः' अग्न्यादयः 'एताम्' आसन्दीं 'श्रियम्' ऐश्वर्यरूपामारोहन्। 'यस्याम्' आसन्द्याम् 'एते' अग्न्यादयः इदानीमपि प्रतिष्ठिता वर्त्तन्ते। देवाश्छन्दोभिः सयुग्भूत्वेत्ययमर्थो अग्निर्गायत्र्येत्यादिना स्पष्टीकृतः॥

उक्तमर्थं मन्त्रसंवादेन द्रढयति— "ते एते अभ्यनूच्येते अग्नेर्गायत्र्यभवत्सयुग्वेति"–इति। 'ते एते' देवच्छन्दसी परस्परसहिते

कया चित्त्रो अथनूचेति। सेय मृगशिरित्यादिका (१८८पृ०)। येयं गायत्री, सेय मग्नेः 'सयुग्वा' सहवासिन्यभवत्। 'इति' तस्या ऋचोऽर्थः॥

क्षत्रियस्यारोहणं प्रशंसति— "कल्पते ह वा अस्मै योगक्षेम उत्तरोत्तरिणीं ह श्रियमश्नुते, ऽश्नुते ह प्रजानामैश्वर्यं माधिपत्यं, य एव मेता अनु देवता एता मासन्दी मारोहति क्षत्रियः सन्"— इति। 'यः' पुमान् क्षत्रियः सन् एता देवता अनु स्वय मपि उक्तेन प्रकारेण एतां मासन्दी मारोहति, 'अस्मै' क्षत्रियाय 'योगक्षेमः' 'कल्पते' सिध्यति। अप्राप्तस्य लाभस्य प्राप्तिर्योगः, प्राप्तस्य वस्तुनो रक्षणं क्षेमः, योगसहितः क्षेमो 'योगक्षेमः'। किञ्चाय' क्षत्रियः 'उत्तरोत्तरिणीं' दिनेदिने वर्धमानां श्रियं प्राप्नोति; तथा सर्वासां प्रजानाम् 'ऐश्वर्यं' नियामकत्वम्, 'आधिपत्यम्' अधिकारित्वेन पालनञ्च प्राप्नोति॥

अभिषेककर्त्तुः शान्तिमन्त्रवाचनं विधत्ते— "अथैन मभि-षेक्ष्यन्नपां शान्तिं वाचयति"—इति। 'अथ' आसन्द्यारोहणानन्त-रम्, 'एनम्' आरूढं क्षत्रियं योऽध्वर्युरभिषेक्ष्यति, स पुमान् 'अपां' शान्तिं जलदेवतानां शान्तिकरं मन्त्रं 'वाचयेत्' क्षत्रियस्य अग्रे स्वयं सकृदुक्त्वा तं क्षत्रियं पाठयेत्॥

एतं शान्तिमन्त्रं दर्शयति— "शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे। सर्वाँ अग्नीँरप्सुषदो हुवे वो मयि वर्चो बल मोजो निधत्तेति"—इति। हे 'आपः' देवताः! 'शिवेन' शान्तेन अनुग्रहयुक्तेन चक्षुषा मा मवलोकयत, तथा 'शिवया' शान्तया 'तन्वा' मदीयां त्वच मुपस्पृशत। 'अप्सु' जलेषु सीदन्तीति 'अप्सुषदः' और्वादयोऽग्नयः, तान् अग्नीन् सर्वान्

'वः' युष्मदर्थं 'हुवे' आह्वयामि, यूयं मयि 'वर्चः' कान्तिः शरीरबलम्, तत्कारणम् 'ओजः' च मयि 'निधत्त' सम्पादयत ॥

तदेतच्छान्तिमन्त्रवाचनं प्रशंसति— "नैतस्याभिषिषिचानस्या-शान्ता आपो वीर्यं निर्हणन्निति"–इति । 'अशान्ताः' उग्रा आपः । तथा च अन्यत्र श्रूयते— "दिव्या आपो ऽशान्ताः"–इति तादृशापः शान्तिवाचनाभावे 'अभिषिषिचानस्य' अभिषेकं प्राप्तस्य 'एतस्य' क्षत्रियस्य वीर्यं 'निर्हण्युः' विनाशयेयुः, सति तु शान्तिपाठे 'न निर्हणन्' * नैव विनाशयन्ति,–'इति' अभिप्रायेण शान्तिं वाचयेत् ॥ २ ( ६ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां द्वितीयाध्याये ( सप्तत्रिंशाध्याये ) द्वितीयः खण्डः ॥ २ ( ६ ) ॥

---

॥ अथ तृतीयः खण्डः ॥

अथैनं मुदुम्बरशाखा मन्तर्धायाभिषिञ्चतीमा आपः शिवतमा इमाः सर्वस्य भेषजीः । इमा राष्ट्रस्य वर्द्धनीरिमा राष्ट्रभृतो ऽमृताः । याभिरिन्द्र मभ्यषिञ्चत् प्रजापतिः सोमं राजानं वरुणं यमं मनुं । ताभिरद्भिरभिषिञ्चामि त्वा महं राज्ञां त्वमधिराजो

* 'न निर्हरन्'–इति क ।

भवेह । 'महान्तं त्वा महीनां सम्राजं चर्षणीनां ।
देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनद्। देवस्य
त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या
मग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि
बलाय श्रियै यशसे ऽन्नाद्याय । भूरिति य इच्छेदिम
मेव प्रत्यन्नमद्यादित्यथ य इच्छेद् द्विपुरुषं भूर्भुव
इत्यथ य इच्छेत् त्रिपुरुषं वा ऽप्रतिमं वा भूर्भुवः
स्वरिति तद्धैक आहुः सर्वाप्तिर्वा एषा यदेता व्याहृ-
तयो ऽतिसर्वेण हास्य परस्मै कृतं भवतीति स मेतेना-
भिषिञ्चेद्देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्या मग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रिये-
णाभिषिञ्चामि बलाय श्रियै यशसे ऽन्नाद्यायेति तदु
पुनः परिचक्षते यदसर्वेण वाचो ऽभिषिक्तो भवतो-
श्वरो ह तु पुरायुषः प्रैतोरिति ह स्माह सत्यकामो
जाबालो य मेताभिर्व्याहृतिभिर्नाभिषिञ्चतीतीश्वरो
ह सर्वमायुरैतोः सर्वमाप्नोद्विजयेनेत्यु ह स्माहोद्दा-
लक आरुणिर्य मेताभिर्व्याहृतिभिरभिषिञ्चतीति त
मेतेनैवाभिषिञ्चेद् देवस्य त्वा सवितुः प्रसवे ऽश्विनो-
र्बाहुभ्यां पूष्णो हस्ताभ्या मग्नेस्तेजसा सूर्यस्य वर्च-
सेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसे-

ऽन्नाद्याय भूर्भुवस्स्वरित्यथैतानि ह वै क्षत्रियादीजानाद् व्युत्क्रान्तानि भवन्ति ब्रह्मक्षत्रे ऊर्गन्नाद्य मपा मोषधीनां रसो ब्रह्मवर्चस मिरापुष्टिः प्रजातिः क्षत्ररूपं तदथो अन्नस्य रस ओषधीनां क्षत्रं प्रतिष्ठा तद्यदेवामू पुरस्तादाहुती जुहोति तदस्मिन् ब्रह्मक्षत्रे दधाति ॥ ३ ( ७ ) ॥

अभिषेकप्रकारं विधत्ते— "अथैन मुदुम्बरशाखा मन्तर्धायाभिषिञ्चति"–इति । 'अथ' शान्तिवाचनानन्तरम्, 'एनं' क्षत्रियम् 'उदुम्बरशाखा मन्तर्धाय' शिरस्युदुम्बरशाखया व्यवधानं कृत्वा चमसस्थैर्दध्यादिभिरभिषिञ्चेत् * ॥

तिस्र ऋचः, एकं यजुः, व्याहृतयश्चेत्येते अभिषेकमन्त्राः । तत्र प्रथमा मृच माह— "इमा आपः शिवतमा इमाः सर्वस्य भेषजीः । इमा राष्ट्रस्य वर्धनीरिमा राष्ट्रभृतोऽमृताः"–इति । 'आपः'–इत्यनेन दध्यादिसर्वद्रव्याणि उपलक्ष्यन्ते । 'इमाः' दध्यादिसहिता आपः 'शिवतमाः' अतिशयेन शान्ताः । तथा 'इमाः' आपः 'सर्वस्य' दारिद्र्यादिरोगस्य 'भेषजीः' औषधरूपाः । तथा 'इमाः' आपो राष्ट्रस्य 'वर्धनीः' अभिवृद्धिहेतवः । अत एव 'इमाः' आपो 'राष्ट्रभृतः' राष्ट्रधारिण्यः । स्वयं च 'अमृताः' विनाशरहिताः ॥

द्वितीया मृच माह— "याभिरिन्द्र मभ्यषिञ्चत् प्रजापतिः

* "श्रियं धाय मभिषिञ्चति"–इत्यादि ( आश्व० श्रौ० १४.५, १०–२२ ) पाठा-द्यभिषेकप्रकारविशेषाश्चाभिधेयाः ।

सोमं राजानं वरुणं यमं मनुं । ताभिरद्भिरभिषिञ्चामि त्वा महं राज्ञां त्व मधिराजो भवेह"—इति । पुरा प्रजापतिः 'याभिः' दध्यादिसहिताभिरद्भिरिन्द्रादीनभ्यषिञ्चत्, हे क्षत्रिय ! ताभिरद्भिः त्वा महं मभिषिञ्चामि ; त्वं च 'इह' लोके राज्ञां सर्वेषां अधिको राजा भव ॥

तृतीया ऋच माह—"महान्तं त्वा महीनां सम्राजं चर्षणीनां । देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनद्"—इति । 'जनित्री' तवोत्पादिका मातृरूपा देवी, त्वां 'महीनां' महता मपि पुरुषाणां मध्ये अतिशयेन महान्तम्, 'चर्षणीनां' मनुष्याणां सर्वेषां 'सम्राजं' सम्यक् धर्मेण पालयितारं कृत्वा, 'अजीजनत्' उत्पादितवती ; अतो भवदीया 'जनित्री' माता, स्वयं तदा पुण्यात्मा भूत्वोत्पादितवती ॥

तिस्र ऋचो ऽभिधाय यजुर्विधत्ते— "देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या मग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसे ऽन्नाद्याय"—इति * । हे क्षत्रिय ! 'सवितुः' प्रेरकस्य देवस्य परमेश्वरस्य 'प्रसवे' अभ्यनुज्ञायां सत्यां त्वा मभिषिञ्चामि । केन साधनेन ? 'अश्विनोः' देवयोः सम्बन्धिभ्यां बाहुभ्यां, न तु मदीयाभ्याम् ; तथा 'पूष्णः' देवस्य हस्ताभ्याम् । मणिबन्धपर्यन्तौ दण्डाकारौ 'बाहू', अङ्गुलि-

* एवंविधमन्त्रपाठे तैत्तिरीया दूषण मध्यामनन्ति । तद्यथा— "यद् ब्रूयात् अग्नेस्त्वा तेजसाभिषिञ्चामीति, तेजस्व्येव स्यात्, दुश्चर्मा तु भवेत् । सोमस्य त्वा द्युम्नेनाभिषिञ्चामीत्याह, सौम्यो वै देवतया पुरुषः, स्वयैवैनं देवतयाभिषिञ्चति"—इति तै० ब्रा० १,७,८ । सोमस्य त्वेत्यादिस्तु तैत्तिरीयाणां वाजसनेयिनाञ्च अभिषेकमन्त्रः ( श० १. ८. १४,— वा० स० ९. १० ) ।

सहितावग्रभागौ 'हस्तौ'। तथाग्निसम्बन्धिना 'तेजसा' शारीर-कान्त्या, सूर्यस्य सम्बन्धिना 'वर्चसा' बाह्यप्रकाशेन, इन्द्र-सम्बन्धिना 'इन्द्रियेण' चक्षुरादिपाटवेन। कस्मै प्रयोजनायाय मभिषिक्तः? तत्र शारीरबलाय, 'श्रियै' हस्त्यश्वादिसम्पदे, 'यशसे' कीर्त्यै, 'अन्नाद्याय' अन्नसम्पत्तये॥

अथ कामनाभेदेन व्याहृतीर्दर्शयति— "भूरिति य इच्छेदिम मेव प्रत्यन्न मद्यादित्यथ य इच्छेद् द्विपुरुषं भूर्भुव इत्यथ य इच्छेत् त्रिपुरुषं वाऽप्रतिमं वा भूर्भुवस्स्वरिति"–इति। 'यः' अभिषेक्ता 'इम मेव' अभिषिच्यमानं क्षत्रियं प्रति असौ 'अन्न मद्यात्' नीरोगो भवेदिति 'इच्छेत्' कामयेत, तं 'भूरिति' व्याहृत्या अभिषिञ्चेत्। अथ 'यः' अभिषेक्ता पुत्रपौत्राभ्यां द्वाभ्यां पुरुषाभ्यां सहितम् 'इमं' क्षत्रियं प्रति अन्न मद्यादिति कामयेत, तदानीं 'भूर्भुवः इति' व्याहृतिद्वयेन अभिषिञ्चेत्। अथ 'यः' अभिषेक्ता पुत्रपौत्रप्रपौत्रैस्त्रिभिः पुरुषैः युक्तम् 'इमं' क्षत्रियम् प्रति पुरुष-त्रयपर्यन्तं जीवित्वा सुखेनान्न मद्यादिति कामयेत; अथवा त मेतम् 'अप्रतिमं' स्वतुल्यक्षत्रियान्तररहितं कुर्यात् * इति काम-येत, तदानीं 'भूर्भुवस्स्वरिति' व्याहृतित्रयेण अभिषिञ्चेत्॥

अत्र किञ्चित् पूर्वपक्षं मुद्भावयति — "तदेक आहुः, — सर्वाप्तिर्वा एषा यदेता व्याहृतयो ऽतिसर्वेण हास्य परस्मै कृतं भवतीति; स एतेनाभिषिञ्चेद् देवस्य त्वा सवितुः प्रसवे ऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्या मग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणा-भिषिञ्चामि बलाय श्रियै यशसे ऽन्नाद्यायेति"–इति। 'तत्र' तस्मिन् एव अभिषेके ब्रह्मवादिनः केचिदेव माहुः,— या एता

* "कुर्याम्"–इति ख।

व्याहृतयः सन्ति, 'एषा' व्याहृतिरूपा 'सर्वाप्तिर्वै' सर्वफलप्राप्तिसाधनम्; यद्यो व्याहृतिभिरभिषेके 'यस्य' अभिषिच्यमानस्य 'परस्मै' परस्य स्वस्मादन्यस्य क्षत्रियस्य 'अतिसर्वेण' तदपेक्षामात्रमतिक्रम्य कृत्स्नेनापि मन्त्रजातेन अभिषेचनं कृतं भवति; तदेतद्धिकाभिषेचनमयुक्तम् 'इति' अभिप्रेत्य 'तं' क्षत्रियम् 'एतेन' देवस्य त्वेत्यादिना यजुषा अभिषिञ्चेत्, न तु व्याहृतिभिरिति तेषां पक्षः ॥

तं पक्षं दूषयति— "तदु पुनः परिचक्षते; यदसर्वेण वाचो ऽभिषिक्तो भवतीश्वरो ह तु पुरायुषः प्रैतोरिति ह स्माह सत्यकामो जाबालो य मेताभिर्व्याहृतिभिर्नाभिषिञ्चतीति"—इति। 'तदु' तदपि पूर्वोक्तं मतं पुनरन्ये ऽभिज्ञाः 'परिचक्षते' निराकुर्वन्ति। 'यं' क्षत्रियम् 'एताभिः' व्याहृतिभिः नाभिषिञ्चति, 'एषः' क्षत्रियो 'यद्' यस्मात् कारणाद् 'असर्वेण' सम्पूर्तिरहितेन 'वाचा' वाक्येन मन्त्रेण अभिषिक्तो भवति, तस्मादयं स्वोचितादायुषः पुरा 'प्रैतोः' प्रैतुं मर्तुम् 'ईश्वरः' समर्थो भवति; तस्माद् आयुःक्षयहेतुत्वादयं पक्षो न युक्त इति जबालाया पुत्रः 'सत्यकामः' महर्षिराह स्म ॥

पूर्वपक्षं दूषयित्वा सिद्धान्त माह— "ईश्वरो ह सर्व मायुरेतोः सर्व माप्नोद्विजयेनेत्यु ह स्माहोद्दालक आरुणिर्य मेताभिर्व्याहृतिभिरभिषिञ्चतीति; त मेतेनैवाभिषिञ्चेद् देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या मग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसे ऽन्नाद्याय भूर्भुवःस्वरिति"—इति। 'यं' क्षत्रियम् 'एताभिः' व्याहृतिभिरभिषिञ्चति, स क्षत्रियः 'सर्व मायुरेतोः' सर्वात्मनायुः प्राप्तुम् 'ईश्वरः' समर्थो

भवति ; ततो 'विजयेन' शत्रूनभिभूय सर्वं भोगम् 'आप्नोत्' आप्नोति । 'इति' एवं वरुणस्य पुत्र उद्दालक आह स्म । तस्मात् 'तं' क्षत्रियम् 'एतेन' व्याहृत्यन्तेन यजुषा अभिषिञ्चेत्, न तु केवलेन । सोऽयं व्याहृत्यन्तो मन्त्रो नित्यप्रयोगे द्रष्टव्यः, काम्यप्रयोगे तु व्याहृतिविकल्पः पूर्वं मुक्तः * ॥

अभिषेकाङ्गं होमं विधत्ते— "अथैतानि ह वै क्षत्रियादैजानाद् व्युत्क्रान्तानि भवन्ति,— ब्रह्मक्षत्रे ऊर्गन्नाद्य मपा मोषधीनां रसो ब्रह्मवर्चस मिरापुष्टिः प्रजातिः क्षत्ररूपं ; तदथो अन्नस्य रस ओषधीनां क्षत्रं प्रतिष्ठा ; तस्यैतामू पुरस्तादाहुती जुहोति, तदस्मिन् ब्रह्मक्षत्रे दधाति"-इति । 'अथ' अभिषेकानन्तरम्, होम उच्यत इति शेषः । 'ऐजानाद्' यागं कृतवतः क्षत्रियात् 'एतानि' वक्ष्यमाणानि 'व्युत्क्रान्तानि' अपगतानि भवन्ति । तानि निर्दिशन्ते— 'ब्रह्मक्षत्रे' एतस्य समीपे वर्त्तमानं जातिद्वयम्, 'ऊर्क्' क्षीरादिरसः, 'अन्नाद्यम्' ओदनादिकम् ; तदेतदुभय मपा मोषधीनाञ्च 'रसः' सारः । 'अपां सारः' क्षीरादिः, 'ओषधीनां रसः' अन्नाद्यम् । 'ब्रह्मवर्चसं' श्रुताध्ययनसम्पत्तिः, 'इरापुष्टिः' अन्नसमृद्धिः, 'प्रजातिः' पुत्रोत्पादनम् । तच्च सर्वं क्षत्रियस्य स्वरूपम् ; अत्यन्त मपेक्षितत्वाद् । एतेषां व्युत्क्रान्तौ क्षत्रियस्य स्वरूपहानिरेव भवति । 'अथो' अपि च 'अन्नस्य' ओदनस्य, 'रसः' रसस्य क्षीरादेः, 'ओषधीनां' व्रीहियवादीनां 'क्षत्रं प्रतिष्ठा' क्षत्रिय आश्रयः । तस्माद् उक्तो व्यतिक्रमः क्षत्रियस्य न युक्तः । 'तत्' तथा सति 'यत्' यदि 'अमू' बुद्धिस्थे आहुती अभिषिक्तस्य क्षत्रियस्य पुरस्ताद् जुहुयात्, 'तत्'

* 'भूरिति'-इत्यादि, 'भूर्भुवरिति'-इत्यादिश्च १८५ पृ० ६ पं० द्र० ।

तदानीम् 'अस्मिन्' अभिषेके ब्राह्मणजातिं, क्षत्रियजातिं, तदुपलक्षित मन्त्रादिकं च सर्वं मवस्थापयति । "ब्रह्म प्रपद्ये ०—० स्वाहा"– "क्षत्रं प्रपद्ये०—०स्वाहा"–इत्याहुतिद्वयं * जुहुयादिति तात्पर्यार्थः † ॥ ३ (७) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां द्वितीयाध्याये
( सप्तत्रिंशाध्याये ) तृतीयः खण्डः ॥ ३ (७) ॥

---

॥ अथ चतुर्थः खण्डः ॥

अथ यदौदुम्बर्यासन्दी भवत्यौदुम्बरश्चमस उदुम्बरशाखोर्ग्वा अन्नाद्य मुदुम्बर ऊर्जं मेवास्मिंस्तदन्नाद्यं दधात्यथ यद् दधि मधु घृतं भवत्यपां स ओषधीनां रसो ऽपा मेवास्मिंस्तदोषधीनां रस दधात्यथ यदातपवर्ष्या आपो भवन्ति तेजश्च ह वै ब्रह्मवर्चसं चातपवर्ष्या आपस्तेज एवास्मिंस्तद् ब्रह्मवर्चसं च दधात्यथ यच्छष्पाणि च तोक्मानि च भवन्तीरायै

* पुरस्तात् ७. ४. ४ (११९–११६) द्रष्टव्यम् ।

† तै० स० १. ८. १७, तै० ब्रा० १. ७. ८, वा० सं० १०. १७, श० ब्रा० (शत०) ५. ४. २ अभिषेकविवरण द्रष्टव्यम् ।

तत्पुष्टै रूपमथो प्रजात्या इरा मेवास्मिंस्तत्पुष्टिं दधात्यथो प्रजातिमथ यत् सुरा भवति क्षत्ररूपं तदथो अन्नस्य रसः क्षत्ररूप मेवास्मिंस्तद्दधात्यथो अन्नस्य रसमथ यद् दूर्वा भवति क्षत्रं वा एतदोषधीनां यद् दूर्वा क्षत्रं राजन्यो नितत इव ह्योह क्षत्रियो राष्ट्रे वसन् भवति प्रतिष्ठित इव निततेव दूर्वावरोधैर्भूम्यां प्रतिष्ठितेव तद्यद् दूर्वा भवत्योषधीना मेवास्मिंस्तत्* क्षत्रं दधात्यथो प्रतिष्ठा मेतानि ह वै यान्यस्मादीजानाद् व्युत्क्रान्तानि भवन्ति तान्येवास्मिँस्तद् दधाति तैरेवैनं तत्समर्धयत्यथास्मै सुरा कंसं हस्त आदधाति स्वादिष्ठया मदिष्ठया पवस्व सोम धारया इन्द्राय पातवे सुत इत्याधाय शान्तिं वाचयति नाना हि वां देवहितं सदस्कृतं मा संसृक्षाथां परमे व्योमनि सुरा त्व मसि शुष्मिणी सोम एष राजा मैनं हिंसिष्टं स्वां योनि माविशन्ताविति सोमपीथस्य चैषा सुरापीथस्य च व्यावृत्तिः पीत्वा यं रातिं मन्येत तस्मा एनां प्रयच्छेत्तद्धि मित्रस्य रूपं मित्र एवैनां तदन्ततः प्रतिष्ठापयति तथा हि मित्रे प्रतितिष्ठति प्रतितिष्ठति य एवं वेद ॥ ४ (८) ॥

---

* "मेवास्मिंस्तत्"—इति क, ग, ङ। एव मित्रीयरश्च च।

अभिषेकसाधनानि क्रमेण प्रशंसितु मादावासन्द्यादित्रयं प्रशंसति— "अथ यदौदुम्बर्यासन्दी भवत्यौदुम्बरश्चमस उदुम्बरशाखोर्ग्वा अन्नाद्य मुदुम्बर ऊर्जं मेवास्मिंस्तदन्नाद्यं दधाति"— इति । आसन्दी-चमस-शाखानां कारणभूतो यः 'उदुम्बरः', सोऽयं रसस्यान्नस्य स्वरूपभूतः ; तेन 'अस्मिन्' यजमाने रस मन्नञ्च सम्पादयति ॥

दध्यादित्रयं प्रशंसति— "अथ यद् दधि मधु घृतं भवत्यपां स ओषधीनां रसो ऽपा मेवास्मिंस्तदोषधीनां रसं दधाति"— इति । दधिघृतयोः पशुभक्षितत्वेषधिजन्यत्वात् ओषधिरसत्वम् ; मधुनो मधुकरानीतपुष्परसजन्यत्वाद् ओषधिसारत्वम् ॥

आतपसहिता वृष्टिजन्या आपः प्रशंसति— "अथ यदातपवर्ष्या आपो भवन्ति, तेजश्च ह वै ब्रह्मवर्चसं चातपवर्ष्या आपस्तेज एवास्मिंस्तद् ब्रह्मवर्चसं च दधाति"—इति * । आतपसम्बन्धात् तेजस्त्वम् , आहुतिफलरूपवृष्टिसम्बन्धाद् ब्रह्मवर्चसत्वम् ॥

श्यामलतान्यङ्कुराणि च प्रशंसति— "अथ यच्छष्पाणि च तोक्मानि च भवन्तीरायै तत् पुष्ट्यै रूपं यथो प्रजात्यै इरा मेवास्मिंस्तत् पुष्टिं दधात्यथो प्रजातिम्"—इति । तृणानां मङ्कुराणां च पशुभक्ष्यत्वात् तद्भक्षणेन पशुपुष्टिप्रजोत्पादनयोर्दृष्टत्वात् इरापुष्टिप्रजातिरूपत्वम् ॥

---

* आभ्यर्थवेष्वभिषेकसाधनेषु सप्तदशविधा आपः श्रूयन्ते । ता यथा— सारस्वत्यः, अपामूर्मिः, स्यन्दमानाः, कौप्यस्थ, अपयाः, अपांपतिः, निवेष्यः, सूर्यत्वचसः, आतपवर्ष्याः, वैशन्त्यः, कूप्याः, प्रुष्वाः, मधु, गोरुल्व्याः, पयः, घृतम्, मरीच्यः । "स सारस्वतीरेव प्रथमा गृह्णाति"—इत्यारभ्य, "षड्देमापः सम्भरति"—इत्यन्तः शत० ब्रा० ५. ३. ४. ३-२२ कण्डिका द्रष्टव्या. । षोडश वेति च तत्रापि पक्षान्तरम् । तै० सं० १. ८. ११, तै० ब्रा० १. ७. ५ अपि पश्यैव ।

सुरां प्रशंसति— "अथ यत् सुरा भवति, चत्ररूपं तद्; अथो अन्नस्य रसः; चत्ररूप मेवास्मिंस्तद्दधात्यथो अन्नस्य रसम्"—इति। सुरायाः चत्रियस्येव मदयोगात् चत्ररूपत्वम्, ब्रीह्या-द्यङ्कुरजन्यत्वादन्नरसत्वञ्च ॥

दूर्वां प्रशंसति— "अथ यद् दूर्वा भवति; चत्रं वा एतदोष-धीनां यद् दूर्वा, चत्रं राजन्यो, नितत इव ह्वीह चत्रियो राष्ट्रे वसन् भवति, प्रतिष्ठित इव; नितेव दूर्वावरोधैर्भूम्यां, प्रतिष्ठि-तेव; तद्यद् दूर्वा भवत्योषधीना मेवास्मिंस्तत् चत्रं दधात्यथो प्रतिष्ठाम्"—इति। ओषधिजातौ दूर्वायाः चत्रियजातित्वं राज-सम्बन्धिचत्रियजातिसाम्यादवगन्तव्यम् *। तदेव साम्यं नितत, इवेत्यादिना प्रपञ्चते। 'इह' राष्ट्रे चत्रियो वसन्, तेषु ग्रामेषु सञ्चारात् स्वपुरुषस्थापनाच, स्वयं नितरां 'ततः' विस्तृतः 'इव' राज्यैश्वर्येण प्रतिष्ठित एव भवति; दूर्वा 'अवरोधैः' अधोमुखैः स्वकीयमूलैर्नितरां 'तता इव' व्याप्तेव, स्थैर्याद् एकत्र प्रतिष्ठितेव भवति। तथा सति 'यद्' यत्र दूर्वा भवति, तदानीम् ओषधि-सम्बन्धिचत्रियजातिम् 'अस्मिन्' यजमाने सम्पादयति, अपि च 'प्रतिष्ठां' स्थैर्यं अपि सम्पादयति ॥

प्रत्येकं प्रशस्य समुदायरूपेण प्रशंसति— "एतानि ह वै यान्य-स्मादीजानाद् व्युत्क्रान्तानि भवन्ति, तान्येवास्मिंस्तद्दधाति; तैरे-वैनं तत्समर्धयति"—इति। 'ईजानाद्' यागं कृतवतः 'अस्मात्' चत्रियाद् यान्येव 'एतानि' दध्युदुम्बरादीनि व्युत्क्रान्तानि भवन्ति,

* "अर्वे वाव मास्पूर्वींदिति यदब्रवीदधूर्वन्मीति, तस्माद् दूर्वा; धूर्वा ह वै तां दूर्वे-त्याचक्षते परोक्षम्; परोक्षकामा हि देवाः। तदेतत् चत्रम्। अथो रोष रसः"—इति शत॰ ब्रा॰ ७. ४. २. १२।

तान्येव 'अस्मिन्' क्षत्रिये सम्पाद्य, तैरेवैनं समृद्धं करोति ॥

अभिषिक्तस्य क्षत्रियस्य पानपात्रं विधत्ते— "अथास्मै सुरां कंसे हस्त आदधाति"–इति। 'अथ' अभिषेकानन्तरम्, 'अस्मै' अस्य क्षत्रियस्य हस्ते सुरायुक्तं कांस्यपात्रमादध्यात् ॥

तत्र मन्त्रमाह— "स्वादिष्ठया मदिष्ठया पवस्व सोम धारया इन्द्राय पातवे सुतः (सं० ९.१.१.)"–इति। हे सोम! त्वत्समानं सुराद्रव्यं 'स्वादिष्ठया' अतिशयेन स्वादुभूतया, 'मदिष्ठया' अतिशयेन मदहेतुभूतया त्वदीयया 'धारया' पवस्व यजमानं शोधय। हे द्रव्यविशेष! 'इन्द्राय पातवे' इन्द्रस्य पानार्थं 'सुतः' अभिषुतः सम्पादितोऽसि ॥

मन्त्रान्तरेण शान्तिवाचनं विधत्ते— "इत्याधाय शान्तिं वाचयति"–इति। 'इति' अनेन पूर्वोक्तमन्त्रेण हस्ते सुरायुक्तं कांस्यपात्रमाधाय, वक्ष्यमाणमन्त्रेण शान्तिं वाचयेत् ॥

तं मन्त्रं दर्शयति— "नाना हि वां देवहितं सदस्कृतं; मा संसृक्षाथां परमे व्योमनि; सुरा त्वमसि शुष्मिणी, सोम एष राजा, मैनं हिंसिष्टं स्वां योनिमाविशन्ताविति"–इति। हे सुरासोमौ! 'वां' युवयोः 'देवहितं' देवैः सम्पादितं 'सदः' स्थानं 'नाना कृतं' पृथगेव निष्पादितम्। अतः 'परमे व्योमनि' उत्कृष्टे उदराकाशे 'मा संसृक्षाथां' मा संसर्गं कुरुतम्। संसर्गे हि सोमस्य बाधः स्यात्। हे मद्य! त्वं 'शुष्मिणी' बलवती सुरासि, एष सोमो राजा, तौ बलवन्तौ युवामुभौ 'स्वां योनिमाविशन्तौ' उदरमध्ये विभागेन स्वं स्वं स्थानं प्रविशन्तौ 'एनं' पातारं 'मा हिंसिष्टं' हिंसितमुपद्रुतं मा कुरुतम्। 'इति' एतं मन्त्रं क्षत्रियस्याग्रे कथयित्वा, तं वाचयेत् ॥

तस्य मन्त्रस्य तात्पर्यं दर्शयति— "सोमपीथस्य चैवा सुरापीथस्य च व्यावृत्तिः"—इति । 'एषा' मन्त्रप्रतिपाद्या सोमपानसुरापानयोः परस्परव्यावृत्तिः ; मा संसृचाथा मिति संसर्गस्य निषिद्धत्वात् ॥

पीतशेषस्य दानं विधत्ते— "पीत्वा यं रातिं मन्येत, तस्मा एनां प्रयच्छेत्, तद्धि मित्रस्य रूपं; मित्र एवैनां तदन्ततः प्रतिष्ठापयति, तथा हि मित्रे प्रतितिष्ठति"—इति । कांस्यपात्रगतां सुरां क्षत्रियः स्वयं पीत्वा, 'यं' पुरुषं 'रातिं' स्वस्य धनदातारं मित्रं मन्येत, 'तस्मै' पुरुषाय 'एनाम्' अवशिष्टां सुरां प्रयच्छेत् । 'तत्' एकपात्रगतद्रव्यपानं मित्रस्य स्वरूपम् ; परस्परं मित्रयोः सहभोजनदर्शनात् । 'तत्' तेन दानेन 'अन्ततः' पानान्ते मित्रे एव 'एनां' सुरां प्रतिष्ठापयति । 'तथा हि' तथैव कुर्वन्, स्वयं मपि मित्रे प्रतिष्ठितो भवति ॥

वेदनं प्रशंसति— "प्रतितिष्ठति य एवं वेद"—इति ॥ ४ ( ८ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां द्वितीयाध्याये
( सप्तत्रिंशाध्याये ) चतुर्थः खण्डः ॥ ४ ( ८ ) ॥

---

॥ अथ पञ्चमः खण्डः ॥

अथोदुम्बरशाखा मभि प्रत्यवरोहत्यूर्ग्वा अन्नाद्य मुदुम्बर ऊर्ज मेव तदन्नाद्य मभि प्रत्यवरोहत्युपर्ये-

वासीनो भूमौ पादौ प्रतिष्ठाप्य प्रत्यवरोहेत् साहं प्रतितिष्ठामि द्यावापृथिव्योः प्रतितिष्ठामि प्राणापानयोः प्रतितिष्ठाम्यहोरात्रयोः प्रतितिष्ठाम्यन्नपानयोः प्रति ब्रह्मन् प्रति क्षत्रे प्रत्येषु त्रिषु लोकेषु तिष्ठामीत्यन्ततः सर्वेणात्मना प्रतितिष्ठति सर्वस्मिन् ह वा एतस्मिन् प्रतितिष्ठत्युत्तरोत्तरिणीं ह श्रियं मश्नुते ऽश्नुते ह प्रजानामैश्वर्यं माधिपत्यं य एव मेतेन पुनरभिषेकेणाभिषिक्तः क्षत्रियः प्रत्यवरोहत्येतेन प्रत्यवरोहेण प्रत्यवरुह्योपस्थं कृत्वा प्राङासीनो नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मण इति त्रिष्कृत्वो ब्रह्मणे नमस्कृत्य वरं ददामि जित्या अभिजित्यै विजित्यै सञ्जित्या इति वाचं विसृजते स यन्नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मण इति त्रिष्कृत्वो ब्रह्मणे नमस्करोति ब्रह्मण एव तत्क्षत्रं वश मेति तद्यत्र वै ब्रह्मणः क्षत्रं वश मेति तद्राष्ट्रं समृद्धं तद्वीरवदा हास्मिन् वीरो जायते ऽथ यद्वरं ददामि जित्या अभिजित्यै विजित्यै सञ्जित्या इति वाचं विसृजत एतद्वै वाचो जितं यद् ददामीत्याह यदेव वाचो जितां३ * तन् म इद मनु कर्म सन्तिष्ठाता इति विसृज्य वाच

---

* "जितांह"–इति क, ख, ग। "जितंह"–इति च।

मुपोत्थायाहवनीये समिध मभ्यादधाति समिदसि समेद्ध्स्त्वेन्द्रियेण वीर्येण स्वाहेतीन्द्रियेणैव तद्वीर्येणा-त्मान मन्ततः समर्द्धयत्याधाय समिधं त्रीणि पदानि प्राङुदङ्ङभ्युत्क्रामति कृषिरसि दिशां मयि देवेभ्यः कल्पत कल्पतां मे योगक्षेमो ऽभय मे ऽस्त्वित्यपरा-जितां दिश मुपतिष्ठते जितस्यैवापुनः पराजयाय तत्तदितीँ ३ * ॥ ५ ( ६ ) ॥

आसन्द्या अवरोहं विधत्ते— "अथोदुम्बरशाखा मभि प्रत्य-वरोहत्यूर्ग्वा अन्नाद्य मुदुम्बर ऊर्जं मेव तदन्नाद्य मभि प्रत्यवरो-हति"—इति । 'अथ' अभिषेकानन्तरम्, भूमौ उदुम्बरशाखा मवस्थाप्य, ताम् 'अभि'लक्ष्य प्रत्यवरोहेत् । योऽय मुदुम्बरः स 'ऊर्ग्' रसरूप एव ; तत्फले माधुर्यसद्भावात् । तथान्नाद्यस्वरू-पश्च ; तद्भक्षणेनोदरपूरणात् । तस्माद् उदुम्बरशाखायां प्रत्यवरोहे-णोर्ज मन्नाद्यं चाभिलक्ष्यावरोहति ॥

तत्र प्रकारं विधत्ते— "उपर्यासीनो भूमौ पादौ प्रतिष्ठाप्य प्रत्यवरोह माह"—इति । आसन्द्या उपर्येव स्वय मुपविष्टः, प्रथमतः पादौ भूमाववस्थाप्य प्रत्यवरोहसाधनभूतं मन्त्रं पठेत् ॥

तं मन्त्रं दर्शयति— "प्रतितिष्ठामि द्यावापृथिव्योः, प्रति-तिष्ठामि प्राणापानयोः, प्रतितिष्ठाम्यहोरात्रयोः, प्रतितिष्ठाम्यन्न-पानयोः, प्रति ब्रह्मन्, प्रति क्षत्रे, प्रत्येषु त्रिषु लोकेषु तिष्ठा-

---

* "तत्तदिति"—इति ग, ङ।

मीति"–इति । भूमौ यदवरोहणं, तद् द्यावापृथिव्यादिषु सर्वेष्ववस्थान मिति मन्त्रार्थः ॥

अनेन मन्त्रेण क्रियमाणं प्रत्यवरोहं प्रशंसति— "अन्ततः सर्वेणात्मना प्रतितिष्ठति, सर्वस्मिन् ह वा एतस्मिन् प्रतितिष्ठत्युत्तरोत्तरिणीं ह श्रिय मश्नुते, श्नुते ह प्रजानां मैश्वर्यं माधिपत्यं, य एव मेतेन पुनरभिषेकेणाभिषिक्तः क्षत्रियः प्रत्यवरोहति"–इति । 'यः' क्षत्रियः उक्ताभिषेकादूर्द्ध्वं मनेन मन्त्रेण प्रत्यवरोहति, स पुरुषः 'अन्ततः' अभिषेकावसाने धनिकत्वादिना सर्वेण रूपेण प्रतिष्ठितो भवति । 'एतस्मिन् सर्वस्मिन्' द्यावापृथिव्यादिके प्रतिष्ठितो भवति । उत्तरेत्यादि पूर्ववद् ( १८०पृ० ) योजनीयम् ॥

प्रत्यवरोहादूर्द्ध्वं कर्त्तव्यं विधत्ते— "एतेन प्रत्यवरोहेण प्रत्यवरुह्योपस्थं कृत्वा, प्राङासीनो नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मण इति त्रिष्कृत्वो ब्रह्मणे नमस्कृत्य, वरं ददामि जित्या अभिजित्यै विजित्यै सञ्जित्या इति वाचं विसृजते"–इति । प्रत्यवरुह्येति दीर्घश्छान्दसः । 'एतेन' पूर्वोक्तेन प्रत्यवरोहमन्त्रेण 'प्रत्यवरुह्य' भूमौ 'उपस्थम्' आसनविशेषं * कृत्वा, प्राङ्मुख आसीनो नमस्कारमन्त्रं त्रिः पठित्वा, वर मित्यादिमन्त्रेण वाचं विसृजेत् । वाग्विसर्गो लौकिकव्यवहारः । 'जितिः' जयमात्रम् । अभितः सर्वेषु देवेषु जितिः 'अभिजितिः' । प्रबलदुर्बलशत्रूणां तारतम्येन विविधो जयो 'विजितिः' । पुनः शत्रुत्वराहित्याय सम्यग् जितिः 'सञ्जितिः' । एतत्सिद्ध्यर्थं ब्राह्मणाय 'वरं' गां ददामि † ॥

---

* "समस्तजङ्घोरुरविश्यां जानुभ्यां चोपस्थं कृत्वा यथा मङ्कुमिद्युपतिष्ठन्"–इति आश्व० श्रौ० ६. ५. ४ ।

† "वरो दक्षिणा"–इति तै० स० १. ८. १ । तै० आर० २. १६. ३. । "वरो दक्षिणा

नमस्कारमन्त्रं प्रशंसति— "स यन्नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मण इति त्रिष्कृत्वो ब्रह्मणे नमस्करोति, ब्रह्मण एव तत्क्षत्रं वश मेति ; तद्यत्र वै ब्रह्मणः क्षत्रं वश मेति, तद्राष्ट्रं समृद्धं, तद्वीरवदा ह्यास्मिन् वीरो जायते"–इति। 'सः' क्षत्रियो मन्त्रेणनमस्करोतीति यदस्ति, तेन 'ब्रह्मण एव' ब्राह्मणस्यैव क्षत्रियजातिर्वश मेति। 'तत्' तेन ब्राह्मणाधीनत्वेन तद्राष्ट्रं सर्वसुसमृद्धं वीरपुरुषोपेतं च भवति ; 'अस्मिन्' क्षत्रिये 'वीरः' पुरुष आजायते ॥

वरदानमन्त्रं प्रशंसति— "अथ यद्वरं ददामि, जित्वा अभिजित्यै विजित्यै सञ्जित्या इति वाचं विसृजते ; एतद्वै वाचो जितं, यद् ददामीत्याह ; यदेव वाचो जितांश ; तन् म इद मनु कर्म सन्तिष्ठाता इति"–इति। वर मित्यादिमन्त्रेण वाचं विसृजत इति यदस्ति ( २०६ पृ० ), तस्मिन् मन्त्ररूपे ददामीति यदाह, एतदेव वाक्सम्बधि 'जितं' जयः । यदेव वाचो जित मस्ति, [ पूजार्थे जिता मिति दीर्घः ● ] 'तत्' वाग् वश्यरूपं 'मे' मदीयम् 'इदं कर्म' अनुष्ठानं 'सन्तिष्ठातै' सम्यगवतिष्ठताम् ; 'इति' तस्य मन्त्रस्याभिप्रायः ॥

समिदाधानं विधत्ते — "विसृज्य वाचे मुपोत्थायाहवनीये समिध मभ्यादधाति"–इति। उक्तेन प्रकारेण वाङ्नियमं परित्यज्य, तस्मादासनात् उत्थितो वक्ष्यमाणमन्त्रेणाहवनीये समिधं प्रक्षिपेत् ॥

---

वरो हि राम्यम्"–इति तै० ब्रा० १. ६. १ ५। "पदर्थिपत्या चेतुर्वरो भ"–इति कात्या० श्रौ० ४. ७. २८। "आचार्याय वरं ददाति, गोर्ब्राह्मणस्य, ग्रामो राजन्यस्य"–इति पार० गृ० १. १०. १२। "अथ निविदा मध्ये ०—० वर मेव ददाति"–इति श्भा० ४२३० ।

● मदादर्शेषु सर्वेष्वेव प्रायेषु 'जितांश'–इति पुस्तकी विपर्ये, पूजायां प्लुतिरेषो [विता, तस्य तदा महदर्श्ये, यथादि चोपरिष्टादन्येकम ( २०९ पृ० ) ।

तं मन्त्रं दर्शयति— "समिदसि समेद्ध्वेन्द्रियेण वीर्येण स्वाहेति"–इति । हे काष्ठ ! त्वं 'समिदसि' समिन्धनसाधन मसि । इद्ध तिधातोर्लोण्मध्यमपुरुषैकवचनम् 'एद्ध्व'–इति ; स च गत्यर्थः * । 'उ'-शब्दो ऽनर्थकः । इन्द्रियपाटवेन, शरीरसामर्थ्येन च 'समेद्ध्व' संयोजय, तदर्थं स्वाहुत मिद मस्तु ॥

मन्त्रस्य तात्पर्यं दर्शयति— "इन्द्रियेणैव तद्वीर्येणात्मान मन्ततः समर्धयत्याधाय समिधं चीणि पदानि प्राङुदङ्ङभ्युत्क्रामति"–इति । 'तत्' तेन समिदाधानमन्त्रेण पात्मान मभिषेककर्मान्ते वीर्येन्द्रियाभ्यां समृद्धं करोति । समिधं प्रक्षिप्य प्राङ्मुख उदङ्मुखो वा पदत्रय मभित उत्क्रामेत् । यद्वा प्राङुदङिति मन्तरालवर्तिनी मैशानीं दिश मभिलक्ष्योत्क्रामेत् ॥

तत्र मन्त्रं दर्शयति— "क्लृप्तिरसि दिशां मयि देवेभ्यः कल्पत, कल्पतां मे योगक्षेमो ऽभयं मे ऽस्तु"–इति । दिग्विशेष मभिलक्ष्य क्रियमाणं त्रैपदोत्क्रमणं दिशां 'क्लृप्तिः' कल्पनं, स्वाधीनत्वसम्पादनम् ; तथा सम्पादक मसि । अतो मयि देवार्थं 'कल्पत' कल्पनं सामर्थ्यं कुरु । बहुवचनं छान्दसम् । 'मे' मम 'योगक्षेमः' योगसहितः क्षेमः 'कल्पताम्' सम्पाद्यताम् ; तथैव 'मे' मम सर्वत्र 'अभयं' भयराहित्य मस्तु ॥

दिगुपस्थानं विधत्ते— "इत्यपराजितां दिश मुपतिष्ठते, जितस्यैवापुनः पराजयाय ; तत्तदितीद्व"–इति । 'इति' अनेन पूर्वोक्तेन क्लृप्तिरसीत्यादिनैव मन्त्रेण पराजयरहितां प्राचीमुदीचीं वा दिश मुपतिष्ठते । अथवा 'अपराजितां दिशम्' ऐशानीम् उपतिष्ठते । पूर्वं जितस्यैव दिग्विशेषस्य, पुनः परा-

* "उप दधि०—०दध दधि०—०दिमि भिमि गत्यर्थाः"–इति धा०पा०भ्वा०१३८–१५५ ।

जयरादित्यार्थं मुपस्थानम् । लोकाश्च सर्वे तदुपस्थान मिति पूजयन्ति । पूजार्थ्यं सानुनासिका श्रुतिः ॥ ५ (८) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां द्वितीयाध्याये
( सप्तत्रिंशाध्याये ) पञ्चमः खण्डः ॥ ५ (८) ॥

---

॥ अथ षष्ठः खण्डः ॥

देवासुरा वा एषु लोकेषु संयेतिरे त एतस्यां प्राच्यां दिशि येतिरे तांस्ततो ऽसुरा अजयंस्ते दक्षिणस्यां दिशि येतिरे तांस्ततो ऽसुरा अजयंस्ते प्रतीच्यां दिशि येतिरे तांस्ततो ऽसुरा अजयंस्त उदीच्यां दिशि येतिरे तांस्ततो ऽसुरा अजयंस्त एतस्मिन्नवान्तरदेशे येतिरे य एष प्राङुदङ् ते ह ततो जिग्युस्तं यदि क्षत्रिय उपधावेत्सेनयोः समायत्योस्तथा मे कुरु यथाह मिमां सेनां जयानीति स यदि तथेति ब्रूयाद्वनस्पते वीड्वङ्गो हि भूया इत्यस्य रथोपस्थ मभिमृश्याथैनं ब्रूयादातिष्ठस्वैतां ते दिश मभिमुखः सन्नद्धो रथो ऽभिप्रवर्त्ततां * स उदङ् स प्रत्यङ् स

---

* "ऽभिप्रवर्त्तां"–इति क ।

दक्षिणा स प्राङ् सो ऽभ्यमित्र मित्यभीवर्त्तेन हवि-षेत्येवैन मावर्त्तयेद्रथेन मन्वीचेताप्रतिरथेन शासेन सौपर्णेनेति जयति ह तां सेनां यद्यु वा एन मुपधा-वेत्सङ्ग्रामं संयतिष्यमाणास्तथा मे कुरु यथा ऽह मिमं सङ्ग्रामं सञ्जयानीत्येतस्या मेवैनं दिशि यातयेज्जयति ह तं सङ्ग्रामं यद्यु वा एन मुपधाविद्राष्ट्रादपरुध्यमान-स्तथा मे कुरु यथा ऽह मिदं राष्ट्रं पुनरवगच्छानी-त्येता मेवैनं दिश मुपनिष्क्रमयेत् तथाह राष्ट्रं पुन-रवगच्छत्युपस्थायामित्राणां व्यपनुत्तिं ब्रुवन् गृहा-नभ्येत्यप प्राच इन्द्र विश्वाँ अमित्रानिति सर्वतो-ह्यस्मा अनमित्र मभयं भवत्युत्तरोत्तरिणीं ह श्रिय मश्नुते ऽश्नुते ह प्रजाना मैश्वर्यं माधिपत्यं य एव नेता ममित्राणां व्यपनुत्तिं ब्रुवन् गृहानभ्येत्येत्य गृहान् पश्चाद् गृह्यस्याग्नेरुपविष्टायान्वारब्धाय ऋत्विगन्ततः कंसेन चतुर्गृहीतास्तिस्र आज्याहुती-रैन्द्रीः प्रपदं जुहोत्यनाय्यां अरिष्टा अज्यान्या अभयाय ॥ ६ ( १० ) ॥

अपराजितां दिश मुपतिष्ठत इति यदुक्तं, तत्रैवान्या दिशो मुख्यापराजितत्वं दर्शयति—"देवासुरा वा एषु लोकेषु संयेतिरे; त एतस्यां प्राच्यां दिशि येतिरे; तांस्ततो ऽसुरा अजयंस्ते दक्षिणस्यां दिशि येतिरे; तांस्ततो ऽसुरा अजयंस्ते प्रतीच्यां दिशि

येतिरे ; तांस्ततो ऽसुरा अजयंस्त उदीच्यां दिशि येतिरे ; तांस्ततो ऽसुरा अजयंस्त एतस्मिन्नवान्तरदेशे येतिरे ; य एष प्राङुदङ् ते ह ततो जिग्युः"–इति । पुरा कदाचिद् देवाश्च असुराश्च 'एषु' भूरादिलोकेषु निमित्तभूतेषु 'संयेतिरे' युद्धं कृतवन्तः । तत्र प्राच्यादिषु चतसृषु यत्रयत्र युद्धं कृतम्, तत्रतत्रासुराणा मेव विजयो ऽभूत् । 'य एष प्राङुदङ्' दिग्द्वयस्पर्शी कश्चिदवान्तरदेश ऐशान्यात्मकः, एतस्मिन् देशे यदा युद्धं कृतं, तदा 'ते' देवाः 'ततः' देशान्निमित्तभूतात् 'जिग्युः' जयं प्राप्ताः । तस्मादिय मैशानी दिगपराजिता पूर्वोक्तमन्त्रेष्वीपस्थेया ॥

त मेत मभिषिक्तक्षत्रियवृत्तान्तं तावदवस्थाप्य, तत्प्रसङ्गागतं पुरुषान्तरवृत्तान्तं दर्शयति— 'तं यदि क्षत्रिय उपधावेत् सेनयोः समायत्योस्तथा मे कुरु, यथाह मिमां सेनां जयानीति ; स यदि तथेति ब्रूयाद्, वनस्पते वीड्वङ्गो हि भूया इत्यस्य रथोपस्थ मभिमृश्याथैन ब्रूयाद्"–इति । कश्चिद् * देशे युद्धार्थं भूमिं सेने परस्परं समागच्छतः । तयोः समागच्छन्त्योः 'सेनयोः' मध्ये यः कोऽपि 'क्षत्रियः' विजयार्थी सन् 'तम्' अभिषिक्तं ऐशानीदिगुपस्थानयुक्तं राजानं यदि 'उपधावेत्' शरणं गच्छेत् । केन अभिप्रायेण ? इति, सोऽभिधीयते— हे अभिषिक्त क्षत्रिय ! यथा अहम् इमां शत्रुसेना जयानि, तथा मे अनुग्रहं कुरु इति तदभिप्रायः । तदानीं 'सः' अभिषिक्तः क्षत्रियः यदि 'तथा–इति' अङ्गीकारं ब्रूयात्, तदानीं "वनस्पते"–इत्यृचा ( सं० ६. ४७. २६. † ) जयार्थिनः पुरुषस्य रथोर्द्धभाग मभिमृश्यानन्तरम् 'एनं' जयार्थिनं प्रति वक्ष्यमाणं मन्त्रं ब्रूयात् ॥

---

* 'कस्मिंश्चिद्' ख ।    † आश्व० श्र० सू० २, ६, ८० ।

तं मन्त्रं दर्शयति— "आतिष्ठैतां ते दिश्म अभिमुखः सन्नद्धो रथोऽभिप्रवर्त्ततां ; स उदङ्, स प्रत्यङ्, स दक्षिणा, स प्राङ्, सोऽप्यमित्र मिति"–इति। हे जयार्थिन्! 'एताम्' ऐशानीं दिशम् 'आतिष्ठस्व' प्राप्नुहि। ते रथः 'एताम्' ऐशानीं दिशं प्रत्यभिमुखः 'सन्नद्धः' सर्वायुधादिसन्नाहोपेतः अभितः प्रवर्त्तताम्। ततः 'सः' रथ उदङ्मुखः प्रवर्त्तताम् ; ततः 'सः' रथः प्रत्यङ्मुखः प्रवर्त्तताम् ; ततः 'सः' रथः दक्षिणामुखः प्रवर्त्तताम् ; ततः 'सः' रथः प्राङ्मुखः प्रवर्त्तताम् ; तत ऊर्द्धम् 'अभ्यमित्र' त्वदीयं शत्रुं प्रति प्रवर्त्तताम् ॥

जयार्थिनं प्रति एतन्मन्त्रकथनादूर्द्ध्वं अभिषिक्तस्य कर्त्तव्यं दर्शयति— "अभीवर्त्तेन हविषेत्येवैनं मावर्त्तयेदथैनं मन्वीक्षेताप्रतिरथेन शासेन सौपर्णेनेति"–इति। "अभीवर्त्तेन"–इत्यादिसूक्तेन (सं० १०.१७४. *) 'एनं' जयार्थिनं सूक्तमन्त्रेण दिक्ष्वावर्त्तयेत्। 'अथ' अनन्तरं मावर्त्तमानमेनं सूक्तत्रयेण मन्वीक्षेत। "आशुः शिशानः"–इति (सं० १०.१०३. †) अप्रतिरथं सूक्तम्, "शास इत्था"–इति (सं० १०. १५२.‡) शाससूक्तम्, "प्र धारा यन्तु मधुनः"–इति सौपर्णं सूक्तम् § ॥

अभिषिक्तस्य कृत्यं मुक्त्वा जयार्थिनः कृत्यं दर्शयति—"जयति ह तां सेनाम्"–इति ॥

सेनाद्वययुद्धे जयार्थं प्रयोगं मुक्त्वा पुरुषद्वन्द्वयुद्धेऽपि तं माह— "यद्यु वा एन मुपधावेत्सङ्ग्रामं संयतिष्यमाणस्तथा मे कुरु यथा हं मिमं सङ्ग्रामं सञ्जयानीत्येतस्या मेवैनं दिशि यातयेज्जयति ह

* आश्व० श्र० सू० ९. ११ ख०। †, ‡ आश्व० श्र० ९ १२ ख०।

§ आश्व० श्र० २. १२. १४,— ऋग्० ३५२१० ऋ०।

तं सङ्ग्रामम्''–इति । यः कोऽपि पुमान् 'संयतिष्यमाणः' युद्धं करिष्यन् तं सङ्ग्रामं जेतुम् 'एनम्' अभिषिक्तं यदि उपधावेत् . तथा मे कुर्विति पूर्ववत् ( २११ पृ० ) ॥

राष्ट्राद् भ्रष्टस्य पुनरपि राष्ट्रप्राप्त्यर्थं प्रयोगं दर्शयति—'' यद्यु वा एन मुपधावेद्राष्ट्रादपरुध्यमानस्तथा मे कुरु यथा ऽहं मिदं राष्ट्रं पुनरवगच्छानीत्येता मेवैनं दिश मुपनिष्क्रमयेत्तया ह राष्ट्रं पुनरवगच्छति''–इति । यथा वै सेनयोर्युद्धे पुरुषयोर्युद्धे वा अभिषिक्तेन उदीचीं दिशं प्रति प्रस्थापितस्य जयः , तथैव राष्ट्रभ्रष्टो ऽपि अभिषिक्तेनैषामोदीचीं दिशं प्रस्थापितो राष्ट्रं पुनः प्राप्नोति ॥

इत्थं प्रासङ्गिकं प्रयोगत्रय मुक्त्वा प्रकृत मेव अभिषिक्तविषयं प्रयोग माह—''उपस्थायामित्राणां व्यपनुत्तिं ब्रुवन् गृहानभ्येत्यप प्राच इन्द्र विश्वाँ अमित्रानिति सर्वतो ह्यस्मा अनमित्र मभयं भवत्युत्तरोत्तरिणीं ह श्रिय मश्नुते ; ऽश्नुते ह प्रजाना मैश्वर्यं माधिपत्यं ; य एव मेता ममित्राणां व्यपनुत्तिं ब्रुवन् गृहानभ्येति'' –इति । पूर्वत्र ( २०८ पृ० ) ''क्षमिरसि''–इत्यादिमन्त्रेण अभिषिक्तस्य पदत्रयाभ्युत्क्रमेणैशानदिगुपस्थानं चाभिहितम् , तां दिश मुपस्थाय, अनन्तरम् 'अमित्राणां' शत्रूणां 'व्यपनुत्तिं' विशेषेणापनोदनहेतुम् , अत एव व्यपनुत्त्यभिधानाम् ''अप प्राचः''–इत्यादिका मृचं ( सं०१०.१३१.१. ) ब्रुवन् , स्वगृहानभिगच्छेत् । तस्या मृचि द्वितीयपादे नुदस्वेतिश्रवणादिय मृगमित्राणां व्यपनुत्तिः । 'अस्मै' एवं गृह मागच्छतोऽस्य यजमानस्य 'सर्वतः' सर्वासु दिक्षु शत्रुराहित्यलक्षण मभयं भवति । न केवलं भयराहित्यं किन्तु उत्तरोत्तराभिवृद्धिसम्पन्नामुपायादिक मपि यथोक्तमन्त्रोच्चारणेन गृहानभ्यागतो भवति ॥

ब्रह्मप्राप्तेरूर्ध्वं कर्त्तव्यं विधत्ते— “एत्य ब्रह्मन् पश्चाद् ब्रह्मस्याग्नेरुपविष्टायान्वारब्धाय ऋत्विगन्ततः कंसेन चतुर्गृहीतास्तिस्र आज्याहुतीरैन्द्रीः प्रपदं जुहोत्यनार्त्यै अरिष्ट्या अज्यान्या अभयाय”–इति । ‘एत्य’ ब्रह्मन् प्रत्यागत्य, योऽयं ‘ब्रह्मः’ गृहे वर्त्तमानः श्रौपासनोऽग्निः, तस्य पश्चाद् भागे ‘उपविष्टाय’ आसीनाय ऋत्विजे ‘अन्वारब्धाय’ उपस्पृष्टवते क्षत्रियाय, तादृशस्य क्षत्रियस्य अनार्त्यादिसिद्ध्यर्थम् ‘ऋत्विक्’ अध्वर्युः ‘अन्ततः’ सर्वप्रयोगान्ते ‘कंसेन’ कांस्यपात्रेण ‘चतुर्गृहीताः’ चतुर्वारस्वीकृताः ‘ऐन्द्रीः’ इन्द्रदेवताकाः वक्ष्यमाणैस्त्रिभिः मन्त्रैस्तिस्र आज्याहुतीः प्रपदं यथा भवति तथा जुहुयात् । ‘प्रपदं’ प्रकृष्टं पदम् । तथा च आहुः—

“पादा यस्यास्तु यावन्तो यावदक्षरसम्मिताः ।
ऋच्यध्ययन मेतेषां प्रपदं तद्विदुर्बुधाः”–इति ॥

अतः प्रपदशब्देन अक्षरपादादिविकल्परहितं लाक्षणिक मुच्चारण मभिधीयते । ‘अनार्त्तिः’ व्याधिपीडाराहित्यम् । ‘अरिष्टिः’ शत्रुभिरहिंसा । ‘अजानि.’ द्रव्यहानिराहित्यम् । ‘अभयं’ चौरादिभयराहित्यम् * ॥ ६ ( १० )॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां द्वितीयाध्याये ( सप्तत्रिंशाध्याये ) षष्ठः खण्डः ॥ ६ ( १० )॥

---

* तै० सं० १. ८. १५, तै० ब्रा० १. ७. ८, शत० ब्रा० ५. ४. ३, कात्या० श्रौ० १५. ६ इ० ।

याजयन्त्यथ ह तं व्येव कर्षन्ते यथा ह वा इदं निषादा वा सेलगा वा पापकृतो वा वित्तवन्तं पुरुष मरण्ये गृहीत्वा कर्त्त मन्वस्य वित्त मादाय द्रवन्त्येव मेव त ऋत्विजो यजमानं कर्त्त मन्वस्य वित्त मादाय द्रवन्ति य मनेवंविदो याजयन्त्येतद्ध स्म वै तद्विद्वानाह जनमेजयः पारिक्षित एवंविदं हि वै मा मेवंविदो याजयन्ति तस्मादहं जयाम्यभीत्वरीं सेनां जयाम्यभीत्वर्या सेनया न मा दिव्या न मानुष्य इषव ऋच्छन्त्येष्यामि सर्व मायुः सर्वभूमिर्भविष्यामीति न ह वा एनं दिव्या न मानुष्य इषव ऋच्छन्त्येति सर्व मायुः सर्वभूमिर्भवति य मेवंविदो याजयन्ति याजयन्ति ॥ ७ ( ११ ) ॥

इत्यैतरेयब्राह्मणेऽष्टमपञ्चिकायां द्वितीयोऽध्यायः ॥२॥

षष्ठाहुत्यर्थं प्रथमं मन्त्र माह— "पर्यू षु प्र धन्व वाजसातये परि वृत्रा भूर्भुवः प्राण ममृतं प्रपद्यते ऽय मसौ शर्म वर्माभयं स्वस्तये ; सह प्रजया सह पशुभिर्षि सक्षणिर्द्विषस्तरध्या ऋणया न ईयसे स्वाहा"–इति । अत्र "पर्यूषु"–इत्यादिकाया ऋचः परि वृत्राणि सक्षणिरिति द्वितीयः पादः* ; तस्मिन् पादे 'वृत्राणि'–इति यत् पदं , तस्य पदस्य मध्ये भूरित्यादिकं पशुभि-

* "पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः । द्विषस्तरध्या ऋणया न ईयसे"–इति ऋ० ९. ११०. १ ।

रित्यन्तं पदजातं प्रक्षेपणीयम् । इन्द्रेत्येतदक्षरद्वयं पुरस्तात् , पीत्येतत् परस्तात् , मध्ये प्रक्षेपः । अत एव अस्योच्चारणस्य प्रपद मिति नाम सम्पन्नम् । प्रक्षिप्तं पदजातं यस्मिन् उच्चारणे तदुच्चारणं 'प्रपदम्' । तत्र तावत् संहितायां साम्नातायां ऋचो ऽय मर्थः—हे इन्द्र ! 'वाजसातये' अन्नलाभाय । 'परि-उ-षु'-इति निपातत्रयसमूहेन परित इत्येतावानेवार्थो ऽभिधीयते । 'परितः' सर्वतः 'प्र धन्व' प्रकर्षेण धारय । धारणार्थो धन्वति-धातुः । अस्मभ्य मन्नं धातु चित्तं धारयेत्यर्थः । 'द्विषाणि' प्रब्रून् 'परि सचपिः' परितः निराकरिष्णुर्भव । सचपि-धातुर्हीति त्वान्निराकरणं ब्रूते । 'द्विषः' प्रब्रून् 'तरध्यै' तरितुम् 'ऋणयाः' प्रयन् प्राप्त, 'नः' अस्मदर्थम् 'ईयसे' चेष्टये इति । अस्या ऋचि 'द्विषाणि' -इतिपदस्य मध्ये प्रक्षिप्तस्य भूरित्यादि-पशुभिरित्यन्त-पदजातस्याय मर्थः— 'अयं' क्षत्रियः 'असौ' विष्णुगुप्तादिनामको भूरादीन् 'प्रपद्यते' शरणं गच्छति । 'भूः' पृथिवी, 'ब्रह्म' वेदः, 'प्राणः' प्रसिद्धः, 'अमृतं' मरणरहितम् । देवतारूपं भूरादिकं शरणं प्रपन्नस्य क्षत्रियस्य 'प्रजया' पुत्रादिरूपया सह, 'पशुभिः' गवादिभिश्च सह 'स्वस्तये' क्षेमार्थं, त्वं 'शर्म' सुखं, 'वर्म' कवचम्; 'अभयं' भयरहितं देवतादिरूप स्थानञ्च, कुर्विति शेषः । एतस्मिन्नर्थे 'स्वाहा' तुभ्य मिदं सुहुत मस्तु ॥

प्रपदनामकं प्रथमं मन्त्र मुक्त्वा, तन्नामकं द्वितीयं मन्त्र माह— "अनु हि त्वा सुतं सोम मदामसि महे सम र्य्यो ब्रह्म प्राण ममृतं प्रपद्यते ऽय मसौ शर्म वर्माभयं स्वस्तये सह प्रजया सह पशुभिर्य राज्ये वाजाँ अभि पवमान प्र गाहसे स्वाहा"-इति । अत्रापि "अनु हि त्वा"-इत्येतस्या ऋचि 'महे समर्य राज्ये'-इति द्वितीय:

पादः * । तत्र 'समर्य'—इति यत् पदं, तस्य समेत्यक्षरद्वयं मर्य-स्मात् कृत्वा, येत्येतत् तृतीय मक्षर मुपर्यवस्थाप्य, भुव इत्यादिकं पदजातं प्रक्षेपणीयम् । तस्या ऋचोऽय मर्थः—हे सोम ! 'सुतम्' अभिषुतं त्वाम् 'अनुमदामसि' वयं हृष्यामः । समरं युद्धम्, त मर्हतीति 'समर्यः' शूरः ; तथाविध हे इन्द्र ! 'मह्रे' महति राज्ये † 'एनं' क्षत्रियं, स्थापयेति शेषः । हे 'पवमान' शोधक ! 'वाजान्' अन्नानि 'अभिप्रगाहसे' सर्वतः प्रकर्षेण गाहसे विलोडयसि, सम्पादयसीत्यर्थः । पदमध्ये प्रक्षिप्तस्य पदजातस्य आदौ 'भुवः'—इत्यक्षरेच मुच्यते ; अन्त्येत्यादिकं स्वाहाकारान्तं पूर्ववत् (.२१७ पृ० ) ॥

प्रपदनामकं तृतीयं मन्त्र माह—"अजीजनो हि पवमान सूर्यं विधारे श स्वर्भुः प्राण मस्तृतं प्रपद्यते ऽय मसौ अमं वसीभयं स्वस्तये सह प्रजया सह पशुभिः क्मना पयो गोजीरया रंहमाणः पुरन्ध्या स्वाहेति"—इति । अत्रापि 'विधारे शक्मना'—इति द्वितीयः पादः ‡ । तत्र तस्य शक्मनेतिपदस्य शेत्येक मक्षर मधस्तादुद्धार्य, क्मनेत्यक्षर मुपरिष्टादवस्थाप्य, मध्ये स्वरित्यादिकं पशुभिरित्यन्तं पदजातं प्रक्षेपणीयम् । तस्या ऋचोऽय मर्थः—हे 'पवमान' शोधक ! इन्द्र ! त्वं सूर्यम् 'अजीजनः' उत्पादितवानसि । 'शक्मना' स्वशक्त्या 'पयः' जलं 'विधारे' विशेषेण

* "अनु हि त्वा सुतं सोम मदामसि महे समर्य राज्ये । वाजाँ अभि पवमान प्र गाहसे"—इति ऋ० ९, ११०, २ ।

† पदसंहितायां तु 'समर्यराज्ये'—इत्येकं पदम् , समर्युराज्ये इति च तद्व्याख्यानं तत मनेनैवाचार्येण संहिताभाष्ये ।

‡ "अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः । गोजीरया रंहमाणः पुरन्ध्या"—इति ऋ० ९. ११०, ३ ।

मेघमध्ये धारयसि । 'गोजीरया' गवां जीवनेन निमित्तेन 'रंहमाणः' वृष्टिप्रदानार्थं सञ्चरन्, 'पुरु' पूर्णफलं 'धिया' चिन्तया *। गोजीरयेत्युपलक्षणं, सर्वप्राणिजीवन मित्यर्थः। अत्रापि 'शक्वरी'-इतिपदमध्ये प्रक्षिप्तस्य पदजातस्यादौ 'स्वः'-इति द्युलोकोऽभिधीयते; अह्नेत्यादिकं साङ्गाकारान्तं पूर्ववत् (२१७ पृ०)। एतेषां प्रपदनामकानां मन्त्राणां लक्षणं पूर्वमेव 'पादा यस्यास्तु'-इतिश्लोकेनोदाहृतम् (२१४ पृ०)। पर्युष्णिहादिकाया ऋचो मध्ये मूर्द्धा प्राणिल्यादिकायाः अस्या ऋचो यावन्तः पादाः यावदक्षरसम्मिताः, तेषां सर्वेषां पतनं प्रपद मिति तस्य लक्षणवाक्यस्यार्थः॥

उक्तमन्त्रत्रयसाध्या आहुतीः प्रशंसति— "अनार्त्तो ह वा अरिष्टोऽजीतः सर्वतो गुप्तस्त्रय्यै विद्यायै रूपेण सर्वा दिशोऽनुसञ्चरत्यैन्द्रे लोके प्रतिष्ठितो यस्मा एता ऋत्विगन्ततः कांसेन चतुर्गृहीतास्तिस्र आज्याहुतीरैन्द्रीः प्रपदं जुहोति"—इति। 'यस्मै' क्षत्रियाय 'ऋत्विक्' अध्वर्युः 'अन्ततः' अभिषेकप्रयोगान्ते यथोक्तक्रमेण जुहोति। असौ क्षत्रियः 'अनार्त्तः' रोगरहितः, 'अरिष्टः' शत्रुभिरहिंसितः, तैः शत्रुभिः युद्धेऽप्यजितः†, सर्वतो 'गुप्तः' इन्द्रेण रक्षितः। केन साधनेन रक्षित इति, तदुच्यते— 'त्रय्यै विद्यायै रूपेण' वेदत्रयोक्तमन्त्रेणेत्यर्थः। तेन रक्षितः सन्, 'सर्वा दिशः' प्राच्याद्याः 'अनुसञ्चरति' अनुक्रमेण विजयार्थं प्रवर्त्तते, मरणादूर्द्ध्वम् ऐन्द्रे लोके प्रतिष्ठितो भवति॥

होमादूर्द्ध्वं मार्गीमन्त्रपाठं विधत्ते— "अथास्मै प्रजाति

---

* "'पुरन्ध्या' बहुविधप्रज्ञानेन"—इति संहिताभाष्ये सायणः।

† मूलपाठन्तु अजीत इति दीर्घमध्यं, तथैव व्याख्यानं मजित इति।

माशास्ते,— गवां मश्वानां पुरुषाणा मिह गाव प्रजायध्व मिहाश्वा इह पूरुषाः इहो सहस्रदक्षिणो वीरस्त्राता निषीदत्विति"-इति । 'अथ' होमानन्तरम्, 'अन्ततः' प्रयोगान्ते "इह गावः"-इत्यादिमन्त्रेण * गवादीनां 'प्रजातिम्' उत्पत्तिम् 'आशास्ते' प्रार्थयेत । मन्त्रस्याय मर्थः— गावः 'इह' मद्राष्ट्रे 'प्रजायध्वं' प्रकर्षेणोत्पन्ना भवत । एव मश्वाः, पुरुषाश्च । 'इहो' अस्मिन् एव राष्ट्रे 'सहस्रदक्षिणः' यागेषु सहस्रसङ्ख्यदक्षिणादानयोग्यो 'वीरः' पुत्रः 'त्राता' प्रजानां रक्षकः सन्, निषीदतु ॥

अनेन मन्त्रेण प्रार्थनं प्रशंसति— "बहुर्ह वै प्रजया पशुभिर्भवति य एव मेता मन्ततः प्रजाति माशास्ते गवा मश्वानां पुरुषाणाम्"-इति । य एव माशास्ते क्षत्रियः, प्रजादिभिः बहुर्ह वै स्या मिति ; स एव तथा भवति ॥

पुनरभिषेकपर्यन्ते ऽस्मिन् क्षत्रिययागे याजयितॄणा मृत्विजां वेदनं प्रशंसति— "एष ह वाव क्षत्रियो ऽविकृष्टो य मेवंविदो याजयन्ति"-इति । 'एवम्' उक्ताभिषेकप्रकारं जानन्त ऋत्विजो 'यं' क्षत्रियं याजयन्ति, 'एष एव' क्षत्रियः सर्वेषु 'अविकृष्टः' अनपकृष्टः ; न ह्यस्य कदाचिदप्यपकर्षो भवति ॥

ऋत्विजा मभिषेकपरिज्ञानाभावं निन्दति— "अथ ह तं व्येव कर्षन्ते, यथा ह वा इदं निषादा वा सेलगा वा पापकृतो वा वित्तवन्तं पुरुष मरण्ये गृहीत्वा कर्त मन्वस्य वित्त मादाय द्रवन्त्येव मेव तं ऋत्विजो यजमानं कर्त मन्वस्य वित्त मादाय द्रवन्ति, य मनेवंविदो याजयन्ति"-इति । 'अनेवंविदः' अभिषेकप्रकार मजानन्त ऋत्विजो 'यं' क्षत्रियं याजयन्ति, 'तं'

* [illegible]

क्षत्रियं 'विकर्षन्ते एव' विप्रकृष्टं सपक्षं कुर्वन्त्येव । तत्रेदं निदर्शन मुच्यते— 'निषादाः' नीचजातयो मनुष्याः, 'सेळगाः' चौराः । इळा अन्नं, तया सह वर्त्तन्ते इति 'सेळाः' धनिकाः, तान् धनापहारार्थं गच्छन्तीति चौराः 'सेळगाः' । 'पापकृतः' हिंसाकारिणः । त एते विविधा दुष्टाः 'वित्तवन्तं' बहुधनोपेतं पुरुषं मरण्यमध्ये गृहीत्वा 'कर्त्तं मन्वस्य' कस्मिंश्चिदन्धकूपादिरूपे गर्ते तं प्रक्षिप्य, तदीयं धनं सपहृत्य 'द्रवन्ति' पलायन्ते ; एवमेव अतभिज्ञा ऋत्विजो यजमानं नरकरूपं कर्त्तं मन्वस्य, नरकहेतोरनुष्ठाने अवस्थाप्य, दक्षिणारूपेण तदीयं द्रव्यमपहृत्य, स्वगृहेषु गच्छन्ति ॥

उक्ताभिषेकपर्यन्तक्षत्रिययाग मुदाहरणमुखेन प्रशंसति— "एतद्ध स्म वै तद्विद्वानाह जनमेजयः पारिक्षितः,— एवंविदं हि वै मा मेवंविदो याजयन्ति, तस्मादहं जयाम्यभीत्वरीं सेनां जयाम्यभीत्वर्या सेनया न मा दिव्या न मानुष्य इषव ऋच्छन्त्येष्यामि सर्वं मायुः सर्वभूमिर्भविष्यामीति"–इति । परिक्षितस्य राज्ञः पुत्रो जनमेजयः, 'तदेतत्' सर्वं प्रयोगमाहात्म्यं विद्वान्, सभामध्ये एव मुवाच— अहं सम्यग्वेवंवित्, ऋत्विजो ह्येवंविदः ; तस्माद् अभिषेकान्तेन यागेन इन्द्रयुद्धे जयामि । किञ्च 'अभीत्वरीम्' अभितो युद्धार्थं मुद्युक्तां परकीयां सेनां स्वकृया सेनया जयामि । तथाविधं मां 'दिव्या इषवः' देवप्रेरिता वाणाः न प्राप्नुवन्ति, 'मानुष्याः' चेषवः नाप्नुवन्ति, अपमृत्युरहितः सर्वं मप्यायुः प्राप्स्यामि, सर्वा चतुःसागरपरिवेष्टिता भूमिर्यस्याधीना सोऽयं 'सर्वभूमिः', तादृशो भविष्यामीति ॥

जनमेजयवाक्योदाहरणे दृष्टीकृत मर्थं निगमयति— "न ह वा एनं दिव्या न मानुष्य इषव ऋच्छन्त्येति, सर्वं मायुः

सर्वभूमिर्भवति, य मेवंविदो याजयन्ति–याजयन्ति"–इति । स्पष्टोऽर्थः । अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ७ (११) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां द्वितीयाध्याये
( सप्तत्रिंशाध्याये ) सप्तमः खण्डः ॥ ७ (११) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादिष्टेन
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'-नामभाष्ये
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायाः द्वितीयोऽध्यायः ॥

---

## ॥ अथ तृतीयाध्यायः ॥

(३४)

### ॥ अथ प्रथमः खण्डः ॥

॥ ॐ ॥ अथात ऐन्द्रो महाभिषेकस्तं देवा अब्रुवन्त्सप्रजापतिका अयं वै देवाना मोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतम इम मेवाभिषिञ्चामहा इति तथेति तद्वैतदिन्द्र मेव तस्मा एता मासन्दीं समभरन्नृचं नाम तस्यै बृहच्च रथन्तरञ्च पूर्वौ पादावकुर्वन् वैरूपं च वैराजं चापरौ शाक्वररैवते शीर्षण्ये नौधसञ्च कालेयं चानूच्ये ऋचः प्राचीनातानानि सामानि तिरश्चीनवायान् यजूंष्यतीकाशान् यश आस्तरणं श्रिय मुपवर्हणं तस्यै सविता च बृहस्पतिश्च पूर्वौ पादावधारयतां वायुश्च पूषा चापरौ मित्रावरुणौ शीर्षण्ये अश्विनावनूच्ये स एता मासन्दी मारोहद्वसवस्त्वा गायत्रेण छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना ऽऽरोहन्तु तानन्वारोहामि साम्राज्याय रुद्रास्त्वा त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना ऽऽरोहन्तु तानन्वारोहामि भौज्यायादित्यास्त्वा जागतेन छन्दसा सप्तदशेन

स्तोमेन वैरूपेण साम्ना ऽऽरोहन्तु तानन्वारोहामि स्वाराज्याय विश्वे त्वा देवा आनुष्टुभेन छन्दसैकविंशेन स्तोमेन वैराजेन साम्ना ऽऽरोहन्तु तानन्वारोहामि वैराज्याय साध्याश्च त्वाप्त्याश्च देवाः पाङ्क्तेन छन्दसा त्रिणवेन स्तोमेन शाक्वरेण साम्ना ऽऽरोहन्तु तानन्वारोहामि राज्याय मरुतश्च त्वाङ्गिरसश्च देवा अतिच्छन्दसा छन्दसा त्रयस्त्रिंशेन स्तोमेन रैवतेन साम्ना ऽऽरोहन्तु तानन्वारोहामि पारमेष्ठ्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठायारोहामीत्येता मासन्दी मारोहत् त मेतस्या मासन्द्या मासीनं विश्वे देवा अब्रुवन्न वा अनभ्युत्क्रुष्ट इन्द्रो वीर्यं कर्तु मर्हत्यभ्येन मुत्क्रोशामेति तथेति तं विश्वे देवा अभ्युदक्रोशन्निमं देवा अभ्युत्क्रोशत सम्राजं साम्राज्यं भोजं भोजपितरं स्वराजं स्वाराज्यं विराजं वैराज्यं राजानं राजपितरं परमेष्ठिनं पारमेष्ठ्यं क्षत्र मजनि क्षत्रियो ऽजनि विश्वस्य भूतस्याधिपतिरजनि विशा मत्ता ऽजनि पुरां भेत्ता ऽजन्यसुराणां हन्ता ऽजनि ब्रह्मणो गोप्ता ऽजनि धर्मस्य गोप्ता ऽजनीति त मभ्युत्क्रुष्टं प्रजापतिरभिषेक्ष्यन्नेतयर्चाभ्यमन्त्रयत ॥ १ ( १२ ) ॥

॥ श्रीगणेशाय नमः ॥

पुनः कार्योऽभिषेकोऽन्त्ये क्रत्वन्तत्वेन वर्णितः ।
अभिषेकः पुमर्थो यस्तस्योपोद्घात उच्यते ॥ १ ॥

तत्रादाविन्द्रस्याभिषेकं प्रतिजानीते — "अथात ऐन्द्रो महाभिषेकः"—इति । 'अथ' मानुषचत्रियाभिषेकोक्त्यनन्तरम्, यतो दैवो ऽभिषेको बुभुत्सितः, अतः कारणादिन्द्रसम्बन्धी महाभिषेकः, कथ्यत इति शेषः । आरोहणाभ्युक्षणमनाभिमन्त्रणादिभिर्वक्ष्यमाणैरस्याभिषेकस्य महत्त्वं द्रष्टव्यम् ॥

तदभिषेकार्थं देवविचारं दर्शयति— "ते देवा अब्रुवन्सप्रजापतिका,— अयं वै देवानां ओजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतम इम मेवाभिषिञ्चामहा इति ; तथेति ; तद्वै तदिन्द्र मेव"—इति । प्रजापतिना सह वर्त्तन्त इति 'सप्रजापतिकाः' । 'ते' अग्न्यादयो देवाः परस्पर मिदम् 'अब्रुवन्' हस्तेन एनं प्रदर्श्य कथयन्ति । अय मेवेन्द्रो 'देवानां' मध्ये 'ओजिष्ठः' अतिशयेनाष्टमधातुयुक्तः, 'बलिष्ठः' अतिशयेन शरीरबलयुक्तः, 'सहिष्ठः' अतिशयेन वैर्यभिभवशीलः, 'सत्तमः' अतिशयेन स्वभक्तेषु साधुः, 'पारयिष्णुतमः' अतिशयेन प्रक्रान्तस्य कार्यस्य समाप्तिहेतुः ; तस्मादिम मेव सर्वे वय मभिषिञ्चामहे । इति केचिद् उक्ते सति, अन्ये सर्वेऽपि 'तथा—इति' अङ्गीकृत्य, 'तद्वै' तदानी मेव, 'तदिन्द्र मेव' तं सर्वैरनुमित मिन्द्र मेव, अभ्यषिञ्चन्निति शेषः ॥

तत्र प्रकारं दर्शयति— "तस्मा एतां मासन्दीं समभरन्नृचं नाम ; तस्यै बृहच्च रथन्तरञ्च पूर्वौ पादावकुर्वन्, वैरूपं च वैराजं चापरौ, शाक्वररैवते शीर्षण्ये, नौधसञ्च कालेयं चानूच्ये, ऋचः प्राचीनातानान्सामानि तिरश्चीनवायान्, यजूंष्यतीकाशान्,

यश आस्तरणं, श्रिय उपबर्हणं; तस्यै सविता च बृहस्पतिश्च पूर्वौ पादावधारयतां, वायुश्च पूषा चापरौ, मित्रावरुणौ शीर्षण्ये, अश्विनावनूच्ये; स एतां आसन्दीं आरोहद्"–इति । 'तस्मै' इन्द्रार्थम् 'एतां' वक्ष्यमाणां वेदमयीं आसन्दीं समभरन् । 'ऋचं नाम'–इति आसन्द्या विशेषणम्, ऋग्रूपा मेतन्नामिका मित्यर्थः । 'तस्यै' तस्या ऋग्रूपाया आसन्द्या बृहदादीन्यष्टसामानि पूर्वपादाद्यष्टावयवान् अकुर्वन् । आसन्द्यां शयानस्येन्द्रस्य शिरोदेशस्य फलकं 'शीर्षण्यं', तत्र पाददेशावस्थितस्य फलकस्योपलक्षणम्; अत एव 'शीर्षण्ये'–इति द्विवचन मुच्यते । 'अनूच्ये' पार्श्वद्वयवर्त्तिनी फलके । ऋग्रूपा ये मन्त्राः सन्ति, तान् 'प्राचीनातानान्' प्राकप्रत्यगायततत्वेन विस्तारितान् दीर्घतन्तुविशेषानकुर्वन् । गीयमानानि 'सामानि' 'तिरश्चीनवायान्' तिर्य्यग्वयनहेतून् तन्तुविशेषान् अकुर्वन् । यजूंषि 'अतीकाशान्' तन्तुमध्यवर्त्तिच्छिद्रविशेषान् अकुर्वन् । 'यशः' कीर्त्तिः, देवतारूपम् तदासन्द्या उपरि आस्तरणम् । 'श्रियं' या तु श्रीः सम्पदभिमानिनी देवता, ताम् 'उपबर्हणम्' शिरस उपधान मकुर्वन् । 'तस्यै' तस्या आसन्द्याः पादादीनष्टावयवान् सवित्रादयो ऽष्टौ देवा अधारयन् । इन्द्रः 'एतां' वेदमयीं वक्ष्यमाणैः वचनैरारोहत् ॥

तान् मन्त्रान् दर्शयति—"वसवस्त्वा गायत्रेण छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना ऽऽरोहन्तु, तानन्वारोहामि साम्राज्याय; रुद्रास्त्वा त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना ऽऽरोहन्तु, तानन्वारोहामि भौज्याय; आदित्यास्त्वा जागतेन छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्ना ऽऽरोहन्तु, तानन्वारोहामि

स्वाराज्याय ; विश्वे त्वा देवा आनुष्टुभेन छन्दसैकविंशेन स्तोमेन वैराजेन साम्ना ऽऽरोहन्तु , तानन्वारोहामि वैराज्याय ; साध्याश्च त्वाप्त्याश्च देवाः पाङ्क्तेन छन्दसा त्रिणवेन स्तोमेन शाक्वरेण साम्ना ऽऽरोहन्तु , ताननन्वारोहामि राज्याय ; मरुतश्च त्वाङ्गिरसश्च देवा अतिच्छन्दसा छन्दसा त्रयस्त्रिंशेन स्तोमेन रैवतेन साम्ना ऽऽरोहन्तु, ताननन्वारोहामि पारमेष्ठ्याय ; माहाराज्यायाधिपत्याय स्वावश्या-यातिष्ठायारोहामीत्येता मासन्दी मारोहत्"–इति । वस्वादयो देवगणाः, गायत्र्यादिच्छन्दोभिः, त्रिवृदादिस्तोमैः ; रथन्तरादि-सामभिश्च सह हे आसन्दि ! त्वां प्रथमत आरोहन्तु ; तान् 'अनु' पश्चादहं मारोहामि । 'आप्त्याः'–इत्यनेनापि वस्वादिवद्वत् कश्चिद्देवगणविशेष उच्यते । साम्राज्यादीन्यारोहणप्रयोजनानि । एते च मन्त्राः पूर्वाध्याये "व्याघ्रचर्मणा स्तृणाति"–इत्यस्मिन् खण्डे ( १८६ पृ० ) व्याख्याताः । एतैः षड्भिर्मन्त्रैरिन्द्र उक्ता मासन्दी मारोहत् ॥

इन्द्रारोहणादूर्ध्वं देवाना मभ्युत्क्रोशनं दर्शयति— "त मेतस्या मासन्द्या मासीनं विश्वे देवा अब्रुवन् ,— न वा अनभ्युत्क्रुष्ट इन्द्रो वीर्यं कर्तुं मर्हत्यभ्येन मुत्क्रोशामेति ; तथेति ; तं विश्वे देवा अभ्युदक्रोशन्निमं देवा अभ्युत्क्रोशत सम्राजं साम्राज्यं भोजं भोज-पितरं स्वराजं स्वाराज्यं विराजं वैराज्यं राजानं राजपितरं परमेष्ठिनं पारमेष्ठ्यं , क्षत्र मजनि क्षत्रियो ऽजनि विश्वस्य भूत-स्याधिपतिरजनि विशा मत्ता ऽजनि पुरां भेत्ता ऽजन्यसुराणां हन्ता ऽजनि ब्रह्मणो गोप्ता ऽजनि धर्मस्य गोप्ता ऽजनीति"–इति । 'एतस्या' वेदमय्या मासन्द्या मासीनं 'तम्' इन्द्रं प्रति 'विश्वे' सर्वे देवाः परस्पर मिद मब्रुवन् । यथा लोके वन्दिनो गुणकथनेन

राज्ञः कीर्त्तिं कुर्वन्ति, एव मत्रापि गुणकीर्त्तनम् 'अभ्युत्क्रोशनम्', तेन रहितः 'अनभ्युत्क्रुष्टः' इन्द्रो युद्धादौ वीर्यं कर्त्तुं नैवार्हति ; कीर्त्तिं मन्तरेण परेषां प्रीत्यनुदयात् । तस्माद् अभितः 'एनम्' इन्द्रम् 'उत्क्रोशाम' उद्घोषयामि । 'इति' एवं विचार्य, 'तथा-इति' अङ्गीकृत्य, 'तम्' इन्द्रम् सर्वे देवा अभ्युदक्रोशन् । इम मित्यादिरभ्युत्क्रोशनप्रकारः । हे देवा. ! 'इमम्' इन्द्रम् अभितः 'उत्क्रोशत' उद्घोषयत । कीदृश मिन्द्रम् ? सम्राट्स्वरूपम्, अत एव साम्राज्यं कर्त्तुं मर्हम् ; 'भोज' भोक्तारम्, अत एव 'भोजपितर' भोगपालकम् ; स्वराड्रूपत्वादेव स्वाराज्यं कर्त्तुं मर्हम् ; विराड्रूपत्वादेव वैराज्यं कर्त्तुं मर्हम् ; राजरूपत्वाद् 'राजपितर' सर्वेषां राज्ञां पालकम् ; परमेष्ठिरूपत्वात् पारमेष्ठ्यं पद मनुभवितुं योग्यम् । 'क्षत्र मजनि' ईदृशो क्षत्रियजातिर्लोके समुत्पन्ना । तज्जातिमान् क्षत्रियः पुरुषः समुत्पन्नः । सर्वस्य प्राणिजातस्याधिपतिरुत्पन्नः । 'विशां' प्रजानाम् 'अत्ता' भोक्ता समुत्पन्नः । 'पुरां' परकीयानां 'भेत्ता' विदारयिता समुत्पन्नः । असुराणां 'हन्ता' घातकः समुत्पन्नः । 'ब्रह्मणः' वेदस्य 'गोप्ता' रक्षकः समुत्पन्नः । 'इति' अय मुत्क्रोशनमन्त्र. ॥

अभ्युत्क्रोशनादूर्ध्वं प्रजापतिकर्त्तव्यं दर्शयति— "त मभ्युत्क्रुष्टं प्रजापतिरभिषेक्ष्यन्नेतयर्चाभ्यमन्त्रयत"-इति । 'एतया' जिघम्मीति ( २२९ पृ० ) वक्ष्यमाणया ॥ १ ( १२ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां तृतीयाध्याये
( अष्टत्रिंशाध्याये ) प्रथमः खण्डः ॥ १ ( १२ ) ॥

---

॥ अथ द्वितीयः खण्डः ॥

निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठाय सुक्रतुरिति तमेतस्यामासन्द्यामासीनं प्रजापतिः पुरस्तात् तिष्ठन् प्रत्यङ्मुख औदुम्बर्याऽऽर्द्रया शाखया सपलाशया जातरूपमयेन च पवित्रेणान्तर्धायाभ्यषिञ्चद् इमा आपः शिवतमा इत्येतेन तृचेन देवस्य त्वेति च यजुषा भूर्भुवस्स्वरित्येताभिश्च व्याहृतिभिः॥ २ ( १३ )॥

"एतयर्चाभ्यमन्त्रयत"—इत्यत्र योऽयं मन्त्र ऋक्शब्देन विवक्षित, तं मन्त्रं दर्शयति—"निषसाद धृतव्रतो वरुण पस्त्यास्वा साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठाय सुक्रतुरिति"—इति । 'धृतव्रतः' स्वीकृतनियमो 'वरुण.' सर्वस्याविष्टस्य निवारयितेन्द्रः, 'पस्त्यासु' गृहेष्वागत्य, साम्राज्यादिफलसिद्धर्थं 'सुक्रतु' शोभनसङ्कल्पो भूत्वा 'निषसाद' अस्यामासन्द्यां निषण्णवान् ॥

अनेन मन्त्रेणाभिमन्त्रितस्येन्द्रस्याभिषेकप्रकारं दर्शयति—*"तमेतस्यामासन्द्यामासीनं प्रजापति. पुरस्तात् तिष्ठन् प्रत्यङ्मुख औदुम्बर्याऽऽर्द्रया शाखया सपलाशया जातरूपमयेन च पवित्रेणान्तर्धायाभ्यषिञ्चद्, इमा आपः शिवतमा इत्येतेन तृचेन, देवस्य त्वेति च यजुषा, भूर्भुवस्स्वरित्येताभिश्च व्याहृतिभि."*—

इति । 'एतस्यां' पूर्वोक्तायां वेदमय्या मासन्द्यां मासीनं 'तम्' इन्द्रं प्रजापतिरभ्यषिञ्चत् । किं कुर्वन् ? 'पुरस्तात्' आसन्द्याः पूर्वस्यां दिशि प्रत्यङ्मुखस्तिष्ठन् । किं कृत्वा ? 'आर्द्रया' आर्द्रपलाशेनया उदुम्बरशाखया सुवर्णमयेन च पवित्रेण 'अन्तर्धाय' व्यवधानं कृत्वा । केन मन्त्रेण ? "इमा आप."–इत्यादिकेन, क्षत्रियाभिषेके प्रोक्तेन ( १८८पृ० ) त्रिविधेन मन्त्रजातेन ॥२(१३)॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां तृतीयाध्याये ( अष्टत्रिंशाध्याये ) द्वितीयः खण्डः ॥ २ ( १३ ) ॥

---

॥ अथ तृतीयः खण्डः ॥

अथैनं प्राच्यां दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः साम्राज्याय तस्मादेतस्यां प्राच्यां दिशि ये के च प्राच्यानां राजानः साम्राज्यायैव तेऽभिषिच्यन्ते सम्राळित्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनं दक्षिणस्यां दिशि रुद्रा देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भौ-

ज्याय तस्मादेतस्यां दक्षिणस्यां दिशि ये के च सत्वतां राजानो भौज्यायैव ते ऽभिषिच्यन्ते भोजेत्येनानभिषिक्तानाचक्षत एता मेव देवानां विहितिमन्वथैनं प्रतीच्यां दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चंन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्याय तस्मादेतस्यां प्रतीच्यां दिशि ये के च नीच्यानां राजानो ये ऽपाच्यानां स्वाराज्यायैव ते ऽभिषिच्यन्ते स्वराळित्येनानभिषिक्तानाचक्षत एता मेव देवानां विहितिमन्वथैन मुदीच्यां दिशि विश्वे देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चंन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्वैराज्याय तस्मादेतस्या मुदीच्यां दिशि ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा इति वैराज्यायैव ते ऽभिषिच्यन्ते विराळित्येनानभिषिक्तानाचक्षत एता मेव देवानां विहितिमन्वथैन मस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाप्त्याश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चंन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभी राज्याय तस्मादस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां

राजानः सत्वशौशीनराणां राज्यायैव ते ऽभिषिच्यन्ते राजेत्येनानभिषिक्तानाचक्षत एता मेव देवानां विहितिं मन्वथैनं मूर्धायां दिशि मरुतश्चाङ्गिरसश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः पारमेष्ठ्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठायेति स परमेष्ठी प्राजापत्यो ऽभवत् स एतेन महाभिषेकेणाभिषिक्त इन्द्रः सर्वा जितीरजयत् सर्वाँल्लो*कानविन्दत् सर्वेषां देवानां श्रैष्ठ्य मतिष्ठां परमता मगच्छत्साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्य माधिपत्यं जित्वास्मिँल्लोके † स्वयम्भूः स्वराळमृतो ऽमुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वा ऽमृतः समभवत् समभवत् ॥ ३ ( १४ ) ॥

इत्यैतरेयब्राह्मणेऽष्टमपञ्चिकायां तृतीयोऽध्यायः॥ ३ ॥

इन्द्रस्य प्रजापतिकृताभिषेकादूर्ध्वं दिग्भेदेन देवविशेषै रभिषेकः कृतः ; तत्र प्राच्यां दिशि त मभिषेकं दर्शयति— "अथैनं प्राच्यां दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशैरहोभि-

* 'सत्वानुशी॰'–इति क, 'सत्वोशी॰'–इति ग, 'सत्वोशी॰'–इति ख, ङ ।
† '॰स्मिँल्लोके'–इति क, ग, '॰स्मि ल्लोके'–इति ङ ।

रभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः साम्राज्याय"—इति । 'अथ' प्राजापत्याभिषेकानन्तरम्, 'एनम्' इन्द्रं प्राच्यां दिशि अवस्थिता वसवो देवा एकविंशत्सु अहस्सु पूर्वोक्तैर्मन्त्रैः अभ्यषिञ्चत्; तच्च साम्राज्यसिद्धये भवति ॥

इदानीं लौकिकाचारप्रदर्शनेनेन्द्रस्य प्राच्यां दिशि तमभिषेकं द्रढयति— "तस्मादेतस्यां प्राच्यां दिशि ये के च प्राच्यानां राजानः साम्राज्यायैव ते ऽभिषिच्यन्ते सम्राळित्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमनु"—इति । यस्माद् वसुभिः प्राच्यां दिश्यभिषेकः कृतः, 'तस्मात्' इदानीमपि 'प्राच्यानां' पूर्वदिग्वर्तिनां मनुष्याणां ये के च राजानः सन्ति, ते सर्वेऽपि 'देवानां' वसूनां सम्बन्धिनीम् 'एतामेव विहितिं' पूर्वोक्तमेव विधानम् 'अनु' 'साम्राज्याय' साम्राज्यसिद्ध्यर्थमभिषिच्यन्ते । अत एव अभिषिक्तान् 'एनान्' राज्ञः 'सम्राट्' 'इति' अनेन शब्देन व्यवहरन्ति ॥

दिगन्तरेषु* देवान्तरैरिन्द्राभिषेकं दर्शयति— "अथैनं दक्षिणस्यां दिशि रुद्रा देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भौज्याय तस्मादेतस्यां दक्षिणस्यां दिशि ये के च सत्वतां राजानो भौज्यायैव ते ऽभिषिच्यन्ते भोजेत्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनं प्रतीच्यां दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्याय तस्मादेतस्यां प्रतीच्यां दिशि ये के च नीच्यानां राजानो ये ऽपाच्यानां स्वाराज्यायैव ते ऽभिषिच्यन्ते स्वराळित्ये-

---

* "दिगन्तरेऽपि"—इति ख ।

नानभिषिक्तोनाचचत एतां मेव देवानां विहितिं मन्वयैन उदीच्यां दिशि विश्वे देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्वैराज्याय तस्मादेतस्या मुदीच्यां दिशि ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा' इति वैराज्यायैव ते ऽभिषिच्यन्ते विराळित्येनानभिषिक्तानाचचत एता मेव देवानां विहितिं मन्वयैन मस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाप्त्याश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभी राज्याय तस्मादस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः सवशोशीनराणां राज्यायैव ते ऽभिषिच्यन्ते राजेत्येनानभिषिक्तानाचचत एता मेव देवानां विहितिं मन्वयैन मूर्ध्वायां दिशि मरुतश्चाङ्गिरसश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः पारमेष्ठ्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठायेति स परमेष्ठी प्राजापत्यो ऽभवत्''–इति । प्रथमपर्यायवद् व्याख्येयम् । 'सत्वतां' दक्षिणस्यां दिशि वर्त्तमानाः प्राणिनः सत्वन्नामकाः *, तेषाम् । ये राजानोऽभिषिक्ताः, ते 'भोज' 'इति' अनेन शब्देन व्यवह्रियन्ते । प्रतीच्यां दिशि वर्त्तमानाः प्राणिनो नीच्या अपाच्याश्च† । निकर्षं प्राप्नुवन्तीति 'नीच्याः', अपकर्षं प्राप्नुवन्तीति 'अपाच्याः' । जात्या निकर्षः, व्यवहारेणापकर्षः । उभयविधानां प्राणिनां ये राजानः सन्ति, ते 'स्वराट्' 'इति' अनेन

* "तदेतद् गाथयाभिगीतम्— 'प्रतानीकः सत्वताम् मेध्यं सात्राजितो हयम् । आदत्त यज्ञं काशीनां भरतः सत्वतां मिव'–इति''–इति शत० ब्रा० १३. ५. ४. २१ ।

† 'उक्ताः जनपदाः अपाच्याः'–इति ४० चभि० चि० ८६१ ।

शब्देन व्यवह्रियन्ते । उदीच्यां दिशि 'हिमवन्तं परेण', हिमवत्पर्वतस्य परभागे 'जनपदाः' ग्रामविशेषाः 'उत्तरकुरवः' उत्तरकुरुनामकाः *, 'उत्तरमद्राः' उत्तरमद्रनामकाः सन्ति, तत्रत्या राजानो 'विराट्' 'इति' अनेन शब्देन व्यवह्रियन्ते । 'मध्यमा दिक्' मध्यदेशः । स च प्राच्यादिभिर्दिग्भिः सर्वाभिरपेक्ष्यत्वेन 'ध्रुवा' भवति ; तदपेक्षयैव पूर्वा पश्चिमेत्यादिः व्यवहारः । स च देशः सर्वेषां वैदिकानां माश्रयः । तत्र ये वशदेशैः † उशीनरदेशैश्च सहिताः कुरुपञ्चालदेशाः सन्ति, तेषां देशानां ये राजानः, ते 'राजा' 'इति' अनेन शब्देन व्यवह्रियन्ते । 'ऊर्ध्वायां दिशि' स्वर्गरूपायाम्, मनुष्यस्य सञ्चाराभावात् तत्र राजानो नोदाहृताः, किन्तु इन्द्रस्यैवाभिषेक उक्तः । तस्यां दिश्यभिषेकेण 'सः' इन्द्रः 'परमेष्ठी' परमपदे अवस्थितः, 'प्राजापत्यः' प्रजापतिसम्बन्धी अभवत् ॥

अस्य मिन्द्राभिषेकं निगमयति— "स एतेन महाभिषेकेणाभिषिक्त इन्द्रः सर्वा जितीरजयत् सर्वांल्लोकानविन्दत् सर्वेषां देवानां श्रैष्ठ्यमतिष्ठां परमतां मगच्छत्साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यं माधिपत्यं जित्वास्मिँल्लोके स्वयम्भूः स्वराळमृतो ऽमुष्मिन्त्स्वर्गे लोके सर्वान् कामानाप्त्वा ऽमृतः समभवत्-समभवत्"-इति । पूर्वोक्ताभिषेकेण अभिषिक्तः

---

* 'अत्रो सह शरीरेण प्राप्तोऽसि परमां गतिम् । उत्तरान् वा कुरून् पुण्यानथ वाप्यमरावतीम्"-इति महा० भा० १२ प० २८४१ । 'नैवेशिकं सर्वगुणोपपन्नं ददाति वै यस्तु नरो द्विजाय । स्वाध्यायचारित्रगुणान्विताय तस्यापि लोकाः 'कुरूत्तरेषु'—इति च तत्रैव २९५८ ।

† वश इत्यस्यैवाचरविपर्ययवकारदशयोगेन च महाभारतादौ प्रसिद्धः, किं शिबिरिति ? । तथा द्यादिपर्वणि 'शिबिरौशीनरः'-इति २९९९ ।

इन्द्रः 'जितीः' जेतव्याः सर्वा युद्धभूमीः अजयत् । तेन जयेन सर्वान् लोकान् 'अविन्दत्' अलभत ; देवानां मध्ये 'श्रैष्ठ्यम्' अतिशयेन प्रशस्तत्वम् , 'अतिष्ठां' सर्वानतिक्रम्यावस्थानं 'परमतां' उत्कृष्टत्वं अगच्छत् । जातितः उत्तमत्वं श्रैष्ठ्यम् , गुणैरुत्तमत्वं परमत्वम् । साम्राज्यादीनि पदानि अस्मिँल्लोके 'जित्वा' प्राप्य 'स्वयम्भूः' प्रजापतिरूपः , 'स्वराट्' स्वतन्त्रराजः , 'अमृतः' इतरमनुष्यवदल्पकाले मरणरहितः सन् 'अमुष्मिन्' परोक्षे स्वर्गे लोके सर्वान् 'कामान्' भोगान् प्राप्य 'अमृतः' मरणरहितो मुक्तः समभवत् ॥ अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ३ ( १४ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां तृतीयाध्याये ( षट्त्रिंशाध्याये ) तृतीयः खण्डः ॥ ३ ( १४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'-नामभाष्ये ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायाः तृतीयोऽध्यायः ॥

---

## ॥ अथ चतुर्थाध्यायः ॥

( वच )

### ॥ अथ प्रथमः खण्डः ॥

॥ ॐ ॥ स य इच्छेदेवंवित्क्षत्रिय मयं सर्वा जितीर्जयेतायं सर्वांल्लोकान् * विन्देतायं सर्वेषां राज्ञां श्रैष्ठ्य मतिष्ठां परमतां गच्छेत साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्य माधिपत्य मयं समन्तपर्यायी स्यात्सार्वभौमः सार्वायुष † आन्तादा परार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराळिति त मेतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वा ‡ ऽभिषिञ्चेद् याञ्च रात्रीं मजायेथां याञ्च प्रेतासि तदुभय मन्तरेणेष्टापूर्त्तं ते लोकं सुकृत मायुः प्रजां वृञ्जीयं यदि मे द्रुह्येरिति स य इच्छेदेवंवित्क्षत्रियो ऽहं सर्वा जितीर्जयेय महं सर्वांल्लोकान् विन्देय महं सर्वेषां राज्ञां श्रैष्ठ्य मतिष्ठां परमतां गच्छेयं साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्य माधिपत्य महं

---

* "सर्वान् लोकान्" क, 'सर्वांलोकान्' ग, "सर्वांल्लोकान्" ङ ।

† "सर्वायुष" क, ख ।

‡ "शापयित्वा" ङ ।

समन्तपर्यायी स्यां सार्वभौमः सार्वायुष' आन्तादा परार्धात्' पृथिव्यै समुद्रपर्यन्ताया एकराळिति' स न विचिकित्सेत्स ब्रूयात्सह श्रद्धया यां च रात्रीमजायेऽहं 'यां च प्रेतास्मि तदुभयमन्तरेणेष्टापूर्त्तं मे लोकं सुकृत मायुः प्रजां वृञ्जीथा यदि ते द्रुह्येय मिति ॥ १ ( १५ ) ॥

॥ श्रीगणेशाय नमः ॥

पुरुषार्थाभिषेकार्थं माहावैन्द्राभिषेचनम् ।
उक्त मत पुमर्थोऽय मभिषेक उदीर्यते ॥ १ ॥

त मभिषेकं विधत्ते— "स य इच्छेदेवंवित् क्षत्रिय मयं सर्वा जितीर्जयेताय' सर्वांल्लोकान् विन्देतायं सर्वेषां राज्ञां श्रैष्ठ्य मतिष्ठां परमता गच्छेत साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्य माहाराज्य माधिपत्य मयं समन्तपर्यायी स्यात् सार्वभौमः सार्वायुष आन्तादा परार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराळिति त मेतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वा ऽभिषिञ्चेद्"— इति । 'एवंवित्' इन्द्रसम्बन्धिमहाभिषेकविद् 'यः' आचार्यः क्षत्रियं प्रति सर्वजयादिफल मिच्छेत्, 'सः' आचार्यः क्षत्रिय मेतं 'शापयित्वा' शपथं कारयित्वा, 'एतेन' पूर्वोक्तेन इन्द्रसम्बन्धिना महाभिषेकविधानेन 'तं' क्षत्रिय मभिषिञ्चेत् । कीदृशी फलेच्छा ? इति, साभिधीयते—'अयं' क्षत्रियो जेतव्याः सर्वा युद्धभूमीर्जयेत्; तथा 'सर्वान् लोकान्' देशविशेषान् लभेत; 'सर्वेषां' राज्ञां मध्ये श्रैष्ठ्याद्याधिपत्यान्तगुणयुक्तो भवेत्; 'समन्तपर्यायी' देशतः कालतः सर्वव्यापी स्यात्; 'आ अन्तात्' समुद्र-

तीरपर्य्यन्तं सार्वभौमत्वं देशव्याप्तिः, 'आ परार्द्धात्' परार्द्धशब्दाभिधेयकालसङ्ख्यापर्य्यन्तं सर्वायुष्ट्वं कालव्याप्तिः; एवंविधो भूत्वा समुद्रपर्य्यन्तायाः पृथिव्याः एक एव राजा असत्; 'इति' अनयेच्छया आचार्य्यो महाभिषेकेण तमभिषिञ्चेत् ॥

ः शापयित्वेति यदुक्तं, तमेव शपथप्रकारं दर्शयति— "याञ्च रात्रीमजायेथा, यां च प्रेतासि, तदुभयमन्तरेणेष्टापूर्त्तं ते लोकं सुकृतमायुः प्रजां वृञ्जीय यदि मे द्रुह्येरिति"–इति । अभिषिच्यमान ! हे क्षत्रिय ! यद्याचार्याय मे 'द्रुह्येः' द्रोहं कुर्याः, तदानीं त्वं 'यां रात्रिमजायेथाः' यस्यां रात्रावुत्पन्नोऽसि, 'याञ्च रात्रिं प्रेतासि' यस्यां रात्रौ मरिष्यसि, 'तदुभयमन्तरेण' उत्पत्तिमरणदिनयोर्द्वयोर्मध्ये 'ते' तव 'इष्टापूर्त्तं' श्रौतस्मार्त्तकर्मद्वयं, तथा पुण्यलोकं, तद्धेतुभूतमन्यदपि सुकृतं, दीर्घमायुः, 'प्रजां' पुत्रादिकां 'वृञ्जीय' त्वत्तो वर्जयेयम्; 'इति' एतद् आचार्य्यस्य वाक्यम् । तदेतदङ्गीकारयित्वा पश्चादभिषिञ्चेत् आचार्यः ॥

क्षत्रियार्थी यादृशीं फलपरम्परां कामयित्वा शपथं कारयति, क्षत्रियोऽपि तादृशीं फलपरम्परां कामयमानः शपथं कुर्यात् । तदेतत् क्षत्रियवाक्यं दर्शयति— "स य इच्छेदेवंवित् क्षत्रियो ऽहं सर्वा जितीर्जयेय महं सर्वांल्लोकान् विन्देय मह सर्वेषां राज्ञां श्रैष्ठ्य मतिष्ठां परमतां गच्छेयं साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्य माधिपत्य महं समन्तपर्यायी स्यां सार्वभौमः सार्वायुष आन्तादा परार्द्धात् पृथिव्यै समुद्रपर्य्यन्ताया एकराळिति, स न विचिकित्सेत्, स ब्रूयात् सह श्रद्धया, यां च रात्री मजाये ऽहं याञ्च प्रेतास्मि, तदुभय मन्तरेणेष्टापूर्त्तं मे लोकं सुकृत मायुः प्रजां वृञ्जीथा यदि ते द्रुह्येय मिति"–इति । 'यः' क्षत्रियः

'एवंवित्' महाभिषेकमाहात्म्याभिज्ञः, सर्वंजयादिकं समुद्रपर्यन्तं, पृथिव्या एकराजत्वपर्यन्तं फलजात मिच्छेत् ( पूर्वत्राचार्यवाक्यत्वात् जयेत विन्देतेत्यादिः प्रथमपुरुषप्रयोगः, अत्र तु क्षत्रियवाक्यत्वात् जयेय मित्यादिः उत्तमपुरुषप्रयोगः ), 'सः' क्षत्रियः फलकामी 'न विचिकित्सेत्' आचार्योक्तेऽर्थे संशयं न कुर्यात् । 'सः' क्षत्रिय आचार्यस्याभीष्ट शपथ मेवं कुर्यात्,— हे आचार्य! अहं यदि ते द्रुह्येयम्, तदानीं त्वं मम जन्ममरणमध्यवर्तीष्टापूर्तादिकं सर्वं 'वृञ्जीथाः' नाशयेः, इति श्रद्धया सहितं शपथं ब्रूयात् ॥ १ ( १५ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां चतुर्थाध्याये ( एकोनचत्वारिंशाध्याये ) प्रथमः खण्डः ॥ १ ( १५ ) ॥

---

॥ अथ द्वितीयः खण्डः ॥

अथ ततो ब्रूयाच्चतुष्टयानि वानस्पत्यानि सम्भरत नैय्यग्रोधान्यौदुम्बराण्याश्वत्थानि प्लाक्षाणीति क्षत्रं वा एतद् वनस्पतीनां यन्न्यग्रोधो यन्नैय्यग्रोधानि सम्भरन्ति क्षत्र मेवास्मिंस्तद्दधाति भौज्यं वा एतद् वनस्पतीनां यदुदुम्बरो यदौदुम्बराणि सम्भरन्ति भौज्य मेवास्मिंस्तद्दधाति साम्राज्यं वा एतद्

बनस्पतीनां यदश्वत्थो यदाश्वत्थानि सम्भरन्ति साम्राज्य मेवास्मिंस्तद्दधाति स्वाराज्यञ्च ह वा एतद् वैराज्यञ्च वनस्पतीनां यत् प्लक्षो यत्प्लाक्षाणि सम्भरन्ति स्वाराज्यवैराज्ये एवास्मिंस्तद्दधात्यथ ततो ब्रूयाच्चतुष्टयान्यौषधानि सम्भरत तोक्मकृतानि व्रीहीणां महाव्रीहीणां प्रियङ्गूनां यवाना मिति क्षत्रं वा एतदोषधीनां यद् व्रीहयो यद् व्रीहीणां तोक्म सम्भरन्ति क्षत्र मेवास्मिंस्तद्दधाति साम्राज्यं वा एतदोषधीनां यन् महाव्रीहयो यन्महाव्रीहीणां तोक्म सम्भरन्ति साम्राज्य मेवास्मिंस्तद्दधाति भौज्यं वा एतदोषधीनां यत् प्रियङ्गवो यत् प्रियङ्गूनां तोक्म सम्भरन्ति भौज्य मेवास्मिंस्तद्दधाति सैनान्यं वा एतदोषधीनां यद्यवा यद्यवानां तोक्म सम्भरन्ति सैनान्य मेवास्मिंस्तद्दधाति ॥ २ ( १६ ) ॥

सम्भारान् विधत्ते— "अथ ततो ब्रूयाच्चतुष्टयानि वानस्पत्यानि सम्भरत,— नैयग्रोधान्यौदुम्बराण्याश्वत्थानि प्लाक्षाणीति" –इति । 'अथ' क्षत्रियप्रपदनानन्तरम्, यत आचार्येणाभिषेकः कर्त्तव्यः, 'ततः' कारणादाचार्यः परिचारकान् ब्रूयात्,— वनस्पतिसम्बन्धीनि न्यग्रोधादीनि ( फलानि चतुर्विधानि * ) हे परिचारकाः ! सम्पादयतेति ॥

* बन्धनीचिह्नान्तर्गतपदद्वयं घ च पुस्तकयोर्नास्ति ।

तत्र वृक्षचतुष्टयं क्रमेण प्रशंसति— "क्षत्रं वा एतद् वनस्पतीनां यन्न्यग्रोधो ; यन्नैयग्रोधानि सम्भरन्ति, क्षत्र मेवास्मिंस्तद्धाति ; भौज्यं वा एतद् वनस्पतीनां यदुदुम्बरो ; यदौदुम्बराणि सम्भरन्ति, भौज्य मेवास्मिंस्तद्धाति ; साम्राज्यं वा एतद् वनस्पतीनां यदश्वत्थो ; यदाश्वत्थानि सम्भरन्ति, साम्राज्य मेवास्मिंस्तद्धाति ; स्वाराज्यञ्च ह वा एतद् वैराज्यञ्च वनस्पतीनां यत् प्लक्षो ; यत् प्लाक्षाणि सम्भरन्ति, स्वाराज्यवैराज्ये एवास्मिंस्तद्धाति"—इति । न्यग्रोधस्य वनस्पतीनां मध्ये राजवद् व्याप्त्याधिक्यात् क्षत्रत्वम् ; उदुम्बरादीनां भौज्यादिसाधनत्वात् तद्रूपत्वम् । अतश्चतुर्विधफलसम्पादनेन यजमाने क्षत्रभौज्यादीनि फलानि सम्पादयति ॥

सम्भारान्तराणि विधत्ते— "अथ ततो ब्रूयाच्चतुष्टयान्यौषधानि सम्भरत तोक्मकृतानि,— व्रीहीणां, महाव्रीहीणां, प्रियङ्गूनां, यवाना मिति"—इति । 'अथ' नैयग्रोधादिफलसम्पादनानन्तरम्, यतो व्रीह्याद्यङ्कुरसम्पादन मपेक्षितम्, 'ततः' आचार्य एवं ब्रूयात्,— हे परिचारकाः ! 'तोक्मकृतानि' अङ्कुरनिमित्तान्यौषधिद्रव्याणि चतुर्विधानि सम्पादयत । सूक्ष्मबीजरूपा व्रीहयः, प्रौढबीजरूपा महाव्रीहयः, प्रियङ्गवो यवाश्च प्रसिद्धाः ॥

चतुर्विधं औषधिद्रव्यं प्रशंसति— "क्षत्रं वा एतदोषधीनां यद् व्रीहयो ; यद् व्रीहीणां तोक्म सम्भरन्ति, क्षत्र मेवास्मिंस्तद्धाति ; साम्राज्यं वा एतदोषधीनां यन्महाव्रीहयो ; यन्महाव्रीहीणां तोक्म सम्भरन्ति, साम्राज्य मेवास्मिंस्तद्धाति ; भौज्यं वा एतदोषधीनां यत् प्रियङ्गवो ; यत् प्रियङ्गूनां तोक्म सम्भरन्ति ; भौज्य मेवास्मिंस्तद्धाति ; सैनान्यं वा एतदोषधीनां यद्यवा ;

यद्यवानां तोक्म सम्भरन्ति, सैनान्न मेवास्मिंस्तद्दधाति"—इति। ओषधीनां मध्ये व्रीहीणां बलहेतुत्वात् बलत्वम्, महाव्रीह्यादीना मपि अनुष्ठानद्वारा साम्राज्यहेतुत्वात् तद्रूपत्वम्; अतो व्रीह्यादितोक्मानां मङ्कुराणां सम्पादनेन यजमाने बलसाम्राज्यादिकं सर्वं सम्पादयति ॥ २ ( १६ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां चतुर्थाध्याये
( एकोनत्रिंशाध्याये ) द्वितीयः खण्डः ॥ २ ( १६ ) ॥

---

॥ अथ तृतीयः खण्डः ॥

अथास्या औदुम्बरी मासन्दीं सम्भरन्ति तस्या उक्तं ब्राह्मणं मौदुम्बरश्चमसो वा पात्री वौदुम्बरशाखा तानेतान्सम्भारान्त्सम्भृत्यौदुम्बर्यां पात्र्यां वा चमसे वा समावपेयुस्तेषु समोप्तेषु दधि मधु सर्पिरातपवर्ष्या आपो ऽभ्यानीय प्रतिष्ठाप्यैता मासन्दी मभिमन्त्रयेत बृहच्च ते रथन्तरञ्च पूर्वौ पादौ भवतां वैरूपञ्च वैराजं चापरौ शाक्वररैवते शीर्षण्ये नौधसञ्च कालेयं चानूच्ये ऋचः प्राचीनातानाः सामानि तिरश्चीनवाया यजूंष्यतीकाशा यश आस्तरणं श्रीरुप-

वर्द्दयां सविता च ते बृहस्पतिश्च पूर्वौ पादौ धारयतां वायुश्च पूषा चापरौ मित्रावरुणौ शीर्षण्ये अश्विनावनूच्ये इत्यथैनं मेता मासन्दी मारोहयेद्द्वसवस्त्वा गायत्रेण छन्दसा * त्रिवृता स्तोमेन रथन्तरेण साम्ना ऽऽरोहन्तु तानन्वारोह साम्राज्याय रुद्रास्त्वा त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना ऽऽरोहन्तु तानन्वारोह भौज्यायादित्यास्त्वा जागतेन छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्ना ऽऽरोहन्तु तानन्वारोह स्वाराज्याय विश्वे त्वा देवा आनुष्टुभेन छन्दसैकविंशेन स्तोमेन वैराजेन साम्ना ऽऽरोहन्तु तानन्वारोह वैराज्याय मरुतश्च त्वाङ्गिरसश्च देवा अतिच्छन्दसा छन्दसा त्रयस्त्रिंशेन स्तोमेन रैवतेन साम्ना ऽऽरोहन्तु तानन्वारोह पारमेष्ठ्याय साध्याश्च त्वाप्त्याश्च देवाः पाङ्क्तेन छन्दसा त्रिणवेन स्तोमेन शाक्वरेण साम्ना ऽऽरोहन्तु तानन्वारोह राज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठायारोहेत्येता मासन्दी मारोहयेत् त मेतस्या मासन्द्या मासीनं राजकर्त्तारो ब्रूयुर्न वा अनभ्युत्क्रुष्टः क्षत्रियो वीर्यं कर्त्तु मर्हत्यभ्येन मुत्क्रोशामेति तथेति तं राजकर्त्तारो ऽभ्युत्क्रोशन्तीमं जना अभ्युत्क्रोशत सम्राजं

* "छन्दसा"-इति ङ। एवमितोऽपरत्रापि।

साम्राज्यं भोजं भोजपितरं स्वराजं स्वाराज्यं विराजं वैराज्यं परमेष्ठिनं पारमेष्ठ्यं राजानं राजपितरं क्षत्रमजनि क्षत्रियो ऽजनि विश्वस्य भूतस्याधिपतिरजनि विशामत्ता ऽजन्यमित्राणां हन्ता ऽजनि ब्राह्मणानां गोप्ता ऽजनि धर्मस्य गोप्ता ऽजनीति त मभ्युत्क्रुष्ट मेवंविदभिषेक्ष्यन्नेतयर्चाभिमन्त्रयेत ॥ ३ ॥ (१७) ॥

आसन्द्यादिसम्भारान् विधत्ते— "अथास्या औदुम्बरी मासन्दीं सम्भरन्ति ; तस्या उक्तं ब्राह्मण मौदुम्बरश्चमसो वा पात्री वौदुम्बरशाखा ; तानेतान्सम्भारान्सम्भृत्यौदुम्बर्यां पात्र्यां वा चमसे वा समावपेयुस्तेषु समोप्तेषु दधि मधु सर्पिरातपवर्ष्या आपो ऽभ्यानीय प्रतिष्ठाप्यैता मासन्दी मभिमन्त्रयेत"—इति । 'अथ' वानस्पत्यौषधिसम्भारानन्तरम्, 'अस्मै' क्षत्रियायौदुम्बरी मासन्दीं सम्पादयेयुः । 'तस्याः' चासन्द्या विधायकं 'ब्राह्मणं' "प्रादेशमात्राः पादाः"—इत्यादिना पूर्वं मेवोक्तम् † । चतुष्कोणो दण्डयुक्तः पात्रविशेषश्चमसः ‡ । आकारनियमरहिता

* प्राय एव एव ग्रन्थ किञ्चित्पाठव्यत्ययेन पूर्वं मपि श्रुत (२२११०)।

† १८.५० ९८०, १८४१० १०५०।

‡ 'चमसो देवपान'—इति ऋ० सं० १० १६ ८। 'औदुम्बरेण चमसेन चतु०- स्रक्तिना'—इति शत० ब्रा० ७.५.११ २। यद्यपि दीर्घिकापद्माश्रयमकाष्ठनिर्मितश्च भवति । 'इम चमसाच्छादयामास'—इति का० श्रौ० ९.२ २२ । 'चमस'— इति च मानवसूत्रम् । तदास्ते सृष्टिपुत्रा, विश्व देवा, प्राच, पदाति, सुम्न, प्रमाणु, ब्राह्मणाध्वरिन, पौत्र, नेष्टृ, आग्नीध्र, अच्छावाकस्येति दश । आश्व० श्रौ० (९ ९ ११, १२ ३.) अत्र द्रष्टव्य ।

'पात्री' * । तयोः पात्रीचमसयोरन्यतर मौदुम्बरं सम्पादयेत् । यद्वा, पात्री मृन्मयी , शाखा चौदुम्बरी सम्पादनीया । ततः पात्रीचमसयोरन्यतरस्मिन् वानस्पत्यौषधिसम्भारान् समावपेयुः । समोप्तेषु तेषु सम्भारेषु दध्यादीनां सेचनं कृत्वा चमसं भूमौ प्रतिष्ठाप्य एतां मासन्दीं वक्ष्यमाणमन्त्रेणाभिमन्त्रयेत् ॥

तं मन्त्रं दर्शयति— "बृहच्च ते रथन्तरञ्च पूर्वौ पादौ भवतां, वैरूपञ्च वैराजं चापरौ, शाक्वररैवते शीर्षण्ये, नौधसञ्च कालेयं चानूच्ये, ऋचः प्राचीनातानाः , सामानि तिरश्चीनवायाः, यजूंष्य-तीकाशाः, यश आस्तरणं, श्रीरुपबर्हणं, सविता च ते बृहस्पतिश्च पूर्वौ पादौ धारयतां, वायुश्च पूषा चापरौ, मित्रावरुणौ शीर्षण्ये, अश्विनावनूच्ये इति"–इति । इन्द्रासन्दीप्रतिपादकवाक्यवदयं मन्त्रो व्याख्येयः † ॥

अभिमन्त्रणादूर्ध्वं साचार्यकर्त्तव्यं दर्शयति— "अथैनं मेतां मासन्दीं मारोहयेद्"–इति । 'अथ' अभिषिक्तम् 'एनं' क्षत्रियं एतस्यां मासन्द्यारूढं कुर्यात् ॥

तत्र मन्त्रं दर्शयति— "वसवस्त्वा गायत्रेण छन्दसा , त्रिवृता स्तोमेन, रथन्तरेण साम्ना ऽऽरोहन्तु , तानन्वारोह साम्राज्याय ; रुद्रास्त्वा त्रैष्टुभेन छन्दसा , पञ्चदशेन स्तोमेन , बृहता साम्ना ऽऽरोहन्तु, तानन्वारोह भौज्याय ; आदित्यास्त्वा जागतेन छन्दसा,

---

* पात्री त्रिविधा भवति । तत्र 'इडापात्री' अरत्निमात्री मध्यसङ्गृहीता ; 'पुरो-डाशपात्री' प्रादेशमात्री समचतुरस्रा अर्थात् षडङ्गुलपरिमितपरिमण्डलखातवती ; 'पिष्टपात्री' हविर्धारणी अतिविपुला ; ऐवाकारनियमरहिता इति विवेकः । कात्या० श्रौ० १ १. ३६ सू० या० उ० द० ।

† १२२पृ० ३१पं० भाष्यं द्रष्टव्यम्।

सप्तदशेन स्तोमेन, वैरूपेण साम्ना ऽऽरोहन्तु ; तानन्वारोह स्वाराज्याय ; विश्वे त्वा देवा आनुष्टुभेन छन्दसैकविंशेन स्तोमेन, वैराजेन साम्ना ऽऽरोहन्तु ; तानन्वारोह वैराज्याय ; मरुतश्च त्वाङ्गिरसश्च देवा अतिच्छन्दसा छन्दसा , त्रयस्त्रिंशेन स्तोमेन , रैवतेन साम्ना ऽऽरोहन्तु ; तानन्वारोह पारमेष्ठ्याय ; साध्याश्च त्वाप्त्याश्च देवाः पाङ्क्तेन छन्दसा , त्रिणवेन स्तोमेन , शाक्वरेण साम्ना ऽऽरोहन्तु ; तानन्वारोह राज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठायारोहेत्येता मासन्दी मारोहयेत्"—इति । इन्द्रारोहणमन्त्रवत् व्याख्येयम् * । तत्र मारोहयकर्त्तुः प्रयोज्यत्वात् 'मारोहामि'—इत्युत्तमपुरुषः, अत्र त्वाचार्यप्रयोज्यत्वात् 'मारोह' —इति मध्यमपुरुषः । तत्रत्ययोः पञ्चमषष्ठमन्त्रयोः अत्र क्रमविपर्यासो ऽध्ययनसम्प्रदायप्राप्तः ( २२४पृ० ) । अनेन मन्त्रेण आचार्यः आसन्द्यां क्षत्रिय मारोहयेत् ॥

आरोहणादूर्द्ध्वं मभ्युत्क्रोशनं विधत्ते— "तमेतस्या मासन्या मासीनं राजकर्त्तारो ब्रूयुर्न वा अनभ्युत्कुष्टः क्षत्रियो वीर्यं कर्त्तुं मर्हत्यभ्येन मुत्क्रोशामेति ; तथेति ; तं राजकर्त्तारो ऽभ्युत्क्रोशन्तीमं जना अभ्युत्क्रोशत सम्राजं साम्राज्यं भोजं भोजपितरं स्वराजं स्वाराज्यं विराजं वैराज्यं परमेष्ठिनं पारमेष्ठ्यं राजानं राजपितरं ; क्षत्रमजनि, क्षत्रियो ऽजनि, विश्वस्य भूतस्याधिपतिरजनि, विशा मत्ता ऽजन्यमित्राणां हन्ता ऽजनि, ब्राह्मणानां गोप्ता ऽजनि, धर्मस्य गोप्ता ऽजनीति"—इति । राज्ञः कर्त्तारो 'राजकर्त्तारः' पित्रभ्रात्रादयः । इन्द्रविषयाभ्युत्क्रोशनवाक्यवदिदं वाक्यं व्याख्येयम् † ॥

---

* २२६पृ० १०पं० प्रारभ्य द्रष्टव्यम् । † २२७पृ० ११पं० प्रारभ्य द्रष्टव्यम् ।

आचार्यस्य च त्रियाभिमन्त्रणं विधत्ते— "त मभ्युत्क्रुष्ट मेवंविदभिषेक्ष्यदेतयर्चाभिमन्त्रयेत"–इति । पूर्ववद् ( २२८ पृ० ) व्याख्येयम् ॥ ३ ( १७ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां चतुर्थाध्याये
( एकोनत्रिंशाध्याये ) तृतीयः खण्डः ॥ ३ ( १७ ) ॥

---

॥ अथ चतुर्थः खण्डः ॥

निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठाय सुक्रतुरिति त मेतस्या मासन्द्या मासीन मेवंवित् पुरस्तात् तिष्ठन् प्रत्यङ्मुख औदुम्बर्याद्रया शाखया सपलाशया जातरूपमयेन च पवित्रेणान्तर्धायाभिषिञ्चतीमा आपः शिवतमा इत्येतेन तृचेन देवस्य त्वेति च यजुषा भूर्भुवःस्वरित्येताभिश्च व्याहृतिभिः * ॥ ४ ( १८ ) ॥

* पुरस्तादध्यायात एष खण्ड । अपि च तत्र इयो, पाठभेद ( २२९पृ० ) ।

एतयर्चेत्युक्तं ( २४५पृ० ६पं० ) मन्त्रं दर्शयति— "निषसाद धृतव्रतो वरुणः पस्त्यास्वा, साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठाय सुक्रतुरिति"–इति । पूर्ववद् ( २२८पृ० ) व्याख्येयम् ॥

अभिमन्त्रणादूर्ध्वं अभिषेकप्रकारं दर्शयति— "त मेतस्या मासन्द्या मासीन मेवंवित् पुरस्तात् तिष्ठन् प्रत्यङ्मुख औदुम्बर्याऽऽर्द्रया शाखया सपलाशया जातरूपमयेन च पवित्रेणान्तर्धायाभिषिञ्चतीमा आपः शिवतमा इत्येतेन तृचेन, देवस्य त्वेति च यजुषा, भूर्भुवस्स्वरित्येताभिश्च व्याहृतिभिः"–इति । इन्द्राभिषेकवाक्यवद् ( २३०पृ० ) व्याख्येयम् ॥ ४ ( १८ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां चतुर्थाध्याये ( एकोनचत्वारिंशाध्याये ) चतुर्थः खण्डः ॥ ४ ( १८ ) ॥

---

॥ अथ पञ्चमः खण्डः ॥

प्राच्यां त्वा दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः साम्राज्याय दक्षिणस्यां त्वा दिशि रुद्रा देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृ-

तिभिर्भौज्याय प्रतीच्यां त्वा दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्यायोदीच्यां त्वा दिशि विश्वे देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्वैराज्यायोर्ध्वायां त्वा दिशि मरुतश्चाङ्गिरसश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः पारमेष्ठ्यायास्यां त्वा ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाप्त्याश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभी राज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठायेति स परमेष्ठी प्राजापत्यो भवति स एतेनैन्द्रेण महाभिषेकेणाभिषिक्तः क्षत्रियः सर्वा जितीर्जयति सर्वांल्लोकान् * विन्दति सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां परमतां गच्छति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यं जित्वाऽस्मिँल्लोके † स्वयम्भूः स्वराळमृतोऽमुष्मिन्स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः सम-

* "सर्वांल्लोकान्" ग, "सर्वान् लोकान्" ख, ङ। "सर्वांल्लाकान्" घ।

† "ऽस्मिंल्लोके" ग, "ऽस्मिन्लोके" ख, ङ।

## वर्ति य मेतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वाऽभिषिञ्चति ॥ ५ ( १८ ) ॥

अभिषेकादूर्ध्व मभिमन्त्रण माह—"प्राच्यां त्वा दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च त्र्चेनैतेन च यजुषैताभिश्च व्याहृतिभिः साम्राज्याय ; दक्षिणस्यां त्वा दिशि रुद्रा देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च त्र्चेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भौज्याय ; प्रतीच्यां त्वा दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च त्र्चेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्याय ; उदीच्यां त्वा दिशि विश्वे देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च त्र्चेनैतेन च यजुषैताभिश्च व्याहृतिभिर्वैराज्याय ; ऊर्ध्वायां त्वा दिशि मरुतश्चाङ्गिरसश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च त्र्चेनैतेन च यजुषैताभिश्च व्याहृतिभिः पारमेष्ठ्याय ; अस्यां त्वा ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाप्त्याश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च त्र्चेनैतेन च यजुषैताभिश्च व्याहृतिभी राज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठायेति ; स परमेष्ठी प्राजापत्यो भवति"— इति । उक्तेन मन्त्रेणाभिमन्त्रितः क्षत्रियः परमेष्ठिपदस्य योग्यो भूत्वा प्रजापतेः सम्बन्धीति ॥

महाभिषेक मुपसंहरति— "स एतेनैन्द्रेण महाभिषेकेणाभिषिक्तः क्षत्रियः सर्वा जितीर्जयति , सर्वांल्लोकान् विन्दति , सर्वेषां राज्ञां श्रैष्ठ्य मतिष्ठां परमतां गच्छति ; साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्य माधिपत्यं जित्वाऽस्मिंल्लोके

स्वयम्भूः स्वराळमृतो ऽमुष्मिन्स्वर्गे लोके सर्वान् कामानाप्त्वा ऽमृतः सम्भवति, य मेतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वा ऽभिषिञ्चति"–इति । 'यं' क्षत्रियं आचार्यः स्वद्रोहराहित्याय शपथं कारयित्वा इन्द्रसम्बन्धिना महाभिषेकेण अभिषिञ्चति, सोऽभिषिक्तः क्षत्रियः इन्द्रवत् सर्वं जयादि फलं प्राप्नोति ॥ ५ (१८) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां चतुर्थाध्याये
( एकोनचत्वारिंशाध्याये ) पञ्चमः खण्डः ॥ ५ (१८) ॥

---

॥ अथ षष्ठः खण्डः ॥

इन्द्रियं वा एतदस्मिँल्लोके * यद्दधि यद्दध्ना ऽभिषिञ्चतीन्द्रिय मेवास्मिंस्तद्दधाति रसो वा एष ओषधिवनस्पतिषु यन् मधु यन् मध्वाभिषिञ्चति रस मेवास्मिंस्तद्दधाति तेजो वा एतत्पशूनां यद् घृतं यद् घृतेनाभिषिञ्चति तेज एवास्मिंस्तद्दधात्यमृतं वा एतदस्मिँल्लोके † यदापो यदद्भिरभिषिञ्चत्यमृतत्व मेवास्मिंस्तद्दधाति सो ऽभिषिक्तो ऽभिषेक्त्रे ब्राह्मणाय हिरण्यं दद्यात् सहस्रं दद्यात् क्षेत्रं चतुष्पाद्

*, † "०ल्लिन् लोके" क, "०ल्लोके" ख, ग, "०स्मिंल्लोके" ङ ।

दद्यादथाप्याहुरसङ्ख्यात मेवापरिमितं दद्यादपरिमितो वै क्षत्रियोऽपरिमितस्यावरुद्ध्या इत्यथास्मै सुराकंसं हस्त आदधाति स्वादिष्ठया मदिष्ठया पवस्व सोम धारया इन्द्राय पातवे सुत इति तां पिबेद् यदत्र शिष्टं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः इदं तदस्य मनसा शिवेन सोमं राजान मिह भक्षयामि अभि त्वा वृषभा सुते सुतं सृजामि पीतये तृम्पा व्यश्नुही मद मिति यो ह वाव सोमपीथः सुरायां प्रविष्टः स हैवैतेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य भक्षितो भवति न सुरा तां पीत्वाऽभिमन्त्रयेतापाम सोमं शन्नो भवेति तद्यथैवादः प्रियः पुत्रः पितरं प्रिया वा जाया पतिं सुखं शिव मुपस्पृशत्याविस्रसं एवं हैवैतेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य सुरा वा सोमो वान्यद्वान्नाद्यं सुखं शिव मुपस्पृशत्याविस्रसः ॥ ६ (२०) ॥

अभिषेकसाधनानि दध्यादिद्रव्याणि प्रशंसति— "इन्द्रियं वा एतदस्मिँल्लोके यद्दधि, यद्दध्ना ऽभिषिञ्चतीन्द्रिय मेवास्मिंस्तद्दधाति ; रसो वा एष ओषधिवनस्पतिषु यन् मधु, यन् मध्वाभिषिञ्चति रस मेवास्मिंस्तद्दधाति ; तेजो वा एतत् पशूनां यद्घृतं , यद्घृतेनाभिषिञ्चति तेज एवास्मिंस्तद्दधाति ; अमृतं वा एतदस्मिन् लोके यदापो , यदद्भिरभिषिञ्चत्यमृतत्व मेवास्मिंस्तद्-

धाति"–इति। दध्न इन्द्रियपाटवहेतुत्वाद् इन्द्रियत्वम्। मधुनः पुष्पजन्यत्वेन ओषधिवनस्पतिरसत्वम्। घृतस्य स्निग्धभास्वरत्वेन पशुतेजस्त्वम्। अपां चाप्यायनहेतुत्वादमृतत्वम्। एतैर्द्रव्यै-रभिषिक्ते सति यजमान इन्द्रियादिकं सम्पादयति॥

आचार्याय दक्षिणादानं विधत्ते— "सो ऽभिषिक्तो ऽभिषेक्त्रे ब्राह्मणाय हिरण्यं दद्यात्, सहस्रं दद्यात्, क्षेत्रं चतुष्पाद्दद्याद्; अथाप्याहुरसङ्ख्यात मेवापरिमितं दद्यादपरिमितो वै क्षत्रियो ऽपरिमितस्यावरुद्ध्या इति"–इति। हिरण्यस्यैव सङ्ख्या सहस्र मिति, सहस्रनिष्कपरिमित मित्यर्थः*। चतुष्पाच्छब्देन गवादिक मभिधीयते। पूर्वोक्तसहस्रपक्ष मपेक्ष्याधिकाभिप्रायेण असङ्ख्यात मिति पक्षान्तर मुक्तम्; तस्यैव व्याख्यान मपरिमित मिति। इयदेवेति सङ्ख्यानियमो नास्ति किन्तु स्वशक्त्यनुसारेण प्रभूत मेव दद्यात्। क्षत्रियो हि देशाधिपतित्वेन 'अपरिमितः' बहुधनयुक्तः, अतः 'अपरिमितस्य' प्रभूतस्य फलस्य सिद्ध्यर्थं मित्यभिप्रायेण पक्षान्तरम्॥

दक्षिणायां दत्तायां आचार्यकर्तव्यं दर्शयति— "अथास्मै सुराकंसं हस्त आदधाति, स्वादिष्ठया मदिष्ठया पवस्व सोमधारया इन्द्राय पातवे सुत इति"–इति। 'अथ' दक्षिणास्वीकारादनन्तरम्, 'अस्मै' अस्य क्षत्रियस्य हस्ते सुरया पूर्णं कांस्यपात्रं

---

* "सर्षपाः षड् यवो मध्यस्, त्रियवं त्वेककृष्णलम्।
पञ्चकृष्णलको माषस्, ते सुवर्णस्तु षोडश।

* * * * । चतुःसौवर्णिको निष्कः"–इत्यादि म० स्मृ० ८. १३३-१३८। "अभिषेच-नीये तु दर्शपूर्ण-मासिकानि सहस्राणि दद्यात् सुवर्णस्य, षोडश षोडश हिरण्यानि, चत्वारो बलीवर्दाः, चतुरो–अश्वान् पादिकः."–इति कात्या० श्रौ० ९, १, १-५।

स्वादिष्ठयेति मन्त्रेण स्थापयेत् । स च मन्त्र. कलशाभिषेके व्याख्यातः ( २०२५० पृ॰ ) ॥

क्षत्रियकर्त्तव्यं दर्शयति— "तां पिबेद् , यदत्र शिष्टं रसिनः सुतस्य , यदिन्द्रो अपिबच्छचीभिः , इदं तदस्य मनसा शिवेन , सोमं राजान मिह भक्षयामि ; अभि त्वा वृषभा सुते , सुतं सृजामि पीतये, तृम्पा व्यश्नुही मद मिति"–इति । 'ता' कांस्यपात्रस्थां सुरां क्षत्रियो यदत्रेतिमन्त्रद्वयेन पिबेत्। 'अत्र' कांस्यपात्रे 'रसिनः' रसयुक्तस्य 'सुतस्य' अभिषुतस्य व्रीह्याद्यङ्कुरजस्य पेयद्रव्यस्य यत् 'शिष्ट' योऽवशिष्टो भागः, 'यत्' च द्रव्यं 'शचीभिः' कर्मविशेषैः संस्कृत मिन्द्रो ऽपिबत् । शचीशब्दः कर्मनाम * । 'इह' अस्मिन्नभिषेककर्मणि 'सोमं राजान' सोमसदृशं 'अस्य' पेयद्रव्यस्य, 'तदिदं' स्वरूपं 'शिवेन' शान्तेन भक्तियुक्तेन मनसा भक्षयामि । सोऽय मेको मन्त्रः । ( वा॰ सं॰ १८. ३५. ) हे 'वृषभ' श्रेष्ठ ! इन्द्र ! त्वा मभिलक्ष्य 'सुते' अस्मिन् द्रव्ये अभिषुते सति 'पीतये' तव पानार्थं 'सुतम्' अभिषुतं द्रव्यं 'सृजामि' त्वदर्थं ददामि । 'तृम्प' तेन द्रव्येण तृप्तो भव । 'मद' हर्षं 'व्यश्नुहि' विशेषेण प्राप्नुहि । अयं द्वितीयो मन्त्रः ( सं॰ ८. ४५. २२. ) ॥

तदिदं पानं प्रशंसति— "यो ह वाव सोमपीथः सुराया प्रविष्ट , स हैवैतेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य भक्षितो भवति ; न सुरा"–इति । 'यो ह वाव' यः खलु 'सोमपीथ.' सोमस्य पानविशेषः 'सुरायां' सुराद्रव्ये प्रविष्टोऽस्ति , 'एतेन' सोमपानविशेषेण सहैव पूर्वोक्तेन्द्राभिषेकविधानेन अभिषिक्तस्य

* निघ॰ २ १ ११ । निरु॰ १ १ १. । १२ ३ ८ ।

क्षत्रियस्य द्रव्यविशेषो भक्षितो भवति; न तु सुरा भक्षिता भवति *। सोऽयं मन्त्रद्वयस्य महिमा † ॥

पानादूर्द्ध्वं मभिमन्त्रणं विधत्ते— "तां पीत्वा ऽभिमन्त्रयेतापाम सोमं, शन्नो भवेति"–इति । "अपाम सोमम्"–इत्यृगेका (सं० ८. ४८. ३. ‡), "शन्नो भव"–इति द्वितीया (सं० ८. ४८. ४. §); ताभ्या मभिमन्त्रयेत ॥

इदानीं दृष्टान्तेन पानं प्रशंसति— "तद्यथैवादः प्रियः पुत्रः पितरं, प्रिया वा जाया पतिं, सुखं शिव मुपस्पृशत्याविस्रसः, एवं हैवैतेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य सुरा वा सोमो वान्यद्वान्नाद्यं सुखं शिव मुपस्पृशत्याविस्रसः"–इति । 'तत्' तत्र पाने, आदौ लौकिकं निदर्शन मुच्यते,— यथैव प्रियः पुत्रः शिवं सुखं यथा भवति तथा पितर मुपस्पृशति, प्रिया वा जाया च पतिं यथा स्पृशति । 'शिवं' शान्तम्; शास्त्रनिषिद्धमार्गेण यत् सुखं, तत् नरकहेतुत्वादुग्रम्; विहितमार्गेण तु तदभावाच्छान्तम् । सुखस्पर्शस्यावधिर्नित्याविस्रस इत्यनेनोच्यते । 'आ अविस्रसः' आ अविस्रंसनात्, देहपातपर्यन्त मित्यर्थः । यथा

---

* "न वा एतदयो न हिरण्य, यत् सीसम्; न स्त्री न पुमान्, यत् क्लीव.; न सोमो न सुरा, यत् सौत्रामणीसमहेः"–इति तै० ब्रा० १. ८. ५. ३। "द्रष्टा सुनोते"–इति निरु० १ ४. १।

† "आम्नायवचनादहिंसा प्रतीयेत"–इति, "आम्नायवचनादेतत् भवति"–इति च निरु० १ ५. १; ७. ७. १।

‡ "अपाम सोम ममृता अभूमागन्म ज्योतिरविदाम देवान्।
किं नून मस्मान् कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य"–इति तत्पाठ।

§ "शं नो भव हृद आ पीत इन्दो पितेव सोम सूनवे सुशेवः।
सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः"–इति तत्पाठ.।

सर्वंदयं दृष्टहेतुः, 'एवं हैव' अनेनैव प्रकारेण पूर्वोक्तैन्द्रमहाभिषेकविधिना अभिषिक्तस्य क्षत्रियस्य सुरा वा सोमो वा अन्यान्यन्नद्रव्याणि वा देहपातपर्यन्तं शान्तसुखसम्प्रदानि ॥ ६ (२०) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां चतुर्थाध्याये
( एकोनचत्वारिंशाध्याये ) षष्ठः खण्डः ॥ ६ ( २० ) ॥

---

॥ अथ सप्तमः खण्डः ॥

एतेन ह वा ऐन्द्रेण महाभिषेकेण तुरः कावषेयो जनमेजयं पारिक्षित मभिषिषेच तस्मादु जनमेजयः पारिक्षितः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन * च मेध्येनेजे तदेषाभियज्ञगाथा गीयते आसन्दीवति धान्यादं रुक्मिणं हरितस्रजम् अश्वं बबन्ध सारङ्गं देवेभ्यो जनमेजय इत्येतेन ह वा ऐन्द्रेण महाभिषेकेण च्यवनो भार्गवः शार्यातं मानव मभिषिषेच तस्मादु शार्यातो मानवः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे देवानां हापि सत्रे गृहपतिरासैतेन ह वा ऐन्द्रेण

---

* "परियायाश्वेन" च । एव मिह सर्वत्र, अगरपक्षे अपि।

३२

महाभिषेकेण सोमशुष्मा वाजरत्नायनः शतानीकं सात्राजित मभिषिषेच तस्माद् शतानीकः सात्राजितः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेज एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदावाम्बाष्ठ्य मभिषिषिचतुस्तस्मादाम्बाष्ठ्यः समन्तं सर्वतः पृथिवी जयन् परीयायाश्वेन च मेध्येनेज एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदौ युधांश्रौष्टि मौग्रसैन्य मभिषिषिचतुस्तस्माद् युधांश्रौष्टिरौग्रसैन्यः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेज एतेन ह वा ऐन्द्रेण महाभिषेकेण कश्यपो विश्वकर्माणं भौवन मभिषिषेच तस्माद् विश्वकर्मा भौवनः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे भूमिर्ह जगाविल्युदाहरन्ति न मा मर्त्यः कश्चन दातु मर्हति विश्वकर्मन् भौवन मां दिदासिथ निमङ्क्ष्ये ऽहं सलिलस्य मध्ये मोघस्त एष कश्यपायास सङ्गर इत्येतेन ह वा ऐन्द्रेण महाभिषेकेण वसिष्ठः सुदासं पैजवन मभिषिषेच तस्माद् सुदाः पैजवनः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेज एतेन ह वा ऐन्द्रेण महाभिषेकेण संवर्त्त आङ्गिरसो मरुत्त

माविक्षित मभिषिषेच तस्मादु मरुत्त आविक्षितः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्ये-नेजे तदप्येषः* श्लोको ऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे आविक्षितस्य कामप्रेर्विश्वे देवाः सभासद इति ॥ ७ ( २१ ) ॥

उक्तं महाभिषेकं चिरन्तनशिष्टाचारोदाहरणेन प्रशंसति— "एतेन ह वा ऐन्द्रेण महाभिषेकेण तुरः कावषेयो जनमेजयं पारिक्षित मभिषिषेच ; तस्मादु जनमेजयः पारिक्षितः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे"–इति । कव-षस्य पुत्रः, तुरनामको महर्षिः, परिक्षितपुत्रं जनमेजयम्, उक्त-विधानेन अभिषिषेच ; तस्मादेव कारणात् जनमेजयः 'सर्वतः' सर्वासु दिक्षु पृथिवीं 'समन्तम्' अन्तेन समुद्रतीरेण संयुक्तं यथा भवति तथा 'जयन्' विजयं प्राप्नुवन् 'परीयाय' परितश्चचार । अभिषेकमाहात्म्येनैव दिग्विजयं कृतवानित्यर्थः । अभिषेक-प्रसादादेव 'मेध्येन' यागयोग्येन अश्वेन च 'ईजे' इष्टवान्, अश्व-मेधं कृतवानित्यर्थः ॥

अस्मिन्नर्थे काञ्चिद् गाथा मुदाहरति— "तदेषाभियज्ञगाथा गीयते"–इति । 'तत्' तस्मिन् जनमेजयवृत्तान्ते 'एषा' वक्ष्यमाणा 'गाथा' यज्ञविषया गीतिः वैदिकैः अभितो गीयते ॥

तां गाथां दर्शयति—"आसन्दीवति धान्यादं रुक्मिणं हरित-स्रजम्, अश्वं बबन्ध सारङ्गं देवेभ्यो जनमेजय इति"–इति । आसन्दीवानिति देशविशेषस्य नामधेयम् । तस्मिन् देशे जनमे-

* ख ग पुस्तकयोरिदं निर्विसर्गपाठः ।

जयो 'देवेभ्यो' देवार्थं यागयोग्य मश्वं बबन्ध। कीदृश मश्वम्? 'धान्यादं' धान्य मेवात्ति, 'रुक्मिणं' रुक्मशब्देन ललाटगतं श्वेतलाञ्छन मुपलक्ष्यते, तदुक्तम्, हरितवर्णा स्रक् यस्यासौ 'हरितस्रक्' पुष्पमाला इव वर्णो देहं व्याप्य वर्त्तत इत्यर्थः, सारं कर्मसु श्रेष्ठं यागं गच्छतीति 'सारङ्गः'। 'इति' अनया गाथया जनमेजयस्य अभिषेकमहिमोदाहृतः॥

जनमेजयवत् शार्यातनामकं राजान मुदाहरति—"एतेन ह वा ऐन्द्रेण महाभिषेकेण च्यवनो भार्गवः शार्यातं मानव मभिषिषेच; तस्मादु शार्यातो मानव समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे; देवानां हापि सत्रे गृहपतिरास"—इति। भृगोः पुत्रः, च्यवननामको महर्षिः, मनुवंशोत्पन्नं शार्यातनामकं राजानम् अभिषिषेच। तस्मात् फलं पूर्ववत्। किञ्च देवानां सम्बन्धिनि सत्रेऽपि शार्यातो गृहपतिरभूत्॥

शतानीकनामानं राजानं मुदाहरति—"एतेन ह वा ऐन्द्रेण महाभिषेकेण सोमशुष्मा वाजरत्नायनः शतानीकं सात्राजितं मभिषिषेच; तस्मादु शतानीकः सात्राजितः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे"—इति। सोमशुष्मनामकः कश्चिन् महर्षिः, स च वाजरत्नस्य पौत्रः। तथाविधो मुनिः, सत्राजितः पुत्रं शतानीकनामकं क्षत्रियम् अभिषिषेच। शेषं पूर्ववत्॥

आम्बाष्ठ्यनामानं राजान मुदाहरति—"एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदावाम्बाष्ठ्य मभिषिषिचतुस्तस्मादाम्बाष्ठ्यः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे"—इति॥

युधांश्रौष्टिनामकं मुग्रसेनस्य पुत्रं राजान मुदाहरति— "एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदौ युधांश्रौष्टि मौग्रसैन्य मभिषिषिचतुस्तस्माद् युधांश्रौष्टिरौग्रसैन्यः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे"–इति ॥

भुवनाख्यस्य पुत्रं विश्वकर्मनामकं राजान मुदाहरति— "एतेन ह वा ऐन्द्रेण महाभिषेकेण कश्यपो विश्वकर्माणं भौवन मभिषिषेच ; तस्माद् विश्वकर्मा भौवनः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे"–इति ॥

भौवनाभिषेकमाहात्म्यं प्रशंसितुं पुरातनमहर्षिप्रोक्त मुदाहरणं दर्शयति— "भूमिर्ह जगावित्युदाहरन्ति"–इति । 'भूमिः' देवता 'जगौ' भौवनं प्रति किञ्चिद् वाक्यं गाथारूपं मुक्तवती, 'इति' एवं पूर्वे महर्षयः उदाहरन्ति ॥

तां गाथां दर्शयति— "न मा मर्त्यः कश्चन दातु मर्हति विश्वकर्मन् भौवन मां दिदासिथ, निमङ्क्ष्ये ऽहं सलिलस्य मध्ये मोघस्त एष कश्यपायास सङ्गर इति"–इति । भुवनाख्यस्य पुत्र ! हे विश्वकर्मन् ! कश्चिदपि मनुष्यः 'मां' भूमिं दातुं नार्हति । अत एव मीमांसका विचार्य सर्वस्वदाने महाभूमिदानं निवारितवन्तः॥ । एवं सति, त्वं 'मां' भूमिं 'दिदासिथ' कश्यपाय त्वदीयाचार्याय दातु मिच्छसि , अहं तु 'सलिलस्य' समुद्रस्य मध्ये 'निमङ्क्ष्ये' निमज्जनं करिष्ये ; तथा सति, 'ते कश्यपाय' त्वदीयाचार्यस्य कश्यपस्य 'एष सङ्गरः' भूमिप्रतिपादनविषयः 'मोघः आस' व्यर्थ एव बभूव । 'इति' ईदृश मपि महाभूमिमज्जनं महाभिषेकमहिम्ना निवारित मिति तात्पर्यार्थः ॥

॥ मी॰ द॰ ६. ७. १ सू॰ १ चधि॰ द्रष्टव्य।

सुदा इत्येतन्नामकं पैजवनस्य पुत्रं राजान मुदाहरति— "एतेन ह वा ऐन्द्रेण महाभिषेकेण वसिष्ठः सुदासं पैजवन मभिषिषेच ; तस्मादु सुदाः पैजवनः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे"–इति ॥

अविक्षिन्नामकस्य पुत्रं मरुत्तनामानं राजान मुदाहरति— "एतेन ह वा ऐन्द्रेण महाभिषेकेण संवर्त आङ्गिरसो मरुत्त मा-विक्षित मभिषिषेच ; तस्मादु मरुत्त आविक्षितः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे"–इति । संवर्त्तनामको महर्षिः, अङ्गिरसः पुत्रः ॥

तेन कृतं मरुत्ताभिषेकं प्रशंसितुं श्लोक मुदाहरति— "तद-प्येष: श्लोको ऽभिगीतः"–इति । 'तत्' तस्मिन् अपि मरुत्ताभि-षेकमाहात्म्ये 'एषः' वक्ष्यमाणः 'श्लोकः' पादबद्धो मन्त्रः 'अभि-गीतः' अभितः सर्वैः पठितः ॥

तं श्लोकं दर्शयति— "मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे, आविक्षितस्य कामप्रेर्विश्वे देवाः सभासद इति"–इति । मरुत्त-नाम्नो राज्ञो गृहे मरुदभिधका देवाः भोजनकाले परिवेषणस्य कर्त्तारो भूत्वा अवसन् ; तथैव 'आविक्षितस्य' अविक्षित्-पुत्रस्य 'कामप्रेः' सर्वकामपूरितस्य मरुत्तस्य गृहे 'विश्वे' सर्वे देवाः 'सभासदः' सभाया मुपविष्टाः, सेवन्त इति शेषः । 'इति' एष सर्वो ऽपि महाभिषेकस्य महिमेत्यभिप्रायः ॥ ७ ( २१ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां चतुर्थोध्याये
( एकोनचत्वारिंशाध्याये ) सप्तमः खण्डः ॥ ७ ( २१ ) ॥

---

॥ अथ अष्टमः खण्डः ॥

एतेन ह वा ऐन्द्रेण महाभिषेकेणोदमय आत्रेयो ऽङ्ग मभिषिषेच तस्मादङ्गः * समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे स होवाचालोपाङ्गो दश नागसहस्राणि दश दासीसहस्राणि ददामि ते ब्राह्मणोप मा ऽस्मिन् यज्ञे ह्वयस्वेति

तदप्येते श्लोका अभिगीताः
याभिर्गोभिरुदमयं प्रैयमेधा † अयाजयन्
द्वे द्वे सहस्रे बद्धानां ‡ मात्रेयो मध्यतो ऽददात्
अष्टाशीतिसहस्राणि § श्वेतान् वैरोचनो हयान्
प्रष्टीन् ¶ निसृष्य प्रायच्छद् यजमाने पुरोहिते
देशाद्देशात्समोळ्हानां सर्वासा माढ्यदुहितॄणाम्
दशाददात्सहस्राण्यात्रेयो निष्ककण्ठ्यः
दश नागसहस्राणि दत्त्वात्रेयो ऽवचत्नुके
श्रान्तः पारिकुटान् प्रैषद् दानेनाङ्गस्य ब्राह्मणः
शतं तुभ्यं शतं तुभ्य मिति स्मैव प्रताम्यति
सहस्रं तुभ्य मित्युक्त्वा प्राणान्स्म प्रतिपद्यत इति ॥ ८ ( २२ ) ॥

* "तस्मादङ्ग" क ।
† "प्रयमेधा" ख, घ, ङ ।
‡ "बद्धाना" च ।
§ "अष्टाशीति सहस्राणि" ख, घ, ङ, च, ट ।
¶ "प्रष्टीन्" क ।

अङ्गनामकं राजान मुदाहरति— "एतेन ह वा ऐन्द्रेण महाभिषेकेणोदमय आत्रेयो ऽङ्ग मभिषिषेच ; तस्मादङ्गः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे"–इति । उदमयनामकः कश्चित् महर्षिः अत्रेः पुत्रः, अङ्ग मभिषिषेच ॥

तस्याङ्गाभिषेकस्य माहात्म्यं दर्शयितुं कञ्चिद् वृत्तान्त माह— "स होवाचालोपाङ्गो,— दश नागसहस्राणि दश दासीसहस्राणि ददामि ते, ब्राह्मणोप मा ऽस्मिन् यज्ञे ह्वयस्वेति"–इति । यो ऽय मङ्गनामको राजा उक्तः, 'सः' अयम् 'अलोपाङ्गः' अङ्गदस्याङ्गसौष्ठवः, सम्पूर्णावयव इत्यर्थः । स कदाचित् स्वकीयाभिषेककर्त्तरि उदमयनामके पुरोहिते स्वार्थं यागं कुर्वाणे सति, तं मत्येव मुवाच । हे ब्राह्मण ! 'अस्मिन्' त्वदीये यज्ञे माम् 'उपह्वयस्व' समाह्वानं कुरु ; अह मागत्य त्वदीययज्ञे दक्षिणासम्पूर्त्यर्थं तुभ्यं गजसहस्राणि दासीसहस्राणि च ददामीति * । सेयं बहुदानसम्पत्तिः, सद्धिय महाभिषेकप्रसादलब्धा ॥

एव मेवार्थं प्रपञ्चयितुं श्लोकानुदाहरति— "तदप्येते श्लोका अभिगीताः"–इति । 'तत्' तस्मिन्नप्यङ्गराजपुरोहितस्य यागे दानप्रतिपादकाः 'एते' पञ्च श्लोकाः 'अभिगीताः' सर्वतो ऽभिज्ञैः पठिताः ॥

तत्र प्रथमं श्लोक माह— "याभिर्गोभिरुदमयं प्रैयमेधा अयाजयन्, द्वे द्वे सहस्रे बद्वाना मात्रेयो मध्यतो ऽददात्"–इति । प्रियमेधस्य पुत्राः 'प्रैयमेधाः' महर्षयः, उदमयनामकं अङ्गराजपुरोहितं 'याभिर्गोभिः' दक्षिणारूपाभिः 'अयाजयन्', ता गावो बद्धाना इति शेषः । 'बद्वम्'–इति शतकोटिसङ्ख्याया

---

* मूले तु "दश नागसहस्राणि, दश दासीसहस्राणि"–इति विद्यते ।

नामधेयम् * । 'बद्वानां' शतकोटिसङ्ख्याकानां गवां मध्ये, प्रति-दिनं द्वे द्वे सहस्रे 'मध्यतः' मध्यन्दिनसवने अत्रिपुत्र उदमयो दत्तवान् ॥

द्वितीयं श्लोकमाह— "अष्टाशीतिसहस्राणि, श्वेतान् वैरोचनो हयान्, प्रष्टीन् निश्चित्य प्रायच्छद् यजमाने पुरोहिते"—इति । 'वैरोचनः' विरोचनस्य पुत्रः अङ्गनामको राजा, स्वकीय-पुरोहिते उदमयनामके 'यजमाने' यागं कुर्वाणे, स्वयमागत्य अष्टाशीतिसहस्रसङ्ख्याकान् श्वेतवर्णान् 'प्रष्टीन्' पृष्ठवाहनयोग्य-वयस्कान् 'निश्चित्य' स्वकीयाश्वबन्धनस्थानान्निःसार्य 'प्रायच्छत्' दत्तवान् ॥

तृतीयं श्लोकमाह— "दिशादेशात्समोढानां सर्वासामाढ्य-दुहितृणाम्, दशाददाससहस्राण्यात्रेयो निष्ककण्ठ्यः"—इति ।

---

* दश, [ शतं ], सहस्रम्, अयुतम्, प्रयुतम्, नियुतम्, अर्बुदम्, न्यर्बुदम्, निखर्वम्, पद्मम्, अचिन्त्यम् । एताश्च सङ्ख्या क्रमाद् दशगुणोत्तरा वैदिक्यः । तै० ब्रा० १७ १४ २ द्रष्टव्यम् । यथाच प्रयुतमिति लक्षस्यैव नामान्तरम्, अर्बुद-मिति च कोटेर्नामान्तरम्, एवं शतकोटिर्नाम सामिद्धं मिति, तथा बद्व मिति तु स्यात् सहस्रकोटेरेव नामधेयमिति विचार्यम् । कश्चिन्मते लिखबद्धमस्त्वः स्यात् बद्वमिति नामसार्थे । तथा च 'बद्वानां' सिताणां दानार्थं ध्वनितानां गवां मिति, देवयज्ञ-मार्गस्थानां गवां मिति वार्थे सम्भाव्येत । नामधेयव्याख्यानं तां० ब्रा० १, १, ६ सा० भा० द्रष्टव्यम् । * चतुर्दशाभ्यधिकैकशतोदयसहस्रैरेकं बद्वं ( बद्व ) भवति । तथाहि— 'हिरण्येन ०—० बद्वं च ( १८०१४० ७, ८४० )'—इति श्रुतानि शताधिक-शतं बद्वानि श्रीभगवन्नौरङ्गीकैः चतुर्दशसहस्रेण सङ्गृहीतानि,— 'षद्रात् कर्मणि' भवादे नियुतानि चतुर्दश'—इति ( २८ श्लो० ) । एवं चतुर्दशसहस्राणां शताधिकशतभागो बद्व नियुतं भवति । इदञ्च बद्वसङ्ख्या श्लोकेन सङ्गृह्यते— 'चतुर्दशानां सहस्राणां समा-धिकशतांशकः । बद्वं चतुर्दशसङ्ख्यानि वर्णोदय'—इति"—इति भाग० पु० ९ २०.२६ श्लोकस्य १०, ७०, ९ श्लोकस्य च व्याख्याने स्वामी श्रीधरः ।

'देशाद्देशात्' दिग्विजयकाले तत्तद्देशविशेषात् 'समोळ्हानां' सम्यक् 'आ' समन्तात् 'ऊढानाम्' आनीतानाम् 'आढ्यदुहितॄणां' धनिकपुत्रीणां सर्वासां 'दश सहस्राणि' 'आत्रेयः' 'अङ्गराजपुरोहितो दत्तवान्। ताश्च दुहितरो 'निष्ककण्ठ्यः' आभरणोपेतकण्ठयुक्ताः ॥

चतुर्थं श्लोकमाह— "दश नागसहस्राणि दत्त्वात्रेयो ऽवचत्नुके, श्रान्तः पारिकुटान् प्रैषद् दानेनाङ्गस्य ब्राह्मणः"–इति। अङ्गराजस्य पुरोहितो ब्राह्मणः आत्रेयः, अवचत्नुकनामदेशे गजसहस्राणि दशसङ्ख्याकानि दत्त्वा, दानेन श्रान्तः सन् 'पारिकुटान्' परिचारकान् 'प्रैषत्' प्रेषितवान्, हे परिचारकाः! यूयं दत्तेत्येव मुक्तवानित्यर्थः ॥

पञ्चमं श्लोकमाह— "शतं तुभ्यं शतं तुभ्य मिति स्मैव प्रताम्यति, सहस्रं तुभ्य मित्युक्त्वा प्राणान्स्म प्रतिपद्यत इति"–इति। परिचारकाणां मध्ये एकैकस्यै बहु प्रयत्नः, तुभ्यं शतं तुभ्यं शत मिति शतसङ्ख्या प्रोक्ता; तत्रापि 'प्रताम्यति स्मैव' ग्लानिमेव प्राप्तवान्। ततः शतसङ्ख्यां परित्यज्य सहस्रं तुभ्य मित्युक्त्वा, तस्या मपि सङ्ख्यायां बहुशः प्रोक्तायां श्रान्तः सन्, 'प्राणान् प्रतिपद्यते स्म' मध्ये मध्ये श्रमपरिहाराय दीर्घश्वासं सततवान् इत्यर्थः। अङ्गराजस्य पुरोहितयागे तादृशसामर्थ्यं महाभिषेकप्रसादलब्ध मिति तात्पर्यार्थः ॥ ८ (२२) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां चतुर्थाध्याये (एकोनचत्वारिंशाध्याये) अष्टमः खण्डः ॥ ८ (२२) ॥

॥ अथ नवमः खण्डः ॥

एतेन ह वा ऐन्द्रेण महाभिषेकेण दीर्घतमा मामतेयो भरतं दौष्यन्तिं* मभिषिषेच तस्माद् भरतो दौष्यन्तिः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वैश्च मेध्यैरीजे

तदप्येते श्लोका अभिगीताः

हिरण्येन परीवृतान् कृष्णाञ्छुक्लदतो † मृगान्
मष्णारे भरतोऽददाच्छतं बद्धानि सप्त च
भरतस्यैष दौष्यन्तेरग्निः साचीगुणे ‡ चितः
यस्मिन्त्सहस्रं ब्राह्मणा बद्वशो गा विभेजिरे
अष्टासप्ततिं भरतो दौष्यन्तिर्यमुनामनु
गङ्गायां वृत्रघ्ने ऽबध्नात् पञ्चपञ्चाशतं हयान्
त्रयस्त्रिंशच्छतं राजा ऽश्वान् बध्वाय मेध्यान्
दौष्यन्तिरत्यगाद्राज्ञो मायां मायवत्तरः §
महाकर्म भरतस्य न पूर्वे नापरे जनाः
दिवं मर्त्य इव हस्ताभ्यां नोदापुः पञ्चमानवा

इत्येतं ह वा ऐन्द्रं महाभिषेकं बृहदुक्थ ऋषिर्दुर्मुखाय पाञ्चालाय प्रोवाच तस्माद् दुर्मुखः

* "दौषन्ति" क, "दौःषन्ति" ख, घ, ग, ङ। एवमिहोत्तरत्रापि।

† "कृष्णान् शुक्लदतो" क, "कृष्णाच्छुक्लदतो" ख, ग।

‡ "साचिगुण" क।

§ "मायावत्तर" क।

पाञ्चालो राजा सन् विद्यया समन्तं सर्वतः पृथिवीं जयन् परीयायैतं ह वा ऐन्द्रं महाभिषेकं वासिष्ठः सात्यहव्यो ऽत्यरातये जानन्तपये प्रोवाच तस्मादत्य-रातिर्जानन्तपिरराजा सन् विद्यया समन्तं सर्वतः पृथिवीं जयन् परीयाय स होवाच वासिष्ठः सात्य-हव्यो ऽजैषीर्वै समन्तं सर्वतः पृथिवीं महन् मा गमयेति स होवाचात्यरातिर्जानन्तपिर्यदा ब्राह्मणो-त्तरकुरून् जयेय मथ त्व मु हैव पृथिव्यै राजा स्याः सेनापतिरेव ते ऽहं स्या मिति स होवाच वासिष्ठः सात्यहव्यो देवक्षेत्रं वै तन्न वैतन्मर्त्यो जेतु मर्हत्य-द्रुक्षो वै म आ ऽत इदं दद इति ततो हात्यरातिं जानन्तपिं मात्तवीर्यं निःशुक्र ममित्रतपनः शुष्मिणः शैब्यो * राजा जघान तस्मादेवं विदुषे ब्राह्मणायैवं चक्रुषे न क्षत्रियो द्रुह्येन्नेद्राष्ट्रादव पद्येयन्नेदा म प्राणो जहदिति-जहदिति ॥ ६ ( २३ ) ॥

॥इत्यैतरेयब्राह्मणेऽष्टमपञ्चिकायां चतुर्थोऽध्यायः ॥ ४॥

दुष्यन्तस्य पुत्रं † भरताख्यं राजान मुदाहरति—"एतेन ह वा ऐन्द्रेण महाभिषेकेण दीर्घतमा मामतेयो भरतं दौष्यन्ति मभिषिषेच ; तस्मादु भरतो दौष्यन्तिः समन्तं सर्वत पृथिवीं

* "शैब्यो" क, ख, ग ।

† "दुष्यन्तपुत्रं" ग ।

जयन्, परीयायाश्वेन च मेध्येरीजे''–इति। ममताख्यायाः स्त्रियाः पुत्रो 'दीर्घतमा' इत्येतन्नामा मुनिर्भरत मभिषिषेच। भरतोऽपि दिग्विजयेन पृथिवीं परीत्य, मेध्येरश्वैरपीजे। 'उ च' –इति निपातयोः समूहः समुच्चयार्थः॥

भरताभिषेकमाहात्म्यं दर्शयितुं श्लोकान् उदाहरति— "तदप्येते श्लोका अभिगीताः''–इति। 'तत्' तस्मिन् भरताभिषेकमाहात्म्ये अपि 'एते' वक्ष्यमाणाः पञ्च श्लोकाः परिगीयन्ते॥

तत्र प्रथमं श्लोक माह— "हिरण्येन परीवृतान् कृष्णाञ्छुक्लदतो मृगान्; मष्णारे भरतोऽददाच्छतं बद्धानि सप्त च''–इति। मृगशब्देनात्र गजा विवक्षिताः; मृगवदिति बाहुल्यविवक्षया वा मृगशब्दः। ते च गजाः 'हिरण्येन परीवृताः' सर्वाभरणयुक्ताः, शरीरगुण्या वर्णोत्कर्षे सत्यत्यन्त कृष्णाः प्रतिभासन्ते, शुक्लाभ्यां दन्ताभ्यां युक्ताः। तादृशान् गजान्, मष्णारनामके देशे, भरतनामको राजा दत्तवान्। शत मित्यादिना तत्सङ्ख्योच्यते। 'बद्धम्'–'वृन्दम्'–इत्येतौ पर्यायौ *। वृन्दशब्दस्य शतकोटिवाचित्वेन गणितग्रन्थकारैर्दर्शितः॥

"एकं दश च शतं च सहस्रञ्चायुतमियुते तथा।
प्रयुतकोट्यर्बुदवृन्दं स्थानं स्थानाद् दशगुणात्''–इति †।

---

* नात्र मान किञ्चित् पश्याम।

† "एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः। अर्बुद मब्जं (वृन्द) खर्वनिखर्वौ महापद्मशङ्कवस्तस्मात्। जलधिश्चान्त्यं मध्यं परार्द्ध मिति दशगुणोत्तरा संज्ञाः सङ्ख्याया व्यवहारार्थं कृताः पूर्वैः''–इति लीला०। "एकं दश शतं चैव सहस्र मयुतं तथा। लक्षञ्च नियुतं चैव कोटिरर्बुद मेव च। वृन्दं खर्वो निखर्वश्च शङ्खपद्मौ च सागरः। अन्त्यं मध्यं परार्द्धं च दशवृद्ध्या यथोत्तरम्''–इति प्रमाण पु०।

तानि च शतकोटिरूपाणि 'बद्वानि' सप्ताधिकशतसङ्ख्याकानि । तावतो गजान् दत्तवानित्यर्थः * ॥

द्वितीयं श्लोकमाह— "भरतस्यैष दौष्यन्तेरग्निः साचीगुणे चितः ; यस्मिन्त्सहस्रं ब्राह्मणा बद्वशो गा विभेजिरे"–इति । साचीनामगुणवति कस्मिंश्चिद् देशे दुष्यन्तपुत्रस्य भरतस्य एषोऽग्निश्चितः, अग्निचयनं कृतवानित्यर्थः । 'यस्मिन्' अग्निचयने सहस्रसङ्ख्याका ब्राह्मणाः 'बद्वशः' प्रत्येकं शतकोटिसङ्ख्यया † 'गाः विभेजिरे' गवां विभागं कृतवन्तः ॥

तृतीयं श्लोकमाह— "अष्टासप्ततिं भरतो दौष्यन्तिर्यमुनामनु ; गङ्गायां वृत्रघ्ने ऽबध्नात् पञ्चपञ्चाशतं हयान्"–इति । 'मेध्यै-रश्वैरीजे'–इत्युक्तम् ( २६८पृ० १,२पं० ), तेषां मध्यानां सङ्ख्या अभिधीयते। अष्टाधिका सप्ततिः 'अष्टासप्ततिः' ताम्, अश्वानामष्टासप्ततिं दुष्यन्तपुत्रो भरतः 'यमुनामनु' यमुनायास्तीरे 'अबध्नात्' बद्धवान् , तावतो ऽश्वमेधान् कृतवानित्यर्थः । 'गङ्गायां' गङ्गातीरे वृत्रघ्ननामके देशे च पञ्चाधिकपञ्चाशत्सङ्ख्याकान् हयान् 'अबध्नात्' बद्धवान् , तावतो ऽश्वमेधान् कृतवानित्यर्थः ॥

चतुर्थं श्लोकमाह — "त्रयस्त्रिंशच्छतं राजा ऽश्वान् बद्ध्वाय मेध्यान्; दौष्यन्तिरत्यगाद्राज्ञो मायां मायवत्तरः"–इति। यमुनातीरे गङ्गातीरे च अनुष्ठिता अश्वाः त्रयस्त्रिंशदधिकशतसङ्ख्याकाः । तावतो ऽश्वान् 'मेध्यान्' यज्ञयोग्यान् विध्युक्तक्रमेण बन्धनं कृत्वा , सोऽयं राजा दौष्यन्तिः 'मायवत्तरः' अतिशयेन मायावी सन् , 'राज्ञः' स्वकीयशत्रोर्मायाम् 'अत्यगात्' अतिक्रान्तवान् ॥

* 'बद्वानि'–इत्यस्य स्थिराणि गजरूपद्रव्याणि दे[illegible] [illegible]नि मिति चार्थं स्यात्[illegible]

† 'बद्वश'–इत्यस्य बद्ध्वनश्चमित्यप्यर्थः स्यात् पुन[illegible] [illegible]इति वा ।

पञ्चमं श्लोक माह— "महाकर्म भरतस्य न पूर्वे नापरे जनाः ; दिवं मर्त्य इव हस्ताभ्यां नोदापुः पञ्चमानवा इति"–इति । 'भरतस्य' राज्ञो यदेतत् 'महाकर्म', तदेतत् 'पूर्वे' पित्रादयो न कर्त्तुं शक्ताः, 'अपरे' जनाः पुत्रपौत्रादयश्च न कर्त्तुं शक्ताः । तत्र दृष्टान्तः । यथा मनुष्यो 'दिवं' स्वर्गं हस्ताभ्यां स्प्रष्टुमशक्तः, एवं 'पञ्चमानवाः' निषादपञ्चमाः चत्वारो वर्णाः * 'नोदापुः' तदीयं कर्म प्राप्तुमशक्ताः । सोऽयं सर्वोऽपि महाभिषेकस्य महिमेत्यर्थः ॥

अथ सम्प्रदायकथनमुखेन महाभिषेकं प्रशंसति— "एतं ह वा ऐन्द्रं महाभिषेकं बृहदुक्थ ऋषिर्दुर्मुखाय पाञ्चालाय प्रोवाच ; तस्मादु दुर्मुखः पाञ्चालो राजा सन्, विद्यया समन्तं सर्वतः पृथिवीं जयन्, परीयाय"–इति । बृहदुक्थनामकः कश्चन ऋषिः, पञ्चालदेशस्वामिने दुर्मुखनाम्ने राज्ञे त मेतम् इन्द्रसम्बन्धिनं महाभिषेकं प्रोवाच । तस्मादेव कारणात् स राजा सन् 'विद्यया' महाभिषेकज्ञानेनैव सर्वासु दिक्षु समन्तं समग्रां पृथिवीं जयन्, 'परीयाय' परितः सञ्चचार ॥

अथ ब्राह्मणस्योक्ताभिषेकाधिकाराभावेऽपि तद्विद्याधिकारसद्भावात् तत्फलसिद्धिं दर्शयति— "एतं ह वा ऐन्द्रं महाभिषेकं वासिष्ठः सात्यहव्योऽत्यरातये जानन्तपये प्रोवाच ; तस्मादत्यरातिर्जानन्तपिरराजा सन्, विद्यया समन्तं सर्वतः पृथिवीं जयन्, परीयाय"–इति । वसिष्ठगोत्रोत्पन्नो 'वासिष्ठः', सत्यहव्यस्य पुत्रः 'सात्यहव्यः', तादृशो मुनिः, अत्यरातिनामकाय जनन्तपपुत्राय

---

* "गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके, चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यव."–इति निरु० ३. २ २ ।

ब्राह्मणाय, त मेतं महाभिषेकं प्रोवाच। तस्मादेव कारणादय मत्यरातिर्जानन्तपिः स्वय मराजा सवप्यभिषेकविद्यया, जयं प्राप्तः परितो गतवान् ॥

यथा अभिषेके शपथं कृत्वा गुरुद्रोहो न कर्त्तव्यः, एवं विद्याया मपीति दर्शयति— "स होवाच वासिष्ठः सात्यहव्यो ऽजैषीर्वै समन्तं सर्वतः पृथिवीं महन् मा गमयेति; स होवाचात्यरातिर्जानन्तपिर्यदा ब्राह्मणोत्तरकुरून् जयेय मथ त्व मु हैव पृथिव्यै राजा स्याः, सेनापतिरेव ते ऽहं स्या मिति; स होवाच वासिष्ठः सात्यहव्यो देवक्षेत्रं वै तन्न वैतन् मर्त्यो जेतु मर्हत्यद्रुक्षो वै म आ ऽत इद' दद इति; ततो हात्यरातिं जानन्तपि मात्तवीर्यं निःशुक्र ममित्रतपनः शुष्मिणः शैब्यो राजा जघान"–इति।

सात्यहव्यो वासिष्ठो गुरुः, अत्यरातिं शिष्य मेव मुवाच,— हे अत्यराते! विद्यासामर्थ्यात् पृथिवीं जितवानसि। अतो 'मां' गुरुं 'महद् गमय' महत्त्वम् ऐश्वर्यं प्रापय। ततः शिष्यो ऽत्यराति रेव मुवाच— मा भूदिदानीं तव महत्त्वम्, हे 'ब्राह्मण' आचार्य! यदा अहम् 'उत्तरकुरून्' एतन्नामकान् हिमवत्पर्वतस्योत्तरदेशान् जयेयम्, तदानीं त्व मेव पृथिव्याः राजा भव, अहं तु त्वदीयसेनापतिरेव भवामीति। ततः सात्यहव्यो वासिष्ठः 'सः' गुरुरेव मुवाच,— हे अत्यराते! हिमवत्पर्वतस्योत्तरतो* यदस्ति, तद्देवक्षेत्रम्, अतः तत् क्षेत्रं मनुष्यो जेतुं नैवार्हति; त्वं तु 'मे' मह्यम् 'अद्रुक्षो वै' द्रोहं कृतवानेव; मदपेक्षितं महत्त्वं दातु मनिच्छुः सन् वचनार्थं यत् किञ्चिद् उक्तवानसि; अतः शपथोल्लङ्घिनो गुरुद्रोहिणः तव 'इदं' सामर्थ्यम् 'आ ददे' अपहरामीति। 'ततः'

* "मेरोवरतो" ठ।

सामर्थ्यापहरणात् भत्यराति आनन्तपिम् 'आत्तवीर्य' गृहीतापहृतवीर्यम् 'निःशुक्रम्' अपहृततेजस्कं, कश्चित् शतुतापनः स्त्रिविपुत्रः शुष्मिणाख्यो * राजा 'जघान' हतवान् ॥

एतद्वृत्तान्तकथनफलं दर्शयति—"तस्मादेवं विदुषे ब्राह्मणायैवं चक्रुषे न क्षत्रियो द्रुह्येन्नेद्राष्ट्रादव पद्येयं नेदा मा प्राणो जहदिति-जहदिति"-इति। यस्माद् गुरुद्रोहे महती हानिरुक्ता, 'तस्मात्' 'एवं विदुषे' महाभिषेकाभिज्ञाय, 'एवं चक्रुषे' अभिषेककर्त्रे, 'ब्राह्मणाय' आचार्याय क्षत्रियो न द्रुह्येत्। केनाभिप्रायेणेति, सोऽभिधीयते— 'राष्ट्राद्' अस्माद् देशात् 'न इत् अव पद्येयम्' नैवापक्षो भूयासम्। अथवा मां प्राणो 'न इत् जहत्' नैव परित्यजत्वित्यभिप्रायः। अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ९ (३९) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां चतुर्थाध्याये
( एकोनचत्वारिंशाध्याये ) नवमः खण्डः ॥ ९ ( ३९ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'-नामभाष्ये
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायाः चतुर्थोऽध्यायः ॥

---

* "शुष्माख्यो" क।

# ॥ अथ पञ्चमाध्यायः ॥

( तत्र )

## ॥ अथ प्रथमः खण्ड. ॥

॥ ॐ ॥ अथातः पुरोधाया एव न ह वा अपुरोहितस्य राज्ञो देवा अन्नमदन्ति तस्माद्राजा यक्ष्यमाणो * ब्राह्मणं पुरो दधीत देवा मे ऽन्नमदन्नित्यग्नीन्वा एषः स्वर्ग्यान् राजोद्धरते यत् पुरोहितं तस्य पुरोहित एवाहवनीयो भवति जाया गार्हपत्यः पुत्रोऽन्वाहार्यपचनः स यत् पुरोहिताय करोत्याहवनीय एव तज्जुहोत्यथ यज्जायायै करोति गार्हपत्य एव तज्जुहोत्यथ यत् पुत्राय करोत्यन्वाहार्यपचन एव तज्जुहोति त एनं शान्ततनवो ऽभिहुता अभिप्रीताः स्वर्गं लोकं† मभिवहन्ति क्षत्रं च बलं च राष्ट्रं च विशं च त एवैन मशान्ततनवो ऽनभिहुता अनभिप्रीताः स्वर्गाल्लोकान्नुदन्ते‡ क्षत्राच्च बलाच्च राष्ट्राच्च विशश्चाग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत् पुरोहि-

---

* "ऽयक्ष्यमाणो" क । भाष्ये च पदान्तरत्वेन स्वीकृत ।

† "स्वर्गेलोक" ङ ।

‡ "स्वर्गाल्लोका नुदन्ते" ख, "स्वर्गाल्लोका ऽ नुदन्ते" घ, "स्वर्गाल्लोकानुदन्ते" ङ । स्वरपरत्व भेद भिन्न पाठा ।

तस्तस्य वाच्येवैका मेनिर्भवति पादयोरेका त्वच्येका हृदय एकोपस्थ एका ताभिर्ज्वलन्तीभिर्दीप्यमानाभिरुपोदेति राजानं स यदाह क्व भगवो ऽवात्सीस्तृणान्यस्मा आहरतेति तेनास्य तां शमयति या ऽस्य वाचि मेनिर्भवत्यथ यदस्मा उदकमानयन्ति पाद्यं तेनास्य तां शमयति यास्य पादयोर्मेनिर्भवत्यथ यदेन मलङ्कुर्वन्ति तेनास्य तां शमयति यास्य त्वचि मेनिर्भवत्यथ यदेनं तर्पयन्ति तेनास्य तां शमयति यास्य हृदये मेनिर्भवत्यथ यदस्यानारुद्धो वेश्मसु वसति तेनास्य तां शमयति यास्योपस्थे मेनिर्भवति स एनं शान्ततनुरभिहुतो ऽभिप्रीतः स्वर्गं लोक* मभिवहति क्षत्रं च बलं च राष्ट्रं च विशं च स एवैन मशान्ततनुरनभिहुतो ऽनभिप्रीतः स्वर्गाल्लोकान्नुदते क्षत्राच्च बलाच्च राष्ट्राच्च विशश्च ॥ १ (२४) ॥

॥ श्रीगणेशाय नमः ॥

महाभिषेक ऐन्द्रो य. चत्रस्यासौ पुरोहितः ।
पौरोहित्यं ब्राह्मणस्य वक्तव्य मधुनोच्यते ॥ १ ॥

तदेतत् प्रतिजानीते— "अथातः पुरोधाया एव"—इति । 'अथ' क्षत्रियस्य महाभिषेककथनानन्तरम् , यतो ब्राह्मणस्य

* "स्वर्गंल्लोक" ङ ।

पौरोहित्यं बुभुक्षितं भवति, 'अतः' कारणात् 'पुरोधाया एव' पौरोहित्यस्यैव विधिः, उच्यत इति शेषः ॥

तद्विधिं दर्शयति— "न ह वा अपुरोहितस्य राज्ञो देवा अन्नमदन्ति, तस्माद्राजा यक्ष्यमाणो ब्राह्मणं पुरो दधीत,— देवा मे ऽन्नमदन्निति"–इति । यस्मात् अपुरोहितस्य राज्ञः अन्नं देवाः 'न अदन्ति' न भक्षयन्ति, 'तस्मात्' राजा यक्ष्यमाणो ब्राह्मणं पुरोहितं कुर्यात् । केनाभिप्रायेणेति, सोऽभिधीयते— देवाः मदीयमन्नमदन्त्विति तस्याभिप्रायः । 'अयक्ष्यमाणः' इति वा पदच्छेदः । यागाभावेऽपि प्रजापालने धर्मबोधनाय पुरोहितः सम्पादनीयः ॥

तदेतत् प्रशंसति— "अग्नीन्वा एष स्वर्ग्यान् राजोद्धरते, यत् पुरोहितम्"–इति । पुरोहितं सम्पादयतीति यदस्ति, तेन 'एष' राजा स्वर्गहेतून् अग्नीनेवोद्धरते ॥

तानग्नीन् दर्शयति— "तस्य पुरोहित एवाहवनीयो भवति, जाया गार्हपत्यः, पुत्रो ऽन्वाहार्यपचनः ; स यत् पुरोहिताय करोत्याहवनीय एव तज्जुहोत्यथ यज्जायायै करोति गार्हपत्य एव तज्जुहोत्यथ यत् पुत्राय करोत्यन्वाहार्यपचन एव तज्जुहोति ; त एनं शान्ततनवो ऽभिहुता अभिप्रीताः स्वर्गं लोकमभिवहन्ति,— क्षत्रं च बलं च राष्ट्रं च विशं च"–इति । 'तस्य' ह राज्ञः पुरोहितादय एव आहवनीयाद्यग्निस्थानीयाः । अन्वाहार्यपचनो दक्षिणाग्निः । 'स' राजा पुरोहितादिभ्यो 'यत्' अपेक्षितं करोति, तदेतदाहवनीयादिषु होमसमानम् । अतः पुरोहितद्वारा 'ते' अग्नयः 'शान्ततनवः' स्वकीयमुग्ररूपत्वं परित्यज्य अभीष्टहोमेन प्रीताः 'एनं' क्षत्रियं स्वर्गादिकं प्रापयन्ति । 'क्षत्रं'

मानसोत्साहरूपं शौर्यम्, 'बलं' शारीरम्, 'राष्ट्रं' देशः, 'विट्' प्रजाः; पुरोहितादिप्रीत्या तदेतत् सर्वं प्राप्यते ॥

विपक्षे बाधक माह— "त एवैन मशान्ततनवो ऽनभिहुता अनभिप्रीताः स्वर्गाल्लोकान्नुदन्ते, क्षत्राच्च बलाच्च राष्ट्राच्च विशश्च"—इति। 'त एव' पुरोहितादयो ऽभीष्टहोमाभावेन प्रीतिरहिताः 'अशान्ततनवः' स्वर्गादेः 'एनं' राजानम् मपनुदन्ते ॥

पुनरपि पुरोहितं प्रकारान्तरेण प्रशंसति— "अग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत् पुरोहितस्तस्य वाच्येवैका मेनिर्भवति, पादयोरेका, त्वच्येका, हृदय एकोपस्थ एका, ताभिर्ज्वलन्तीभिर्दीप्यमानाभिरुपोदेति राजानं; स यदाह क्व भगवो ऽवात्सीस्तृणान्यस्मा आहरतेति, तेनास्य तां शमयति यास्य वाचि मेनिर्भवत्यथ यदस्मा उदक मानयन्ति पाद्यं, तेनास्य तां शमयति यास्य पादयोर्मेनिर्भवत्यथ यदेन मलङ्कुर्वन्ति, तेनास्य तां शमयति यास्य त्वचि मेनिर्भवत्यथ यदेन तर्पयन्ति, तेनास्य तां शमयति यास्य हृदये मेनिर्भवत्यथ यदस्यानारुद्धो वेश्मसु वसति, तेनास्य तां शमयति यास्योपस्थे मेनिर्भवति"—इति। परोपद्रवकारिणी क्रोधरूपा शक्तिः 'मेनिः'—इत्युच्यते, यथाग्नेर्ज्वाला, तद्वत्। अतो यः पुरोहितोऽस्ति, सोऽयं पञ्चविधमेन्युपेतो वैश्वानरनामकाग्निसमानः; वागादीनि पञ्च मेनिस्थानानि च। अतः पुरोहितः 'ताभिः' मेनिभिः 'ज्वलन्तीभिः' ज्वालासदृशीभिः, 'दीप्यमानाभिः' परेषु दीप्तिं सन्तापं कुर्वन्तीभिः सह राजानम् 'उपोदेति' समीपे प्राप्नोति। तदा 'सः' राजा हे भगवन्! एतावन्तं कालं क्वावात्सीः? एतस्य पुरोहितस्योपवेशनार्थं हे परिचारकाः! 'तृणानि' तृणनिर्मितानि कुशाद्यासनानि आहरत; 'इति'

अनेन राजसम्बन्धिना प्रियवाक्येन, वाचि एका या 'मेनिः' बाधिका शक्तिः, तां स राजा शमयति। पाद्यार्घोदकानयनेन पादगता मेनिः शाम्यति। वस्त्राभ्याद्यलङ्करणेन त्वग्गता मेनिः शाम्यति। धनादिना सन्तर्पणेन हृदयगता मेनिः शाम्यति। 'अस्य' राज्ञो वेश्मसु 'अनारुद्धः' विरोधरहितः शयनादिकं कुर्वन् विस्रब्धोप वसतीति यदस्ति, तेनोपस्थगता मेनिः शाम्यति। गृहे समागतस्य पुरोहितस्य एतावन्त उपचाराः कर्त्तव्या इत्यर्थः ॥

अन्वयव्यतिरेकाभ्यां मुक्तोपचारं प्रशंसति— "स एनं शान्ततनुरभिहुतो ऽभिप्रीतः स्वर्गं लोकमभिवहति, क्षत्रं च बलं च राष्ट्रं च विशं च; स एवैनं अशान्ततनुरनभिहुतो ऽनभिप्रीतः स्वर्गाल्लोकान्नुदते, क्षत्राच्च बलाच्च राष्ट्राच्च विशश्च"—इति। उक्तोपचारहोमेन प्रीतो सर्वां शान्ततनुः स्वर्गादिकं प्रापयतीत्यन्वयः। उक्तोपचारहोमाभावे स्वर्गादेरपनुदतीति व्यतिरेक. ॥ १ (२४) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां पञ्चमाध्याये
( चत्वारिंशाध्याये ) प्रथमः खण्डः ॥ १ (२४) ॥

---

॥ अथ द्वितीयः खण्डः ॥

अग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत् पुरोहितस्ताभी राजानं परिगृह्य तिष्ठति समुद्र इव भूमि-

मयुव मार्यस्य* राष्ट्रं भवति नैनं पुरायुषः प्राणो जहात्याजरसं जीवति सर्वं मायुरेति न पुनर्म्रियते यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः क्षत्रेण क्षत्रं जयति बलेन बल मश्नुते यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितस्तस्मै विशः संजानते संमुखा एकमनसो यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः॥ २ ( २५ ) ॥

उक्तोपचारेण प्रीतं पुरोहितं दृष्टान्तेन प्रशंसति— "अग्निर्वा एष वैश्वानर., पञ्चमेनिर्यत् पुरोहितस्ताभी राजानं परिगृह्य तिष्ठति, समुद्र इव भूमिम्"—इति । योऽयं पुरोहितोऽस्ति, स एषः 'पञ्चमेनिः' पञ्चविधोग्रशक्तियुक्तो वैश्वानरनामकोऽग्निरेव ; निग्रहानुग्रहयोः अग्निवच्छक्तिमत्त्वात्। स पुरोहित. 'ताभि.' पूर्वोक्ताभिः शक्तिभिः त राजानं 'परिगृह्य' परितः स्वीकृत्य तिष्ठति । यथा समुद्रो भूमि परितः स्वीकृत्य तिष्ठति, तद्वत् ॥

पुरोहितवशादनिष्टपरिहार दर्शयति— "मयुव मार्यस्य राष्ट्रं भवति, नैनं पुरायुषः प्राणो जहात्याजरसं जीवति , सर्वं मायुरेति , न पुनर्म्रियते , यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः"—इति । 'यस्य' राज्ञः 'एवं विद्वान्' वेदशास्त्रोक्तप्रकारेण धर्माधर्मौ बोधयितु मभिज्ञो ब्राह्मणो 'राष्ट्रगोप.' राष्ट्रपरिपालनक्षमः पुरोहितो भवति , ईदृशस्यार्यस्य राज्ञो राष्ट्रम 'मयुतं' कदाचिदपि पृथग्भावरहितं भवति । "यु मिश्रणामिश्रणयो."

* "मयुवमार्यस्य"—इत्येव च पाठो भाष्यसम्मत ।

-इति धातु ( अदा० प० ) अमिश्रणेऽपि वर्त्तते, अयुवमितिपदेन स निषिध्यते; राष्ट्रमस्थिरं न भवतीत्यर्थः। अथ वा 'अस्य' राष्ट्रम् 'अयुवमारि' युवमरणरहितं भवतीत्यर्थः। 'एनं' राजानम् 'आयुषः पुरा' प्राणो न परित्यजति, अपमृत्युः न भवतीत्यर्थः। अत एव 'आ जरसं' जरापर्यन्तं सुखेन जीवति; 'सर्वं मायुरेति' प्राप्तायामपि जरायामवशिष्टं सर्वं मायुः प्राप्नोति। ततः सकृत् मृत्वा 'पुनर्न म्रियते' पुरोहितमुखेन तत्त्वज्ञानं सम्पाद्य मुच्यते इत्यर्थः॥

अनिष्टपरिहारं दर्शयित्वा इष्टप्राप्तिं दर्शयति—"क्षत्रेण क्षत्रं जयति, बलेन बल मश्नुते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः"-इति। उक्तविधपुरोहितयुक्तो राजा स्वकीयेन 'क्षत्रेण' कुमारादिना, परकीयं 'क्षत्रं' कुमारादिकं जयति। यथा स्वकीयेन 'बलेन' सैन्येन, परकीयं 'बलं' सैन्यम् 'अश्नुते' व्याप्नोति, अभिभवतीत्यर्थः॥

इष्टप्राप्त्यनिष्टपरिहारौ दर्शयित्वा प्रजानुरागं दर्शयति— "तस्मै विशः संजानते, सम्मुखा एकमनसो यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः"-इति। उक्तविधपुरोहितयुक्ताय 'तस्मै' तस्य राज्ञो 'विशः' प्रजाः 'संजानते' राज्ञा सहैकमत्यं प्राप्नुवन्ति; प्राप्य च परस्पर मप्येकमनस्का राज्ञः सम्मुखा भवन्ति; न तु कस्मिन्नपि कार्ये विमुखाः॥ २ (२५)॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां पञ्चमाध्याये
( चत्वारिंशाध्याये ) द्वितीयः खण्डः॥ २ (२५)॥

---

॥ अथ तृतीयः खण्ड ॥

तद्ध्येतदृषिणोक्तं स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येणेति सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि तानेव तच्छुष्मेण वीर्येणाधितिष्ठति बृहस्पतिं यः सुभृतं बिभर्त्तीति बृहस्पतिर्ह वै देवानां पुरोहितस्तं मन्वन्ये मनुष्यराज्ञां पुरोहिता बृहस्पतिं यः सुभृतं बिभर्त्तीति यदाह पुरोहितं यः सुभृतं बिभर्त्तीत्येव तदाह वल्गूयति वन्दते पूर्वभाज मित्यपचिति मेवास्मा एतदाह स इत् क्षेति सुधित ओकसि स्व इति गृहा वा ओकः स्वेष्वेव तद्गृहेषु सुहितो वसति तस्मा इळा पिन्वते विश्वदानी मित्यन्नं वा इळान्न मेवास्मा एतदूर्जस्वत्प्रस्रवति तस्मै विशः स्वय मेवा नमन्त इति राष्ट्राणि वै विशो राष्ट्राण्येवैनं तत् स्वय मुपनमन्ति यस्मिन् ब्रह्मा राजनि पूर्व एतीति पुरोहित मेवैतदाहाप्रतीतो जयति सं धनानीति राष्ट्राणि वै धनानि तान्यप्रतीतो जयति प्रतिजन्यान्युत या सजन्येति सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि तानप्रतीतो जयत्यवस्यवे यो वरिवः कृणोतीति यदाहावसीयसे यो वसीयः करोतीत्येव तदाह-

ब्राह्मणे राजा त भवन्ति देवा इति पुरोहित मेवै-
तदभिवदति ॥ ३ ( २६ ) ॥

पुरोहितमहिमानं द्रढयितुं * मन्त्र मुदाहरति — "तदप्येत-
दृषिणोक्तम्"–इति । 'तदेतत्' पुरोहितमाहात्म्य मपि 'ऋषिणा'
मन्त्रदर्शिना सिद्धभिः ऋग्भिरुक्तम् ( सं० ४. ५०. ७-९. ) ॥

तत्र प्रथमाया ऋचः पूर्वार्द्धं दर्शयति— "स इद्राजा प्रति-
जन्यानि विश्वा, शुष्मेण तस्थावभि वीर्य्येणेति"–इति । 'स इत्'
स एव पुरोहितयुक्तो राजा 'प्रतिजन्यानि' प्रतिपक्षबलानि
'विश्वा' सर्वाणि 'शुष्मेण' वीर्य्येण स्वकीयेनाधिकेन बलेन 'अभि-
तस्थौ' अभितिष्ठति, अभिभवतीत्यर्थः ॥

अस्यार्थस्य तात्पर्यं दर्शयति— "सपत्ना वै द्विषन्तो भ्रातृव्या
जन्यानि तानेव तच्छुष्मेण वीर्य्येणाधितिष्ठति"–इति । 'जन्यानि'
–इत्यनेन सपत्ना एव अभिधीयन्ते ; सपत्नशब्दस्य व्याख्या द्विष-
न्तो भ्रातृव्या इति । तानेव भ्रातृव्यान् 'तत्' तेन 'शुष्मेण'
अधिकेन 'वीर्य्येण' सामर्थ्येन 'अधितिष्ठति' अभिभवति ॥

तृतीयं पाद मनूद्य व्याचष्टे— "बृहस्पतिं यः सुभृतं बिभ-
र्त्तीति ; बृहस्पतिर्ह वै देवानां पुरोहितस्त मन्वन्ये मनुष्यराज्ञां
पुरोहिता ; बृहस्पतिं यः सुभृतं बिभर्त्तीति यदाह, पुरोहितं यः
सुभृतं बिभर्त्तीत्येव तदाह"–इति । यो द्वितीयपदेशेन राजानं
सुष्ठु बिभर्त्तीति 'सुभृत्' । तादृशं 'बृहस्पतिं' बृहस्पतिसमानं
पुरोहितं 'बिभर्त्ति' पोषयति, स इद्राजेति पूर्वेणान्वयः । "बृह-
स्पतिर्ह वै देवानां पुरोहितः" । यो बृहस्पतिः देवानां पुरो-

* "दर्शयितु" ड ।

हितः, तं बृहस्पतिम् 'अनु' पश्चात् मनुष्यराज्ञाम् अन्ये पुरोहिता वर्त्तन्ते ; अतः पुरोहितानां बृहस्पत्यनुसारित्वात् बृहस्पति मिति पदेन पुरोहितविषय मेवैतद् वाक्यं मन्त्र आह ॥

चतुर्थं पाद मनूद्य व्याचष्टे — "वल्गूयति वन्दते पूर्वभाज मित्यपचिति मेवास्मा एतदाह"–इति । स राजा 'पूर्वभाजं' प्रथमतो भजनयुक्तं पुरोहितं ( स हि राजानं तदीयहितविचारेण प्रथमतो भजति, तादृशं ) 'वल्गूयति' राजा अर्चयति, 'वन्दते' नमस्करोति । 'एतत्' एतेन पादेन 'अस्मै' अस्मिन् यजमाने 'अपचिति मेव' पूजा मेव मन्त्र आह ॥

द्वितीयस्या ऋचः प्रथमपाद मनूद्य व्याचष्टे— "स इत् क्षेति सुधित ओकसि स्व इति ; गृहा वा ओकः स्वेष्वेव तद् गृहेषु सुहितो वसति"–इति । 'स इत्' स एव राज्ञा पूजितः पुरोहितः 'सुधितः' सुप्रीतः 'स्वे' स्वकीये एव 'ओकसि' गृहे 'क्षेति' निवसति । 'ओकः'-शब्देनात्र 'गृहाः' एवोच्यन्ते । ततः स्वेष्वेव गृहेषु सुप्रीतो वसतीत्युक्तं भवति ॥

द्वितीयं पाद मनूद्य व्याचष्टे— "तस्मा इळा पिन्वते विश्वदानी मित्यन्नं वा इळाऽन्न मेवास्मा एतदूर्जस्वच्छश्वद्भवति"–इति । 'तस्मै' पुरोहितयुक्ताय राज्ञे 'इळा' अन्नं 'विश्वदानीं' सर्वस्मिन्नपि काले ( इदानीं तदानी मित्यादिवदवगन्तव्यम्* ) 'पिन्वते' वर्द्धते, अन्नसमृद्धिर्भवति । अस्मिन् पादे 'इळा'-शब्देन अन्न मेवोच्यते ; 'एतत्' अन्नम् 'अस्मै' अस्मिन् राजनि 'ऊर्जस्वत्' चौरादिरहितं 'शश्वत्' सर्वदा तिष्ठति ॥

तृतीयं पाद मनूद्य व्याचष्टे — "तस्मै विशः स्वय मेवा नमन्त

* अष्ट० प्राति ४, १९ । विश्वदानीं—सर्वदा निरु० ११, ४, १० ।

इति ; राष्ट्राणि वै विशो राष्ट्राण्येवैनं तत् स्वय मुपनमन्ति"–इति । 'तस्मै' पुरोहितयुक्ताय राज्ञे 'विशः' प्रजाः 'स्वय मेव तदीयप्रयत्न-निरपेक्षा एव 'आ नमन्ते' आनतिं प्राप्ता भवन्ति । अस्मिन् पादे 'विट्' शब्देन 'राष्ट्राण्येव' प्रजोपेता देशा एव विवक्षिताः । तानीमानि राष्ट्राण्येव 'एनं' पुरोहितयुक्तं क्षत्रियं स्वय मेव प्राप्नुवन्ति ॥

चतुर्थं पाद मनूद्य व्याचष्टे— "यस्मिन् ब्रह्मा राजनि पूर्व एतीति ; पुरोहित मेवैतदाह"–इति । 'यस्मिन्' राजनि 'ब्रह्मा' ब्राह्मणः हित मुपदिशन् 'पूर्व एति' प्रथमतो गच्छति, स इत् क्षेतीति पूर्वत्रान्वयः । अनेन पादेन पूर्व एतीत्येतं पुरोहित मेव मन्त्रो ब्रूते ॥

तृतीयस्या ऋचः प्रथमपाद मनूद्य व्याचष्टे— "अप्रतीतो जयति सं धनानीति ; राष्ट्राणि वै धनानि तान्यप्रतीतो जयति" –इति । अयं पुरोहितयुक्तो राजा 'अप्रतीतः' प्रतिकूलैः शत्रुभिः इतः प्राप्तः प्रतीतः, तद्विपरीतो अप्रतीतः, शत्रुभिरपराजित एव भूत्वा धनोपेतानि राष्ट्राणि सम्यक् 'जयति' सम्पादयति । अस्मिन् पादे 'धन'-शब्देन राष्ट्राण्येव विवक्षितानि ; तानि स्वयं प्रतिपक्ष-रहित एव जयति ॥

द्वितीयं पाद मनूद्य व्याचष्टे— "प्रतिजन्यान्युत या सजन्येति ; सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि तानप्रतीतो जयति"–इति । 'जन्यानि' शत्रून्, 'अप्रतीतः' स्वय मप्रतिपक्षो जयतीत्यनुवर्त्तते । किञ्च 'या' सेना 'सजन्या' शत्रुसहिता, ता मपि जयति । अस्मिन् पादे 'जन्य'-शब्देन सपत्ना अभिधीयन्ते, तस्य व्याख्यानं 'द्विषन्तो भ्रातृव्याः'–इति । 'तान्' भ्रातृव्यान् 'अप्रतीतः' प्रतिपक्षरहितो जयति ॥

तृतीयं पादमनूद्य व्याचष्टे— "अवस्यवे यो वरिवः कृणोतीति यदाहावसीयसे यो वसीयः करोतीत्येव तदाह"–इति । 'अवस्यवे' वसुरहिताय ब्राह्मणाय पुरोहिताय 'यः' राजा 'वरिव कृणोति' परिचर्यां करोति 'इति' मन्त्रो यदाह, तत्र 'अवसीयसे' अत्यन्तदरिद्राय धनरहिताय 'यः' राजा 'वसीयः' अतिशयेन धनवन्तं करोति 'इति' अनेनैव प्रकारेण मन्त्रो ब्रूते ॥

चतुर्थं पादमनूद्य व्याचष्टे— "ब्रह्मणे राजा तमवन्ति देवा इति; पुरोहितमेवैतदभिवदति"–इति । 'ब्रह्मणे' ब्राह्मणाय पूर्वोक्तेन अवस्यव इति चतुर्थ्यन्तेन अन्वेति, तथा राजेति पद य इत्यनेन अन्वेति । 'तं' तादृशं पुरोहितपूजकं राजानं देवाः 'अवन्ति' पालयन्ति । 'एतद्' एतेन ब्रह्मण इति पदेन पुरोहितमेव मन्त्रः अभिवदति ॥ ३ (२६) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां पञ्चमाध्याये (चत्वारिंशाध्याये) तृतीयः खण्डः ॥ ३ (२६) ॥

---

॥ अथ चतुर्थः खण्डः ॥

यो ह वै त्रीन् पुरोहितांस्त्रीन् पुरोधातॄन् वेद स ब्राह्मणः पुरोहितः स वदेत पुरोधायां अग्निर्वाव पुरोहितः पृथिवी पुरोधाता वायुर्वाव पुरोहितो

ऽन्तरिक्षं पुरोधाता ऽऽदित्यो वाव पुरोहितो द्यौः पुरोधातैष ह वै पुरोहितो य एवं वेदाथ स तिरोहितो य एवं न वेद तस्य राजा मित्रं भवति द्विषन्त मप बाधते यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः क्षत्रेण क्षत्रं जयति बलेन बल मश्नुते यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितस्तस्मै विशः सञ्जानते सम्मुखा एकमनसो यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितो भूर्भुवस्स्वरो ममो ऽह मस्मि स त्वं स त्व ममो ऽहं द्यौरहं पृथिवी त्वं सामाह मृक् त्वं तावेह संवहावहै पुरास्मस्मान् महाभयात् तनूरसि तन्वं मे पाहि या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ता मह्य मस्मिन्नासने ऽच्छिद्रं शर्म यच्छत या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ता मह्य मस्मिन्नासने ऽच्छिद्रं शर्म यच्छत अस्मिन्राष्ट्रे श्रिय मावेशयाम्यतो देवीः प्रति पश्याम्यापः दक्षिणं पाद मवनेनिजे ऽस्मिन् राष्ट्र इन्द्रियं दधामि सव्यं पाद मवनेनिजे ऽस्मिन् राष्ट्र इन्द्रियं वर्द्धयामि पूर्व मन्य मपर मन्यं पादाववनेनिजे देवा राष्ट्रस्य गुप्त्या अभयस्यावरुद्ध्यै आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे ॥ ४ (२७) ॥

अथ पौरोहित्यस्य योग्यायोग्यौ ब्राह्मणौ विविनक्ति— "यो ह वै त्रीन् पुरोहितांस्त्रीन् पुरोधातॄन् वेद, स ब्राह्मणः पुरोहितः; स वदेत पुरोधायै ; अग्निर्वाव पुरोहितः, पृथिवी पुरोधाता ; वायुर्वाव पुरोहितो, ऽन्तरिक्षं पुरोधाता ; ऽऽदित्यो वाव पुरोहितो, द्यौः पुरोधातैष ह वै पुरोहितो य एवं वेदाथ स तिरोहितो य एवं न वेद"–इति । राज्ञा स्वहितोपदेशार्थं स्वस्य पुरोहितो, ऽवस्थापितः ; तस्य पुरोहितस्य योऽयमवस्थापयिता राजा, स पुरोधाता । देवतासु मध्ये ये त्रयः पुरोहिताः सन्ति, ये च त्रयः पुरोधातारः सन्ति, तानुभयविधान् 'यो वेद' तत्प्रतिपादकं मन्त्रं सर्वदानुसन्धत्त इत्यर्थः । 'सः' तादृशो ब्राह्मणः 'पुरोहितः' पुरोहितो भवितुं योग्यः । 'सः' च ब्राह्मणः 'पुरोधायै' पौरोहित्यार्थम् "अग्निः"–इत्यादिकं मन्त्रं जपेत् । अग्नि-वाय्वादित्याः पुरोहितरूपाः, पृथिव्यन्तरिक्षद्युलोकाः पुरोधातृरूपा इति मन्त्रार्थः । 'यः' पुमान् 'एवं वेद' मन्त्रार्थमनुसन्धत्ते, 'एषः' एव योग्यः पुरोहितः ; 'अथ' तद्वैलक्षण्येन 'यः' पुमान् एवं न वेद, स 'तिरोहितः' पौरोहित्यादन्तर्हितः, तदयोग्य इत्यर्थः ॥

योग्यं पुरोहितं प्रशंसति— "तस्य राजा मित्रं भवति द्विषन्तमप बाधते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः"–इति । यस्य 'एवं' मन्त्रादिवेदिलक्षणयुक्तः पुरोहितो भवेत्, 'तस्य' राज्ञो देशान्तरवर्ती 'राजा' 'मित्रं' बन्धुर्भवति । तथा 'द्विषन्तम्' अन्यं राजानं पुरोहितयुक्तो राजा 'बाधते' विनाशयति ॥

पुनरपि द्वेधा प्रशंसति— "क्षत्रेण क्षत्रं जयति, बलेन बलमश्नुते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितस्तस्मै विश

सञ्जानते, सम्मुखा एकमनसो, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः"–इति। पूर्ववद् (२८७पृ०) व्याख्येयम् ॥

अथ राज्ञः पुरोहितवरणमन्त्रमाह— "भूर्भुवस्स्वरोममो ऽहमस्मि, स त्वं; स त्वमस्यमो ऽहं; द्यौरहं पृथिवी त्वं; सामाहमृक् त्वं; तावेह संवहावहै, पुराण्यस्मान् महाभयात् तनूरसि तन्वं मे पाहि"–इति। 'भूर्भुवस्स्वः'–इतिशब्दैर्लोकत्रयाभिमानिन्य देवता उच्यन्ते, प्रणवेन परमात्मा। एते सर्वे अनुगृह्णन्त्वित्यभिप्रायः। पुरोहितः 'अहम्' 'अमः' द्युलोकरूपो ऽस्मि, त्वन्तु 'सः' भूलोकरूपोऽसि। पुनरपि 'स त्वमसि, अमोऽहम्'–इत्यभिधानं दार्ढ्यार्थम्। तस्यैव व्याख्यानं 'द्यौरहं पृथिवी त्वम्'–इति। तथा सामरूपोऽहम्, ऋगूपस्त्वमसि। 'तौ' उभावावाम् 'इह' राष्ट्रे 'आ' समन्तात् 'पुराणि' तदुपलक्षितग्रामांश्च 'संवहावहै' सम्यग् वहनं पुरादिनिर्वाहं करवावहै। त्वं मम 'तनूः' शरीरमसि, अतो मदीयां 'तन्वं' शरीरं 'अस्मात्' ऐहिकात्, आमुष्मिकात् च 'महाभयात्' 'पाहि' रक्ष ॥

अनेन मन्त्रेण राज्ञा कृतो यः पुरोहितः, तस्य राजदत्तविष्टराभिमन्त्रणमाह— "या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः, ता मह्यमस्मिन्नासने ऽच्छिद्रं शर्म यच्छत"–इति *। सोमो राजा यासा मोषधीनां ताः 'सोमराज्ञः', 'बह्वः' बहुजातीयाः, 'शतविचक्षणाः' शतशाखाभिन्नाः। तादृश्य ओषधयो याः सन्ति, तास्तथाविधाः हे ओषधयः! 'अस्मिन्नासने' तृणादिनिर्मिते कटादिरूपे 'मह्यं' पुरोहिताय 'छिद्ररहितं शर्म' दुःखसम्भेदरहितं सुखं 'यच्छत' दत्त ॥

* ऋ० १०. ९७, १८। तै० ब्रा० २ ८, २। गो० ग० सू० ४ १०, ४।

अभिमन्त्रिते विष्टरे उपवेशन माह — "या ओषधीः सोम-राज्ञीर्विष्ठिताः पृथिवी मनु, ता मह्यं मस्मिवासने ऽच्छिद्रं शर्म यच्छत"—इति * । वंशदलादिनिर्मितविष्टरगताः 'ओषधयः' पृथिवी मनु 'विष्ठिताः' विशेषेण स्थापिताः, ता मह्य मित्यादि पूर्ववत् ( २८८पृ० ) ॥

पुरोहितस्य पाद्यार्थं समानीताना मपा मभिमन्त्रणमन्त्र' दर्शयति — "अस्मिन् राष्ट्रे श्रिय मावेशयाम्यतो देवीः प्रति पश्या-म्यापः"—इति † । हे आपः! पुरोहितोऽहं मस्मिन् राष्ट्रे 'श्रियम् आवेशयामि' धनादिसम्पदं सम्पादयामि । अतः कारणाद् 'देवीः' द्योतनात्मिकाः युष्मान् प्रति पश्यामि ॥

ताभिरद्भिः पुरोहितस्य पादप्रक्षालनमन्त्र माह— "दक्षिणं पाद मवनेनिजे ऽस्मिन् राष्ट्र इन्द्रियं दधामि ; सव्यं पाद मवने-निजे ऽस्मिन् राष्ट्र इन्द्रियं वर्द्धयामि ; पूर्वं मन्य मपरं मन्यं पादा-ववनेनिजे देवा राष्ट्रस्य गुप्त्या अभयस्यावरुद्धै"—इति ‡ । मदीयं दक्षिणं पादम् 'अवनेनिजे' प्रक्षालयामि । तेन अस्मिन् राष्ट्रे प्राणिना मिन्द्रियपाटवहेतुं धनं सम्पादयामि । वामपादप्रक्षाल-नेन च तद् वर्द्धयामि । 'पूर्वं' प्रथमम् 'अन्यं' दक्षिणं पादं शोध-यित्वा, 'अपरं' पश्चात् 'अन्यं' वामं पादं शोधयामि । हे देवाः! एव मुभौ पादौ प्रक्षालयामि, तच्च राष्ट्रस्य 'गुप्त्यै' रक्षार्थम्, 'अभ-यस्य' चौरादिभयराहित्यस्य 'अवरुद्धै' सम्पादनाय भवति ॥

---

* ऋ० सं० १० ६० १८ । वा० सं० १२ ६६ ( एतत्पूर्वा ऋगपि तत्र ६२ ) । म० ब्रा० २ ८ ४ । गौ० गृ० ४ १०, ३ ।

† म० ब्रा० २ ८ ५, ६ । गौ० गृ० ४ १० ७, ८ ।

‡ म० ब्रा० २ ८ ७, ८ । गौ० गृ० ४ १०, ९ १० ।

पादप्रक्षालनावशिष्टाना मपा मभिमन्त्रणमन्त्र माह—"आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे"—इति। 'पादावनेजनीः' पादप्रक्षालनभूता इमा आपो 'मे' मदीयं 'द्विषन्तं' शत्रुं निःशेषेण दहन्तु ॥ ४ (२७) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां पञ्चमाध्याये
( चत्वारिंशाध्याये ) चतुर्थः खण्डः ॥ ४ (२७) ॥

---

॥ अथ पञ्चमः खण्डः ॥

अथातो ब्रह्मणः परिमरो यो ह वै ब्रह्मणः परिमरं वेद पर्येनं द्विषन्तो भ्रातृव्याः परि सपत्ना म्रियन्ते ऽयं वै ब्रह्म योऽयं पवते त मेताः पञ्च देवताः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निर्विद्युद्वै विद्युत्य वृष्टि मनुप्रविशति सान्तर्धीयते तां न निर्जानन्ति यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति स ब्रूयाद्विद्युतो मरणे द्विषन्मे म्रियतां सो ऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति क्षिप्रं हैवैनं न निर्जानन्ति वृष्टिर्वै वृष्ट्वा चन्द्रमस मनुप्रविशति सान्तर्धीयते तां न निर्जानन्ति यदा वै म्रियते ऽथा-

न्तर्धीयते ऽथैनं न निर्जानन्ति स ब्रूयाद् वृष्टेर्मरणे द्विषन् मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति क्षिप्रं हैवैनं न निर्जानन्ति चन्द्रमा वा अमावास्याया मादित्य मनुप्रविशति सोऽन्तर्धीयते तं न निर्जानन्ति यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति स ब्रूयाच्चन्द्रमसो मरणे द्विषन्मे म्रियतां सो ऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति क्षिप्रं हैवैनं न निर्जानन्त्यादित्यो वा अस्तं यन्नग्नि मनुप्रविशति सोऽन्तर्धीयते तं न निर्जानन्ति यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति स ब्रूयादादित्यस्य मरणे द्विषन्मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति क्षिप्रं हैवैनं न निर्जानन्त्यग्निर्वा उद्वान् वायु मनुप्रविशति सोऽन्तर्धीयते तं न निर्जानन्ति यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति स ब्रूयादग्नेर्मरणे द्विषन्मे म्रियतां सो ऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति क्षिप्रं हैवैनं न निर्जानन्ति ता वा एता देवता अत एव पुनर्जायन्ते वायोरग्निर्जायते प्राणाद्धि बलात् मथ्यमानो ऽधिजायते तं दृष्ट्वा ब्रूयादग्निर्जायतां मा मे द्विषन् जन्यत एव पराङ् प्रजिघात्वित्यतो हैव पराङ् प्रजिघात्यग्नेर्वा

आदित्यो जायते तं दृष्ट्वा ब्रूयादादित्यो जायतां मा मे द्विषन् जन्यत एवं पराङ् प्रजिघ्रात्वित्यतो हैव पराङ् प्रजिघ्रात्यादित्याद्वै चन्द्रमा जायते तं दृष्ट्वा ब्रूयाच्चन्द्रमा जायतां मा मे द्विषन् जन्यत एव पराङ् प्रजिघ्रात्वित्यतो हैव पराङ् प्रजिघ्राति चन्द्रमसो वै वृष्टिर्जायते तां दृष्ट्वा ब्रूयाद् वृष्टिर्जायतां मा मे द्विषन् जन्यत एव पराङ् प्रजिघ्रात्वित्यतो हैव पराङ् प्रजिघ्राति वृष्टेर्वै विद्युज्जायते तां दृष्ट्वा ब्रूयाद्विद्युज्जायतां मा मे द्विषन् जन्यत एव पराङ् प्रजिघ्रात्वित्यतो हैव पराङ् प्रजिघ्राति * स एष ब्रह्मणः परिमरस्तमेतं ब्रह्मणः परिमरं मैत्रेयः कौषारवः सुत्वने कैरिशये भार्गायणाय राज्ञे प्रोवाच तं ह पञ्च राजानः परिममुस्ततः सुत्वा महज्जगाम तस्य व्रतं न द्विषतः पूर्व उपविशेद् यदि तिष्ठन्तं मन्येत तिष्ठेतैव न द्विषतः पूर्वः संविशेद् यद्यासीनं मन्येतासीतैव न द्विषतः पूर्वः प्रस्वप्याद् यदि जाग्रतं मन्येत जागृयादेवापि ह यद्यस्याश्ममूर्धा द्विषन् भवति क्षिप्रं हैवैनं स्तृणुते-स्तृणुते ॥ ६ ( २८ ) ॥

॥इत्यैतरेयब्राह्मणेऽष्टमपञ्चिकायां पञ्चमोध्यायः॥ ५॥

---

* "प्रजिघ्रात्वित्यतो०—० प्रजिघ्रति" क। एवं पूर्वत्र नेह सर्वत्र ।

अथोक्तपुरोहितसञ्चितस्य शत्रुचयार्थं कञ्चित् प्रयोग माह—“अथातो ब्रह्मणः परिमरो ; यो ह वै ब्रह्मणः परिमरं वेद; पर्येनं द्विषन्तो भ्रातृव्याः परि सपत्ना म्रियन्ते”—इति । 'अथ' पौरोहित्यविधानानन्तरम्, यतः पुरोहितेन सम्पाद्यः शत्रुचयो ऽपेचितः, 'अतः' कारणाद् 'ब्रह्मणः परिमरः' एतन्नामकः कर्मविशेषः, अभिधीयत इति शेषः । ब्रह्मशब्देनात्र वायुर्विवचितः* ; “अयं वै ब्रह्म, योऽयं पवते”—इति वक्ष्यमाणत्वात् ( १४पं० ) । तस्य वायोः परितो विद्युदादीनां मरणप्रकारः 'परिमरः'—इत्युच्यते† । तद्भावनारूपस्य कर्मविशेषस्य तदेव नामधेयम् । 'यः' पुमान् ब्राह्मणः परिमरं 'वेद' मनसा भावयति, 'एनं परि' एतस्य परितो ऽवस्थितासु सर्वासु दिक्षु, इदानीम् एनं 'द्विषन्तः' द्वेषं कुर्वन्तः शत्रवो म्रियन्ते ; ज्ञात्या शत्रवः 'सपत्नाः', तेऽपि परितो म्रियन्ते ‡ ; तस्मादेतद् वदनं सम्पादनीयम् ॥

वेद्यस्वरूप माह— “अयं वै ब्रह्म, यो ऽयं पवते, त मेताः

---

* “यद् ब्रह्मणः परिमर इत्युपासीत”—इति तै० आ० ९, १०, ४ । “ब्रह्मणः परिमरः । परिम्रियन्ते ऽस्मिन् पञ्च देवता विद्युद् वृष्टिश्चन्द्रमा आदित्यो ऽग्निरित्येताः ; अतो वायुः परिमरः, श्रुत्यन्तरप्रसिद्धेः ( ऐ० ब्रा० ८, ५, ५, ) । स एष पदार्थः वायुरूपत्वेनागम्य इत्याकाशो ब्रह्मणः परिमरः, तमाकाशं वाय्वात्मानं ब्रह्मणः परिमर इत्युपासीत”—इति तत्र सा० भा० ।

† “परिमरो उभयतो मरणयुक्तो ; यस्य पक्षौ अपक्षोऽपि मतः, पक्षोऽपि मतः, तादृशो”—इति तै० सं० ५, ६, २१, सा० भा० ।

‡ “पर्येनं म्रियन्ते द्विषन्तः सपत्नाः, परि येऽप्रिया भ्रातृव्याः”—इति तै० आ० ९, १०, ४ । “परि एनं मेधाविनं प्रतिस्पर्धिनो द्विषन्तोऽद्विषन्तोऽपि सपत्ना यतो भवन्ति, अतो विशेष्यन्ते द्विषन्तः सपत्ना इति । ये एवं द्विषन्तः सपत्नाः, ते परिम्रियन्ते, म्रियमाणाम् लभन्ते । किञ्च ये चाप्रिया अस्य भ्रातृव्या अद्विषन्तोऽपि, ते च परिम्रियन्ते”—इति तत्र सा० भा० ।

पञ्च देवता. परिम्रियन्ते,— विद्युद् वृष्टिश्चन्द्रमा आदित्योऽग्निः" –इति। यः 'अयं' वायुः 'पवते' अन्तरिक्षे सञ्चरति, अय मेव ब्रह्मशब्देन विवक्षितः। 'एताः' विद्युदादयः पञ्च देवताः 'तं' वायुं 'परिम्रियन्ते' तस्य परितो विनाशं गच्छन्ति। तदेतदब्रसम्बन्धेयस्वरूपम् ॥

तत्रादौ विद्युतो मृतिं प्रतिपादयति— "विद्युद्वै विद्युत्य वृष्टि मनुप्रविशति, सान्तर्धीयते, तां न निर्जानन्ति"–इति। येयं विद्युदस्ति, सा 'विद्युत्य' प्रकाशं कृत्वा, पश्चाद् वृष्टि मनुप्रविशति; अत एव सा 'अन्तर्धीयते' अदर्शनं प्राप्नोति। 'तां' वृष्टौ प्रविष्टां विद्युतं क्व गता, कुत्र स्थिता? इति मनुष्या निःशेषेण न जानन्ति ॥

तत्र दृष्टान्त माह— "यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति"–इति। लोके कश्चित् पुरुषो यस्मिन् क्षणे म्रियते, तस्मिन्नेव क्षणे अन्यैर्न दृश्यते, ततो जना विचार्यापि क्व गतः कुत्रावस्थित इति 'एनं' पुरुषं मृतं 'न निर्जानन्ति'; यद्यपि कुणपं पश्यन्ति, तथापि जीवात्मानं न जानन्त्येव। तथैव विद्युद्विनाश इति द्रष्टव्यम् ॥

'यथोक्तध्यानवतो जप्यं' मन्त्र* माह— "स ब्रूयाद्विद्युतो मरणे द्विषन् मे म्रियतां, सोऽन्तर्धीयतां, तं मा निर्ज्ञासिषुरिति"–इति। विद्युतो मरणे तदुपासको द्विषदित्यादिकं मन्त्रं ब्रूयात्। तस्याय मर्थः— इयं विद्युदिव मदीयः शत्रुः म्रियताम्, स पुनः केनापि न दृश्यताम्, अतो विचार्यापि क्व गतः, क्वास्ते? इति 'तं' शत्रुं तदीया बन्धवो निःशेषेण मा जानन्त्विति ॥

* "जपमन्त्र" क।

जपफलं दर्शयति— "क्षिप्रं हैवैनं न निर्ज्ञानन्ति"–इति । शीघ्र मेव मृत मेनं शत्रुं तदीया बन्धवो नैव जानन्ति ॥

विद्युत इव वृष्टेर्विनाशं दर्शयति— "वृष्टिर्वै वृष्ट्वा चन्द्रमस मनुप्रविशति, सान्तर्धीयते, तां न निर्जानन्ति ; यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति , स ब्रूयाद् वृष्टेर्मरणे द्विषन् मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति ; क्षिप्रं हैवैनं न निर्जानन्ति"–इति । येयं वृष्टिरस्ति, सेयं 'वृष्टा' भूमौ जलं पातयित्वा, स्वय माप्यमण्डलरूपं चन्द्रमस मनुप्रविशति । अन्यत् पूर्ववद् योज्यम् ॥

चन्द्रमसो विनाशं दर्शयति— "चन्द्रमा वा अमावास्याया मादित्य मनुप्रविशति, सोऽन्तर्धीयते, तं न निर्जानन्ति; यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति, स ब्रूयाच्चन्द्रमसो मरणे द्विषन् मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति ; क्षिप्रं हैवैनं न निर्जानन्ति"–इति । अयं चन्द्रमाः 'अमावास्यायां' तिथौ सायङ्काले आदित्य मनुप्रविशति । अन्यत् पूर्ववत् ॥

आदित्यस्य विनाशं दर्शयति— "आदित्यो वा अस्तं यन्नग्नि मनुप्रविशति , सोऽन्तर्धीयते, तं न निर्जानन्ति ; यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति, स ब्रूयादादित्यस्य मरणे द्विषन् मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति ; क्षिप्रं हैवैनं न निर्जानन्ति"–इति । आदित्यो यदास्तं मेति, तदानी मग्नि मनुप्रविशति । तदेतत् तैत्तिरीयैः समाम्नातम्— "अग्निं वावादित्यः सायं प्रविशति, तस्मादग्निर्दूरान्नक्तं ददृशे ; उभे हि तेजसी सम्पद्येते"–इति ( ब्रा॰ ८. १. ३. * ) अन्यत् पूर्ववत् ॥

---

* "उद्यन्तं वावादित्य मग्निरनुसमारोहति , तस्माद्धूम एवाग्नेर्दिवा ददृशे"–इति तत्पाठः ।

अग्नेर्विनाशं दर्शयति— "अग्निर्वा उद्वान् वायु मनुप्रविशति, सोऽन्तर्धीयते, तं न निर्जानन्ति ; यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति, स ब्रूयादग्नेर्मरणे द्विषन् मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति ; क्षिप्रं हैवैनं न निर्जानन्ति"—इति। 'उद्वान्' अग्नेरुपशमः, तं प्राप्नुवन्नग्निर्वायु मनुप्रविशति,; वायुबाहुल्ये दीपविनाशदर्शनात्। अन्यत् पूर्ववत्॥

वायोः परितो म्रियमाणानां देवतानां पुनर्वायोरेव जन्म दर्शयति— "ता वा एता देवता अत एव पुनर्जायन्ते"—इति। 'वायोः' जगत्कारणभूतसूत्रात्मरूपत्वात् जगदेकदेशानां विद्युदादीनां जन्मविनाशौ वायुधीनौ॥

पूर्वं विद्युदादीनां मग्न्यन्तानां क्रमेण विनाशो दर्शितः; इदानीं मग्न्यादीनां विद्युदन्तानां क्रमेण उत्पत्तिं विवक्षुरग्नेरुत्पत्तिं दर्शयति— "वायोरग्निर्जायते ; प्राणाद्धि बलान्मथ्यमानो ऽधिजायते ; तं दृष्ट्वा ब्रूयादग्निर्जायतां मा मे द्विषन् जन्यत एव पराङ् प्रजिघ्यत्वित्यतो हैव पराङ् प्रजिघ्यति"—इति। योऽयं मग्निः, सोऽयं वायोर्जायते। कथं मेतदिति, तदुच्यते— 'प्राणाद्' बलात् प्राणवायुसम्बन्धिशक्तिविशेषान्मथ्यमानोऽयं मग्निः अधिकत्वेन जायते*। 'तं' जायमान मग्निं दृष्ट्वा सोऽयं मग्न्यादिजन्माभिज्ञाता अग्निरित्यादिकं मन्त्रं जपेत्। अथ मग्निर्वायोः सकाशात् सुखेन जायतां, 'मे द्विषन्' मदीयः शत्रुः 'मा जनि' मोत्पद्यताम्। अत एव शत्रुः 'पराङ् प्रजिघ्यतु' विमुखो भूत्वा प्रकर्षेण गच्छतु। 'इति' एतस्मिन् मन्त्रे जपिते सति 'अतः' जपितुः सकाशात् शत्रुः विमुखो भूत्वा दूरे गच्छति॥

---

* "प्राणोऽग्निर्जायते' मतः"—इति तै० ब्रा० १, १, ९, १ द्रष्टव्यम्।

आदित्यस्योत्पत्तिं दर्शयति— “अग्नेर्वा आदित्यो जायते ; तं दृष्ट्वा ब्रूयादादित्यो जायतां मा मे द्विषन् जन्यत एव पराङ् प्रजिष्यत्वित्यतो हैव पराङ् प्रजिष्यति”–इति । रात्रावग्निं प्रविष्ट आदित्यः परेद्युरग्नेर्जायते । अत एव अहनि अग्निस्तेजोरहितः, सूर्योऽधिकतेजा भासते *। अन्यत् पूर्ववत् ॥

चन्द्रमस उत्पत्तिं दर्शयति— “आदित्याद्वै चन्द्रमा जायते† ; तं दृष्ट्वा ब्रूयाच्चन्द्रमा जायतां मा मे द्विषन् जन्यत एव पराङ् प्रजिष्यत्वित्यतो हैव पराङ् प्रजिष्यति”–इति । अमावास्याया मादित्ये प्रविष्टश्चन्द्रमाः शुक्लपक्षप्रतिपदि आदित्यात् जायते । अन्यत् पूर्ववत् ॥

वृष्टेरुत्पत्तिं दर्शयति— “चन्द्रमसो वै वृष्टिर्जायते ‡ ; तां दृष्ट्वा ब्रूयाद् वृष्टिर्जायतां मा मे द्विषन् जन्यत एव पराङ् प्रजि-

---

* २९५पृष्ठगता टीप्पणी द्रष्टव्यत्वीका ।

† “अयं सोमो सपो अन्नस रेत.”–इति तै० १. १६४. ३५ । किञ्च “अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते ; तदेतेनोपेक्षितव्यम्, आदित्यतोऽस्य दीप्तिर्भवतीति ; ‘सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः’ ( वा० स० १८. ४०. )’–इत्यपि निगमो भवति ०—० ; ‘अत्राह गोरमन्वत’–इति ( सं० १. ८४. १५. )”–इति निरु० २. २. २ ।

‡ “पर्जन्याद् वै वृष्टिर्जायते”–इति शत० ब्रा० १२. १. १. २ । “रसात्मकत्वात् चन्द्रमसः रसानुप्रदानसामर्थ्यम्.”–इति दु० ( निरु० ११. १. ६. ) । चन्द्रम-पदस्य निर्वचनम् निरु० ११. १. ५, वै० ब्रा० २. २. १० । “अथाद वृष्टिरिवाजनि”–इति स० ७. ९४. १ । “सौम्या आप.”–इति च गतं पुरस्तात् ( १भा० ६१३० २पं० ) । वस्तुतः सूर्यस्यैव मुख्यं वृष्टिप्रदत्वम् । तथाहि— “अग्निर्वा इतो वृष्टिं समीरयति, मरुत. सृष्टां नयन्ति, यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्त्तेऽथ वर्षति”–इत्यादि तै० स० २. ४. १०. स्फुटं द्रष्टव्यम् । उक्त मितोऽपि पुरस्तात् ( १भा० ६१३० ६पं० ) “असाविमां वृष्ट्याऽनुग्रहमभिजिघ्रति”–इति ।

ध्यन्तितो हैव पराङ् प्रजिघांसति"—इति। जलमये चन्द्रमण्डले प्रविष्टा वृष्टिः कालान्तरे चन्द्राज्जायते। अन्यत् पूर्ववत् ॥

विद्युदुत्पत्तिं दर्शयति—"वृष्टेर्वै विद्युज्जायते*; तां दृष्ट्वा ब्रूयाद् विद्युज्जायतां मा मे द्विषन् जन्यत एव पराङ् प्रजिघ्यलि-ष्यन्तो हैव पराङ् प्रजिघ्यसि"—इति। वृष्टौ प्रविष्टा विद्युत् पुनरपि कदाचित् प्रसन्नाया वृष्टेर्जायते। अन्यत् पूर्ववत् ॥

उक्त मर्थ मुपसंहरति—"स एष ब्रह्मणः परिमरः"—इति। यत्र वायुसम्बन्धिपरिमरनामकः कर्मविशेष उक्तः (२८१पृ०), 'स एषः' ध्यानरूपो जप्य इत्यर्थः † ॥

त मेतं कर्मविशेष मुदाहरणमुखेन प्रशंसति—"त मेतं ब्रह्मणः परिमरं मैत्रेयः कौषारवः सुत्वने कैरिशये भार्गायणाय राज्ञे प्रोवाच, तं ह पञ्च राजानः परि ममुस्ततः सुत्वा महज्जगाम"—इति। उक्तं कर्मविशेषं कुषारुपुत्रो मैत्रेयनामको महर्षिः सुत्वनाम्ने राज्ञे प्रोवाच। कीदृशाय सुत्वने ? किरिशस्यापत्यं कैरिशिः तस्मै 'कैरिशये', भर्गस्य गोत्रापत्यं भार्गायणः तस्मै 'भार्गायणाय'। 'तं' सुत्वनामकं राजानं 'परितः' सर्वदिक्षु वर्तमानाः पञ्चसङ्ख्याका द्वेषिणो राजानो मृताः। ततः 'सुत्वा' राजा 'महत्' प्रौढं निष्कण्टकपदं जगाम ॥

---

* "विद्युत् वषा ज्योतिः"—इति शत० ब्रा० ७. ३. १. ११। "आपो वै अग्निः"—इति च तत्रैव ८, ३-२, ४। "आदित् पश्चात् रेतसो ज्योतिः पश्यन्ति"—इति ऋ० ८, ३, ६. ३०। निरुक्तेऽपि ४. २. ६ द्रष्टव्यम्। "आदद्दितिमन्त्रस्य अपरं व्याख्यान मपि सहदेवाभाषि छा० उप० ३. १०. ७ द्रष्टव्यम्।

† "एष वै महान् वायो रुपित्रांशुपयन्त्रमा विद्युदादिम."—इत्यादिः (११. ४. ४. १) शतपथस्य तत्र समालोच्य इति दिक्।

उक्तं जन्मविशेष मनुष्ठातुः व्रतविशेषं विधत्ते— "तस्य व्रतं, —न द्विषतः पूर्वं उपविशेद्, यदि तिष्ठन्तं मन्येत तिष्ठेतैव; न द्विषतः पूर्वः संविशेद्, यद्यासीनं मन्येतासीतैव; न द्विषतः पूर्वः प्रस्वप्याद्, यदि जाग्रतं मन्येत जाग्रियादेव"–इति। 'तस्य' अनुष्ठातुः एतद् व्रत मुच्यते। एतदीयो द्विषन् यदा उपविशति, ततः प्राक् स्वयं नोपविशेत्; किन्तु चारमुखेन तदीयं वृत्तान्तं विचार्य; यदि द्विषन्तं तिष्ठन्तं मन्येत, तदानीं स्वय मपि तिष्ठेतैव; तथा यदा द्विषन् शयनं करोति, ततः प्राक् स्वयं न 'संविशेत्' शयनं न कुर्यात्; यदि द्विषन्त मुपविष्टं मन्येत, तदा स्वय मप्युपविशेदेव। तथा द्विषन् यदा निद्रां करोति, ततः प्राक् स्वयं न प्रस्वप्यात्; किन्तु यदि द्विषन्तं जाग्रतं मन्येत, तदानीं स्वय मपि 'जाग्रियात्' प्रबुद्ध एवावतिष्ठेतैव॥

एवं व्रत माचरतः फलं दर्शयति— "अपि ह यद्यस्याश्म-मूर्द्धा द्विषन् भवति क्षिप्रं हैवैनं स्तृणुते-स्तृणुते"–इति। 'अस्य' राज्ञो ऽनुष्ठातुः 'द्विषन्' शत्रुः यदि 'अश्ममूर्द्धा' पाषाणसदृश-शिरस्को भवति, अतिप्रबल इत्यर्थः; तथाप्ययं कर्मविशेषः शीघ्र मेव 'एनं' शत्रुं 'स्तृणुते' हिनस्ति। अभ्यासोऽध्याय-समाप्त्यर्थः॥ ५ (२८)॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य अष्टमपञ्चिकायां पञ्चमाध्याये (चत्वारिंशाध्याये) पञ्चमः खण्डः॥ ५ (२८)॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'-नामभाष्ये
ऐतरेयब्राह्मणस्य अष्टमपञ्चिकाया पञ्चमोऽध्यायः ॥

अथात स्तुतशस्त्रयोश्चत्वारि[१] । अथातः पुनरभिषेकस्य सप्त[२] । अथात ऐन्द्रस्त्रीणि[३] । स य इच्छेन्नव[४] । अथातः पुरोधायाः पञ्च[५] ॥ ५ * ॥

अथात स्तुतशस्त्रयोः, पर्यू षु प्र धन्व, एतेन ह वा अष्टौ ॥ ५ † ॥

॥ इति अष्टमपञ्चिका समाप्ता ॥

॥ इति ऐतरेयं ब्राह्मणं सम्पूर्णम् ॥

---

* १६९, १८६, २२३, २६७, ३०४ पृ० ( ४—७—३—९—५ = २८ पृ० ) ।
† १६९, २३५, २५०पृ० ( १०—१०—८=२८ पृ० ) । १आ० २२१२०।१८८५ई०।

## ॥ अथ सङ्केताक्षर सूची ॥

| | |
|---|---|
| अ० चि० अभिधानचिन्तामणिः । | ब्रह्माण्ड पु० ब्रह्माण्डपुराणम् । |
| आर्षानु० ··· आर्षानुक्रमणी । | भ० पु० ·· भविष्यपुराणम् । |
| गो० ब्रा० ··· गोपथब्राह्मणम् । | मार्कं० पु० मार्कण्डेयपुराणम् । |
| प्रा० त० ··· प्रायश्चित्ततत्त्वम् । | लीला० ··· लीलावती । |
| बृ० दे० ··· बृहद्देवता । | वा० ब्रा० वाजसनेयब्राह्मणम् । |

शां० भा० ·· शांकरभाष्यम् ।

## ॥ अथ परिच्छेदसूची ॥

### ॥ अथ सप्तमपञ्चिका ॥

---

॥ अथ अष्टमपञ्चिका ॥

१ *

# ॥ अथैतरेयविषयसूची ॥



तदत्र ब्राह्मणे एकादश यज्ञा विहिता इति संक्षेपः ।

---

* इत आरभ्य सप्तविध-सूचीपत्राणि चतुर्थभागस्य शेषे योजितव्यानि ।

---

॥ प्रथमपञ्चिकायाः द्वितीयाध्यायारम्भः ६० पृ० ॥

---

॥ प्रथमपञ्चिकायास्तृतीयाध्यायारम्भः ९२ पृ० ॥

॥ प्रथमपञ्चिकायाश्चतुर्थोऽध्यायारम्भः १४० पृ०॥

॥ प्रथमपञ्चिकायाः पञ्चमाध्यायारम्भः १९५ पृ० ॥

॥ द्वितीयपञ्चिकायाः प्रथमाध्यायारम्भः २३१ पृ० ॥

॥ द्वितीयपञ्चिकाया द्वितीयाध्यायारम्भः ३११ पृ० ॥

---

॥ द्वितीयपञ्चिकायास्तृतीयाध्यायारम्भः ३६३ पृ० ॥

॥ द्वितीयपञ्चिकायाश्चतुर्थाध्यायारम्भः ३९९ पृ० ॥

॥ इति सभाष्यैतरेयस्य प्रथमभागस्य विषयसूची ॥

---

॥ अथ द्वितीयभागस्य ॥

---

॥ तृतीयपञ्चिकायाः प्रथमाध्यायारम्भः १ पृ० ॥

———

॥ तृतीयपञ्चिकायाः द्वितीयाध्यायारम्भः ५१ पृ० ॥

॥ तृतीयपञ्चिकायास्तृतीयाध्यायारम्भः ११४ पृ० ॥

## ॥ तृतीयपञ्चिकायाश्चतुर्थाध्यायारम्भः १८१ पृ० ॥

---

॥ चतुर्थपञ्चिकायाः प्रथमाध्यायारम्भः २४५ पृ० ॥

---

॥ चतुर्थपञ्चिकाया द्वितीयाध्यायारम्भः २७८ पृ० ॥

---

॥ चतुर्थपञ्चिकायाश्चतुर्थाध्यायारम्भः ३६६ पृ० ॥

ॐ अविवेक्यं नाम दशमं मह इति आश्विनपरिच्छिन्न माध्यवीयमानेन बोध्यम्।
२भा॰ ११८१॰ द्रष्टव्यम्।

॥ इति सभाष्यैतरेयस्य द्वितीयभागस्य विषयसूची ॥

॥ अथ तृतीयभागस्य ॥

॥ पञ्चमपञ्चिकायाः प्रथमाध्यायारम्भः १ पृ० ॥



॥ पञ्चमपञ्चिकायाः द्वितीयाध्यायारम्भः ४१ पृ० ॥

---

॥ पञ्चमपञ्चिकायास्तृतीयाध्यायारम्भः ८१ पृ० ॥



---

॥ पञ्चमपञ्चिकायाश्चतुर्थाध्यायारम्भः १२३ पृ० ॥



* प्रायणीयेन सह गणिते तु एकादशस्याह्नश्च इति वक्तव्यं स्यात्।

---

॥ पञ्चमपञ्चिकायाः पञ्चमाध्यायारम्भः १६१ पृ० ॥

॥ षष्ठपञ्चिकायाः पञ्चमाध्यायारम्भः ३६० पृ० ॥

॥ इति सभाष्यैतरेयस्य तृतीयभागस्य विषयसूची ॥

## ॥ अथ चतुर्थभागस्य ॥

### ॥ सप्तमपञ्चिकायाः प्रथमाध्यायारम्भः १ पृ० ॥



### ॥ सप्तमपञ्चिकाया द्वितीयाध्यायारम्भः ८ पृ० ॥



* एतानि पृ० पुस्तके मुद्रितेभ्योऽधिकानि।

---

॥ सप्तमपञ्चिकायास्तृतीयाध्यायारम्भः ५८ पृ० ॥

* पञ्चाहसंस्थेन सोमयागविशेषः अञ्जःसवो नाम।

॥ सप्तमपञ्चिकायाश्चतुर्थाध्यायारम्भः १०३ पृ० ॥

॥ सप्तमपञ्चिकायाः पञ्चमाध्यायारम्भः १३१ पृ० ॥

॥ अष्टमपञ्चिकायाः प्रथमाध्यायारम्भः १६४ पृ० ॥

---

॥ अष्टमपञ्चिकाया द्वितीयाध्यायारम्भः १८२ पृ० ॥

॥ अष्टमपञ्चिकायास्तृतीयाध्यायारम्भः २२३ पृ० ॥



---

॥ अष्टमपञ्चिकायाश्चतुर्थाध्यायारम्भः २३७ पृ० ॥

---

॥ अष्टमपञ्चिकायाः पञ्चमाध्यायारम्भः २७३ पृ० ॥

॥ इति सभाष्यैतरेयस्य चतुर्थभागस्य विषयसूची ॥

॥ समाप्ता चेयं सभाष्यैतरेयविषयसूची ॥

---

## २

## ॥ अथैतरेयटीप्पनीविषयसूची ॥

# ४
# ॥ अथैतरेयालोच्यश्रुतिसूची ॥

---

* ऋग्वेदस्य तु ८९ पृ० १ पं० द्रष्टव्य मिदम्।

---

# ५

## ॥ अथैतरेयाख्यायिकार्थसूची ॥

### ॥ प्रथमभागस्य ॥

पृष्ठा

॥ द्वितीयभागस्य ॥



* मेध्या.— पुरुष, अश्व, गो, अवि, अज, ब्रीहि ।

अमेध्या — किम्पुरुष, गौर, गवय, उष्ट्र, शरभ ।

* माहेन्द्रो ग्रह, माध्यन्दिनं सवनम्, निष्कं वल्श प्रहरन् त्रिष्टुप् छन्द, पृष्ठस्तोत्र निपादकद्वन्द्वप्रयादीनि षट् सामानि चेन्द्रस्योद्धार ।

॥ तृतीयभागस्य ॥

---

॥ चतुर्थभागस्य ॥

६

## ॥ अथैतरेयाम्नातमन्त्रादिसूची ॥

| मन्त्रादि | | | नाम | भागः | पृष्ठा |
|---|---|---|---|---|---|
| अं शुरंशुष्टे देव सोमाप्यायताम् | | ... | यजुः | १ | १८८ |
| अग्न इन्द्रश्च दाशुषो दुरोणे | | ... | ऋक् | १ | ३५१ |
| अग्नये ऽग्निवते स्वाहा | ... | ... | यजुः | ४ | २६ |
| अन्नवते स्वाहा | ... | ... | यजुः | ४ | २६ |
| तन्तुमते स्वाहा | ... | ... | यजुः | ४ | २६ |
| तपस्वते जनवते | ... | ... | यजुः | ४ | ३३ |
| पथिकृते स्वाहा | ... | ... | यजुः | ४ | ३३ |
| पवित्रवते स्वाहा | ... | ... | यजुः | ४ | ३६ |
| ऽप्सुमते स्वाहा | ... | ... | यजुः | ४ | ३० |
| प्रणीयमानायानुब्रूहि | ... | ... | प्रैषः | १ | १८८ |
| मथ्यमानायानुब्रूहि | ... | ... | प्रैषः | १ | ११६ |
| मरुत्वते स्वाहा | ... | ... | यजुः | ४ | ३६ |
| वरुणाय स्वाहा | ... | ... | यजुः | ४ | ३६ |
| विविचये स्वाहा | ... | ... | यजुः | ४ | २६ |
| वीतये स्वाहा | ... | ... | यजुः | ४ | २६ |
| वैश्वानराय स्वाहा | ... | ... | यजुः | ४ | ३५ |
| व्रतपतये स्वाहा | ... | ... | यजुः | ४ | ३१ |

| मन्त्रादि | नाम | भागः | पृष्ठा |
|---|---|---|---|
| उत श्वेत व्याशुपत्वा ... ... | पदम् | ३ | ४११ |
| उतेमनन्नमुः ... ... | निगदः | १ | २६८ |
| उतेमाशु मानं पिपर्त्ति ... ... | पदम् | ३ | ४१२ |
| उतो पद्याभिर्जविष्ठः ... ... | पदम् | ३ | ४११ |
| उदस्याद्दे यदितिरायुर्यज्ञपतावधात् ... | ऋक् | ३ | १६८ |
| उदस्याद्दे यदितिरायुर्यज्ञपतावधात् ... | ऋक् | ४ | १४ |
| उन्नराद्दवनीयम् ... ... | प्रैषः | ३ | १६३ |
| उप द्रव पयसा गोधुगोषम् ... ... | ऋक् | १ | १५८ |
| उप प्रेष्य होतर्हव्या देवेभ्यः ... ... | प्रैषः | १ | २६७ |
| ( उपसद्याय मीळ्हुषे ) ... ... | ३ ऋचः | २ | २१७ |
| उपसर्पन् धरणं मातरं ... ... | ऋक् | ३ | ११८ |
| ( उपहूतं रथन्तरं सह पृथिव्या ) ... | ऋक् | १ | ३०४ |
| ( उरु विष्णो विक्रमस्व ) ... ... | ऋक् | २ | १४७ |
| | | | |
| ऋच मक्षिनुत्वमयत्यम्हत्वं ... | गाथा | ४ | ५६ |
| ऋतावानं वैश्वानरं ( १—३ ) ... | ३ ऋचः | ३ | ३११ |
| ऋतुयाजाः ( १—४ ) ... ... | ४ ऋचः | २ | २४० |
| ( ऋतुयाजान् द्विदेवत्यान् ) ... | गाथा | ३ | २१६ |
| | | | |
| ( एकया च दशभिश्च स्वभूते )]] ... | ऋक् | २ | १३४ |
| एकविंशः ... ... | स्तोमः | २ | ३११ |
| एकविंशः ... ... | स्तोमः | ३ | २५ |
| ( एष सवैता •—• मनुस्सिमः ) ... | यजुः | २ | ४२८ |
| एष पन्था उरुगाय. सुशेवो ... | गाथा | ४ | ६० |
| एष वसुः पुरुवसुः ... ... | यजुः | १ | ४०८ |
| एष वसुः संयद्वसुः ... ... | यजुः | १ | ४०८ |
| एष वसुविंदद्वसुः ... ... | यजुः | १ | ४०८ |

---

७

## ॥ अथैतरेयश्रुतदेशव्यक्तिनामसूची ॥

विशेषतो द्रष्टव्यम्—



* "अजीगर्त्तस्य कुटस्य ऋषिर्जन्हुसन्मतः"—इति सा० भा०। अस्मन्मते नैतन्नोपपद्यते, जन्हूनामिति बहुवचनत्वात्, अपि तु जन्हु-वंश्यो ऽजीगर्त्तः स्यात्।

अथ यत्र नामैक्ये ऽपि व्यक्त्यैक्ये संशयः, तादृशस्थले व नाम्न इह द्विरु-ल्लेखः कृतो नान्येषां आम्नायेऽत्र बहुवारश्रुतानामपीति।

८

# ॥ अथैतरेयखण्डप्रतीकसूची ॥

प॰ = पञ्चिका, अ॰ = अध्यायः, ख॰ = खण्डः, भा॰ = भागः, पृ॰ = पृष्ठा ।

---

## ॥ सूचीपत्रसूची ॥

॥ अथ ॥

# ॥ ऐतरेयब्राह्मणक्रोडपत्रम् ॥

( शिल्पशस्त्रेषु * मैत्रावरुणस्य † )

## ॥ वालखिल्यशस्त्रम् ‡ ॥

( हिङ्कारः § )

॥ हिं३म् ॥

( अभिहिङ्कारः ¶ )

॥ भूर्भुवस्स्वरो३म् ॥

---

* "शिल्पानि शंसन्ति"—इत्यादि ३ भा० ३६० पृ० द्रष्टव्यम्।

† "प्रशास्ता ब्राह्मणाच्छंस्यच्छावाक इति प्रस्थितो होत्रकाः"—इति आश्व० श्री० ५. १. १०। प्रशास्तेति मैत्रावरुणस्य संज्ञान्तरम्।

‡ "स च तृतीयसवने यदैव वालखिल्याभिर्व्याहृतैकपदया"—इत्यादि ३ भा० ३३८ पृ०। हिङ्कारादिर्वषट्कारान्तो वालखिल्यशस्त्रप्रयोग एषः।

§ "हिं३ इति हिङ्कृत्य"—इति आश्व० श्री० १. ५. ३। "हिङ्कार इत्यासां ऋषभः"—इति ऐ० ब्रा० ३ भा० ३ पृ०।

¶ "हिं३ इति हिंकृत्य भूर्भुवःस्वरो मिति जपति"—इति, "एषोऽभिहिङ्कारः"—इति, "प्रणवेनैव होत्रकाणां अभिहिङ्कारः"—इति च आश्व० श्री० १. २. ३, ४, २६। "सैषा मन्त्रप्रायश्चित्तिर्यदेता व्याहृतयस्तस्मादेवैव यज्ञ प्रायश्चित्तिः कर्त्तव्या"—इति च ऐ० ब्रा० ३ भा० १८० पृ०।

( आहाव: * )

॥ अध्वर्यो शोंशोंसावो३म् ॥

( प्रतिगर: † )

॥ शंसा मोदैवो३म् ॥

( स्तोत्रिय: ‡ )

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।

एभिर्वर्धास इन्दुभो३म्[§] ॥

यत्र क्व च ते मनो दक्षं दधस उत्तरम् ।

तत्रा सदः कृणवसो३म् ॥

नहि ते पूर्तमक्षिपद् भुवन्नेमानां वसो ।

अथा दुवो वनवसो३म्[¶] ॥

---

* "अध्वर्यो शोंशोंसावोमित्याह्वयते तृतीयसवने सप्ताक्षरेण"—इति ऐ० ब्रा० २ भा० ५२, ५४ पृ० । "अध्वर्यो शोंशोंसावो मिति तृतीयसवने शस्त्रादिष्वाहाव:"—इति च आश्व० श्रौ० ५. १८. ४ ।

† "शंसा मोदैवोमिति अध्वर्युः प्रतिगृणाति पञ्चाक्षरेण"—इति ऐ० ब्रा० २ भा० ५२, ५४ पृ० ।

‡ "आत्मा वै स्तोत्रियः प्राणा वालखिल्याः"—इत्यादि ऐ० ब्रा० २ भा० १५२ पृ० । "अथ कस्मादाग्नेयौ स्तोत्रियानुरूपौ भवत इति"—इत्यादि च २ भा० २८१, २८८ पृ० । "तेषां तृचाः स्तोत्रियानुरूपाः प्रगाथादिषु सर्वेषु"—इति आश्व० श्रौ० ५. १०. १८ । आग्नेयौ = 'एह्यू षु', 'आविरगामि' ।

§ "प्रणवौ प्रथमेनावसानम्" -इति, "आत्मा मोङ्कारं विभाज्य कृत्वा"—इति च आश्व० श्रौ० १. २. १३, १० । ¶ ऋ० सं० ६. १६. १६, १७, १८ ।

( स्तोत्रियः * )

अग्ने त्वं नो अन्तमः ।
उत त्राता शिवो भवा वरूथ्यो३म् ॥
वसुरग्निर्वसुश्रवाः ।
अच्छा नक्षि द्युमत्तमं रयिं दो३म् ॥
तन्त्वा शोचिष्ठ दीदिवः ।
सुम्नाय नूनमीमहे सखिभ्यो३म् † ॥

( स्तोत्रियः ‡ )

एहू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।
एभिर्वर्धास इन्दुभो३म् ॥
यत्र क्व च ते मनो दक्षं दधस उत्तरम् ।
तत्रा सदः कृणवसो३म् ॥

---

* षष्ठेऽहनि तृतीयसवने मैत्रावरुणस्य अग्ने त्वमिति द्वे, तं त्वा शोचिष्ठेत्येका। एवं मिलिता द्वैपदस्तृचः स्तोत्रियः। तथैव सूचितमाश्वलायनेन—"मैत्रावरुणस्याग्ने त्वं नो अन्तमः अग्ने भव सुषमिधा समिद्ध इति स्तोत्रियानुरूपौ। अथ वालखिल्या विहरेत्"—इति ८. २. १।

† ऋ० सं० ५. २४. १, २, ४।

‡ अयं च स्तोत्रियस्तृचः, अस्यानुरूपः आग्निरगामीति। तथाहि—"मैत्रावरुणस्य"—इत्यधिकृत्य, "एहू षु ब्रवाणि ते, आग्निरगामि भारतः"—इति आश्व० श्रौ० ७. ८. १।

नहि ते पूर्त्तं मक्षिपद् भुवन्नेमानां वसो।
अथा दुवो वनवसो३म् *॥

( अनुरूपः † )

आग्निरगामि भारतो वृत्रहा पुरुचेतनः।
दिवोदासस्य सत्पतो३म्॥
स हि विश्वाति पार्थिवा रयिं दाशन्महित्वना।
वन्वन्नवातो अस्तृतो३म्॥
स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता।
वृहत्ततन्थ भानुनो३म् ‡॥

( अनुरूपः § )

अग्ने भव सुषमिधा समिद्धः।
उत वर्हिरुर्विया वि स्तृणीतो३म्॥

---

* ऋ० सं० ६.१६.१६, १७, १८।

† "स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति"—इत्यादि ऐ०ब्रा०२ भा०२६७८० पूर्वपृष्ठायाः ‡ टीप्पनी चात्र द्रष्टव्या।

‡ ऋ० सं० ६.१६.१९, २०, २१।

§ पूर्वपृष्ठायाः * टीप्पनी द्रष्टव्या।

उत द्वार उशतीर्वि श्रयन्ताम्।
उत देवाँ उशत आ वहेहो३म्॥
अग्ने वीहि हविषा यक्षि देवान्।
स्वध्वरा कृणुहि जातवेदो३म् *॥

(अनुरूपः †)

अग्निरगामि भारतो वृत्रहा पुरुचेतनः।
दिवोदासस्य सत्पतो३म्॥
स हि विश्वाति पार्थिवा रयिं दाशन्महित्वना।
वन्वन्नवातो अस्तृतो३म्॥
स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता।
बृहत्ततन्थ भानुनो३म् ‡॥ §

(पुनराधावः ¶)

॥ अध्वर्यो शोंसावो३म्॥

---

* ऋ० सं० ७ १७. १, २ ३।

† तृतीय पृष्ठायाः ‡ टीप्पणी द्रष्टव्या।

‡ ऋ० सं० ६ १६ १९, २०, २१। [ औ० ८. २. २।

§ "अत ऊर्द्ध्वं मन्त्रकृद्भ्यो विकृतानि ग्रीष्माणि शंसेयुः"—इति आश्व०

¶ स्तोत्रियानुरूपेभ्यः प्रतिपदनुचरेभ्यः प्रगाथेभ्यो याज्याभ्य इति पृथगाह्वानम्"—इति आश्व० औ० ५. १०. १२।

( पुनः प्रतिगरः )

॥ शंसा मोदैवो३म् ॥

( वालखिल्यानां पच्छो विहरणम् * )

अभि प्र वः सुराधस मिन्द्रस्य समिषो महीः ।
शतानीका हेतयो अस्य दुष्टरा इन्द्रमर्चं यथा विदो३म्॥
यो जरितृभ्यो मघवा पुरूवसुर्यदी सुता अमन्दिषुः ।
गिरिर्न भुज्मा मघवत्सु पिन्वते सहस्रेणेव शिक्षतो३म् ॥
इन्द्रो विश्वस्य गोपतो४म् † ॥ १ ‡

प्र सु श्रुतं सुराधसं हन्ति वृत्राणि दाशुषे ।
शतानीकेव प्र जिगाति धृष्णुयार्चा शक्र मभिष्टयो३म् ॥
यः सुन्वते स्तुवते काम्यं वसु दत्राणि पुरभोजसः ।
गिरेरिव प्र रसा अस्य पिन्विरे सहस्रेणेव मंहतो३म् ॥
इन्द्रो विश्वस्य भूपतो४म् ॥ २

* ऐ० ब्रा० २ भा० ३४२ पृ० १२ पंक्तितो द्रष्टव्यम् ।

† ऐ० ब्रा० २ भा० ३४५ पृ० १—१० पंक्त्यो द्रष्टव्याः । सैकपदा प्रगाथानां त्रिमात्र मिति चतुर्मात्रः प्रणवः सर्वेत्र । "चतुर्मात्रो त्रिमात्रे"—इति आश्व० श्रौ० १. २. १४ ।

‡ एष प्रगाथादिः । वालखिल्यसूक्तानां प्रथमादिषु चतुर्षु सूक्तेषु अष्टौ दश दश ऋचः सन्ति, ततः पञ्चमषष्ठयोरष्टावष्टाविति तासां मधूलनया पदपच्छाशद् । तेषां द्वयोर्द्वयोः प्रथयनेन अष्टाविंशतिः प्रगाथाः सम्पद्यन्ते ।

आ त्वा सुतास इन्दवो मदा य इन्द्र गिर्वणः ।
अनेहसं वो हवमान मूतये मदा ये इन्द्र गिर्वणोऽ३म् ॥
आपो नु वज्रिन्न न्वोक्यं१सर उप स्तोतेषु दधिरे ।
आ त्वा वसो हवमानास इन्दवः पृणन्ति शूरराधसोऽ३म् ॥
इन्द्रो विश्वस्य चेततोऽ४म् ॥ ३
यदी सुतास इन्दवो मध्वः स्वादिष्ठ मी पिब ।
अनेहसं प्रतरणं विवक्षण मभि प्रिय ममन्दिषोऽ३म् ॥
आपो न धायि सवनम्म आ वसो प्र चुद्रे व त्मना धृषत् ।
आ यथा मन्दसानः किरासि नो दुघा इवोप दाशुषोऽ३म् ॥
इन्द्रो विश्वस्य राजतोऽ४म् ॥ ४
आ नः सोम सुपं द्रवद् विभूतिं राधसो महः ।
प्र वीर मुग्र विविचि धनस्पृतं
शिंयानो अश्वो न सोढभोऽ३म् ॥
यत्ते स्वधावन्स्वदयन्ति धेनवः सदा पीपेथ दाशुषे ।
उद्रीव वज्रिन्नवतो वसुत्वनेन्द्र कण्वेषु रातयोऽ३म् ॥
इन्द्रो विश्वं विराजतोऽ४म् ॥ ५
आ नः सोमेष्वध्वरे विभूति मर्चिता वसुम् ।
उग्रं न वीरं नमसोपसेदि मेयानो अश्वो न तोशतोऽ३म् ॥

यं ते॑ स्वधावन्त्स्वदय॑न्ति धे॒नव॒ इन्द्र॒ कण्वे॑षु रा॒तय॑: ।
उग्री॒व व॑ज्रिन्व्रतो न सिञ्चते॒ पौरे॒ छन्द॑यसे॒ हवो३म् ॥

प्र चे॑तन प्र चे॑तयो४म् * ॥ ६

यद्ध॑ नू॒नं यद्वा॑ य॒ज्ञे यद्वा॑ पृथि॒व्यामधि॑ ।
रथि॒रासो॒ हर॑यो॒ ये ते॑ अस्रिध॒ यद्वा॑ पृथि॒व्या मघो३म् ॥
अतो॑ नो य॒ज्ञमा॒शुभि॑र्मदे मते॒ येभि॑: स्व॑: परीयसे ।
येभि॒र्नि॑ द॒स्युं मनु॑षो नि॒घोष॑य उग्र उग्रे॒भिराग॑हो३म् ॥

इन्द्रं॑ द्यु॒म्नाय॑ न इ॒षो४म् ॥ ७

यद्ध॑ नू॒नं प॑रा॒वति॑ वाता॑ इव प्रसर्पि॒ण॑: ।
अजि॒रासो॒ हर॑यो॒ ये त॑ आ॒शवो॒ यद्वा॑ पृथि॒व्यां दि॒वो३म् ॥
यु॒जान॑ इन्द्र॒ हरि॑भिर्मदे मते॒ येभि॒र्विश्वं॒ स्व॑र्दृशे॑ ।
येभि॒रप॑श्यं मनु॑षः परी॒यस॒ ऋष्व॒ ऋष्वे॑भि॒रा ग॑हो३म् ॥

रा॒ये वाजा॑य वज्रिवो४म् ॥ ८

ए॒तावा॑तस्त ईमहे॒ दीर्घ॑नीथे॒ दमू॑नसि ।
यथा॑ कण्वे॑ मघवन् मेधे॑ अध्व॒र इन्द्र॑ सु॒तस्य॒ गोम॑तो३म् ॥

---

* ऐ० ब्रा० ३ भा० ३७५ पृ० ११—२० पंक्तयो द्रष्टव्याः। एतदादीनि पदानि तैत्तरेयकचतुर्थारण्यके श्रुतानि। "त्रयोविंशति महाव्रतान् पादान् मघानाम्नीभ्यः सपुरीषाभ्यः"—इति च आश्व० श्रौ० ८ २ २३।

यथा प्रावो मघवन् मेध्यातिथिं यथा नीपातिथिं धने ।
यथा गोशर्यमसिषासो अद्रिवो
यथा नीपातिथिं धनो३म् ॥
शविष्ठ वज्रिन्नृञ्जसोऽ४म् ॥ ९

एतावतस्ते वसो यथा यकाये दशव्रजे ।
यथा कण्वे मघवन् त्रसदस्यवि विद्याम शूर नव्यसो३म् ॥
यथा प्राव एतशं कृत्व्ये धने इन्द्र गोमद्धिरण्यवत् ।
यथा गोशर्ये असनोऋजिश्वनि यथा वशं दशव्रजो३म् ॥
मंहिष्ठ वज्रिन्नृञ्जसोऽ४म् ॥ १०

यथा मनौ सांवरणाविन्द्र सुवाने अमन्दयाः ।
पृषध्रे मेध्ये मातरिश्वनि सोममिन्द्रापिबः सुतो३म् ॥
नीपातिथौ मघवन्मेध्यातिथौ पुष्टिगावृन्नृनसि ।
यथा सोमं दशशिप्रे दशोण्ये
स्युमरश्मावृजूनसि सचो३म् ॥
चिकित्वो अभि नो नयोऽ४म् ॥ ११

यथा मनौ विवस्वति शर्यार्ते जिह्मि सुक्षितम् ।
पार्षद्वाणः प्रस्कण्वं समसादयत् सोमं शक्रापिबः सुतो३म् ॥
यथा त्रिते छन्द इन्द्र जुजोषसि त्वोतो दस्यवे वृकः ।

सहस्राण्यसिषामङ्गवा ऋषिरायौ मादयसे सचो३म् ॥

इन्द्रो विदे तमु स्तुषो४म् ॥ १२

य उक्थेभिर्न विन्धते वाजे वाजिज्ञतमातो ।

यस्य त्व मिन्द्र स्तोमे षु चाकनञ्चिकित्रा स्वे ।ष चोदनो३म्॥

इन्द्रं त मच्छा वद नव्यस्या मती जुहूमसि स्ववस्यवः ।

तं त्वा वयं सुदुघा मिव गोदुहो ऽविष्यन्तं न भोजसो३म्॥

त मूतये हवामहो४म् ॥ १३

य उक्था केवला दधे त्रिधातु सत्तमे पदे ।

यस्मा चक्रं सप्तशीर्षाणं मानुषं

र्यः सोमं धृषिता पिबो३म् ॥

यस्मै विष्णुस्त्रीणि पदा विचक्रम आदिर्ज्जनिष्ट पौंस्यम् ।

स१ त्विमाविश्वाभुवनानि चिक्रदद्रुप मिवस्य धर्मभो३म्॥

जेतार मपराजितो४म् ॥ १४

यो नो दाता वसूना स रायस्पोष मिन्वति ।

यस्मै त्व वसो दानाय मंहस इन्द्र तं हूमहे वयो३म्॥

विद्मा ह्यस्य सुमतिं नवीयसी स्तोमैरिन्द्र हवामहे ।

वसूयवो वसूपतिं शतक्रतुं गमेम गोमति व्रजो३म् ॥

स नः पर्षदति द्विषो४म् ॥ १५

यो नो दाता स नः पिता स रायस्पोषं मघ्नुते ।
यस्मै त्वं वसो दानाय शिक्षसि सहाए उग्र ईशानको३म्
अयामन्नुग्रो मघवा पुरूवसुः सुतावन्तो हवामहे ।
तं त्वा वयं मघवन्निन्द्र गिर्वणो गोरश्वस्य प्रदातुनो३म्॥
अनुष्टुब्छन्द ऋतं वृहो४म् ॥ १६
कदा चन स्तरीरसि शिवो शिक्षसि दाशुषे ।
यस्मै त्वं मघवन्निन्द्र गिर्वणो नेन्द्र सश्चसि दाशुषो३म्॥
उपोपेन्नु मघवन् भूय इन्नु ते कांपवत्कृणुधी वयम् ।
अस्माकं गिर उत सुष्टुतिं वसो दानं देवस्य पृच्यतो३म्॥
स नः पर्षदतिद्विषो४म् ॥ १७
कदा चन प्र युच्छसि वधैः शुष्णं निचोपयन् ।
प्र यो ननक्षे अभ्योजसा क्रिविं सुभे निपासि जन्मनो३म्
तुरीयादित्य हवनं त इन्द्रिय मादिक्ष निष्ट पार्थिवः ।
यदेदस्तभीत् प्रथयन्नमूं दिव मा तस्यावमृतं दिवो३म्॥
पूर्वस्य यत्ते अद्रिवो४म् ॥ १८
यस्यायं विश्व आर्यः स चोणो समु सूर्यम् ।
स मिन्द्रो रायो वृहतीरधूनुत दासः शेवधिपा अरो३म्॥
तिरश्चिद्र्ये रुशमे पवीरवि सोमा इन्द्र समन्द्विषुः ।

संशुक्रासः शुचयः सङ्घाशिरस्तुध्येत् सो अज्यते रयो३म॥
सुम आ घहि नो वसो४म् ॥ १९
अस्ताविं मन्म पूर्व्यं विप्रासो अर्को मानृचुः ।
तुरण्यवो मधुमन्तं घृतश्चुतं ब्रह्मेन्द्राय वोचतो३म् ॥
पूर्वीश्चतस्य बृहतीरनूषतास्मै सुवानास इन्दवः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवः स्तोतुर्मेधा असृक्षतो३म् ॥
पूर्त्तिः शविष्ठ शस्यतो४म् ॥ २०
उपमं त्वा मघोनां ज्येष्ठं स्तुतेषु मन्दसि ।
नचन्त इन्द्र मवसे सुकृत्यया ज्येष्ठं च वृषभाणो३म् ॥
पूर्भित्तमं मघवन्निन्द्र गोविद मेवास्मै इन्द्र मरख ।
यथा संवर्त्ते अमदो यथा कृश ईशानं राय ईमहो३म् ॥
नूनं तं नव्यं सन्न्यसो४म् ॥ २१
एतत्त इन्द्र वीर्यं वावृधानो दिवे दिवे ।
य आयुं कुत्समतिथिग्वमर्दयो
गीर्भिरुपन्ति कारवो३म् ॥
ते स्तोभन्त ऊर्जं मावन् घृतश्चुतं वाजयन्तो हवामहे ।
तं त्वा वयं हर्यश्वं शतक्रतुं गीरासो नचन् धीतिभो३म्॥
प्र भो जनस्य वृत्रहो४मः ॥ २२

आ नो विश्वेषां रस मवन्तु सप्त सिन्धवः ।
पूषा विष्णुर्हवनं मे सरस्वती मध्वः सिञ्चन्त्वद्रयो३म ॥
ये परावति सुन्विरे जनेष्वा शृणोतु पृथिवी हवम् ।
आपो वातः पर्वतासो वनस्पतिर्ये अर्वावतीन्दवो३म् ॥
समन्येषु ब्रवावहो४म् ॥ २३

आ नो विश्वे सजोषसो विश्वे सन्वन्त्वा वसु ।
विश्वा द्वेषांसि जहि चाव चा कृधि
देवासो गन्तनोप नो३म् ॥
वसवो रुद्रा अवसे न आ गमन् यत्रा सोमस्य तृम्पसि ।
मीढेषु चित्ते मदिरासो अंशवः शृण्वन्तु मरुतो हवो३म्॥
शूरा ये गोषु गच्छता४म् ॥ २४

इन्द्र नेदीय एदिहि वाज आ वचि सुक्रतो ।
आजिपते नृपते त्वमिद्धि नो सितमेधाभिरूतिभो३म् ।
आ शन्तम शन्तमाभिरभिष्टिभिः ससवांसो विश्वखिरे ।
वीतीहोत्राभिरुत देववीतिभिरा स्वापे स्वापिभो३म् ॥
सखा सुशेवो अद्वयो४म् ॥ २५

यदिन्द्र राधो अस्ति ते कृधि प्रजास्वा भगम् ।
आजितुरं सत्पतिं विश्वचर्षणिं मावोन मघवत्तमो३म् ।

गिरिर्न भुज्मा मघवत्सु पिन्वते
यदीं सुता अमन्दिषोइम् ॥
शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।
गिरिर्न भुज्मा मघवत्सु पिन्वते
यदीं सुता अमन्दिषोइम् ॥

शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।
यो अरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षतोइम् ॥
इन्द्रो विश्वस्य गोपतो४म् ॥ १

प्र सुश्रुतं सुराधसमर्चा शक्रमभिष्टये ।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसोइम् ॥
शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।
यः सुन्वते सुवते काम्यं वसु सहस्रेणेव मंहतोइम् ॥
इन्द्रो विश्वस्य भूपतो४म् ॥ २

आ त्वा सुतास इन्दवो मदा ये इन्द्र गिर्वणः ।
आ त्वा वसो हवमानास इन्दव उप स्तोत्रेषु दधिरोइम् ।
अनेहसं वो हवमान मूतये मध्वः क्षरन्ति धीतयः ।
आपो नु वज्रिन्नन्वोक्यं१ सरः पृणन्ति शूर राधसोइम् ॥
इन्द्रो विश्वस्य चेतनो४म् ॥ ३

यदीं सुतास इन्दवोऽभि प्रियममन्दिषुः ।
आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मनाधृषोइम् ॥
अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठमीं पिब ।

आपो न धायि सवनं म आ वसो दुघाइवोपदाशुषोऽ३म्॥
इन्द्रो विश्वस्य राजतो४म् ॥ ४

आ नः स्तोम मुप द्रवद्धियानो अश्वो न सोतृभिः।
उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषोऽ३म् ॥
प्र वीर मुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः।
यत्ते स्वधावन्स्वदयन्ति धेनव इन्द्र कण्वेषु रातयो३म्॥
इन्द्रो विश्वं विराजतो४म् ॥ ५

आ नः सोमे स्वध्वर इयानो अत्यो न तोशते।
उद्रीव वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयोऽ३म् ॥
उग्रं न वीरं नमसोप सेदिम विभूति मक्षिता वसुम्।
यत्ते स्वदावन्स्वदन्ति गूर्त्तयः पौरे छन्दयसे हवो३म् ॥
प्र चेतन प्रचेतयो४म् ॥ ६

यद्य नूनं यद्वा यज्ञे यद्वा पृथिव्या मधि।
येभिर्निं दस्यु मनुषो निघोषयो येभिः स्वः परीयसो३म्
रथिरासो हरयो ये ते अस्रिध ओजो वातस्य पिप्रति।
अतो नो यज्ञ माशुभिर्महे-
मत उग्र उग्रेभिरा गहो३म्॥
इन्द्र द्युमाय न इषो४म् ॥ ७

यद्व नूनं परावति यद्वा पृथिव्यां दिवि ।
येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशोऽ३म् ॥
अजिरासो हरयो ये त आशवो वाता इव प्रसक्षिणः ।
युजान इन्द्र हरिभिर्मदेमत ऋष्व ऋष्वेभिरागह्योऽ३म् ॥
राये वाजाय वज्रिवोऽ४म् ॥ ८

एतावतस्त ईमह इन्द्र सुम्नस्य गोमतः ।
यथा गोशर्ये असिषासो अद्रिवो मयि गोत्रं हरिश्रियोऽ३म् ॥
यथा कण्वे मघवन्मेधे अध्वरे दीर्घनीथे दमूनसि ।
यथा प्रावो मघवन् मेध्यातिथिं
यथा नीपातिथिं धनोऽ३म् ॥
प्रविष्ठ वज्रिन्नृञ्जसोऽ४म् ॥ ९

एतावतस्ते वसो विद्याम शूर नव्यसः ।
यथा गोशर्यं असनोऋजिश्वनोन्द्र गोमद्धिरण्यवोऽ३म् ॥
यथा कण्वे मघवन् त्रसदस्यवि यथा पक्थे दशव्रजे ।
यथा प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजोऽ३म् ॥
मंहिष्ठ वज्रिन्नृञ्जसोऽ४म् ॥ १०

यथा मनौ सांवरणौ सोममिन्द्रापिबः सुतम् ।
यथा सोम दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसोऽ३म् ॥

पृषध्रे मेध्ये मातरिश्वनीन्द्र सुवाने अमन्दथाः ।
नीपातिथौ मघवन्मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचो३म् ॥

चिकित्वो अभि नो नयो४म् ॥ ११

यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।
सहस्राण्यसिषासद्गवा ऋषिस्त्वोतो दस्यवे वृको३म् ॥
पार्षद्वाणः प्रस्वणं समसादयच्छयानं जिव्रिमुद्धितम् ।
यथा चित्ते छन्द इन्द्र जुजोषस्यायौ मादयसि सचो३म् ॥

इन्द्रो विदे तमु स्तुषो४म् ॥ १२

य उक्थेभिर्न विन्धते चिकिद्य ऋषिचोदनः ।
तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवो३म् ॥
यस्य त्वमिन्द्रस्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।
इन्द्रं तमच्छा वद नव्यस्या मत्यरिष्यन्तं न भोजसो३म् ॥

तं मूतये हवामहो४म् ॥ १३

य उक्था केवला दधे यः सोमं धृषितापिबत् ।
स त्वि१मा विश्वा भुवनानि चिक्रदद्दादिज्जनिष्टपौंस्यो३म् ॥
यस्यां अर्कं सप्तशीर्षाणं मानृचुस्त्रिधातु मुत्तमे पदे ।
यश्चे विष्णुस्त्रीणि पदा विचक्रम उपमित्रस्य धर्मभो३म् ॥

जेतार मपराजितो४म् ॥ १४

यो नो दाता वसूनामिन्द्रं तं हूमहे वयम् ।
वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहो३म् ॥
यस्मै त्वं वसो दानाय मंहसे स रायस्पोषमिन्वति ।
विद्मा ह्यस्य सुमतिं नवीयसीं गमेम गोमति व्रजो३म् ॥
स नः पर्षदतिद्विषो४म् ॥ १५

यो नो दाता स नः पिता महाँ उग्र ईशानकृत् ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः
सुतावन्तो हवामहो३म् ॥
यस्मै त्वं वसो दानाय शिक्षसि स रायस्पोषमश्नुते ।
अयामग्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नो३म् ।
क्रतुश्छन्द ऋतं बृहो४म् ॥ १६

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
अस्माकं गिर उत सुष्टुतिं वसो कण्ववच्छृणुधी हवो३म् ।
यस्मै त्वं मघवन्निन्द्र गिर्वणः शिक्षो शिक्षसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यतो३म् ॥
स नः पर्षदतिस्रिधो४म् ॥ १७

कदा चन प्र युच्छस्युभे नि पासि जन्मनी ।
यदेदस्तम्भीत् प्रथयन्नमूं दिवमादिच्च निष्ट पार्थिवो३म् ॥

प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयंन् ।
तुरीयादित्य हवनं त इन्द्रिय मा तस्थावमृतं दिवो३म्॥
पूर्वस्य यत्ते अद्रिवो४म् ॥ १८
यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
सं शुक्रासः शुचयः सद्भवा-
शिरः सोमा इन्द्र ममन्दिषो३म् ॥
स मिन्द्रो रायो वृहतीरधूनुत सं चोणी समु सूर्यम् ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत् सो अज्यते रयो३म्॥
सुम्न या धेहि नो वसो४म् ॥ १९
अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
पूर्वी ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षतो३म्॥
इन्द्रो रयिः पप्रथे वृष्णा शवोऽस्मे सुवानास इन्दवो३म्॥
तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
पूर्वीरृतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षतो३म्॥
पुष्टिः शविष्ठ शवसो४म् ॥ २०
उपमं त्वा मघोनां ज्येष्ठं च वृषभाणाम् ।
यथा संवर्ते अमदो यथा कृश एवास्मे इन्द्र मत्स्वो३म्।
मधन्त इन्द्र सखसे सुकृत्यया येषां सुतेषु मन्दसे ॥
पूर्भित्तम मघवन्निन्द्र गोविदमीशानं राय ईमहे३म्॥

नूनं तं नव्यं सन्न्यसोऽ४म् ॥ २१

एतत्त इन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः ।
तं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहो३म् ॥
य आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवेदिवे ।
ते स्तोभन्त ऊर्जमावन् घृतश्चुतं
पौरासो नक्षन् धीतिभो३म् ॥
प्र भो जनस्य वृत्रहोऽ४म् ॥ २२

आ नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः ।
आपो वातः पर्वतासो वनस्पतिः
शृणोतु पृथिवी हवो३म् ॥
पूषा विष्णुर्हवनं मे सरस्वत्यवन्तु सप्त सिन्धवः ।
ये परावति सुन्विरे जनेष्वा ये अर्वावतीन्दवो३म् ॥
समन्येषु ब्रवावहोऽ४म् ॥ २३

आ नो विश्वे सजोषसो देवासो गन्तनोप नः ।
शीर्ष्टेषु चित्ते मदिरासो अंशवो यत्रासोमस्य तृम्पसो३म् ॥
विश्वा द्वेषांसि जहि चाव चा कृधि विश्वे सन्वन्त्वा वसु ।
वसवो रुद्रा अवसे न आगमञ्छृण्वन्तु मरुतो हवो३म् ।
शूरो यो गोषु गच्छतोऽ४म् ॥ २४

इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।
वीती होत्राभिरुत देववीतिभिः ससवांसो विशृण्विरो३म्॥
आजिपते नृपते त्व मिद्धि नो वाज आ वक्षि सुक्रतो ।
आ यन्तमयन्तमाभिरभिष्टिभिरा स्वापे स्वापिभो३म् ॥
सखा सुशेवो अद्वयो४म् ॥ २५
यदिन्द्र राधो अस्ति ते माघोनं मघवत्तम ।
प्र स तिरा शचीभिर्ये त उक्थिनः
क्रतुं पुनत आनुषो३म् ॥
आजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम् ।
तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहो३म्॥
एवा ह्येवैवा हि देवो४म् ॥ २६
यस्ते साधिष्ठोऽवसे ते स्याम भरेषु ते ।
महि स्तूरं शश्वयं राधो अह्रयं प्रस्कण्वाय नि तोशयो३म् ॥
वयं त इन्द्र स्तोमभिर्विधेम त्व मस्माकं शतक्रतो ।
वयं होत्राभिरुत देवहूतिभिः ससवांसो मनामहो३म् ॥
आशो मन्याय मन्यवो४म् ॥ २७
सन्ति ह्यर्ये आशिष इन्द्र आयुर्जनानाम् ।
त्वामिद्धव तमसे समश्वयुर्गव्युरग्रे मथीनो३म् ॥

अह' हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोतिभिः।
अस्मान्नन्नस्व मघवन्नुपावसे,
धुक्षस्व पिप्युषी मिषो३म्॥
उपो मन्याय मन्यवो४म्॥ २८

( अथ वालखिल्यानां सर्वेषामो विवरणम् * )

अभि प्र वः सुराधस मिन्द्र मर्च यथा विदे।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षतो३म्॥
शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः।
गिरिर्न भुज्मा मघवत्सु पिन्वते
यदीं सुता अमन्दिषो३म्॥
इन्द्रो विश्वस्य गोपतो४म्॥ १
प्र सु श्रुतं सुराधस मर्चा शक्र मभिष्टये।
यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहतो३म्॥
शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसो३म्॥
इन्द्रो विश्वस्य भूपतो४म्॥ २

* ऐ० मा० श्मा० ३४४ ए० २१ २२पक्ती दृष्टव्ये, पुन २४६ ए० ६,७,८ पङ्क्तयश्च।

आ त्वा सुतास इन्दवो मदा ये इन्द्र गिर्वणः ।
आपो न वज्रिन्नन्वोक्यं१ सरः पृणन्ति शूर राधसो३म् ॥
अनेहसं वो हवमान मूतये मध्वः क्षरन्ति धीतयः ।
आ त्वा वसो हवमानास इन्दव उप स्तोत्रेषु दधिरो३म्
इन्द्रो विश्वस्य चेतनो४म् ॥ ३
यदीं सुतास इन्दवो ऽभि प्रिय ममन्दिषुः ।
आपो न धायि सवनं म आ वसो दुघाइवोपदाशुषो३म् ॥
अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठ मीं पिब ।
आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मनाधृषो३म् ॥
इन्द्रो विश्वस्य राजतो४म् ॥ ४
आ नः स्तोम मुप द्रवद्धियानो अश्वो न सोतृभिः ।
यं ते स्वधावन्त्स्वदयन्ति धेनव इन्द्र कण्वेषु रातयो३म् ॥
प्र वीर मुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ।
उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषो३म् ॥
इन्द्रो विश्वं विराजतो४म् ॥ ५
आ नः सोमे स्वध्वर इयानो अत्यो न तोशते ।
यं ते स्वदावन्त्स्वदन्ति गूर्त्तयः पौरे छन्दयसे हवो३म् ॥
उग्रं न वीरं नमसोप सेदिम विभूति मक्षितावसुम् ।

उद्रीवं वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयो३म् ॥

प्र चेतन प्रचेतयो४म् ॥ ६

यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्या मधि ।

अतो नो यज्ञमाशुभिर्महे-

मत उग्र उग्रेभिरा गहो३म् ॥

रथिरासो हरयो ये ते अस्रिध ओजो वातस्य पिप्रति ।

येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः परीयसो३म्

इन्द्र द्युम्नाय न इषो४म् ॥ ७

यद्ध नूनं परावति यद्वा पृथिव्यां दिवि ।

युजान इन्द्र हरिभिर्महेमत ऋष्व ऋष्वेभिरा गहो३म् ॥

अजिरासो हरयो ये त आशवो वाता इव प्रसक्षिणः ।

येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशो३म् ॥

राये वाजाय वज्रिवो४म् ॥ ८

एतावतस्त ईमह इन्द्र सुम्नस्य गोमतः ।

यथा प्रावो मघवन् मेध्यातिथिं

यथा नीपातिथिं धनो३म् ॥

यथा कण्वे मघवन्मेधे अध्वरे दीर्घनीथे दमूनसि ।

यथा गोशर्ये असिषासो अद्रिवो मयि गोत्रं हरिश्रियो३म् ॥

अविष्ठ वज्रिन्नृञ्जसो४म् ॥ ९

एतावतस्ते वसो विद्याम शूर नव्यसः ।
यथा प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजो३म् ॥
यथा कण्वं मघवन् त्रसदस्यवि यथा पक्थे दशव्रजे ।
यथा गोशर्ये असनोर्ऋजिश्वनीन्द्र गोमद्धिरण्यवो३म् ॥

मण्हिष्ठ वज्रिन्नृञ्जसो४म् ॥ १०

यथा मनौ सांवरणौ सोममिन्द्रापिबः सुतम् ।
नीपातिथौ मघवन्मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचो३म् ॥
पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रिमुद्धितम् ।
यथर सोम दंशगिमे दशोण्ये स्यूमरश्मावृजूनसो३म् ॥

चिकित्वो अभि नो नयो४म् ॥ ११

यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।
यथा त्रिते छन्द इन्द्र जुजोषस्यायौ मादयसे सचो३म् ॥
पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रिमुद्धितम् ।
सहस्राण्यसिषासद्गवा मृषिस्त्वोतो दस्यवे वृको३म् ॥

इन्द्रो विदेत सु स्तुपो४म् ॥ १२

य उक्थेभिर्न विन्धते चिकिद्य ऋषिचोदनः ।
इन्द्रं तमच्छा वद नव्यस्या मत्यरिष्यन्तं न भोजसे३म् ॥

यस्य त्वमिन्द्रस्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।
तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवो३म् ॥
त ऊतये हवामहो४म् ॥ १३

य उक्था केवला दधे यः सोमं धृषितापिबत् ।
यस्मै विष्णुस्त्रीणि पदा विचक्रम उपमित्रस्य धर्मभो३म् ॥
यस्मा अर्कं सप्तशीर्षाण मानृचुस्त्रिधातु सुत्तमे पदे ।
स त्विमा विश्वा भुवनानि चिक्रददादिज्जनिष्टपौंस्यो३म् ॥
जेतार मपराजितो४म् ॥ १४

यो नो दाता वसूना मिन्द्रं तं हूमहे वयम् ।
विद्मा ह्यस्य सुमति नवीयसी गमेम गोमति व्रजो३म् ॥
यस्मै त्वं वसो दानाय मंहसे स रायस्पोष मिन्वति ।
वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहो३म् ॥
स नः पर्षदतिद्विषो४म् ॥ १५

यो नो दाता स नः पिता महाँ उग्र ईशानकृत् ।
अयामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नो३म् ।
यस्मै त्वं वसो दानाय शिक्षसि स रायस्पोषं मश्नुते ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहो३म् ॥
क्रतुश्छन्द ऋतं बृहो४म् ॥ १६

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यतो३म् ॥
यश्चिद्धि त्वं मघवन्निन्द्र गिर्वणः शिवो शिवसि दाशुषे ।
अस्माकं गिर उत सुष्टुतिं वसो कण्ववच्छृणुधी हवो३म् ॥
स नः पर्षदतिस्त्रिधो४म् ॥ १७

कदा चन प्र युच्छस्युभे नि पासि जन्मनी ।
तुरीयादित्य हवनं त इन्द्रिय मा तस्थावमृतं दिवो३म् ॥
प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन् ।
यदेदस्तम्भीत् प्रथयन्नमूं दिवमादिज्जनिष्ट पार्थिवो३म् ॥
पूर्वस्य यत्ते अद्रिवो४म् ॥ १८

यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत् सो अज्यते रयो३म् ॥
स मिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।
सं शुक्रासः शुचयः सङ्गवाशिरः
सोमा इन्द्र ममन्दिषो३म् ॥
सुम्न आ धेहि नो वसो४म् ॥ १९

प्रस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षतो३म् ॥

तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवो३म् ॥
पूर्त्तिः शविष्ठ शस्यतो४म् ॥ २०
उपमं त्वा मघोनां ज्येष्ठं च वृषभाणाम् ।
पूर्भित्तमं मघवन्निन्द्र गोविद
मीशानं राय ईमहो३म् ॥
नृचन्त इन्द्र मवसे सुकृत्यया येषां सुतेषु मन्दसे ॥
यथा संवर्त्ते अमदो यथा कृश एवास्मे इन्द्र मत्स्वो३म्
नूनं तं नव्यं सन्न्यसो४म् ॥ २१
एतत्त इन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः ।
ते स्तोभन्त ऊर्ज मावन् घृतश्चुतं
पौरासो नक्षन् धीतिभो३म् ॥
य आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवेदिवे ।
त्वं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहो३म् ॥
प्र भो जनस्य वृत्रहो४म् ॥ २२
आ नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः ।
ये परावति सुन्विरे जनेष्वा ये अर्वावतीन्दवो३म् ॥
पूषा विष्णुर्हवनं मे सरस्वत्यवन्तु सप्त सिन्धवः ।

आपो वातः पर्वतासो वनस्पतिः
शृणोतु पृथिवी हवो३म् ॥
समन्येषु ब्रवावहो४म् ॥ २३

आ नो विश्वे सजोषसो देवासो गन्तनोप नः ।
वसवो रुद्रा अवसे न आगमञ्छृण्वन्तु मरुतो हवो३म् ।
विश्वा द्वेषांसि जहि चाव चा कृधि विश्वे सन्वन्त्वा वसु ।
गोष्ठेषु चित्ते मदिरासो अंशवो यत्रासोमस्य तृम्पसो३म् ॥
शूरो यो गोषु गच्छतो४म् ॥ २४

इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।
आ शंतम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभो३म् ॥
आजिपते नृपते त्वमिद्धि नो वाज आ वक्षि सुक्रतो ।
वीती होत्राभिरुत देववीतिभिः ससवांसो विशृण्विरो३म् ॥
सखा सुशेवो अद्वयो४म् ॥ २५

यदिन्द्र राधो अस्ति ते माघोनं मघवत्तम ।
तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहो३म् ॥
आजिपतुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम् ।
प्र नू तिरा शचीभिर्ये त उक्थिनः
क्रतुं पुनत आनुषो३म् ॥

एवा ह्येवैवा हि देवो४म् ॥ २६

यस्ते साधिष्ठोऽवसे ते स्याम भरेषु ते ।
वयं होत्राभिरुत देवहूतिभिः ससवांसो मनामहो३म् ॥
वयं त इन्द्र स्तोमेभिर्विधेम त्व मस्माकं शतक्रतो ।
महि स्थूरं शशयं राधो अह्रयं प्रस्कण्वाय नि तोशयो३म् ॥

आ यो मन्याय मन्यवो४म् ॥ २७

सन्ति ह्यर्य आशिष इन्द्र आयुर्जनानाम् ।
अस्मान्नक्षस्व मघवन्नुपावसे
धुक्षस्व पिप्युषी मिषो३म् ॥
अह्रं हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोतिभिः ।
त्वामिदेव तमसे समश्वयुर्गव्युरग्रे मथीनो३म् ॥

उपो मन्याय मन्यवो४म् ॥ २८

( अथ वालखिल्यानां यथापाठं शंसनम् * )

अभि प्र वः सुराधस मिन्द्र मर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षतो३म् ॥

---

* ऐ० आ० ३आ० ३४७ पृ० १ पंक्तितो द्रष्टव्यम् ।

शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसो३म्॥

आ त्वा सुतास इन्दवो मदा ये इन्द्र गिर्वणः।
आपो न वज्रिन्नन्वोक्यं१ सरः पृणन्ति शूर राधसो३म्॥
अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठमीं पिब।
आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मना धृषो३म्॥

आ नः स्तोम मुप द्रवद्धियानो अश्वो न सोतृभिः।
यं ते स्वधावन्त्स्वदयन्ति धेनव इन्द्र कण्वेषु रातयो३म्॥
उग्रं न वीरं नमसोप सेदिम विभूति मक्षितावसुम्।
उद्रीव वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयो३म्॥

यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्या मधि।
अतो नो यज्ञमाशुभिर्महेमत उग्र उग्रेभिरा गह्यो३म्॥
अजिरासो हरयो ये त आशवो वाता इव प्रसक्षिणः।
येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशो३म्॥

एतावतस्त ईमह इन्द्र सुम्नस्य गोमतः।
यथा प्रावो मघवन्मेध्यातिथिं यथा नीपातिथिं धनो३म्॥
यथा कण्वे मघवन्त्रसदस्यवि यथा पक्थे दशव्रजे।

यथा गोशर्ये असनोर्ऋजिश्वनीन्द्र गोमद्धिरण्यवो३म् ॥

प्र सु श्रुतं सुराधसमर्चा शक्रमभिष्टये ।

यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहतो३म् ॥

शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।

गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता अमन्दिषो३म्

यदीं सुतास इन्दवोऽभि प्रियममन्दिषुः ।

आपो न धायि सवनं म आ वसो दुघा इवोप दाशुषो३म्

अनेहसं वो हवमानमूतये मध्वः क्षरन्ति धीतयः ।

आ त्वा वसो हवमानास इन्दव उप स्तोत्रेषु दधिरो३म्

आ नः सोमे स्वध्वर इयानो अत्यो न तोशते ।

यं ते स्वदावन्त्स्वदन्ति गूर्तयः पौरे छन्दयसे हवो३म्

प्र वीरमुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ।

उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषो३म्

यद्ध नूनं परावति यद्वा पृथिव्यां दिवि ।

युजान इन्द्र हरिभिर्महेमत ऋष्व ऋष्वेभिरा गहो३म्

यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसो३म् ॥

य उक्था केवला दधे यः सोमं धृषितापिबत् ।

यस्मै विष्णुस्त्रीणि पदा विचक्रम उप मित्रस्य धर्मभो३म्

यस्य त्वमिन्द्र स्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।

तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवो३म्

यो नो दाता स नः पिता महाँ उग्र ईशानकृत् ।

अयामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नो३म्

यस्मै त्वं वसो दानाय मंहसे स रायस्पोषमिन्वति ।

वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहो३म् ॥

कदा चन प्र युच्छस्युभे नि पासि जन्मनी ।

तुरीयादित्य हवनं त इन्द्रियमा तस्थावमृतं दिवो३म्

यस्मै त्वं मघवन्निन्द्र गिर्वणः शिक्षो शिक्षसि दाशुषे ।

अस्माकं गिर उत सुष्टुतिं वसो कण्ववच्छृणुधी हवो३म्

अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।

पूर्वीरृतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षतो३म् ॥

समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।
सं शुक्रासः शुचयः सङ्गवाशिरः सोमा इन्द्रममन्दिषोऽ३म्

उपमं त्वा मघोनाञ्ज्येष्ठञ्च वृषभाणाम् ।
पूर्भित्तमं मघवन्निन्द्र गोविदमीशानं राय ईमहेऽ३म्

य आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवेदिवे ।
तं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहेऽ३म् ॥

आ नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः ।
ये परावति सुन्विरे जनेष्वा ये अर्वावतीन्दवोऽ३म् ॥

विश्वा द्वेषांसि जहि चाव चा कृधि
विश्वे सन्वन्त्वा वसु ।
शीष्टेषु चित्ते मदिरासो अंशवो यत्रा सोमस्य तृम्पसोऽ३म्

इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।
आ शन्तम शन्तमाभिरभिष्टिभिरा स्वापे स्वापिभोऽ३म् ॥

आजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम् ।
प्र सू तिरा शचीभिर्ये त उक्थिनः क्रतुं पुनत आनुषोऽ३म्

दिवि सूर्यो अरोचतो३म् ॥

भूरीदिन्द्रस्य वीर्यं१ व्यख्य मभ्यायति ।

राधस्ते दस्यवे वृको३म् ॥

शतं श्वेतास उक्षणो दिवि तारो न रोचन्ते ।

मह्ना दिवं न तस्तभो३म् ॥

शत वेणून्छतं शुनः शत चर्माणि म्लातानि

शतं मे वल्वजस्तुका अरुषीणां चतुःशतो३म् ॥

सुदेवाः स्थ काण्वायना वयोवयो विचरन्तः ।

अश्वासो न चङ्क्रमतो३म् ॥

आदित्थाप्तस्य चर्किरन्नानूनस्य महि श्रवः ।

श्यावीरतिध्वसन्पथश्चक्षुषा चन सन्नशो३म् ॥

इमानि वां भागधेयानि सिस्रत

इन्द्रावरुणा प्र महे सुतेषु वाम् ।

यज्ञेयज्ञे ह सवना भुरण्यथो

यत्सुन्वते यजमानाय शिक्षथो३म् ॥

निः षिध्वरीरोषधीराप आस्ता-
मिन्द्रावरुणा महिमान माशत ।
या सिस्रतू रजसः पारे अध्वनो
ययोः शत्रुर्नकिरादेव ओहतोऽम् ॥

सत्यं तदिन्द्रावरुणा कृशस्य वां
मध्व ऊर्मिं दुहते सप्त वाणीोऽम् ।
ताभिर्दाश्वांसं मवतं शुभस्पती
यो वा मदब्धो अभि पाति चित्तिभीोऽम् ॥

घृतप्रुषः सौम्या जीरदानवः
सप्त स्वसारः सदन ऋतस्य ।
या ह वा मिन्द्रावरुणा घृतश्चुत-
स्ताभिर्धत्तं यजमानाय शिक्षतोऽम् ॥

अवोचाम महते सौभगाय
सत्यं त्वेषाभ्यां महिमान मिन्द्रियोऽम् ।

अस्मान्त्स्विन्द्रावरुणा घृतश्चुत-

स्त्रिभिः साप्तेभिरवतं शुभस्पतीऽ३म् ॥

इन्द्रावरुणा यदृषिभ्यो मनीषां

वाचो मतिं श्रुतमदत्तमग्रेऽ३म् ।

यानि स्थानान्यसृजन्त धीरा

यज्ञं तन्वानास्तपसाभ्यपश्योऽ३म् * ॥

[ पुनराहाव. † ]

॥ शोंसावोऽ३म् ॥

[ पञ्चमो दूरोहणम् ]

हंसः शुचिषद् वसुरन्तरिक्षसोऽ३म् ।

होता वेदिषदतिथिर्दुरोणसोऽ३म् ॥

---

* अयमृ ऋतसाम्न्या ऋक् दूरोहणार्थे प्रयुज्यते। तदनुपदं द्रष्टव्यम् ( ४५पृ० )।

† शिल्पशंसनानन्तरं दूरोहणशंसनं विहितम्। तदर्थोऽयं आहावः। "आत्मैव दूरोहणं रोहति"—इत्यादि ऐ० ब्रा० ६अ० ४५६पृ०, २भा० ३३३पृ० च द्रष्टव्यम्।

नृषद् वरसदृतसद् व्योमसो३म् ।
अब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ १०

[ अर्धर्चशो दूरोहणम् † ]

हंसः शुचिषद् वसुरन्तरिक्षस-
द्धोता वेदिषदतिथिर्दुरोणसो३म् ।
नृषद् वरसदृतसद् व्योमस-
दब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ २

[ त्रिपद्या दूरोहणम् ]

हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषो३म् ।
दतिथिर्दुरोणसन्नृषद् वरसदृतसो३म् ।
द्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ ३

[ ऋक्शोऽनवानं दूरोहणम् ]

हंसः शुचिषद् वसुरन्तरिक्षस-
द्धोता वेदिषदतिथिर्दुरोणसत् ।

---

* ऋ० सं० ४, ४०, ५।

† "सप्तम्या हंसवती दूरोहण मितीरितम्"—इति ऐ० ब्रा० सा० भा० ३भा० ३७६८०, २भा० ३५६ ए० च द्रष्टव्यम्।

नृषद् वरसदृतसद् व्योमस-

दब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥

[ पुनः त्रिपदया दूरोहणम् ]

हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषो३म् ।

अतिथिर्दुरोणसन् नृषद् वरसदृतसो३म् ।

व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ ५

( पुनर्द्वर्धर्चशो दूरोहणम् )

हंसः शुचिषद् वसुरन्तरिक्षस-

द्धोता वेदिषदतिथिर्दुरोणसो३म् ।

नृषद् वरसदृतसद् व्योमस-

दब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ ६

( पुनः पच्छो दूरोहणम् )

हंसः शुचिषद् वसुरन्तरिक्षसो३म् ।

होता वेदिषदतिथिर्दुरोणसो३म् ।

नृषद् वरसदृतसद् व्योमसो३म् ।

अब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ ७

[ ऐन्द्रावरुणी परिधानीया * ]

इन्द्रावरुणा सौमनस मदृप्तं

रायस्पोषं यजमानेषु धत्तो३म् ।

प्रजां पुष्टिं भूति मस्मासु धत्तं

दीर्घायुत्वाय प्र तिरतं न आयो३म् ॥ †

[ प्रस्थसूक्तम् ‡ ]

आ वां राजानावध्वरे ववृत्यां

हव्येभिरिन्द्रावरुणा नमोभो३म् ।

प्र वां घृताची बाह्वोर्दधाना

परि त्मना विषुरूपा जिगातो३म् ॥ १

---

* "अथेह मैन्द्रावरुण्यां सूक्तं मैन्द्रावरुण्यै परिधानीया"—इति ऐ॰ ब्रा॰ ३५६. ३५७पृ॰ ।

† वालखिल्यैकादशसूक्तस्यान्तिमा ऋगियम् । सं॰ ८.५९.७ ।

‡ "आ वां राजानाविति नित्य मेकाह्निकम्"—इति च आश्व॰ श्रौ॰ सू॰ ८.२.१९ । तृतीयसवने मैत्रावरुणस्य प्रस्थसूक्त मिदम् । ऐ॰ ब्रा॰ २भा॰ २५१पृ॰ २४ पं॰ तथाह्यौव्यादि, पुनः ३५३. ३५७ पृ॰ च द्रष्टव्यम् ।

युवो राष्ट्रं बृहदिन्वति द्यौ-
र्यौ सेतृभिररज्जुभिः सिनीथोऽ३म्।
परि नो हेळो वरुणस्य वृज्या
उरुं न इन्द्रः कृणवदु लोकोऽ३म्॥ २

कृतं नो यज्ञं विदथेषु चारुं
कृतं ब्रह्माणि सूरिषु प्रशस्तोऽ३म्।
उपो रयिर्देवजूतो न एतु
प्र णः स्पार्हाभिरूतिभिस्तिरेतोऽ३म्॥ ३

अस्मे इन्द्रावरुणा विश्ववारं
रयिं धत्तं वसुमन्तं पुरुक्षोऽ३म्।
प्र य आदित्यो अनृता मिना-
त्यमिता शूरो दयते वसूनोऽ३म्॥ ४ *

---

* पञ्चर्चमिदं सूक्तमाम्नातम् (सं० ७, ८४), तत्र चतस्र इमाः; पञ्चमी तु परिधानीया ६७ पृ० द्रष्टव्यम्।

[ परिधानीया * ]

इय मिन्द्रं वरुण मष्ट मे गीः

प्रावत्तोके तनये तूतुजाना३म्।

सुरत्नासो देववीतिं गमेम

यूयं पात स्वस्तिभिः सदा नो३म्॥१

[ शस्त्रान्ते आहावः † ]

उक्थं वाचीन्द्राय देवेभ्यः।

[ शस्त्रान्ते प्रतिगरः ‡ ]

॥ ओ३म् ॥

[ आगूः § ]

॥ ये३ यजामहे ॥

---

* "सूक्तान्तैर्होता परिदधदेति, अथ समान्य एव तृतीयसवने होत्रकाणां परिधानीया भवन्ति"—इति ऐ० ब्रा० ३भा० २३७, २५४, ३५३, ३५७ पृ०।

† "उक्थं वाचीन्द्राय देवेभ्य इत्याह शस्त्वैकादशाक्षरम्"—इति ऐ० ब्रा० २भा० ५३, ५४ पृ०।

‡ "ओ मित्याध्वर्युरेकाक्षरम्"—इति ऐ० ब्रा० २भा० ५३, ५४ पृ०।

§ "ये३ यजामह इत्यागूः"—इति, "आगूर्याज्यादिः"—इति च आश्व० श्रौ० सू० १. ५. ५. ४।

[ शस्त्रयाज्या * ]

इन्द्रावरुणा मधुमत्तमस्य

वृष्णः सोमस्य वृषणा वृषेथाम् ।

इदं वा मन्धः परिषिक्त मस्मे

आसद्यास्मिन् बर्हिषि मादयेथो३म् † ॥

[ वषट्कारः ‡, अनुवषट्कारः § ]

॥ वौ३षट् । सोमस्याग्ने वीहि वौ३षट् ‖ ॥

॥ इति वालखिल्यं ¶ शस्त्रं समाप्तम् ॥

---

* सूक्तान्ते प्रयोज्या याज्या। एषा याज्या ऐन्द्रावरुणी। ऐ० ब्रा० ३भा० ३५१ पृ०। "याज्यान्तानि च सूक्तानि"—इति आश्व० श्रौ० ५.१०.२१।

† ऋ० सं० ६.६८.११। "याज्यान्तश्च प्लावयेत्"—इति आ० १.५.८।

‡ 'वौषडिति वषट्कारः'—इति आश्व० श्रौ० १.५.१५। एष एव वषट्कारः शस्त्रयाज्यान्ते पाठः। "उच्चैस्तरां वषट्कारः"—इति, याज्यावषट्कारयोर्निरुक्तयोर्विधिस्तु ऐ० ब्रा० २भा० २७, ३०पृ० द्रष्टव्य।

§ ऐ० ब्रा० २भा० २१, २२। आश्व० श्रौ० ५.५.१८ द्रष्टव्यम्।

‖ "वषट्कारोऽन्त्यः सर्वत्र"—इति, "तयोरादौ प्लावयेत्"—इति च आश्व० श्रौ० सू० १.५.७।

¶ अत्र प्रदर्शितो विचारो महाबलभिमामकः; अपरावपि शुनौ वौष्ठिकाविति। तौ तु ऐ० ब्रा० ३भा० ३६५ पृ०—३७. पृ० द्रष्टव्यौ।

॥ अथ ॥

# ॥ ऐतरेयालोचनम् ॥

अथेदमालोचयामः— (१) किं मिदमैतरेयं नाम ?, (२) कोऽस्य प्रवक्ता ?, (३) कुत्रत्यः सः ?, (४) कः कालोऽस्य ?, (५) कीदृशान्याचन् तदानीन्तनाचारव्यवहारविज्ञानानि ?, (६) कस्याः शाखाया इदम् ?, (७) कोऽस्य विषयः ?, (८) किंतु प्रयोजन मेतस्येत्यष्टौ ॥

(१)

अथ किं मिद मैतरेयं नाम ? ब्राह्मण मिति ब्रूमः। किंतु ब्राह्मण मिति ? अत्राह जैमिनिः—"शेषे ब्राह्मणशब्दः" –इति (२. १. ३३.)। मन्त्रभागातिरिक्तो वेदभागो ब्राह्मण मिति तदर्थः। यद्यपि विचारेणेदं लक्षणं युक्तम मिति ऋग्भाष्यभूमिकादौ सायणादिभिरङ्गीकृतम्, न तथाप्यर्थज्ञानाय तादृश मिति मन्यामहे वयम्; एतल्लक्षणत एव तत्स्वरूपाप्रतीतेर्ब्राह्मणग्रन्थानां वेदत्वे विप्रतिपत्तिदर्शनाच्च। अतोऽत्र "कर्मचोदना ब्राह्मणानि"–इति (३५सू०) आपस्तम्बलक्षण मेवेहाश्रयामहे। अस्ति च कर्मचोदनापरा मन्त्रा अपीति तल्लक्षणं सदोष मिति चेदत्र ब्रूमः,— पदार्थस्वरूपबोधानुपयुक्तनिर्दोषलक्षणतो वरं पदार्थस्वरूपबोधायोपयुक्तं सदोषलक्षण मपीति। तत्त्वतो यथा यजुर्बहुलाया ऋक्संहिताया यजुर्वेदत्वं न दोषावहम्, तथैव कर्मचोदनाबहुले ऽत्र ह्यैतरेयादौ ब्राह्मणत्व मपीति। ब्राह्मणग्रन्थानां वेदत्वे विप्रतिपत्तयस्तु सङ्क्षेपतो निरुक्ता-

लोचने "कोऽसौ वेदः ?"—इतिप्रकरणे प्रकाशिता एव। ततो दयानन्दस्वामिना च ऋग्भाष्यभूमिकायां तदेव स्फुट मेवावादि। तच्च हि वेदसञ्ज्ञाविचारोपसंहारे— "ब्रह्मेति ब्राह्मणानां नामास्ति। अत्र प्रमाणम्। 'ब्रह्म वै ब्राह्मणः क्षत्रं राजन्यः ( श० १३. १. )' —इति, 'समानार्थावेतौ ब्रह्मन्शब्दो ब्राह्मणशब्दश्च'–इति व्याकरणमहाभाष्ये ( ५. १. १. )। चतुर्वेदविद्भिर्ब्रह्मभिर्ब्राह्मणैर्महर्षिभिः प्रोक्तानि यानि वेदव्याख्यानानि तानि ब्राह्मणानि"—इति। इत्‍ पूर्वं मूलसावस्यास्यैतरेयस्य सम्पादनभूमिकायां डा०–ऋग्–मेह्मोदयेनापि ब्राह्मणशब्दनिर्वचन मेवमेव सूचितम्। अस्माकन्त्वत्राप्यस्ति किञ्चिद् वक्तव्यम्। तथाहि— न हि "ब्राह्मोऽजातौ"–इति (पा० ६. ४. १७१.) सूत्रे जायति ब्रह्मन्शब्दाद् अण्यपरो ब्राह्मणशब्दः सम्भाव्यते, अतो ब्राह्मणवाचिब्रह्मन्शब्दान्नेदं निष्पन्नं ब्राह्मणं पदम्, अपि लक्ष्यते ब्राह्मणशब्दादेव प्रोक्ताद्यर्थेऽपि व्यात्निष्पन्नं ब्राह्मण मिति।

तदेवं ब्राह्मणेन प्रोक्तं यागविध्यादिबोधकं वचनं ब्राह्मणम्, तादृशवचनानां समूहो ग्रन्थोऽपि ब्राह्मण मेव। वचनपरत्वादेवास्य ब्राह्मणशब्दस्य क्लीवत्वम्। अथवा अस्त्वेतद् ब्राह्मणपदं भाष्यपरम्। वेदार्थवित्तमेन ब्राह्मणेन प्रोक्तं यागविध्यनुस्यूतं मन्त्रभाष्य मेव ब्राह्मण मिति। ब्राह्मणस्य वेदस्त्व मुररीकुर्वताऽपि सायणाचार्येण स्वकण्ठरवेणैवास्य मन्त्रव्याख्यानरूपत्व माभाषि। तथाहि तैत्तिरीयसंहिताभाष्यभूमिकायाम्— "ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वात् मन्त्रा एवादौ समाम्नाताः"— इति। यद्यप्यत्र मन्त्राणा हि ब्राह्मणकालतोऽपि बहुपूर्वकालजत्वात् ब्राह्मणकाले तदर्थप्रत्ययसंशयः सम्भाव्य एवेति ब्राह्मणकाराणां

ब्राह्मणानां तदर्थकाशनाय तत्तात्पर्यव्याख्यानाय च प्रवृत्तिः समुत्पन्ना, तत एवेमानि पैङ्ग्यकौषीतकैतरेयादीनि आदिवेद-भाष्याणि सम्पन्नानीति वक्तुं युज्यत एव। तदिदं मदस्माभिर्नि-बन्धालोचने ( ड—डो ) "वस्तुतः"–इत्यादिना "वेदभाष्यरूपाणि ब्राह्मणानीति"–इत्यन्तेन च ब्राह्मणग्रन्थाना मादिवेदभाष्यरूपत्व मेव सिद्धान्तितम्।

यद्यप्येवं तथापि ब्राह्मणग्रन्थेषु सर्वत्रैव प्रधानतो यागविधय एवोपलभ्यन्ते। तत्र यागेषु यागाङ्गद्रव्यदेवतामन्त्रादिषु प्रवृत्त्या-द्युत्पादनार्थाः स्तुत्यादयः स्तुत्यादिपरा आख्यायिकाश्च बह्व्य आख्याताः श्रूयन्ते। ता एव अर्थवादा अभ्युच्यन्ते। तदप्युक्त मापस्तम्बेन— "ब्राह्मणशेषोऽर्थवादः, निन्दा प्रशंसा परकृतिः पुराकल्पश्च"–इति ( ३६, ३७ सू० )। तत्प्रसङ्गतो बहूनां मन्त्राणां मन्त्रांशानां वा प्रायोऽधियज्ञपरव्याख्यानानि, क्वचिदध्यात्म-विधान्यपि समाम्नातानीति सर्वेषा मेव सार्थवादब्राह्मणग्रन्थानां यागविधानार्थतैव पर्यवस्यत इति "कर्मचोदना ब्राह्मणानि"– इत्यापस्तम्बकृतं ब्राह्मणलक्षणं सङ्गच्छत एव सर्वत्रेति निरवद्यम्॥

अथोक्त मेवार्थ मिहोदाहरणैः किञ्चिद् बोधयितुं यतामहे। प्रथमं तावदत्र दीक्षणीयेष्टिर्विहिता। सा खल्वग्निष्टोमादि-यागेषु दीक्षणार्था भवति। यागस्त्रिविधः; इष्टि-होत्र-सत्र-भेदात्। तत्रेय मिष्टिः प्रथमविधो यागः। अस्य देवताविधानन्त्वेव माम्नातम्— "अग्निर्वै देवाना मवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः"–इत्यादि ( ऐ० ब्रा० १. १. १. )। एतेनास्य यागस्य अग्निर्विष्णुश्च द्वे देवते अवगम्येते। ततो द्रव्यविधानन्त्वेव माम्नातम्— "आग्नावैष्णवं पुरोडाशं निर्वपन्ति दीक्षणीय

मेकादशकपालम्"–इत्यादि। इत उत्तर मेतदीशावान्तरवह्विधविधानानन्तरं मन्त्रद्वयं विहितम्—"अग्निर्मुखं प्रथमो देवताना मग्निश्च विष्णो तप उत्तमं मह इत्याग्नावैष्णवस्य हविषो याज्यानुवाक्ये भवतः"–इत्यादि। अनयोर्मन्त्रयोः पूर्वो दीक्षायागप्रधानहविषः पूर्वोक्तस्य तस्य 'पुरोऽनुवाक्या' भवति, उत्तरो याज्येति विवेकः। तदेनयोः स्पष्टार्थतया, अविवक्षितविशेषतात्पर्यतया वा विशेषतो व्याख्यानतात्पर्यं नोक्तं ऽत्रैतरेयके ; अपि यदेतदुपक्रमे "अग्निर्वै देवाना मवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः"–इति देवद्वयस्तुतिराम्नाता, तदेवैतन्मन्त्रद्वयस्य सामान्यतस्तात्पर्यव्याख्यानं सम्पन्नम्। 'अग्नेः' पार्थिवस्याऽवमत्वम्, पृथिवीस्थत्वात् ; एवं 'विष्णोः' आदित्यस्योत्तमत्वम्, द्युस्थत्वात् ; अन्यासां वाय्वादीनां सर्वासा मेव देवताना मेतयोर्द्यावापृथिव्योरेव अन्तःस्थत्वात् एनयोर्ग्रहणेनैव ग्रहण मभीष्ट मित्याशयः। मन्त्रावेतौ ऋग्यजुःसामाथर्वशाखीयसंहितास्विदानीमप्रचलितासु न दृश्येते ; कृष्णयजुस्तैत्तिरीयब्राह्मणे तु श्रूयेते ( २. ४. १. ३, ४. ), परं तत्रापि सन्ति पाठभेदाः। आश्वलायनश्रौतसूत्रेऽपि हि प्रपद्य विहितावेताविति न त्वाश्वलायनशाखीयावप्यभिगम्येते ; अत एतौ ततोऽप्यन्यशाखीयाविति ध्रुवम् ॥

सोमप्रवहणीना मृचानु विधान मनु व्याख्यानानि चाम्नातानि। तद्यथा—"भद्रादभि श्रेयः प्रेहीत्यन्वाह, अयं वाव लोको भद्रस्तस्मादसावेव लोकः श्रेयान्, स्वर्ग मेव तं लोकं गमयति। बृहस्पतिः पुर एता ते अस्त्विति, ब्रह्म वै बृहस्पतिर्ब्रह्म एनं एतत् पुरोगव मकर् न वै ब्रह्मण्वद्रिष्यति। अथेमवस्य वर आ पृथिव्या इति, देवयजनं वै वरं पृथिव्ये, देवयजन एवैनं

तदवसाययति। अथो खल्वाहुः कुशुपि सर्ववीर इति, दिवमेवास्मै तत् पवमानं भ्रातृव्य मपबाधतेऽधरं पादयति"-इति प्रथमर्चो विनियोगव्याख्याने ( ऐ० ब्रा० १. २. २. )। एषापि प्रचलितायां ऋक्शाखायां नाम्नातेत्यन्यशाखीयैव; तैत्तिरीयसंहितायान्तु श्रूयते १. २. ३. १८॥

ब्राह्मणविषयाणां विशेषतोऽर्थप्रतिपत्तये अन्यदप्यन्यथा चोदाहरामः। श्रूयते हि शुक्लयजुर्वेदस्य माध्यन्दिनीयाः शाखाया आदिमेषा कण्डिका— "इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे"-इति। शतपथब्राह्मणेऽस्या मन्त्रत्रयात्मिकात्वं स्वीकृत्य, प्रथममन्त्रस्य पर्णशाखाच्छेदने, द्वितीयस्य तयैव शाखया ताडनेन मातुः वत्सानामेकीकरणे, अन्तिमस्य तृतीयस्य तु तयैव तयैव ताडनेन एकस्या गोर्वत्सतः पृथक्करणे विनियोगो विहितो व्याख्यातास्ते त्रय एव मन्त्राः। तद्यथा— "तां माच्छिनत्ति— 'इषे त्वोर्जे त्वेति। वृष्ट्यै तदाह, यदाहेषे त्वोर्जे त्वेति; यो वृष्टादूर्ग्रसो जायते तस्मै तदाह। अथ मातृभिर्वत्सान्त्समवार्जन्ति, स वत्सं शाखयोपस्पृशति— 'वायव स्थेति। अयं वै वायुर्योऽयं पवते; एष वा इदं सर्वं प्रप्याययति यदिदं किञ्च; वर्षत्येव वा एतासां प्रप्याययिता; तस्मादाह वायव स्थेति। ०—० अथ मातॄणामेकां शाखयोपस्पृशति वत्सेन व्याकृत्य— 'देवो वः सविता प्रार्पयत्विति। सविता वै देवानां प्रसविता, सवितृप्रसूता यज्ञं सम्भरानिति; तस्मादाह देवो वः सविता प्रार्पयत्विति। 'श्रेष्ठतमाय कर्मण इति। यज्ञो वै श्रेष्ठतमं कर्म, यज्ञाय हि तस्मादाह श्रेष्ठतमाय कर्मण इति"-इति माध्य० शत० ब्रा० १. ५. ४. १-५।

तत्रैव मस्या मन्त्रमयालिकाया शुक्लयजु.प्रथमकण्डिकाया. सविनियोग यथोऽर्थः सम्पन्नः—

(१) 'इषे त्वा, ऊर्जे त्वा' इच्छे त्वां ; छिनद्मीति शेषः ।

(२) 'वायवः स्थ' पवमानाः, वर्द्धनेन प्रप्यायमानाः यूयं स्थ ; युष्मान् समदसृजन् शाखयोपस्पृशामीति शेषः ।

(३) 'सविता' देवानां प्रसविता 'देव.', 'वः' युष्मान् , यज्ञं सम्भरान् , पवमानान् 'श्रेष्ठतमाय कर्मणे' यज्ञाय 'प्रार्पयतु'; सवितृप्रसूता वय मिदं याचामह इति शेष ।

नूनं मेषोऽर्थोऽधियज्ञः, परं मेवैनैव पदव्याख्यानेनाधिदैवतोऽर्थोऽपि सम्पद्यत एव। तद्यथा— "अयं वै वायुर्योऽयं पवते"। 'यः अयं पवते' सदैव पवमानो विद्यते, स एव 'अयं' त्वगिन्द्रियप्रत्यक्षः, अत एव विग्रहादिशून्यो भौतिको 'वायुः'। "एष वै इदं सर्वं प्रप्याययति यदिदं किञ्च"। 'यत् इदं किञ्च' स्थावरजङ्गमात्मकं जगत्, तत् 'इदं सर्वं' 'एषः वै' वायुरेव 'प्रप्याययति' प्रकर्षेण वर्द्धयति। "एष वै वर्षति" वायुरेव वृष्टिधाराः सर्वाः मेघतत्वालयन् पृथिव्यां संवाह्योपस्थापयति। अत एव "एतासाम्" पार्थिवीनां मपां "प्रप्याययिता" वर्द्धयिता भवति। तत एवम्भूत 'त्वा' त्वा वायुं "इच्छे" जानामि। "वृष्टात् ऊर्क्—रसः जायते"। "तस्मै" ऊर्जे— रसाय, तत एतस्य मुत्पत्त्यर्थं इति 'इषे' अन्नाय च 'त्वा' त्वां जानामि। "देवानां" सर्वेषा मग्न्यादीनां "प्रसविता" सूर्यः ईश्वरो वा 'वः' "यज्ञं सम्भरान्" प्राणनहेतून् युष्मान् 'श्रेष्ठतमाय कर्मणे' "यज्ञाय' प्राणनकार्यनिर्वाहाय 'प्रार्पयतु' सदैव प्रार्पयत्येव, वय मपि ' सवितृ प्रसूता." एव, अस्मानिति शेषः॥ एतेन वायोः प्रत्यक्षत्वम् , वर्षहेतुत्वम् ,

वृष्टिद्वारा चान्नहेतुत्वम्, तत आप्यायनहेतुत्वम्; सर्वप्रसूतत्वम्, प्राणनरूपश्रेष्ठकर्मकारित्वञ्चेत्याख्यातं वायुविज्ञानम्। प्रधानतो वायुविज्ञानार्थ एव चाम्नातो यजुर्वेदः। अतएवैतदुक्तम्— "अग्नि-वायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्"— इत्येवमादिकमिति॥

श्रूयते चात्र पर्णशाखयैव वत्सापाकरणकर्मविधानार्था सुन्दरतमैकाख्यायिका। तद्यथा— 'यत्र वै गायत्री सोममच्छापतत्, तदस्या आहरन्त्या अपावस्ताभ्यायत्य पर्णं प्रचिच्छेद। गायत्र्यै वा सोमस्य वा राज्ञस्तत् पतित्वा पर्णोऽभवत्। तस्मात् पर्णो नाम। तद्यदेवात्र सोमस्य न्यक्तं तदिहाप्यसदिति। तस्मात् पर्णशाखया वत्सानपाकरोति"—इति (शत० ब्रा० १. ५. ४.)। अस्यार्थः— 'यत्र' यस्मिन् काले हि 'गन्धर्वनगरे' हिमालयस्य कस्मिंश्चित् सुरम्यशिखरे 'सोमं' सोमवल्लीलतम् 'अच्छ' आसु 'गायत्री' काचिद् गायिका 'अपतत्' गतवती; 'तत्' तदैव 'आहरन्त्याः' सोमवल्लीहरणं कुर्वन्त्याः 'अस्याः' 'अपावस्ताभ्यायत्य' 'अवस्ता'=अवस्तात्=अधस्तात् 'अपायत्य' वियुज्य स्थितं 'पर्णं' पर्णाकारमेव पर्णबीजं 'चिच्छेद', सा गायत्रीति शेषः। 'गायत्र्यै' गायत्र्याः तस्या 'वा' अथवा 'सोमस्य' राज्ञः' अङ्गसंलग्नमागतं 'तत्' छिन्नं पर्णं 'पतित्वा' भूमिं गत्वा 'पर्णः' पर्णापरपर्यायः पलाशो वृक्षः 'अभवत्'। यतः पर्णत एवास्योत्पत्तिः, तस्मात् 'पर्णो नाम' पर्ण इत्येवैष वृक्षः प्रसिद्धः। 'तत्' तस्मात् 'अत्र' 'सोमस्य' सारभूते रसे 'यदेव' 'न्यक्तं' वीर्यम्, 'तत्' इहापि पलाशवृक्षेऽपि 'असत्' अस्तीति।

एतदाख्यायिकातः पञ्च पर्णविज्ञानानि प्रतीतानि भवन्ति। पुरा नासीदिहार्यनगरीषु पलाशवृक्षो हिमवतः शृङ्गादिहानीत

इति प्रथमम्। बहुषु पलाशारण्येषु च प्राप्यते सोम इति द्वितीयम्। पलाशस्य फलानि न जायन्ते, अपि पत्राकाराण्येव तद्वीजानि भवन्तीत्यपि पत्रत एवास्योत्पत्तिर्भवतीति तृतीयम्। अत एव पत्रपर्यायशब्दाभिधेयः स पर्ण इति वा पलाश इति वाख्यायत इति चतुर्थम्। एतद्रसस्यापि सोमरसतुल्य बलकारित्व मिति पञ्चमम्॥ गन्धर्वाणां गानप्रियत्वं स्त्रीकामत्वं च संलक्ष्य, तत्र गन्धर्वनगरे सोमानयनाय गायिकायाः प्रेरणं चात्रैव शतपथे ऽन्यत्र च श्रुतम् ( ३का. २प्र, २का. ), तत्सर्वं तत्रैव द्रष्टव्य मिति॥

अथ दर्शयामः कस्मिंश्चित् सूक्ते विधातव्येऽप्याख्यायिकास्तीति। तद्यथा— "तार्क्ष्यं स्वर्गकामस्य रोचेत्"–इति ( ऐ० ब्रा० ४. ३. ६. )। तार्क्ष्यदेवताकं त्र्यृचं सूक्तं तार्क्ष्यम् ( ऋ० सं० १०. १७८. १–३. ), तस्मिन् 'तार्क्ष्ये' सूक्ते; तेन सूक्तशंसनेनेति भावः। 'स्वर्गकामस्य' यजमानस्य, प्रसङ्गागतं 'दूरोहणं' स्वर्गं 'रोचेत्', रोहण मारोहणं तत् सम्पादयेत्; शंसनकर्त्ता ऋत्विगिति शेषः। इम मेव विधिं प्रस्तोतु मात्रातिया ह्यत्राख्यायिका— "तार्क्ष्यो ह वा एतं पूर्वोऽध्वान मैत्, यत्रादो गायत्री सुपर्णो भूत्वा सोम माहरत्; तद्यथा क्षेत्रज्ञ मध्वनः पुर एतारं कुर्वीत, तादृक् तत्"–इति। 'तार्क्ष्यः' तन्नामा कश्चित् 'वै' एव 'पूर्वः' अग्रगामी सन् 'एत मध्वानं' पार्वत्यमार्गम् 'ऐत्' आगमत्, दर्शयन्निवेति यावत्। कदा किमर्थं मित्याह— 'यत्र' यस्मिन् काले 'अदः' वृत्तान्तं सम्पन्नम्। किमित्युच्यते— 'गायत्री' देवगणप्रेरिता, गानेन गन्धर्वान् मोहयित्वा सोमानयने प्रवृत्ता, काचिद् गायिका नारी, 'सुपर्णः' पक्षी, तद्वत् ( लुप्तोपमान मिदं पदम् ), स यथा तीक्ष्णदृष्टिर्द्रुतगामी क्षिप्रगन्ता च सन् "स्वनयो

उत्पतिष्णुर्भवति, तथा 'भूत्वा', 'सोमम्' 'आहरत्' आहृतवतो,'तत्' तदानीं 'यथा' 'अध्वनः चेतन्नं' मार्गविशेषाभिज्ञं तद्देशवासिनं कञ्चिज्जनं 'पुर एतारं' पथप्रदर्शनायाग्रगामिनं 'कुर्वीत', 'तादृक्' 'तत्' तार्क्ष्यंसनं, दूरोद्दृण्यारोहणाय भवतीति शेषः। कश्चासौ तत्र तादृशविजनप्रदेशे पुरूपस्तार्क्ष्यं इत्याह— "अयं वै तार्क्ष्यो योऽयं पवते"–इति। 'तार्क्ष्यः' खलु 'अयं' प्रत्यक्षगम्यः। कः ? 'योऽयं पवते' त्वाचप्रत्यक्षो यः सदैव सर्वत्र प्रवहति। एवञ्च वायोरेव नामान्तरं तार्क्ष्य इत्युक्तं सम्पन्नम्। स एष वायुरेव तत्र गायत्र्याः पथप्रदर्शको बभूवेति। तत्पथप्रदर्शकत्वञ्च वायोर्गन्धवहत्वेनोपपद्यत एव; अस्या एव दिशः सोमगन्ध आयातीति समनुभूय तत्प्रदेशं गतवती सेति भावः। एतेनापि किञ्चिद् वायुविज्ञान मावेदितम्, विशेषतोऽभिज्ञानाय च ततः श्रुतम्— "एष स्वर्गस्य लोकस्याभिवोढा"–इति। 'एषः' तार्क्ष्यपरपर्यायो वायुः 'स्वर्गस्य लोकस्य अभिवोढा' मृतानां सुकृतीनां जन्तूनामातिवाहिकान् देहान् स्वर्गं लोकम् अभिवहति। किञ्च स्वरित्यादित्यपर्यायशब्दो निघण्टौ (१. ४. १.) पठितः, व्याख्यातश्च तथा निरुक्तेऽपि (२. ४. २.), ततश्चादित्यरश्मीनामिव पृथिव्या अभिवाहकत्वेन चास्य तार्क्ष्यस्य सम्पद्यते स्वर्गलोकवोढृत्वम्। तदेव मिह सूर्यरश्मीनां वाहक एषः, असुनातिवाहिकसूक्ष्मदेहवाहकश्चैष एव; तदिदं महाविज्ञानद्वयमेतदाख्यायिकयोपदिष्ट मिति ध्येयम्॥

एवमादिश्च आख्यायिकाभ्यो बहव उपदेशाय लभ्यन्ते; तत एता एवावलम्ब्य बह्वः कथा अनतिप्राचीनपुराणेषु तथाविधेतिहासादिषु च स्वल्पमतीनां स्त्रीशूद्रद्विजबन्धूनां धर्मोपदेशाय

कल्पिता भगवता व्यासेन, तदनुगामिभिश्चान्यैः क्रमादद्यतनैरपि। अत एवोक्तं महाभारतोपक्रमे— "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्"–इति (१. १. २६७.)। वस्तुतस्तु सर्वपुराणेतिहासमूलीभूतो वैदिकाख्यायिकोक्तो वृत्तान्तभागस्तु सर्व एवोपमानादिमूलकः परिकल्पितोऽसत्य इत्येव सिद्धान्तितं मीमांसादर्शने। तथाहि "गुणवादस्तु"–इतिसूत्रव्याख्यानावसरेऽभाष्येवं स्फुटं श्रीमदाचार्येण शबरस्वामिना— "असद्वृत्तान्तान्वाख्यानम्; स्तुत्यर्थेन प्रशंसाया गम्यमानत्वात्। वृत्तान्ताख्याने वर्त्तमाने इयं निष्पद्यते,— यच्च वृत्तान्तज्ञानम्, यच्च काचित् प्ररोचना द्वेषो वा। तत्र वृत्तान्तान्वाख्यानं न प्रवर्त्तकं न निवर्त्तकञ्चेति प्रयोजनाभावादनर्थकमित्यविवक्षितम्; प्ररोचनया तु प्रवर्त्तेत द्वेषान्निवर्त्तेत इति तयोर्विवक्षा"–इति (१.२.१० सू॰)'। प्रदर्शितानि चैतदुदाहरणानि बहूनि तत्रैव किञ्चिदुत्तरम्; तत्रैवामिदं "सः (प्रजापतिः) आत्मनो वपा मुदक्खिदत् (तै॰ सं॰ २. १. १.)"—इत्याद्याख्यायिकायाः प्रकृताभिप्रायव्याख्यानपरम्— "कथम्पुनरिदं निरात्मन्न मन्वाख्यायते? इति। उच्यते। नित्यः कश्चिदर्थः प्रजापतिः स्यात्— वायुः, आकाशः, आदित्यो वा। 'स आत्मनो वपा मुदक्खिदत्'–इति,— वृष्टिं, वायुं, रश्मिं वा। 'ताममौ प्राग्रह्णात्'–इति,—वैद्युते, आर्चिषे, लौकिके वा। 'ततोऽजः' –इति,— अन्नं, बीजं, बीहरा। 'तमालभ्य (तमुपजीव्य) प्रजाः पशूनाप्नोति'–इति गौणाः शब्दाः"–इति। तदेवं छिन्नेषु मूलेषु कुतो न पतेयुः पौराणिकेतिहासाऽतत्कथाः सर्वा वानेन कदलीवनानि यथेति, या वा विश्वसिति वार्त्तोपदेशाय विष्णुशर्मादिभिर्निर्मिता काकोलूकसंवादादिकथा अयामोऽपीति सुधीभिरेवाकलय्य

मिद मिति। यौराणिकामूर्यचन्द्रमूखित्वादिविज्ञानानि तु सर्वाण्येव वेदविरुद्धान्येवेति वेद्यं वेदविद्भिः स्वत एव स्फुटम्।

तदेवं ब्राह्मणग्रन्थेषु यागा विहिताः, तन्निष्पत्त्यै द्रव्यदेवता-मन्त्राश्च विहिताः, तत्र सर्वत्र प्रशस्त्यर्थाः किंचिद्विज्ञानाद्युपदेशका अपि गौणमूलाः कल्पनासम्भूता आख्यायिकाश्च बह्व्य आम्नाताः, तत्तन्मन्त्राणां तत्तद्यागाद्युपयोगित्वं वर्णयितुं समासतस्तात्पर्यान्वाख्यातुं वा व्याख्यानानि च कृतानि। तदस्य विध्यर्थवादाख्यानपूर्वक मादिमं मन्त्रभाष्यं ब्राह्मण मित्येव पर्यवस्यति ब्राह्मणलक्षणम्। अस्ति चात्र ग्रन्थे तल्लक्षणं समन्तादितीद मपि ब्राह्मणम्, नाम्ना चैतदैतरेयक मिति सिद्धम्॥

---

( २ )

अथातो विचार्य मस्ति कोऽस्य प्रवक्तेति? महिदास इति ब्रूमः। तथा ह्यारण्यकम्— "एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः"—इति ( ऐ० आ० १. ८. २. )। छन्दोगब्राह्मणेऽप्येव मेव ( ५. १६. ७. )। तत्र "महिदासो नामतः, इतराया अपत्य मैतरेयः"—इति शाङ्करं भाष्यम्। अप्यस्य भाष्यभूमिकायामालेखि सायणेनैवम्— "प्रकृतस्य [illegible] ब्राह्मणस्यैतरेयकत्वे सम्प्रदायविद एता माख्यायिका माचक्षते। 'कस्य चित् खलु महर्षेः बह्व्यः पत्न्यो विद्यन्ते स्म। तासां मध्ये कस्याश्चिदितरेति नामधेयम्। तस्या इतरायाः पुत्रो महिदासाख्यः कुमारः। तदीयस्य तु पितुर्भार्यान्तरपुत्रेष्वेव स्नेहातिशयो न तु महिदासे। ततः कस्मिंश्चिद् यज्ञसभायां स महिदास मवज्ञायान्यान् पुत्रान् स्वोत्सङ्गे स्थापया-

कल्पिता भगवता व्यासेन, तदनुगामिभिश्चान्यैः क्रमादद्यतनैरपि। अत एवोक्तं महाभारतोपक्रमे— "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्"–इति ( १. १. २६७. ) । वस्तुतस्तु सर्वपुराणेतिहासमूलीभूतो वैदिकाख्यायिकोक्तो वृत्तान्तभागस्तु सर्वं एवोपमानादिमूलकः परिकल्पितोऽसत्य इत्येव सिद्धान्तितं मीमांसादर्शने। तथाहि "गुणवादस्तु"–इतिसूत्रव्याख्यानावसरेऽभाष्येवं स्फुटं श्रीमदाचार्येण शबरस्वामिना— "असद्वृत्तान्तान्वाख्यानम्; स्तुत्यर्थेन प्रशंसाया गम्यमानत्वात्। इहान्वाख्याने वर्त्तमाने इदं निरूप्यते,— यच्च वृत्तान्तज्ञानम्, यच्च काचित्प्ररोचना हेयो वा। तत्र वृत्तान्तान्वाख्यानं न प्रवर्त्तकं न निवर्त्तकञ्चेति प्रयोजनाभावादनर्थकं मित्यविवक्षितम्; प्ररोचनया तु प्रवर्त्तते हेयान्निवर्त्तत इति तयोर्विवक्षा"–इति ( १.२.१० सू० )'। प्रदर्शितानि चैतदुदाहरणानि बहूनि तत्रैव किञ्चिदुत्तरम्; तत्रैव मिदं "सः ( प्रजापतिः ) आत्मनो वपा मुदक्खिदत् ( तै० सं० २. १. १. )"—इत्याद्याख्यायिकायाः प्रकृताभिप्रायव्याख्यानपरम्— "कथम्पुनरिदं निरालम्बनमन्वाख्यायते ? इति। उच्यते। नित्यः कश्चिदर्थः प्रजापतिः स्यात्— वायुः, आकाशः, आदित्यो वा। 'स आत्मनो वपा मुदक्खिदत्'–इति,— वृष्टिं, वायुं, रश्मिं वा। 'ताममौ प्रागृह्णात्'–इति,— वैद्युते, आर्चिषे, लौकिके वा। 'ततोऽजः'–इति,— अन्नं, बीजं, वीरुधा। 'त मालभ्य ( त मुपजीव्य ) प्रजाः पशूनाप्नोति'–इति गौणाः शब्दाः"–इति। तदेवं छिन्नेषु मूलेषु कुतो न पतेयुः पौराणिकेतिहासाङ्कुरकथाः सर्वा वातेन कदलीवनानि यथेति, को वा विश्वसिति वात्सोपदेशाय विष्णुशर्मादिभिर्निर्मिता काकोलूकसंवादादिकथा अयालोऽपीति सुधीभिरेवाकलय्य

मिद मिति । पौराणिकसूर्यचन्द्रभूस्थित्यादिविज्ञानानि तु सर्वाख्येव वेदविरुद्धान्येवेति वेद्यं वेदविद्भिः स्वत एव स्फुटम् ।

तदेवं ब्राह्मणग्रन्थेषु यागा विहिताः, तन्निष्पत्त्यर्थं द्रव्यदेवता-मन्त्राश्च विहिताः, तत्र सर्वत्र प्ररोचनार्थाः किञ्चिद्विज्ञानाद्युपदेशका अपि गौणमूलाः कल्पनासम्भूता आख्यायिकाश्च बह्व्य आम्नाताः, तत्तन्मन्त्राणां तत्तद्यागाद्युपयोगित्वं वर्णयितुं समासतस्तात्पर्यान्वाख्यातुं वा व्याख्यानानि च कृतानि । ततश्च विध्यर्थवादाख्यानपूर्वक मादिमं मन्त्रभाष्यं ब्राह्मण मित्येव पर्यवस्यति ब्राह्मणलक्षणम् । अस्ति चात्र ग्रन्थे तल्लक्षणं समन्तादितीद मपि ब्राह्मणम्, नाम्ना चेतदैतरेयक मिति सिद्धम् ॥

---

## (२)

अथातो विचार्य मस्ति कोऽस्य प्रवक्तेति? महिदास इति प्रथमः । तथा ह्यारण्यकम्— "एतद्ध स्म वै तद् विद्वानाह महिदास ऐतरेयः"—इति ( ऐ० आ० १. ८. २. ) । छन्दोगब्राह्मणेऽप्येव मेव ( ५. १६. ७. ) । तत्र "महिदासो नामतः, इतराया अपत्य मैतरेयः"—इति शाङ्करं भाष्यम् । अप्यस्य भाष्यभूमिकायाञ्चालेखि सायणेनैवम्— "प्रकृतस्य तु ब्राह्मणस्यैतरेयकत्वे सम्प्रदायविद एता माख्यायिका माचक्षते । 'कस्य चित् खलु महर्षेः बह्व्यः पत्न्यो विद्यन्ते स्म । तासां मध्ये कस्याश्चिदितरेति नामधेयम् । तस्या इतरायाः पुत्रो महिदासाख्यः कुमारः । तदीयस्य तु पितुर्भार्यान्तरपुत्रेष्वेव स्नेहातिशयो न तु महिदासे । ततः कस्याञ्चिद् यज्ञसभायां स महिदास मवज्ञायान्यान् पुत्रान् स्वोत्सङ्गे स्थापया-

मास। तदानीं खिन्नवदनं महिदास मवगत्येतराख्या तन्माता स्वकीयकुलदेवतां भूमि मभिसस्मार। सा च भूमिदेवता दिव्य-मूर्त्तिधरा सती यज्ञसभायां समागत्य महिदासाय दिव्यं सिंहासनं दत्त्वा तत्रैन मुपवेश्य सर्वेष्वपि कुमारेषु पाण्डित्याधिक्य मवगम-य्यैतद्ब्राह्मणप्रतिभासनरूपं वरं ददौ। तदनुग्रहात् तस्य महि-दासस्य मनसः 'अग्निर्वै देवाना मवमः ( ऐ० ब्रा० १. १. १. )' –इत्यादिकं 'स्तृणुते ( ऐ० ब्रा० ८. ५. ५. )'–इत्यन्तं चत्वारिंश-दध्यायोपेतं ब्राह्मणं प्रादुरभूत्। तत ऊर्द्धम् 'अथ महाव्रतम् ( ऐ० आ० १. १. १. )'–इत्यादिकम् 'आचार्याः ( ऐ० आ० २. ६. ८. )'–इत्यन्त मारण्यकव्रतरूप च ब्राह्मण माविरभूत्' –इति"–इति। तथा चेतराशब्दात् "शुभादिभ्यश्च ( पा० ४. १. १२३. )"–इत्यपत्यार्थे ढकि सम्पाद्य सिद्धं रूप मैतरेय इति॥

'अत्र केचिदनुमीयते, सोऽय मैतरेयः स्याद् दासीपुत्रः ? अस्ति हि ब्राह्मणस्य ब्राह्मण-क्षत्रिय-वैश्येतित्रिविधार्याणां तदितरस्य शूद्रस्यानार्यस्य च कन्यापरिणयेऽधिकारः; तथा क्षत्रियस्यापि क्षत्रिय-वैश्येतिद्विविधयोरार्ययोः तदितरस्य शूद्रस्य चानार्यस्य कन्याग्रहणेऽधिकारः; एवं वैश्यस्यापि स्वजातीयाया भार्यायास्तदि-तराया अनार्यायाश्च कन्या-विवहनेऽधिकारः। तत्र सर्वेषा मेवार्य-वर्णानां प्रथमं स्वजातीया-पाणिपीडन मेव विहितम्। किञ्च आर्यकन्याना मेवोद्वहने यथाविधि वैदिकमन्त्रादीनां व्यवहारः समुचितः, तत एव हि तेषां पत्नीत्वम्; अत एवोक्तं भगवता महामु-निना पाणिनिनापि "पत्युर्नो यज्ञसंयोगे"–इति ( ४. १. ३३. ); इतरायास्त्वमन्त्रकं ग्रहणमात्रम् अपि भरणीयत्वहेतुकं भार्यात्व मिति विवेकः॥

एतच्च सर्वं भृगुप्रोक्तमनुसंहितादौ सुव्यक्तं विहितम्। तथाहि—

"सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः ॥
शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृता ।
ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः"—इति (३.)।

तथैवान्यत्र—"विप्रस्य त्रिषु वर्णेषु, नृपतेर्वर्णयोर्द्वयोः।
वैश्यस्य वर्णे चैकस्मिन्, षडेतेऽपसदाः स्मृताः"—इति (१०.)।

"वर्णत्रयाणामेते षट् पुत्राः सवर्णापुत्रकार्यापेक्षया 'अपसदाः' निकृष्टाः"—इति तत्र कुल्लूकः। एषामपसदत्वेऽपि द्विजत्वं न व्याहतम्। तत्र तत्रैव— (१०. ४१.)

"सजातिजानन्तरजाः षट् सुता द्विजधर्मिणः"—इति।

"षट् पुत्राः द्विजधर्मिणः उपनेयाः"—इति च तत्र कुल्लूकः।

पुनस्तत्रैव — "यस्माद् बीजप्रभावेण तिर्यग्जा ऋषयोऽभवन्।
पूजिताश्च प्रशस्ताश्च तस्माद् बीजं प्रशस्यते"—इति (१०.७२.)।

यदुक्तं "न ब्राह्मणक्षत्रिययोः •—• शूद्रा भार्योपदिश्यते"—इत्यादिषट्श्लोक्या, तन्नून मपरिणीतसवर्णापरम्; सवर्णाग्रे द्विजातीनामिति श्लोकेऽग्रपदस्वारस्यात्, अन्यथा पूर्वापरग्रन्थावरोधस्यापरिहार्यत्वात्, कुल्लूकभट्टेन तत्र तथैव व्याख्यातत्वाच्च। न चान्यथा धीवरीगर्भजस्य वेदव्यासस्य विप्रत्व मुपपद्यते, नापि "नाग्निं चित्वा रामामुपेयात्"—इति (तै० सं० ५.२. ८. ६.) निषेध-श्रुतिः सङ्गच्छते। तैत्तिरीयारण्यकेऽपि "संवत्सरं न मांसमश्नीयात्, न रामामुपेयात्, न मृण्मयेन पिबेत्, नास्य राम उच्छिष्टं पिबेत्, तेज एव तत् संश्यति"—इति (५.८.४६.)। एवमादौ 'रामा'-शब्दः शूद्रापरः; सर्वत्र तथैव व्याख्यातत्वात्। विशेषतोऽत्र नेदानीं द्रष्टव्यम्।

तथाहि— "रामा रमणायोपेयते, न धर्माय; कृष्णजातीया"–इति ( १२. २. २. )। "रामा-इति शूद्रोच्यते"–इत्यादिस्तदीया दौर्गी वृत्तिरेवेह द्रष्टव्या। तदेवं सवर्णायाः पाणिपीडनानन्तर मसवर्णाना ग्रहणे न कोऽपि दोष इति सिद्धान्तः। अत एव "इन्द्रस्य प्रिया जाया वावाता प्रासहा नाम"–इत्यैतरेयश्रुतेर्व्याख्यानावसरे सायण आह— "राज्ञां हि त्रिविधाः स्त्रियः। तत्रोत्तमजातेर्महिषीति नाम, मध्यमजातेर्वावातेति, अधमजातेः परिवृक्तिरिति"–इति ( ३. २. ११. )। श्रुतार्थैतास्तैत्तिरीयेऽप्यश्वमेधकरणे ( ब्रा० ३. ८. ४. ५. )। शतपथे तु "चतस्रो जाया उपक्लृप्ता भवन्ति, —महिषी, वावाता, परिवृक्ता, पालागली"–इति ( १३. ५. १. ८. ) श्रुतम्॥

तदेव मैतद्ब्राह्मणप्रवक्तुरैतरेयनामव्युत्पत्तित एवैतरागर्भसम्भूतत्वसिद्धेः सायणाचार्यैरप्रमादमथितयथासभाप्रतिपत्तिहेत्वनुमानतश्च सिध्यत्येव दासीपुत्रत्वम्। तत एव महिदास इति दासान्त मभिधान मपि विश्रुतम्; तथा विद्वानित्येव विशेषणम्, न तु ऋषिरित्याचार्य इति वेति।

नन्वेव मार्याणा मार्यत्वप्रतिपादकाना मादिधर्माणां यागादीनां विधायकस्यैतस्य ब्राह्मणग्रन्थस्य प्रवचनकर्तृत्वं कथ मनार्ये तत दासीपुत्रे सम्भवेदिति चेत्, अत्र ब्रूमः। यागादिविधायकब्राह्मणग्रन्थस्य प्रोक्तृत्वं तु किं तुच्छम्, मन्त्रद्रष्टृत्व मपि श्रूयते दासीपुत्रस्यापीति। तद्यथा श्रुतं तावदत्रैव कवषैलूषोपाख्यानम्— "ऋषयो वै सरस्वत्यां सत्र मासत। ते कवष मैलूषं सोमादनयन्, दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षिष्टेति। तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु सरस्वत्या उदकं

मा पादिति । स बद्धिर्धन्वोदूढः पिपासया वित्त एतदपोनप्त्रीय मपश्यत्"—इत्यादि (२. ३. १.) । तदपोनप्त्रीयं सूक्तन्तु दाशतय्यां दशमे लिंगं द्रष्टव्यम् ॥

सत्वनस्तु पुरा खल्वार्य्यावर्त्ते ये नगरवासिनः सभ्यास्तेषा मार्यत्वम्, ये त्विष्टावीतरागा अप्यरण्याश्रिता गिरिकन्दरादिवासिनो ऽसभ्यास्तेषा मनार्यत्व मित्येव जातिरियं पार्य्यक्वेन वर्णनीय मासीज्जन्मस्थानव्यवहारादिभेदतः । तथा ह्याथर्वणिकाः किल तज्जातिद्वय मवश्यमेवैव माम्नायन्ते (१८. १. ८. १.) —

"प्रियं मा कृणु देवेषु, प्रियं राजसु मा कृणु ।
प्रिय सर्वस्य पश्यत, — उत शूद्र उतार्ये"—इति ।

अहो प्रशस्योऽयं तदानीन्तनः सार्वजनीनप्रीतिभावः । तदेवं तदानीं यथा ज्ञानालोचन-बलरक्षण-पणनव्यवहारहेतुभिरार्य्याणां ब्राह्मणादिजातिभेदाः प्रचलिताः, तथैवानार्य्याणा मपि आर्य्यानुगतत्वाननुगतत्वभेदात् द्वैविध्यं सम्पन्नम् । ये त्वनार्य्या अप्यार्य्याणा मानुगत्य मालम्बिरे, त एव दासाः ; तद्विपरीतास्तु दस्यव इति व्यपदिष्टाः । त एव च दासाः शूद्रा इति, दस्यवस्तु म्लेच्छा इति चाख्याताः । इत्थ मिह पञ्च जातयो निष्पन्नाः । एताश्च पञ्च जातयो मनुष्याणा मेवेति मनुष्यशब्दपर्य्यायत्व मासां पञ्चजन इति । तदेव मेषु पञ्चजनेषु कर्मादिभेदत एव ब्राह्मणः, क्षत्रियः, वैश्य इति त्रय आर्य्याः ; दासो दस्युश्चेति द्वावनार्य्याविति स्थितम् ॥

अथ यद्यपि जातिर्जन्मेति पर्य्यायशब्दाविति जन्मानुसारिण्येव जातिरित्येव सर्वसम्मतम्, सम्प्रति तदन्यथाकरणे जात्युच्छेदप्रसङ्गः स्यादिति सत्यम् ! तथापि कर्मतो जात्यन्तरतापि नासत्यम् ! । तदाहापस्तम्बः— "धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्ण

मापद्यते जातिपरिवृत्तौ"–इति, "अधर्मचर्य्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णं मापद्यते जातिपरिवृत्तौ"–इति च ( २, ५, १०, ११ )

मनुरप्याह— "शूद्रो ब्राह्मणता मेति ब्राह्मणश्चैति शूद्रताम्।
क्षत्रियाज्जात मेवन्तु विद्याद् वैश्यात्तथैव च"–इति १०, ६५।
"जातो नार्य्या मनार्य्यायां मार्य्यादार्य्यो भवेद् गुणैः"
–इति ( १०, ६७, ) च मनूक्त मिह स्मर्त्तव्यम् ॥

न च व्यवहारादिभिश्च जातिपरिवर्त्तन मदृष्टचरं वक्तव्यम्। तत्रानार्य्यस्याप्यनार्य्यत्वलाभोऽभवदपोनप्त्रीयसूक्तदर्शनसामर्थ्यादिति तु इदानी मेव प्रदर्शितम्; आर्य्यस्याप्यनार्य्यत्वलाभोऽपि समाम्नात इहैवैतरेयके। तथाहि—"तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः, पञ्चाशदेव ज्यायांसो मधुच्छन्दसः, पञ्चाशत् कनीयांसः, तद् ये ज्यायांसो न ते कुशलं मेनिरे, ताननु व्याजहारान्तान् वः प्रजा भक्षीष्टेति। त एतेऽन्ध्राः पुण्ड्राः शवराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठाः"–इति ( ७, ३, ६, )।

विश्वामित्रस्यास्य जन्मतः क्षत्रियत्वम्, वसिष्ठस्यर्षेर्धेनुप्रार्थनम्, तदलाभात् तच्छतपुत्रनाशनम्, ततस्तपःप्रभावाद् ब्राह्मणत्वलाभ इति पौराणिकी कथापि स्यादत्रोपयोगित्वेनादरणीया, किन्तु सा मूल मामूलकाल्पतैव;—न स महर्षिः कदाप्यासीदब्राह्मणः, नापि कदापि तेन वसिष्ठस्यर्षेर्धेनुमार्थनं कृतम्, न च तच्छतपुत्रनाशस्तायाविषय्य महर्षेः कथ मपि युज्यते, नेव स तपःप्रभावाद्ब्राह्मण्य मापेति सर्व मेवेद मसङ्गत मनृतं वचः पौराणिकानाम्; वेदमूलकत्वाभावादंशयो वेदविरुद्धत्वाच्चेति वेदानुशीलिनां सुविदित मेवेति दिक् ॥

प्रकृते ॥ यथाद्य प्रतीच्योदीच्यापाच्यभारतीयानां भारतसम्राट्-

मेनिकेषु विद्यमानलब्धप्रवेशत्वेऽपि बहुदेशीयानां योग्यत्वाद्यभावत एव नास्ति प्रवेशाधिकारः, अस्ति तु व्यांग्लिरिङ्गीति दक्षप्रसिद्धानां युरोपीयानाम्; तथैवामिश्रितार्यशोणितानां मनार्याणां बुद्धिमान्द्यादितोऽनुपयुक्ततयैवास्य कास्त्रेषु वेदग्रहणायोपनयनविधेरभावोऽनुग्रह एव, विमिश्रार्यशोणितानां तु वेदव्यासस्दृशानां वेदग्रहणायोपनयनं केन वारित मिति स्फुटम्। मनुरप्याह—"बीज मेके प्रशंसन्ति क्षेत्र मन्ये मनीषिणः"—इत्यादि (१०.७०.)। "जातो नार्या मनार्यायां मार्यादर्शो भवेद्गुणैः"—इति च (१०.६७) गुणपक्षपातस्तथैव। शूद्रस्य वेदाधिकारे साक्षात् संहितावचन मपि प्रदर्शितं स्वामिदयानन्देन—(वा० सं० २६. २.)।

"यथेमां वाच कल्याणी मावदानि जनेभ्यः।

ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय"—इति।

तदेवं वेदविधेः पक्षपातदोषभारकं न कथ मपीति स्पष्टम्; स्पष्ट च दासानां मनुपयुक्तमतीनां मन्वादिकर्तृकं वेदानधिकारित्वविधान मनुग्रहार्थं मेवेति।

वेदाधिकारित्वानधिकारित्वप्रसङ्गादिहान्यदपि किञ्चिद् वक्तव्य मस्ति, तद्यथा—भारतवर्षीयाणां मस्माकं शास्त्रग्रन्थेषु यावन्तो विधिनिषेधा विहिताः, यानि च वर्णाश्रमधर्मशासनानि श्रुतानि स्मृतानि च, तैः खल्विमे वयं भारतवर्षीया एव शास्याः, न त्वन्यदेशीयाः; अत एवोक्तं मनुना—"अस्मिन् धर्मोऽखिलेनोक्तो गुणदोषौ च कर्मणाम्। चतुर्णा मपि वर्णानां माचारश्चैव शाश्वतः"—इति (१. १०७.)। एवञ्चास्मच्छास्त्रोक्ता ब्राह्मणादिजातिसञ्ज्ञा तस्माक मेव; भारतादन्यत्र ब्राह्मणादयस्त्रयो वर्णाः शूद्रम्लेच्छाश्च नैव सन्तीति तत्रत्यानां ब्राह्मणादिजातिमत्त्वेनाधैर्तं शूद्रम्लेच्छत्वेः

नानार्यत्वं वा न किमपि सङ्कचतेऽस्मच्छास्त्रानुसारतः । तदेव सिङ्गलण्डादिदेशानां म्लेच्छदेशत्वम्, तद्देशीयानां म्लेच्छत्वञ्च न कथ मपि सङ्गच्छत इति प्रणिधानेनालोच्यम् । म्लेच्छदेशाः किलाव भारते विद्यन्त एव, म्लेच्छा अपि भारतीयेष्वेवोचन, म्लेच्छा-चाराद्यास्मच्छास्त्रविमुखाना मार्याणा मनार्याणाञ्च भारतीयाना-मेव, न त्वन्यदेशीयानाम्; तत्तदर्थयाक्येषु म्लेच्छम्लेच्छविज्ञानोप-देशाभावात् । सन्ति ह्यत्र विचारेव म्लेच्छाः, म्लेच्छदेशाः, अम्लेच्छानां म्लेच्छवाक्प्रयोगादिम्लेच्छाचारनिषेधाय । शतपथ-ब्राह्मणे त्वसङ्गदेव श्रुतो म्लेच्छशब्दः (३. २. १. २३, २४.), पाणिनेर्धातुपाठे म्लेच्छ धातुः (भ्वा० प० २०५.), गणपाठे उञ्छादौ तत्पाठः (६. १. १६०.), कात्यायनस्य व्याकरणाध्ययन-प्रयोजनाव्याख्यानावसरे शतपथब्राह्मणमूलकं 'म्लेच्छा न वा मा भूम'–इति कथनम्, पतञ्जलेः पस्पशायां तद्व्याख्यानम्, मीमांसा-दर्शने आर्यम्लेच्छाधिकरणम् (१. ३. ६.), मनौ म्लेच्छदेशलक्षणम् (२. २३.) म्लेच्छभाषादिरतत्रैव (७. १४८; १०. ४५; १२. ४३.), महाभारते ह्यादिपर्वणि पाण्डवानां वारणावतगमनप्रक्रमे (१४५ अ०) युधिष्ठिरं प्रति विदुरस्य म्लेच्छभाषया गूढोपदेश-दानञ्चेतत् सर्वं तन्निदर्शन मिति ।

तदित्थं महिदासस्य शूद्रागर्भजातत्वेऽपि ब्राह्मणग्रन्थप्रवचन-शक्तिमत्त्वेन ब्राह्मणत्वं स्यात् सञ्जातं किं तत्र चित्र मित्यलेवोपर-मामहे वय मिति॥

एष हि महिदासोऽभूद् दीर्घजीवी, तच्छ्रूयते छान्दोग्यब्राह्मणे —"स ह षोडशं वर्षशत मजीवत्"–इति (५. १६. ७.)। षोडशा-धिकशतवर्षकालञ्चापि जीवन मेव मनुष्याणां पूर्ण मायुः । अतएव

तत्रैव ततः प्रागिमान्यपि वचनान्याम्नातानि— "चतुर्विंशतिवर्षाणि प्रातस्सवनम्" प्रथमं वयः, बाल्य मिति यावत्। ततः "चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनम्" मध्यं वयः, यौवन मिति यावत्। तत उत्तरम् "अष्टाचत्वारिंशद्वर्षाणि तृतीयसवनम्" अन्त्यं वयः, वार्द्धक्य मिति यावत्। एवं सङ्कलनया "प्र ह षोडशं वर्षशतं जीवति" ११६ आयुः पूर्णं सम्पद्यत इत्यर्थः। न चैवं "शतायुर्वै पुरुषः"–इति ( ऐ० ब्रा० २. २. ७. )–श्रुतिर्विरुध्येत; द्विशतायुर्जीविनः पुरुषस्य वेदे लोके चादर्शनात्। अतएव शतपथे पूर्णायुर्मन्त्रव्याख्यानायैवं प्रोक्तम्—"शतं हिमाः ( य० वा० सं० २. २७. )–इति, शत वर्षाणि जीव्यास मित्येवैतदाह। तदप्येतद् युवत्यान्द्रियेत ? अपि हि भूयांसि शताद् वर्षेभ्यः पुरुषो जीवति"–इति १. ९. १. १९। एतेनावगम्यते शताद् वर्षेभ्यः किञ्चिदधिक मपि तत्रैव गण्यत इति। अत अपि "दशवर्षसहस्राणि दशवर्षशतानि च। रामो राज्य मुपासित्वा ब्रह्मलोकं प्रयास्यति"– इति महाकविवाल्मीकयुक्त ( वा० १. १. ९३. ) अल्पकल्पतरुफलं न कदापि भवेन्मन्तव्यम्; वेदविरोधादिति स्पष्टम्॥

अनेनैव महिदासेन आरण्यकमप्येकः प्रोक्तः। स हि पञ्चधा विभक्तोऽधीयते। तत्र सायणाचार्येण प्रथम-द्वितीयतृतीयांशाना मेव तत्प्रोक्तत्वं स्वीकृतम्। तथा चैतरेयभाष्यभूमिकायाम्— "तस्य महिदासस्य मनसा 'अग्निर्वै देवाना मवमः ( ऐ० ब्रा० १. १. १. )'–इत्यादिकं 'स्तृणुते ( ऐ० ब्रा० ८. ५. ५. )'–इत्यन्तं चत्वारिंशदध्यायोपेतं ब्राह्मणं प्रादुरभूत्। तत ऊर्ध्व म् 'अथ महाव्रतम् ( ऐ० आ० १. १. १. )'–इत्यादिकम् 'आचार्याः ( ऐ० ३ आ० २. ६. ८. )'—इत्यन्त मारण्यकव्रतरूपञ्च ब्राह्मण माविरभूत्"–इत्युक्तम्।

वत्त्वेन, वज्ञत्वेन, विज्ञत्वेन, सत्यवादितादिबहुसद्गुणवत्त्वेन, पवित्राचारत्वेन बहुगौरववन्त आसन्निलेवेश्वरपुत्रा इत्यभवन् व्यपदिष्टास्तेषामेवास्माकं मार्य्यनामनिदानमिति ।

महामुनिपाणिनिनाप्येवम् आर्य्यशब्दोऽर्थवः कृतः— "आर्य्यौ ब्राह्मणकुमारयोः ( ६, २, ५८ )"—इति। त इमे आर्य्यास्तदानीमादर्भविज्ञानादि-ब्रह्मविज्ञानान्तवित्तमा अतिप्रभ्या अत्यतिप्राचीनाः ब्राह्मणक्षत्रियवैश्येति त्रिविधाः, दस्युदासेति द्विविधासभ्यशूद्रतोऽन्याः, ईश्वरपुत्रा इति व्यपदिष्टा आसन्; ये खल्वद्य कालचक्रपरिभ्रमणनियमतो लुप्तकल्पवेदविज्ञाना विलुप्तैश्वर्यबला अपि वाणिज्यात्सर्वाणिज्यहीनाः सन्त एव मुमूर्षुदशापन्ना मुहुः प्रश्वसन्तीत्येव जीविता इति। अयैत एव "आर्य्या अत्रावर्त्तन्ते पुनः पुनरुद्भवन्तीत्यार्य्यावर्त्तः"—इत्याह च मनुटीकायां कुल्लूकः (२, २२), 'आवर्त्तनं' पुनः पुनर्जन्मग्रहणमिति तदाशयः। अस्मन्मते तु जन्मान्तरस्वीकारेऽपि 'आर्य्याः' ईश्वरपुत्रा इति व्यपदिष्टा मनुष्याः यत्र 'आ' आभिमुख्येन, प्रधानरूपेण, 'वर्त्तन्ते' विद्यन्ते, निवसन्तीति स एव भूभाग आर्य्यावर्त्तः। तदेव मार्य्यावास एव आर्य्यावर्त्तः ।

स आर्य्यावासः पूर्वं तावत् हिमवत्पृष्ठस्य दक्षिणभागे सुवास्तुप्रदेशे एवासीदिति मन्यते। श्रूयते ह्यृक्संहितायाम्—"सुवास्त्वा अधि तुग्वनि"—इति (८, २०, ३७)। व्याख्यातश्चैष मन्त्रांशो यास्केन —"सुवास्तुर्नदी, तुग्व तीर्थं भवति, तूर्णमेतदायन्ति"—इति (४, २, ७)। वास्तुर्वासभूमिः, सा खलु यस्यास्तीरे सुष्ठ्वेव, सा नदी सुवास्तुर्नाम। तत्तीरस्थितो जनपदश्चाभवत् तन्नामतः सुवास्तुरेव। "सुवास्त्वादिभ्योऽण्"—इति (४, २, ७७) सतदर्शनादय-

गम्यते विदितश्चायं प्रदेशः पाणिनेरपीति। वार्णिगद्दामसदोदयमते ऽस्य 'स्वत्'-इति 'सुवात'-इति वा प्रसिद्धा नद्येव सा सुवास्तुः। सुवास्तुवासकाले एव स्थादियमृक् समाम्नाता (५. ५३. ९)—

"मा वो रसानितभा कुभा क्रुमुर्मा वः सिन्धुर्निरीरमत्।

मा वः परिष्ठात् सरयुः पुरीषिण्यस्मे इत् सुम्नं मस्तु वः"-इति ॥

अस्यार्थः।—'अस्मे' अस्माकं मियम् 'अनितभा' अगतप्रभावा सर्वर्त्तुषु अतिप्रभावा 'रसा' नदी 'वः' युष्मान् 'मा निरीरमत्' अतिरमणस्य अत्यानन्दतो विहरणस्य बाधां जलप्लावनादिजन्यां मा कुर्यात्। 'कुभा' कुत्सितप्रभावा नदी च 'वः' 'मा निरीरमत्'। 'क्रुमुः' नदी च 'वः मा निरीरमत्'। 'सिन्धुः' क्रुमुसङ्गतः सिन्धुनदोऽपि 'मा वः निरीरमत्'। ततः क्रुमुसङ्गतसिन्धुतः 'परिष्ठात्' परस्थिता 'पुरीषिणी' सदैव सजला 'सरयुः' नदी च 'वः' युष्माकम् 'सुम्नं' सुखम् 'इत्' एव 'अस्तु'।

एतस्मादृङ्मन्त्रात् पूर्वतनार्यावासस्य तस्य चतुस्सीमनिर्देशोऽपि व्यज्यते। तथा च तस्मादुत्तिप्रानप्रदेशीयसुवास्तुनदीतीरस्थसुवास्तुजनपदात् वङ्क्षतरस्थातिप्रभावा रसा नद्येव तदुत्तरसीमा; इदानीं काबुल् नदीति प्रसिद्धा हीनप्रभावा कुभैव स्यात् तत्पश्चिमसीमा; तत्पश्चिमप्रदेशीया सरयूरेवासीत् तत्पूर्वसीमा (न चास्योत्तरकोशलप्रदेशीया सरयूरुपयते, कुभेत्यादिसाहचर्यात्, अर्थज्ञाने साहचर्यस्यापि नियामकत्वं सम्प्रत्य सेव; अन्यथा हि रामलक्ष्मणावित्यत्र जामदग्न्यलक्ष्मणाग्रजयोरन्यतरस्यापि बोधः स्यात्); अथ कुभाया नीचैः क्रुमुसिन्धुसङ्गम एव तद्दक्षिणसीमेति सम्पद्यते सुतराम्।

यदा हि सुवास्तुनः पश्चिमस्यां दिश्यवस्थितो निषधपर्वतोऽप्य-

चतुर्थारण्यकविषये तूक्तम् - 'तदिदं नवसङ्ख्याकानां ऋचां पुरीषपदानाञ्च प्रतिपादकं ग्रन्थजातं यद्यपि कर्म्मकाण्डे पठितुं युक्तम्, तथाप्यरण्य एवाध्येतव्य मित्यभिप्रेत्य चतुर्थारण्यकत्वेनात्र पठितम्' ( ऐ० ४आ०. १. १. १५. ) इति। पञ्चमस्याप्तिमस्य स्वाश्वलायनकृतसूत्रस्य सैवाप्तानि तेन। इत्थं प्रथमारण्यकत्रयस्य महिदासप्रोक्तत्वम्, चतुर्थस्य संहिताक्तत्वात् सङ्गृह्य पठितत्वम्, पञ्चमारण्यकस्य तत्परभवत्वं च स्फुटम्। ऐतरेयोपनिषद्ग्रन्थस्त्वे-तदारण्यकान्तर्गत एव; परं तत्राप्यस्ति मतान्तरता। इदानी मैतरेयोपनिषदिति प्रसिद्धः शाङ्करभाष्यादिसमन्वितो योऽयं ग्रन्थो-ऽधीयते सर्वत्र, ततोऽधिकतरः सायणसम्मतः। तेन ह्याचार्येण "एष पन्थाः ( ऐ० २ आ० १. १. १. )"—इत्यादिः "आचार्याः— ( ऐ० ३ आ० २. ६. ८. )"–इत्यन्तश्च द्वितीयतृतीयारण्यात्मकः समग्र एव ग्रन्थ उपनिषदित्यपादि॥

सोऽयं नैक एवैतरेयो महिदासो ब्राह्मणः पारशवो वा, विषया ब्राह्मणस्य माध्यास्य चत्वारिंशदध्यायात्मकस्य ब्राह्मणग्रन्थस्य तदुप-निषद्गर्भस्यारण्यकत्रयस्य च वक्तृत्व प्रयक्तेति सिद्धम्॥

---

( ३ )

अथ कुतत्य सः ? को जनपदस्तस्यैतरेयस्य जन्मभूरभिजनो वेति भावः। अत्र ब्रूमः। एष आर्यावर्त्त एव तज्जन्मभूरिति। तदे-तदार्यावर्त्ताभिधानं न क्वचिदपि संहितायां ब्राह्मणे वा श्रुत मस्ति;

अनतिप्राचीनग्रन्थेषु पातञ्जले महाभाष्ये, विशेषतस्तु भृगुप्रोक्तायां मनुसंहितायां ततो महाभारतादावपि ज्ञात एतत्स्वरूपादिनिर्णय इति तन्नामप्रसिद्धिः। तत्तत्स्थानानां वासनिबन्धन मिव तन्नामेति आर्यनामैवार्यावर्त्तनामबीज मुपगम्यते।

आर्यशब्दस्तु ऋक्संहितादौ बहुत्र बहुधा श्रूयते, प्रतीयते च तत्र सर्वत्रैव तदानीं मिह पृथिव्यां श्रेष्ठजातिरेवार्यनामतः प्रसिद्धेति। तद्यथा— "विजानीह्यार्यान् ये च दस्यवो बर्हिष्मते रन्धया शासदव्रतान्"—इति ऋ॰ सं॰ १, ५१, ८१। "साह्याम दास मार्यं त्वया युजा सहस्कृतेन सहसा सहस्वता"— इति ऋ॰ सं॰ १०, ८३, १९। "नवदशभिरस्तुवत शूद्रार्यौ वसृज्येताम्"—इति य॰ वा॰ सं॰ १४, ३०, १क॰। "तयाहं सर्वं पश्यामि यश्च शूद्र उतार्यः"—इति अथ॰ सं॰ ४, २०, ४ख॰। "शूद्रार्यौ चर्मणि व्यायच्छेते"—इति शा॰ ता॰ ब्रा॰ ५, ५, १४। तैत्तिरीयसंहिताया मप्येष आर्यशूद्रयोश्चर्मनिमित्तः कलह आम्नातः (७, ५, ९, ८)। ऐतरेयकेऽप्याम्नात आर्यशब्दः— "अशुच मार्यस्य राष्ट्रं भवति"—इति ८, ५, २। निरुक्तकारः खलु यास्कोऽप्येकत्रार्यशब्दं व्यवहृतवान् जातिवचनम्— "विकार मस्यार्येषु"—इति (२, १, ४)। आर्यशब्दव्याख्यानमन्यत्र कृतं तेनैवम् — "आर्यः = ईश्वरपुत्रः"—इति (६, ५, २)। अस्ति च 'अर्यः'—इति पदं परिपठितं निघण्टौ (२, २२,) ईश्वरनामसु, तत एवापत्यार्थप्रत्यये सिद्धस्त्वार्यशब्द इति सम्यक् तन्निर्वचनम्। तदेव मवगम्यते,— यथा महम्मदीया महम्मदं नाम स्वधर्मप्रवर्त्तकं साक्षादीश्वरदूतं मन्यन्ते, यथा वा ख्रिष्टाना: स्वधर्मप्रचारकं खीष्ट' साक्षादीश्वरात्मजं मन्यन्ते, एव मेव पुरास्माक मपि पूर्वपुरुषा रूप-

भूदार्यावासस्तदाप्ययं सुवास्तुप्रदेश एवासीत् तदीयपूर्वसीमेत्यपि गम्यतेऽपरमन्त्रेभ्यः। तथाहि सं० १. १०४ सूक्तं द्रष्टव्यम्। तत्र प्रथममन्त्रे "योनिष्ट इन्द्र निषदे अकारि"—इति श्रुत्या निषद-स्यार्याधिकृतत्वं गम्यते। अतएव शतपथेऽपि श्रुतम्—"नड़ो नैषिधः"—इत्यादि (३. ३. २. १, २.)। ततश्चतुर्थमन्त्र एषः—

"युयोप नाभिरुपरस्यायोः प्रपूर्वाभिस्तिरते राष्टि शूर।

अञ्जसी कुलिशी वीरपत्नी पयो हिन्वाना उदभिर्भरन्ते"—इति।

अस्यार्थः—'उपरस्य' उपसन्न पर्वतस्य सम्बन्धीनि यावत् 'नाभिः' प्रधानावासो योऽस्ति, तत् 'शूरः' विक्रान्तः 'आयो. राष्टि.' मनुष्यराज, शासनार्थ, 'युयोप' रक्षति। तच्च नगरं काले काले 'पूर्वाभिः' प्राग्वहमानाभिर्नदीभि 'प्रतिरते' प्लवमाना भवति, तत एवापद' स राजा तन्नगरं रक्षतीत्यभिप्राय। काश्च ताः प्राक् प्रवहमाना नद्य इत्याह—"अञ्जसीत्यादि। 'अञ्जसी' सुवास्तुतः ऐशान्यां दक्षिणाभिमुखी वहमाना, 'कुलिशी' सुवास्तुतो वायव्यां दक्षिणाभिमुख्येव वहमाना. 'वीरपत्नी' सुवास्तुत आग्नेय्यां दक्षिणा-भिमुख्येव वहमाना, एतास्तिस्रो नद्यः 'पयो हिन्वानाः' सत्यः 'उदभि.' प्रवहोदकैः 'भरन्ते' प्लावयन्ति, तं नाभि मिति।

ततः क्रमात्सुवास्तुतः प्राग्दक्षिणस्या मपि बहुदूरस्थां श्रीकण्ठ-शैलसमुद्भूतां अङ्गुन्याश्रमतलवाहिनीं जह्नावीं यावदार्यावासः सम्पन्नः। अत एवैषा ऋगाम्नाता (३. ५८. ६.)—

"पुराण मोकः सख्यं शिवं वां युवोर्नरा द्रविणं जह्नाव्याम्"—इति।

जह्नावी जाह्नवीत्यनर्थान्तर मित्यस्माकम्। प्रसिद्धैषा नदी भागीरथ्याः शाखाविशेषेत्युत्तराखण्डेऽद्यापि। जाह्नप्रदेशस्य पुराणोकस्त्वाम्नान मिदं नूनं व्यक्तिगतं न तु सार्वजनीन मिति

च वेदितव्यम्। जह्नावीतीरस्थो जाह्नवप्रदेशः खल्वयतनपांचकोरायाः प्राक्, सिन्धुतः प्रत्यक् बुनार् ( वर्षु ) प्रदेशतश्चोदक् स्थित इति विश्वकोषसम्पादको वसुदासः। एवञ्च सर्वास्तुसविहितैवेयं जह्नावी इति स्वीकृतेऽपि न नः क्षतिः।

तत एव आर्यावासः सारस्वतप्रदेशेषु विस्तीर्णः। इहैव बहव ऋङ्मन्त्रा यजुर्मन्त्राः सामगानमन्त्राः आथर्वणमन्त्राश्च समाम्नाताः, यागविधयश्चात्रैव समुद्भूताः परिपुष्टा श्च; आर्यसाम्राज्यश्चेहैव प्रथमं विस्तृतम्। अतएव सर्ववैदिकग्रन्थेषु सरस्वतीमाहात्म्यादिकं बहुत्रैव श्रूयते। तद्यथाश्वलायनशाखायाम्—१. ३. १०–१२ ; २. ३०. ८; ४१, १६–१८; ६. ६१; ७. ८५, १. २. ४–६ ; ८६. १–३; १०. १७. ७–९ इत्येवमादयः समालोच्याः। तदेतस्य सारस्वतप्रदेशस्य यागभूमित्वेन प्रशंसन मप्यनेकत्र श्रूयते। तद्यथा ( ३. २३. ४. )—

"नि त्वा दधे वर आ पृथिव्या इळायास्पदे सुदिनत्वे अह्नाम्।
दृषद्वत्यां मानुष आपयाया सरस्वत्यां रेवदग्ने दिदीहि"—इति।

अस्यार्थः।—'इडायास्पदे' शस्यबहुले, अतएव 'पृथिव्याः वरे' उत्कृष्टप्रदेशे हे 'अग्ने !' 'रेवत्' रेवान् धनवानहं 'त्वा' त्वा 'आ' आभिमुख्येन 'निदधे' स्थापयामि। कश्च सः शस्यबहुलः पृथिव्या वरः प्रदेश इत्याह—'दृषद्वत्यां', 'आपयायां', 'सरस्वत्याम्' इति; दृषद्वतीतीरत आरभ्य सरस्वतीतीरं यावत् त्रिनदीतीरप्रदेशः, सर्व एव ब्रह्मावर्त्तः। 'मानुषे' जनपदे तादृशे त्वं 'दिदीहि' दीप्यस्व। अत एवोक्तं मनुना—"सरस्वतीदृषद्वत्यो-र्देवनद्योर्यदन्तरम्। तं देवनिर्म्मितं देशं ब्रह्मावर्त्तं प्रचक्षते"—

इति (२. १७.)। किमर्थं त्वां निदध इत्याह—'प्रजां सुदिनत्वाय'—इति। जीवत्कालानां सुप्रभातीकर्त्तुमित्यर्थः।

ततो यदा एव आर्यावर्त्तो बहुविस्तृतस्तदैव विसप्तनदीभिः परिव्याप्त इति वर्णित मस्या ऋक्संहितायाम्। तथा चास्ति शाकलसंहितायां दशममण्डले नवमं मेकं सूक्तम्, तद्धि नदीस्तुतिपर मिति नदीस्तुदिति भाष्यते, ततस्तदानीन्तनार्यावर्त्तप्रधाननदीवर्णनञ्च लभ्यते। तस्येयं पञ्चमी ऋच्—(१०. ७५.)।

"इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्णा।
आसिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणोह्या सुषोमया"—इति।

अत्र स्तुता गङ्गा (१) नदी त्वस्मद्देशेऽतीव प्रसिद्धा। ततः पश्चिमस्था यमुना (२)। ततः पश्चिमस्था सरस्वती (३)। ततः पश्चिमस्था शुतुद्री (४), याच शतद्रुरित्युच्यते। ततः पश्चिमस्था परुष्णी, सैवेरावतीत्युक्ता यास्ककाले (निरु० ८. ३. ५.), एतर्हि रैरावतीति। ततः पश्चिमस्था असिक्नी, सैव चन्द्रभागेत्युच्यते। ततः पश्चिमस्था वितस्ता। ऐरावती, चन्द्रभागा, वितस्तेति तिसृणा मासां नीचैः सम्मिलनतो याभूदतिप्रसारा मालवदेशीय-काश्यपपुरतः पश्चिमस्थां दक्षिणाभिमुखी महानदी, सैवेह मरुद्वृधेति पञ्चमी (५)। अपि तस्यैव काश्यपपुरतः प्राक्प्रवाहिता या शुतुद्री (शतद्रुः) पूर्वं मिह वर्णिता, तस्या एव शतद्रोरुपरिष्टात् पश्चिमपार्श्वतः सङ्गता च प्राचीनतमा आर्जीकीया (६); उरुञ्जिरेत्यप्यस्याः प्राचीनतरं नाम, इय मेव विपाडित्युक्ता यास्ककाले (निरु० ८. ३. ५०), विपाशा-नामिका चेय मिदानीम्। ततोऽपि पश्चिमस्था सुषोमा (७), येयं तक्षशिलानामप्रदेशान्निम्नगामिनी सिन्धुसङ्गता। एता एव सप्त नद्यो यावद्भागेषु प्रवहन्ति, तावानेव

प्रदेशः सप्तनद इति सप्तसिन्धुरिति वा ख्यायते। सिन्धुरिह नदी-पर्यायः। तासु गङ्गायमुने विहाय याः पञ्च नद्यो यावत्सु भूभागेषु प्रवहमानाः सन्ति, स एव पञ्चनद इति, भारतप्रदेश इति चेति सङ्क्षेपः। ऋक्संहिताया मन्त्र मेकं (३. २३. ४.) प्रदर्श्य यदिह वर्णितो ब्रह्मावर्त्तप्रदेश, ततः परस्तादेव एव प्रदेशः पुण्य-भूरिति परिगण्यते। तथा हि मनुसंहितायाम्—

"कुरुक्षेत्रञ्च मत्स्याय पञ्चालाः शूरसेनकाः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः"—इति (२. १८.)॥

वर्णित एष सप्तनदप्रदेशः सिन्धोः पूर्वपारस्थः; एवं सिन्धोः पश्चिमपारस्थोऽपि विद्यतेऽपरः सप्तनदप्रदेशः। स ह्येदानीं मार्यावर्त्ताद् बहिर्भूतोऽप्यासीत् पुरा आर्यावर्त्तान्तर्गतः। अतएव संहि-ताया सित उत्तरं पठ्यते ऋचि तत्स्थाना मपि सप्तानां नदीनां वर्णनं श्रूयते। तथाहि—

"तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या।
त्वं सिन्धो कुभया गोमती क्रुमुं मेहत्न्वा सरथं याभिरीयसे॥"

इत्यस्मिन् मन्त्रे तृष्टामा प्रथमा, सुसर्त्तुः द्वितीया, रसा तृतीया, श्वेती चतुर्थी, कुभा पञ्चमी, गोमती षष्ठी, मेहत्नुयुता क्रुमुः सप्तमी। इमाः सर्वा एव सप्त नद्यो मध्यहिमालयोत्पन्नस्य पूर्वं पश्चिमाभिमुखगामिनः पश्चात् दक्षिणप्रवाहिनः समुद्रगस्य सिन्धु-नदस्य पश्चिमस्यां पूर्वदक्षिणाभिमुखं स्यन्दन्त्य, सम्प्रत्यन्यनामतः। तत्रेदानीं चित्रलप्रदेशतः प्राग् वहमाना पञ्चकोर् प्रदेशीया वास्तवा नद्येव स्यात् 'तृष्टामा'; 'सुसत्तु'—इति सुवास्तोर्नामान्तरम्, यदय स्यादित्युच्यते; 'रसा' त्विहापि पूर्ववर्णितैव (२३ पृ० १६ पं०); 'श्वेती' स्यादधतन-डेराइस्माइलखां-प्रदेशतलदाहिनी अर्जुनी;

'कुभा'=काबुल्; 'क्रुमुः' वर्णु-प्रदेशवाहिनी कुरम्; 'गोमती' सम्प्रति गोमल्लिति प्रसिद्धा। एताः, दृष्टामाद्याः नद्यः समेव साक्षात् परम्परया वा सिन्धुसङ्गताः॥

तदेवं चित्रलूप्रदेशतः प्राक्, बेलुचिस्थानादित ऊर्द्ध्वं च यावत्, पश्चिमोत्तरस्यां य आसीत् सुविस्तीर्णः पुरातन आर्यावर्त्तो यः स एष एव पश्चिम-सप्तनदप्रदेश इति वक्तुं युज्यते। किञ्च यथा पूर्वसप्तनदान्तर्गतः पञ्चनदप्रदेशस्तथैव पश्चिमसप्तनदान्तर्गतः (आफगान्) पश्चकोरप्रदेशोऽपीति। अतो गान्धारस्यार्यावर्त्तान्तर्गतत्वं सुतरां सम्पन्नम्। ततः सङ्गच्छते "गन्धारीणा मिवाविका (ऋ० सं० १. १२६. ७.)"–इति संहितावचनम्, उपपद्यते च "नग्नजिते गान्धाराय (ऐ० ब्रा० ७. ५. ८.)"–इति ब्राह्मणवचनम्, तथा "साल्वेयगान्धारिभ्याञ्च (४. १. १६८.)"–इति पाणिनिवचनञ्च। धृतराष्ट्रराजपत्नी दुर्योधनादिबहुपुत्रप्रसविनी गान्धारी तु भारतप्रसिद्धैव। वर्णुप्रभृतीना मायुधजीवित्वेन वर्णनञ्च पाणिने-र्द्रष्टव्यम्॥

एतयोः पूर्वापरसप्तनदप्रदेशयोर्मध्ये मध्यहिमवत्ससुद्भवोऽवाक् प्रवणः ससुद्रान्तः प्राचीनार्यावर्त्तं द्विधाकुर्वदतिप्रबलः सीमदण्ड इवैष सिन्धुर्नामिको नदोऽद्यापि राजते।

तस्याश्च सिन्धोरतिदूरपश्चिमस्था मप्युत्तरस्याश्चान्यासां सप्तानां नदीनां विद्यमानतापि श्रूयते; तदस्यैव नदीस्तुतिसूक्तस्य सप्तमाष्टम्योर्ऋचोः समालोच्यं सम्प्रविधानम्। तास्वेका 'ऊर्णावती', स्यादेषा कैलासनिम्नस्थोर्णाप्रदेशीया; हिरण्मयी, वाजिनीवती, सीलमावतीत्येता अपि तिस्रः स्युरत्युत्तरस्था एव; 'यनी' नदी तु निम्नबेलुचीस्थाने प्रसिद्धैव; तथा चित्रा च चित्रलप्रदेशत आगत्य

कुभायां मिलिता; 'ऋजीती' अपि स्यात् तत्समीपवाहिनीति सम्भाव्यते।

एतदुक्तविसप्तनद्यपेक्षया सिन्धोर्नदस्य प्राधान्यं च वर्णितं तत्रैव सूक्ते प्रथमम्। तद्यथा तत्सूक्तीयप्रथमर्चः परार्द्ध एव:—

"प्र सप्त-सप्त त्रेधा हि चक्रमु: प्र सृत्वरीणा मति सिन्धुरोजसा"

अस्यार्थ:।—'आप:' नद्य: 'सप्त सप्त' भूत्वा 'त्रेधा' त्रिधा त्रिश्रेण्य: सत्य: 'प्रचक्रमु:' प्रावहन् प्रवहन्ति, अभिनायावर्त्ते; सिन्धो: पूर्वस्यां सप्त, पश्चिमस्यां सप्त, उत्तरस्याञ्च सप्तेति। तासां 'सृत्वरीणां' एकविंशतिसङ्ख्याकानां नदीनाम् 'ओजसा' बलेन 'अति' अतिशयित: एको नद: 'सिन्धु:'।

तासामेव त्रिसप्तनदीनां पुत्र इव राजेव च सिन्धुर्वर्णितस्तत्रैव चतुर्थ्यां ऋचि—

"अभि त्वा सिन्धो शिशु मिन्न मातरो
वाश्रा अर्षन्ति पयसेव धेनव:।
राजेव युध्वा नयसि त्व मित् सिचौ
यदासा मग्रं प्रवता मिनक्षसि"—इति।

अस्यार्थ:।—हे 'सिन्धो'! 'मातर: शिशुं न (इव)' इमा नद्य: 'त्वा अभ्यर्षन्ति' त्वां पय: पाययितु मिवाभितो गच्छन्ति, 'पयसा' युक्ता: 'वाश्रा: धेनव:' सुगन्धकारिस्त्रोऽचिरप्रसूता गाव इव च। 'त्वं' -'युध्वा' युद्धकारी 'राजा इव' इमौ पूर्वापर-नदीसमर्कौ 'सिचौ' सेनानिवेशाविव 'नयसि इत्' प्रेरयस्येव; 'यत्' यत: 'आसां प्रवतां' प्रवहन्तीनां नदीनाम् 'अग्रम् इनक्षसि' अग्रगो भवसि, अत इति भाव:।

अन्यत्र चात्र संहितायां त्रिसप्तनदीनां श्रवण मस्ति। तद्यथा —"त्रिः सप्त सस्रा नद्यः"-इति ऋ० सं० १०. ६४. ८।

तत्त्वतस्त्वेतत्त्रिसप्तनदीपरिवृतः सिन्धुमध्य एवासीत् पूर्वकालिकः आर्यावर्त्तः। अत एवैतरेयके श्रुतम्— "यस्तेजो ब्रह्मवर्चस मिच्छेत्॰—॰ प्राङ् स इयात्, योऽन्नाद्य मिच्छेत्॰—॰ दक्षिणा स इयात्, यः सोमपीथ मिच्छेत्॰—॰उदङ् स इयात्"—इति (१. २. २.)। प्रागादिदिक्शब्दाश्च कञ्चिदवधि मपेक्षन्ते, कुतः प्रागित्याद्याकाङ्क्षायाः सर्वत्रोपजायमानत्वात्। तदत्र आर्यावर्त्तीयसिन्धुमध्य मेवावधिं मन्यामहे, तस्मात् सिन्धुतः प्रागित्यादिस्वीकारेणैव तेजस्त्वादिसिद्ध्युपपत्तेः। तथा च सिन्धोः प्राग्देशेषु सरस्वत्यादितीरभूमिषु यज्ञानुष्ठानबाहुल्यश्रुतेस्तेजस्त्वब्रह्मवर्चस्वयोर्लाभः समुपपद्यते; अतश्चसङ्गमसिन्धुतो दक्षिणस्यां हिमप्राचुर्याभावात् तापप्राबल्यात् भवत्येव प्रचुरान्नस्योत्पत्तिः; सिन्धुत' पश्चिमस्या मरण्यप्राचुर्यात् तत्र पशुलाभः सम्भाव्य एव, अतश्चसिन्धुसङ्गमादुत्तरस्या मतिशैत्यात् सोमस्य च शीतप्रभवत्वात् वल्लीसोमस्य लाभः, शारीरसोमस्य च वृद्धिर्भवेदेवेति। तदियमतिप्राक्तनार्यावर्त्तस्यार्य सिन्धुर्मेरुदण्ड इवासीदिति प्रतीयते। अत एव सकारादेर्हकाराद्युच्चारणकाङ्क्षि' पाश्चात्यैरिदं भूखण्डं सिन्धुस्थान मिति वक्तव्ये हिन्दुस्थानमित्युच्यते।

किञ्चात्र सिन्धुसङ्गतातिविक्रान्ता यासीन्नदी रसेति विश्रुता, द्वितीयनदीसप्तके तृतीयेति च वर्णिता, सैवासीत् तदानीन्तनार्यावासस्योत्तरसीमेति गम्यते। तथा ह्यनुक्रान्त मिदं शौनकाचार्येण—'किमिच्छन्ती पणिभिरसुरैर्निगूढा गा अन्विष्टु सरमां देवशुनी मिन्द्रेण प्रहिता मसुभिः पणयो मित्रीयन्तः प्रोचुः, स

तान् युष्मत्स्वाभिरनिच्छन्ती प्रत्याचष्टे"–इति। तस्यैतस्येदं सायणकृतं भाष्यम्— "इन्द्रपुरोहितस्य बृहस्पतेर्गोषु बलनाम्नोऽसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहायां निहितासु सतीषु बृहस्पतिप्रेरितेनेन्द्रेण गवा मन्वेषणाय सरमा नाम देवशुनी प्रेषिता। सा च महतीं नदीं सुत्तीर्य बलपुरं प्राप्य गुप्तस्थाने नीतास्ता गा ददर्श। अथ तस्मिन्नन्तरे पणय इदं वृत्तान्त मव-गम्यन्त एनां मित्रीकर्तुं संवाद मकुर्वन्। तत्र प्रथमतृतीयाद्या अयुजोऽन्त्यावर्जिताः पणीनां वाक्यानि,०—०, द्वितीयचतुर्थाद्या युज एकादशी च षट् सरमाया वाक्यानि"–इति। वस्तुतोऽत्र पणयः=वणिजः, सार्थवाहा इति यावत्; "पणिर्वणिग् भवतीति (२. ५. १.) नैरुक्तात्। असुराः=बलवन्तः (निरु० ३. २. २.)। नून मेते इह आर्येतरा एव गृह्यन्ते। सरमा देवशुनी दिव्यगुणोपेतास्वामिका सुशिक्षिता कुक्कुरी; बलपुरीस्था गुहा तु नून मार्यशासनादहिस्था; तथाचानार्यैरपहृता आर्य-गावः कुक्कुरीसन्धानेन पुनर्लब्धा इत्येवात्र सारम्, सर्व मन्यत् राजनैतिकं काव्यम्। तदिदं काव्य मृक्संहिताया दशमे मण्डले एकादशभिः ऋग्भिर्वर्णितम् (१०. १०८. १-११.)। तस्यादिमैषा—

"किमिच्छन्ती सरमा प्रेद मानड् दूरे ह्यध्वा जगुरिः पराचैः।
कास्मेहितिः का परितक्म्यासीत् कथं रसाया अतरः पयांसि"
–इति।

तदित्थं ज्ञायते, या खलु पूर्वं सुवासुप्रदेशस्योत्तरसीमेति वर्णिता, सेयं प्रचुरोदका प्रभूतवेगा च नदी पुरासीदार्यानार्य-देशयोः सीमरूपेति।

सेषा 'रसा' ऋक्संहितायां बहुशो वर्णिता। तद्यथा ८. ४९. २—

"गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः"—इति।

यथा गिरेः' 'रसाः' नद्यः 'प्रपिन्विरे', 'अस्य पुरुभोजसः दत्राणि' तथैव प्रपिन्विरे इति तदर्थः। एतेनावगम्यते रसायाः प्रस्रावित्वं गिरित एव समुद्भवः। अपि यथा सिन्धोः पूर्वप्रदेशीयसमनदीषु 'गङ्गा' एकापि, अन्यासा मपि नदीनां निराबाधैवाभिगङ्गेति प्रसिद्धिः ; 'सरस्वती' एकापि प्राधान्याद् बह्वीना मन्यासां नदीनां वाचिका ; तथैव सिन्धोः पश्चिमप्रदेशीयसमनदीषु एकापि 'रसा' बह्वीना मन्यासाञ्च नदीनां वाचिका भवति। किञ्च यथा, गङ्गेति नदीनां साधारणं नाम, यथा च सरस्वतीत्यपि, तथैव रसेति च। अत एव निरुक्ते यथा गङ्गाशब्दस्य 'गङ्गा गमनात्'—इति निरुक्तिः कृता, यथा च सरस्वतीशब्दस्य 'सरस्वती' सर इत्युदकनाम ; सर्तेस्तद्वती—इति निरुक्तिः कृता ; तथैव रसाशब्दस्यापि 'रसा नदी, रसतेः शब्दकर्मणः'—इति कृतेव नदीसाधारणबोधिका निरुक्तिः। एवं मन्येवमादिषु योगरूढ्यर्थः सर्वत्र विवक्षितः। निरुक्तकृत. प्रदर्शितरसानिरुक्तेस्तस्या नद्याः सदैव शब्दकारित्वञ्चावगम्यते। प्रदर्शितेऽत्र ऋङ्मन्त्रे 'रसाः'—इति बहुवचनश्रुतेस्तद्बहुत्व मपि गम्यते। तथा च यथा हिमवत्पृष्ठेषु बह्व्यो गङ्गाः सन्ति, यथा च सरय्वा अपि द्वित्वं सिद्धेव पुरस्तादुररीकृतम्, तथैव रसाबहुत्व मपि स्वीकार्यम्। रसाद्वित्वन्तु नूनं मङ्गीकार्यम् ; प्रदर्शिते "तृष्टामया ( १०. ७५. ६. )" —इति मन्त्रे तस्याः सिन्धुसङ्गतत्वस्य, "समुद्रं रसया सह्राइ. ( १०. २२. ४. )"—इति मन्त्रे तस्याः समुद्रसङ्गतत्वस्य च स्फुटाव-

गमात् । समुद्रसङ्गता तु सा अद्यतनार्यावर्ततो बहिरस्था, खोरा-सान्-राज्यान्तर्गता 'आवेस्ता'-ग्रन्थवर्णिता, 'रंहा' इत्याह विश्व-कोषकारः । तथा चेयं रसा तदानीन्तनार्यावासस्य पश्चिमसीमेति च स्यात् पूर्वदर्शित-देवशुनीपणिसंवाद एतद्विषयको वेति ।

अंशुमत्याख्या नद्यस्त्वेतदार्यावर्तीया एवेत्यत्र किमस्ति वक्तव्यम् । "अंशुमती" ऋ० मं० ८. ९६. १३, १४. १५ ऋचो द्रष्टव्याः । सेयं यमुनासङ्गता, इयत्तीतः प्राक् स्थिता । "अश्मन्वती" च ऋ० सं० १०. ५३. ८ । एषा किल घर्घराख्यः प्रत्यक्, शतद्रुतो वहुप्राक्, उत्तरतोऽवाग् वहमाना, विनशनप्रदेशीया ।

यदिह नदीपरपारगमनं श्रुतम्, तन्नूनं मध्येशियातः समागतानां पूर्वतनार्याणां वच इति जर्मनादिपाश्चात्यसिद्धान्तोऽनर्थको निर्मूलश्च ; स्थानीयार्याणां वच एवेत्युक्त्यैव तथोपपत्तेः किं महतो वंशस्तम्भस्य सदानुकर्षणेनेति सुधीभिर्विभाव्यम् । ऋ० सं० १. १०४. १, २, ३ ऋक्षु वर्णिता शिफा नाम नदी तु निषधदेशीयेव सम्भाव्यते । तत्रायमर्थेऽपि निषदनामोल्लेखदर्शनात् । ऋ० सं० ६. २७. ६, ७ ऋग्द्वयदृष्टे 'हरियूपीया' 'यव्यावती' च नद्यौ आफगानस्थानीये एव सम्भाव्येते । तत्रच तत्रत्य-'हजारा'प्रदेशीया सम्प्रति 'हरिरूद्' इत्युच्यमाना नद्येव स्यात् वैदिकहरियूपीयेति ।

"पीवानं मेषमपचन्त वीरा न्युप्ता अक्षा अनु दीव आसन् ।
द्वा धनुं बृहतीमप्स्वन्तः पवित्रवन्ता चरतः पुनन्ता"—इति ।

अस्मिन् मन्त्रे ( ऋ० सं० १०. २७. १७. ) धन्वम च यद् दृश्यते मन्त्रा इति, तदपि स्यात् आफगानुत्तरत्र प्रवहमाना 'धन्व' नदीति च सुवचम् ।

श्वेती नद्येव सम्प्रत्यर्जुनीत्युच्यत इत्युक्तं पुरस्तात् ( पृ० २७

पं२४ ); सा हि श्वेतपर्वतान्निर्गतेत्येव तस्यास्तथा नाम सम्पन्नम्। आम्नातञ्च शतपथे— "प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्याः"–इति १४. ६. ८. ८। ऋक्संहितायां नूनमेषैवाम्नाता "श्वेत्या त्या"–इति १०. ७५. ६। श्वेतयावरी नद्यपि स्यात् तच्छ्वेतगिरिप्रभवैव। तदिदं श्रूयते— "उत स्या श्वेतयावरी"–इत्यादि ८. २६. १८। अपि संहितायां सरयुनदी त्रिः श्रुता ( ४. ३०. १८ ; ५. ५३. ९ ; १०. ६४. ९. ) तत्र सर्वत्रैव सिन्धुसङ्गता तक्षशिलानामनगरीतलवाहिन्येव गम्यते। अपि यच्छ्रूयते वाजसनेयिसंहितायाम्— "काम्पिल्यवासिनी"–इति ( २३. १८. ) सैषा काम्पिल्यनगरी प्रवराध्यायवचनात् दशार्णप्रदेशतः प्रागिति गम्यते, अद्यापि कम्पिलेत्येव प्रसिद्धा दक्षिणपाञ्चालस्था। साङ्काश्यनगर्यपि तत्रैवैतर्ह्येतेऽस्ति। बृहदारण्यकोक्तः कपिप्रदेशोऽपि ( ३. ३. १ ; ७. १. ६. ५. १. ) तत्सन्निहित एव। निरुक्तोक्तः कपिष्ठलोऽप्यत्रैव ( ४. १४. )। अनतिप्राचीनपुराणेतिहासवर्णिता यमुना-गङ्गा-सीता-गौर्यादयस्तु आर्यपरिव्राजकविज्ञाता अपि नास्मत्पूर्वतनार्याणां निकेतनभूमयः। तत्वतो या पुनर्नद्यो हिमवत्पृष्ठोत्तरभागतः प्रवहमानाः प्राच्यप्रतीच्योदीच्यभूखण्डगताः, ताः सर्वा एवान्यदेशीया इति ध्रुवम् ; अपि यास्तु हिमवत्पृष्ठदक्षिणभागतः प्रवहमानाः प्रागपाग्भूखण्डगतास्ताः सर्वा अस्मद्देशीया एव ; विन्दुसरोमानससरोरावणह्रदादयोऽप्यार्यपरिव्राजकपरिचिता अपि नास्मद्देशीयाः किं मत्र चिन्तनीय मस्ति। शर्यणावत्सरस्तु नूनमार्यावर्त्तीयम्। तदाहुः यास्कायनिनः— "शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्द्धे सरः स्यन्दते"–इति ऋ० सं० १. ८४. १३ सा० भा० द्रष्टव्यम्।

पाणिनिसूत्रग्रथितं कापिशनगरमप्येतन्निधावेव। तत्र मधुद्राक्षे च भवत उत्कृष्टतरे, तत एव तदुदाहरणद्वयं दर्शितम् 'कापिशायनं मधु, कापिशायनी द्राक्षेति'। श्रूयते चेयं मन्त्रः (ऋ० सं० १०. ३४. १.)—

"प्रावेपा मा बृहतो मादयन्ति
प्रवातेजा इरिणे वर्वृतानाः।
सोमस्येव मौजवतस्य भक्षो
विभीदको जागृविर्मह्य मच्छान्"–इति।

'प्रावेपाः' सततकम्पनशीलतया, 'प्रवातेजाः' प्रवरवनस्पत्यादियुक्ते बहुवायुयुते प्रान्तरे जनिमाव: 'इरिणे' इराननामपारस्यदेशे 'वर्वृतानाः' अधिकतया वर्तमानाः 'बृहतः' विभीदकवृक्षा: 'मा' मां मादयन्ति। 'जागृविः' भक्षयितुर्जागरणहेतुः, 'विभीदकः' कोष्ठस्य मलस्य वायोश्च भेदनकारी, अयं 'मौजवतः' मूजवन्नामपर्वतोत्पन्नस्य सोमस्य 'भक्षः' भक्षोंऽशः 'इव' 'मह्यम्' 'अच्छान्' छदयति, मोहयतीति।

इरिण मित्यस्य यास्केन द्विविधा व्याख्या कृता—'इरिण मृणातेरपार्णं भवति, अपरता अस्मादोषधय इति वा'–इति (८. १. ७.)। तयोराद्योऽर्थ एवात्र उपपद्यते; तद्देशीयानां हि भारतीयाना मिव पुरुषोत्पादिष्वपि पितृपैतामह मूर्वं न सङ्गत इति दर्शनात्। मूजवान् पर्वतस्तु कैलाशगिरेः पश्चिमस्योऽद्यापि राजते।

तदेव ऋक्संहिताकाले ईरान्-नाम-जनपदस्य आर्य्यावर्त्तीयत्वं तथा मूजवतोऽपीति स्यान्मन्तव्य मिति।

अथर्वसंहितायाः पञ्चमकाण्डीयचतुर्दशवर्गस्य द्वाविंशतितमसूक्तस्य

तृतीयमन्त्रे परुषनामजनपदस्य, चतुर्थे महावृषप्रदेशस्य, पञ्चम-सप्तमयोः मूजवत्प्रदेशस्य बह्लिकदेशस्यापि, अष्टमे पुनर्महावृषमूज-वतोः, नवमे पुनरेव बह्लीकस्य, चतुर्दशे त्वन्तिमे अङ्ग-मगध-मूज-वद्-गन्धारीणां च श्रवणं मस्ति ; परं मुख्या इमे सर्वं एव जनपदा-स्तदानीं मासन्ननार्यवासा इत्येव गम्यते ; न ह्यन्यथेषु तक्मयापन मभीष्टं भवेदिति । तद्यथा तत्रतुर्थमन्त्र एवः—

"गन्धारिभ्यो मूजवद्भ्योऽङ्गेभ्यो मगधेभ्यः ।

प्रैष्यं जन मिव शेवधिं तक्मानं परिदद्मसि"—इति ।

न ह्यार्यैषु ब्रह्मेषु तक्मयापन मिष्टं स्यादाथर्वणिकानाम् ।

नन्वेवं परुष (पेशावर)देशस्य, गान्धार (कन्दाहार)प्रदेशस्य, पूर्वसूक्त सार्यावर्त्तान्तर्गतत्वं किं न विरुध्येत ? अत्र ब्रूमः । तयो-रार्यावर्तान्तर्गतत्वेऽपि एतन्मन्त्रदृक् कालेऽनार्यवासत्वे कोऽस्ति बाध इति ; कालभेदात् सर्वसामञ्जस्यं भवेदेवेति । न चैव मथर्व-संहितायाः ऋक्संहितातो विभिन्नकालिकत्वं मन्तव्यं स्यात् ; मन्त्राणा मेव प्रकाशकालपार्थक्यस्वीकारात् तदुपपत्तेः । स्वीकृतश्चे-तदस्माभिर्निरुक्तालोचने (ठ पृ०) 'वस्तुत एक एव वेदः'—इत्यारभ्य (ठू पृ०) 'चत्वार एव वेदास्त्रयीशब्दवाच्याः'—इत्यन्तेन, पुनः (तू पृ०) 'यास्केन'—इत्यारभ्य (ते पृ०) 'पुरा तु बहुकाल मभि-व्याप्य बहुभिर्र्विभिन्नैर्बहुभिरेवोपायैरभिवायैः प्रणीता बहवो मन्त्राः'—इत्यन्तेन च ।

प्रदर्शितं मूजवनाम तु ऋक्संहितायां (१०. ३४. १) यद्यपि इति सत्यम् । परं न तथापि मूजवत्पर्वतस्यार्यावासत्वं प्रतीयते, प्रतीयते तु तत्रत्यसोमाना मौत्कर्षमात्रम् । यथाथर्वणिका-म्नानम्—"उदङ् जातो हिमवतः स प्राच्यां नीयसे जनम्"—इति

(५. ४. ८.), अस्मादपि तवत्यकुरुक्षेत्रोत्कर्षमात्रं गम्यते। सोमस्यानार्याभिजनत्वन्तु ऐतरेयब्राह्मणेऽपि सुव्यक्तम्। एवं महावृषस्यापि सिद्धान्तः कृत एव। श्वेतपर्वतादपि प्रतीच्यस्य वह्लिकस्य तु यदार्यावासत्वं प्रतीयते "बह्लीक प्रातिपीयः शुश्राव"—इत्यादि (शत० ब्रा० १२. ३. ३.) श्रुतितः, तस्यापि कालभेदतो व्यवस्थैव स्वीकार्या; अपि वा तस्यार्याभिजनत्वे च न कमपि बाधं पश्यामः। अङ्गराज्यस्य चासीत् तदानीमनार्यत्व मेव; कुरुराजदुर्योधनकालत एव तस्याभवदार्यावर्त्तान्तर्गतत्वम्। मगधस्य त्वनार्यवासत्वेन निन्दा श्रूयते ऋक्संहितायामपि।

तथाहि (ऋ० म० ३. ५३. १४.)—

"किं ते कृण्वन्ति कीकटेषु गावो
नाशिरं दुह्रे न तपन्ति घर्मम्"—इति।

निरुक्तकारेण चैतद्व्याख्यायामुक्तम्—"कीकटो नाम देशोऽनार्यनिवासः"—इति (६. ६. ४.)। कीकट एव मगधः; अस्ति हि स्मृतिवचनम्—"कीकटेषु गया पुण्या, पुण्या नदी पुनपुना। च्यवनस्याश्रमं पुण्यं पुण्यं राजगृहं वनम्"—इति, गयादयस्तु मगधराज्यान्तर्गता इति प्रसिद्ध मेवेति॥

तत्वतो हिमवत्पृष्ठमध्यस्थो मूजवान्नाम नगराजस्तु स्यादार्यवासोऽनार्यवासो वा, परं आसीत् पुरार्यावर्त्तसीमेति तु मन्तव्य मेव। अत एव वाजसनेयिनः समामनन्ति—"एतत् ते रुद्रावसम्, तेन परो मूजवतोऽतीहि"—इति (सं० ३. ६१)। एतस्यैव यजुषो व्याख्यान मिदं शतपथे। तथाहि—"अवसेन वा अध्वानं यन्ति, तदेनं सावस मेवान्ववार्जति यत्र यत्रास्य चरणं, तदन्वत्र ह वा अथ परो मूजवतोऽतीहि"—

इति (२. ६. २. १७)। तदेव मत्र मन्त्रे रुद्रनामभृत्यु-देवताया मूजवतः परपारे गमनप्रार्थनात आर्यावर्त्तत एव दूरगमनं प्रार्थितं गम्यते ॥

तदेव स प्तनपारम्पराज्यपश्चिमोत्तरश्चे श्रियामादनरतः प्राक्, प्रत्यगगुगङ्गप्रदेशात्, उदक् सिन्धुसागरसङ्गमात्, अवाक् च मूजवतश्चाय मार्यावासः आर्यावर्त्तो वा संहिताकालीन इति निश्चयते ॥

आर्यसाम्राज्यं तु इतोऽप्यन्यत्र च स्थित मित्यन्यदेतत्। तथाहि (ऋ॰ सं॰ ७. १८. १९.)—

"आवदिन्द्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायत्।
अजासः शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रुरश्व्यानि"—इति।

अस्यार्थः। - यः 'इन्द्रः' सम्राट् 'अत्र' राज्ये 'सर्वताता' सर्वकर्मसु 'भेदं' राजप्रजयोर्विचारादिवैलक्षण्यं 'प्रमुषायत्' प्रमुष्णाति प्रच्छन्नीकरोति, एवं क्षत्रैव सर्वाः प्रजाः 'आवत्' अवति, तम् 'इन्द्रं' सम्राजं 'यमुनाः', 'तृत्सवः', 'अजासः', शिग्रवः', 'यक्षवः' 'च' यामुनप्रदेशादिवासिनः सामन्तराजानः 'अश्व्यानि' अश्वादियाहितानि, 'शीर्षाणि' शीर्षतः प्रवाहितानि 'च' 'बलिम्' उपढौकनं 'जभ्रुः' प्रददुरिति।

अस्या ऋचि श्रुताः यामुनादयः सर्व एव जनपदाः मद्यानीत्मनार्यावासतोऽद्यतनादस्मादार्यावर्त्तस्य बहिर्भूता एव स्युः। अत्रोभयवास्ति च किञ्चिद् विचार्यम्। गङ्गायाः प्रत्यक्पार्श्वस्थिता एषेव यमुना अस्या ऋचि श्रुता, उतान्येति? अस्मद्यते त्वन्येव। शिग्रुजनपदोऽपि स्याश्रद्भागाप्रभवोर्ध्वगतादन्य एवेति। अपि वा आर्यावर्त्तावधेर्नो तदानीं कन्दप्रदेशावेवेत्यपि किं चित मिति॥

अथैतरेयकाले अत्र मार्ग्यावर्त्ते आसीद् य इगायतनः, तदपि किञ्चिदवगम्यते तदृग्यत एव। तथाहि श्रूयतेऽत्राभिषेकप्रकरणे —"प्राच्यां दिशि ये के च प्राच्यानां राजानः०—० दक्षिणस्यां दिशि ये के च सत्वतां राजानः०—० प्रतीच्यां दिशि ये के च नीच्यानां राजानो देऽपाच्यानां०—० उदीच्यां दिशि ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्राः०—० ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः सवशोशीनराणां राज्यायेव तेऽभिषिच्यन्ते"–इति (८. ३. ३.)।

अत्र, 'प्राच्यानां राजानः'–इति सामान्येन श्रवणादवगम्यते न तदानीं प्राच्यां दिशि प्रबलः कश्चिदासीत्नरपतिः, प्रत्युतासन् क्षुद्रराजानो बहव इति। अत एव श्रुत सर्वैवान्यत्र "प्राच्यो ग्रामता बहुलाविष्टाः"–इति (३. ४. ६.)। तदानीं प्रागुदेशीय-पार्वत्य-जनपदो य आसीदासंहिताकालात् प्रसिद्धः किरातनगरादिकः तत एव सोमवल्लीनां प्रायो विहितश्चातैतरेयके— "प्राच्यां वै दिशि देवाः सोमं राजान मक्रीणन्"–इति (१. ३. १.)। तदेवं पाणिन्यागमे हि येषां कान्यकुब्जाहिच्छत्रादीनां प्राच्यभूमौ विद्यमानतोपलभ्यते, ऐतरेयकाले तु तेषां नगराणां मासीद्धा अनाविर्भाव एवेति।

दक्षिणस्यां तदानीं मासीदेकं सत्वद्राज्य मेव बलवत्तमम्, यदिदानीं क्षत्रपरिस्थाख्यायते। तदेतत् "आदत्त यज्ञं काशीनां भरतः सत्वता मिव"–इति (शत० ब्रा० १३. ४. ५. २१.) गाथावचनश्रुतेरेतदेतस्यतोऽपि बहुप्राचीनतरं भरताधिकृतञ्चेति गम्यते। स्याद् दौष्यन्ति-भरतेन तत् स्थापित मिति तदंशाधिर मेव भरता इत्येवोच्यन्ते, दृष्टञ्चैतदेतरेयेणापि भरताधिकृत मेवेति।

अतएवेहान्यत्र श्रुतम्— "तस्मादप्येतर्हि भरताः सत्वनां वित्तिं प्रयन्ति"–इति ( २. ४. १. )। अन्यच्च "तस्मादिदं भरतानां पशवः सायङ्गोष्ठाः सन्तो मध्यन्दिने सङ्गविनी मायन्ति"–इति ( ३. २. ६. )। अनयोः श्रुतिवचनयोः 'आयन्ति' 'प्रयन्ति'–इति वर्त्तमानकालिकप्रयोगदर्शनात्, 'इदम्'–इत्यङ्गुल्या निर्देशाच्चावगम्यतेऽनेनैतरेयेण स्वय मपि दृष्टं स्यात्तद्राज्य भरतवंशीयशासनाधित मिति। तस्य च दौष्यन्तेर्भरतस्य राज्ञः कीर्त्तिकथा बहुप्राचीना इत्थेवैतरेयादिषु गाथेति व्यपदिष्टा। तथयैतरेये— "तदप्येते श्लोका अभिगीताः—

हिरण्येन परीवृतान् कृष्णाञ्छुक्लदतो मृगान्।
मष्णारे भरतोऽददाच्छतं बद्वानि सप्त च।
भरतस्यैष दौष्यन्तेरग्निः साचीगुणे चितः।
यस्मिन्त्सहस्रं ब्राह्मणा बद्वशो गा विभेजिरे।
अष्टासप्ततिं भरतो दौष्यन्तिर्यमुनामनु।
गङ्गायां वृत्रघ्नेऽबध्नात् पञ्चपञ्चाशतं हयान्।
त्रयस्त्रिंशच्छतं राजाऽश्वान् बद्ध्वाय मेध्यान्।
दौष्यन्तिरत्यगाद्राज्ञो मायां मायवत्तरः।
महाकर्म भरतस्य न पूर्वे नापरे जनाः।
दिवं मर्त्य इव हस्ताभ्यां नोदापुः पञ्च मानवाः"

–इति (८. ४. ८.)।

शतपथेऽप्येव मेव श्रूयते प्रायः— "तदेतद् गाथयाभिगीतम्" –इत्यादि ( १३. ५. ४. ११–१४. ) द्रष्टव्यम्।

प्रतीच्यां दिशि तु [illegible] कुरुक्षेत्र राज्यस्याप्युत्तरभागे पर्वतपादस्थभूमिपाः 'नीच्याः' केचनाप्रसिद्धराजानस्तथा

दक्षिणभागेऽप्यवाच्याः केचन, मध्यभागे त्वरण्यभूमय एवेत्युक्त मिद नीयाना मपाच्याना मिति। इहैवान्यत्र श्रूयते "प्रत्यञ्चि दीर्घारण्यानि भवन्ति"–इति (२. ४. ६.), "प्रतीच्योऽप्यापो बह्वाः स्यन्दन्ते"–इति (१, २, १,) च।

उदीच्यां तु हिमवद्दण्डस्योत्तरे भागे आर्यावर्त्ताद् बहिर्विद्यमानावपि आर्यमिश्रजनपदाविमौ उत्तरमद्रः उत्तरकुरुश्चेति श्रूयेते। एवं हि गम्यते— यथैव हिमवतो दक्षिणभूभागोऽय मार्यावर्त्तो मद्रदेश–कुरुदेशाभ्या मासीत्तदानीं द्विधा विभक्तः, तथैव हिमवत उत्तरभूभागय स मद्रदेश कुरुदेशाभ्या मासीत् पुरा द्विधैव विभक्त इति। आर्यावर्त्तीयमद्रदेशादुत्तर इति उत्तरमद्र इत्युच्यते सः, आर्यावर्त्तीयकुरुदेशादुत्तर इति उत्तरकुरुश्चेति। आर्यावर्त्तीयप्रत्यन्तदेशेभ्यः परस्तात् ये देशा महादेशा वा सन्ति, न तेषु सम्बाद्युक्तार्यानार्यभाषादिसम्बन्ध इत्युक्तं पुरस्तात् (१७ पृ० १६ पं०), तथा च तद्देशवासिना मार्य्यत्व मनार्य्यत्वं वा नैव विचार्य मस्ति ; परमुत्तरकुरुदेशस्य नैसर्गिकसौन्दर्य्यस्वास्थ्यकरत्वादितः, तद्देशवासिनाञ्च शान्तिप्रियत्व-तपःपरायणत्वादिदेवस्वभावदर्शनात्, पुण्यमयत्वं देवक्षेत्रत्व मजेयत्वञ्च। तथाञ्चैतरेयकम्— "देवक्षेत्रं वै तत्र चैतन्मर्त्यो जेतु मर्हति"–इति (८. ४. ८.)। तेषां शान्तिप्रियत्वादिस्वभाव एवाजेयत्वे हेतुः प्रबलः। तदुक्तं महाभारतीय-सभापर्वणि चार्जुनदिग्विजये—

"तांस्तु सान्त्वेन निर्जित्य मानसं सर उत्तमम्। ऋषिकुल्यास्तथा सर्वान् ददर्श कुरुनन्दनः॥ × × ×॥ तत एवं महावीर्यं महाकाया महाबलाः। द्वारपालाः समासाद्य हृष्टा वचन मब्रुवन्॥ पार्थ! नेदं त्वया शक्यं पुरं जेतुं कथञ्चन। उपा-

वर्त्तस्व कल्याण पर्य्याप्त मिदं मन्युत ॥ × × × ॥ न चापि किञ्चिज्जेतव्य मर्ज्जुनात्र प्रदृश्यते । उत्तराः कुरवो ह्येते नात्र युद्धं प्रवर्त्तते ॥ × × × ॥ अथेह पुरुषव्याघ्र ! किञ्चिदन्य-च्चिकीर्षसि । तत् प्रब्रूहि करिष्यामो वचनात् तव भारत ॥ ततस्तानब्रवीद्राजन्नर्जुनः प्रहसन्निव । पार्थिवत्वं चिकीर्षामि धर्म्मराजस्य धीमतः ॥ न प्रवेक्ष्यामि वो देशं विरुद्धं यदि मानुषैः । युधिष्ठिराय यत् किञ्चित् करपण्यं प्रदीयताम् ॥ ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च । क्षौमाजिनानि दिव्यानि तस्य ते प्रददुः करम्"–इति २८ अ० ४–१६ श्लो० । तदिदं महानगरं सम्प्रति तीब्बदित्युच्यते, स्लोत्यबदिति तदर्थः ; एतद्देशीया हि प्रायश स्थूलनासिकोदरजङ्घा भवन्ति ।

अस्ति चान्यः कुरुवर्षः ; स नूनं मेरुरुविव', 'ग्रान्तपिटवर्ग'-प्रभृति 'सुवीर्य्य'–देशान्तः, योऽय मद्यतन सेण्टपिटर्स्वर्गादिसाई-वीरियान्तः । तस्य स्वर्गत्वेन वर्णनञ्च महाभारतरामायणादौ बहुत्र । तथाथा महाभारतीयानुशासनपर्व्वणि—"अहो सह शरीरेण प्राप्तोऽस्मि परमां गतिम् । उत्तरान् वा कुरून् पुण्यानथ-वाप्यमरावतीम्"–इति ( ५४. १६ ) । पुनस्तत्रैव—"भैवेयिकं सर्व-गुणोपपन्नं ददाति वै यस्तु नरो द्विजाय । स्वाध्यायचारित्र-गुणान्विताय तस्यापि लोकाः कुरुपूत्तरेषु"–इति ( ५७. ३२. ) ।

अथ यदिह 'मध्यमायां दिशि'–इति, ततो गम्यते कुरुपञ्चा-लादयस्तावत् एवैते प्रदेशा स्तदानीं आसन् मध्यदेशाः, आर्य्या-वर्त्तस्य मध्यभूभागा इति यावत् । तत्र च यच्छ्रुतो वशो-देश, स एव स्यात् महाभारतादिप्रसिद्धः 'शिविः' । किञ्च य पत्ते 'ध्रुवायां प्रतिष्ठायाम्' इति द्वे पदे तद्दिग्विशेषवे सूचेते, ततः

प्रायते धावेव मध्यार्यावर्त्तं तदानीन्तनपाञ्चाला मासीद्राजधानीति। एवञ्च कुरु-पञ्चाल-शिवि-सौवीरप्रदेशात्मकमध्यदेशत एवात्र प्राच्यादयो दिशोऽभीष्टा इत्यपि नानवगतम् ॥

तदेव मैतरेयकाले हिमवद्दक्षिणपार्श्वनिम्नस्थं किरातजाति निकेतनं किरातनगर मेवासीत् आर्यावर्त्तस्यास्य पूर्वप्रत्यन्तः, दक्षिणस्यां भरतवंशीयाधिकृतं सत्वद्राज्य मप्यासीदार्यावर्त्तान्तर्गतम्, पश्चिमस्यां गिरिगिरिनदीग्रामसीमानां प्राचुर्यवर्णनात् गान्धारदेशादिभ्यः परस्तादप्यासीदार्यवास इति गम्यते, उत्तरस्यान्तूत्तरकुरुणा मजेयत्वेन वर्णनात् ततोऽर्वागेवासीदार्यावर्त्तोत्तरसीमेति च प्रतीयत एवेति। एकत्र चात्र श्रुतम्— "त एतेऽन्ध्राः पुण्ड्राः शवराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्तीति" (७. ३. ६.)। तत्र 'एते'—इति इदंशब्दव्यवहारादैतरेयकालेऽप्यासन्निमा जातय इति, 'उदन्त्याः'—इत्युक्ते प्रत्यन्तवासिनोऽनार्या इति च गम्यते। तथाचैषां देशाना मनार्यभूत्वाभिधानादेषा मन्तःस्थिताः प्रदेशा एवासन् तदानी मार्यभूमय इति सुवचम्। अन्ध्रजातयोऽधुना दाक्षिणात्येषु प्रसिद्धा, पुण्ड्र इति खिदानीं 'दीनाजपुर'—इति प्रजातत्त्वानुसन्धित्सवो वदन्ति, एवं शवरपुलिन्दमूतिबाः विन्ध्यगिरिवासिनो म्लेच्छजातिविशेषास्त्वद्यापि प्रायः प्रसिद्धा एव। तदेवं न तदाप्येष आर्यावर्त्तः प्राच्या मतिविस्तृत इत्येवास्माकम् ॥

अथ श्रूयते छेतद् विदेघमाथवाख्यानं शतपथे १ का० ४ प्र० ३ ब्रा० १०—१८ क०। "विदेघो ह माथवोऽग्निं वैश्वानरं मुखे बभार ०—० स इमाः सर्वा नदीरति ददाह सदानीरेत्युत्तराद् गिरेर्निर्द्धावति ताᳫं हैव नातिददाह, ताᳫं ह स्म तां पुरा ब्राह्मणा न तरन्त्यनतिदग्धाग्निना वैश्वानरेणेति। तत एतर्हि प्राचीनं बहवो

ब्राह्मणास्तर्ह्यचेत्तर मिवास स्रावितर मिवास्वदित मग्निना वैश्वानरेणेति। तदु हैतर्हि क्षेत्रतर मिव०—० सैषाप्येतर्हि कोसलविदेहानां मर्यादा, ते हि माथवाः ०—० स ह सुखाविर्पादीति"–इति। एतस्मादाख्यानात् व्यक्त मभिगम्यते, विदेहनाम-मैथिलजनपदस्यानतिप्राचीनार्यभूत्वम्। परं न तदापि दक्षिण-मगधस्यार्यावर्त्तत्वं सम्मतं मन्यामहे वयम्; अनतिप्राचीनपातञ्जलमहाभाष्यवर्णितार्यावर्त्तलक्षणतोऽपि दक्षिणमगधात् प्रत्यगेवार्यावर्त्तप्रतीतेः। अपीह शतपथे (१२. ९. ३. ३.) "वाह्लिकः प्रातिपीय आस"–इति श्रवणात्, तदाप्यासीद् वाह्लीकस्यार्यावर्त्तत्व मिति च स्वीकार्यम्॥

पाणिन्यागमेऽपि आयुधजीविवाचिपर्श्वादिगणे पठितो वह्लीकः (पा० सू० ५. ३. ११७.)। "कम्बोजाल्लुक्"–इति (पा० सू० ४. १. १७५.) कम्बोजग्रहणञ्च दृश्यते। तत्र सिन्ध्वादिगणेऽपि पठितः कम्बोजः (पा० सू० ४. ३. ९३.)। गणपाठोऽपि पाणिनिनैव कृत इति सिद्धान्तितं भगवता पतञ्जलिना (१. १. ३४)। महाभारतेऽपि वर्णितौ काम्बोजवाह्लीकौ (द्रो० प० ११७, १५५ अ०)।

अथ भगवता यास्केनापि "कम्बोजाः कम्बलभोजाः कमनीय-भोजा वा; कम्बलः कमनीयो भवति"–इति कम्बोजशब्दो निरुक्तः (२. १. ४.)। "प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु"–इत्यामूल्का तदुदाहरणाय प्रोक्तं चैतत्— "शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते०—० विकार मस्यार्येषु भाषन्ते शव इति; दाति-र्लवनार्थे प्राच्येषु, दात्र मुदीच्येषु"–इति (२. १. ३, ४.)। पातञ्जले महाभाष्ये पश्पशायां मप्येत मेव।

अपि तत्र आर्यावर्त्तस्यास्य चतुःसीमनिरूपणं कृतं सुव्यक्तम्। तथाहि—"कः पुनरार्यावर्त्तः ? प्रागादर्शात्, प्रत्यक् कालकवनात् दक्षिणेन हिमवन्तम्, उत्तरेण पारियात्रम्"—इति २, ४, १० सू० भा०। अत्राह तट्टीकाकारः कैयटः—"आदर्शादयः पर्वत-विशेषाः"—इत्येव। "जनपदतदवध्योश्च (पा० सू० ४. २. १२५.)" —इतिसूत्रस्योदाहरणभूतं यदिह आदर्शक इति पदं लभ्यते, इतोऽपि ज्ञायते यस्यादर्शनाम्ना क्वचित् सीमपर्वत इति। सोऽयं आदर्शः स्यादञ्जनपर्वतः; तत्रदर्शितस्तथैवावमतेः। स चेदानीं सुलेमानिरुच्यते। स हि शतपथब्राह्मणश्रुतश्वेतगिरेरेव दक्षि-णांशः। एवञ्च पतञ्जलिकालेऽपि स एव श्वेतगिरिरेवार्य्यदार्यावर्त्तस्य पश्चिमसीमेत्यनुमानमपि न स्यादसङ्गतम्। तदानीन्त-नार्यावर्त्तस्य पूर्वसीमभूतं कालकवनं तु स्यात् धर्मारण्यतः प्राग्-विद्यमानं दक्षिणमगधस्य प्रत्यक् स्थितं वक्सार-(वक्सर)-प्रदेशीयं ताडकवनम्। पुरासीत् तद्धि कालयवनाधितम्; तत्प्रभृत्येव तस्य यालवनं कालकवन वेति च नाम सम्पन्नम्। हरिवंशोल्लिखितस्य विष्णुपुराणोक्तस्य च (५. २३. ५.) तस्य कालयवनस्य मगध-राजजरासिन्धुमित्रत्वेन वर्णनात् कालवनमगधयोः सामीप्यानुमानं स्यात्र सङ्गतम्। अत एव प्राच्यमगधस्य अनार्यवासत्वेनोल्लेखोऽपि तस्यैतस्य पतञ्जलेः सङ्गच्छते। तथाहि—"हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमगधेषु; गमि मेव त्वार्या प्रयुञ्जते"—इति (म० भा० पस्पशा०)। तदेवं तदापि सौराष्ट्रजनपदस्य, तथे-दानीं पटनेत्यादिप्रसिद्धानां प्राच्यमगधीयकुसुमपुरादीनाञ्च आर्यावर्त्तसीमतो बहिः स्थितिरासीदित्यत्र च नास्ति संशयलेशो-ऽपीति।

अथात्र भगवान् मनुरप्याह— "आ समुद्रात्तु वै पूर्वादा समुद्राच्च पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः" –इति (२, २२)। 'तयोः गिर्योः' पूर्वापरयोः हिमवद्विन्ध्ययोः। तदित्थं पूर्वापरसमुद्रव्याप्येव देशो मनोः सम्मतः। तत्र पूर्वः स्यात् सिन्धुसागरसङ्गमः, अपरस्तु गङ्गासागरसङ्गमः। स एष आर्यावर्त्तः ब्रह्मावर्त्तप्रदेशो ब्रह्मर्षिदेशो मध्यदेशो यज्ञियदेशश्चेति चतुर्विधत्वेन वर्णितस्तेन तत्प्रान्तभूमीनां म्लेच्छभूमत्वं सुररीकृतञ्च। तद्यथा—

"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते॥
कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः शूरसेनकाः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः॥
हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः॥
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः"–इति
(म० २अ० १७, १९, २१, २३श्लो०)।

अत्र हि ब्रह्मावर्त्त-ब्रह्मर्षि-मध्यदेशास्तु 'यज्ञियाः' यज्ञकार्यार्हभूमय एव, तत्र नास्ति विचारणा; निर्दिष्टेभ्य एभ्यो बहिरपि आर्यावर्त्तान्तर्गताः सिन्धुसौवीरकाश्मीरादयो देशा अपि यज्ञानुष्ठानार्हभूमय इति 'यज्ञियदेशाः' उच्यन्ते। एतस्मादार्यावर्त्ताद् बहिःस्थिताः "किराता यस्यान्ते, पश्चिमे यवनाः स्मृताः। आन्ध्रा दक्षिणतो वीर! तुरस्कास्त्वपि चोत्तरे"–इति (वा० पु० १२, ४०), एवमादिकाः खोरासान-तुरस्क-पूर्ववङ्गोत्तरवङ्गान्ध्रप्रदेशादयोऽस्यार्यावर्त्तस्य प्रान्तभूमयः सर्वाः एव म्लेच्छदेशाः; किन्त्वार्यावर्त्तान्तर्गता

दक्षिणवङ्गाङ्गप्राच्यमगधादयोऽपि कृष्णसारमृगहीनत्वेनायज्ञियत्वात् म्लेच्छदेशा एव।

तत्वतस्तु "तयोरेवान्तरं गिर्योः"-इति मनूक्तेः पूर्वस्यां यावदेव विन्ध्यगिरेः प्रसृतिस्तावदेव यज्ञियं आर्यावर्त्तं स्वीकार्यः, ततो वहिरार्यावर्त्तत्वेऽपि न त्वस्ति यज्ञियत्वमिति म्लेच्छभूत्वमेव। अत एवात्र वङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च गमननिषेधः सङ्गच्छते; सूचितश्चैतदत्र मनुनैव "एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः"-इति (२. २४.)। 'एतान्' ब्रह्मावर्तादीनित्यर्थः। तद्देषु देशेषु पुरा नासन् ब्राह्मणा इति प्रवादोऽप्युपपद्येत। एतर्ह्यपि प्राच्यमगधेषु पटनाप्रभृतिषु, अङ्गप्रदेशेषु भागलपुरादिषु चान्यत आगताः शाकलद्वीपिब्राह्मणाः, तथा वङ्गेष्वत्र कान्यकुब्जादागता एव ब्राह्मणा राढि-वारेन्द्र वैदिका इति ख्याता वसन्ति, कलिङ्गसौराष्ट्रीयैरपि तथैव।

कलिङ्गप्रदेशागम्यत्वं तु पाणिनिसूत्रे तद्वार्त्तिकतद्भाष्येभ्यश्चावगम्यते। तथाहि— अस्ति पाणिनेरेकं सूत्रं "परोक्षे लिट्"-इति (३. २. ११५), अत्र चास्ति कात्यायनवार्त्तिकमिदम्— "अत्यन्तापह्नवे च"-इति, लिट् वक्तव्य इति शेषः, उदाहरणञ्चास्य दर्शितं पतञ्जलिना— "नो कलिङ्गान् जगाम"-इति विवृतं च तत् कैयटेन— "न केवलं तद्देशस्य भोजनादेरपह्नवो यावत् तद्देशगमनादेरपि"-इत्यादि। एष च कलिङ्गप्रदेशोऽध्यार्यावर्त्तादहिरेव संस्थितो मेदिनीपुरादारभ्य तैलङ्गदेशान्तं यावद् विस्तृतः। पुरा आसीदयं मुखलिङ्ग मध्यकलिङ्ग-कलिङ्गेति त्रिधा विभक्त इति त्रिकलिङ्गनामा। तैलिङ्गनाम तु तत एव समुद्भूतम्, अप्युक्तनिह्नुत एवोक्तनामप्रसिद्धिरित्याहुरेतिह्ना-

सिकाः । अतएव श्रौतेषु वर्णविचाराभावस्तद्दोषनिरासाय चोत्तरत्र, समये केनचिदुत्कलखण्डप्रणयनेनेति सम्भाव्यते ।

अथामरसिंहोऽपि प्राच्योदीच्यमध्यम्लेच्छेति चतुर्विभक्त मार्यावर्त्तदेशसंस्थान मश्लोकयत् । तद्यथा—"आर्य्यावर्त्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः"–इति (२, १, ८,)। तत्र "शरावत्यास्तु योऽवधेः । देशः प्रागदक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः । प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यदेशस्तु मध्यमः इति (२, १, ६, ७,)। प्राक्सहितो दक्षिणो देशः 'प्रागदक्षिणः', एव पश्चिमसहित उत्तरदेशः 'पश्चिमोत्तरः', अन्तं प्रति गत 'प्रत्यन्तः' सीमान्तप्रदेशः ॥

अथात्र युरोपीयभ्रातरः केचन समववदन्ते । श्रूयते हि ऋक्संहितायाम्— "अनु प्रत्नस्यौकसो हुवे"–इति (१, ३०, ९,), तेनाधिगम्यते सारस्वतप्रदेशीयार्याणा मादिपुरुषाणां वास आसीत् पुरा क्वचिदन्यत्रैवेति । तत्रार्याणा मादिनिकेतन मस्येवासियाखण्डस्य मध्यभागस्थितयोर्वेलुरताग्मुस्ताग्पर्वतयोः पश्चिमपार्श्वगताधित्यका भूमिस्तत एव विकीर्णा वयं भारतीयाः पारसिकाः जर्म्मण्यादयश्च,समभवामेति । अत्र ब्रूमः । भारतीयपारसीकजर्म्मण्यादीना मार्यमूलत्वेनैकजातिप्रभवत्वन्तु स्यात् स्वीकार्य्यम्, किन्त्विहैपनिवेशिका वय मिति नैव मन्यामहे वयम्; स्वदेशस्वत्वहान्यादिदोषवयप्रसङ्गात्, तेषा तन्मतपोषकप्रमाणैर्नूना मतिदौर्बल्याच ।

ते त्रयो दोषाः कथ्यन्ते—नैव देशोऽस्माकं पैतृकोऽपि तु यथा-भयवनाना मधिकृतोऽद्य चेङ्गलण्डीयानाम्, तथैव पुराऽस्मत्पूर्वपुरुषैरवलानगार्यान् विजित्य बलात् गृहीत इति । एतेनाभिन्

देशेऽस्माकं मूलस्वत्वं कदापि नास्ति, प्रत्युत यथा पूर्वं यवनानां जयलब्धं स्वत्वं सम्प्रत्य मथ चेंलण्डीयानाम्, तथैवैकदास्माक मपि बभूवेत्येवेति प्रथमो दोषः। तदनु सम्प्रत्य एवास्माकं यहुद्यादीना मिवौपनिवेशिकवासित्व मिति द्वितीयो दोषः। स्वार्थानुरोधतः स्वावासकण्टकभूताना मेतद्देशीयमूलस्वत्ववता मनार्याणा मुच्छेदन-ञ्चेति तृतीयः। यदि हि तेषां तन्मत मस्माकं मत मित्यभिमतं स्यात्, तर्ह्येते त्रयोऽपि दोषा गलेकुठारन्यायेन मन्तव्या एव स्युः। न च तथा। प्रत्युत दृश्यते हि न कश्चित् स्वावासभूमिचतुरङ्गुल-भूमिस्वत्व मपि त्यक्तु मुत्सहते, तदद्य मिदार्यावर्त्ते चिर मास्वदे-शिवसन्तोऽपि तद्विरुद्धप्रबलप्रमाण मन्तरेण कथङ्कारं नाम पैतृकं स्वत्व मुत्सृजन्तोऽत्र दोषभावं क्षमामहे? अपि राजशासनतोऽन्याया-चारितो विप्लुताधिकार्म्मं नष्टपासन्ताडनादितो वा ये केचनार्या अनार्याश्च स्वदेशाद् बहिर्भूता औपनिवेशिकत्व मापन्ना आपद्यन्ते वाद्यापि, अस्तु तेषां तथात्व मदोषाय; अतथाविधाना मस्माकं विषये तेषां तथाविधजल्पनं कथं न नो हृदयं व्यथयेत्? एवं दुर्बलाना मार्यानार्याणां प्राणादिसम्भीरुनिर्नैवास्मत्पूर्वपुरुषा इह वासस्थान माक्षेभिर इत्यन्तत मपि यथार्थसेत, तर्ह्येष तत्कथनद्वयवादः कथं न भवेद् दोषायेति च हृदयवद्भिः सुधीभिरेव विवेचनीयम्॥

सन्ति चात्र तेषां तन्मतपोषका येऽष्टावनुमानहेतवो लिखिताः, न तेष्वेकोऽपि विचारसह इत्यस्माकम्। तद्यथा —

(१) 'एशियाखण्डतः प्रोषिता एवार्य्याः कालेन सर्वत्र यूरोप-खण्डादौ 'बभुवुः' कृतवासास्तत्र्याः'-इत्येव मस्त्येकः प्रवादः, अतोऽव-गम्यते नून मासीदार्य्याणा मादिवासः प्रथम मेशियाखण्डमध्य-भाग एवेति तेषां तथाविधानुमानस्याद्यहेतुवर्णनम्। अत्र ब्रूमः—

जागर्तु स प्रवादस्तेन किम्, तथा स्वीकारेऽपि न भवेदस्मार्क मूलत्वनाशः, आर्यावर्त्तस्यास्य वैशियाखण्डीयभूभागत्वात्; निरवसितायास्मात् विश्वामित्रर्षिपुत्रादयः। तथाहि—"त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठाः"–इति ( ऐ० ब्रा० ७. २. ६. )। अतएव त्वग्दोषदुष्टा भर्तृपरित्यक्ता अत्रिसुता विदुष्यपालेव ग्रीकदेशीया अपेलो देवतेति सम्भाव्यते। तदत्र ऋ० सं० ८, ९१ सूक्त-व्याख्यानपरं शाट्यायनब्राह्मणं द्रष्टव्यम्।

(२) भारतीयपारसिकैलण्डीयादीनां विभिन्नजातित्वेऽपि भाषासादृश्यं दरीदृश्यते, विशेषतः सर्वास्वेव भाषासु शीतर्त्तुनामैकविधमेव प्रायः, तस्माच्चावगम्यते सर्वेषामेवैषामेकवंशप्रभवत्वं शीतप्रधानवासित्वञ्चेति तेषां तादृशानुमानप्रवर्त्तं द्वितीयहेतुवर्णनम्। अत्र ब्रूमः—अस्त्वेषामेकवंशप्रभवत्वम्, अपि स्वीकार्यञ्च स्यात् पुरासीदेषां सर्वेषामेव हिमप्रधानैकदेशवासित्वञ्च, तेन किम्? शीतप्रधाने तस्मिन् सप्तसिन्धुप्रदेशे हि तेषां मूल-मर्वजातिमूलार्याणां वासस्वीकारेऽपि किं मेनवोपपद्यते? उपपद्यत इति चेत् ज्ञातं कल्पनाकल्पितजल्पनयेति। अपि पारसिकायेस्ताग्रन्थस्य 'वेन्दिदाद्'–प्रकरणीयाद्याध्याये 'हरखइति'–नामकस्यैकस्याभ्युदयशालिनो नगरस्य यद् वर्णनं दृश्यते, तन्नूनमेतस्य सारस्वतप्रदेशस्यैव; 'सरस्वती'–शब्दस्यैव हि पारसिकभाषायां 'हरखइति'–व्यवहारः सर्वसम्मतः, सिद्धान्तितञ्च तथ्यमस्माकं महोदयेनापि ( १८९२ ख. मु. व्या. ५६–५८ पृ० )।

(३) तत्रैव 'अवस्ता'ग्रन्थस्य 'वेन्दिदाद्'-प्रकरणे देशवर्णनप्रसङ्गे 'ऐर्यानमवैजो'-नामा कश्चिज्जनपदोऽपि वर्णितो दृश्यते। हिमर्त्तु-

प्रधानश्च स इति चोल्लिखितं तत्रैव। स एव जनपदः पारसिकाना मादिवासस्थः स्यात्, स्वीक्रियते च तथा तैः पारसिकैः। भारतीयपारसिकयोर्वदनमण्डलसारूप्यात् भाषासादृश्यात्, अग्निपूजकत्वसाम्याच्चैकमूलप्रभवत्वं व्यज्यत एवेति सर्वमूलार्याणा मेवावासभूमिः स्यात् स एव 'ऐर्यनमृवेजो' जनपद इति तत्र तृतीयहेतुवर्णनम्। अत्र ब्रूमः— अस्तु पारसिकाना मार्यवंशसमुत्पन्नत्वेनास्मद्भ्रातृत्वम्, स्याच्च स्वीकार्यं तेषा मादिपुरुषाणा मैर्यनमृवेजोवासित्वम्; न तथाप्यस्माकं तद्देशमूलत्वं भवेदुररीकार्यम्; राजाज्ञादिभिरन्यदेशतो वितारिडतानां तदादिपुरुषमात्राणां तथात्वसम्भवात्। एकवंशप्रभवाना मपि हि पूर्वपुरुषाणा नानाहेतुतो नानादेशवासित्वं सम्भवत्येव, सम्भवति च तत्र केषाञ्चित् स्वदेशवासित्व मपीति सुवच मेव। अपि वा राजतरङ्गिणीवर्णित 'आर्यानक' देश एव 'ऐर्यनमृवेजो'–इति पारसिकानामभागासीत्, स च स्यात् केषाञ्चिदार्याणां वासभूमिः, पारसिकानाञ्चैषां तेभ्य एवोत्पत्तिः स्वीकार्येति सर्व मवदातम्। स च देशः काश्मीरादुत्तरो हिमप्रधानोऽप्यार्यावर्त्तान्तर्गत एव। तथाहि (रा० त० ४. १६७)—

"तुषारवर्षैस्तुङ्गैसमकाण्डनिपातिभिः।
आर्याणकाभिधे देशे विपन्नं केचिदूचिरे"–इति।

वस्तुतस्तु ऐर्यनमृवेजोनाम नगरं नाद्य क्वचिदपि केनाप्युपलभ्यते, पुरा क्वासीत् तस्य विद्यमानतेत्यपि नाद्य यावत् सुनिर्णीतम्; तदलं खपुष्पपर्यालोचनयेति।

(४) अस्ति चैव मपि प्रवादः— ग्रीकरोमकजाति–पूर्वपुरुषाः पूर्वोत्तरदेशतः प्रोषिता इताप्यादौ न्यवात्सुरिति। स एष प्रवाद-

स्तदैव सङ्गच्छेत, यदि नामासियाखण्डस्य मध्यभूमिरेव तेषा माद्यार्थ्याणां निकेतनं मन्येतेति तत्र चतुर्थहेतुवर्णनम्। अत्र ब्रूमः— पूर्ववर्णितः सुवास्त्वादिप्रदेशोऽपीताल्यादिभ्यः किञ्चिदुत्तरगतपूर्व एवेति तत्प्रवादोपपत्तिः समानैवेति। —

(५) हिमालयस्योत्तरभागस्य पवित्रतमत्वेन लोकातीतमहिमान्वितत्वेन स्वर्गरूपत्वेन वेदाभीप्सनात्मा मार्याणां लीकारात् तादृगस्थानस्यैतदादिपुरुषाणां वासः सम्भाव्यत इति तत्र पञ्चमहेतुवर्णनम्। अत्र ब्रूमः— हिमवद्दक्षिणभागस्था आर्याः तपस्साधनादिर्भिचिकीर्षवश्चिर मेव हिमवदुत्तरभागं गत्वा कृतकृत्या भवन्ति, इत एव तस्य पवित्रतमत्वेन वर्णनम्; न त्वादिपितृवासनिबन्धन मिति। लोकातीतमहिमान्वितत्वन्तु तत्रत्यकुबेरा मजेयत्वादिश्रवणात एव। हिमवत्पृष्ठस्य स्वर्गरूपत्वं तु पौराणिकम्; उत्तरशब्दमात्रं तद्बीजम्। "उत्तरः=उद्धततरो भवति, अधरः=अधो रः, अधो न धावतीत्यूर्द्ध्वगतिः प्रतिषिद्धा"–इति यास्कः (निरु० २. ७. २.)। तथाचोर्द्धतनप्रदेश एवोत्तरः। आर्यावर्त्तस्य यस्यां दिशि उन्नत ऊर्द्धतनो हिमवान् पर्वतो विद्यते, सैव दिगुत्तरेति व्यपदिश्यते, ततो विपरीता अधरेति। अत एवैवं श्रूयते—"स उत्तरस्मादधरं समुद्र मपो दिव्या असृजद्वर्ष्या अभि"–इति (ऋ० सं १०. ९८. ५.)। अत एव स्वर्गोऽप्युत्तर उच्यते। तद्यथा ऋक्संहितायां मन्त्रश्रुतम्—"विश्वस्मादिन्द्र उत्तरः"–इति (ऋ० सं० १०. ८६. १-२३.)। एव मन्यत्रान्यत्र च बहुत्रैव।

(६) श्रूयते हि कौषीतकिब्राह्मणे - "उदीच्यां दिशि प्रज्ञाततरा वागुद्यते, उदञ्च उ एव यन्ति वाचं शिक्षितुं, यो वा तत आगच्छति, तस्य वा शुश्रूषन्त इति ह माहैषा हि वाचो दिक्

प्रयाता"–इति ( १. ७. ६. )। तदेवं कौषीतकब्राह्मणग्रन्थ-प्रवक्तुराचार्यस्य हिमवद्दक्षिणखण्डस्थत्वेऽपि तदादिपुरुषाणां हिम-वदुत्तरखण्डवासित्वेनैवोत्तरदिक्श्रुतिः सङ्गच्छत इति तत्र षष्ठ-हेतुवर्णनम्। अथ ब्रूमः— ऐतरेये च ब्राह्मणे समाम्नातैतदर्थिका श्रुतिः ; ऐतरेयकाले कुरुपञ्चालशिबिसौवीराणां मध्यदेशत्वं पूर्वं वर्णितम। मध्यदेशापेक्षयोद्याननगरस्योत्तरत्वं सर्वैरनुमन्तव्य मेव। एष एवोद्यानदेशो राजतरङ्गिण्यां मुञ्जानक इत्युक्तः ; तत्रास्य विद्यानिवासत्वेन स्तुतिरप्यस्ति। स एष काश्मीर-सन्निहित उद्याननामजनपदोऽवेष्टो विद्यानिलय इति कथं भावेन हिमवतोऽप्युत्तर मिति।

(७) श्रूयते हि— "तोकं पुष्येम तनयं शतं हिमाः"–इति ( ऋ० सं० १. ६. ८४. ) चार्षीमन्त्रः। एवं मन्त्रान्तोऽपि। तदत्र विवेचनीयम्, एवं हिमर्तु तोऽब्दपरिगणन तु तत्रैवोपपद्येत, यत्र प्रदेशे हिमप्रपातस्यातिशय्यं विद्यते सदैव, नात्र तथोपलभ्यते ; अपि त्वासियामध्यभूभागस्थौ बैलुरताग्मुस्ताग्पर्वतयोरन्तराल-प्रदेशस्तु नूनं तादृश एवेति तत्रैवासीत् पुरातना मादिवास इति प्रमाणयितु मवलोऽयं हेतुः सप्तमः। अत्र ब्रूमः— "यदि हिमर्तुवाचिहिमशब्देनाब्दपरिगणनश्रवणात् हिमशब्दस्याब्दवाचि-त्वेन व्यवहाराद्वा स्यादस्मत्पूर्वपुरुषाणां हिमर्त्तु प्रधानदेशवासित्वानु-मानम्, तर्हि शरदृतुवाचिशरच्छब्देनाब्दपरिगणनश्रवणात् शर-च्छब्दस्याब्दवाचित्वेन व्यवहाराद्वा किं न स्यात् तेषां शरदृतुप्रधान-देशवासित्वानुमानम् ? अस्ति तथापि श्रवणं बहुत्रैव। तद्यथा—

"तिस्रो यदग्ने शरदस्त्वा मिद्"–इति ऋ० सं० १. १२. ७२.।
"शतं मिन्नु शरदो अन्ति देवाः"–इति ऋ० सं० १. १४. ६०.।

"शतं नो रास्व शरदो०—०ऽश्यामायूंषि"–ऋ० सं० २, ३, २७।
"पश्येम शत शरदो जीवसे धा"–इति ऋ० सं० ३, ३, ३५।
"पतिर्जीवाति शरद शतम्"–इति च ऋ० स० १०, ८६, ३८।

वस्तुतस्त्वार्याणां न कदापि हिमर्त्तुमात्रभोगौकस्त्वमासीत् न च कदापि शरदृतुमात्रभोगौकस्त्वम्; अपि नाम "शरच्छृता अस्या ओषधयो भवन्ति, शीर्णा आप इति वा"–इति यास्कोक्तेः (४, ४, ४.) शृणाति हिनस्ति प्राणिनः इति शरच्छब्दव्युत्पत्त्या शरदृतोरस्वास्थ्यकारित्व मासीदार्याचार्यसम्मत मिति तस्यर्त्तोरब्दाख्यच समानि तैरिति प्रतीयते। सति चैवं तस्याब्दाख्यावयवत्वे, हिमर्त्तोरब्दाख्यावयवत्वं सुतरां सम्भवम्। अत एवाब्दगणनाप्रसङ्गे शरच्छब्दहिमशब्दयोरन्यतरस्य प्रयोगो बहुत्र श्रूयते वेदे, सङ्गच्छते च तयोः शब्दयोर्गौण्यात्तत्त्वाब्दवाचित्व मपीति।

(८) अपि श्रूयते— "उत्तरं गिरि मति दुद्राव"–इति (श० ब्रा० १, ८, १.)। 'उत्तरं गिरिं' हिमालयम् 'अति' अतिक्रम्य उल्लङ्घ्य 'दुद्राव' द्रुतगमनं कृतवानिति च तस्यार्थः। तदस्मादपि वचनात् हिमालयं सुलङ्घ्य इहागमन सुव्यक्त मिति तेषां तादृशानुमानेऽयमी हेतुः। अत ब्रूमः— तस्याः श्रुतेराद्यन्तपर्यालोचनया अतियत्नाद्यालोचनया चैतद्विपरीत एवार्थः प्रतीयते। तथाहि— "स ओघ उत्थितः नाव मापेदे। तं स मत्स्य उपन्या पुप्लुवे। तस्य शृङ्गे नावः पाशं प्रति मुमोच। तेनैतमुत्तरं गिरिमतिदुद्राव। स होवाच। अपीपरं वै त्वा। वृक्षे नावं प्रतिबध्नीष्व। तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीत्। यावद्यावदुदकं समवायात् तावत्तावदन्ववसर्पासीति। स ह तावत्तावदेवान्ववससर्प तदप्येतदुत्तरस्य गिरेर्मनोरवसर्पणम्"–इति पूर्वं तन्मत्स्यप-

वचनम् । तदेतत्पर्यालोचनया गम्यते— कदाप्येकदा सम्भूतेऽत्र जलप्लावनेऽप्यादेवार्यावर्तीयसमुद्रादुत्थितस्य जलौघस्य हिमालय-शृङ्गाधिरोहणम्, उपशान्ते च तदुपद्रवे ततः क्रमादभिसर्पणञ्चेत्ये-वेत्यस्मतानुकूलैवेषा श्रुतिरिति । अत एव 'अतिदुद्राव'–इति पदस्य 'अधिजगाम'–इत्यर्थः कृतस्तद्भाष्यकृता हरिस्वामिना । वेदार्थनिर्णयार्थेव यास्कप्रणीते निरुक्ते त्वभिपूजितेऽर्थेऽतिशब्दो निर्णीतः— "अति सु इत्यभिपूजिते"–इति ( १. १. ५. ) । 'अतिधनः'–इति, 'सुब्राह्मणः'–इति च तदुदाहरणद्वयम् । अति-शयोऽप्यर्थोऽप्यस्यैतर्यास्कीयः । अत एव "अतिमृत्यु मेति"–इत्यादौ ( श्वेता०, उ० ६. १५. ) अतिशयोऽर्थ एव प्रतीयते, मोक्षङ्गनार्थः । "अतिरतिक्रमणे च"–इति पाणिनिसूत्रस्य ( १. ४. ०५. ) व्याख्यायां ह्याहैव ज्ञानेन्द्रसरस्वती— "अतिक्रमणं मुचितादधिक-स्यानुष्ठानम्"–इति । अथ वा 'तुष्यतु दुर्जनः'–इति न्यायादति-शब्दस्यार्थत्वस्वीकारेऽपि हिमालयोत्तरवासिनां तेषां दध्यास्य हिमालयस्य उत्तरगिरित्वं कथं सम्भवेत् ? अपि हिमालयोत्तर-प्रदेशेषु आसिया मध्यभूखण्डेषु, न कदाप्यासीत्समुद्रो नैवाद्यापि दृश्यते, तत् कथं शिरो नास्ति शिरोव्यथेतिवत् सतपथीयार्यवजल-ओतिवर्णनं सङ्गच्छतेति च विचार्य मेव । आसीत् पुरोदीच्या मपि समुद्र इति चेद् वेदेषु प्रायः सर्वत्रैव समुद्रोल्लेखकाले तथाविधसमुद्रस्यानुल्लेख कथङ्कार मुपयुज्यत इति च ध्येय मिति.॥

एवं सुमेरुप्रदेशवासिनः खल्वास्मदस्मत्पूर्वपुरुषा इति बाल-सिद्धान्तोऽपि स्याद् बालसिद्धान्त एव । तथाहि—

उत्तरमेरुप्रदेश एवास्मत्पूर्वपुरुषाणा मार्यार्याणा मासीद् वास्तव्यभूरिति प्रमाणयितुं तेन निष्प्रमाणोऽपि वागाडम्बरो बहु-

पन्यस्त: ; तत्र प्रमाणपरतन्त्राणां मौन मेव श्रेय: ; ततो यानि तु श्रुतिवचनादीनि प्रमाणत्वेनोपन्यस्तानि, तत्रेदं प्रथमं मन्यामहे वयम्— "अमी य ऋचा निहितास उच्चा,

नक्तं ददृश्रे कुहचिद् दिवेयु: ।

अदब्धानि वरुणस्य व्रतानि,

विचाकशच्चन्द्रमा नक्त मेति ॥"—इति ऋ० १. २४. १० ।

तत्सम्मतोऽस्यार्थ:—'अमी' 'ये' 'ऋक्षा:' सप्तर्षय: 'उच्चा' उच्चै: शिर:प्रदेशे 'निहितास:' स्थापिता:, दृश्यन्त इति शेष: ।' ते 'नक्तं' रात्रौ 'ददृश्रे' दृश्यन्ते 'दिवा' 'कुहचित्' 'ईयु:' गच्छेयु:, न दृश्यन्त इति यावत् । 'चन्द्रमा:' अपि 'नक्तम्' एव 'विचाकशत्' प्रदीप्यमान: 'एति' दृश्यत इति भाव: । तदेतदेवमादीनि 'वरुणस्य' राज्ञ: 'अदब्धानि' कथमप्यविनाश्यानि 'व्रतानि' कर्माणि, ज्ञेयानीति । एवञ्च शिर:प्रदेशे सप्तर्षिमण्डलावस्थानं गम्यते, तच्च सुमेरावेवोपपद्यते ; अत एतादृङ्मन्त्रद्रष्टृणा मार्य्यर्षीणा मासीत् पुरा तत्रैवावास इति तदभिप्राय: । वयन्तु ब्रूम:— यास्कमते ऋक्षा इति पदेनेह सर्वेषा मेव नक्षत्राणां ग्रहण मिष्टम् ( नि० ३. २० ) ; सर्वेषा मेव तेषां रात्रावेव द्योतमानत्वात् सुसङ्गच्छत एवाव यास्कस्य तन्मतम् । अपि सुमेरुप्रदेशतो नक्षत्राणि उच्चैर्दृश्यमानानि, इतोऽपि उच्चैरेव दृश्यमानानि, कुमेरुतोऽपि तानि उच्चैरेव दृश्यमानानीति तेषा मुच्चै:स्थत्वं सर्वत्र प्रत्यक्षम्, किं सुमेरुत एव । न ह्युच्चै:पदेन मस्तकोपरि वर्त्तमानं भ्राम्यमानं वा गम्यते । यद्यपि शतपथब्राह्मणे (२. १. २. ४.) ऋक्षशब्द: सप्तर्षिवाचकोऽपि ; तत्रापि न न: क्षति: । "उत्तरम्, उत्ततरम्"—इत्यादिनैरुक्तवचनात् ( २. १. २. ) उच्चैर्निबन्धन मेवोत्तरनामव्यपदेश

द्दत्यगमा । दक्षेरित्व स्रोद सप्तर्षिपक्षे उत्तरस्या मित्येवार्थः कल्प्यते; श्रुतञ्च तत् तत्रैव शतपथे तदनुपदम्— "उत्तरा हि सप्तर्षय उद्यन्ति"—इति। तदित्थं तत्रदर्शित एव मन्त्रस्तन्मतसमुच्छेदको भवितु मर्हति न वेति सुधीभिरेवाकलय्यम्।

वस्तुत एव मन्त्रो वरुणविज्ञानपरस्ततो वरुणकर्मपरिचायक एव प्रपन्नः; तदन्न दृ दवणपदार्थबोधाय विलीयत एवैतद् बालविजृम्भितं समन्तात्। तथाहि—"रात्रिर्वरुणः"—इतिश्रुतेः (ऐ० ब्रा० ४. २. ४.) वरुणस्य रात्रिदेवत्वम्; निरुक्ते द्वादशादित्यनामप्रकृति वरुणशब्दपाठात् सूर्यविशेषत्वम्; "येना पावक चक्षसा॰—॰पश्यन् जन्मानि सूर्य"—इतिस्तोदाहृतश्रुतिव्याख्यानेन भगवता यास्केन तदेव प्रतिपादितञ्च (१२. ३. ८.); एवं हि रात्रिकालिकोऽस्तं गतः सूर्य एव वरुण इति प्रतिपद्यते। एवं वरुणार्थस्वीकारेणेवोपपद्यते वरुणराजकर्तृकः सप्तर्षिप्रभृतीनां चन्द्रमसश्च प्रकाशः। परं न चेतद् वचः सङ्गच्छते मेरुप्रदेशवासिनाम्; तत्र सूर्यविशेषस्य वरुणस्य तदधःस्थत्वेन चन्द्रमप्रभृतीनां प्रकाशकत्वासम्भवात्, प्रत्युत आर्यावर्तवासिना मेव सङ्गच्छते; चरत्तदर्शितोऽप्येष मन्त्रोऽस्मन्मतपोषक एवेति ध्रुवम्। एवं सति स्वमतप्रमाणाभासोपन्यासो नूनं नूतनमतप्रकाशनव्यग्रमानसस्य तस्य, सुदीर्घप्रान्तरमध्यापतितस्य क्षुत्तृट्क्षामस्य पथिकस्य मरीचिकादिग्भ्रम इवेति॥

तद्द्वितीयप्रमाण मप्येव मेव। तथाहि—

यस्येकमशादशर्चं सूर्यसञ्चाम सूक्तम् (ऋ० सं० १०. ८८.)।

तस्य द्वितीयस्याः ऋचः प्रथमार्ध एषः—

"स सूर्यः पर्युरू वरांस्येन्द्रो ववृत्याद्रथ्येव चक्रा"—इति।

इम मेव मन्त्रांश मवलम्ब्य सुमेरोरार्य्यावासभूत्वं प्रमाणयितुं चेष्टितं तेन। तदुक्तम्—मस्तकोपरि रथचक्राकारेण नक्षत्राणां भ्रमणं तदवस्थान मेव सम्भवतीति। वस्तुतस्तन्मन्त्रस्य व्याख्यानालोचनतो न तादृक्तत्छायापि गम्यते; प्रत्युत तन्मतविपरीतं यत् सत्यं तदेव प्रमाणितं भवति। तद्यथा —'इन्द्रः' परमैश्वर्यादिगुणयुक्तः 'सः' 'सूर्यः' 'उरु' उर्वी विस्तीर्णान्तरिक्षे 'वरांसि' पृथिव्यादिग्रहोपग्रहमण्डलानि 'आवर्त्यात्' सदैव आवर्त्तयति। तत्र दृष्टान्तः—'रथ्या चक्रा इव' यथा अत्र मध्यस्थः सन् रथसम्बन्धीनि चक्राणि भ्रामयति चक्राणा मितस्ततोविक्षिप्तपतनतो रक्षयति च तद्वदिति। एतेन मध्यस्थित-सूर्याकर्षणाश्रितः सर्वेषां ग्रहोपग्रहाणा मितस्ततोविक्षिप्तपतनराहित्यं भ्रमणञ्चेति विज्ञान मुपदिष्टं भवति। बालमते तु तेषां मस्तकोपरि सूर्यस्याविद्यमानत्वादचक्रपत्वेन सूर्यस्य मध्यस्थितित्वं कार्यं सङ्गच्छेतेति पक्षपातशून्याः सुधिय एव विभावयन्तु। सुव्यक्त मपि श्रुत मक्षरूपेण सूर्यस्य स्थितिवर्णनं तदुत्तरत्र—

"यो अक्षेणेव चक्रिया शचीभिर्
विष्वक् तस्तम्भ पृथिवी मुत द्याम्"-इति।

अस्यार्थः।—'यः' सूर्यः 'शचीभिः' आकर्षणक्रियाभिः 'पृथिवीम्' अतिनीचैःस्थितां भूमिम्, ग्रहमण्डलनिम्नार्द्धभागगता मिति भावः; 'उत' अपि 'द्याम्' अत्युच्चैःस्थितां सुतरां द्युस्थाम्, ग्रहमण्डलोर्द्ध्वभागगता मिति भावः; 'विष्वक्' सर्वतः 'तस्तम्भ' स्तम्भन् वर्त्तते। तस्तम्भेति "छन्दसि लुङ्लङ्लिटः"-इति सार्वकालिको लिट्। तादृगस्तम्भनेन ग्रहाणा मितस्ततः पतनजन्यं कक्षाच्यवनं वारितं भवति। अत्र दृष्टान्तः— "अक्षेणेव चक्रिया"-इति। 'चक्रिया'

धक्रिणौ, चक्रगतो निम्नोर्द्धप्राप्तौ यथा 'प्रवेश' सञ्चौ दृश्येते खोनि, तद्वदिति ॥

तत्तृतीयप्रमाणन्तु स्वसिद्धान्ताघातमेव न सहते, किम्पुन: सत्य-सिद्धान्तघातम् । तथाहि— यदिदं श्रूयते सप्तविधसोमयागेषु अग्निष्टोमादिषु प्रातरनुवाकविधावैतरेयके— "प्रातर्वै स तं देवेभ्यो ऽन्वब्रवीत्"–इत्यादि (२. २. ५.)। एतया श्रुत्या प्रातरनुवाक-पाठस्य प्रातरेव कालो व्यक्तीकृत: । ततस्तदुत्तरत्र प्रातरनुवाकर्चा सङ्ख्याविधौ श्रूयते— "सहस्र मनूच्यं स्वर्गकामस्य"–इत्यादि पक्षान्तरत्वेन । स एष: सहस्रर्चा-पाठ: प्रातरप:काले काश्चिदावर्त्ते सङ्गच्छेत ? सुमेरुप्रदेशे तु सङ्गच्छते; तत्रोषसो मास-द्वयव्यापित्वात् । तदित्थं सुतरां सहस्रर्चानां पाठविधाने गमयत्ये-षाचार्याणां दीर्घोषसे सुमेरौ तदानीं मासीद् वास इति ।

अत्र ब्रूम:– नैष: प्रातरनुवाकविधि: क्वचिद्दक्संहितायां श्रुत:, अपि श्रूयते ब्राह्मणेऽस्त्रैतरेयके, तत् किं सिद्ध मैतरेयक मपि तत्रैव प्रोक्तम् ? तथा ह्यैकारे यदिदं श्रूयतेऽत्रैतरेये— "ध्रुवायां मध्य-मायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजान:"–इत्यादि (३८पृ० ३पं०), तत् कथं सङ्गच्छेत ? किञ्च यदि प्रातरनुवाक-पाठस्य कालो हिमालयाभको मन्येत, तर्हि प्रातस्सवनमाध्यन्दिन-सवनतृतीयसवनानां काला: कीदृशा मन्तव्या: ? संवत्सरसत्रकालश्च कीदृश: ? इत्यादि च तेन निरूपणीय एव। अथापरम्, यदि दीर्घोषसे सुमेरावेव प्रातरनुवाकपाठसम्भव इति मन्येत, तर्हि युधिष्ठिरादिभिर्वाञ्छिरावान्तेरार्यावर्त्तवासिभिरनुष्ठितेश्वमेधादिषु सोमयागेषु प्रातरनुवाकानां पाठो न बभूवेति किं मन्तव्यम् ?

अन्यच्च; यथा सहस्रवार्षिकसत्रस्यासम्भवता मात्रस्य मीमांसायां

मधिकरणे नास्य सिद्धान्तितम्, तथैवोपरि सहस्रसङ्ख्याकाना मृचां पाठे ऽसम्भव इति किं नात्र विचारित मित्यपि विचार्यमेवेति।

वस्तुतस्तु "महति रात्र्या अनूच्यः पुरा शकुनिवादात्"-इत्येव विधिः। 'रात्र्याः' पूर्वस्त्रोपवसथ्याख्यस्य दिनस्य अग्निष्टोमीयपशु-पुरोडाशानुष्ठानस्य या रात्रिः तस्या रात्रेः सम्बन्धिनि शेषे महति अवतिष्ठमाने सति प्रातरनुवाकाख्याना मृचां पाठ आरभ्य, 'शकुनिवादात्' शकुनयः पक्षिणः, ते यस्मिन्नुषःकाले प्रबुध्य वदन्ति ध्वनिं कुर्वन्ति, ततः 'पुरा' पूर्व मेव तत्पाठः समाप्य इत्यर्थः। अत्राह सायणः— "एतदुक्तं भवति, यस्मिन् काले प्रारब्धः प्रातरनुवाकः तमसोपघातात् पुरैव समापयितुं शक्यः स्यात्, तदा प्रारब्धव्यः"-इति (२. २. ५.)। अवश्यपाठ्य-प्रातरनुवाकस्य सङ्ख्या लेकविंशतिश्च (ऐ० ब्रा० २. २. ६.); काम्यपाठ्यस्य तु शतादिका सहस्रान्ता। तदत्रावश्यपाठ्याना मृचां पाठस्तु प्रातरेव नूनं सम्पद्यत इति प्रातरनुवाकनाम-करण मुपपद्यत एव। काम्यपाठ्यानां शतादिसहस्रान्ताना मृचां पाठस्तत्रोपपद्यसम्भव इत्येव "महति रात्र्या अनूच्यः"-इति विधिः। सहस्रप्रातरनुवाकीयासु ऋक्षु एकपदादीना मप्यस्ति विद्यमानता, न चाभ्यस्तानां पाठे विशेषवेलम्बश्च सम्भवति; अतो रात्र्या महति भागेऽवशिष्टे आरब्धः प्रातरनुवाकपाठः शकुनि-वादात् पुरा समाप्तो भवेत्, किं तत्र चित्रम्? किञ्च सहस्रर्च-पाठपक्षे "पुरा शकुनिवादात्"-इति नियमाभावश्च। अत एवेद मपि श्रुतं तत्र तदुत्तरम्— "अपरिमित मनूच्यम्"-इति (२. २. ७.)। "शतं सहस्र मित्यादि सङ्ख्यापरिमाणं परित्यज्य मध्यरात्रादूर्ध्व मुपक्रम्य सूर्योदयात् प्राचीनकाले यावतीरनुवक्तुं,

अभिरश्मि तावतीरनुब्रूयात्"—इति तत्र सायणभाष्यम्। एतेन 'सहस्रानुवचनपक्षे परा शकुनिवादादिति नियमो परित्याज्य इति स्फुटम्। अपप्रमाणे 'शतं सहस्र मित्यादि सङ्ख्यापरिमाणं परित्यज्य'—इत्यत्र स्थाने 'सहस्रं सङ्ख्यापरिमाणं परित्यज्य'—इत्येव वक्तव्यम्; सहस्रपाठमात्रस्य काम्यसाध्यतया तत्रैवापरिमित-पाठव्यवस्थाया औचित्यादिति।

अस्ति चान्यत्र प्रातरनुवाकस्य सर्वदिवापाठ्यत्वश्रुतिः— "उदित आदित्ये प्रातरनुवाक मनुब्रूयात्; सर्वं ह्येवैतदहर्दिवाकीर्त्यं भवति"—इति (ऐ० ब्रा० ४, ३, ४.)। काम्ये बहुसङ्ख्याकर्चां पाठपक्षे एतदपि स्याच्छरणम्; नित्यपाठ्यानां प्रातरनुवाकर्चां मल्पसङ्ख्यात्वेन प्रातःपाठस्य सम्भावितत्वात् प्रातरनुवाक इति नामधेयस्यान्वर्थतापि नानुपपन्नेति विचार्य्य मेतत् सुधीभिरिति॥

उषोदीर्घेचश्रवपदं तदीयचतुर्थ्यमार्थ मप्यकिञ्चित्करम्। तथाहि— "स क्षपः परिषस्वजे"—इति (ऋ० सं० ८, ४१, १.) मन्त्रे श्रूयते 'तस्य वेनीरनु व्रत मुषस्तिस्रो अवर्धयन्'—इति। तदिह उषसस्त्रित्वकथया दीर्घत्वं गम्यते, तच्च ध्रुवेरादेव सम्भाव्यत इति तदीयम्। तत्वतस्त्विह वरुणविभागोपदेशिनो मन्त्रे नोषस-स्त्रित्व मभिहितम्, प्रत्युत 'तस्य' वरुणस्य 'व्रतम्' कर्म 'अनु'-लक्ष्य 'उषः' कालः 'तिस्रः वेनीः' त्रिविधाः जरायुजाजरायुजो-द्भिज्जाः 'वेनीः' प्रजाः 'अवर्धयन्' वर्द्धयति इत्येवोपदिष्टम्। अन्यत्रान्यत्र च "प्रजा ह तिस्रो अत्यायमीयुः"—इत्यादौ (ऋ० सं० ८, १०१, १४.) प्रजानां त्रिविधत्वं श्रुत मेवेति द्रष्टव्यम्। 'अव-र्द्धयत् + नभन्ताम्—इतिपदद्वयसन्धिजन्यम् अवर्धयन्नभन्ता मिति रूपम्; अपिवा व्यत्ययकृतं बहुवचनम्।

उषसो दीर्घत्वप्रमाणाय तेन यदियमृगुदाहृता— "कियात्या यत् समया भवति"—इति ( सं० १. ११३. १०. ), सैषा उषोविज्ञानसूक्तान्तर्गता उषसोऽनन्तत्वं वेदयति, न तु प्रादेशिकदीर्घत्वम् । -

यच्चोषसः पञ्चविभागव्याख्यानेन दीर्घत्वं सूचयितुं यत् तैत्तिरीयश्रुत्याकस्योद्धरणम् ( सं० ७.२.२०. ), तदपि निरर्थकम्; तादृग्विभागस्यार्यावर्त्तेऽप्युपयोगित्वात् ।

किञ्चेदमपि विवेच्यम्,— सुमेरुप्रदेशीयोषसो दीर्घत्वं किमार्यावर्त्तवासिना मन्त्रकं दृष्टा प्रतिपाद्यते, उत तत्रत्यानामिति । तत्रत्यानामिति चेत्, तेन कार्य सिध्येत् तत्रार्याणां वासः ? अथ तत्रत्यानां तादृशमन्त्रकर्तृत्वं प्रमेयमिति चेत्, तदपि नोपपद्यते; दीर्घत्वं ह्यापेक्षिकं भवति, न हि तत् उषोऽन्तरदर्शनविरहादपि सङ्गच्छते ! तत् किमेतेन उषोदीर्घत्वप्रकाशकमन्त्रान्वेषणेनेति धीमताभवता तेनैव स्वयमालोच्यमिति ॥

यदिदं श्रूयते— "तानीदहानि बहुलान्यासन् या प्राचीनमुदिता सूर्यस्य"—इति ( ऋ० सं० ७. ७६. ३. ), तदितः खलूषसः कतिदिनव्यापित्वं गम्यते स्फुटमिति तेषामाचार्याणां सुमेरुवासित्वे प्रथमप्रमाणमित्याह । अस्माकं तु नात्र श्रुतौ तत्कोऽपि सर्वतिलकं प्रतीयते, प्रतीयते तु भक्ता मानव्यम्; तदिहाग्रेऽग्रिमुषोमन्तो भूमिदेवा एव प्रमाणम् ॥

उषःशब्दस्यानेकत्र बहुवचनान्तप्रयोगोऽप्यत्रास्यैकं प्रमाणम्, तदिदं पठं स्यात् । तथ्या तैत्तिरीयब्राह्मणे मन्त्रः—

"इमा एव ता उषसो याः प्रथमा व्यौच्छन् ।
ता देव्यः कुर्वते पञ्चरूपा । शश्वतीर्नावपृज्यन्ति ।
न गमन्त्यन्तम्"—इति ( २. ५. ६. १४. ) ।

तत्तस्तात्प्रदर्शितो ह्येष मन्त्रः पुनर्जन्मविषयो न तु रसो दैर्घ्य-मावेदति ; तत् पश्यत्वेतत्पूर्वमन्त्रावेतौ—

“पूर्वं देवा अपरेणानुपश्यञ्जन्मभिः । जन्मान्यवरैः पराणि ।
वेदानि देवा अयमस्मीति माम् ।
अहं हित्वा शरीरं जरसः परस्तात्”—इत्येकः,

अथापरः— “प्राणापानौ चक्षुः श्रोत्रम् । वाचं मनसि संभृताम् । हित्वा शरीरं जरसः परस्तात् । आ भूतिं भूतिं वयं मश्नवामहै” —इत्यतस्तृतीय एवैष यः प्रदर्शितपूर्वः । तथा च पूर्वजन्मनि दृष्टा एवैमा उषस इत्येव तात्पर्यार्थः स्पष्टयते । एवञ्च न कथं मप्येष मन्त्रः सुमेरुप्रदेशीयोषसो बहुदिनव्यापित्वे प्रमाणं भवितुं मर्हतीति स्फुटम् । किञ्च तत्तत्योषसो बहुदिनव्यापित्वं तत्रत्यानां कथं भवेदाधिगतमित्यपि विचार्यमेव ॥

यदप्युक्तं सूर्यस्य उपसथ सुमेरुतो दक्षिणोदयदर्शनादेव “पुरश्चरति दक्षिणायाः ( ऋ० सं० ३.५८.१. )”—इति दक्षिणापुरत्वव्यपदेशोऽपीति । तदेतत् सर्वम् प्रमाणमपि अस्मदाम्नायस्य बहमानत्वावलम्बनं मिथ्याकिञ्चित्करम् । उत्तरः—ऊर्ध्वस्थः सूर्यः, दक्षिणा—अधःस्था पृथिवी, इत्येव सर्वत्र ज्ञेयम् । सुमेरुवासिनां तु येयं दिगस्माकं पश्चिमा, सैव स्याद् दक्षिणा ; यस्यां दिशि सूर्योदयस्तस्या एव प्राक्त्वनियमात् । पुरः, पुरस्तात्, प्राक्, पूर्वेत्यभिचार्याः ; सूर्योदयज्ञाननिबन्धन एवात्र भवत्यस्माकं दिग्व्यवहारः प्राक्प्रत्यगुदगवागित्येति । श्रुतिसिद्धं ( ऐ० ब्रा० १. २. ३. ) युक्तिमच्चैतत् किं तेन स्वमतप्रतिपादनव्यग्रतया विस्मृतमपि वा हठैकपरतया अस्माकं चक्षुषु धूलिमुष्टिप्रक्षेपायोद्युक्त इति लुक्कायितुं यतित मिति विचारयन्तु धीमन्त एव ॥

अहो चित्र मिदम् ! "सप्तर्षिहस्तावचितावशेषाण्यधोविवस्वान्" —इति कुमारसम्भवश्लोकोऽपि तेन स्वमतप्रमाणत्वेनोपन्यस्तः, तत् किं, मध्ययुगीयस्य "अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः"—इतिवादिनः कालिदासस्यापि सुमेरुस्थत्वं मन्तव्यम् ? तदिदं तदीयं अष्टमं प्रमाणं मज्ञानतां विज्ञापयतीत्यत्र मौनावलम्बन मेव श्रेयः ॥

"दीर्घतमा मामतेयः"—इत्येतदनुक्तो 'दीर्घतमाः'—इति सञ्ज्ञपद मपि स्वमतप्रमाण ममानि तेन । तदिदं तदीयं नवमं प्रमाणम् । तत्वतो वेदार्थमीमांसैकप्रयोजनस्य मीमांसादर्शनस्य मते दीर्घतमा इति हि प्रावाहणिरितिवत् कल्पितं नाम; यः खलु ममतापुत्रः, स नूनं दीर्घतमास्तत्र कः सन्देहः । द्रष्टव्यश्चैष सिद्धान्तो मी॰ द॰ १.१.२८—३२ सूत्रभाष्ये ॥

यदपि निर्णीतम्,— वैदिकमन्त्रेषु 'नवग्वा'—इतिपदस्वारस्यात् नवमासात्मको वर्षः 'दशग्वा'—इतिपदस्वारस्याद् दशमासात्मको वर्षश्च गम्यते, तादृशवर्षो नान्यत्र देशेष्विति नूनं सुमेरुप्रदेशीय एवैवं वर्षो वर्णित इति स्वीकार्यं मित्य मपि सिध्यति तस्यार्यादिवासभूत्व मिति । तदिदं दशमं प्रमाण मपि निर्वीज मेव । अत्र हि बह्व्यः पृच्छाः समुदीयन्ते । तद्यथा— सुमेरुप्रदेशे किं सर्वापि नवमासात्मकोऽब्दः प्रचलितो विद्यते ? उत दशमासात्मकः ? आद्य चेत् दशग्वशब्दस्य का गतिः ? द्वितीयश्चेदाद्यस्य का गतिः ? उभयविध एवाब्दस्तत्राद्यापि भवतीति चेत्, कथं तयोरेकत्र समावेशः ? यथास्मद्देशेष्वत्र भूभ्रमणजन्य मब्दपरिगणनं भवति, तथा तत्र तत् किन्निबन्धनम् ? षण्मासदृष्ट एव तेषा मेकदिनम्, तादृशकतिदिनात्मकः को मासः ? तादृक्कतिमासात्मकश्चाब्दः ? तादृग-

कत्यब्दस्थायि च तेषां जीवनम् ? श्रुतिसिद्ध शतायुष्ट्वञ्च तेषां कथ-ङ्कार मुपपद्यत इति ।

इदमपर मपि विवेच्य मस्ति,—यथा नवग्वा पदं नवमासात्मकवर्षवाचकम्, दशग्वा पदं दशमासात्मकवर्षवाचकं चेति मन्यते, तथैव शतग्विपदं किं शतमासात्मकवर्षवाचकं मन्तव्यम् ? श्रूयते तु शतग्विपद मपि । तद्यथा—

"अनेचिदत्नो भद्रिवोऽश्वावन्तः शतग्विनः ।
विचक्षणा अनेहसः"—इति ऋ० सं० ८, ४५, ११ ।

"आ न इन्द्रो शतग्विनम्"—इति च ऋ० सं० ८. ६७. ६ ।

वस्तुतस्त्वेवमादिषु स्वमतपोषकत्वदर्शनं तस्य नूनं पाण्डु-रोगिणः सर्वत्र पीतदर्शन मिवेति मन्यामहे वयम् ॥

यच्च सिद्धान्तितं तेन,— वैदिकमन्त्रादिषु देवयानशब्दतः सूर्यस्य सुमेरुयान मुत्तरायण मवगम्यते, पितृयानशब्दतश्च सूर्यस्य कुमेरु-गमनं दक्षिणायनम् ; तथा च सुमेरुप्रदेशेषु देवयानेऽह्न. सम्पद्यते, पितृयाने च रात्रिरतो देवयानपितृयानशब्दान्वितम न्त्राणां तत्रैव रचना बभूवेति तस्यार्यनिवासस्थेद मेकतरं प्रमाण मिति । एतच्च सर्वं स्यात् प्रेक्षावता परीक्षणीय मेव । तच्चैवम्,— मध्यभूभागत एव हि उत्तरायणदक्षिणायने परिदर्शनीये, उत्तरदक्षिणकेन्द्रभू-वासिनां तु नेति समधिगम्ये ; तत् किमु देवयानपितृयानशब्दार्थतो दिवानिशेत्यादिसमुद्भावनादिविचारेणेति । यद्युच्येत ईदृशा एवार्या देवयानपितृयानशब्दान्वितमन्त्रद्रष्टारो बभूवुरिति स्वीकार्येऽपि देवयानार्थस्तु सुमेरुगमनमार्गः, सुमेरोश्च देवस्थानत्वकथन मार्यपूर्वपुरुषावासनिबन्धन गौरवसूचक मिति, एतदप्यसङ्गतम् ; शतपथब्राह्मणादौ ( १४. ८. १, ) देवयानपितृयानशब्दयोरपरार्थ-

प्रतीते, सुमेरोर्देवस्थानत्वे स्वीकृतेऽपि तत्राश्मदादिपुरुषाणां वासे हेतुफलाभावाच्चेति स्वच्छधिया ध्यातव्यम्। वस्तुतस्तु 'देव' द्युस्थाः अग्निप्रभृतयो 'यान्ति' गच्छन्ति, येन मार्गेण, स भ्रमणमण्डलादिभ्रमणमार्गो देवयानाख्यः; तथा 'देवाः' द्युस्थाः रश्मयः पृथिव्यादौ गच्छन्ति, यैर्मार्गैस्तेषाञ्च सुतरां देवयानसञ्ज्ञा तैरेव मार्गैः पृथिव्यादिग्रहेतरान्तनिवासिनो विनिर्मुक्तस्थूलदेहा जीवा रश्मिभिराकृष्यमाणा द्युलोकं गच्छन्ति। तथैव पितृस्थानानां चन्द्रमण्डलादीनां भ्रमणमार्ग एव पितृयानम्; अपि चान्तरिक्षस्थं यमनामवायुविशेषाधिष्ठितं चन्द्रलोकमपरं वा तत्सन्निहितं पितृलोकं त्यक्तस्थूलदेहा अर्चिरादिसञ्ज्ञया गच्छन्ति येन, स एव मार्गः पितृयानाख्यः। तिलकोदाहृतमन्त्राभ्याञ्चैवमेव बुध्यते। तत्र प्रथम एषः ( ऋ० सं० १. १८३. ६. )—

"अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि। एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम्"—इति।

अस्यार्थः— हे 'अश्विनौ' प्रातरुदयमानप्रथमयुग्मदेवौ! 'देवयानैः पथिभिः' द्युस्थैः स्वमार्गैः 'इह' पृथिव्याम् 'आयातम्' उदयताम्। तथा चेह युवयोरुदयात् 'अस्य तमसः' रात्रिजन्यान्धकारस्य 'पारम्' पर्यन्तम् 'अतारिष्म' उत्तीर्णाः स्मः। 'वां प्रति' 'स्तोमः' उत्प्रतारकं स्तोत्रम् अस्माभिः 'अधायि'। 'इषम्' अन्नम्, 'वृजनं' मनोबलम्, 'जीरदानु' जरान्तव्यापिनं सुदीर्घजीवनञ्च 'विद्याम' लभेम, वयमिति। एवञ्चाश्विनोरुदयकाले जाग्रतः स्तोत्रगानं कुर्वतोऽन्नादीनि अवश्यम्भावीनीति समर्थ्यजनेस्तथा कर्तव्यमित्युपदेशः फलितः।

अथापरः ऋ० सं० १.[illegible] पूर्वार्द्धं—

"परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात्"–इति।

अस्यार्थः— हे 'मृत्यो!' 'ते' 'देवयानात् इतरः यः स्वः' पन्थाः, 'तं' 'पन्थां' पन्थानम् 'अनु'-लक्ष्य 'परेहि' इति। अत्र मृत्युर्माध्यमिको वायुविशेषः, आन्तरिक्षो मार्ग एव पितृयानाख्य-स्तस्य स्वकीयः। यथा भूस्थाना अग्निः राजा, द्युस्थानां सूर्यः, तथैव मध्यस्थानां पितॄणां मृत्युर्यमो वा राजेति। यायजूकानां स्वर्गगामिनां पितॄणा मर्चिरादिमार्गाश्रयेण पितृयान मेव शरणम्।

संहितायां मन्त्रान्तरे चैवं श्रुतम्। तद्यथा (१० २. ७.)—

"पन्था मनु प्र विद्वान् पितृयाणं द्युमदग्ने समिधानो वि भाहि"

हे 'अग्ने!' 'पितृयाणं विद्वान्' त्वं 'समिधानः' सन् 'द्युमत्' यथा स्यात् तथा 'प्रविभाहि' इति तत्सङ्क्षेपार्थः। एतेनाग्निशिखानां पितृयानगामित्वम्, तदनु अनुष्ठितयागानां स्वस्वपार्थिवदेहा-नाञ्चेति ध्वनितम्॥

श्रुतं च तैत्तिरीयब्राह्मणे— "एकं वा एतद् देवाना मह्नः यत् संवत्सरः"–इति (३. ८. २२. ३.)। अप्येतन्मूलकं स्यादे-तन्मनुवचनम् (१. ६७.)—

"दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः।

अहस्तत्रोदगयनं रात्रिः स्याद् दक्षिणायनम्"–इति।

तदेवमादिवचनानि तूपपद्यन्ते सुमेरावेवेत्यतः स एव देवलोको मन्तव्यः। अत एव महाभारतीयवनपर्वणि— "उदीचीं दीप-यन्नेष दिशं तिष्ठति वीर्यवान्। महामेरुर्महाभागः शिवो ब्रह्मविदां गतिः"–इत्यादिः कथा च वर्णिता (१६३अ॰१२श्लो॰)। तानीमान्येव वचनान्यवलम्ब्य प्रथमं सुमेरोर्देवनिलयत्वं सर्वसम्मत मिति प्रमाणयितुं चेष्टितं तेन; तत्प्रभावार्यपितृपुरुषाणां वास

आसीदियत एव देवनिलयत्वेन स मेरुर्वर्णित इति सिद्धान्तितं निराबाध मिवेति। अहो बत! तस्यैव सिद्धान्तोऽपि दरिद्राणां मनोरथ इवैव प्रतिभात्यस्माकम्। न हि श्रुत्युक्तस्य देवाना मित्यस्य सुमेरुवासिना मित्यर्थावगतौ किञ्चिन्मान मस्ति ; अस्ति च ततोऽन्यत्र। मनुसंहितायान्तु अयनसंवत्सरकालमितं भवति देवाना महरित्युल्लिखित मिति तु सत्यम्, परं न तत्र सुमेरोर्गन्धोऽ प्यस्तीत्यपि नासत्यम्। एवं महाभारतादौ सुमेरुवासिनां देवत्वं वर्णित मिति च सत्यम्, परमिहापि न तेषां देवानां मासत्वं- यनवत्सरमानान्यभिहितानीत्यपि नासत्यम्। भातव्यानि तु सुमेरु- प्रदेशीयदेवमब्दव्याख्यानां तानि च भवन्ति कथन्नु तानि? आयुःपरिमाणञ्च तेषां तदब्दमानतो भवति कीदृश मित्यपि ज्ञेय मेव। अस्त्येवं "शतायुर्वै पुरुषः"-इत्यादिश्रुतिसिद्धं शतायुष्टं तत्प्रदेशवासिनां तद्देशीयाब्दमानेनैव भवति चेत् तथ न तत्र श्रुतिविरोधः सम्भवते? वेदेषु हि यच्छ्रूयते मानवानां पूर्णायुः शतवर्षाणीति, तन्नून मस्मद्देशीयाहोरात्रमानत एवेति सर्व मेवैतच्चिन्त्य मेव। किञ्च यथा सुमेरुप्रदेशेषु "दैवे रात्र्यहनी वर्षम्"-इति मनुवचन सुपपद्यते, तथैव कुमेरावपि किं नोपपद्यते इत्यपि विचार्य मेव। विचारितेषु चैतेषु सुमेरोरार्य्यावासनिर्णयाय तेन प्रदर्शितं प्रमाणपारायणं कुतो न अलमध्यगतलवणवद्द विलीयेतेत्यपि ध्येयम्।

वस्तुतो महाभारतादौ यद् वर्णितं सुमेरोर्देवलोकत्वम्, तत्त्वापेक्षिक मित्यस्माभिर्मन्यत एव। यथेह सौरजगति भूलोकान्तरिक्षद्योकद्युलोकविभागास्तथैवास्मच्छरीरेऽपि मन्यन्त एव शारीरविद्भिरस्मद्देशीयैः। एव मन्यिगयुर्ज्योतिषा प्रधानतो

भूरादीनि स्थानानीति स्वीकारकारिणोऽपि वय मिहैकत्र भुव्येव किं तेषां विद्यमानता न स्वीकुर्महे? भुवि तेषा मस्तित्वस्य कथा तु दूरे आस्ताम्, भौमपदार्थेषूष्मच्छरीरादिषु च सर्वत्रैव तेषां तथाणा मेव देवानां सत्ता स्वीकुर्महे एव। तदेवं यथास्य सौरजगत ऊर्ध्वभागे स्वर्गस्थितिः स्वीक्रियते, तथैवास्यां पृथिव्या मपि पञ्जाबादिदेशत ऊर्ध्वस्थाः काश्मीरादयो वङ्गादिदेशीयानां स्वर्गाः, तत ऊर्ध्वस्थाः कैलाश-गन्धमादन-रावणह्रद-मानससरोवरादयः काश्मीरीयादीना मपि स्वर्गाः, ततोऽपि ऊर्ध्वस्थाः सुमेरुप्रदेशाः आन्तपितृवर्गादयश्च रावणह्रदादिवासिना मपि स्वर्गाः, तेभ्योऽप्यूर्ध्वतनः सुमेरुप्रदेशस्तु सर्वभूवासिनां स्वर्ग एवेत्यत्र कः संशयः। अपि हि पृथिव्या उत्तरकेन्द्रस्योपरिभागे ध्रुवस्य संस्थानदर्शनात् तत्केन्द्रभागस्योर्ध्वत्वम्, तत एव तस्योत्तर इति व्यपदेशश्चेति सिद्धान्तः सर्ववैदिकसम्मतः। अत एव महाभारते उदीच्यां देवनिलयो वर्णितः, अपाच्यां यमनिलयश्च, एव मन्यत्रान्यत्र च। तदित्थं सुमेरुप्रदेशस्य तस्य स्वीकृतेऽप्यापेक्षिकदेवनिकेतनत्वे न सिध्यति तत्रार्यावास इति ध्रुवम्॥

यदपि स्वमतपोषिकेत्युद्धृता मत्कृता सामटीप्पण्येका तेनायुष्मता, तदपि तथैव। पश्यतु तावत्,— अस्ति सामोत्तरामन्त्रः "समानो अध्वा स्वस्रोः"-इति (सा० उ० ८. २. १४. ३.), श्रुतश्चात्र 'सुमेके'-इति पदम्; विवरणकृन्माधवाचार्येण तद्व्याख्यायां 'संवत्सरे दक्षिणायने रात्रेर्वृद्धिः, उत्तरायणे त्वह्नः'-इत्यलेखि, मया चैषा *पङ्क्तिस्तत्र स्वकीयटीप्पण्यां प्रकाशिता* च। सुमेरुप्रदेशवासिना मेव दक्षिणायने प्रसरति रात्रिः, उत्तरायणे च तथा दिन मिति तद्दर्शनपरैषा श्रुतिरित्याह स श्रीमान् बालगङ्गाधरः।

तत्त्वतस्तु तदार्यावर्त्तीययोरेवाहोरात्रमानयोर्वर्द्धनकालप्रकाशने एव तस्याः पङ्क्तेस्तात्पर्यम्; दक्षिणायने हि वर्द्धते एवेह रात्रिमानम्, तयोत्तरायणे च दिवामान मिति। किञ्चात्रैव मन्त्रे यच्छ्रूयते 'समानो अध्वा स्वस्रोः'–इति, भगिनीरूपयोः रात्र्युषसोः सञ्चरमार्गः एक एव, येनाकाशमार्गेणोषा निर्गच्छति तेनैव रात्रिरपीति तदर्थः। तदेव मिदं स्वप्रदृष्टाश्रुतपूर्वरत्नोद्धरणाय वेदार्थरत्नादि-जलधिप्लवमानस्याश्रयहीनस्य तस्य तृणकाष्ठावलम्बनं सर्वथा निरर्थकं नैव भवितव्यं तत्रास्ति किन्तु शोच्य मिति दिक् ॥

अथैवम् "अतु प्रत्नस्यौकसो हुवे (१. ३०. ९.)"— इत्यादि-श्रुतिगम्य मार्य्याणां प्रत्नौकस्त्वं कतमस्य प्रदेशस्य स्यात्तन्तव्य मिति चेत्, अत्रोत्तरन्तु "स चार्य्यावासः पूर्वं तावत् हिमवत्पृष्ठस्य दक्षिण-भागे सुवास्तुप्रदेशे परासीत्"–इत्येवं दिनोक्त मिवेव द्रष्टव्यम् (२२पृ० १८पं०)। अपि 'अतु प्रत्नस्योकसो हुवे"–इत्युक्तश्रवणमात्रेण किं सर्वेषा मेवार्य्याणा मादिवासोऽन्यत्र क्वचिदासीदित्यनुमानं स्यात् सङ्गतम्, कि मु स्यात् तन्मात्रद्रष्टुरेवेति च विवेच्यम्।

श्रूयते ह्येवम् (ऋ० सं०. ३. ५८. ६.)—

"पुराणं मोकः सख्यं शिवं वां
युवोर्नरा द्रविणं जह्नाव्याम्।
पुनः कृण्वानाः सख्या शिवानि
मध्वा मदेम सह नू समानाः"–इति।

एतस्य मन्त्रस्य द्रष्टुः शुनःशेपस्य पूर्वावास आसीद् जाह्नव्या मूले जह्नुनाम्नाधिपत्ये (ऐ० ब्रा० ७. ३. ६.) जह्नुमुन्यास्रम-व्यापारे; तत एव हरिश्चन्द्रपुत्रो रोहितः तं क्रीत्वा स्वारस्वतप्रदेश मानीतवान्। तदाख्यान मिहैव (७. ३. १—६.) युक्तम्।

जह्नोस्तदाश्रमाख्यं तथापि जाह्नवप्रदेश इति गङ्गाप्रभवे हिमवत्पृष्ठे प्रसिद्धम्। तत एव जाह्नवप्रदेशात् गङ्गायाः प्रकाशदर्शनाद् गङ्गायाश्चापरं नाम जाह्नवीति। तदित्थम् "अनु प्रत्नस्यौकसो हुवे"–इति श्रुतिः सिद्धान्तपक्षेऽपि सुसङ्गच्छत एव।

अपिवा हिमवत्पृष्ठस्थोपोमामनदीतीरभूमय एव प्रत्नौकसः; तत्र चासीत् केषाञ्चिदार्याणां पुरा वास इत्यपि सुवच मिति॥

इदानीं सैषार्यावर्त्तभूमिः पश्चिमत उत्तरतश्च क्रमात् सङ्कुचिता, दक्षिणस्याम्पायः पूर्ववदेव, पूर्वस्यान्तु कुचविहारोत्कल-राढ़-गौड़-बङ्ग-नरक-प्रदेशा अद्यार्यावर्त्तान्तर्गताः पुण्यभूमय एव गण्यन्ते; अतोऽनल्पवाक्याध्यायाश्च यूरोपादीनां म्लेच्छदेशत्वं मत्वा तत्र गन्तुं न प्रवर्तन्ते। कालो हि बलवत्तर इति॥

अथ प्रकृत मनुसरामः। एतस्मिन्नेवार्यावर्त्तेऽस्यैतरेयस्यासीद् वास इति स्वीकृतेऽपि, तदानीन्तनार्यावर्त्तस्वरूपेऽभिज्ञातेऽपि, कतमस्मिन् प्रदेशे स उवासेति निर्णयोऽसम्भव इव प्रतिभात्यस्माकम्; वक्ष्यमाणप्रकारेणास्य पाणिनिशास्त्रादिभ्योऽतिप्राचीनत्वनिर्णयात्। एव मपि तत्र कृतेऽनिश्चयेऽवगम्यते स्यादैरावतीतटसन्निहिते क्वचित् प्रदेश इति। उक्तं ह्यनेनैव ऐरावतीपारदृष्टान्तः—"यथा चैरावतीं नावं पारकामाः समारोहेयुः"–इति (६. ४. ५.)। इह 'या' इति द्वितीयैकवचनस्य डो रूपम्, ता मित्यर्थः। सायणेन तु ऐरावती मित्येकं पदं नाव मित्यस्य विशेषणं कृतम्, समुद्र मित्यध्याहृतञ्च। तच्च रोचतेऽस्मभ्यम्; प्रकृतेऽध्याहारेऽपि सम्पन्नेऽर्थेऽध्याहारस्यानौचित्यात्, समुद्रस्येयं सर्वदैव नावा तरणं सर्वदेशीयानां सर्वेषां मनुष्याणाम् दृष्टान्तयोग्यत्वाभावाच्चेति। सैषा नदी संहिताकाले परुष्णीति प्रसिद्धासीत्, तदुक्तं निरुक्तकारेण "इमं मे गङ्गे"–इति

मन्त्रस्य व्याख्यानावसरे "इरावतीं परुष्णीत्याहुः"–इति ( ९. ३. ५. )। तदेव मन्येवार्यावर्त्ते इरावत्या नद्याः सन्निधौ कस्मिंश्चिज्जनपदे स विरराज महिदास ऐतरेय इति सिद्धम् ॥

---

( ४ )

अथ कः कालोऽस्यैतरेयस्येति विचार्यम्। श्रूयते हि ऋक्संहितायां चतुर्दशमं सूक्तमिदम्— "प्रैते वदन्तु प्र वयं वदाम"–इति ( १० ९४. १—१४. )। तदिदं सर्वचरुनामजनपदे अर्बुदनामर्षिणा दृष्टम्। तदाहैतरेयः— "देवा ह वै सर्वचरौ सत्रं निषेदुः, ते ह पाप्मानं नापजघ्निरे। तान् होवाचार्बुदः काद्रवेयः सर्पऋषिर्मन्त्रकृत्"–इति ( ६. १. १. )। तस्मिन् सर्वचरौ अर्बुदोदासर्पणी, नामैका प्रपदासीत्। प्रपद्—जलप्रपातो निर्झरो वा। ऐतरेयकालेऽपि सा प्रपदासीत् प्रसिद्धा। तदुक्तं तत्र तदुत्तरम्— "तस्माप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति"–इति। सैषा प्रपत् यास्ककालात् पुरैवाभवद् विलुप्तेति गम्यते, अन्यथा तदानीन्तनं तन्नाम निरुच्येत तेन, यथा विपाशः। तथाहि— "आर्जीकीये शृणुह्या सुषोमया" –इति (ऋ० सं० १०. ७५. ६.) ऋग्ग्रन्थव्याख्यावसरे निरुक्तं तेन— "आर्जीकीयां विपाडित्याहु॰—॰पूर्वं मासीदुरुञ्जिरा"–इति ( निरु॰ ९. ३. ५. )। तदेवम्— यास्कसमये या नदी विपाडिति प्रथिता, सैवासीत् तन्मन्त्रकाले आर्जीकीया, ततः पुरा उरुञ्जिरेति च व्यक्तम्। एवं सैकस्या एव नद्याः कालभेदात् त्रिधा

प्रविविदेर्पिता ; नात्र तथा ऋग्वेदोदाहरणं शाखाकालिकं नामा-दिकं किमप्युक्तम् ; इत एव गम्यते ततः पुरैव सा विलुप्ता, विभिन्ननामहेतुतोऽपरिचेया वाभूदिति। तथा चायं मैतरेयो निरुक्त-कृतोऽस्माद् यास्कात् पूर्वतनः। उपलभ्यते चेत ऐतरेयतोऽपि बहूनि वचनान्युद्धृतानि यास्केनेति। तद्यथा— "यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेत् वषट् करिष्यन्निति ह विज्ञा-यते"—इति निरु० ८. ३. ७। एतच्चाम्नात मैतरेये ३. १. ८।

भगवता पाणिनिमुनिना यज्ञाय मितराशब्दः शुभ्रादिगणे पठितः (४. १. ११३.), यतः सम्पद्यते इतराया अपत्यं पुमानैतरेय इति ; गणकारश्च पाणिनिरेवेति ध्वनितं पूर्वापरावरेतिसूत्रभाष्ये ; अतोऽवगम्यते अथ मैतरेयः पाणिनितोऽपि पूर्वतन इति। अपि नडादिगणे (पा० सू० २. १, ९९.) आश्वलायनशब्द-सूत्रस्य अश्वलशब्दस्य पाठाच्चावगम्यते तदेव ; आश्वलायनाचार्य पूर्वतनइतिसिद्धान्तात्। सूचितञ्चेतत् "छन्दोगौक्थिकयाज्ञिक-बह्वृचनटाञ् ञ्यः"—इति (पा० ४. ३. १२९.)। अनेनैव सूत्रेण छन्दोगानां धर्मो आम्नायो वेत्यर्थे सिध्यति छान्दोग्य मिति पदम् ; तथा च छान्दोग्यात् परभवत्वं पाणिनेर्नूनं सन्देह्यम् ; श्रूयते च तत्र छान्दोग्ये "तद्विद्वानाह महीदास ऐतरेयः"—इति (५. १६. ७.)। इतोऽप्यसन्दिग्ध मस्य पाणिनिपूर्वजत्वम्।

कल्पकृदाश्वलायनोऽपि नून मैतरेयादैतरेयात् परतनः ; तत्र बहुत्र ऐतरेयनामश्रुतेः। तद्यथा — "अन्तरेण हविषी विष्णु मुपांश्वैतरेयिणः"—इति आश्व० श्रौ० सू० १. ३. १२, पुनः ३. ६. ३, १०. १. १३ इत्यादीनि च।

पञ्चमाकल्पमान्यापदकृभ्यः शिशिगणाश्वलायनाख्येभ्यः प्रद्भ्य-

थाय मैतरेयः पूर्वतनः; इत्येहतमन्त्राणां तत्रादर्शनात्। तदिद मनुपदं प्रतिपादयिष्यामः शाखाविचारप्रसङ्गे।

एतेन यत् सिद्धान्तितं केनचित् पायाल्येन विदुषा— "इहैतरेये 'पारिक्षितस्य जनमेजयस्य'–इति (७. ५. १.)-श्रवणात् स्यादय मैतरेयो जनमेजयाच्च राज्ञः परभवः"–इति, तदूत मपास्तम्। वस्तुत एतन्नामन्नुतित एव चर्जुनपौत्रस्य परिचिन्नाम बभूव, बभूव च तथा तत्पुत्रनाम जनमेजय इत्येव स्यात् सर्वसामञ्जस्य मिति।

अथ यदत्र श्रूयते (३. ४. ५.)—

"तदेषाभियज्ञगाथा गीयते—

यदस्य पूर्वं मपरं तदस्य यदस्यापरं तदस्य पूर्वम्।

अहेरिव सर्पणं शाकलस्य न विजानन्ति यतरत् परस्तादिति" –इति। तदेतेनास्य शाकलाचार्यात् परभवत्वं स्पष्टम्। एष च शाकलः शकलस्यानन्तरापत्यं नूनम्; गोत्रे तु "गर्गादिभ्यो यञ् (पा॰ ४. १. १०५)"–इत्येतेनैव भाव्यम्, तथाच सम्पद्यते शकलस्य गोत्रापत्यं पुमान् शाकल्य इति। मुद्रिते ऐतरेयारण्यकभाष्ये (२. २. १.) यद् दृश्यते 'शकलस्य पुत्रः शाकल्यः'–इति, तद्यात् गोत्रविवक्षयैव; अनन्तरापत्यविवक्षया यञोऽप्रवृत्तेः। अपि वा मुद्राशोधकप्रमादत एव तत्र तथा पाठः सम्पन्नः; 'शकलस्य पौत्रः'–इति, 'शाकलस्य पुत्रः'–इति, 'शाकलस्य गोत्रः'–इति वा स्यात् तत्रत्यपाठो विशुद्धः। ये तु शाकल्यशिष्याः शिशिरादयः, ते चासन् शाकला एवोच्यमानाः; छात्रेऽपि विवक्षिते "गोत्रे लुगचि"–इति (पा॰ ४. १. ८९.) गोत्रप्रत्ययस्य यञो लुग्विधानाद्। परं नात्र यज्ञगाथायां तेषा मन्यतमस्य नामग्रहणं सम्भाव्यते; कथं हि स्यादैतरेयतोऽतिप्राचीनगाथायाम्

ऐतरेयोत्तरभवस्य शाकलस्य नामश्रवण मिति। तेषा मैतरेयपर-
भवत्वं त्विहैवोपरिष्टादुपपादयिष्यामः।

"अपत्यं पौत्रप्रभृति गोत्रम्"–इति (४. १. १६२.) पाणि-
न्युपदेशात् शकलस्य गोत्रापत्यत्वं तु शकलपौत्रस्य, शकलप्रपौत्रस्य,
शकला च्चततमाधिकपुरुषस्य च स्वीकार्यं मेव; तदेवं शकलगोत्र
इति विवक्षिताः सर्वे एव पुरुषाः शाकल्य इत्याख्याता भवन्ति।
अत एव ऋक्प्रातिशाख्ये 'शाकल्यस्य'–इत्येतन्मात्रोक्तितः प्रसि-
द्धस्य पदकारस्यैव शाकल्यस्य बोधः स्यादिति क्वचित् 'स्थविरस्य
शाकल्यस्य'–इत्युक्तम् (१अ० २प० ८व०), क्वचित् (१. ४. १.)
'शाकल्यपितुः'–इत्युक्तम्, क्वचिन्निर्विशेषणस्य 'व्याडिशाकल्य-
गार्ग्याः'–इति (३. १. ३.)। तदत्र व्याडिशाकल्यगार्ग्या इत्य-
त्रातिप्रसिद्धस्य पदकारस्य शाकल्यस्य ग्रहणं भवति, शाकल्यपिते-
त्युक्तया चास्यैव ग्रहण मिष्यते, स्थविरविशेषणविशिष्टस्तु ततोऽपि
प्राचीनः कश्चिद् बुध्यते। एवं यत् श्रूयते शतपथब्राह्मणे— "अथ
हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति"–इत्यादि
(१४. ६. ८. १.), सोऽयं याज्ञवल्क्यसमसामयिकः शाकल्योऽन्य
एव। अध्यप्रचलितायाः शाकलान्यतमाया आश्वलायन्याः शाखायाः
प्रवक्तुराश्वलायनस्याचार्यश्चाभवदपरः शाकल्यः। त इमे सर्वे एव
शाकल्याः प्रदर्शितगाथाख्यातशाकल्यात् परतनाः प्रतीयन्ते।

तत्र स्थविरात् शाकल्यात्, विशेषणशून्यात् शाकल्याच्च नून
मयं परभवः; एतदारण्यके तदुभयोरेव नामश्रवणात्। तथाहि—
"अथ शाकल्यस्य"–इत्यादि ३आ० १अ० २ख०, ततः "आपो वंश
इति स्थविरः शाकल्यः ३आ० २अ० १ख०"–इति। किञ्चैवैतार-
ण्यके (३. १. ३.) श्रूयते— "पृथिव्यायतनं निर्भुजम्, दिव्या-

यतनं प्रत्यक्षम्, अन्तरिक्षायतन मुभय मन्तरेण"-इति, ततस्तन्निर्भुजादिस्वरूपबोधनाय च श्रुत मिदम्— "यद्धि सन्धिं विवर्त्तयति, तन्निर्भुजस्य रूपम्; अथ यच्छुद्धे अक्षरे अभिव्याहरति, तत् प्रत्यक्षस्य; अथ उ एवोभय मन्तरेणोभयं व्याप्तं भवति"-इति। 'निर्भुजशब्दः संहितावाची, प्रत्यक्षशब्दः पदवाची, उभयमन्तरेणेत्यनेन क्रमो विवक्ष्यते'-इति चाह तद्भाष्ये सायणः। तदेवं पदपाठप्रादुर्भावात् क्रमपाठप्रादुर्भावाच्च परतनोऽत्र मत्र कोऽस्ति संशयः। पदकारस्त्वेकः शाकल्य एव। तथाहि "वने न वायो"-इति निगमव्याख्यानावसरे निर्णीत मिदं भगवता यास्केन— "वेति च य इति च चकार शाकल्यः"-इत्यादि (६. ५, ५.)। क्रमप्रवक्ता त्वभवद् 'बाभ्रव्यः'। तथाहि बह्वृक्प्रातिशाख्यम्— "इति प्र बाभ्रव्य उवाच च क्रमम्"-इति (२अ० ५प० ६व० २श्लो०)।

तदित्थ मेव मङ्घिदास ऐतरेयोऽयमप्रचलितशाखाप्रवक्ता शाखाश्वलायनस्याचार्यात् शाकल्यात् प्राक्तनोऽपि पदसंहिताप्रवक्तुः शाकल्यात् परतन इति सिद्धम्॥

---

(५)

अथेदानीं विचार्य मस्ति, कीदृशान्यासन् तदानीन्तनाचारव्यवहारविज्ञानानीति। तत्र प्रथमं तावत् तेषा माचारानालोचयितु मशक्ता वयं बहूना माचारपार्थक्याना मूलं जातिपार्थक्य मुपलभामहे, अतस्तज्जातिपार्थक्य मेव प्रथमं समासतो वर्णयामः—

यथा गोत्वोष्ट्रत्वमनुष्यत्वादयो जातयो निसर्गजा इति आकृति-ग्रहणा भवन्ति, न तथा ब्राह्मणत्वादयः ; ब्राह्मणत्वादयस्तु सामाजिकानाम् ऐहिकाभ्युदयिककार्यव्यवहारसौकर्याध्यात्मादुन्नतिसिद्धयर्थाः पूर्वं गुणकर्मानुसारतः पूर्वसामाजिकैः कल्पिताः । तदेतदिहापि श्रुतम्— "देवविशः कल्पयितव्या इत्याहुस्ताः कल्पमाना अनु मनुष्यविशः कल्पन्त इति"–इत्यादि १. २. ३. । तथा चाध्ययन मध्यापनं यजनं शंसनं स्तवन सुदानं ब्रह्मण्यं मन्त्रयादान मुपदेशदानादिकञ्चेति मुख्यानि मुख्यकर्माणि च येषां समाजेषूपलभ्यन्ते, तेषा मेव ब्राह्मणजातिः कल्पिता । क्षत्रियादीना मप्येवं बलादिप्रकाशकबाह्वादिभिरौपम्यं तत्तज्जातिकल्पनाबीजम् । तदेव श्रुत मृक्संहितायाम् १०. ९०. १२—

"ब्राह्मणोऽस्य मुख मासीद् बाहू राजन्यः कृतः ।

ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत"–इति ।

एवञ्च प्राचीनतमजातिविभागाः श्रेणिविभागा एव गम्यन्ते । अत एव देवतिर्यङ्ऋत्विक्छन्दःस्तोममन्त्राणा मपि सर्वेषां जातिविभागाः समाम्नाताः । तद्यथा देवानाम्—

"ब्रह्म वै देवाना बृहस्पतिः"–इति तै० सं० २. २. ८. १ ।

एवमादिषु ब्रह्मशब्दार्थो ब्राह्मणः ; तथाहि—

"ब्रह्म हि ब्राह्मणः"–इति च श० ब्रा० ५. १. १. ११ ।

"अग्ने ! महाँ२ असि ब्राह्मण ! भारत !"–इति तै० ब्रा० ३. ५. ३ ।

अन्यत्राप्यत्र च— "ब्रह्म ह्यग्निः"–इति श० ब्रा० १. ५. १. ११ ।

"ब्रह्म वै बृहस्पतिः"–इति श० ब्रा० ३. ९. १. ११. ।

"तच्छ्रेयोरूप मत्यसृजत क्षत्रं, यान्येतानि क्षत्राणि ; इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति०—० स विश

मसृजत, यान्येतानि देवजातानि गणश आख्यायन्ते ; वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति०—०स शौद्रं वर्णं मसृजत पूषणम्”–इति श० ब्रा० १४. ४. २. २३, २४, २५ ।

तिरश्चां जातिविभागो यथा—

“ब्रह्म वा अजः”, “क्षत्रं वा अश्वः”, “वैश्यश्च शूद्रश्चानु रासभः”

–इत्यादि श० ब्रा० ६. ४. ४. १२—१५ ।

उद्भिदां जातिविभागो यथा—

“ब्रह्म वै पलाशः”–इति श० ब्रा० १. १, १, ४ ।

“क्षत्रं वा एतदोषधीनां यद् दूर्वा ; क्षत्रं राजन्यः” ऐ० ८, २, ४ ।

स्तोममन्त्राणां जातिविभागो यथा—

“ब्रह्म वै स्तोमानां त्रिवृत्, क्षत्रं पञ्चदशः,०—०

विशः सप्तदशः, शौद्रो वर्ण एकविंशः”–इति ऐ० ८, १, ४ ।

त्रिवृत्पञ्चदशसप्तदशैकविंशाः सामवेदीयस्तोममन्त्राः ।

छन्दसां जातिविभागो यथा—

“गायत्रयच्छन्दसा ( ब्राह्मणः )”, “त्रिष्टुभश्छन्दसा ( क्षत्रियः )”

–इत्यादिरन्यो द्रष्टव्यः ऐ० ७, ४, ५, ६ ।

तैत्तिरीयसंहितायामप्येकत्रैव स्तोमदेवताच्छन्दःसाममनुष्यपशूनां श्रेणीविभाग आम्नातो द्रष्टव्यः ( ७, १, ६–८, ) । तत्र, त्रिवृत्स्तोम-अग्निदेव-गायत्रीच्छन्दो-रथन्तरसाम-ब्राह्मणमनुष्य-छागपशूनां मुख्यत्वेनैकश्रेणीत्वम्, पञ्चदशस्तोम-इन्द्रदेव-त्रिष्टुप्छन्दो-बृहत्साम-राजन्यमनुष्य-मेषपशूनां बलवत्त्वेनैकश्रेणीत्वम्, सप्तदशस्तोम-विश्वदेवदेव-जगतीच्छन्दो-वैरूपसाम-वैश्यमनुष्य-गोपशूनां बहुत्वेनान्नसाधकत्वेन चैकश्रेणीत्वम्, एकविंशस्तोम-अनुष्टुप्छन्दो-वैराजसाम-शूद्रमनुष्य-अश्विपशूनां पादोपजीवित्वेनैकश्रेणीत्वञ्चेति

सुव्यक्तम्। एवं च स्तोमच्छन्दसोर्द्वयोः पादोपजीवित्वं तत्तत्सङ्ख्यानुगतत्वाद् बोध्य मिति।

तदेवं यद्यपि गुणकर्मानुसारतो ब्राह्मणाद्या जातयः कल्पिता इति स्पष्टम्, तथापि पशुद्विजमनुष्येषु सम्प्रति ता जन्मानुसारिण्य एव मन्यमाना भवन्ति। यथा मिष्टाम्रवीजतो मिष्टाम्राया मेव फलनं प्रायो नैसर्गिकम्, तथैव ब्राह्मणवीर्यादिजातानां ब्राह्मणादित्व मवश्यम्भावीत्येव तत्र हेतुः। एव मपि यथा वीजादिदोषतो वस्तुगुणान्यथाभावोऽपि दृश्यते, तथैव ब्राह्मणाद्योरसजाता अप्यब्राह्मणाद्यो भवन्तीत्यपि नादृष्टचरम्। अत एव "जातो नार्या मनार्यायाम्"-इत्याद्यपि उक्तं मन्वादिभिः, इद चोक्तं तत् पुरस्तात् (१७ पृ० ८पं०)।

अथ तेषां ब्राह्मणादिचतुर्वर्णानां स्वभावादय इहैतरेये यथा वर्णितास्त एवेह क्रमात् प्रदर्श्यन्ते। तत्र स्वभावाः—

ब्राह्मणानाम्— आदायित्वम्, आपायित्वम्, अवसायित्वम्, यथाकामप्रयाप्यत्वञ्चेति चत्वारो धर्मा विशेषतो लक्षिताः। 'आदायी' आदानं ग्रहणम्, प्रतिग्रहादिना जीविकादीना मादानकारी। 'आपायी' अपायस्त्यागः, दानादिना धनादीनां त्यागकारी। 'अवसायी' अवसाय- सिद्धान्तः, विद्यावलेन सर्वतत्त्वानां निर्णयकारी। 'यथाकामप्रयाप्यः' प्रयाणं युद्धाय प्रस्थानम्, तत्र राजादिभिः सेनानायकत्वादिना प्रेर्यः 'प्रयाप्यः', काम मनतिक्रम्य यथाकामम्, स्वकामनानुरूप मिति यावत्; तदेवं राज्यरक्षणार्थं युद्धाय प्रयाण मिच्छेच्चेत् राज्ञा प्रेषणीयो 'यथाकामप्रयाप्यः'। तदेतदिह ७. ५. २ द्रष्टव्यम्। क्षत्रियाणान्तु— वलमत्तिता, आधितरक्षणम्, सर्वोपकारित्वम्, तेजस्वित्वम्, यशस्वित्वञ्चासीद्

मसृजत, यान्येतानि देवजातानि गणश आख्यायन्ते; वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति०—०स शौद्रं वर्णं मसृजत पूषणम्"–इति श० ब्रा० १४. ४. २. २३, २४, २५।

तिरश्चां जातिविभागो यथा—

"ब्रह्म वा अजः", "क्षत्रं वा अश्वः", "वैश्यश्च शूद्रश्चातु रासभः"

–इत्यादि श० ब्रा० ६. ४. ४. १२—१५।

उद्भिदां जातिविभागो यथा—

"ब्रह्म वै पलाशः"–इति श० ब्रा० १. १. १. ४।

"क्षत्रं वा एतदोषधीनां यद् दुर्वा; क्षत्रं राजन्यः" ऐ० ८. २. ४।

स्तोममन्त्राणां जातिविभागो यथा—

"ब्रह्म वै स्तोमानां त्रिवृत्, क्षत्रं पञ्चदशः,०—०

विशः सप्तदशः, शौद्रो वर्णं एकविंशः"–इति ऐ० ८. १. ४।

त्रिवृत्पञ्चदशसप्तदशैकविंशाः सामवेदीयस्तोममन्त्राः।

छन्दसां जातिविभागो यथा—

"गायत्रश्छन्दसा (ब्राह्मणः)", "त्रिष्टुभश्छन्दसा (क्षत्रियः)"

–इत्यादिरन्यो द्रष्टव्यः ऐ० ७. ४. ५, ६।

तैत्तिरीयसंहितायान्त्वेकत्रैव स्तोमदेवताच्छन्दसाममनुष्यपशूनां श्रेणीविभाग आम्नातो द्रष्टव्यः (७. १. ६–८.)। ततश्च, त्रिवृत्स्तोम-अग्निदेव-गायत्रीच्छन्दो-रथन्तरसाम-ब्राह्मणमनुष्य-छागपशूनां मुख्यत्वेनैकश्रेणीत्वम्, पञ्चदशस्तोम-इन्द्रदेव-त्रिष्टुप्छन्दो-बृहत्साम-राजन्यमनुष्य-मेषपशूनां बलवत्त्वेनैकश्रेणीत्वम्, सप्तदशस्तोम-विश्वदेवदेव-जगतीच्छन्दो-वैरूपसाम-वैश्यमनुष्य-गोपशूनां बहुत्वेनान्नसाधकत्वेन चैकश्रेणीत्वम्, एकविंशस्तोम-अनुष्टुप्छन्दो वैराजसाम-शूद्रमनुष्य-अश्वपशूनां पादोपजीवित्वेनैकश्रेणीत्वञ्चेति

सुव्यक्तम् । एषु च स्तोमच्छन्दसाम्नां पादोपजीवित्वं स्वरसङ्ख्यानुगतत्वाद् बोध्य मिति ।

तदेवं यद्यपि गुणकर्मानुसारतो ब्राह्मणाद्या जातयः कल्पिता इति स्पष्टम्, तथापि पशुद्विजमनुष्येषु सम्प्रति ता जन्मानुसारिण्य एव मन्यमाना भवन्ति । यथा मिष्टाम्रबीजतो मिष्टाम्राणा मेव फलनं प्रायो नैसर्गिकम्, तथैव ब्राह्मणवीर्य्यादिजातानां ब्राह्मणादित्व मवश्यम्भावीत्येव तत्र हेतुः । एव मपि यथा क्षेत्रादिदोषतो वस्तुगुणान्यथाभावोऽपि दृश्यते, तथैव ब्राह्मणवीर्य्यजाता अप्यब्राह्मणादयो भवन्तीत्यपि नादृष्टचरम् । अत एव "जातो नार्य्या मनार्य्यायाम्"-इत्याद्यपि स्मृतं मन्वादिभिः, इह चोद्धृतं तत् पुरस्तात् ( १७ पृ० द्रष्ट० ) ।

अथ तेषां ब्राह्मणादिचतुर्वर्णानां स्वभावादय इहैतरेये यथा वर्णितास्त एवेह क्रमात् प्रदर्श्यन्ते । तत्र स्वभावाः—

ब्राह्मणानाम्— आदायित्वम्, आपायित्वम्, अवसायित्वम्, यथाकामप्रयाप्यत्वञ्चेति चत्वारो धर्म्मा विशेषतो लक्षिताः । 'आदायी' आदानं ग्रहणम्, प्रतिग्रहादिना जीविकादीना मादानकारी । 'आपायी' अपायस्त्यागः, दानादिना धनादीनां त्यागकारी । 'अवसायी' अवसायः सिद्धान्तः, विद्याबलेन सर्वतत्त्वानां निश्चयकारी । 'यथाकामप्रयाप्यः' प्रयाणं युद्धाय प्रस्थानम्, तत्र राजादिभिः सेनानायकत्वादिना प्रेर्य्यः 'प्रयाप्यः', काम मनतिक्रम्य यथाकामम्, स्वकामनानुरूप मिति यावत्; तदेवं राज्यरक्षणार्थं युद्धाय प्रयाण मिच्छेच्चेत् राज्ञा प्रेषणीयो 'यथाकामप्रयाप्यः' । तदेतादृश ७. ५. ३ द्रष्टव्यम् । क्षत्रियाणान्तु— बलप्रतिष्ठा, आश्रितरक्षणम्, सर्वोपकारित्वम्, तेजस्वित्वम्, यशस्वित्वञ्चापीद्

वर्णनीयम्। वैश्यानां खलु— अन्यस्य बलिकृत्त्वम्, अन्यस्य आद्यत्वम्, यथाकामज्येयत्वञ्चेति त्रीणि लिङ्गानि। शूद्राणां हि— अन्यस्य प्रेष्यत्वम्, कामोत्थाप्यत्वम्, यथाकामवध्यत्वञ्चेति च वर्णितं तत्रैव (७. ५. ५, ६.)। अथ भक्ष्याः—

ब्राह्मणानां बलकरो भक्ष्यः सोमो निर्णीतः, क्षत्रियाणां न्यग्रोधोदुम्बराश्वत्थप्लक्षफलानि बलहेतुभक्ष्याणि निर्णीतानि, तथा वैश्यानां दध्येवैकं बलकरं भक्ष्यं सूचितम्, शूद्राणां त्वाप एव भक्षिताः सम्यग् बलकरा भवन्तीति च तत्र ७. ५. २—६। अपर मपि— "एता वै प्रजा हुतादा यद् ब्राह्मणा अथैता अहुतादा यद्राजन्यो वैश्यः शूद्र इति"—इति ७. ४. १। अथायुधानि—

"एतानि वै ब्राह्मणस्यायुधानि यद्यज्ञायुधानि; अथैतानि— क्षत्रस्यायुधानि— यदश्वो रथः कवच इषु धन्व"—इति च तत्रैव। तानि च यज्ञायुधान्यन्यत्र परिगणितानि— "स्फ्यश्च कपालानि च, अग्निहोत्रहवणी च शूर्पं च, कृष्णाजिनं च शम्या च, उलूखलं च मुसलं च, दृषच्चोपला चैतानि वै दश यज्ञायुधानि"—इति तै॰ सं॰ १. ६. ८. २, ३।

तदानीं मासीदपि क्षत्रियतोऽपि भूयस्त्वं ब्राह्मणानाम्। तथाहि— "भूयान् वै ब्राह्मणः क्षत्रियादिति"—इति ७. ३. ३ ।

शूद्राणां वौद्धोपदूक्लवुपर्यगनमप्यासहायावडम्। तथाहि— "दास्याः पुत्रः कितवो ऽब्राह्मणः कथं नो मध्येऽदीक्षिष्टेति" —इत्यादि (२. ३. १.) समालोच्यम्। यज्ञकार्येषु गोदोहनादिष्वपि तेषां निषिद्धोऽधिकारः, तथा च तैत्तिरीयकम्— "शूद्र एव न दुह्यात्, ... एष स... शूद्रः। यदविरेव तदिन्द्रायुर्यं... इति (... ३.)। अत एव

तेषा मयज्ञियत्वम्। यज्ञे दीक्षितस्य देवभाव मापन्नस्य यजमानस्य तेषायज्ञियैः सह वाक्यालापोऽपि निषिद्धः शतपथादौ—"स वै न सर्वेणेव संवदेत ; देवान् वा एष उपावर्त्तते यो दीक्षते, स देवताना मेको भवति ; न वै देवाः सर्वेणेव संवदन्ते,—ब्राह्मणेन वैव, राजन्येन वा, वैश्येन वा [संवदन्ते]; ते हि यज्ञियाः"–इत्यादिना (३, १, १, १०.)। मूर्खाणां सामीप्य मप्यासीत्तदानीं क्षेयायेत्याम्नातम्—"तेभ्यो वै देवा अपैवावीभत्सन्त मनुष्यगन्धात्"–इति ३. ३. ६। अत्र देवा इति सत्यवादित्वादिनातदेवत्वाना ग्रहण मिष्टम्, मनुष्यशब्देन चानृतभाषणादिमनुष्यधर्मवतां मूर्खाणां शूद्राणा मित्येव। तदिदं शूद्राणा मयज्ञियत्वम्, मूर्खाणा सामीप्यायोग्यत्वञ्चातिमूर्खत्वकश्चरत्वकदाचारत्वकदाकारत्वादिनिबन्धन मेव ; नान्यथा तान् प्रति कृतदुर्व्यवहारस्य प्रायश्चित्तमाम्नानं विहितं श्रूयेत। तत्र यथा य० वा० सं० २०. १७, १—

"यच्छूद्रे यदर्ये यदेनश्चकृमा वयं
यदेकस्याधिधर्मणि तस्यावयजनमसि"–इति।

शूद्राणा सुखार्थं यथायोग्यध्यानोपदेशविधिश्च विहितो ऽत्र संहितायाम् २६. २. १—

"यथेमा वाचं कल्याणी मावदानि जनेभ्यः।
ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय"–इति।

चतुर्णा मेव वर्णानां हितप्रार्थने साम्यञ्च श्रुत मद्भुत।
तद्यथा तत्रैव यजुःसंहितायाम् १८. ४८, १—

"रुचं नो धेहि ब्राह्मणेषु, रुचं राजसु नस्कृधि।
रुचं विश्येषु शूद्रेषु, मयि धेहि रुचारुचम्"–इति।

याथर्वणिका अप्यामनन्त्येव मेव १९. ७. ८—

"प्रियं मा कृणु देवेषु, प्रियं राजसु मा कृणु ।
प्रियं सर्वस्य पश्यत, उत शूद्र उतार्य्ये"—इति ।

चतुर्णां वर्णानां माह्वानप्रयोगपार्थक्य मपि श्रुत मन्यत्र—

"तानि वा एतानि चत्वारि वाचः,— एहीति ब्राह्मणस्य, आगह्याद्रवेति वैश्यस्य राजन्यबन्धोश्च, आधावेति शूद्रस्य"—इति श॰ ब्रा॰ १, १. ४. १२ ।

वाग्व्यवहारविषये त्वासीदिह बह्नुपदेशः । तद्यथा— "वाक् तु सरस्वती" ( ३. १. १. ), "वाग्घि सरस्वती" ( ३. १. २. ), "वाग्वै सरस्वती" ( ३. ३. १३. ) "वाचो याव तो स्तनौ, सत्यानृते वाव ते" ( ४. १. १. ), "नोऽर्हति मनुष्यः सर्वं सत्यं वदितुम्, सत्यसंहिता वै देवा अनृतसंहिता मनुष्याः" ( १. १. ६. ), "विदुषा सत्य मेव वदितव्यम्" ( ५. २. ८. ), "एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुः, तस्मादाचक्षाण माहुरद्राक्षीमिति, स यद्यदर्श मित्याहाथास्य श्रद्दधति ; यद्यु वै स्वयं पश्यति न बहूनाच नान्येषां श्रद्दधाति" ( १. १. ६. ), "अपास्येन सत्यं नैव अनृतं हिनस्ति" ( ४. १. १. ), "विचक्षणवतीं वाचं वदेत्" ( १. १. ६. ), "असुर्या ह वा इतरा गिरः" ( ३. ५. ५. ), "मनसा वा इषिता वाग् वदति, यां ह्यन्यमना वाचं वदति असुर्या वै सा वागदेवजुष्टा" ( २. १. ५ ; ४. ४. ), "यां वै दृप्तो वदति, या मुन्मत्तः, सा वै राक्षसी वाक्" ( २. १. ० ), "वाक् च मनश्च वर्त्तन्यौ ; वाचा च हि मनसा च यज्ञो वर्त्तते ; इयं वै वागदो मनः" ( ५. ५. ८. ), "श्रद्धा पत्नी, सत्यं यजमानः, श्रद्धा सत्यं तदित्युत्तमं मिथुनम् ; श्रद्धया सत्येन मिथुनेन स्वर्गांल्लोकान् जयति" ( ७. २. ८. ),

"पापस्य वा इमे कर्मणः कर्त्तार आसते ऽपूतायै वाचो वदितारो यश्चापर्णा इमानुत्थापतेमे मेऽन्तर्वेदि मासिषतेति" ( ५. १. १. ), "सोऽब्रवीत् तदहं तुभ्य मेव ददामि य एव सत्य मवादीरिति ; तस्मादेवं विदुषा सत्य मेव वदितव्यम्"–इति ( ५. २. ८. ) च । अवच्छेदकावच्छिन्नव्यवच्छिन्नासम्बद्धसम्बन्धसम्बद्धान्यायभाषापीदानीन्तनन्यायभाषेतिविदेहवङ्गप्रसिद्धा ननु का भाषा, राक्षसी वा, यावनिकी वा ? इत्यप्यत्र प्रसङ्गतश्चिन्तनीयम् ; अपौरुषेयवैदिकग्रन्थेषु, अतिप्राचीनस्मृतिन्यायमीमांसावेदान्तादिषु, अनतिप्राचीनेतिहासपुराणतन्त्रवैद्यकज्योतिषसङ्गीतकाव्यादिषु वा क्वचिदपि तथाविधवाग्जालाच्छन्नोच्छन्नहेतुनिवेशप्रवेशाप्रतीतेः ।

विवाहबन्धन मपि तेषां मासीच्चितकरत्वेनाभिप्रेतम् । अत एवैवं श्रूयते— "नापुत्रस्य लोकोऽस्ति"–इति, "ऋण मस्मिन्सन्नयत्यमृतत्वञ्च गच्छति । पिता, पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्"–इति च ७. ३. १ । पिता एव पत्नीगर्भं प्रविश्य पुत्ररूपेण पुनः प्रकाश मापद्यत इति च तत्रैव । तथाहि— "पति-र्जायां प्रविशति गर्भो भूत्वा स मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते"–इति । तदेव मुत्पादिते पुत्रे वंशपरम्परया अमृतत्व मेव स्वस्यापादितं भवतीति तेषा मभिप्रायः ।

तत्र क्षत्रियायां वैश्यशूद्रस्वभावपुत्रनिन्दायास्तु का कथा, ब्राह्मणस्वभावपुत्रोऽप्यासीदनीप्सितः । तथाहि— "ब्राह्मणकल्पस्ते प्रजाया मा जनिष्यत"–इत्यादि ( ७. ५. २. ) द्रष्टव्यम् । वैश्यशूद्रस्वभावपुत्रानीप्सापि तत्रैवाम्नाता ।

तदानी मेकस्यां तदधिकायां वा जायायां जीवितायां अपि जायान्तरपरिग्रहणं नासीद् दोषावहम् , ततश्च जीवत्पत्नीकस्यापि

पुंसः क्रमाद् युगपद्वा बहुविवाहो नैवासीदसामाजिकः। तदुक्त मिह— "यदि ह वा अपि बह्व्य इव जायाः पतिर्थैव तासां मिथुनम्"-इति (३. ५. ३.)। इतोऽपि व्यक्त माम्नातम्— "एकस्य बह्व्यो जाया भवन्ति"-इति (३. ७. १२.)। अपि नासीच्च तदानीं मपि जीवत्पतिकायाः स्त्रियाः पत्यन्तरग्रहणाचारः। तदप्युक्तं तत उत्तरम्— "नैकस्यै बहवः सह पतयः"-इति। अत्र सहशब्दश्रुतेर्मृतपतिकायास्त्यक्तपतिकाया वा पत्यन्तरग्रहणं न तदानीन्तनाचारविरुद्ध मित्यपि गम्यत एव। किन्तु तथाविधविधवावेदनन्त्वासीन्नीचजातिष्वेव प्रचलित मिति च पुराणेतिहासाख्यानतोऽवगम्यते, तत्त्विदानीं मपि वर्त्तत एवेत्यस्माकम्। स्वयम्वरसभायां समागतेषु कन्यापाणिग्रहणार्थिषु पणजयकारिणे कन्यादानप्रथाप्यासीत्प्रचलितैव। तदाह— "प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्य्यां सावित्रीम्; तस्यै सर्वे देवा वरा आगच्छंस्तस्या एतत् सहस्रं वहतु मन्वाकरोद्, यदेतदाश्विन मित्याचक्षते"-इति (४. २. १.)। तदानीन्तनस्त्रीणा मप्यासीदसाधारणपाण्डित्यम्। तदग्निहोत्रकालनिर्णायकाख्यायिकायाम्— "कुमारीगन्धर्वगृहीता वक्ता भः"-इत्यादि (५. ५. ४.)।

तदानीं मपि स्नुषा श्वशुराल्लज्जते स्त्रीवार्य्याणाम्। तथाहि— "स्नुषा श्वशुराल्लज्जमाना निलीयमानेति"-इति (३. २. ११.)। अपि तदाप्यार्य्याणां सोदर्य्याणा मपि भगिनीनां भ्रातृजायानुगतत्व मेवासीत्। तदाम्नात मिह यथा— "समानोदर्य्या स्वसा ऽन्योदर्य्यायै जायाया अनुजीविनी जीवति"-इति (३. २. १२.)। तदेवं सोदर्य्याया अपि स्वसुरनात्मीयत्व मन्यकुलतो लब्धाया अपि जायाया आत्मीयत्वं पारम्पर्य्यागत मेवेति स्यात् स्वीकार्य्यम्।

यदाग्निहोत्रस्य स्वतिकर्त्तव्यतया अपत्नीकस्यापि तत्कर्त्तव्यता प्रतिपादिता । तथाच—"तदाहुर्वाचापत्नीको ऽग्निहोत्रम्"- इत्यादि ( ७. २. ८. ) । तस्य ह्यग्निहोत्रस्य दृष्ट मदृष्टञ्च फलं मेरधिगतम् ; अत एव तैर्नित्याग्निहोत्रविधिः सद्भिः सदैव स्वस्व-गृहेषु अग्निरक्षणं कर्त्तव्य मिति सिद्धान्तितम् । तदिदं श्रूयते —"मनुषो दुरोणे"-इति ( ऋ० सं० १०. १११. ६. ), व्याख्यातञ्चैतद् यास्केन 'मनुष्यस्य मनुष्यस्य गृहे ( ८, २, ३, )' -इति । हिमानीवासिनां तेषां प्राचीनार्य्याणां हिमपातजनितनिवा-रणाय स्वस्वगृहेष्वग्निरक्षणं नून मासीत् सुखावहम् ; श्रुतं ह्येवम् —"अग्निर्हिमस्य भेषजम्"-इति (वा० सं० २३. १०.) । तत्र चाग्नौ विविधसुगन्ध्यादिद्रव्यदानविधानञ्च श्रुत मस्ति । तद्यथा—"कुलाय मिव ह्येतद् यज्ञे क्रियते यत् पैतुदारवाः परिधयो गुग्गुलूर्णासुकाः सुगन्धितेजनानीति"-इति ( १. ५. २. ) । तैत्तिरीये त्वत्र आख्यायिकाख्यान मपि सं० ६. २. ८ द्रष्टव्यम् । तैः सुगन्ध्यादिभिः गृहजातवायुदोषोऽपि प्रशमितो भवतीति च दृष्टम् । यदग्नौ आज्या-ग्निरपयःपयस्यासान्नाय्यचरुपुरोडाशसोमाद्याहुतयः प्रदीयन्ते ततस्त-ज्ञाम्बप्रसूता दृष्टिधारास्तावद्गुणयुक्ता भवन्त्येवेति तज्जातौपध्यादीनां भक्षणतः स्वास्थ्यादिसाराहार एव सम्पद्यतेऽतस्त मिति च दृष्ट मेव । अदृष्टं तु स्वर्गादि, श्रुतिमानगम्यम् । तदेवं दृष्टादृष्टफल-सिद्धयर्थ मेवासीत् तेषां नित्याग्निहोत्रानुष्ठान मिति प्रतीयते स्फुटम् ।

अग्निहोत्रानुष्ठानाय प्रातःस्नानस्य कर्त्तव्यता चात्र सूचिता । तथाहि—"य आहिताग्निर्यदि प्रातरस्नातोऽग्निहोत्रं जुहुयात्, का तत्र प्रायश्चित्तिरिति"-इत्यादि ७. २. ८ । तत्रैव चाययणे-नानिष्ट्वा नवान्नप्राशने, पात्रपाते नष्टे, पवित्रनाशे, हिरण्येऽनुद्दिष्टे

अपह्नुते च, जीवत्यपि कस्मिंश्चिदात्मीये स मृत इति श्रुते, जायायाः स्व-गोत्रां यमसन्तानजननेऽपि प्रायश्चित्तं विहितम्। तथा तत्रैव सूतकान्नप्राशनकारिणा मपि प्रायश्चित्तं विहितम्। यथा-विहितहोमादिरूपप्रायश्चित्तत एव तथाविधपापानां भवति सङ्क्षय इति च तत्र तत्र सुव्यक्तम्। अग्निहोत्राद्यनुष्ठानाय ततः प्राक् स्नानं तु विहितम्, न पुनः किञ्चिद् भोजनं तु निषिद्धम्; प्रत्युत किञ्चिद् भुक्त्वैव कर्माणि कुर्वीतेत्येवेष्टान्यत्र ध्वनितम्। तथाहि— "घृतं प्राश्य ध्रयेद् यथा ह वा इदं मनो वा रथो वाक्तो वर्त्तत एवं हैवाक्तो वर्त्तते"—इति ४, २, १।

मृतस्य शरीरालाभे पर्णशरीरदाहोऽप्यासीत्तदानी मपि व्यवस्थितः। तदाह— "यदि शरीराणि न विद्येरन्, पर्णशरः षष्टिस्त्रीणि च शतान्याहृत्य तेषां पुरुषरूपक मिव कृत्वा तस्मिंस्ता मावृतं कुर्युः। अथैनाच्छरीरैराहृतैः संस्पर्शयेयुः; अध्यर्ध-शतं काये, सक्थिनी द्विपञ्चाशे च विंशे, चोरू द्विपञ्चाशे, शेषन्तु शिरस्युपरि दध्यात्"—इति ७, २, १।

तदासीन्नराणां देवपितृमानुषार्चनपरताप्यासीत्, तदभावे 'अनद्धापुरुषः'—इतिनिन्दाभाजनत्वं तेषा मवश्यमेवाध्येव। तदाह— "कोऽनद्धापुरुषः ? इति, न देवान्, न पितॄन्, न मनुष्यान्"—इति (७, २, ८)। अत्रार्चतीति पदन्तु शेषयितव्यम्। स्फुट मेतच्छत-पथे— "एष ह वा अनद्धापुरुषो यो न देवानर्चति, न पितॄन्, न मनुष्यान्"—इति (६, ३, १, १४)। 'अद्धा'—इति सत्यनाम (निघ० ३, १०, ४), अनद्धा=असत्यः, तथाचानद्धापुरुषोऽसत्य-पुरुषः। एवं हि यः पुरुषो देवान् पितॄन् मनुष्यांश्च नार्चति, 'अजा-गलस्तनस्येव तस्य जन्म निरर्थकम्'—इति भावः। तदेवं सार्ष्टपुरु-

यस्य निन्दावादः सम्भवः। तदत्र समासतो देवादीनेव पूर्वं निरूपयामः।—

देवाः। निघण्टौ द्युस्थानभाजनेषु 'देवाः'–इति षड्विंशं पदम्। ततो गम्यते द्युलोक एव प्रधानतस्तेषां स्थानम्। 'देवाः रश्मय उच्यन्ते'–इति तद्भाष्ये देवराजः। महामुनियास्कोऽपि निरुक्ते देवा इत्यस्यैष एवार्थ उल्लिखितः— "रश्मयोऽत्र देवा उच्यन्ते"–इति ( १२. १. १२. )। यास्कप्रदर्शित मुदाहरण मेव च देवराजेन प्रदर्शितम्— "देवानां भद्रा सुमतिर्ऋजूयताम् (ऋ० सं० १. ८९. २.)"–इति, निघ० ५. ६. २६। निरु० १२. ४. ५; १३. १. ११ द्रष्टव्यम्। पार्थिवस्याग्नेर्माध्यमिकस्य च विद्युतोऽपि रश्मिजन्यत्वेन, उत्तमाग्नेः सूर्यस्य तु रश्मिजनकत्वेन जन्यजनकयोरभेदात् रश्मभिन्नत्वम्। किञ्चास्तेषां प्रथममध्यमोत्तमानां त्रयाणा मेवाग्नीनां रश्मिवत्त्वम्; "त्रयः केशिनः"–इत्यस्य व्याख्याने सुव्यक्त मुक्तञ्चैतद् यास्केन— "केशा रश्मयः, तैस्तद्वान् भवति०—० आदित्य माह, अथाप्येते इतरे ज्योतिषी केशिनी उच्येते, धूमेनाग्नी रजसा च मध्यमः"–इति ( निरु० १२. ३. ६, ७, ८.)। एषा मेव त्रयाणां भक्तिसाहचर्यादितो बहवो देवा वर्ण्यन्ते। तदपि व्यक्त मुक्तं यास्काचार्येण— "तिस्र एव देवता इति नैरुक्ताः०—० तासां महाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति" –इत्यादि ७. २.१; ३. १०। "यो देवः सा देवता"–इति च निरु० ७, ४. २। विवरिष्यामश्चैतदिहैवोपाख्यानप्रकरणे।

पितरः। निघण्टौ अन्तरिक्षस्थानभाजनेषु 'पितरः'–इति द्वादशं पदम्। ततो गम्यते अन्तरिक्षलोक एव प्रधानतस्तेषां स्थानम्। "पिता, 'पाता वा पालयिता वा"–इत्यादिना ( निरु०

४. २. ५. ) व्याख्यातः ; जस्"–इति तद्भाष्ये देवराजः । भगवन्मुनि-यास्केन हि— "पितरो व्याख्यातास्तेषा मेषा भवति"–इत्युक्त्वैव "उदीरता मवर उत् परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु"–इत्येषा ऋक् इह (सं० १०. १५. १.) उदाहृता । व्याख्याता चैवम्— "उदीरता मवर उदीरतां पर उदीरतां मध्यमाः पितरः सोम्याः सोमसम्पादिनस्तेऽसुं ये प्राण मन्वीयुरवृका पनमित्राः सत्यज्ञा वा यज्ञज्ञा वा ते न आगच्छन्तु पितरो ह्वानेषु"–इति ( निरु० ११. २. ६. ) ।

तथाच तस्या ऋच एषोऽर्थः सम्पद्यते— "हवेषु" 'ह्वानेषु' अस्मदाह्वानेषु सत्सु "ते" 'पितरः' पितृगणाः "नः" अस्मान् "अवन्तु" 'आगच्छन्तु' । ते कीदृशाः ? इत्याह— "ये" "असुं" 'प्राणम्' "ईयुः" 'अन्वीयुः' प्राप्तवन्तः, पूर्वं प्राणान्विता आसन्निति यावत् । तत्र जीवितकाले "अवृकाः" 'अनमित्राः' सर्वत्र सर्वदैव साधुव्यवहारतः अमित्रशून्याः, "ऋतज्ञाः" 'सत्यज्ञा वा यज्ञज्ञा वा' कर्त्तृतया कारयितृतया वा यज्ञानुष्ठानविदः, "सोम्यासः" 'सोम्याः—सोमसम्पादिनः' च आसन्निति । ते च कतिविधाः ? इत्याह—"अवरे", "परासः" 'परे', "मध्यमाः" चेति त्रिविधाः । तत्र, 'परे' द्युस्थानसञ्चारिणः, "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते"–इत्यादिना छान्दोग्ये ( ५. १०. १, २. ) वर्णिता देवयानमार्गेण सूर्यलोकं गताः ; 'मध्यमाः' द्यावापृथिव्योरन्तरेण व्यापिनः "य इमे ग्राम इष्टापूर्त्ते दत्त मित्युपासते"–इत्यादिना छान्दोग्ये ( ५. १०. ३-६. ) वर्णिताः पितृयानमार्गेण चन्द्रलोकं गताः ; 'अवरे' भूपृष्ठस्थानसञ्चारिणः, "अथैतयोः पथोर्न कतरेण च"–इत्यादिना छान्दोग्ये ( ५. १०. ८. ) वर्णिताः पृथिव्या

सन्तत्या एवं सन्तता हीमे लोकाः ; तदस्य द्वितीयं जन्म। सो ऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते ; अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति, स इतः प्रयन्नेव पुनर्जायते ; तदस्य तृतीयं जन्म"–इति ( २ अ० ५. १. )। शतपथे तु मृत्युप्रकारो मृतस्य तस्य पित्र्यादिदेहलाभश्चाम्नातः परिव्यक्तम्। तथाहि— "स यत्रायꣳ शारीर आत्माबल्यं नीत्य सम्मोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति, स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति। स यत्रैष चाक्षुषः पुरुषः पराङ् पर्य्यावर्ततेऽथारूपज्ञो भवत्येकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयतीत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुः। तस्य हैतस्य हृदयस्याग्रं प्रद्योतते, तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राण मनूत्क्रामन्तꣳ सर्वे प्राणा अनूत्क्रामन्ति, सञ्ज्ञानमेवान्ववक्रामति, स एष ज्ञः सविज्ञानो भवति ; तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च। तद्यथा तृणजलायुका तृणस्यान्तं गत्वात्मानमुपसꣳहरत्येवमेवायं पुरुष इदꣳ शरीरं निहत्याविद्यां गमयित्वात्मानमुपसꣳहरति। तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरꣳ रूपं तनुत एवमेवायं इदꣳ शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरꣳ रूपं तनुते, पित्र्यं वा गान्धर्वं वा, ब्राह्मं वा प्राजापत्यं वा, दैवं वा मानुषं वान्येभ्यो वा भूतेभ्यः"–इति १४. ७. २. १—५.। अत्र पित्र्यं गान्धर्वञ्च मिथो पुण्यकर्मादितः किञ्चिद्भेदयुक्तमन्तरिच-

लोकगं रूपम् ; ब्राह्मं प्राजापत्यं च तथा मिथः सामान्यभेदयुक्तं द्युलोकगं रूपम् ; एवं दैवं मानुषञ्च विद्वत्त्वाविद्वत्त्वभेदभिन्न मिहत्यं रूपम्। इत्थ मपि छान्दोग्याद्युक्तं पितॄणां गतित्रैविध्यम्, उदीरतामितिमन्त्राम्नातपितृत्रैविध्यञ्चोपपन्नं भवति। तदेवं यास्क-व्याख्यातस्योदीरतामितिमन्त्रस्य 'असुं य ईयुः'-इत्यंशस्य पित्र्या-यनतमदेहगतं प्राणं ये अन्वीयुरित्येवार्थः सुष्ठुतर इत्यस्माकम्। पिण्डपितृयज्ञप्रकरणादौ च ( य० वा० २. २०—२४. ; श० ब्रा० २. ४. ४. १—२४. ; तै० ब्रा० १. ३. १०, २. ६. ३. ) पितृगण-स्वरूपं पर्यालोच्यम्। पितृलोक मपि निर्णेष्याम इहैवान्यप्रकरणे।

मनुष्याः। ऐतरेये त्विहैतच्छब्दनिर्वचन मेवं प्रोक्तम्— "मिदं प्रजापते रेतो दुषदिति०—०तस्मादुषं मनुष मित्याचक्षते परोक्षेण"-इति ( ३. २. ८. )। "मनुष्याः कस्मात्? मत्वा कर्माणि सीव्यन्ति, मनस्यमानेन सृष्टाः, मनस्यतिः पुनर्मनस्वी-भावे ; मनोरपत्यम्, मनुषो वा"-इति त्वाह यास्कः ( निरु० ३. २. १. )। "मनोर्जातावञ्यतौ षुक् च"-इति च पा० ४. १. १६१ सूत्रम्। 'समुदायार्थो जाति ; मानुषः मनुष्यः'-इति तत्र दीक्षितः। तथाक्तु "षडर्घ्या भवन्ति,— आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति"-इति गो० गृ० सू० ४. १०। मातृपित्राचार्याणां पूजनीयत्वं तु तैत्तिरीय-( शि० ७. ११. )-मन्वादि-( २. २२५. )-प्रसिद्धम्॥

शतपथब्राह्मणे तेषां देवपितृमनुष्याणा मेकत्रैव विशेषपरिचय आम्नात उपासनाप्रकारश्च। तथाहि— "ततो देवाः ; यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन्। तानब्रवीत्— यज्ञो वोऽन्नम्, अमृतत्वं वः, ऊर्ग् वः, सूर्यो वो ज्योतिरिति। अथैनं पितरः ;

प्राचीनावीतिनः सव्यं जान्वाच्योपासीदन्। तानब्रवीत्— मासि मासि वोऽशनम्, स्वधा वः, मनोजवो वः, चन्द्रमा वो ज्योतिरिति। अथैनं मनुष्याः; प्रावृता उपस्थं कृत्वोपासीदन्। तानब्रवीत्— सायम्प्रातर्वोऽशनम्, प्रजा वो, मृत्युर्वो, ऽग्निर्वो ज्योतिरिति"—इति ( २. ४. २. १, २, ३. )।

एवमेव देवपितृमनुष्याणामर्चनं कर्त्तव्यत्वेनैतरेये समाम्नातम् "एष ह वा अनदाशुरूप इत्यादिना। तत्र हि अग्निहोत्रादिभिः श्रौतैः, वैश्वदेवादिभिश्च गृह्यैर्देवानामर्चनं सम्पद्यते; पिण्डपितृयज्ञादिभिः श्रौतैः स्वस्वसूत्रोक्तप्रकारैः श्रद्धयान्नजलादिप्रदानात्मकश्राद्धादिभिश्च पितॄणामर्चनं सम्पद्यते; निष्कपटविनीतभावप्रदर्शनाज्ञापालनसत्समादरपत्रपुष्पान्नपानाहारादिप्रदानैर्मनुष्याणामर्चनं सम्पद्यते।

अतिथिसत्कारविषये गाथाप्येकाम्नाता— "तदु यददो गाथा भवति,— अनेनस मेनसा सो ऽभिशस्तादेनस्वतो वापहरादेनः। एकातिथि मप सायं रुणद्धि बिसानि स्तेनो जहारेति"—इति ५. ५. ५। गाथैषा नैतद्ब्राह्मणप्रवक्तुः कल्पिता; अपि तु बहुप्राचीना, अनेनात्र स्मृतेत्येव। तदाह तद्भाष्ये सायणः— 'पुरा कदाचित् सप्तर्षीणां संवादप्रसङ्गे कश्चित् पुरुषो बिसस्तैन्यलक्षणमपवादं प्राप्य तत्परिहारार्थं ऋषीणामग्रे शपथं चकार, तदीयशपथोक्तिरूपेयं गाथा'—इति। तच्छपथस्वरूपञ्च तत्र तेनैवैवं व्याख्यातम्— 'बिसानि पद्ममूलानि, तेषामपहर्त्ता ( एवं ) प्रत्यवायपरम्परां प्राप्नोतु;— पापरहिते पुरुषे बिसस्तैन्य मपवादं कृतवतो यः प्रत्यवायः, पापिनः पुरुषस्य सम्बन्धि पापं स्वीकुर्वतो यः प्रत्यवायः, सायङ्काले गृहे समागच्छत एकातिथेर्वैदेशिकस्यारोधने

यः प्रत्यवायः, सेयं प्रत्यवायपरम्परा विसस्तीर्ण्ये सति मम भूयादित्येवं शपथः'–इति। अस्माकं त्वस्या गाथाया ऋजुतरोऽर्थान्तरः प्रतिभाति। तद्यथा— यः कश्चित् 'अनेनसम्' अपापम् आरोप्यमाणपापशून्यं जनम्, 'एनसा' आरोप्यमाणेन पापेन 'अभिशस्तात्' निन्देत्, 'सः' निन्दकः 'एनस्वतः' स्वभावजातपापिनः तस्य निन्दितस्य यत् किमपि स्वभावजम् 'एनः' पापम् अस्ति, तदेव 'अपहरात्' अपहरणं कुर्यात्। सन्ति हि सर्वेषामेव मानवानां स्वभावजानि पापानि। तदप्याम्नातमेव— "अतिपक्ष एव वै पुरुषः पाप्मना"–इति (४.१.४.)। इत्थं गाथापूर्वार्धेन तथापवादकीर्तनं निषिद्धम्, अथापरार्धेनातिथिविमुखीकरणं निषिध्यते— यः कश्चिद् 'सायं' काले समागतम् 'एकातिथिं' सर्वातिथिलक्षणसम्पन्न मत एव प्रधानातिथिम्, एकमङ्गशमात्र मतिथिं वा 'अपरुणद्धि' स्वागतासनान्नपानादिकम् अदत्त्वा विमुखीकरोति, 'सः' 'स्तेनः' चौरः सन् 'बिसानि' मृणालानि, तद्गतानीव सूक्ष्मतन्तुरूपाणि तदतिथिशरीरस्थानि स्नायुनामजीवनहेतुबन्धनानि 'अपजहार' तज्जीवनापहरणपापभाग् भवतीति।

अहोऽतिथिसत्कारायासीत् तदाम्नायातय प्रचलितः। तत एव सोमे राजन्यागते या आतिथ्येष्टिर्विहिता, तत्र पशुघातानुकल्पस्य विहितः— "तद्यथैवादो मनुष्यराज आगते, ऽन्यस्मिन् वार्हति उक्षाणं वा वेहतं वा क्षदन्त एवमेवास्मा एतत् क्षदन्ते, यदग्निं मथ्नन्ति; अग्निर्हि देवानां पशुः"–इति (१.३.४.)। अप्युपःशब्दस्य गोपार्थतानिर्णयाय चाम्नात मेवम्— "एतर्हि गव्यं मीमांसमानाः पृच्छन्ति, सन्ति तत्रोपाः इति"–इति (४.४.५.)। सायणकृत मेवैतद्व्याख्यानं द्रष्टव्यम्।

मांसभक्षणविधिस्त्वाम्नात इहान्यत्रापि। तथाहि— "नाग्नीषोमीयस्य पशोरश्नीयात्०—० तस्मात्त्वम्०—० तस्माशितव्यञ्चैव लोभितव्यञ्च"—इति (२. १. ३.)। अमेध्यमांसभक्षणे दोषो मेध्यमांसभक्षणेऽदोषश्चाम्नातः। तथाहि— "एत उत्क्रान्तमेधा अमेध्याः पशवस्तस्मादेतेषां नाश्नीयात्"—इति २. १. ८.। 'एते' पुरुषकिम्पुरुषगौरगवयोष्ट्रशरभा इति षट् अमेध्याः, अश्वगोऽव्यजपृथिवीभवाः पञ्च मेध्या भक्षणीया इति विवेकः। पृथिवीभवत्वेनेह व्रीह्यादीनां ग्रहण मिष्टम्। अतएव श्रुतम्— "स वा एष पशुरेवालभ्यते यत् पुरोडाशः"—इत्यादि २. १. ८.। तत्राप्यज-मांसस्यासीद् बहुप्रचलन मिति च प्रतीयते। तथाहि— "एष एतेषां पशूनां प्रयुक्ततमो यदजः"—इति च तत्रैव। हयापशुवात-निन्दाप्यस्ति— "अथ येऽतोऽन्यथा येडगा वा पापकृतो वा पशु मिमथ्नीरंस्ताहकम्"—इति ७. १. १। स एष पशुहिंसाव्यवहारः खलु यद्यप्यस्मभ्यं न रोचते, तथाप्युदाहृतवाक्याना मवैदिकत्व मतथार्थत्वं वेदविरुद्धत्वं वा यावन्न प्रतीयते, तावदेवमादिषु "आम्नायवचनादहिंसा प्रतीयेत (१. ५. २.)"—इति निरुक्तवचन मेव शरणं मन्यामहे वयम्।

अतिथिसत्कार इवेहान्योऽन्योऽप्युपदेशो लभ्यते। तद्यथा— "अभिह्वयते पिपासते चिप्रं प्रयच्छेत्" इति (६.२.५.)। एतेन स्थानविशेषे द्रव्यविशेषस्य दानचिप्रता विहिता। "अप्रसृतः करोत्यकृतं तदकृत मकरिति वै निन्दन्ति"—इति (२.५.६.)। एतेन सर्वेष्वेव विचार्यकर्मसु गुर्वाद्यनुज्ञा स्वाम्यनुज्ञा वा ग्रहणीयेत्युपदिष्टम्।

आसीच तदानी मार्त्विज्याशस्त्यम्, अयाज्ययाजननिषेधं।

ब्राह्मणानां पौरोहित्यं व्यवस्थापितम्। "श्रायुव मायंस्य राष्ट्रं भवति, नैनं पुरायुषः प्राणो जहाति, श्राजरसं जीवति, सर्व मायुरेति, न पुनर्म्रियते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः (८. ५. २.)"–इत्यादिना पुरोहितानां यजमानमङ्गलकारित्वं बहुधैव प्रपञ्चितम्। "तदप्येतदृषिणोक्तम्"–इत्युपक्रम्य संहितिकमन्त्रत्रयप्रमाणेनाप्येतदेव (ऋ० मं० ४. ५०. ७, ८, ८.) दृढीकृतम् (८. ५. ६.)। तत्रैव—"बृहस्पतिर्ह वै देवानां पुरोहितः, तमन्वन्ये मनुष्यराज्ञां पुरोहिताः। बृहस्पतिं यः सुभृतं बिभर्त्तीति यदाह, पुरोहितं यं सुभृतं बिभर्त्तीत्येव तदाह"–इत्यादि द्रष्टव्यम्। बृहस्पतिशब्देनात्र सूर्यो निरुक्तादिप्रसिद्धः। स यथा वाय्वादिदेवानां पुरोहितः पुरःस्थितः, प्राधान्यभागुपकारी च; मनुष्येष्वपि राजपुरोहितास्तथैव भवेयुः। तदत्र संहितावचन मपि प्रमाण मित्याह— "बृहस्पतिं यः सुभृतं बिभर्त्तीति (४. ५०. ७.)। "अग्निर्वा एष वैश्वानरः पञ्चमेनिः"–इत्यादिना (८. ५. १.) पुरोहितानां कोपनत्वं संवर्त्तं, यजमानानां तदुपशमने यत्नस्य कर्त्तव्यता चात्र विहिता। तदेतत्सर्व मालोच्य प्रतीयते,— तदानीन्तनराजपुरोहितानां मसाधारणसम्मानभाक्त्वं, राजसु राजगृहेषु च प्रावल्यं विशेषमतिप्रसारित्वञ्चासीदिति। अपि तेषा मद्यतनपुरोहितानां मिव कर्मकारयितृत्वं तत्तन्मन्त्रपाठयितृत्वं च न क्वापीह गम्यते, न वा क्वचिदिव ब्राह्मणस्य पुरोहितापेक्षा सूच्यत इति च सुधीभिरालोच्य मेव॥

कर्मकारयितृभ्यो दक्षिणादानस्यातिकर्त्तव्यता चासीत् तदानी मपि। तदाह—"दातव्यैव यज्ञे दक्षिणा भवत्यल्पिकाऽपि"–इति ६. ५. ८। केनापि हेतुना सा परित्यक्ता चेत्र पुनर्यहणीया,

विधानां त्रिविधाना मृत्विजां वरणाय यजमानो मनसि आशा मपि न कुर्यादिति। मूर्खस्यार्त्विज्यदूषणन्तूक्त मिहान्यत्रापि— "त ऋत्विजो यजमानं कर्त्वं मन्वस्य वित्त मादाय द्रवन्ति य मनेवं-विदो याजयन्ति"–इति ८. २. ७।

अथ व्यवहारः।— राज्ञां पुरोहितस्यावश्यकता चात्र बहुधा प्रत्यायिता। तद्यथा— "न ह वा अपुरोहितस्य राज्ञो देवा अन्न मदन्ति, तस्माद्राजा यक्ष्यमाणं ब्राह्मणं पुरो दधीत, देवा मेऽन्न मदन्निति"–इति ८. ५. १। इत्थं ब्राह्मणजातेरेव पौरोहित्य मिति च ज्ञापितम्। एतद्वचनोपक्रमे व्यक्तञ्चाम्नातम् "ब्राह्मणः पुरोहितः"–इति। राजन्यवैश्ययोः पुरोहितार्षेयेण दीक्षावेदनञ्च विहितम्— "पुरोहितस्यार्षेयेण दीक्षा मावेदयेयुः, पुरोहितस्या-र्षेयेण प्रवरं प्रवृणीरन्"–इति (७. ४. ७.)। इतो वैश्याना मपि पुरोहितापेक्षा सूचिता। बुद्धिमत्तमाना मार्याणां पुरो-हितविधिः कथा तु दूरे आस्ताम्, जडाना मपि पृथिव्यादीनां पुरोहिताः सन्तीति च कल्पितम्— "अग्निर्वाव पुरोहितः पृथिवी पुरोधाता, वायुर्वाव पुरोहितो ऽन्तरिक्षः पुरोधाता, आदित्यो वाव पुरोहितो द्यौः पुरोधाता; एष वै पुरोहितो य एवं वेद, अथ स तिरोहितो य एवं न वेद"–इति ८. ५. ४। तदेवं यथा पृथि-व्यादिष्वग्न्यादीनां प्राधान्यम्, तथैव यजमानगृहेषु पुरोहितानां प्राधान्यं ध्वनितम्, विहितञ्च पुरोहिताना मेतद्विज्ञानवत्त्वम्; ब्राह्मणाना मपि येषां पृथिव्यादिनिष्ठाग्न्यादिपुरोहितत्वविज्ञान मविदितम्, तादृशा मविदुषां पौरोहित्यं सुतरां निषिद्धम्। तस्यै-तस्यैतदुपसंहारवचनम्— "यो ह वै त्रीन् पुरोहितान् वेद, स ब्राह्मणः पुरोहितः"–इति। एतेन च वचनेन वेदविदा मेव

ब्राह्मणानां पौरोहित्यं व्यवस्थापितम्। "अयुव मायस्य राष्ट्रं भवति, नैनं पुरायुषः प्राणो जहाति, आजरसं जीवति, सर्व मायुरेति, न पुनर्म्रियते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः (८. ५. ३.)"-इत्यादिना पुरोहितानां यजमानमङ्गलकारित्वं बहुधैव प्रपञ्चितम्। "तदप्येतदृषिणोक्तम्"-इत्युपक्रम्य संहितिकमन्त्रत्रयप्रमाणेनाप्येतदेव (ऋ० सं० ४. ५०. ७, ८, ९.) दृढीकृतम् (८. ५. ३.)। तत्रैव— "बृहस्पतिर्ह वै देवानां पुरोहितः, त मन्वन्ये मनुष्यराज्ञां पुरोहिताः। बृहस्पतिं यः सुभृतं बिभर्त्तीति प्रदाह, पुरोहितं यं सुभृतं बिभर्त्तीत्येव तदाह"-इत्यादि द्रष्टव्यम्। बृहस्पतिशब्देनात्र सूर्यो निवक्तादिप्रसिद्धः। स यथा वाय्वादिदेवानां पुरोहितः पुरःस्थितः, प्राधान्यभागुपकारी च; मनुष्येष्वपि राजपुरोहितास्तथैव भवेयुः। तदत्र संहितावचन मपि प्रमाण मित्याह— "बृहस्पतिं यः सुभृतं बिभर्त्तीति (४. ५०. ७.)। "अग्निर्वा एष वैश्वानरः पञ्चमेनिः"-इत्यादिना (८. ५. १.) पुरोहितानां कोपनत्वं संवर्ण्य, यजमानानां तदुपशमने यत्नस्य कर्त्तव्यता चात्र विहिता। तदेतत्सर्व मालोच्य प्रतीयते,— तदानीन्तनराजपुरोहितानां असाधारणसम्मानभाक्त्वं, राजसु राजराष्ट्रेषु च प्रावल्यं विशेषतस्तिप्रसारित्वञ्चासीदिति। अपि तेषा मद्यतनपुरोहितानामिव कर्मकारयितृत्वं तत्तत्कर्ममन्त्रपाठयितृत्वं च न क्वापीह गम्यते, न वा क्वचिदिह ब्राह्मणस्य पुरोहितायैवा न्यूयत इति च सुधीभिरालोच्य मेव॥

कर्मकारयितृभ्यो दक्षिणादानस्यावश्यकर्त्तव्यता चासीत् तदानी मपि। तदाह— "दातव्यैव यज्ञे दक्षिणा भवत्यल्पिकापि"-इति ६. ५. ८। केनापि हेतुना सा परित्यक्ता चैव पुनर्ग्रहणीया,

केनापि प्रकारेणामतापि सा आपन्नश्रतुभावाय कस्मैचन प्रदेयेति चेहैव। तथाहि— "न निहत्तदक्षिणां प्रतिगृह्णीयात्"-इति, "यदि त्वेनां प्रतिगृह्णीयात्, अप्रियायैनां भ्रातृव्याय दद्यात्"-इति च ६. ५. ८। यशोलिप्साप्यासीत्तदातिप्रबला। तदाह— "यम् ब्राह्मण मनूचानं यशो नर्च्छेदिति ह स्माहारण्यं परेत्य दर्भस्तम्बानुद्ग्रथ्य दक्षिणतो ब्रह्माणं सुपविश्य चतुर्होतॄन् व्याचक्षीत"-इति ५. ४. ४। कस्मिंश्चिद् दानादिकर्मणि स्वश्रेष्ठताभिमानस्य पापहेतुत्वञ्चाभिमतं तेषाम्। तत एवैव साम्नातम्— "यो वै भवति, यः श्रेष्ठतामश्नुते स किल्बिषं भवति" इति १. २. २।

आम्नातञ्चेह हस्त्यश्वगवादिधनदानप्रशंसागाथाभिगानम्। तथाहि दौष्मन्तिभरतस्य (८. ४. ८.)—

"हिरण्येन परीवृतान् कृष्णाञ्छुक्लदतो मृगान्।
मष्णारे भरतोऽददाच्छतं बद्धानि सप्त च"-इत्यादि।

इह श्रुतस्य मृगशब्दस्य हस्तिपरव्याख्यानं सायणीयम्; अस्तु सत् तथैव मन्तव्यम्, परं तत्कृतं बद्धशब्दस्य छन्दसङ्घापरत्वं तु नास्मभ्यं रोचते; तादृग्दानं ह्यत्यधिक मित्यसम्भवमिति।

आत्रेयाङ्गराजदानगाथाश्लोकेषु दासीदानं च श्रुतम्— "दासीसहस्राणि ददामि ते"-इति (८. ४. ८.)। एतेन तदानीं मासीदार्यावर्त्तेऽत्र च मनुष्याणा मपि हस्त्यश्वादीना मिव क्रयविक्रयदानप्रथेति स्पष्टम्। अत एव शौनःशेपाख्यानेऽपि श्रुतम्— "तस्य ह शतं दत्त्वा स त मादाय सोऽरण्याद् ग्राम मेयाय"-इति (७. ३. ३.)। 'तस्य' तस्मै शुनःशेपपित्रे सौयवसयेऽजीगर्त्ताय 'सः' हरिश्चन्द्रपुत्रो रोहितः 'शतं' बहु, शतसङ्ख्याकं वा मुद्रात्मकं

धनं 'दत्त्वा' 'तम्' शुनःशेपम् आदायेत्याद्यर्थः। निरुक्ते (३. १. ४.) तु "स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते, न पुंसः; पुंसोऽपीत्येके; शौनःशेपे दर्शनात्"—इत्युक्तम्।

एवं पुत्रेषु पितुः स्वेच्छाजनितोऽन्यान्यविधोऽत्याचारोऽप्यासीत् तदानीं सुदुर्वारः। तद्यथा (७. ३. ५.)—

"अथ विश्वामित्रः पुत्रानामन्त्रयामास,—

मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः

ये के भ्रातरः स्थ नास्मै ज्यैष्ठ्याय कल्पध्व मिति"—इति।

एव मन्यत्रान्यदपि—"एतयो ह वै मुनिरग्नेरायुर्ददर्श;०—० सोऽब्रवीत् पुत्रान्, पुत्रका अग्नेरायुरदर्शं तदभिलपिष्यामि, यत् किञ्च वदामि तन्मे मा परिगातेति०—०। तस्याभ्यामैतशायन एत्याकाले ऽभिहाय मुख मप्यगृह्णादहपत्‌ः पितेति; तं होवाचापेह्यलसोऽभूर्यो मे वाच मवधीः०—० पापिष्ठां ते प्रजां करोमि. यो मह्य मसक्था इति"—इति ६. ५. ७।

पुत्राणां पितृदायभाक्त्व मपीह सूचितम्। तद्यथा—"नाभानेदिष्टं है मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्सोऽब्रवीदेत्य किं मह्य मभाक्तेति"—इत्याद्याख्यानं (५. २. ८.) द्रष्टव्यम्।

वाणिज्यार्थं समुद्रयानारोहणपूर्वकं महासमुद्रे परिप्लवनं चासीत् तदानीं सुप्रचलितम्। अतएव तद्दृष्टान्ततयाम्नात एवम्—"यथा समुद्रं प्रप्लवेरन्नेवं हैव ते प्रप्लवन्ते, ये संवत्सरं वा द्वादशाहं वा ऽऽसते"—इति ६. ४. ५। वनदस्यूना मप्युपद्रव आसीत्तदानी मिति चात्र सूचितम्। तद्यथा—"निषादा वा सेलगा वा पापकृतो वा वित्तवन्तं पुरुष मरण्ये गृहीत्वा कर्त्त मन्वस्य वित्त मादाय द्रवन्ति"—इति ८. २. ७। एवं नागरिकग्रन्थिच्छेदकाना-

मपि दृष्टान्तविधया समुल्लेखोऽत्र श्रुतः— "त ऋत्विजो यजमानं कर्त्वं मन्वस्य वित्त मादाय द्रवन्ति"–इति ८. २. ७ ।

आसीत्तदानीं चौर्य्य मपि तन्निन्दा च । तद्यथा सायणमते— पुरा कदाचित् सप्तर्षीणां संवादप्रसङ्गे कश्चित् पुरुषो बिसस्तैन्यलक्षण मपवादं प्राप्य तन्निरासार्थं ऋषीणा मग्रे शपथं चकार, तदीयशपथी लिरूपेयं गाथा— "यनेनस मेनसा सोऽभिशस्तादेनस्वतो वापहरा देनः । एकातिथि मप साय दधाति, बिसानि स्तेनो अप सो जहार" –इति ( ५. ५. ५. ) । सायणमते गाथयैतया सपापवादकारिणां साय मतिथिमद्याख्यातॄणां स्तेनकारिणाञ्च पापवित्त्वं ज्ञापितम् ।

एकराट् सार्वभौमोऽप्यासीत्तदानीं संविज्ञातः । तत्तत्परिचयोऽत्रैवम्— "अयं समन्तपर्यायी स्यात् सार्वभौमः सार्वायुषः आन्तादापरार्द्धात् पृथिव्यै समुद्रपर्यन्ताया एकराडिति"–इति ८. ४. १ । तथाविधसार्वभौमनरपतेः सर्वेभ्यो मित्रराजेभ्य उपढौकनग्रहणञ्चेहाम्नातम्— "सर्वे हैव महाराजा आसुरादित्य इव ह स्म श्रियां प्रतिष्ठितास्तपन्ति, सर्वाभ्यो दिग्भ्यो बलि मावहन्ते" –इति ७. ५. ८ । 'सर्वे' च ते इमे— कावषेयः तुरः, साहदेव्यः सोमकः, साञ्जयः सहदेवः, देवावृधो बभ्रुः, वैदर्भो भीमः, गान्धारो नग्नजित्, अरिन्दम इति विश्रुतः जानकिः क्रतुवित्, पैजवनः सुदासेत्यष्टावैतरेयपूर्वपूर्वजाः सार्वभौमा बभूवु रिति च तदुपक्रमग्रन्थतः प्रतीयते ।

महाराजस्य प्रियतमभार्य्यायाः सन्निधौ प्रजाना मावेदनप्रयाप्यासीत् तदानीम्; अत एव इन्द्रस्य प्रियायै वावातायै देवानां स्वाभिप्रायज्ञापनम्, तस्याश्च इन्द्रं ज्ञापयामीति प्रतिश्रुत्यादिकथा श्रूयते चात्र —"ते देवा अनुवविदं या इन्द्रस्य प्रिया जाया वावाता

प्रासहा नाम, अस्या मेवेच्छामहा इति । तथेति तस्या मैच्छन्त । सेनानब्रवीत् ,— प्रातर्वः प्रतियक्तास्मीति"–इति ३. २. ११ ।

राजभ्रातॄणां राजसहचरणव्यवहारश्चासीत् । तत्र एवैव माम्नातम् — "ऋतवो वै सोमस्य राज्ञो राजभ्रातरो यथा मनुष्यस्य, तैरेवैनं तत्सहागमयति"–इति १. ३. २ ।

राजधानीपरिरक्षणाय तदभितः प्राकारनिर्माणप्रथाप्यासीत्तदानीम् । तदाह— "देवासुरा वा एषु लोकेषु समयतन्त, ते वा असुरा इमानेव लोकान् पुरोऽकुर्वत"–इत्यादि १. ४. ६ । 'पुरोऽकुर्वत, प्राकारवेष्टितानि नगराणि कृतवन्तः'–इति तत्र सायणः । एतदाख्यायिकाया मसुरैः समीपस्थिते सङ्ग्रामे असुरेभ्यस्त्रिपुररक्षणार्थं मयोरजतसुवर्णमयप्राकारा निर्मिता देवैरिति सूचितम् । असुरोपद्रवतो यज्ञरक्षार्थं मभितोऽग्निप्राकारनिर्माणञ्च देवैः कृत मिति च श्रुत मेतस्या माख्यायिकायाम्—"देवा वै यज्ञ मतन्वत०—०प्रतिमयीः पुरस्त्रिपुरं पर्यास्यन्त"–इति २. २. १ । प्रबलतरैः शत्रुभिराक्रान्ते राज्ये तद्रक्षणाय तदानीन्तनप्रजाना मपि परस्परं मन्त्रणाकरणम् , अत एव योधप्रवृत्तिः, परस्पर मेकमत्याय प्रतिज्ञाबद्धत्वम् , राजरश्मिरक्षितस्थानादौ पुत्रकलत्रादीन् संस्थाप्य युद्धाय प्रयाणञ्चेति सर्वं मिह १. ४. ७ द्रष्टव्यम् । प्रियवस्तुदानादिरूपसामकौशलतो रक्तपात मन्तरेण स्वकार्योद्धारचेष्टाप्याहृतासीत् तदानीम् ( १. ५. १. ) । परस्परैकमत्यस्थितये आज्यस्पर्शपूर्विका प्रतिज्ञापद्धतिश्च तदानीन्तनी प्रशंसनीया । तथाविधं प्रतिज्ञानं हि तानूनप्त्र मिति सर्ववेदेषु विश्रुतम् । तदिदम् ऐ० ब्रा० १. ४. ७, श० ब्रा० २. ४. २, तै० सं० १. २. ११, ६. २. २–६ श्रुतिवाक्येषु विहितं द्रष्टव्यम् । "न सतानूनप्त्रिणे द्रोग्धव्यम्"–इति

चेह ( १. ४. ७. ) तदुपसंहारः । 'सतानूनप्त्रिणे' सहयायकारिणे न द्रोग्धव्य मिति तदर्थः । शतपथे चैवम्—३. ४. ४. ८ ।

सेनापत्यनिर्णयः, तस्य च सेनापतेर्भागस्य: शत्रुसेनाक्रमणोपायश्चेह वर्णितः— "स त्रिधेषीभूत्वा त्र्यनीकोऽसुरान् युद्ध मुपप्रायद् विजयाय"—इत्यादि ( ३. ४. १. ) । युद्धकाले राजसाहाय्यकारिणां प्रजानां सामन्तानाञ्च प्रसादलाभकथाप्यस्त्यत्र — "सोऽवेदिमे वै किल मे सचिवा इमे माऽकामयन्त हन्तेमानस्मिन्नुक्थ आभजा इति, तानेतस्मिन्नुक्थ आभजत्"—इति ३. २. ८ । युद्धजयानन्तरं राज्ञो मर्यादाहद्धिश्चेह सूचिता ; तदत्र "इन्द्रो वै वृत्रं हत्वा"—इत्याद्याख्यायिका द्रष्टव्या ( ३. २. १०. ) । पराजितानामन्तर्हस्तीनानि धनानि समुद्रतीरे प्रोषितानि भवन्ति स्त्येत्यपीह श्रुतम् ( ५. २. ६. ) । हस्तमुष्टिमध्ये एव गोपनीयं यद् बहुमूल्यं रत्नादिकं धनम् , तदेवान्तर्हस्तीनम् । एवञ्च तदाप्यासीदेव बहुमूल्यहीरकादीनां व्यवहार इति वाक्यात् प्रतीयते स्फुटम् ॥

प्रायः सर्वसभ्यदेशेषु विद्यमान एव उपविमोकव्यवहारोऽप्यासीत् तदानीम् । तथा चाम्नायते— "अश्वैर्वानड्‌ुद्भिर्वाऽन्यैरन्यैरन्यान्तरैरन्यान्तरैरुपविमोकं यान्ति"—इति ४. ४. ५ । तदिदं श्रुत मुपविमोकस्वरूप मद्यतन मिवैव । दूराध्वगमने एवेहयोपविमोकस्यावश्यकता चाम्नाता — "दीर्घाध्व उपविमोकं यायात्"—इति ( ६. ४. ७. ) ।

स्कन्धतो भारवहनाय वीवधस्य व्यवहार आसीत्तदानी मिति च प्रतीयते— "यदस्यैव सवीवधतायै"—इत्येवमादिश्रुतेः ( ८. १. १. ) । 'उभयतः शिक्यद्वयेन अलङ्कुम्भद्वयं वोढुं यः काष्ठविशेषः पुरुषाणां स्कन्धे ध्रियते, स वीवध इत्युच्यते'—इति तत्र सायणः ।

'विविधवीवधशब्दो उभयतो बद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्त्तते'—इति सि० कौ० ( पा० सू० ४. ४. १७. )। वीवधदण्डस्तु प्रायेण वंशस्यैव भवति, ततः स इह तेजतीति श्रुतम्—"तेजन्या उभयतोऽन्तयोरप्रस्रसाय वसौं नह्यति"—इति ( १. २. ५. )। सूच्या स्यूतानां सभ्यजनोचिताङ्गरक्षादीनाञ्चासीत्तदापि व्यवहारः। श्रुतं ह्येतत्— "सूच्या वासः सन्दधदियात्"—इति ( २. २. ७. )।

एवं तदानीमपि कर्मठत्वं श्रमकारित्व मुद्योगित्वञ्चैवासीत् प्रशंसनीयम्, अलसस्य श्रमकातरस्योद्योगहीनस्य त्वासीन्निन्दनीयत्वमेव। तत एवैव मित्र ( ७. ३. ३. ) श्लोकपञ्चक माम्नातम्—

"नानाश्रान्ताय श्रीरस्ति, इति रोहित शुश्रुम।
पापो नृषद्वरो जनः, इन्द्र इच्चरतः सखा ॥ १ ॥
पुष्पिण्यौ चरतो जङ्घे, भूष्णुरात्मा फलेग्रहिः।
शेरेऽस्य सर्वे पाप्मानः, श्रमेण प्रपथे हताः ॥ २ ॥
आस्ते भग आसीनस्य, ऊर्ध्वस्तिष्ठति तिष्ठतः।
शेते निपद्यमानस्य, चराति चरतो भगः ॥ ३ ॥
कलिः शयानो भवति, संजिहानस्तु द्वापरः।
उत्तिष्ठंस्त्रेता भवति, कृतं सम्पद्यते चरन् ॥ ४ ॥
चरन् वै मधु विन्दति, चरन् स्वादु मुदुम्बरम्।
सूर्यस्य पश्य श्रेमाणं, यो न तन्द्रयते चरन् ॥ ५ ॥"—इति।

यद्यप्येते गाथारूपाः श्लोका अनेनैतरेयेणेह प्रसङ्गत उद्धृता इति नैतरेयकालिकास्तथाप्यैतरेयकालेऽप्येवंविधोपदेशाना मासीदेवादर इत्यपि प्रतीयत एव। एषा मर्थास्तु सुगमाः, तथापि प्रथमचतुर्थयोः किञ्चिद् ब्रूमः।— यथा घोटकादयो मनुष्याणां वहनं कुर्वन्तीति मनुष्यवाहा उच्यन्ते, तथैवास्मच्छरीरस्थो लोहित एवाग्निं

शारीरतापं वहतीत्यग्निवाहत्वेन व्यपदिष्टो भवति वेदे ( निघ० १. १५. २. ); लोहित एव रोहितो वैदिकः । स च सूर्यचन्द्रोदयकृत इति वाहोरात्रजन्य इति वा हारिचन्द्रीयो हारिश्चन्द्रीय इतीहाख्यातः ; रसहरणात् हरिः = सूर्य इति हि सर्ववेदप्रसिद्धः । तथा चाग्निवाहनरूपयोषितधारिणः सर्वानेव पुरुषान् सम्बुध्य ऋषिराहेम मुपदेश मिति फलितम् । नानेति । हे 'रोहित !' 'इति' वयं 'शुश्रुम',— 'अनाश्राम्ताय' आभिमुख्येन श्रान्त आश्रान्तः, तद्विपरीतोऽनाश्रान्तोऽलसस्तस्मै 'श्रीः नास्ति' । अथवा नानाविधकार्येषु श्रान्तो नानाश्रान्तस्तस्मै श्रीरस्तीति । 'वरः' तपःकर्मविद्यादिभिः श्रेष्ठोऽपि 'जनः' 'नृषत्' नरि सीदन् , व्यक्तिविशेषश्राश्रितः सन् 'पापः' भवति । 'चरतः' भ्रमणकारिणः पुरुषस्य गिरिगिरिनदीग्रामसीमादिसङ्कटेषु च सर्वत्रैव 'इन्द्रः' परमैश्वर्यवान् ईश्वरः 'इत्' एव 'सखा' विद्यते । यः किल नगरे स्वगृहे च रक्षकः, स एव अरण्यान्यादावपीति अर्थार्जनाय भ्रमणशीलस्य कोऽस्ति चिन्ताविषय इति भावः । कलिरिति । सर्वविधकर्त्तव्यकर्मसु 'शयानः' शय्यागतः, अलस इति यावत् । एतदेव कलिलक्षणम् । तदेवं कलियुगे धर्मार्थकाममोक्षार्जनकर्मसु आलस्यबाहुल्यं भवतीति निष्पन्नम् , निष्पन्नञ्च यस्मिन् कस्मिन् वा युगे यदेवालस्यपरतया कर्त्तव्यानुष्ठानावहेलनं कृतं भवेत् , तदेवेदानीं कल्याश्रितः कल्यायशो वाह मिति ज्ञेय मिति । 'सञ्जिहानः' शय्यां , शयनभावं वा त्यक्तुं प्रवृत्तस्तत्रैवोपविष्टः । 'उत्तिष्ठन्' शय्यां शयनभावं वा परित्यज्यान्यत्र, शय्याया मेव वा दण्डायमानः । ' ' अनला… ' कुर्वन् । इत्य मिह प्रसङ्गतश्चतुर्युगलक्षणम् ।

मनुसंहितायामप्येवमेव युगलक्षणं संस्मृतम् ९अ० ३०२श्लो०—

"कलिः प्रसुप्तो भवति, स जाग्रद् द्वापरं युगम्।
कर्मस्वभ्युद्यतस्त्रेता, विचरंस्तु कृतं युगम्"–इति।

तथैतदपि प्रतीयते— कलिरेवाद्यं युगम्, द्वापरं द्वितीयम्, त्रेता तृतीयम्, चतुर्थन्तु कृतमिति। द्वापरत्रेतेतिनामान्तर्गतद्वित्रिशब्दतयैव मेव लभ्यते। प्रकृतिनियमोऽप्यत्रानुकूलः; न हि कश्चित् कुमारः सहसैकदैव तारुण्यं यौवनं चोल्लङ्घ्य वृद्धायते, नापि हि कश्चित् युवानोऽकस्माद्बालोऽनुत्तिष्ठेच्च स्यात् कार्यक्षम इति। एवं हि कलियुगानन्तरं कृतयुगागमनप्रतीक्षणं भवेन्निसर्गव्यापारानुकूलवेदार्थानभिज्ञाना मेव। तत्त्वतस्तु कलियुगानन्तरं द्वापरागमनम्, ततो त्रेतागमनम्, ततः कृतागमनम्; चक्रवद्भ्राम्यमानेऽस्मिन् जगति पुनः त्रेतागमनम्, ततो द्वापरागमनम्, ततश्च पुनः कलेः प्रादुर्भाव इत्येव वैदिकम्, क्रमोन्नतिक्रमावनतिविज्ञानसम्मतञ्च। क्रमोन्नतिपक्षस्तु प्रदर्शितयुगश्लोकसूचितः सुव्यक्त एव, क्रमावनतिश्च तत्रायात् किंवा अन्यथा स्यादित्यत एतद्विपरीतं मतं वेदविरुद्धमित्यश्रद्धेयमेवार्य्याणाम्। अपरमपि,—यथा वर्षर्त्तौ सर्वर्त्तुसद्भावो "वर्षा वै सर्व ऋतवः"–इत्युपक्रम्य वर्णितः शतपथे— "यदेव पुरस्ताद् वाति, तद् वसन्तस्य रूपम्; यत् स्तनयति, तद् ग्रीष्मस्य; यद् वर्षति, तद् वर्षाणाम्; यद् विद्योतते, तच्छरदः; यद् वृष्टोद्गृह्णाति, तद्धेमन्तस्य"–इति (२. ३. १, ७.), तथैव सर्वयुगधर्म्माणां प्रतियुगमाश्रितत्वस्वीकारेऽपि न नो हानिरिति॥

अथ तदानीन्तनविज्ञानानि। तत्र,

पृथिव्या गतिहेतुविज्ञानम्, द्यावापृथिवीसम्बन्धविज्ञानम्, वृष्टिहेतुविज्ञानम्, उदकानां मतिह्रासवृद्ध्यभावहेतुविज्ञानम्,

द्यावापृथिव्योरुभयोरेव प्रतिष्ठात्वविज्ञानञ्च यथा— "असौ वै लोक इमं लोक मभिपर्य्यावर्त्तते ततो वै द्यावापृथिवी अभवतां न द्यावान्तरिक्षान्नान्तरिक्षाद् भूमिः"–इति ४, ४, ५। 'असौ' द्युलोकः सूर्यलोक इति यावत्, 'इमं' भूलोकम् 'अभिपर्य्यावर्त्तते' सदैव अभितः परितश्च 'आवर्त्तते' भ्रामयति। 'ततः' तस्माद् 'वै' एव 'द्यावापृथिवी' द्यावापृथिव्यौ परस्परसम्बद्धे 'अभवताम्'। 'अन्तरिक्षात्' व्यवधानाद् 'द्यावा' द्युलोकः 'न' भूमितो विच्छिन्नः, तथा 'भूमिः' अपि तस्मात् 'अन्तरिक्षात्' व्यवधानाद् 'न' विच्छिन्नः। अतोऽत्रानुपद सूक्तम् "इमौ वै लोकौ सहास्ताम्, तौ व्यैताम्"–इत्युपपन्नम्। 'इमौ लोकौ' 'सहास्तां वै' परस्परसम्बद्धावेव विद्येते, 'तौ' लोकौ 'व्यैताम्' विवाहसम्बन्धयुक्तौ स्त्रीपुरुषाविव। एतयोः सम्बन्धज्ञापकहेतुश्चैवं निर्दिष्ट इहैव— "नावर्षन् न समतपत् ते पञ्चजना न समजानत"–इति। एतेन विज्ञायते द्युपर्य्यायः सूर्य एवात्र हृष्टिहेतुस्तापहेतुश्चेति। 'पञ्चजनाः' ब्राह्मणक्षत्रियवैश्या इति त्रिविधा आर्य्याः, दस्युदासाविति द्विविधावनार्य्याविति च पञ्चविधा मनुष्याः। तादृशविवाहस्य पुरोहिताः 'देवाः' रश्मय एवेमे इत्याह— "तौ देवाः समनयंस्तौ संयन्तावेतं देवविवाहं व्यवहेताम्"–इति। काव्योऽप्य एषः। ततैव विवाहितयोस्तयोः स्त्रीपुरुषयोर्मिथः प्रीतिहेतुं निगमयति—"धूमेनैवेय ममूं जिन्वति, वृष्ट्यासाविमाम्"–इति ४, ४, ९। 'धूमेन' रसहेतुवाष्परूपेणेत्यर्थः। संहितायां मप्येव माम्नातम् ( १, १६४, ५१, ) —

"समान मेतदुदक मुच्चैत्यव चाहभिः।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः" इति

'अहभिः' रश्मिभिः चाक्तम् 'एतत् उदकम्' 'उदेति'

ऊर्ध्वं मागच्छति, 'अव च' नीचैरपि आगच्छतीत्येव । अत एव 'पर्जन्याः' मेघाः 'भूमिं' 'जिन्वन्ति' प्रीणयन्ति, 'अग्नयः' अग्निजन्यानि धूमोद्भवाण्यपि 'दिवं जिन्वन्ति' । अस्मादेव हेतोरुदकस्य आसवहिरावृत्त्यं चिरं तुल्य मित्याह 'समा-नम्'-इति । अन्यथोदकस्योर्ध्वगमनाभावे क्रमादतिवृष्टिरेव स्यात्, तथा नीचैस्तत्पात मन्तरा अभावात् अनुष्टिरपि स्यादिति वृष्टिनिदानविज्ञानं सुदकसमत्वविज्ञानञ्च । एतयोः प्रतिष्ठारूपत्व माम्नात' यथा— "द्यावापृथिवी वै प्रतिष्ठे ; इय मेवेह प्रतिष्ठा असावमुत्र"-इति १. ३. ५ । 'इह' भूलोके, 'इयम्' पृथिवी 'प्रतिष्ठा' प्रतिष्ठानम्, 'अमुत्र' द्युलोके 'असौ' सूर्यः, प्रतिष्ठेत्येव तदर्थः । इत्थं द्युलोकभूलोकयोरुभयोरेवाश्रयप्रतिष्ठाहेतुत्वं च विज्ञापितम् ।

अथ पृथिवीभ्रमणविज्ञानम्, सूर्योदयास्तमयविज्ञानम्, अहोरात्रविज्ञानञ्च यथा— "स वा एष न कदाचनास्त मेति नोदेति । तं यदस्त मेतीति मन्यन्ते, अह्न एव तदन्त मित्वा-थात्मानं विपर्यस्यते ; रात्री मेवावस्तात् कुरुतेऽहः परस्तात् । अथ यदेनं प्रातरुदेतीति मन्यन्ते, रात्रेरेव तदन्त मित्वाथात्मानं विपर्यस्यते ; अहरेवावस्तात् कुरुते रात्रीं परस्तात् । स वा एष न कदाचन निम्रोचति, न ह वै कदाचन निम्रोचति"-इति ३. ४. ६ । तदेतस्मादाम्नायात् सूर्यकर्तृकं पृथिव्या भ्रामणादिकं विस्पष्ट मवगम्यते । एव मेवान्यत्रापि श्रूयते । तद्यथाथर्वणिकानां गोपथे— "एतत् सुमस्ततर मिव भवति,— स वा एष न कदाच-नास्त मयति, नोदयति । तद्यदेनं पश्चादस्त मयतीति मन्यन्ते, अह्न एव तदन्तं गत्वाथात्मानं विपर्यस्यते ; अहरेवावस्तात् कृणुते

द्यावापृथिव्योरुभयोरेव प्रतिष्ठात्वविज्ञानञ्च यथा— "असौ वै लोक इमं लोक मभिपर्यावर्त्तते ततो वै द्यावापृथिवी अभवतां न द्यावान्तरिक्षान्नान्तरिक्षाद् भूमि."–इति ४. ४. ५। 'असौ' द्युलोकः सूर्यलोक इति यावत्, 'इमं' भूलोकम् 'अभिपर्यावर्त्तते' सदेव अभितः परितश्च 'आवर्त्तते' भ्रामयति। 'ततः' तस्माद् 'वै' एव 'द्यावापृथिवी' द्यावापृथिव्यौ परस्परसम्बद्धे 'अभवताम्'। 'अन्तरिक्षात्' व्यवधानाद् 'द्यावा' द्युलोकः 'न' भूमितो विच्छिन्नः, तथा 'भूमिः' अपि तस्मात् 'अन्तरिक्षात्' व्यवधानाद् 'न' विच्छिन्न.। अतोऽस्यानुपद सूक्तम् "इमौ वै लोकौ सहास्ताम्, तौ व्येताम्"–इत्युपपन्नम्। 'इमौ लोकौ' 'सहास्तां वै' परस्परसम्बद्धावेव वियेते, 'तौ' लोकौ 'व्येताम्' विवाहसम्बन्धयुक्तौ स्त्रीपुरुषाविव। एतयोः सम्बन्धज्ञापकहेतुर्यैवं निर्दिष्ट इहैव— "नावर्षन् न समतपत् ते पञ्चजना न समजानत"–इति। एतेन विज्ञायते द्युपर्यायः सूर्य एवात्र वृष्टिहेतुस्तापहेतुश्चेति। 'पञ्चजना.' ब्राह्मणक्षत्रियवैश्या इति त्रिविधा आर्याः, दस्युदासाविति द्विविधावनार्याविति च पञ्चविधा मनुष्याः। तादृगविवाहस्य पुरोहिताः 'देवाः' रश्मय एवेमे इत्याह— "तौ देवाः समनयंस्तौ संयन्तावेतं देवविवाहं व्यवहेताम्"–इति। कार्य्योऽग्य एव। तत्रेयं विवाहितयोस्तयोः स्त्रीपुरुषयोर्मिथः प्रीतिहेतुं निगमयति—"धूमेनैवेय ममूं जिन्वति, वृष्ट्यासाविमाम्"–इति ४. ४. १। 'धूमेन' रसहेतुवाष्परूपेणेत्यर्थः। संहिताया मप्येव माम्नातम् (१. १६४. ५१.) —

"समान मेतदुदक मुच्चैत्यव चाहभिः।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः" इति

'अहभिः' रश्मिभिः आकृष्टम् 'एतत् उदकम्' 'उदेति'

ऊर्द्धं मागच्छति, 'अव च' नीचैरपि आगच्छतीत्येव । अत एव 'पर्जन्याः' मेघाः 'भूमिं' 'जिन्वन्ति' प्रीणयन्ति, 'अग्नयः' अग्निजन्यानि धूमोद्गतवाष्पाणि 'दिवं जिन्वन्ति' । अस्मादेव हेतोरुदकस्य ह्रासहानिराहित्यं चिरं तुल्य मित्याह 'समानम्'-इति । अन्ययोदकस्योर्द्धगमनाभावे क्रमादतिहानिरेव स्यात्, तथा नीचैरागमनाभावे अस्मरा क्रमात् समुद्रोऽपि शुष्येदिति वृष्टिनिदानविज्ञान मुदकसमत्वविज्ञानञ्च । एतयोः प्रतिष्ठारूपत्व माम्नातं यथा— "द्यावापृथिवी वै प्रतिष्ठे; इय मेवेह प्रतिष्ठा असावमुत्र"-इति ३. २. ५ । 'इह' भूलोके, 'इयम्' पृथिवी 'प्रतिष्ठा' प्रतिष्ठानम्, 'अमुत्र' द्युलोके 'असौ' सूर्यः, प्रतिष्ठेत्येव तदर्थः । इत्थं द्युलोकभूलोकयोरुभयोरेवाश्रयप्रतिष्ठाहेतुत्वं च विज्ञापितम् ।

अथ पृथिवीभ्रमणविज्ञानम्, सूर्योदयास्तमयविज्ञानम्, अहोरात्रविज्ञानञ्च यथा— "स वा एष न कदाचनास्त मेति नोदेति । तं यदस्त मेतीति मन्यन्ते, अह्न एव तदन्त मित्वाथात्मानं विपर्यस्यते; रात्री मेवावस्तात् कुरुतेऽहः परस्तात् । अथ यदेनं प्रातरुदेतीति मन्यन्ते, रात्रेरेव तदन्त मित्वाथात्मानं विपर्यस्यते; अहरेवावस्तात् कुरुते रात्रीं परस्तात् । स वा एष न कदाचन निम्रोचति, न ह वै कदाचन निम्रोचति"-इति ३. ४. ६ । तदेतस्मादाम्नायात् सूर्यकर्त्तृकं पृथिव्या भ्रामणादिकं विस्पष्ट मवगम्यते । एव मेवान्यत्रापि श्रूयते । तद्यथाथर्वणिकानां गोपथे— "एतत् सुगस्ततर मिव भवति,— स वा एष न कदाचनास्त मयति, नोदयति । तद्यदेनं पश्चादस्त मयतीति मन्यन्ते, अह्न एव तदन्तं गत्वाथात्मानं विपर्यस्यते; अहरेवावस्तात् कुरुते

रात्रीं परस्तात्। स वा एष न कदाचनास्तमयति, नोदयति। तद्यदेनं पुरस्तादुदयतीति मन्यन्ते, रात्रेरेव तदन्तं गत्वाथात्मानं विपर्यस्यते ; रात्रिमेवाधस्तात् कुरुते, अहः परस्तात्। स वा एष न कदाचनास्तमयति, नोदयति ; न ह वै कदाचन निम्लोचति" –इति (३. ४. १०.)। छान्दोग्येऽपि ब्राह्मणे एवमेव सूर्यस्योदयास्तमयाभाव आम्नातः, विशेषतोऽस्तङ्गतस्य 'तस्य मध्यस्थत्वं गतिराहित्यमपि। तथाहि— "नैवोदेता नास्तमेता, एकल एव मध्ये स्थाता। तदेष श्लोकः—

'न वै तत्र निम्लोचति नोदियाय कदाचन।

देवास्तेनाहं सत्येन मा विराधिषि ब्रह्मणा'–इति।

न ह वा अस्मा उदेति, निम्लोचति"–इति (५. ११. १–३.)।

अत्र स्थातेति पदं गतिनिवृत्त्यर्थस्य स्थाधातोरिति सूर्यस्यामुष्य गत्यभावः सुबोधितः। अध्यात्मपक्षेऽप्येषा श्रुतिर्भवति व्याख्येया।

अथ दैवताविज्ञानं यथा— "परोक्षप्रिया इव हि देवाः"–इति ३. २. ८। "न वै देवा अन्योऽन्यस्य गृहे वसन्ति, नर्तुर्ऋतोर्गृहे वसतीत्याहुः"–इति ५. २. ४। "सत्यसंहिता वै देवाः"–इति १. १. ६। व्याख्यातव्याश्चेमाः श्रुतयः सप्तमे प्रकरणे।

अथ सूर्यविज्ञानं यथा— "तेषु हि वा एष एतदध्याहितस्तपति"–इति ४. २. ४। 'तेषु' पूर्वोक्तेषु षट्सु लोकेषु 'अधि' मध्ये 'आहितः' परमेश्वरेण स्थापितः 'एषः' सूर्यः 'एतत्' सर्वं जगत् 'तपति' इत्यर्थः। तदेव मेषां पृथिव्यादिस्वर्गपरान्तानां सर्वेषामेव लोकानां मध्यस्थित एव सूर्यः, सर्वेषामेषां तापकश्चेति विज्ञायते। चन्द्रस्य पृथिव्युपग्रहत्वेन न पृथिवीतः पार्थक्य मिष्टि मत एव षण्णां लोकानां वा षट्त्व मव्याहतम्। सर्वेषाञ्च

लोकानां शिरसा सुपर्य्येव दृश्यते सूर्य इत्यतस्तस्य सर्वत उत्तरत्व मपि विज्ञायते। तद्यथा— "स वा एष उत्तरो ऽस्मात् सर्वस्माद् भूताद् भविष्यतः, सर्वं मेवेद मतिरोचते यदिदं किञ्च"–इति ४. ३. ४। "उत्तरः—उद्गततरो भवति"–इति यास्कः (निरु० २. ३. २.)। "विश्वस्मादिन्द्र उत्तरः"–इति त्वसकृत् समाम्नातं दाशतय्या मपि (१०. ८६, १–२३.)। इन्द्रस्तु तत्र सर्वत्रैव सूर्यः। सूर्यकर्त्तृकं पृथिव्या धारणं तु ऋचि यजुषि च 'दाधर्थ पृथिवी मभितो मयूखैः (७. ९९. ३; ५. १६.)"–इत्यादिभिर्मन्त्रैराम्नात मेव। 'अमतिः (निघ० ४९)'–इतिपदनिर्वचनप्रसङ्गे (६. ३. ३.) यास्केन ह्येष निगमः प्रदर्शितः—

"अभि त्यं देवए सवितार मोण्योः कविक्रतु
मर्चामि सत्यसवए रत्नधा मभि प्रियं मतिम्।
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि
हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः।"

—इति सा० सं० छ० आ० ५, २. २. ८;— य० वा० सं० ५. २५. १, २;— तै० सं० १. २. ६. २;— अथ० सं० १४. १, २।

'अमतिशब्देनात्मप्रकाशगत मादित्यस्य विज्ञान मुच्यते; स हि प्रथाग्यसतत्त्व एव नान्यप्रकाशान्तर मपेक्षत इत्युपपत्तिः'–इति तत्र दुर्गाचार्यः। सूर्यस्य तापहेतुत्वेन जीवनहेतुत्वञ्चान्यत्र श्रुतम्— "प्राणं तदादित्येन समिन्धे, तस्मादय मुष्णः प्राणः ;०—० सर्वं तदात्मान मादित्येन समिन्धे, तस्मादयं सर्व एवात्मोष्णः। तद्वैतदेव जीविष्यतश्च मरिष्यतश्च विज्ञानम्— उष्ण एव जीविष्यञ्छीतो मरिष्यन्निति"–इति श० ब्रा० ८. ७. ३. ११। 'घृणीनो', 'उदु त्यं', 'चित्र'–इत्येवमादीनि सौरसूक्तान्यपीहानोच्यानि।

अथ चन्द्रविज्ञानं यथा— "एतद्वै देवसोमं यच्चन्द्रमाः"—इति ७. २. १० । देवेन सूर्येण, देवैः सूर्यरश्मिभिर्वा पेयः सोमो देवसोमः । 'योऽयं चन्द्रमा अस्ति, एतदेव 'सोमं' देवाना मपेचितं सोमद्रव्यसदृशं वस्तु'-इत्यर्थः कृतोऽत्र सायणाचार्येण । "एकया प्रतिधा पिबत् साकं सरांसि त्रिंशतम् । इन्द्रः सोमस्य काणुका (ऋ० स० ८. ७७. ४.)"-इतिमन्त्रस्य व्याख्यानाय प्रोक्त मेतद् यास्कमुनिना— "एकेन प्रतिधानेन पिबन्ति तान्यत्र सरांस्युच्यन्ते त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत् पूर्वपक्षस्येति नैरुक्ताः, तथा एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति, रश्मयस्ता अपरपक्षे पिबन्ति"—इति (५. २. ६.) । "य मक्षिति मक्षितयः पिबन्ति"—इत्यपि तत्रैव निगमः । तं पूर्वपक्षे आप्याययन्तीति च प्रमाणितं तत्र "यथा देवा अंशु माप्याययन्ति"—इतीतिनिगमप्रदर्शनेन । निगमावेतौ तैत्तिरीयसंहितायाम् (२. ४. १४. २.), अथर्वसंहितायां (७. ७. ३. ११.) च पाठभेदतः समाम्नातौ ; तत्रत्यस्त्वमाम्नवेदीयावेव विलुप्तयाखीयावित्यस्माकम् । अन्यत्र चोक्तम् — "सोऽस्यान्नेन न क्षियते, य मक्षिति मक्षितयः पिबन्ति"—इति (निरु० ३, भा० ३८८पृ०) । 'यम्' 'अक्षितिं' सोमम् 'अक्षितयः' रश्मयः 'पिबन्ति', 'सः' सोमः 'अस्य' सूर्यस्य 'अन्नम्' भक्ष्यम्, 'तेन' अन्नेन 'न क्षियते' नोपचीयते, सूर्य इति तदर्थः । शत पथेऽपि — "सोमो राजा देवाना मन्नं यच्चन्द्रमाः"—इति (२. ३. ४. ७.) । तैत्तिरीयब्राह्मणे च— "सोमो वै चन्द्रमा एष ह वै साक्षात् सोमं भचयन्ति"—इति (३. ४. १०) । "अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते, तदेतेनोपेक्षितव्यम्, आदित्यतोऽस्य दीप्तिर्भवतीति"-इति च निरु० २. ६. २ । "अत्रा ह गोरमन्वत

नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे"-इति (ऋ० सं० १, ८४, १५,) मन्त्रवर्णात मानम्। अत एव गां सुषुम्णनामसूर्यरश्मिं धारयतीति गन्धर्वश्चन्द्रमा उच्यते। तत एवोक्तमिदं यास्केन— "सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः (वा० सं० १८, ४०,) इत्यपि निगमो भवति ; सोऽपि गौरुच्यते"-इति २, २, २। अत्र चन्द्रमसि यः कलङ्को दृश्यते, स खलु देवयजनस्यास्य कर्मभूमेर्मर्त्यलोकस्य छायायाससम्भूत इति चाम्नात मैतरेयेण— "एतद्वा इय मनुष्यां देवयजन मदधाद् यदेतच्चन्द्रमसि कृष्ण मिव"-इति ४, ४, ५।

अथ वायुविज्ञानं यथा— "वायुः प्राणः"-इति ३, १, ९, "सवितृप्रसूतो ह्येष एतत् पवते"-इति १, २, १, "वायुर्वै यन्ता, वायुना हीदं यत मन्तरिक्षं न समृच्छति"-इति च २, ५, ८। वायोः सवितृप्रसूतत्वे पुरस्ताद् व्याख्यातः (५ पृ०) "इषे त्वोर्जे त्वा"-इति निगमश्च द्रष्टव्यः।

अथाग्निविज्ञानं यथा— "अग्निर्वै देवाना मवमः"-इति १, १, १। "अग्निर्वै परिश्रिदग्निर्हीमाः प्रजाः परिश्रेति, अग्निं हीमाः प्रजाः परिश्रियन्ति"-इति ६, ५, ६। अत्रैव 'पारिश्रितीः शंसति' -इति तिसृणा मृचां शंसनं विहितम्; ताः सर्वा एवर्चोऽग्नि-विज्ञानपराः। "अग्नेर्वा एतास्तन्वो यदेता देवताः (३, १, ४,)" -इत्यादिग्रन्थश्चाग्निविज्ञानपर एव। "अग्निर्वै धर्माणि प्रचाद्यानि यच्छति, अग्नि मेव तत् कल्पयति, अग्नि मप्येति"-इति २, ५, ८, "आग्नेय्यो ह्योषधयः (१, २, १,)"-इत्येवमादयश्चेहालोच्याः।

अथाब्विज्ञानं यथा— "अद्भिरभिषिञ्चन्ति ; रेतो वा आपः, सरेतस मेवैनं तत् कृत्वा दीक्षयन्ति"-इति (१, १, ३,), "अमृतं वा एतदस्मिंल्लोके यदापः"-इति (८, ४, ६,), "आपो वरुणस्य

यत्नय आसन्, ता अग्नि मभ्यध्यायन्, ताः समभवन्, तस्य रेतः परापतत्, तद्धिरण्य मभवत्"–इत्यादि चान्यत्र (तै० ब्रा० १. १. ३. ८.)। श्रुता चैषा ऋक् संहितायाम् (१. २३. २०.) –

"अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा।

अग्निञ्च विश्वशम्भुव मापश्च विश्वभेषजीः"–इति।

इती ज्ञायते सोमाग्निभागसम्मिलनेन जातं जल मिति। तथा तैत्तिरीयारण्यकेऽपि—"आपो ज्योतिरसोऽमृतम्"-इति (१०. २७)। इतश्चावगम्यते,— अप्सु ज्योतिर्भागो रसभागश्चेत्युभौ विद्येते, अमृतत्वञ्चास्तीति। यद्युच्येत, पाश्चात्यविज्ञानत एवैवं लभ्यते, तदेतदिह तद्दृष्ट्वैव कल्प्यत इति; अत्र ब्रूमः,— इत्थ मेव भवति सर्वत्र सर्वविधान्तर्हितवस्तूना मुपलम्भः;— कालप्रभावतो भूगर्भेऽन्तर्हितानां हर्म्यवर्मीकरिकारपञ्जरमुद्रादीनां लाभोऽन्वेषण मेवानुसन्धानतो भवति; न हि तथा लब्धान् पदार्थान् अपाकर्त्तुं कोऽपि शक्नोति; तथैव आदिविज्ञानानि यानि तमः-कालप्रभावादितो ऽनुपलब्धिहृतानि क्रमात् तेषां सर्वेषा मेकस्य वा कस्य चित् कथ मपि सन्धान माप्य यदि कश्चित्तदाविष्कारे मनो निवेशयेत्, स श्रुतकल्पनाकृदिति कथ मग्राह्यवचनो भवेदिति। तद्यथा, भ्राम्यमानेऽस्मिन्नत्यवनतिकरे कालचक्रे यथ या पाश्चात्यविज्ञानप्रभावजा विद्युत्क्रिया दृश्यते, आयास्यति हि तमःकाले सेषा भविष्यत्येवान्तर्हिता; पुनः प्रकाशकाले समुपस्थिते कश्चित् कथ मप्येतदनुसन्धान मुपगम्यास्याविष्कारं कर्त्तुं मैषिष्यति चेत्, स किं कल्पनाकृदिति वाच्यो भविष्यतीति ते पाश्चात्यविज्ञानविद एव विचारयन्तु। "अप्सु ज्योतिः प्रतिष्ठितम्"-इति च स्पष्टम् (तै० आ० ८, ८,)। "अपां रसस्य यो

रथः"–( तै० सं० १. १२. २. )–इत्यादयश्च श्रुतयोऽत्रालोचनीयाः । अपाश्वपादिति ज्योतिर्नाम तन्निरुक्त्यादिकञ्च पर्यालोच्यम् ( निघ० ५. ४. ११ ; निरु० १०. २. ५, ६. ) । पुरातनाख्यो ज्योतिःप्रकाशो ऽप्यृक्संहितायां श्रुतः । तद्यथा— "आदित् प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम् । परो यदिध्यते दिवि"–इति ८. ६. ३० ।

विष्णुविज्ञानं यथा— "विष्णुः परमः"–इति १. १. १ । विष्णोस्त्रिविक्रमणादिकं च स्पष्ट माम्नातं शतपथे— १. ९. ३. ७–१२ । इदं विष्णुर्विचक्रमे०—० व्यस्कभ्नाद्रोदसी । विष्णुरेते दाधार पृथिवी मभितो मयूखैः"–इति च तै० सं० १. २. १३. २ । स एष विष्णुः सूर्य एव । विष्णुविवरणन्त्विह पुनः सप्तमे प्रकरणे विशेषतो वर्णयितव्य मस्तीतीहालं पल्लवितेन ।

अथ गर्भादिविज्ञानं यथा— "पराञ्चो गर्भा धीयन्ते, पराञ्चः सम्भवन्ति ;०—० मध्ये गर्भा धृताः०—० अमुतोऽर्वाञ्चो गर्भाः प्रजायन्ते"–इति ( ३. १. १०. ) । "रेतस्तत् सिक्तं विकरोति ; भिन्तिर्वा अग्रेऽथ विकृतिः०—० रेतसाद् विकृतं प्रजनयति ; विकृतिर्वा अग्रेऽथ जातिः"–इति ( २. ५. ७. ) । "न्यूने वै रेतः सिक्तं मध्यं स्त्रियै प्राप्य स्थविष्ठं भवति"–इति ( ६. ३. १. ) । "यथा गर्भो योन्या मन्तरेवं सम्भवञ्छेते, न वै सकृदेवाग्रे सर्वः सम्भवति, एकैकं वा अङ्गं सम्भवतः सम्भवति"–इति ( ६. ५. ५. ) । षड्विधो वै पुरुषः षडङ्ग आत्मान मेव तत् षड्विधं षडङ्गं विकरोति" –इति ( २. ५. ७. ) । "चक्षुः पुरुषस्य प्रथमं सम्भवतः सम्भवति" –इति ( ३. १. २. ) । "ज्यायान्सन् गर्भः कनीयांसं सन्तं योनिं न हिनस्ति"–इति ( ५. २. १० ) । "मुक्ता गर्भा जरायोर्जायन्ते०—० सहैवोल्वेन कुमारो जायते"–इति ( १. १. ३. ) ।

"मुष्टी वै कृत्वा गर्भोऽन्तः शेते, मुष्टी कृत्वा कुमारो जायते" –इति ( १. १. ३. )। "कुमारं जातं संवदन्ते प्रतिधारयति वै ग्रीवा यथो शिर इति"–इति ( २. १. २. )। "कुमारं जातं संवदन्त उप वै शुश्रूषते नि वै ध्यायतीति"–इति ( २. १. २. )। "कुमारो जातः पर्येव प्रचरति"–इति ( २. १. २. )। "कुमारं जातं जघन्या वागाविशति"–इति ( २. १. २. )। यथाप्यैतरेयारण्यके— "पुरुषे ह वा अयमादितो गर्भो भवति, यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्ति; तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति"–इति ( २. ५. १. )। अनेनान्ते मृतानां जन्तूनामातिवाहिकदेहधारणं पुनर्जन्मविज्ञानञ्चाम्नातम्– "यथास्याय मितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते"–इति। आतिवाहिकदेहधारणन्त्वन्यत्रापि सूचितम्— "तद्यथा तृणजलायुका तृणस्यान्तं गत्वात्मानमुपसंहरति"–इत्यादि श० ब्रा० १४. ७. २. ४ द्रष्टव्यम्।

अथ शारीरादिविज्ञानं यथा— "रेतः पुरुषस्य प्रथमं सम्भवत. सम्भवति"–इति ( २. १. २. )। "उष्णाः पुरुषस्य भूयांसः प्राणाः" –इति ( ६. २. ५. )। "प्राणास्तु इमेऽवाञ्चो रेतस्यो मूत्र्यः पुरीष्य इति"–इति, "प्राणो वा अयं सन् नाभेरिति, तस्मान्नाभिस्तन्नाभेर्नाभित्वम्, प्राणमेवास्मिंस्तद्दधाति"–इति ( १. ४. २. )। "पुरा नाभ्या अपि शसो वपा मुत्खिदात्"–इत्यादीनि वचनानि च ( २. १. ६. ) शारीरतत्त्वबोधकानि। "मुखतो वै प्रजा अन्नमदन्ति०—० मध्यतो वै प्रजा अन्नं धिनोति"–इति ( ५. १. ३. )। एकं सव-सुर्देधा"–इति ( २. ४. ८. )। "अन्तरमक्ष्णः कृष्णम्०—० यैव कनीनिका येन पश्यति"–इति, "अन्तरं कर्णस्य येनैव शृणोति"

–इति, "अन्तरं नासिकयोः येनैव गन्धान् विजानाति"–इति, "अन्तरं मुखस्य जिह्वा-तालु-दन्ताः०—०येनैव वाचं व्याकरोति, येन स्वादु चास्वादु च विजानाति"–इति च (५. ४. ३.)। "पाङ्क्तोऽयं पुरुषः पञ्चधा विहितो लोमानि त्वङ् मांसमस्थि मज्जा"–इति (२. २. ४.) "षड्विधो वै पुरुषः"–इत्यादि च (२. ५. ७.)।

अथ खाद्यविज्ञानं यथा— "अन्नं वा एतदस्मिंल्लोके यदापः"–इति (८. ४. ६.), "रेतो वा आपः"–इति (१. १. ३.), "आज्यं वै देवानां सुरभि, घृतं मनुष्याणाम्, आयुतं पितॄणां, नवनीतं गर्भाणाम्"–इति (१. १. ३.), "इन्द्रियं वा एतस्मिंल्लोके यद् दधि"–इति (८. ४. ६.), तेजो वा एतद् घृतम्" –इति (८. ४. ६.), "यद् घृतं तत् स्त्रियै [ स्त्रियाः ] पयो ये तण्डुलास्ते पुंसः"–इति (१. १. १.)। "रसो वा एष ओषधिवनस्पतिषु यन्मधु"–इति (८. ४. ६.), "स वा एष पशुरेवालभ्यते यत् पुरोडाशः"–इत्यादि च (२. १. ८.)। बिसाना मपि खाद्यत्वं तदासीत् प्रथमम्। तदिदं ५. ५. ५ द्रष्टव्यम्। 'बिसानि = पद्मसूलानि'–इति तद्भाष्ये सायणः। अस्मन्मतेतु मृणालानीति विशेषः। अन्यत्र पयोविकाराणां दशानां खाद्यानामपि नामान्याम्नातानि— "गोर्वै प्रतिधुक्, तस्यै शृतं, तस्यै शरः, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनं, तस्यै नवनीतं, तस्यै घृतं, तस्या आमिक्षा, तस्यै वाजिनम्"–इति श० ब्रा० ३. ३. ३।

अथ भेषजविज्ञानं यथा— "तेजो वा एतदक्ष्योर्यदाञ्जनम्"–इति १. १. ३। "ज्योतिर्वै शुक्रं हिरण्यं,०—०मृत्युर्वै तमश्छाया; तेनैव तज्ज्योतिषा मृत्युं तमश्छायां तरति"–इति ७. २. ११। औषधार्थं तत्प्रयोगविधिरप्यन्यत्राम्नातः— "हिरण्याद् घृतं निष्पिबति,

आयुर्वै घृत ममृतं हिरण्यम्, अमृतादेवायुर्निष्पिबति शतमानं भवति"–इति तै० सं० २. ३. ११. ८। अत्राह तत्सूत्रकारः– "खादिरं पात्रं चतुःस्रक्ति प्रयुनक्ति सौवर्णस्य प्रवर्त्तं शतमानस्य कृतम्"–इति, "ध्रुवां खादिरं सादयित्वा तस्मिन् प्रवर्त्त मवदधाति" –इति च तत्रैव। 'प्रवर्त्तः कर्णाभरणं कुण्डलम्'–इति, 'शतमानं पञ्चपलपरिमितम्'–इति, 'मानशब्दो गुञ्जावीजं ब्रूते'–इति च तत्रैव सा० भा०। ब्राह्मणस्य भैषज्यनिषेधोऽप्यन्यत्र– "ब्राह्मणेन भेषजं न कार्यम्; अपूतो ह्येषोऽमेध्यो यो भिषक्"–इति तै० सं० ६. ४. ८. २। भेषजकरणकाले ब्राह्मणस्य तत्रोपवेशनन्तु विहितम्– "उदपात्र मुपनिधाय, ब्राह्मणं दक्षिणतो निषाद्य भेषजं कुर्यात्"–इति च तत्रैव (४.)। भैषज्यस्य त्रिधात्व मपि विहितं तत्रैव– "अग्नौ तृतीयम्, अप्सु तृतीयम्, ब्राह्मणे तृतीयम्"–इति।

अथ कालविज्ञानम्– "उपस्यागताया मपय मिथैव प्रभात्युषसो रूपम्"–इति ४. २. ३। "तम इव हि रात्रिर्मृत्युरिव"–इति ४. १. ५। "द्वादशमासाः संवत्सरः"–इति १. १. १। "त्रयोदशो मासो नानुविद्यते"–इत्यादि १ १. १। "पञ्चर्त्तवो हेमन्तशिशिरयोः समासेन, तावान्संवत्सरः"–इति १. १. १। "पञ्च वा ऋतवः संवत्सरस्य, यद्यु षडेवर्त्तवः"–इति तु शतपथे ४. ५. ५. १२। "त्रयो वा ऋतवः संवत्सरस्य"–इति च तत्रैव १४. १. १. २८। "त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि" –इति २. २. ७, "सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः"–इति च २. २. ७।

अथ दिग्विज्ञानं यथा– "सवैव (आदित्येनैव) प्राचीं दिशं,

प्रजानाथाग्निना दक्षिणां सोमेन प्रतीचीं सवित्रोदीचीं मिति।
०—० पुर उदेति पश्चास्त मेति०—०, दक्षिणतोऽप ओषधयः
पच्यमाना आयन्त्याग्नेय्यो ह्योषधयः०—०, प्रतीच्यो ह्यापो बह्वाः
स्यन्दन्ते, सौम्या ह्यापः०—०, उत्तरतः पयादयं भूयिष्ठं पवमानः
पवते, सवितृप्रसूतो ह्येष एतत् पवते"–इति १. २. १।

अथ देशप्रकृतिविज्ञानं यथा— "उत्तरतः पयादयं भूयिष्ठं
पवमानः पवते"–इति, दक्षिणतोऽप ओषधयः पच्यमाना आयन्ति"
–इति, "प्रतीच्योऽह्यापो बह्वाः स्यन्दन्ते"–इति च १. २. १।
प्रत्यञ्चि दीर्घारण्यानि भवन्ति"–इति ३. ४. ६। प्राच्यो ग्रामता
बहुलाविष्टा"–इति ३. ४. ६.। प्राच्यां वै दिशि देवाः सोमं
राजान मक्रीणन्"–इति च १. ३. १।

अथ शिल्पविज्ञानं यथा— "देवशिल्पान्येतेषां वै शिल्पाना
मनुकृती ह शिल्प मधिगम्यते,— हस्ती कंसो हिरण्य मश्वतरी-
रथः शिल्प मिति"–इति १. ३. ५, २. १. २। अथान्यत्रापि—
"यद्वै प्रतिरूपं तच्छिल्पम्"–इति (शत० ब्रा० ३. २. १. ५.),
"एतच्छिल्प मेव वर्ण."–इत्यादि च तत्रैव (१. १. ४. १.)।
तैत्तिरीयब्राह्मणाम्नातमन्त्रयोस्त्वन्यविध मपि (२. ७. १५, २, १.
३. २, १.) "दिवः शिल्प मवततम्"–इत्यादि, "येभिः शिल्पैः
पप्रथाना मदृंहत्"–इत्यादि चेति।

अथ शब्दार्थविज्ञानं यथा— "यद्वै देवाना नेति तदेषा मो
म्"–इति ६. ५. १। शतपथेऽप्येवम्— "यद्वै नेत्यृचि, ओ मिति
तत्"–इति १. १. १. २०। एतदुदाहरणं मैवेद मस्यते—
"गौतम! क त्वं वैश्वानरं वेत्थ? इति, पृथिवी मेव राजन्निति
होवाच, ओम् इति होवाच"–इति १०. ६. १. ४। पुनस्तत्रैव

तत उत्तरं देवसङ्ख्यानिर्णयप्रसङ्गे— ११. ६. ३. ४। "ओ३मित्यृचः प्रतिगर एवं तथेति गाथायाः; ओ मिति वै देवं तथेति मानुषम्"—इति चैतरेये (७. ३. ६.)। "तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति, तानेकधा समभरत्, तदेतदो मिति"—इति, "ओ मिति वै स्वर्गो लोकः, ओ मित्यसौ, योऽसौ तपति"—इति, "ओ मिति प्रणौति"—इति चात्रैव (५. ५. ७.)। "ये वा अनूचानास्ते कवयः"—इति २. १. २, "ये वै ते न ऋषयः पूर्वे प्रेतास्ते वै कवयस्तानेव तदभ्यतिवदति"—इति च ६. ४. ४। "विश्वस्य ह वै मित्रं विश्वामित्र आस"—इति ६. ४. ४। "हिरण्यकशिपावासीन आचष्टे, हिरण्यकशिपावासीनः प्रतिगृह्णाति; यशो वै हिरण्यम्"—इति च ७. ३. ६। शतपथ-तैत्तिरीययोस्त्वितोऽधिकतरं शब्दार्थविज्ञानं द्रष्टव्यम्।

इहोदाहृतेभ्योऽन्यान्यपि बह्वयाचारव्यवहारविज्ञानवचनानीचोपलभ्यन्ते, तानि चालोचनयोग्यानीत्यकथित मपि सिद्धम्॥

---

(६)

अथैतद् विचार्यं मस्ति, कस्याः शाखाया इद मैतरेयकं ब्राह्मण मिति। तत्रादौ शाखापदार्थो निरूपणीयः, ततः कति शाखा ऋग्वेदस्य ?, कियामिका चाद्य प्रचलितैव मिति निर्णेतव्यम्, तत्रैव लुप्तालुप्तविचारणा चेति।

अस्ति बहुषु पुराणेषु शाखाकथा वर्णिता, तत्र च विष्णुभागवतयोर्विशेषेण। तद्यथा ऋक्शाखानिर्णयप्रसङ्गे—

"बिभेद प्रथमं विप्र पैल ऋग्वेदपादपम् ।
इन्द्रप्रमतये प्रादात् वाष्कलाय च संहिते ॥
चतुर्धा स बिभेदाथ वाष्कलिर्निजसंहिताम् ।
बोध्यादिभ्यो ददौ ताश्च शिष्येभ्यः स महामुनिः ॥
बोध्याग्निमाठरौ तद्वद् याज्ञवल्क्यपराशरौ ।
प्रतिशाखास्तु शाखायास्तस्यास्ते जगृहुर्मुने ॥
इन्द्रप्रमतिरेकां तु संहितां स्वसुतं ततः ।
माण्डुकेयं महात्मानं मैत्रेयाध्यापयत् तदा ॥
तस्य शिष्यप्रशिष्येभ्यः पुत्रशिष्यान् क्रमाद् ययौ ।
वेदमित्रस्तु शाकल्यः संहितां तामधीतवान् ॥
चकार संहिताः पञ्च शिष्येभ्यः प्रददौ च ताः ।
तस्य शिष्यास्तु ये पञ्च तेषां नामानि वै शृणु ॥
मुद्गलो गालवश्चैव वात्स्यः शालीय एव च ।
शिशिरः पञ्चमश्चासीत् मैत्रेय सुमहामुनिः ॥
संहितात्रितयं चक्रे शाकपूणिरथेतरम् ।
निरुक्तमकरोत् तद्वत् बलाकश्च महामतिः ॥
निरुक्तकृच्चतुर्थोऽभूद् वेदवेदाङ्गपारगः ।
इत्येताः प्रतिशाखाभ्योऽप्यनुशाखा द्विजोत्तम ॥
वाष्कलिश्चापरास्तिस्रः संहिताः कृतवान् द्विज ।
शिष्यः कालायनिर्गार्ग्यस्तृतीयश्च कथाजवः ।
इत्येते बह्वृचाः प्रोक्ताः संहिता यैः प्रकीर्त्तिताः ॥"

—इति वि॰ पु॰ ३. ४. १६-२५ ।

अथ भागवते १ स्क॰ ४ अ॰ २३ श्लो॰—

"त एत ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा ।

शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन् ॥"—इति ।
पुनस्तत्रैवान्यत्र ऋक्शाखावर्णनप्रसङ्गे १२ स्क० ६ अ०—
"पैलः स्वसंहिता मूचे इन्द्रप्रमितये मुनिः ।
वाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥
चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ।
पराशरायाग्निमाठरायेन्द्रप्रमतिरात्मवान् ॥
अध्यापयत् संहितां स्वां माण्डुकेयं ऋषिं कविम् ।
तच्छिष्यो देवमित्रश्च सौभार्यादिभ्य ऊचिवान् ॥
शाकल्यस्तत्सुतः स्वां तु पञ्चधा व्यस्य संहिताम् ।
वात्स्यमुद्गलशालीयगोखल्यशिशिरेष्वधात् ॥
जातूकर्णश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् ।
बालाकपैङ्गवैतालविरजेभ्यो ददौ मुनिः ॥
वाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् ।
चक्रे वालायनिर्भज्यः कासारश्चैव तां दधौ ॥
बह्वृचाः संहिता ह्येता एतैर्ब्रह्मर्षिभिर्धृताः ।
श्रुत्वैवं छन्दसां व्यासं सर्वपापैः प्रमुच्यते ॥"—इति ।

इत्थं तु गम्यते वेदांशा इति, शाखा इति चाभिन्नार्थे पदे । एवं हि यथा भागवतोऽयं द्वादशभिः स्कन्धैर्विभक्तः, पुनस्तत्स्कन्धाश्च बहुभिरध्यायैर्विभक्ताः, तथैव एको वेदः प्रथमं चतुर्धा विभक्तः, पुनस्ते चत्वारो भागाश्च बहुधा विभक्ताः ; स एकैको भागभागः शाखेति व्यपदिश्यत इति । तथा च यथा भागवतीय-प्रत्यध्यायस्य पाठो भिन्नो विषयश्च विभिन्न एव, एवं प्रतिशाखं मन्त्रादयोऽपि भिन्न उपदेशाश्च विभिन्ना एव ; किञ्च यथा भागवतस्य यस्मिन्नप्येकस्मिन्नध्यायेऽधीते न त्वेकस्यापि स्कन्धस्याध्ययनं सम्पद्यते,

तथैव कस्या मप्येकस्यां शाखाया मधीतायां नैवैकस्य वेदस्याध्ययनं भवेत् सम्पाद्य मिति। आह चेतत् समासतः कूर्मपुराणे—

"एकविंशतिभेदेन ऋग्वेदं कृतवान् पुरा।
शाखानान्तु शतेनाथ यजुर्वेद मथाकरोत्।
सामवेदं सहस्रेण शाखानाञ्च विभेदतः।
अथर्वाण मथो वेदं बिभेद नवकेन तु।
भेदैरष्टादशैर्व्यासः पुराणं कृतवान् प्रभुः"—इति १. ५१।

एवञ्च यथा पुराणानि एकव्यक्तिकृतानि अष्टादशसङ्ख्याकानि, तथैव वेदशाखाः सर्वा अप्येकव्यक्तिनैव वेदानां खण्डखण्डीकरणेन सम्पादिता मिथः पार्थक्य मापन्ना इत्येवाभिमतं तेषाम्। अत एवोक्तं वाच तर्कवाचस्पतिना स्वकृते वाचस्पत्ये— "शाखा वेदैकदेशे"—इति, "चरणो वेदैकदेशे शाखापरपर्याये; 'गोत्र' च चरणैः सह' महाभाष्य-का०"—इति च। वाक्-विश्वकोषकारादयोऽप्येतच्चरणानुचरा एव। तथाच वेदपरिच्छेदविशेषो वेदांशः शाखापदार्थो निष्पद्यते, बहूना मनधिगतवेदानां तत्त्वतो ब्रह्मबन्धूना मेव मेव विश्वासश्च।

तदेव पुराणवर्णितं शाखाविभागमतं प्रेक्षावतां वेदविदुषां स्यादुपेक्षणीयम्; आप्तवचनानुमानप्रत्यक्षतस्तथाप्रतीतेः।

तथाहि— आम्नात मिदं कौषीतक्यारण्यके वंशब्राह्मणे— "अथ वंशो नमो ब्रह्मणे नम आचार्येभ्यो०—० गुणाख्याच्छाङ्खायनादस्माभिरधीतं, गुणाख्यः शाङ्खायनः कहोलात्"—इत्यादि (१४ अ०)। एतस्यैव कहोलशिष्य-शाङ्खायनस्याध्ययनभेदादितः सञ्जाता शाङ्खायनी शाखा; सेय मृक्शाखातीव प्रसिद्धा। अहो। अस्या नामापि न श्रुतं विष्णुभागवतपुराणयोरिति

स्फुट मिह्नाप्रवचनानैक्यम् । यच्चोक्तं कौर्मे वैयासिक्य एव सर्वाः शाखा इति, तदप्येतत्तदाप्तवचनविरुद्धम् ।

अपरथाप्याप्तवचनविरोध उपलभ्यते यथा— अस्ति शौनकीया अनुवाकानुक्रमणी, तत्र शाकलबाष्कलशाखयोः प्रथममण्डलगत-क्रमपार्थक्यप्रदर्शनायोक्तम्—

"गौतमादौशिजः कुत्सः परुच्छेपाद्दिवः परः ।

कुत्साद् दीर्घतमा इत्येष तु बाष्कलकः क्रमः"–इति (२१.)।

"अथ बाष्कलकेऽस्य विशेष माध्यमखण्डे आह,— उपप्रयन्तो नासत्याभ्याम् अग्निं होतारम् इमं स्तोमं वेदिषद इति बाष्कलकः क्रमः; उपप्रयन्त इमं स्तोमं नासत्याभ्याम् अग्निं होतारं वेदिषद इति शाकलकः क्रम इत्यर्थः । अथैव सुक्तेरुत्तरमण्डलनवके न क्रम-विपर्यासः"–इति तट्टीका षड्गुरुशिष्यकृता । एवं हि शाकलबाष्क-लयोः क्वचित् क्वचिन्मन्त्रपाठक्रमान्यत्वेऽपि ग्रन्थैकत्वं सुव्यक्तम् ।

किं बहुना, महामुनिवेदव्यासप्रणीत इति यः प्रसिद्धचरण-व्यूहाख्यः खल्वो ग्रन्थः, तत्राप्युक्तम्— "तेषा मध्यायाश्चतुष्षष्टिः"–इत्यादि शाखापरिच्छेदादीना मैकविधम्; 'तेषा माश्वलायनादि-शाखानां समानाध्ययनं सूचयति'–इति हि तद्व्याख्यानम् । तदेवं ब्रह्मविष्ण्वादिपुराणानां शाखाभेदप्रकरणं मांप्तवचनानैक्यविरोधा-दितो जलमध्यस्थमसिचोदवत् विलीयत इति सुतरा मभ्युपेयम् ।

सन्ति च प्रदर्शितपौराणिकमतविरोधप्रमापकानि स्मृतिवच-नानि । तद्यथा— "वेदः कृत्स्नोऽधिगन्तव्यः"-इत्यस्ति (२. १६५.) मनुशासनम्; तदिदं कृत्स्नाध्ययनं तत्रये सहस्रशाखसामवेदिना मेकस्मिन्नायुषि कथङ्कारं भवेत् सम्भाव्यम् ? विहितञ्च तद-ध्ययनं द्वादशस्वेवाब्देषु तत्रैव— "षट्त्रिंशदाब्दिकं चर्यं गुरौस्त्रै-

वैदिकं व्रतम्"–इति ( ३- १. )। विष्णुगौतमयाज्ञवल्क्यसंहितास्वपि प्रतिवेदं द्वादशाब्दं ब्रह्मचर्यं विहितम्। "वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्। अविप्लुतब्रह्मचर्यो गृहस्थाश्रम माविशेत्" –इत्येवमादीनि वचनानि च (म० ३.२.) द्रष्टव्यानि। तस्मात् पौराणिकः शाखाभेदो मन्वादिमतविरुद्ध इत्यनुमानञ्च नासङ्गतम्।

अथापि संशयश्चेत्, कस्याश्चैकस्य वेदस्य कतमयोरपि द्वयोः शाखयोराद्यन्तपाठदर्शनादेव स विलेयः, विलीयेत च तदा 'वेदांशाः शाखाः' इति पौराणिकं मतं सूर्योदये यथान्धकारम्; प्रत्यक्षदृश्यं ह्येतत्।

वस्तुतोऽतिप्राचीनकाले लिपेरभावात् लिखितपाठकस्य निन्दाश्रवणाद्वा वेदानां लिखितपाठ्यत्वाभावादासीदानुश्रविकत्वम्; ततः कालभेददेशभेदव्यक्तिभेदादिभिरध्ययनक्रमोच्चारणादिभेदात् क्रमभेदाः पाठभेदाश्च सम्भवाः, तत एवैकैकस्य वेदस्य बहुनामतो बह्व्यः संहिताः प्रसिद्धिङ्गताः, तासु मन्त्रपाठन्यूनातिरिक्तता च किञ्चित् सञ्जाता; आचार्याणां प्रकृतिवैषम्यात् तत्तद्देशकालाद्यनुरोधाच्च अनुष्ठेयभेदाः प्रयोगभेदाश्चाभवन्ननिवार्याः; तत एव ब्राह्मणबाहुल्यं कल्पबाहुल्यञ्च सुतरां सम्पन्नम्। इद मेव शाखाभेदनिदानम्। तदित्थ मेकैकस्य वेदस्य बहुशाखत्वेऽपि एकैकस्याः शाखाया अध्ययनत एव भवेदधीत एवैकैको वेदः; सर्वास्वेव शाखासु मूलसंहितैक्यदर्शनात्; किञ्चित्पाठन्यूनातिरिक्तेन, किञ्चित्पाठक्रमोच्चारणभेदेन, किञ्चिदनुष्ठानपद्धतिभेदादिना च न ह्येवाभवत् वास्तविकः संहिताभेदः।

अतोऽत्र खेव मेवावधार्यम्— एष किल वेदशाखाभेदो न' ह्मेकर्तृकः, न च ब्रह्मविष्णुपुराणादियन्मभेदवत्, नापि प्रथमाद्य-

ध्यायभेदतुल्यः ; प्रत्युत भिन्नकालदेशव्यक्तिलिखितानां मेकग्रन्थीयानां बहुतराद्यपुस्तकानां मवश्यम्भाविन एव पाठभेदादिभावाः, तथाभूतपाठभेदादिहेतुक एवेति । एवमपि यजुषः कतिपयशाखाभिः कतिपयशाखानां महानस्ति प्रभेदः, अत एव तयोर्द्विविधयोः शाखासमूहयोः शुक्लकृष्णत्वेऽसंमत प्राचीनाः । तथा च माध्यन्दिनादीनां यजुःशाखानां शुक्लयजुरिति समाख्या, तैत्तिरीयादीनान्तु कृष्णयजुरिति । ईदृशासदृशभेदकारणन्तु वक्ष्यतिवेद्य मित्यलमिह प्रसङ्गकीर्त्तनाडम्बरेणेति ।

तत्त्वतो न हि वेदशाखा, द्रुमशाखेव ; नापि नदीशाखेव ; प्रत्युताध्येतृभेदात् सम्प्रदायभेदजन्याध्ययनविशेषरूपेव ; अत एव मिथःशाखापरम्परेति वचनमद्यापीह भारते प्रसिद्धम् । चरणशब्दोऽपीह न तु पादार्थत्वमूलको भागार्थः, अपि त्वाचरणार्थः ; सन्ति हि शाखास्वनुष्ठानाचरणभेदा इति शाखावचनः । तदुक्तं "गोत्रञ्च चरणैः सह"–इत्यस्य ( पा० सू० ६. १. ६३. ) व्याख्याने कैयटेन— 'चरणशब्दोऽध्ययनवचनः इह तूपचारादध्येतृषु वर्त्तते' –इति । 'शाखाध्येतृवाची च जातिकार्यं लभते । कठी, बह्वृची' –इति च तत्त्ववीयसिद्धान्तकौमुदी । 'चरणः शाखाध्येता०—० कठेन प्रोक्त मधीयाना या कठी'–इत्येव तद्व्याख्या तत्त्वबोधिनी । "अनुवादे चरणानाम् ( पा० सू० २. ४. ३. )"–इत्यस्य व्याख्यायां नागेशोऽप्याह— 'चरणशब्दोऽत्र शाखाध्येतृपरः'–इति । 'शाखाध्येतृवाचिना मित्यर्थः'–इति च तत्त्वबोधिनी । "चरणे ब्रह्मचारिणि"–इत्यस्य ( पा० सू० ६. ३. ८६. ) व्याख्याने व्यक्तमाह दीक्षितः — "चरणः = शाखा"–इति । 'तस्य समानत्वं वेदस्य व्रतस्य वा समानत्वात्, तस्य तत्तत्र अध्येतृभेदात् वेदभेदं प्रत-

भेदश्च परिकल्प्य बोध्यन्ते'–इति च तत्र शेखरः। "चरणाद्धर्मा-म्नाययोः"–इत्यस्य ( पा० सू० ४. ३. १२०. वा० ११. ) व्याख्यायां "कठानां धर्म आम्नायो वा काठकम्, पैप्पलादक मिति"–इत्याह पतञ्जलिः। 'आम्नायः सम्प्रदायः'–इति च तत्र नागेशः।

*एवं हि 'चरण' वेदैकदेशे' –इति वाचस्पत्युक्तं नूनं भ्रमविजृम्भितम्, तदुपरत्र तल्लिखितं 'गोत्रच चरणैः सह, महाभाष्य-का०' –इति तत्प्रमाणसूचनच्च तथैव;* तत्र भाष्ये 'गोत्रच चरणानि च' –इत्येतावत एवोल्लेखदर्शनात्। पातञ्जलमूलिवैव सा वाचस्पत्युक्ति-रिति भ्रमाद् वाङ्विस्तकोषप्रणेत्रादयोऽप्यत्राभवन् विमुग्धाः॥

तदत्र पुनरपि ब्रूमोऽध्ययनादिभेद एव शाखाभेदनिदानं न तु ग्रन्थभेद इति। अत एव एकैकवेदस्यानेकशाखत्वेऽपि तात्त्विकभेदा-भावात् श्रीमत्सायणाचार्यस्यैकैकशाखाव्याख्यानेनैव सर्ववेदभाष्य-कर्तृत्वं प्रसिद्धम्; किञ्चैव मपि कृष्णयजुः-शुक्लयजुः-शाखासमूहयो-र्विशेषपार्थक्यस्याऽस्तित्वादेव कृष्णयजुस्तैत्तिरीयशाखां व्याख्यायापि न स शुक्लयजुर्व्याख्याने कृतकृत्यम्भूय इति शुक्लयजुःकाण्वशाखा मपि व्याख्यातवान्। तथा एकशाखाध्ययनेनैवैकवेदाध्ययनं सम्पद्यत इत्येव "वेदः कृत्स्नोऽधिगन्तव्यः"–इत्यादीनि मन्वादिवचनानि च सङ्गच्छन्ते। वेदशब्दस्य शाखापरत्वव्याख्यानमप्रमाणिकम्।

एवञ्च यदुक्तं विष्णुपुराणभागवतयोः 'त्रिभेद प्रथमं', 'बोध्यादिभ्यो ददौ तासु', 'चतुर्धा व्यस्य बोध्याय'— इत्येवमादि, तत्सर्वं नूनं शाखापदार्थज्ञानविहीनत्वावेदक मेव; विशेषतः कूर्मपुराणोक्ता शाखाना मष्टादशपुराणतुल्यता तु वर्वर्त्ति सर्वोपरीति॥

अहो बत! वेदवैदिकमतप्रचारार्थमर्पितजीवनेनाद्यतन-सर्वार्ययशाम्नच्छत्राभाजनेनाचार्यदयानन्दस्वामिनापि शाखानां

वेदव्याख्यानरूपत्वेन वेदभिन्नत्वं पुराणाद्युक्तरूपमियोभेदवत्त्वञ्च मत्त्वेवालेखि स्वकृतवेदभाष्यभूमिकायाम्— "एकादशशतानि सप्तविंशतिश्च वेदशाखा वेदव्याख्याना अपि वेदानुकूलतयैव प्रमाण मर्हन्ति"–इति (२८१ पृ०)। शोचत्वेत्वेतल्लिपिसन्निधौ नूनं पौराणिकी शाखाभेदकथाप्यपास्तेति मन्यामहे वयम्। यदुक्तं पातञ्जले पस्पशायाम्— "एकविंशतिधा वाह्वृच्यम्, एकशत मध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, नवधाथर्वणो वेद."–इति। तदेतदनुसरणैवोक्तं स्यादिदं परिगणन मेकादशशतानीत्यादि, परं तत्रापि किञ्चित्पार्थक्यमतीयते। अस्तु तत्तथैव, पर महो! व्याख्यानन्दीयानविचारे, यत्र वय माध्य मध्यस्थाः, विशेषतो वादिप्रतिवादियचसा मनुलिखनेऽद्य मेक एवोभयपक्षतो नियुक्तः, तत्र तेनैव स्वामिनोक्तम्— 'सहस्रवर्त्मा सामवेद इत्यस्य सहस्रं गीत्युपाया इति भावः" –इति। वस्तुतः सामवेदस्य गीतिकोशलयक्तत्वादेव बहुशाखत्वम्, शाखासङ्ख्या तु त्रयोदशैवेत्यधिका मपि समुत्त नैव। हन्त! का नाम संहिता शाखेतिव्यपदेशशून्या तेन महात्मनोररीकृता, यस्याः मूलवेदत्वं मत्वा शाखेतिप्रसिद्धाना मन्यासां तदव्याख्याग्रन्थत्वं मन्तव्यमवेदिति लब्धावकाश मस्तेय नैव। तदत्र सम्भाव्यते,— विमिश्रमन्त्रब्राह्मणयोस्तत एव वाक्त इति प्रथितयोस्तैत्तिरीयशाखीयसंहिताब्राह्मणग्रन्थयोः विशेषतस्तदारण्यकस्थीयनिखिलखिलकाण्डदर्शनादेव तत्सायेपशेमुषीमत्वस्यापि स्वामिन एवं भ्रमः समुत्पात इति। यदि वा शाखातत्त्वानभिज्ञेन केनचित्तच्छिष्येण तथैवं स्यादृ विनिवेशित मिति॥

अथ ऋग्वेदमात्रशाखासङ्ख्यानिर्णयाय यतमानाय प्रथमं तयोरेव विष्णुभागवतयोः पुराणयोः प्रविशाम, परं तत्रोभयत्र मिथोनैक्य

चरणव्यूहादिशाखावर्णनकद्ग्रन्थविरोधश्च संलक्ष्याभीष्टसाधनेऽक्षत-कार्यास्ततः पर्यन्त वाक्यपठितं पातञ्जलवचन मेवेहावलम्बामहे। तत्रेदम्— "एकविंशतिधा बाह्वृच्यम्"–इति। षड्गुरुशिष्येण च वेदार्थदीपिकाया भूमिकाया मेतद्विषयाणि कतिचित् पद्यान्युद्धृतानि, तत्र दृश्यते चेतत्— "एकविंशत्यध्ययुक्त मृग्वेद मृषयो विदुः"–इति। आह च तत्र तद्व्याख्यायाम्— 'अध्वा, गतिः, शाखा इति पर्यायाः'–इति। कौर्म्येऽप्येवम्। इतः सुनिर्णीत मृग्वेदस्य शाखा एकविंशतिरिति।

तदेकविंशतिशाखानां सर्वासा मेवाभिधानानि तथ्यानिर्णेयानीव; यावतीनां यथा-यथावगम्यन्ते, तावतीना मेव तथा-तथा व्यक्तीकर्त्तुं यतामहे।—

अस्ति प्राचीनोऽष्टविकृतिविवृतिनामा लक्षणग्रन्थो महामुनि-व्याडिकृतः। तस्य प्रथमवल्लीगतचतुर्थश्लोक एषः— "शैशिरीये समाम्नाये व्याडिनैव महर्षिणा। जटाद्या विकृतीरष्टौ लक्ष्यन्ते नातिविस्तरम्"–इति। अस्य व्याख्यानावसरे तट्टीकाकृता कति-चिदितिहासश्लोका उपन्यस्ताः, त मितिहास मुपगत्य व्याख्यायि च व्याख्यातव्यश्लोकगत एवकारः। तथाहि— "एवकारस्य किम्प्र-योजनम्? अत्रोच्यते इतिहासः—

'शाकल्यस्य शतं शिष्या नैष्ठिकब्रह्मचारिणः।
पञ्च तेषां गृहस्थास्ते धर्मिष्ठाश्च कुटुम्बिनः।
शिशिरो बाष्कलः साङ्ख्यो वात्स्यश्चैवाश्वलायनः।
पञ्चैते शाकलाः शिष्याः शाखाभेदप्रवर्त्तकाः।'–इत्यादि।

तत्र शिशिरबाष्कलसाङ्ख्यवात्स्याश्वलायनप्रवर्त्तितासु शाकल-शाखासु शौनकाचार्याणां मते जटाद्यष्टविकृतिलक्षणस्य व्याडि-

प्रणीतत्वेऽपीष्टत्वात् न माण्डूकेयप्रोक्तस्य जटालचणत्वेनैवाभिप्रायार्थ एवकारः"–इति । अस्ति सूत्रं पाणिनीयम्— "गोत्रे लुगचि ( ४, १, ८९, )"–इति, तेन हि क्वाचेऽपि विवक्षितेऽत्र गोत्रप्रत्ययस्याणो लुग् कृतं भवति ; तथाच सम्पद्यन्ते शाकल्यस्य शिष्याः शिशिरादयः पञ्चेमे शाकलाः । तेषां शाकलानां आम्नायाः = सम्प्रदायाः = शाखा वा पञ्चैव "शाकलाद्वा ( ४. ३. १२८. )"–इतिपाणिनीयशासनात् शाकलाः शाकलकाश्चोच्यन्ते । तदेव ऋग्वेदस्य शैशिरीया, बाष्कला, साङ्ख्या, वात्स्या, आश्वलायनीति पञ्च शाखानामानि विज्ञायन्ते, ज्ञायते चासां सर्वासा मेव शाकलशाखेति नामैक्य मपि । अपि यदुक्तं मनुवाकानुक्रमण्युपक्रमे—

"ऋग्वेदे शैशिरीयायां संहितायां यथाक्रमम् ।
प्रमाण मनुवाकानां सूक्तैः शृणुत शाकलाः"–इति ।

अत्र शाकला इति सम्बोधनपदमावावगम्यते, तासां पञ्चशाकलशाखाना मेकतमां शैशिरीया मेवावलम्ब्य क्रियमाणाप्येषानुक्रमणी पञ्चाना मेव शाकलानां हिताय सम्पाद्येति ।

अस्ति चात्र मतान्तरता ;— शाकल्यस्य शिष्यः अतएव शाकल इत्येव प्रसिद्ध आसीत् कश्चन एक आचार्यः, तेनाध्यापिता ये पञ्च शिष्याः शिशिरादयः, तेषां पञ्चानां पञ्च शिष्यसम्प्रदाया एव शैशिरीयादयः पञ्च शाखाः सम्पन्नाः, तैः पञ्चभिरधीतानां देशकालपात्रभेदतोऽध्ययनशैलीक्रमोच्चारणभेदात् किञ्चित्पाठन्यूनाधिक्याच्च पञ्चधात्व मापन्नानां पञ्चानां संहितानां शाकलप्रोक्तत्वेनैव शाकलशाखात्वम् । तथा च प्रदर्शितविकृतिवल्लीटीकाकृदुपन्यस्तः 'शाकल्यस्य मतं शिष्याः'–इति पाठः स्यात् प्रामादिकः, तत्र 'शाकलस्य मतं शिष्याः'–इति निर्यकारपाठेनैव भवितव्य मिति । अतएवोक्तं

महामुनिव्याडिना स्वविकृतिवल्ल्यारम्भे— "नत्वादौ शौनकाचार्यं गुरुं वेदमहानिधिम् । ०—० । नमामि शाकलाचार्यं शाकल्यं स्थविरं तथा"—इति । अत्र शौनकस्य गुरुत्वम्, शाकल्यस्य तु परमगुरुत्वं व्याख्यातं तट्टीकायाम् ।

तदित्थं शाकल्येनाध्यापिता शाकलेनाध्यापिता वा एकैव एषा ऋक्संहिता देशकालपात्रभेदतः शिशिरादिपञ्चाचार्यकृताध्यापनशैलीपाठक्रमोच्चारणानुष्ठानभेदात् किञ्चित्पाठन्यूनाधिक्याच्च पञ्चविधत्वं गता, शैशिरीयादिपञ्चनामभिः शाकलैकनाम्ना च प्रसिद्धाप्यापीति सर्वं निरवद्यम् ।

शाखानिर्णायके चरणव्यूहे सूत्रम्—"ऋग्वेदस्य × × शाखाः पञ्च भवन्ति ; आश्वलायनी, शाङ्खायनी, शाकला, बाष्कला, माण्डूकेया चेति"—इति । इहोक्ता आश्वलायनी तु पूर्वोपात्तातोऽभिन्नैव ; शाङ्खायनी स्यात् पूर्वोल्लिखिता साङ्ख्या शाङ्ख्या वेति चरणव्यूहटीकाकृन्महिदासमतन्तु नूनं प्रामादिकम् ; प्रमापयिष्यामो ह्यनुपदं शाङ्खायन्या अशाकलत्वम् । तत्त्वतः शाङ्खायनी नाम शाखा पूर्वप्रदर्शितशैशिरीयादिभ्यः पञ्चभ्यो विभिन्ना षष्ठ्येव । शाकलेति शैशिरीयाया ग्रहणं मन्तव्यम् ; तस्याः शाकलाद्यत्वेन तथाव्यवहारोपपत्तेः । तद्यथा सामवेदीयार्चिकग्रन्थयोरुभयोरपि छन्दोमयत्वसाम्येऽपि पूर्वस्यैव छन्द इति व्यवहारः, उत्तरस्य तूत्तरेति । अन्यथात्र बाष्कलायाः आश्वलायन्याश्च शाकलेत्यैव ग्रहणसिद्धे पुनर्ग्रहणस्यापार्थता कथं वार्येत । बाष्कलापि पूर्वपरिचितैव । माण्डूकेया लिङ्गाधिका पूर्वोपात्ताभिः शैशिरीयादिभिः पञ्चभिः अत्रोपात्तया शाङ्खायन्या च परिगणनया सप्तमी सम्पद्यते । इत्थं ऋग्वेदस्य सप्तशाखानामस्त्यवगम्यन्ते, गम्यते च चरणव्यूहमाने शाखामानानां

-इति चाश्वलायनगणोल्लेखः। तदुक्तं चरणव्यूहटीकायां महिदासेन—'जानन्तिवाहवीत्यारभ्य माण्डूकेया इत्यन्तो माण्डूकेयगणः, + + + शाङ्खायन इत्यन्तः शाङ्खायनगणः, ऐतरेय इत्यारभ्य आश्वलायनान्त आश्वलायनगणः'-इति। इत्थं ऋग्वेदस्य प्रधानतस्तिस्र एव शाखाः पर्यवसिताः, तासामेव स्युरनुशाखा इतराः। ता एव मूलशाखाः अनुलक्ष्य देवीपुराणे "शाखास्तु त्रिविधा भूप! शाकलबाष्कलमाण्डुकाः"-इत्युक्तम् (१३०पृ०)। तत्रापि बाष्कलस्थाने शाङ्खेति पठितव्यम्, तच्च शाङ्खायनस्यैवैकदेशपदत्वं मन्तव्यम्, बाष्कलपाठस्तु स्याल्लिपिकरपाण्डित्यमूलकः। तदेवं देवीपुराणे तदानीम्प्रचलितामप्रचलितानां सर्वासामेव ऋक्शाखानां नामग्रहणं सम्पन्नमित्यपि वक्तुं शक्यते।

अप्रचलिते तु शाकला माण्डूकेया चेत्येत एव द्वे प्राचीनतमशाखे; ऐतरेयारण्यके एतयोरेव द्वयोराचार्ययोर्नाम्नोराम्नानदर्शनात्, अपि शाङ्खायनी स्यान्माण्डूकेयानुशाखा माण्डूकेयभेदैवेति। त एत एव द्वे ऽध्येतृभेदात् पाठादिभेदतः एकविंशतित्वमापन्ना। तत्र चेदानीं माण्डूकेयानां शाङ्खायन्येवैका लुप्तावशिष्टा, शाकलानामाश्वलायनीति। अत एवाग्निपुराणे एतयोरेव द्वयोः शाखयोर्नामनिर्देशो विद्यते (२७१ अ० २ श्लो०)—

'भेदः शाङ्खायनश्चैक आश्वलायनो द्वितीयः'-इति।

अद्याप्येत एव द्वे शाखे विद्येते। तत्र चाद्या शाङ्खायनी, तस्या ब्राह्मणारण्यकपुस्तकानि बहून्युपलभ्यन्ते, संहितायास्त्वेकमपि सम्पूर्णं पुस्तकं सुदुर्लभम्! अथवास्माभिरद्यापि न दृष्टमित्येव सुवचम्। यद्यपि आसियाटिकसमित्यधिकृतगवर्णमेण्टपुस्तकालये दृश्यते,निर्दिष्टं खण्डितं पुस्तकमेकम्, तस्मादष्टकन्तु

ग्रन्थोऽयमायीत्यस्माकमभिमतम्। अत एव अस्माकमीयानां संज्ञानसूक्तीयानां पञ्चाना मृचामपि देवतानिरूपण मेवं कृतं बृहद्देवतायाम् (८अ० ८३श्लो०)—

"उशना वरुणश्चेन्द्रश्चाग्निश्च सविता स्तुताः।
संज्ञानप्रथमस्यान्तु द्वितीयस्या मथाश्विनौ।
तृतीया चोत्तमे च द्वे आशिषोऽभिवदन्ति ताः"—इति।

तदेतत् पञ्चर्चं संज्ञानसूक्तं शाकलासु तैत्तिरीयादिषु चाम्नातम्, अत एव सायणाचार्येणापि न व्याख्यातम्, अध्यापकम्याक्समूलरेणैकस्मिन्नादर्शे दृष्ट मपि खैलिक मित्युपेक्षितञ्च (ऋ०वे० ६भा० पाठ० ३२पृ०)। वस्तुतो न चैतत् खैलिकम्; तैत्तिरीयाथर्वणयोर्वेदयोराम्नानात् (तै० स० २. ४. ४ ६; २. ६. १०. २; तै० ब्रा० ३. ५. ११. १; तै० आर० १. ८. ७; अथ० सं० ७. ४२. १; १. ८. ६.), निरुक्तेऽप्येतस्याश्चस्या ऋचो निगमत्वेन ग्रहणाच्च। तथाहि— "अथापि शंयुर्बार्हस्पत्य उच्यते, 'तच्छंयोरावृणीमहे × × ×'—इत्यपि निगमो भवति"—इति (४. ३. ५.)। सैषा ऋक् संज्ञानसूक्तस्य पञ्चमी दृश्यते। तदेतत् संज्ञानं नाम शाङ्खायन्या उपान्त्य सूक्तम्, एतदनन्तर मेव तत्राम्नातं महानाम्नीसूक्तम्। अत एव शाङ्खायनसूत्रेऽस्य सूक्तस्य प्रतीकग्रहणेनैव विधानं कृतम्। तथाहि— "संज्ञानं मुशनावददिति सूक्तं जपेयुरिति (३. ६. २.)। इत इद मपि सम्भाव्यते—मूलर्-दृष्टं तदादर्शपुस्तकं पुस्तकांशो वा स्यात् शाङ्खायनसंहिताया इति।

बाष्कलशाखायामप्यस्ति संज्ञानसूक्तम्, परं तत् न पञ्चर्चम्, प्रत्युत पञ्चदशर्चम्; अपि नोपान्त्यम्, प्रत्युतान्त्य मित्यवगन्तव्यम्। बाष्कला तु शाकलाना मेवान्यतमा, शाकलशाखासंहितासु

महानाम्नीसूक्तं नाम्नात मित्यत एवैतरेयारण्यके तत् समाम्नातम्; शाङ्खायनसंहितायास्तु महानाम्नीसूक्ताम्नानेनैव समाप्तिरिति तत्पूर्वाम्नातस्य सञ्ज्ञानसूक्तस्य संहितोपान्त्यत्व मेत देव बाष्कलशाङ्खायनसंहितयोः सञ्ज्ञानसूक्तसञ्ज्ञावस्थानयोः पार्थक्य मिति ।

अथाग्निपुराणोक्ता द्वितीया आश्वलायनी तु शाकलाना मन्यतमेत्युक्तं पुरस्तात्, परिचाययिष्यामश्च ता मुपरिष्टादिति ॥

अथ शाकलाना माद्या शैशिरीया दशमण्डलात्मिकेत्यतो 'दाशतयी'-इति व्यपदिश्यते । तदुक्त मनुवाकानुक्रमण्याम्—
"पञ्चाशीतिर्दाशतयेऽनुवाका दृष्टाः पुराणैर्ऋषिभिर्महात्मभिः ।
यस्तान्वविद वेद चेवाप्यधीते स नाकपृष्ठं भजते ह शश्वत्"—इति ।

"दाशतये दशमण्डलयोगिनि वेदे । 'सङ्ख्याया अवयवे तयप्' (पा० ५.२.४२.), ततः स्वार्थे अण्"—इति तद्व्याख्याने षड्गुरुशिष्यः । तदत्र मण्डलविभागो प्रतिमण्डल मनुवाकविभागो विद्यते, प्रत्यनुवाकञ्च सूक्तविभागः । तत्तदनुवाकसूक्तसङ्ख्या तत्र ३२—३६-श्लोकेषु निरूपिता । तथा चैवं सम्पद्यते—

म० १, २, ३, ४, ५, ६, ७, ८, ९, १० ।
अनु० २४-४—५—५—६—६—६—१०—७—१२=८५ ।
सू० १९१-४३-६२-५८-८७-७५-१०४-९२-११४-१९१=१०१७ ।

प्रायते चैतेन वालखिल्यानां सूक्तानां शैशिरीये समाम्नानं नाङ्गीकृत मिति । तानि च सूक्तानि एकादश सन्ति, तैषा मपीह परिगणने १०२८ स्युरिति स्पष्टम् ।

यद्यपि सा शैशिरीया सम्प्रति नोपलभ्यते । पर मुपलभ्यते [illegible] सर्वा एव शौनकीयानुक्रमण्यः शैशिरीया मवलम्ब्यैव कृता इति । तथा ह्यनुवाकानुक्रमण्या उपक्रमे— "ऋग्वेदे शैशिरीयायाम्"—

इति उपसंहारे च— "तान् पारये शाकले शैशिरीये"-इत्युक्तम् ।

सायणीय मृग्भाष्यञ्च ता मवलम्ब्यैव कृतं स्यात् ; तत्र शैशिरीयायां वालखिल्यसूक्ताना मध्याम्नातत्वात् । अत एव ऐतरेयभाष्ये तेषां वालखिल्यानां क्वचित् खिलत्वेन, क्वचित् ग्रन्थान्तरीयत्वेन, क्वचिच्छाखान्तरीयत्वेन वर्णन मुपपद्यते सायणस्येति । तथाहि— "खिलेषु समाम्नातम्"-इति ६.४.८, "वालखिल्याख्ये ग्रन्थे समाम्नाताः"-इति ६.५.२, "तानि वालखिल्यनामके ग्रन्थे समाम्नायन्ते"-इति ६.४.८, "सोऽयं प्रगाथः शाखान्तरे द्रष्टव्यः"-इति ३.२.५ । तदिदं वालखिल्यानां खिलत्वं नून मसङ्गतम्; तेषां पदपाठश्रवणात् ; न हि खिलानां पदपाठः कृतः शाकल्येन ;— अधीयतेऽध्याप्यते मुद्रितो मुद्र्यते च वालखिल्यानां मपि पदपाठः सर्वत्र । तदाह चरणव्यूहकर्महिदासोऽपि— 'यस्य मन्त्रस्य पदाभावस्तस्य खैलिकत्वं सिद्धम्'-इति । ग्रन्थान्तरत्व मपि न सङ्गच्छते; सर्वेषा मेव वेदानां संहिता त्वेषैकैवेति यः सम्भवेत्ततोऽन्यो ग्रन्थ इति । शाखान्तरीयत्वकथनेन चाभिगम्यतेऽप्रचलितेय माश्वलायनी शाखा नैव दृष्टा सायणेन, अपि तद्देशीया मन्या मेव शाखा मवलम्ब्य भाष्य मारचितम्, तस्यां तु शाखायां वालखिल्य नाम्नात मिति तदपेक्षया शाखान्तरीयत्व मभ्युपगन्तव्य मेवेति ।

वालखिल्यैकादशसूक्तेषु दशदशादिक्रमादशीत्यृचोऽधीयन्ते यथा—

१–११ सू० १०–१०–१०–१०–८–८–५–५–४–३–७=८० ऋचः

तदाह सर्वानुक्रमण्याम्— "अभि प्र दश प्रस्कण्वं प्रागाथं तत्, प्र सुश्रुतं पुष्टिगुः, यथा मनौ श्रुष्टिगुः, यथा मनावायुः, उपमं त्वाष्ट्रो मेध्यः, एतत्ते मातरिश्वा नो विश्व इति वेत्खदेवः प्रगाथः, भूरीत् पञ्च कृशः प्रस्कण्वश्च दानस्तुतिर्गायत्रं तृतीयापङ्क्त्यन्त्यानु-

ष्टुभौ, प्रति ते दस्यवोऽन्याग्निसौरी पङ्क्तिः, युवं देवा क्रतुना मैत्रा-वारुणिं त्रैष्टुभम् ,०—०, इमानि वां भागधेयानि सप्त सुपर्ण ऐन्द्रावरुणं जागतम्"—इति ४४, ४८—५८। सर्वानुक्रमणीकारकात्यायनेनेव सुक्तत्वाभावास्य वालखिल्यकाण्डस्य खैलिकत्वं विध्वस्तम् ; न हि कस्य चिदपि खिलस्य कात्यायनानुक्रमणं कृतं तेन, किञ्च पञ्चमाष्टकीय-चतुर्थाध्यायीयत्वेनैव तत्र ग्रहणादस्याश्वलायनशाखीयत्वं व्यक्तम् , व्यक्तञ्च तदनुक्रमणिकाया अप्याश्वलायनशाखीयत्व मिति ।

ऐतरेयब्राह्मणे त्वेषा मेषामष्टसूक्तानां प्रथमतोऽष्टाना मेव वाल-खिल्यनाम्ना विधान माम्नातम् , अन्त्यस्य तु सौपर्णं मिति ( ६. ४. ८, ८.)। इत्थ मपि ज्ञायते, तासां वालखिल्यानां सायणोक्तं खिलत्वं नून मवास्तवम् ; नापि ग्रन्थान्तरतादर्थ्यीया, न हि ग्रन्थान्तरीयाणां प्रतीकेन नाममात्रेण वा ग्रहणं युज्यतेऽत्रैतरेयके ; शाखान्तरीयत्वं च वक्तुं नात्र शक्यते , सति हि तस्मिन् प्रपञ्चेन विधानं क्रियेतैत-रेयेणेति । तथाप्यस्य शाखान्तरीयत्वेनोपन्यासाद्दशमाथस्यैवास्य शाखान्तरीयत्वं प्रतिपन्नम् ; न ह्याश्वलायन्यां वालखिल्याध्ययनं पक्षतोऽपि तद्भाष्यकारस्योक्तरूपप्रलापवचनानि सम्भाव्यन्ते ।

एवं मपि सायणाचार्येणावलम्बिता शैशिरीया, अन्या वा काचिच्छाकलशाखा स्यादाश्वलायन्यनुरूपैव प्रायः सर्वत इत्यत्र च न भवति संशयः ; नान्यथात्र सायणीयभाष्ये सर्वानुक्रमणीवचनानि यथायथं सङ्गच्छेयुरिति ।

अथ द्वितीया, वाष्कला । एतस्या अपि परिचयः शौनकीया-नुक्रमण्यादिभ्योऽवगम्यते चैवम्— "उप प्र यन्तो ( १. ७४. )"— "नासत्याभ्याम् ( १. ११६. )"— "अग्निं होतारम् ( १. १२७. )"— "इमं स्तोमम् ( १. ९४. )"— "वेदिषदे ( १. १४०. )"—इत्येष

क्रमो बाष्कलस्य प्रथममण्डले निदर्शितः । एवमपरमण्डलेष्वपि बोध्यम् । तद्यथा— "स्वादोरभक्षि ( ८. ४२. )"–इतिसूक्तादनन्तरम् "अभि प्र वः सुराधसम् ( ८. ४९. )"–"प्रसुश्रुतम् ( ८. ५०. ) –इति सूक्तद्वयं माम्नाय "यत्र स्था याह्यग्निभिः ( ८. ६०. )"–इत्याम्नातम् । एवं "गौर्धयति"–इत्यनुवाको दशसूक्तात्मकः शैशिरीयायाम्, पञ्चदशसूक्तात्मको बाष्कलायाम् । तथाच "गौर्धयति"–इतिसूक्तादनन्तरं "यथा मनौ सांवरणी ( ८. ५०. )", "यथा मनौ विवस्वति ( ८. ५२. )", "उपमन्त्वा ( ८. ५३. )", "एतत्त इन्द्र ( ८. ५३. ८. )", "भूरीदिन्द्रस्य ( ८. ५४. )"–इति पञ्चसूक्तान्याम्नाय "आ त्वा गिरो रथीरिव ( ८. ८५. १ )"–इत्याम्नातम् । एवं मन्त्रे च मण्डले— "संसमित् ( १०. १९१. )"–इतिसूक्तादनन्तरम् "सञ्ज्ञानं उशनावदत्"–इत्यादि, "तच्छंयोरावृणीमहे" –इत्यन्तं चतुर्वर्गात्मकं पञ्चदशर्चमेकसूक्तमधिकं बाष्कलायाम् । तद्वै "समानी वः ( १. १९१. ४. )"–इति शैशिरीयाया अन्तिमा ऋक्, "तच्छंयोः"–इति तु बाष्कलाया इति भेदः ।

तास्वेताः पञ्चदशर्चः—

"सञ्ज्ञानं उशना वदत् सञ्ज्ञानं वरुणो वदत् ।
सञ्ज्ञानमिन्द्रश्चाग्निश्च सञ्ज्ञानं सविता वदत् ॥ १ ॥
सञ्ज्ञानं नः स्वेभ्यः सञ्ज्ञानमरणेभ्यः ।
सञ्ज्ञानमश्विना युवमिहास्मासु नियच्छताम् ॥ २ ॥
यत् कक्षीवान् संवननः पुत्रो अङ्गिरसामभवेत् ।
तेन नोऽद्य विश्वे देवाः सम्प्रियांसमजीजनन् ॥ ३ ॥
सं वो मनांसि जानतां समाकूतिर्मनामसि ।
असौ यो विमना जनस्तं समावर्त्तयामसि ॥ ४ ॥ १वर्गः ॥

नेर्ह्यं सेनादरर्णं परिवर्म्मं तु यत्नविः ।
तेनासिचाणां बाहून् हविषा शोधयामसि ॥ ५ ॥
परिवर्म्मान्येषा मिन्द्रः पूषा च संसृतः ।
तेषां वो अग्निदग्धानामग्निमूऽढानामिन्द्रो हन्तु वरं वरम् ॥ ६ ॥
एषु नत्यहृषाजिनं हरिणस्य भियं यथा ।
पराऽ अमित्राऽ ऐषत्वर्वाची गौरुपेजतु ॥ ७ ॥ २ वर्गः ॥
आभ्वराणाम्पते वसो होतर्वरेण्य क्रतो । तुभ्यं गायत मुच्यते ॥ ८ ॥
गोषामो अन्नकामः प्रजाकाम उत कश्यपः ।
भूतं भविष्यत् प्रस्तौति बहु ब्रह्मैक मक्षरम् ॥ ९ ॥
यदक्षरं भूतकृतो विश्वे देवा उपासते ।
महर्षिं मस्य गोप्तारं जमदग्नि मकुर्वत ॥ १० ॥
जमदग्निराप्यायते छन्दोभिश्चतुरुत्तरैः ॥ ११ ॥
राज्ञ- सोमस्य भक्षेण ब्रह्मणा वीर्यावता ।
शिवा नः प्रदिशो दिशः सत्या नः प्रदिशो दिश- ॥ १२ ॥ ३ वर्गः ॥
यदो यत्तेजो दहशे शुक्रं ज्योतिः परो गुहा ।
तदृषिः कश्यपः स्तौति सत्यं ब्रह्म चराचरम् ॥ १३ ॥
त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं अगस्त्यस्य त्र्यायुषम् ।
यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् ॥ १४ ॥
तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये ।
दैवीः स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः ॥ १५ ॥ ४ वर्गः ॥"—इति ।

अथ तृतीया साङ्ख्या, चतुर्थी वात्स्या । तदेते सम्प्रति न क्वाप्युपलभ्येते, अतएवैतयोः कोऽपि संवादोऽस्माभिर्न प्रायत इत्येव सत्यम् । अथवा विष्णुभागवतपुराणयोर्योक्ता मौद्गलीति, सैव स्यात् साङ्ख्येति; तयोः पुराणयोः 'साङ्ख्या'—इत्यस्य स्थाने 'मौद्गली'—इत्यस्य

पाठप्रतीतेः सम्भाव्यते साङ्ख्याचार्यस्य मुद्गल इति गोत्रनामेति। अध्यापकस्याक्षमूलरेण च ऋग्वेदस्य तृतीयभागभूमिकाया १२ पृष्ठेऽलेखि एतत्— "फिट्स् एड्वाड् हल् महोदयः काशीतो ऽलिखदिदम् (१५-१-५५.)— 'सायणाचार्यकृतभाष्यस्य मूल मादर्शपुस्तकं यदासीद् लण्डनस्थेण्डियापुस्तकालये मुद्गलभाष्यं नाम, तत्र प्रथमाष्टकयोऽष्टकाश्चतुर्थाष्टकस्यान्त्याध्यायाश्च त्रयः सन्ति, सन्ति चान्यानि कतिचित् पत्राणि प्रथमसप्तमाष्टकयोः। तदीय-प्रथमाष्टकस्य यावानंशः पाठयोग्यः, तावन्त मेव यथालिपि भवन्तं दर्शयामि। लिखितं चैतत् पुस्तकं १४७× संवत्समायाम्' -इति"-इति। तदेतत् पुस्तकं मौद्गल्याः शाखाया एव सायण-भाष्य मिति सुव्यक्तम्; परं नास्ति सायणस्य मुद्रितभाष्यादन्यद् भाष्य मिति शाकलानां पञ्चशाखानां मौद्गली मेवावलम्ब्य तेना-कारीदं भाष्य मिति सम्भाव्यते सुतराम्। तथा चैषा मौद्गली इय-तथीऽपि स्वीकार्यम्; सायणीयभाष्ये वालखिल्यमन्त्राणां व्याख्या-नादर्शनात्, भट्टत्वा हि वालखिल्याना मवश्यश्राव्यत्वं स्यादि-त्युक्तम्। सेयं मौद्गली शाखा सायणाचार्यसमये सायणाचार्यदेशे आसीत् सुप्रचलितैवेत्येना मेवावलम्ब्य तेनैतत् भाष्यं कृत मिति चोपपद्यते। अद्य च स्यात् तद्देशे मौद्गल्या एव शाखाया विद्यमानतेति च नासम्भवम्। अपि नाम शाकलानां पञ्चाना मेव प्रायो ग्रन्थपरिच्छेदसाम्यात्, क्रम-पाठादौ चाल्पतारतम्यात्, सर्वपुस्तकपुष्पिकासु नामोल्लेखादर्शनाच्चैवं नामविभ्रमोऽनिवार्य एवेति मौद्गल्या आश्वलायनीत्वेन आश्वलायन्याश्च मौद्गलीत्वेन ग्रहणं सुसम्भाव्य मेवेति।

अथ शाकलानां पञ्चमी, आश्वलायनी नाम। इयमेवाश्वलायनी

शाखा शाकलानां पञ्चानां लुप्तावशिष्टा, अद्यापि सर्वत्राध्ययनाध्यापनैः सुप्रचलिता विद्यते। प्रवाद एवात्र प्रथमं प्रमाणम् ; सर्वत्रैव हि दाक्षिणात्यादिष्वेषा आश्वलायनीत्येव प्रोच्यते। प्रदर्शिताग्निपुराणवचने शाकलाना मस्या एवैकस्या ग्रहण मत्र द्वितीयं मानम् ; न हि तदानी मप्यासीत् काचिदन्या शाकलेति। गौडराज-लक्ष्मणसेन-प्रदत्तेष्वनधिककालिकेषु ताम्रफलकेषु च "आश्वलायनशाखाध्यायिने"–इत्युल्लीर्ण दृश्यत इतीह तृतीयं प्रमाणम्। स्कन्दपुराणान्तर्गतश्रीमालखण्डनामग्रन्थस्य सप्ततितमेऽध्याये ऋग्वेदस्येय मेवैकाश्वलायनी शाखा बहुधार उपन्यस्ता दृश्यते। तद्यथा— "तत्र आश्वलायनी शाखा ऋग्वेदस्य, यजुर्वेदस्य माध्यन्दिनी, सामवेदस्य कौथुमी, अथर्ववेदस्य स्वान्तरायणीति ; ऋग्वेदस्याश्वलायनसूत्रम्, यजुर्वेदस्य कात्यायनम्, सामवेदस्य लाट्यायनम्, अथर्ववेदस्यार्षटकश्चेति"–इति। तदित्थं गुर्जरीयश्रीमालप्रदेशे बहुदिनत एव ऋग्वेदस्येयाश्वलायनी शाखैवैकास्ति प्रचलितेत्यपि मानं भवेदिह चतुर्थम्। तस्मादेतर्हि सर्वत्राधीयमाना, मुद्रिता चेयं शाखा नून माश्वलायनीत्येव मन्तव्यम्।

सेय माश्वलायनी तत्त्वतोऽष्टत्येव ; सर्वेष्वेवैतत्पुस्तकेषु अष्टकाध्यायवर्गनामत्रिविधपरिच्छेदानां प्राधान्यदर्शनात्। एतदीयदेवतर्षिच्छन्दोनिर्णयाय कात्यायनेन या "सर्वानुक्रमणी" प्रणीता, तत्रापि अष्टकाध्यायवर्गविभागानुसृता विभागा एव दृश्यन्ते। अत एवेह षष्ठाष्टकीय-चतुर्थाध्यायस्य चतुर्दशाद्यष्टादशवर्गात्मकं वालखिल्यं श्रूयते ; न हि शाकलयां वालखिल्यश्रुति मस्तिताभ्युपगम्यते सायणाचार्येणेति तु प्रतिपादितं पुरस्तादेव ( १३४ पृ० )। एव मपि शाखलायनशाखायाः मैत्रिरीयाया दशमयोत्स्वनीतिः, एत-

त्पूर्वतनायाः शाकल्यसंहितायाश्च ऐतरेयेण यास्कादिना च दाशतयीत्वेन ग्रहणात्, शौनकीयानुवाकानुक्रमण्यादौ च दशतयीत्वस्यादरातिशयदर्शनात्, सर्ववेदभाष्यकारेण सायणाचार्येण च दाशतयीमेव साङ्ख्यापरपर्यायां शौनकी-मन्यां वा काञ्चिद् शाकलशाखामनुसृत्य ऋक्संहिताया भाष्यं कृत मिति दशतय्यष्टतय्योः सम्भिन्नता दशतयीत्वानुकूला मण्डलानुवाकसूक्तेतिविविधपरिच्छेदा अपीह लेखकादिभिः सूचिता यथायथं सर्वत्रैवेति ॥

अथ पञ्चस्वेव शाकलशाखासु अध्यायादिपरिगणनं त्वेकविधमेव मन्यते प्रायः । अत एवैष शाकलानुवाकानुक्रमणीकारः—

“अध्यायानां चतुःषष्टिर्मण्डलानि दशैव तु ।
वर्गाणान्तु सहस्रे द्वे सङ्ख्यातं च षडुत्तरे ।
सहस्र मेतत्सूक्तानां निश्चितं खैलिकैर्विना ।
दश सप्त च पञ्चान्ते ( रुद्रातं वै पदक्रमम् ) ।”—इति ।

तदेतत् सर्वं वालखिल्यवर्जनेनास्य गणनातोऽप्युपपद्यते । ऋक्सङ्ख्यायास्तु शाखापार्थक्यात् पार्थक्यं स्वीकार्य मेव, परं महदा मेकस्या माश्वलायन्या अपि मतवैभिन्य मुपलभ्यते यथा—

अनुवाकानुक्रमण्याम् १०५८० ऋचां स्वीकारः, तदुक्तम्—

“ऋचां दशसहस्राणि ऋचां पञ्चशतानि च ।
ऋचा मशीतिः पादश्च पारणं सम्प्रकीर्तितम्”—इति ।

छन्दःसङ्ख्यायान्तु १०४०२ ऋचां स्वीकारः, तदुक्तम्—

“एवं दशसहस्राणि शतानान्तु चतुष्टयम् ।
ऋचां द्वाधिक माख्यातं ऋषिभिस्तत्त्वदर्शिभिः”—इति ।

मुद्रितसर्वानुक्रमण्या भूमिकायां १०४४२ ऋचां स्वीकारः ।
अनुक्रमणीविवरणकृत्षड्गुरुशिष्येण तु सङ्ख्या १०४५२ स्वीकृता ।

ऽप्यधिकमन्त्राणां विधानञ्चेह श्रूयते यथा— "याहनस्याः शंसति ०—० ता दश शंसति"—इति ६. ९. १०। ऋक्परिशिष्टे खल्वाहनस्यानामर्चोऽष्टावेव श्रूयन्ते, इह तु दशानां विधान माम्नातम्।

तस्मादेतद् ब्राह्मणं नाश्वलायन्याः सम्भाव्यते, सम्भाव्यते तु यस्यां शाखायां प्रतीकतो नामतो वा एतद्ब्राह्मणविहितानां सर्वासामेवर्चा मस्ति विद्यमानता, नास्ति चेह पठितानाम्, अपि चेह विहिता ऋक्परिशिष्टग्रन्थीयाश्चर्चो यथावत् समाम्नाताः, तस्याः शाखाया एवेदं स्यादिति। तथाविधा कतमेति प्रश्नस्योत्तरं तु विलुप्तपूर्वशाखाकाण्डिकाना मद्यतनाना मस्माकं नैव सुकरम्, तथाप्यत्र यावच्छक्यं प्रयतिते गम्यते,— शाकल्यशिष्येण शाकलाचार्येण या संहिताधीताध्यापिता च, या मधीत्यैव शिशिरादयः शाखाप्रतीऽभवन्, शिशिरवाष्कलसाङ्ख्यायनाश्वलायनाधीता, अध्ययनप्रचलितशाकलाश्वलायनशाखातः पूर्वतना, सैव शाखा स्यादस्यैतरेयब्राह्मणस्यावलम्बन मिति। अत एवैतरेयारण्यकभाष्ये "वयं त्वेव न एतत् प्रोक्तम्'—इत्येतस्य व्याख्यान मेव मुक्तं सायणाचार्येण— "नः अस्मान् (महिदासादिकान्) शिष्यान् प्रति शाकल्येन शाघ जसरूप मित्यादि त्रय मेव प्रोक्तम्, न तु मांस मित्यादिकं चतुर्थम्"—इति (२. २. २.)। इत्थ मस्य ब्राह्मणस्य शैशिरीयादिभ्यः पञ्चभ्यः प्राक्तनत्वेऽपि शाकलशाखोपयोगित्व मप्याहृतं स्पष्टम्। तस्मात् शैशिरीयाद्याश्वलायनान्तानां पञ्चाना मेव शाखाना मिद मेकं ब्राह्मण मैतरेयकं नामेति च सिद्धम्॥

---

आचार्यस्वामिदयानन्दसरस्वतिना तु "दशसहस्राणि पञ्चशतानि एकोननवतिश्च ( १०५८९ ) ऋचोऽऽम्नाता इति निर्धारितम् । अस्मत्परिगणनयाऽऽश्वलायनसंहितायाम् १०५२२ ऋचो दृश्यन्ते । एवं सूक्तसङ्ख्याया मतपार्थक्ये निदानानि त्वेवमवगम्यन्तेऽस्माभिः— अनुवाकानुक्रमणी नूनं शैशिरीय-शाखायाः । नास्ति च तत्र वालखिल्यानां ऋचां माम्नानम्, तथापि तत्र वालखिल्यभिन्नाः सपादाः १०५८० ऋचः परिगणिताः । अस्मत्परिगणनया त्वत्र वालखिल्यसहिताः १०५२२ ऋचः सन्ति, वालखिल्यानां ऋचां सङ्ख्या तु ८० ; तथा चात्र आश्वलायनसंहितायां वालखिल्यातिरिक्तानां ऋचां सङ्ख्या १०४४२ सम्पन्ना । तदियं शैशिरीयाया मित आश्वलायनीतोऽधिका. १३८ ऋचोऽधीता इत्येव निर्णीयते ।

छन्दस्सङ्ख्योल्लिखितोक्तसर्वसङ्कलनसङ्ख्या तु स्तोमप्रतिच्छन्दस्सङ्ख्यातोऽपि विरुद्धेव प्रतीयते । तद्यथा तत्र प्रोक्तं स्तोमैः— गायत्र्यः २४५१, उष्णिहः ३४१, अनुष्टुभः ८५५, बृहत्यः १८१, पङ्क्तयः ३१२, त्रिष्टुभः ४२५३, जगत्यः १३४८, अतिजगत्यः १७, शक्वर्यः ९, अतिशक्वर्यः ९, अष्टयः ६, अत्यष्टयः ८४, धृती २, अतिधृतिः १, द्विपदाः १७, एकपदाः ६, बार्हतप्रगाथाः १९४, काकुभप्रगाथाः ५५, महाबार्हतप्रगाथः १ । तदेवं तदुक्तप्रतिच्छन्दस्सङ्ख्यानां सङ्कलनया १०१४२ ऋचः स्युः, पूर्वप्रदर्शिततच्छ्लोकतस्तु गम्यन्ते १०४०२ । तदेवं प्रायः सर्वत्रैव सङ्कलनाभ्रमोऽस्माभिर्ग्रन्थदृष्ट्या प्रमाणित एव ।

मुद्रितसर्वानुक्रमणीभूमिकायां यत् १०४४२ इति निर्णीतम्, तदस्या वालखिल्यातिरिक्तायाः आश्वलायन्या इति तु युक्तम् ।

जगत्याद्यपङ्क्तिशोभा ऋक्सङ्ख्या तु नित्यद्विपदार्धर्चादिभेदज्ञता । षड्गुरुशिष्यटीकाकारश्चापि विद्वामस्यषा च सैव । तथाप्योक्तं हि—

"वालखिल्यसहिता सर्वानुक्रमणीमन्त्ररूपकं सङ्ख्या उच्यते,—द्विपञ्चाशदधिकपञ्चशतदशसहस्राणीति (१०५५२)। एतन्महता नित्यद्विपदानैमित्तिकद्विपदासहितोक्ता। हवनाध्ययनाभ्यां समाना सा नित्यद्विपदा,०—०, हवनाध्ययने विपरीता सा नैमित्तिकद्विपदा"—इत्यादि। नित्यद्विपदादिनिर्णयस्तु उपलेखग्रन्थालोचनतः सम्भाव्यः। उपलेखापि नैवाश्वलायन्याः सम्भाव्यते; तत्र नित्यैकपदाः पर्चेत्याद्याश्वलायनीविरुद्धपरिगणनादर्शनात्; गन्यन्ते ह्याश्वलायन्या मैकपदाः पठितेति। एवं महर्चादिष्वपि द्रष्टव्यम्।

स्वायम्भुवपरिगणनेऽपि सङ्कलनभ्रमः प्रतीयते।

तत्त्वतस्त्विहाश्वलायन्यां शाखायां शाश्वलायनसंहितायां वा षट्शादशवर्गेषु यशीतिर्वालखिल्यर्चः सन्ति, तद्वालखिल्यसहिताः १०५२२ ऋचः सूक्त इति त्वस्माभिः सुनिश्चित मिति॥

अथासां शाखानां कतमा मवलम्ब्येद मैतरेयकं प्रोक्त मिति विचारस्येतर्हि प्रक्रतोऽवसरः समुपस्थितः। दृश्यते हि ब्राह्मणग्रन्थेष्वेषा शैली,— यां शाखा मवलम्ब्याम्नायते यद् ब्राह्मणम्, तत्संहितायां ये मन्त्रा आम्नाताः, तेषां प्रतीकग्रहणमात्रेण नामग्रहणमात्रेण वा विधानम्; ये मन्त्रा विधातव्या अप्यन्यशाखीया इति तत्संहितायां न दृश्यन्ते, तेषान्तु प्रपठ्य विधान मिति। तत्र प्रतीकमात्रेण यथा— "त्व मग्ने सप्रथा असि, सोम यास्ते मयोभुव इत्याज्यभागयोः पुरोऽनुवाक्ये"—इति ऐ० ब्रा० १. १. ४। आम्नातौ चैतौ मन्त्रावाश्वलायन्या मस्याम् ५. १३. ४, पुनः १, ८१. ८। नामग्रहणमात्रेण यथा— "सुकीर्त्तिं शंसति"—इति, पुनस्तदुत्तरत्र, "वृषाकपिं शंसति"—इति च ऐ० ब्रा० ६. ५. २। सुकीर्त्तिनाम सप्तर्चं सूक्तम्, वृषाकपिनाम त्रयोदशर्चं सूक्त मिहा-

( ७ )

अथेदानीं विचार्य्यमस्ति कोऽस्य विषय इति। यज्ञ एवास्य विषय इति ब्रूमः ; प्रायः सर्व्वेषामेव ब्राह्मणग्रन्थानां तत्रैव प्रवृत्तेः। यज्ञस्वरूपन्त्वेवं निरूपितं भगवता कात्यायनेन— "यज्ञं व्याख्यास्यामः। द्रव्यं देवता त्यागः"–इति ( श्रौ० सू० १. २. १, २. )। यज्ञस्वरूपं कथयिष्याम इति प्रथमसूत्रार्थः। 'द्रव्यं' पुरोडाश-चरु-सान्नाय्य-पशु-सोमादिकम्, 'देवता' अग्निविष्णुसोमेन्द्रादिकाः, देवता उद्दिश्य पुरोडाशादिद्रव्यस्य यः 'त्यागः' उत्सर्गः, स यज्ञः। तत्र "तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते। देवतासङ्गतिस्तत्र दुर्बलन्तु परम्परम्"–इत्यानुयोगिकाः। तद्धितेन देवतासङ्गतिर्यथेह— "अष्टाकपाल आग्नेयः, त्रिकपालो वैष्णवः"–इति १. १. १। चतुर्थ्या देवतासङ्गतिर्यथेह— "अग्नये प्रणीयमानाय"–इत्यादि १. ५. २, "सोमाय क्रीताय प्रोह्यमाणाय"–इत्यादि च १. ३. २। मन्त्रवर्णेन देवतासङ्गतिर्यथेह प्रयाजयागेषु ( १. ३. ६. )। तदत्र द्रव्याणि प्रसिद्धानि, मन्त्रलक्षणानि निरुक्तालोचने प्रदर्शितानि, देवतास्वरूपाणि त्विहैवानुपदं यथामति बोधयिष्यामः॥

अथ यागलक्षणभेदादीनप्यत्र किञ्चित् सूचयामः। स एव यागः प्रक्षेपाधिको होम उच्यते। "देवतायै सङ्कल्पितस्य वह्नौ प्रक्षेपो होमः"–इति हि तल्लक्षणं साम्प्रदायिकम्। आह चात्र कात्यायनः— "यजतिजुहोतीनां को विशेषः ? तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोऽनुवाक्यावन्तो यजतयः, उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः"–इति ( १. २. ५, ६, ७. )। तदेवं यागस्य द्वैविध्यम्। द्विविधमपि चैतद् यागकर्म्म प्रधानाङ्गभेदात् पुनर्द्वि-

विधम् । तद्यथा— ये च यागा यदाग्नेयोऽष्टाकपाल इत्यादिवाक्यैः दर्शपूर्णमाससंयोगेनोत्पन्नाः, ते दर्शपूर्णमासशब्दवाच्याः । तेषा मेव "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"–इति फलसाधनत्वेन विधानात् प्रधानत्वम् , तत्प्रकरणपठित मितरत् सर्वं मन्वन्वाधानादि तत्प्रयत्नपौष्कल्यं तदङ्गजातम् ; फलश्रुतिशून्याः प्रयाजादियागाः पूर्वाधारादिहोमाश्च तत्प्रकरणपठितास्तदुपकारका इति तदङ्गभाजना एव । तदुक्त मापस्तम्बेनापि यज्ञपरिभाषायाम्— "आग्नेयोऽष्टाकपालोऽग्नीषोमीय एकादशकपाल उपांशुयागश्च पौर्णमास्यां प्रधानानि, तदङ्ग मितरे होमाः"–इति ७७, ७८ सूत्रे । "सहाङ्गं प्रधानम्"–इति ( ८६ सू० ) च तत्रैव प्रधानलक्षणम् ।

ते यागाः पुनस्त्रिविधाः ; इष्टि-हौत्र-सोमभेदात् । दर्शपूर्णमासादय इष्टयः, अग्न्याधेयाग्निहोत्रादयो हौत्राः, अग्निष्टोमात्यग्निष्टोमादयः सोमाः । ते पुनस्त्रिसप्तकाः ; हवि-पाक-सोमसंस्थाभेदात् । तत्र अग्न्याधेयः, अग्निहोत्रम् , दर्शः, पौर्णमासः, आग्रयणम् , चातुर्मास्यम् , पशुबन्धश्चेति सप्त हविःसंस्थाः । सायंहोम , प्रातर्होमः, स्थालीपाकः, नवयज्ञः, वैश्वदेवः , पितृयज्ञः , अष्टकेति सप्त पाकसंस्थाः । अग्निष्टोमः , अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, आप्तोर्याम इति सप्त सोमसंस्थाः । त एव सोमयागाः पुनरेकाहाहीनसत्रभेदात् त्रिविधा भवन्ति । एतद्भिन्ना अप्यन्ये बहवः सन्ति काम्ययागाः । तद्यथेष्टयः— आयुष्कामेष्टिः, पुत्रेष्टिः, पवित्रेष्टिः, वर्षकामेष्टिः, प्राजापत्येष्टिः, वैश्वानरेष्टिः, नवसस्येष्टिः, स्वर्गेष्टि मोष्पतीष्टिः एवमादयः । गोमेधाश्वमेधादयस्तु पशुयागा उच्यन्ते , ते तु सोमान्तर्गताः । सौत्रामणी यागोऽपि सोमविकार एव ।

अस्ति चैषु यागेषु प्रकृतिविकृतिभेदः। यस्मिन् यागेऽपरविधिनिरपेक्षाणां सर्वेषा मेव कर्मणा मुपदेशः श्रुतः, स एव प्रकृतियागः; प्रकृतिवच्च विकृतिः कर्त्तव्या भवति। अत्राह चापस्तम्बः— "दर्शपूर्णमासाविष्टीनां प्रकृतिः, अग्नीषोमीयस्य च पशोः, स सवनीयस्य, सवनीय ऐकादशिनानाम्, ऐकादशिनः पशुगणानाम्, वैश्वदेवं वरुणप्रघास-साकमेध-शुनासीरीयाणाम्, वैश्वदेविक एककपाल एककपालानाम्, वैश्वदेव्यामिक्षामिक्षाणाम्, ०—०, अग्निष्टोम एकाहानां प्रकृतिः, द्वादशाहो ऽहर्गणानाम्, गवामयनं सांवत्सरिकाणाम्, निकायिनान्तु प्रथमः"—इति (य० प० सू० ११६—१४४ सूत्राणि)। एषु सर्वेष्वेव सूत्रेषु प्रकृतिरित्यनुवर्त्तत इति बोध्यम्॥

देवता। सर्वेष्वेतेषु यागेष्वङ्गयागेषु च यत्र कुत्रचित् यस्य कस्यचित् द्रव्यादेः प्रार्थनीयफलदानसामर्थ्य मारोपयन् यां यां च स्तुतिं करोति, तत्स्तुतिमन्त्रस्य मैव देवता, तादृशस्तुतिमन्त्रप्रधानः स च यागस्तद्दैवतो मन्यते। तदाह निरुक्तकारो भगवान् यास्कः— "यत्काम ऋषिर्यस्यां देवतायां मार्थपत्य मिच्छन् स्तुतिं प्रयुङ्क्ते, तद्दैवतः स मन्त्रो भवति"—इति (निरु० ७. १. १.), "यो देवः सा देवता"—इति च (७. ४. २.)। "देवो दानाद्वा, दीपनाद्वा, द्योतनाद्वा, द्युस्थानो भवतीति वा"—इति देवशब्दनिर्वचनञ्च तत्रैव। तदेव मिन्द्रवाय्वादीना मचेतनानां वृष्ट्यादिदानहेतुकम्, याजावरराजादीनां चेतनानां चार्थादिदानहेतुकं देवत्वम्; अश्वादिजीवाना मजीवानाञ्च ग्रावादीनां दीप्तिहेतुकं देवत्वम्; अग्निचन्द्रनक्षत्रादीनां ब्रह्मवर्चस्विनां विदुषाञ्च द्योतनहेतुकं देवत्वम्; सूर्यधूर्मकरादीनां तल्लोकस्थानां तारकादीनाञ्च द्युस्थत्व-

निबन्धनं देवत्वम्; यत्र त्वीश्वरे सर्व एवैते गुणा उपपद्यन्ते, तस्य देवत्वस्य तु कैव कथा। तदेव मात्रह्मस्तम्बपर्यन्तानां सर्वेषा मेव पदार्थानां देवत्व मुपगम्यते। द्युस्थले सति दानादिगुणवत्त्व सिद्ध मेक मेव देवलक्षणं स्वीकार्यं मिति मते तु सूर्येन्द्राग्न्यनिलेन्दुप्रभृतीनां मूलतो द्युस्थाना मेव पदार्थानां मुख्यं देवत्वम्, तत्तत्स्थानभक्तिसाहचर्यतस्त्वन्येषां भूरादिलोकानां तत्रत्याना मश्वसोमौषध्यादीना मपीत्येव विशेषः।

अन्यच्चोक्तं यास्केन—"तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः"-इति (७. २. १.), "तासां (तिसृणां देवतानां) भक्तिसाहचर्यं व्याख्यास्यामः। अथैतान्यग्निभक्तीनि— अयं लोकः०—० ये च देवगणाः समाम्नाताः प्रथमे स्थाने"-इत्यादि (७. २. १.) च। तानि च प्रथमे स्थाने समाम्नातानां देवानां नामानि निघण्टावाम्नातानि "अश्वः शकुनि. मण्डूकाः"-इत्यादीनि (५. ३. १-३६.) षट्त्रिंशत् द्रष्टव्यानि। व्याख्याताश्च ता देवता निरुक्ते समन्त्रोदाहरणम्— "अथ यानि पृथिव्यायतनानि स्तुतिं लभन्ते, तान्यतोऽनुक्रमिष्यामः। तेषा मश्वः प्रथमागामी भवति"-इत्यादिना (६. १-४३.)। एवम् "अथैतानीन्द्रभक्तीनि— अन्तरिक्षलोकः०—० ये च देवगणाः समाम्नाता मध्यमे स्थाने"-इत्यादि चोक्तं तत्र तदुत्तरम् (७. २. ३.)। मध्यमे स्थाने समाम्नातानां देवानां नामानि च तत्रैव निघण्टौ— "श्येनः सोमः चन्द्रमाः"-इत्यादीनि षट्त्रिंशत् (५. ५. १—३६.)। व्याख्याताश्च ता अपि देवता निरुक्ते समन्त्रोदाहरणम्— "श्येनो व्याख्यातस्तस्यैषा भवति"-इत्यादिना (११. १—५०.)। एवम् "अथैतान्यादित्यभक्तीनि — असौ लोकः ०—० ये च देव-

गणाः समाम्नाता उत्तमे स्थाने"-इत्यादि चोक्तं तत उत्तरम् (७. ३. ४.)। उत्तमे स्थाने समाम्नातानां देवानां नामान्यपि तत्रैव निघण्टौ— "अश्विनौ उषाः सूर्या"-इत्यादीनि एकत्रिंशत्यदान्याम्नातानि (५. ६. १—३१.)। व्याख्याताश्च ता अपि देवता निरुक्ते समन्त्रोदाहरण मेव— "अथातो द्युस्थाना देवतास्तासा मश्विनौ प्रथमागामिनौ भवतः"-इत्यादिना (१२. १—४६.)। तदेवं प्रधानतो देवतात्रित्वेऽपि स्थानभक्त्यादितो तद्बहुत्वं च न विरुद्धम्। तत एवेद मुक्तं तत्र तेनैव— "तासां (तिसृणां देवतानां) माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि"-इति (७. २. १.)। भागो विभागो भक्तिश्चेत्यर्थः। महाभागस्य भावो माहाभाग्यम्। तच्च माहाभाग्यम् एकस्थानभाक्त्वेन, एकस्मिन् मन्त्रे साहचर्यतयाम्नातत्वेन, एककर्मभाक्त्वेन, एकवाच्यभाक्त्वेन च भवति। तस्मान्माहाभाग्यादेव देवबहुत्वं स्वीकार्य मिति तदर्थः। तदित्थं माब्रह्मस्तम्बपर्यन्तानां सर्वेषा मेव पदार्थानां पारिभाषिकं देवत्व मभ्युपगत्यैव "यत्काम ऋषिर्यस्यां देवतायामार्थपत्य मिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति"-इत्युक्त (निरु० ७, १, १.) मिति फलितम्। तस्मात् वैदिकमन्त्रेषु स्तुता एव पदार्थाः तन्मन्त्रतः स्तुतिकाले एव च देवत्वेन स्तुत्या भवन्ति; नान्ये नाप्यन्यतेत्येव याज्ञिकसिद्धान्तः। अत एव ते मन्त्रमयी देवतेत्येव स्वीकुर्वन्तीति च प्रवादः।

तत्रापि प्रधानतस्त्रयस्त्रिंशदेव देवताः सर्वसंहितासु परिगणय्य दर्शिताः। तद्यथा— "ये त्रिंशति त्रयस्परो देवासो बर्हिरासदन्। विदन्नह द्वितासनन्"-इति ऋ० सं० ८, २८, १। "त्रयस्त्रिंशताऽस्तुवत भूतान्यशाम्यन् प्रजापतिः परमेष्ठ्यधिपतिरासीत्"-इति

वा० सं० १४. ३१। "यस्य त्रयस्त्रिंशद्देवा निधिं रक्षन्ति सर्वदा। निधिं त मद्य को वेद यं देवा अभिरक्षथ"–इति अथ० सं० १०. २१. ४. २३। ब्राह्मणेषु च प्रायः सर्वेष्वेवैव मेव।

तथा चास्मिंश्च ब्राह्मणे देवानां त्रयस्त्रिंशत्सङ्ख्याकत्व मसकृदाम्नातम्। तद्यथा— "त्रयस्त्रिंशद्वै देवा अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च"–इति (३. २. ११.)। एव मप्येतदतिरिक्ता अपि देवताः समाम्नाताः। तद्यथेहैव प्रायणीयेष्ट्यारम्भे (१. २. १.)— "पथ्यां यजति", "अग्निं यजति", "सोमं यजति", "सवितारं यजति", "उत्तमा मदितिं यजति"–इति। तदत्राग्निभिन्नाः सर्वा एव तास्त्रयस्त्रिंशद्भ्योऽतिरिक्ताः श्रुताः ; अथ सवितुरादित्यविशेषत्वेन त्रयस्त्रिंशदन्तःपातित्वस्वीकारेऽप्यन्यासां तिसृणां तदतिरिक्तत्व मपरिहार्यम्। अत एव निघण्टौ दैवते काण्डे वस्वादिभिन्ना अपि बह्वो देवता आम्नाताः। प्रदर्शितत्रयस्त्रिंशद्गणनन्तु सोमप-पर मित्येव। तदाहैवैतरेये— "त्रयस्त्रिंशद्वै देवाः सोमपास्त्रयस्त्रिंशदसोमपाः। अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः, प्रजापतिश्च, वषट्कारश्च ; एते देवाः सोमपाः। एकादश प्रयाजाः, एकादशानुयाजाः, एकादशोपयाजाः ; एतेऽसोमपाः पशुभाजनाः। सोमेन सोमपान् प्रीणाति, पशुनाऽसोमपान्" इति २. २. ८। एवं शतपथादिष्वपि द्रष्टव्यम्।

तदत्र पूर्वं सोमपानां त्रयस्त्रिंशत्सङ्ख्याकानां देवानां परिचयाय किञ्चिद् यतामहे।— 'वसवः'–इति पदं निघण्टौ रश्मिनामसु पठितम् (१. ५. १०.), पुनः द्युस्थानदेवनामसु च (५. ६. २९.)। निरुक्तकारस्त्वस्य वसुशब्दस्य निर्वचनादिक मेव मकरोत्— "वसवः। यद् विवसते सर्वम्। अग्निर्वसुभिर्वासव इति

समाख्या ; तस्मात् पृथिवीस्थानाः"—इत्यादि, "इन्द्रो वसुभिर्वा-सव इति समाख्या ; तस्मान्मध्यमस्थानाः"—इत्यादि, "वसवः= आदित्यरश्मयः, विवासनात् ; तस्माद् द्युस्थानाः"—इत्यादि च (१२, ४, ७, ८, ८.)। तदेवं निरुक्तमते पार्थिवाग्निशिखाः, वैद्युताग्निप्रभाः, उत्तमाग्निरश्मयश्चेति तमोविवासनहेतवस्त्रि-स्थानास्त्रिविधा वसवो निर्णीताः, तत्रतत्र तत्तन्निगमसमाम्नान-प्रदर्शनादिभ्यः। तदेतत् सर्वं तत्तन्निरुक्तग्रन्थत एवावगन्तव्यम्। शतपथश्रुतितोऽपि वसूनां त्रिस्थानत्वादिकं नैवावगम्यते, परं तत्त्व-परयैव। तथाहि— "कतमे वसव इति। अग्निश्च पृथिवी च, वायुश्चान्तरिक्षञ्च, आदित्यश्च द्यौश्च, चन्द्रमाश्च नक्षत्राणि चैते वसवः ; एतेषु हीदं सर्वं वसुहितमेते हीदं सर्वं वासयन्ते ; तद्यदिदं सर्वं वासयन्ते तस्माद् वसव इति"—इति (१४. ५. ७. ४.)। एवमपि "स गायत्री मेवान्वये वसुभ्यः प्रातस्सवनेऽभजत्"—इत्यादिश्रुतिषु (ऐ० ब्रा० ३. २. २.) वसूनां गायत्रीच्छन्दोभागित्वकल्पनात्, अग्निना सहाम्नानात्, प्रातस्सवनदेवत्वेनोपन्यासाच्च पार्थिवं स्थान मेव प्रधानं बुध्यते। तैत्तिरीयारण्यके तु वसूनां पार्थिवाग्निरूपत्वं स्पष्ट माम्नातम्— "अग्निश्च जातवेदाश्च सहोजा अजिराः प्रभुः। वैश्वानरो नर्यपाश्च पङ्क्तिराधाश्च सप्तमः। विसर्पैवाष्टमोऽग्नीनां एतेऽष्टौ वसवः चिता"—इति (१. ८. १.)। स्यादेवम् "अग्येते उत्तरे (मध्यमोत्तमे) ज्योतिषी अग्नी उच्येते"—इति (७. ४. ३.) निरुक्तसिद्धान्तात् अग्निविशेषाणां वसुदेवानां त्रिस्थानत्व मप्यव्या-हतम्। तत्त्वतस्त्वष्टौ वसवो ऽष्टविधा अग्नय इत्येव सारम्।

'रुद्राः'—इति पदं निघण्टौ माध्यमिकदेवनामसु पठितम् (५. ५, ८.)। तथा चैषा मन्तरिक्षस्थत्वेन वायुभक्तित्व मवगम्यते।

तन्निर्वचनादिकमप्येव मवादि यास्केन —"रुद्रो रौतीति सतः रोरूयमाणो द्रवतीति वा रोदयतेर्वा। यदरुदत् तद्रुद्रस्य रुद्रत्व मिति काठकम्। यदरोदीत् तद्रुद्रस्य रुद्रत्व मिति हारिद्रविकम्" –इत्यादि (१०. १. ५.)। एतेन च रुद्राणां वायुविशेषत्व मेव प्रतीयते। ततस्त्वेनैव तदुत्तरसूक्तेन "अग्निरपि रुद्र उच्यते" –इत्यादिना (१०. १. ७.) रुद्रस्याग्निविशेषत्वे निर्धारितेऽपि माध्यमिकत्वाद् वायुभक्तित्वं न विरुद्धम्; विद्युदग्नेर्ह्यान्तरिक्षान्माध्यमिकत्वम्, तस्माद् वायुसभागत्वं च सुव्यक्तम्। ऐतरेयेऽप्यत्र "(सः) त्रिष्टुभ मिन्द्राय रुद्रेभ्यो मध्यन्दिने (व्यभजत्)" –इति श्रुतौ (३. २. ३.) रुद्राणां त्रिष्टुप्छन्दोभागित्वकल्पनात्; इन्द्रेण सहाम्नानात्, माध्यन्दिनसवनदेवत्वेनोपन्यासाच्चान्तरिक्षस्थानत्व मेव बुध्यते। शतपथेऽपि रुद्रा वायुविशेषा एव विश्रुताः, परं त्वन्यथैव। तद्यथा— "कतमे रुद्रा इति, दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति; तद्यद्रोदयन्ति तस्माद् रुद्रा इति (१४. ५५. ७. ५.)। अथात्र तैत्तिरीयारण्यकम्— "अथ वायोरेकादश। ०——०। प्रभ्राजमाना व्यवदाता याश्च वासुकि-वैद्युताः। रजताः परुषाः श्यामाः कपिला अतिलोहिताः। ऊर्ध्वा अवपतन्ताश्च वैद्युत इत्येकादश" –इति (१. ८. ४.)। तदित्थं विद्युत्संश्लिष्टाः स्फूर्जथुनिदानरूपा आन्तरिक्ष्या वायुविशेषाः तथाविधवायुसंश्लिष्टा विद्युदग्नयो वा रुद्राः, स्फूर्जथुश्च तेषां रोदन मिति निश्चितम्।

'आदित्याः'–इति पदं निघण्टौ द्युस्थानदेवतासु पठितम् (५. ६. २४.)। तथा चैषां द्युस्थत्वेन सूर्यभक्तित्व मवगम्यते। तन्निर्वचनादिकमप्येव मवादि यास्केन— "आदित्यः कस्मात्? आदत्ते

रसान्, आदत्ते भासं ज्योतिषाम्, आदीप्तो भासा इति वा, अदितेः पुत्र इति वा"–इति (२. ४. १.), "अथातो द्युस्थाना देवगणास्तेषा मादित्याः प्रथमागामिनो भवन्ति"–इत्यादि च ( १२. ४. १. )। तदेतेन तेषा मादित्यानां सूर्यविशेषत्वं द्युस्थानत्वं चावगम्यते। "आदित्येभ्यस्तृतीयसवने"–इत्यादिश्च ( ३. २. २. ) अत्र ऐतरेयश्रुतिः ; तदेतत्तृतीयसवनभाक्त्वेन चादित्यानां द्युस्थानत्व मेव बुध्यते। श्रूयतेऽप्येवं शतपथे— "कतम आदित्या इति, द्वादश मासाः संवत्सरस्यैत आदित्याः ; एते हीदं सर्व माददाना यन्ति। तद्यदिदं सर्व माददाना यन्ति, तस्मादादित्या इति"–इति ( १४. ५प्र० ७. ६. )। तदित्थ मादित्यापरपर्यायसूर्यकतमासरूपकालाना मप्यादित्यत्वम्, सौरत्वेन च तेषां द्युस्थानत्व मपि सुवचम्।

गुरुचरणैस्त्विह— 'निरुक्ते व्याख्याताः सवित्रादयो द्वादश सूर्यविशेषा एवादित्याः'–इत्युपदिष्टम्। तथाच १२. २, इख०—

"सविता, ०—० तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति"–इत्याद्युक्तः प्रथम आदित्यः।

"भगः, तस्य कालः प्रागुत्सर्पणात्"–इत्याद्युक्तो द्वितीयः।

"सूर्यः, सर्त्तेर्वा सुवतेर्वा स्वीर्यतेर्वा"–इत्याद्युक्तस्तृतीयः। 'स पुनरयं भगकालात् प्रतः सूर्यो भवति'–इति तत्र दोर्गी वृत्तिः।

"अथ यद्रश्मिपोषं पुष्यति, तत् पूषा भवति"–इत्याद्युक्तश्चतुर्थः। 'आपूर्णस्तेजसा'–इति तद्वृत्तिः।

"अथ यद् विषितो भवति, तद् विष्णुर्भवति"–इत्याद्युक्तः पञ्चमः।

"विश्वानरः [ प्रत्यृतः सर्वाणि भूतानि ७. ६. १. ]"–इत्याद्युक्तः षष्ठः।

"वरुणः [ वृणोतीति सतः १०. १. ३. ]"–इत्याद्युक्तः सप्तमः।

"केशी, केशा रश्मयस्तद्वान्"–इत्याद्युक्तोऽष्टमः।

"अथ यद्रश्मिभिरभिकम्पयन्नेति"–इत्याद्युक्तो वृषाकपिर्नवमः ।
'वर्षिता चावश्यायानां कम्पनश्च भूतानाम्'–इति तद्वृत्तिः ।
"यमः [ यच्छतीति सतः १०. २. ६. ]"–इत्याद्युक्तो दशमः ।
"अजएकपाद्, अजनः एकः पादः ; एकेन पादेन पातीति वैकेन पादेन पिबतीति वैकोऽस्य पाद इति वा"–इत्याद्युक्त एकादशः ।
"अजश्चैकपाद्"–इति च तत्र तत उत्तरम् ।
'समुद्रः [सम्मोदन्तेऽस्मिन् भूतानि २. ३. १.]"–इत्याद्युक्तो द्वादशः ।

तदित्थं द्वादशमासकाला द्वादशविधसूर्या वा द्वादश आदित्या गम्यन्ते । अभिधानभेदात् कर्मभेदाच्च देवताभेदो नैरुक्तादिसम्मत एव । अतएव एकस्यैव तेजसोऽग्निविद्युत्सूर्येति त्रित्वम्, अप्येकस्यैवाग्नेः अग्निः, जातवेदाः, द्रविणोदाः, वैश्वानरः इति चत्वार्यभिधानानि पृथग्देवतात्वेनाम्नातानि ( निघ० ५. १. ०. ) । एतच्चेदं निरुक्ते स्फुटम्— कर्मपृथक्त्वात्० —० पृथगपि स्तुतयो भवन्ति तथाभिधानानि"–इत्यादि ७. २. १ द्रष्टव्यम् ।

अदितेः पुत्रा इति चादित्याः श्रुतिपरिचिताः सन्त्यष्टौ, तथाहि ऋ० सं० २. २७. १, य० वा० सं० ३४. ५४—

"इमा गिर आदित्येभ्यो घृतस्नूः सनाद् राजभ्यो जुह्वा जुहोमि ।
शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः"–इति ।

अत्र 'तुविजातः'–इत्यस्य 'बहुजातश्च धाता'–इत्यर्थः कृतो यास्केन ( १२. ४. २. ) । तदेवमस्या ऋचि सप्तादित्यनामानि श्रुतानि ; अष्टमस्त्वादित्यो मार्तण्डनामा । स चान्यत्र श्रुतः । तद्यथा ऋ०सं० १०. ७२. ८—

"सप्तभिः पुत्रैरदितिरुप प्रैत् पूर्व्यं युगम् ।
प्रजायै मृत्यवे त्वत् पुनर्मार्ताण्डमाभरत्"–इति ।

उपपद्यते चैवम् "अष्टौ पुत्रासो अदितेः"–इति (ऋ० सं०, १०, ७२, ८.) श्रुतिश्च। "अदितिरन्तरिक्षम्"–इत्यैतरेयकम् (३. ३. ७.)। "अदितिरदीना देवमाता"–इत्यादि च नैरुक्तम् (४. ४, २, ३.)। न एतेऽष्टावादित्या आन्तरिक्षा इत्येषां नालोप्रयोग इति च ध्येयम् ॥

अथ प्रदर्शितैतरेयश्रुतिसमाम्नानक्रमतः प्रजापतिं निरूपयामः— 'प्रजापतिः'–इति पदं निघण्टावन्तरिक्षस्थानेष्वाम्नातम् (५. ४. २८.)। "प्रजापतिः, प्रजानां पाता वा पालयिता वा" –इत्याह यास्कः (निरु० १०. ४. ५.)। "प्रजापतिर्वा इद मेक एवाग्र आस, सोऽकामयत प्रजायेय भूयान्स्यां मिति"–इत्यादि च ऐ. ब्रा. २. ५. १। तदित्थं परमेश्वर एव प्रजापतिरभिगम्यते। कालवाच्यपि प्रजापतिशब्दः श्रूयते— "संवत्सरः प्रजापतिः; सोऽस्य सर्वस्य प्रजनयिता"–इति च तत्रैव (२. ५. ७.)। "प्रजापतिश्चरति गर्भे अन्तः"–इति (य. वा. सं. ३१, १९.) श्रुतेः जीवोऽपि प्रजापतिर्मन्यते। "यः (प्रजापतिः) देवेभ्य आतपति" –इत्यादि च तत्रैव (३१. २०.), "प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्यां सावित्रीम्"–इत्याद्यैतरेयकम् (४. २, १.), प्रजापतिर्वै स्वां दुहितर मभ्यध्यायत्, तद्दिव मित्यन्य आहुः उषस मित्यन्ये"–इत्यादि च तत्रैव (३. ३. ९.)। एवमाद्याम्नायेभ्यः सूर्योऽपि प्रजापतिरवगम्यते। "एष वै प्रजापतिर्यदग्निः"–इति तु तैत्तिरीयकम् (ब्रा० १. १. ५. ५.)। "प्रजापतिर्हि वाक्" –इति च तत्र तदुत्तरम् (१. ३. ४. ५.)। "रूपं वै प्रजापतिः" –इति, "नाम वै प्रजापतिः"–इति च तत्रैव (२. २. ७. १.)। "यज्ञो वै प्रजापतिः"–इति च तै० ब्रा० १. ३. १०. १०। गत-

पथब्राह्मणे "कतमः प्रजापतिः"-इत्याशङ्क्य "यज्ञः प्रजापतिः" -इति समाहितम् (१३. ५प्र. ७.)। तैत्तिरीयसंहितायान्तु "मन एव हि प्रजापतिः"-इति (६. ६. १०. ३.) मनसोऽपि प्रजापतित्व माम्नातम्। "प्रजापतिः स्यात् वायुराकाश आदित्यो वा"-इति चाह मीमांसासूत्रभाष्ये शबरः (१. २. १०.)। तदित्थं प्रजापतिशब्दो बह्वर्थः। अत एवाम्नात मिह— "अपरिमितो वै प्रजापतिः"-इति (६. १. २.)। शतपथे ऽप्येवं श्रुतम्— "सर्वं वा इदं प्रजापतिर्यदिमे लोका यदिदं किञ्च"-इति (५. १. ३. ११.)। एव मपि "दिवो धर्ता भुवनस्य प्रजापतिः (ऋ. सं. ४. ५३. २.) -इत्याद्याम्नानप्राबल्यात् आदित्य एव मुख्यः प्रजापतिरित्यस्माकम्॥

अथैतरेये सोमप-देवानां त्रयस्त्रिंशत्सङ्ख्यापूरको वषट्कारः श्रुतः। "वौषडिति वषट्कारः"-इत्याहाश्वलायनः (श्रौ० सू० १. ५. १२। "उच्चैस्तरां वा वषट्कारः"-इति च पा० सू० १. २. ३५। "यस्यै देवतायै हविर्गृहीतं स्यात्, तां मनसा ध्यायेद् वषट् करिष्यन्निति ह विज्ञायते"-इत्याह यास्कः (निरु० ८. २. ७.)। श्रुतञ्चैतद् वचन मिहैतरेये। तथाहि— "यस्यै देवतायै हविर्गृहीतं स्यात्, तां मनसा ध्यायेद् वषट् करिष्यन् साक्षादेव तद्देवतां प्रीणाति, प्रत्यक्षाद् देवतां यजति"-इति ३. १. ८। तदित्थं वौषडिति उच्चैर्ध्वनिरेव वषट्कारो देव इति सुवचम्। यत्त्वाम्नातं शतपथे— "प्राणो वै वषट्कारः"-इति (४. २. १. २९.) तत्तु स्यादौपचारिकम्; उच्चैर्ध्वनिः प्राणभृतां बलवता मेव भवतीति॥

शतपथब्राह्मणे हि वस्वादिषु त्रयस्त्रिंशत्सङ्ख्याकेषु देवेषु वषट्कारो न श्रूयते, श्रूयते त्विन्द्रपर। तथाहि— "अष्टौ वसव एका-

दश रुद्रा द्वादशादित्यास्त एकविंशत्, इन्द्रश्च प्रजापतिश्च त्रयस्त्रिंशौ"–इति ११. ६. ३. ५। तत्रैवोत्तरत्र (१४. ५प्र० ७.)—"कतम इन्द्रः ?"–इत्याशङ्क्य "स्तनयित्नुरेवेन्द्रः"–इति सिद्धान्तितम्। अत्र स्तनयित्नुहेतुर्मेघचालको वायुरेवार्थो बोध्यः। तथा तत्रैव तत उत्तरं श्रुतम्— "कतमः स्तनयित्नुः ?"–इति प्रश्नपूर्वकम् "अशनिरिति"–इति। अत्राप्यशनिहेतुः स्तनयित्नुरित्येवार्थः प्रतीयते। यास्काचार्येण त्विन्द्रशब्दो बहुधा निरुक्तो बहुदाहृतश्च (४. ५. ७. २.); ततोऽपि मेघचालको वायुरेवेन्द्र इति प्रधानतोऽवगम्यते, परमेश्वरात्मादित्यकालाद्यर्थाश्च गम्यन्ते यथाप्रकरणम्। तदेतत्सर्वं मत्सङ्कृतायां नैरुक्तदेवतसूच्यां सूचितम्, तन्निर्वचनादिकन्त्विहाप्युपदं दर्शयिष्यामः॥

अपि शतपथे ब्राह्मणे (४. २. ७. २.) सोमपदेवेषु द्यावापृथिव्योर्द्वित्त्वं शस्तत्रयस्त्रिंशत्त्वे अभ्युपगम्य, तेषां सुत्वादकाश्च प्रजापतेश्चतुस्त्रिंशत्त्वमाम्नातम्। तथाहि— "अष्टौ वसव एकादश रुद्रा द्वादशादित्या इमे एव द्यावापृथिव्यौ त्रयस्त्रिंशौ; त्रयस्त्रिंशद्वै देवाः, प्रजापतिश्चतुस्त्रिंशः"–इति॥

प्रयाजसोमपानाम्।— तत्र प्रयाजदेवानां परिचयाय ऐतरेयोक्तं "समिधो यजति"–इत्यादिकमेवेष्टम् (२. १. ४.)। तैत्तिरीयेऽप्येवम्— समिधः, तनूनपात् नराशंसो वा, इडः, बर्हिः, दुरः, उषासानक्ता, दैव्याहोतारा, तिस्रो देव्यः, त्वष्टा, वनस्पतिः, स्वाहाकृतयः,— इत्येवैकादशविधाः (ब्रा० ३. ६. २.)। प्रधानस्य यागस्य प्रमुखे या एकादश आहुतयो ह्रूयन्ते, ता एव प्रयाजाहुतयः प्रयाजयागा वा उच्यन्ते। तन्मन्त्राणां देवाप्रीणनहेतुत्वात् वेदेषु आप्रीति व्यपदेशः। ते त्वाप्रियो यथव्याख्याताः सर्वत्र द्वादश,

समिदादयः प्रयाजदेवता अपि द्वादशैव श्रुताः, तथापि तत्र द्वितीयतृतीययोर्वैकल्पिकत्वेन विधानादेकत्वसिद्धेरेकादशैव पर्यवसन्ना भवन्ति। तदेतत् सर्वं सर्वब्राह्मणेषु विश्रुतम्, भगवता यास्केन च अष्टोत्ततम् (८. ३. ७.)। समिदादिव्याख्यानञ्च निरुक्तादौ सुव्यक्तम्, यथा — "इध्मः (समिधः) समिन्धनात्•--• यज्ञेध्म इति कात्थक्यः", "तनूनपात् आज्यं भवति", "नराशंसो यज्ञः", "इडः•--• ईडितव्यः (यज्ञियाग्निः)", "बर्हिः परिबर्हणात् (कुशः)", "द्वारः (दुरः)•--• गृहद्वारः", "उषासानक्ता = उषाश्च नक्ता च; उषा व्याख्याता (रात्रेःअपरः कालः), नक्तेति रात्रिनाम", "दैव्याहोतारा — दैव्यौ होतारौ; अयञ्चाग्निरसौ च मध्यमः", "तिस्रो देव्यः ('इडा', 'भारती', 'सरस्वती')", "त्वष्टा = माध्यमिकः (रूपकृत्)", "वनस्पतिः = यूपः", "स्वाहाकृतयः, स्वाहेत्येतत् सु + आहेति वा, स्वा वागाहेति वा, स्वं प्राहेति वा, स्वाहुतं हविर्जुहोतीति वा"–इति (८.२. १—८. ३. ५.)। "दैव्याहोतारा — नेष्टापोतारौ"–इति तै• ब्रा• ३. ६. १२. ६। 'दैव्यहोतृशब्दवाच्यौ यद्यानुयाजदेवस्य द्वौ देवौ'–इत्यादि तत्र सा• भा•। तथाच तत्तन्नामकौ द्वावृत्विजौ। तदेव सिमिदादयः स्वाहाकृत्यन्ताः सर्व एवैते पदार्था यज्ञसम्बन्धित्वात् देवत्वेन स्तुता इत्येव ब्राह्मणस्रुता मायय: फलितः॥

एवं प्रधानयागस्य पश्चाद् या एकादश आहुतयो हूयन्ते, ता एवानुयाजाहुतयोऽनुयाजयागा वा उच्यन्ते। तासा मेकादशानां माहुतीनां देवा इहैतरेये न श्रुतास्तैत्तिरीयके तूपलभ्यन्ते। तद्यथा— "बर्हिः, द्वारः, उषासानक्ता, जोष्ट्री, ऊर्जाहुती, दैव्याहोतारा, तिस्रो देव्यः, नराशंसः, वनस्पतिः, बर्हिः, स्विष्टकृत्,—

इति तै० ब्रा० ३. ६. १२. १४ । अत्र बर्हिषो द्विरुपादानं किञ्चिद्विशेषाभिप्रायम्, तत् तत्रैव द्रष्टव्यम् ॥

उपयाजदेवाना मपि परिचयस्तैत्तिरीयत एवावगम्यते। तद्यथा—"समुद्रः, अन्तरिक्षम्, सविता, अहोरात्रे, मित्रावरुणौ, सोमः, यज्ञः, छन्दांसि, द्यावापृथिवी, दिव्यं नभः, वैश्वानरः,–इति (तै० सं० १. ३. १० ; ६. ४. १. ६—१६.) ॥

एवञ्च सोमपासोमपदेवानां समुदितानां संख्या चतुष्षष्टिः पञ्चषष्टिर्वा गम्यते। इतोऽतिरिक्ता अपि सन्ति ये पारिभाषिका देवास्तेषां परिगणन मसम्भव मेव। तदेवं देवाना मसङ्ख्येयत्वेऽपि दाशतय्यां प्रधानतया अग्निवाय्विन्द्रसूर्याणां स्तुत्यादिदर्शनात् त एव चत्वारो देवा मुख्या गम्यन्ते; तत्रापीन्द्रस्य प्रायो वायुविशेषत्वेनोपगमात् देवतात्रित्व मेव सम्पद्यते। तदाह यास्कः— "तिस्रो देवता इति नैरुक्ताः;— "अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः"–इति (७. २. १.)। तदेव मत्र पृथिव्या मग्निरेव मुख्यो देवः, जलादयस्तदेकस्थानास्त्वप्रधानाः, अश्वादयश्चेतना इध्मादयोऽचेतनाश्च पारिभाषिकाः। अन्तरिक्षे वायुर्वेन्द्रो वा मुख्यो देवः, पर्जन्यादयस्तदेकस्थानास्त्वप्रधानाः, श्येनादयोऽन्तरिक्षचराश्चेतना वागादयोऽचेतनाश्च पारिभाषिकाः। द्युलोकेऽप्येवं सूर्यो मुख्यः, अश्विप्रभृतयस्तदेकस्थानास्त्वप्रधानाः, पारिभाषिकदेवास्तु तत्र नैव सन्तीति गम्यते; ब्राह्मणग्रन्थेषु तत्त्वानां तथाविधाना मनुल्लेखादिति ॥

तदत्र पारिभाषिकदेवत्व मापन्नाना मश्वशकुन्यादीनाञ्चेतनानाम्, अपीध्मवागादीना मचेतनानाञ्च देवशरीरवत्त्वं कलत्रापत्यादिमत्त्वं रागद्वेषादियुक्तत्वञ्च नास्तीति तु लाङ्गलस्तम्भ-पांशुम-

पादुकैर्हालिकैरप्यभिगन्तुं शक्यते, मुख्यदेवाना मग्न्यादीनां तत्तदस्तिनास्ति वेति संशयः स्याद् बालाना मवेदविदुषाम् ; पौराणिका एव हीदृशसंशयस्योत्थापकाः। वस्तुतो यथा पारिभाषिकदेवानां प्रत्यक्षदृश्यानां सर्वत्र सर्वैर्व्यवहार्याणा मिश्रादीनां देवशरीराद्यभाववत्त्वेऽपि देवत्वं सकलैर्वोररीकार्यम्, मुख्याना मग्न्यादीना मपि देवानां नूनं तथैव ; शास्त्रोक्ततत्तन्नामनिर्वचनस्थाननिर्देशकर्मनिरूपणोत्पत्तिवर्णनेभ्यस्तथैव प्रतीतेः, ब्राह्मणविहिताग्निप्रणयनादीना मत्रैवोपपत्तेः, तत्तन्मन्त्रेष्वपि तादृशार्थप्रतिपादकवर्णनश्रुतेः, सोदाहरणदेवलक्षणान्यतमश्रुतितोऽपि तथैवावगतेः, दृष्टेभ्य एवैभ्य उपपन्ने च देवकार्यफले अदृष्टविग्रहादिकल्पनानौचित्याच्चेति।

तदत्र प्रथम मग्न्यादिदेवानां नामनिर्वचनादिकं दर्शयामः—

"अग्निः कस्मात् ? अग्रणीर्भवति, अग्रं यज्ञेषु प्रणीयते"–इत्याद्यग्निनिर्वचनानि ( निरु॰ ७. ४. १. )। एष भौतिकोऽग्निरेव यज्ञेषु प्रणीयमानो दृश्यते, न त्वप्रत्यक्षः कश्चिदंसारूढयज्ञुर्वदनो रक्ताक्षः पुरुषः ; प्रत्यक्षगम्यं ह्येतत्।

"अग्निः पृथिवीस्थानः"–इति ( निरु॰ ७. २. १. ) तत्स्थाननिर्देशः। एष भौतिकोऽग्निरेवात्र पार्थिवेषु क्वचाद्यस्मच्छरीरेषु सर्वत्रैव विद्यते ; विज्ञानगम्यं ह्येतत्। अस्ति चेह मन्त्रलिङ्गं यथा—

त्व मग्ने यज्ञानां होता विश्वेषां हितः।

देवेभिर्मानुषे जने"–इति ऋ॰ सं॰ ( ६. १६. १. )।

हे 'अग्ने !' 'विश्वेषां यज्ञानां' 'होता' 'त्वम्' 'देवेभिः' देवैः सूर्यरश्मिभिः 'मानुषे जने' मर्त्यलोकेऽत्र 'हितः' सर्वपदार्थेष्वन्तर्निहित इति तदर्थः। तदेतस्मान्मन्त्रवर्णादेष एव सोऽग्निः प्रतीयते ;

न ह्यग्निलोकस्तस्य कस्यचित् मनुष्यादिवद्विग्रहादिमतः परोक्षस्याग्नेः रश्मिभिः पृथिव्यां स्थापनं युज्यते। इयं पृथिव्येवाग्निलोक इति चेदिष्ट मेवेदं वचोऽस्माक मपि, परं तस्य पार्थिवस्य पौराणिकरूपादिमत्त्वेऽप्रत्यक्षता कथं सम्भवेताम? न हि कश्चित् पार्थिवः पदार्थः पार्थिवैरिन्द्रियैर्भवेदनुपलभ्यः। तदस्मात् स्थाननिरूपणाच्च प्रतीयतेऽस्यैव पार्थिवस्य भौतिकस्याग्नेर्देवत्व मिष्टम्, न त्वपरः क्वापि कश्चिदप्यस्त्यग्निश्चतुर्मुखो हंसारूढो देव इति।

"अथास्य कर्म,— वहनञ्च हविषा मावाहनञ्च देवानां; यच्च किञ्चिद् दार्ष्टिविषयक मग्निकर्मैव तत्"—इति निरु० ७, ३, १। तदिद मग्नेर्हविर्वहन मग्निसात्कृतहविषां धूमवाष्पाकारैरन्तरिक्षादिचारित्वेन सम्पद्यते। तदेतच्छ्रूयते— "अग्नेर्वै धूमो जायते, धूमादभ्रम्, अभ्राद् वृष्टिः"—इति शत० ५, ३, ५, १७। तथाच ऐतरेयेऽपि २, ५, ८। स्मर्यते च— "अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" —इति (म० सं० ३, ७६)। तदेवं यज्ञेषु पार्थिवेऽग्निष्वेवाग्नौ आहूयमानं बलकर माज्यचरुसोमामिक्षादि द्रव्यं सर्व मेव भस्मीभूय पूर्वं वाष्पाकारेणोपरि गच्छति, तदेव दृष्टं पुनरिहागत्य ओषध्यात्मना परिणत्यास्मच्छरीरादीनां विशेषतो बलं सम्पादयते। तच्च बलम्, तत्तदाहारजन्यबलतोऽपि प्रबलम्; यथा होमियोप्यायिकौषधानां दशतमिकेभ्यः शततमिकानाम्, तत्रापि त्रिंशत्तमादिभ्योऽपि शतादिकमाणाम्। इन्तेदानीं तादृग्ज्योतिष्टोमादियज्ञाभावात्, कालप्रभावेण देशदोषेण च साक्षात् तादृगाहारविरहाच्चास्माकं पूर्वपूर्वपुरुषेभ्यः क्रमात् प्रकृतिदौर्बल्यं प्रत्यक्ष मेव। अत एवोक्त मिद्दैवैतरेये— "यज्ञोऽपि तस्यै जनतायै कल्पते

यन्नैवं विद्वान् होता भवति"–इति (१. २. ३.)। 'जनानां समूहो जनता, तत्सुखायैव यज्ञो भवति, यस्मिन् यज्ञेऽमुना प्रकारेण विद्वान् संस्कृतद्रव्याणां होमं करोति'–इति तदर्थः। तदेतदग्निवर्द्धनं कर्म चास्यैव पार्थिवस्याग्नेः प्रत्यक्ष मिति।

अत एव तेनैव भगवता तदुत्पत्तिवर्णनं चैवम्— "विश्वानरावेते उत्तरे ज्योतिषी (विद्युत्सूर्यरूपे), वैश्वानरोऽयं यत् ताभ्यां जायते। कथं त्वय मेताभ्यां जायत इति। यत्र वैद्युतः शरण मभिहन्ति, यावदनुपात्तो भवति, मध्यमधर्मैव तावद् भवत्युदकेन्धनः शरीरोपशमनः; उपादीयमान एवायं सम्पद्यत उदकोपशमनः शरीरदीप्तिः। अथादित्यादुदीचिप्रथमसमावृत्ते आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमय मसंस्पर्शयन् धारयति, तत् प्रदीप्यते, सोऽय मेव सम्पद्यते"–इति (निरु० ७. ६. ६, ७.)। एवंविधाग्निजन्मवर्णनेन मस्यैव भौतिके ज्वलनात्मनेऽग्नावुपपद्यते, नान्यत्रेत्यपि स्पष्टम्।

अथास्मिंस्य यागप्रयोगेऽग्निप्रणयनीयाख्या ऋचो विधान मेव माम्नातम्— "अग्नये प्रणीयमानायानुब्रूहीत्याहाध्वर्युः"–इत्यादि (२. ५. ४.)। अत्र एष एव प्रत्यक्षः पार्थिवोऽग्निः प्रणीयते, न कश्चनापरो विग्रहादिमान्प्रत्यक्ष इत्यपि प्रत्यक्षगम्यम्।

किञ्चैषा अग्निप्रणयनीयमन्त्राणा मर्थग्रहणतयैव मेव प्रतीयते। तद्यथा तत्रैव विहितस्तत्प्रथमो मन्त्र एषः—

"प्र देवं देव्या धिया भरता जातवेदसम्।

हव्या नो वक्षदानुषक्"–इति (ऋ० सं० १०. १७६. २.)।

हे ऋत्विजः! 'देवं' द्योतमानं प्रज्वलित मिति यावत्, 'जातवेदसम्' अग्निं 'देव्या' द्योतमानया 'धिया' प्रज्ञया 'प्रभरत'

प्रकर्षेण हरत, प्रणीयत ; प्रज्वलितस्याग्नेः सावधानतया प्रणयनं कुरुतेत्यर्थः। तस्मिन्नग्निप्रणयनकाले हस्ताङ्गुल्यादीनां दाहो यथा न स्यात्, नापि तस्याग्नेरधःपतनं निर्वाणादिकं वा भवेदित्येतदर्थं मैवेह 'देवा धिया'–इति तत्प्रणयनकर्तुः सावधानताया उपदेशः। सोऽग्निरत्र किमर्थं सम्भरणीय इत्याह— स हि 'आनुषक्' बह्वङ्गाररूपत उपर्युपरि स्थितः सन् 'नः हव्या' अस्मद्दत्तानि हव्यानि 'वक्षत्' वहतु, यक्ष्यमाणानिन्द्रादिदेवान् प्रतीति। 'धीः'–इति प्रज्ञानामसु पठितम् (निघ० ३, ९, ७,)। 'भरत' इति "ह्रग्रहोर्भश्छन्दसि हस्य"–इति (पा० ८,२, ३२सू० १वा०) हस्य भत्वे रूपम्। "आनुषगिति नामानुपूर्वस्यानुषक्तं भवति"–इति निरु० ६, ३, ५। 'अनुषक्त मुपर्युपरि लग्न मित्यर्थः'–इति च निघण्टुभाष्ये देवराजः (४, २, ५६,)। उपर्युपरिलग्नता चास्मिन्नेव प्रचयाइमें प्रज्वलिताङ्गाररूपेऽग्नावुपपद्यते, नान्यतेति च व्यक्तमेव।

सोदाहरणदेवलक्षणान्यतमश्रुतिश्चैषा—

"न हि देवा अन्योऽन्यस्य गृहे वसन्ति; नर्तुर्ऋतौ"–इति ऐ० ब्रा० ५, २, ४। न हि ग्रीष्मः शीतकाले, नापि शीतो ग्रीष्मकाले वसतीति तदाशयः। तदत्र ऋतुदेवः कालविशेष एव प्रत्यक्षत उभनभ्यो नाप्रत्यक्षो विग्रहादिवान् वसतेत्यत्रास्ति किं विचार्यम्।

कर्मफलदानार्थेऽपि नास्ति देवानां विग्रहादिमत्त्वस्यापेक्षा; कर्म्माण्येव हि स्वयं फलदायकानि भवन्तीति याज्ञिकसिद्धान्तात्। अचेतने ऽसंस्कृते दैवतविग्रहाद्यभाववति द्वेषप्रीतिकामक्रोधादिशून्येऽपि ह्यग्निमग्नौ हुतदानस्य फलं तद्दहनं कथं वार्य्यते, केन वा न स्वीक्रियते ? केन वा दृष्टं पूजिता माता गौर्वा,

अर्च्चितोऽतिथि राचार्यः पिता वा स्वय मर्च्चकामीष्टं साधयतीति। तत्र सर्वैवेश्वरो मूल मिति मतेऽपि तुल्य मुत्तरम्। तथाच प्रत्यचगम्या इमे भौतिका एवाग्न्यादयो वैदिककार्य्येषु सर्वत्र देवतात्वेन गृह्यन्त इति सत्यम्; प्रत्यचत एवोपपन्ने कार्यफले अप्रत्यचहेतुकल्पनानौचित्यात्।

तदेवं नामनिर्वचनतः, स्याननिर्द्देशतः, कर्मनिरूपणतः, उत्पत्तिवर्णनतः, ब्राह्मणविनियोगतः, तद्विहितमन्त्रार्थतः, देवलचणोदाहरणश्रुतितः, प्रत्यचदृष्टभौतिकादेवाग्न्यादेराशंसितफलोपपत्तेश्च निर्णीत मेतत्,—अय मेव पार्थिवो भौतिकोऽग्निः सर्वत्र यज्ञेषु देव इति गृह्यते; नान्यः कश्चन कूर्मचीरचषे स्नातः शशशृङ्गधनुर्धरः खपुष्पकृतशेखरो बन्ध्यासुतः पौराणिकमानसोद्यानविहारी व्यक्तिविशेष इति॥

एव मिन्द्रोऽपि भौतिकः पदार्थविशेष एव, नान्यः कश्चन विषादिमान् चेतनः। तथाहि— "इन्द्रः इरां दृणातीति वा, इरां ददातीति वा"-इत्यादीनि तन्निर्वचनानि (निरु० १०. १, ८.)। इरेत्यन्नपर्यायः; निघण्टावन्ननामसु तत्पाठात् (२, ७. ११.)। 'वर्षस्लेदित मङ्कुरं वीज भिनत्ति, त मिन्द्रकारितम्; सोऽय मिरादारः सन् इन्द्रः'-इति, 'यो वर्षद्वारेणान्नं इरा मन्नं ददाति, सोऽय मिराद इरादाता इन्द्रः'-इति च तत्र व्याख्यातं देवराजेन। तथाच वर्षहेतुः कश्चित् पदार्थ इन्द्र इति ज्ञायते। "वायुर्वेन्द्रो वान्तरिचस्थानः"-इति निरुक्तोक्तेस्तस्यान्तरिच मेव स्थान' वायुस्वरूपत्वञ्चेतीन्द्रशब्दस्य वायुपर्यायत्व मपि प्रतीयते। वायूना' वृष्टिकारित्वेनान्नजलहेतुत्वन्तु बहुशेव श्रूयते, तदेव "इषे त्वोर्जे त्वा"-इतिमन्त्रस्य शतपथाम्नानं वायवस्थेतिपदव्याख्यान मिह पूर्वं

प्रदर्शित मेव ( ६ पृ० )। तैत्तिरीयाम्नाये च तद् व्यक्ततरं द्रष्टव्यम्— "वायुर्वै हव्यं प्रदापयिता"—इति (ब्रा० १.७.१.१.)। "वायुर्वेन्द्रो वा"—इति निरुक्ते ( ७.२.१.) इन्द्रशब्दस्य वायुपर्यायत्वे प्रतीतेऽपि तयोर्मिथो विभिन्नदेवत्व मपि न विरुध्यते ; यास्किमते वाच्याभेदेऽप्यभिधानपार्थक्याद्देवतान्यत्वस्वीकारात् । ते हि यावन्त्यभिधानानि वैदिकमन्त्रेष्वार्थपत्यत्वेनाभीष्टानि, तानि सर्वाण्येव दैवतपार्थक्यमिदानामीति स्वीकुर्वन्त्येव। अतएवाग्निपर्यायाणा मग्निजातवेदोवैश्वानरादीनां पृथग्देवत्वम्, वायुपर्यायाणां वायुवातमरुदादीनाञ्च विभिन्नदेवत्वम्, सूर्यपर्यायाणां सूर्यसवितृभगविष्णुप्रभृतीनाञ्च पार्थक्यं भवत्युपगन्तव्यम्। कर्मपृथक्त्वाच्च देवपार्थक्य मुररीकुर्वन्त्येव ते। तदप्याह तत्रैव यास्कः— "अपि वा कर्मपृथक्त्वाद्; यथा— होताध्वर्युर्ब्रह्मोद्गातेत्यप्येकस्य सतोऽपि" —इत्यादि ( ७.२.१.)। तत्त्वतो यथा प्राणापानयोर्भेदस्तथैवेन्द्रवाय्वोरपि। अत एवैवं श्रूयते— 'यदैन्द्रवायवं शंसति, प्राणापानावेवास्य तत् संस्करोति"—इति ( ऐ० ब्रा० ३.१.२.)। अथ्यस्य वायुविशेषस्येन्द्रस्य कर्माण्येवं निरूपितानि — "अथास्य ( इन्द्रस्य ) कर्म— रसानुप्रदानं, वृत्रवधः, या च का च बलकृतिरिन्द्रकर्मैव तत्"—इति ( निरु० ७.३.२.)। वृत्रवधोपाख्यानञ्चैतदुपमामूलकं कविकल्पित मिति च प्रोक्तं स्वयं तेन यास्केन— "तत् को वृत्रः ? मेघ इति। ०—०। अपाञ्च ज्योतिषाञ्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति" —इति निरु० २.५.२। तदिदं पश्यन्तु तावच्छब्दार्थतत्त्वविदः सर्वं मेव पौराणिकं वृत्रवधोपाख्यानं वातेन कदलीवन मिव धस्तं न वेति।

अस्येन्द्रस्य सम्यक् प्रत्यायनाय प्रथमं तावदेष निगमोऽप्यदर्शि यास्केन ( ऋ० सं० ५, ३२, १. )—

"अदर्दरुत्समसृजो वि खानि त्वमर्णवान् बद्बधानाँ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥"

—इत्यस्य तन्निरुक्तानुसारतो ( १०. १. ६. ) व्याख्यानमेवं मन्तव्यम्— हे 'इन्द्र' 'त्वम्' 'महान्तम्' अतिप्रवृद्धम्, 'उत्सम्' उत्स्यन्दनम्, 'पर्वतम्' पर्वविशिष्टं मत एव पर्वताकारम्, मेघम्, प्रथमं 'विवः' व्यवृणोः, विवृणोऽसि, विवृतं करोषि; ततः 'अदर्दः' अदृणाः, दारयसि। अस्य मेघस्य 'खानि' रन्ध्राणि 'व्यसृजः' विसृष्टानि करोषि। 'बद्बधानान्' पुनःपुनरतिशयेन वा बध्यमानान्, 'अर्णवान्' अर्णस्वतः, माध्यमिकान् सस्त्यायान् स्वप्रश्रयः कृत्वा 'अरम्णाः' 'विसृजसि'। 'यत्' यतः, एवम्प्रकारेण 'दानवं' दातारमुदकानाम् मेघम् 'अवाहन्' अवहंसि, तत एव 'धाराः' वृष्ट्यात्मिकाः 'व्यसृजः' विसृजसि, पृथिव्यां पातयसीति। एवञ्च वृष्टिहेतुर्मेघदारको वायुविशेष एव इन्द्रो देवः प्रत्यक्षः सर्वेषाम्; फलप्राप्तिस्तु कर्माधीना, न देवताधीनेति याज्ञिकराद्धान्तोऽपि सदैव सर्वत्र जागर्त्येवेत्यलमैरावतस्कन्धसमारूढस्य वज्रहस्तपुरन्दरस्य कस्यचिच्चेतनावतोऽप्रत्यक्षस्य कल्पनयेति। अत एव ऐरावतस्कन्धसमारूढेन्द्रसमागमाद् यज्ञकुण्डभङ्गापत्तिरिति मीमांसकानां प्रहासप्रवादोऽपि सङ्गच्छते।

एवं प्रतिदिनमुदीयमानो द्युस्थः सूर्योऽप्यचेतनो ज्योतिःपुञ्जरूप एव। तथाहि— "आदित्यः कस्मात्? आदत्ते रसान्, आदत्ते भासं ज्योतिषाम्, आदीप्तो भासेति वा"—इत्यादित्यनामनिर्वचनम्। सूर्यादित्यौ पर्यायशब्दौ। "सूर्यो द्युस्थः"—इति

तत्स्थाननिरूपणम् ( निरु॰ ७. २. १. )। "अथास्य ( आदित्यस्य ) कर्म, — रसादानम्, रश्मिभिश्च रसधारणम्, यच्च किञ्चित् प्रवह्लित मादित्यकर्मैवतत्"–इति तत्कर्मनिर्णयः ( निरु॰ ७. ३. ४. )।

"उदुत्यं जातवेदसं देवं वहन्ति केतवः ।

दृशे विश्वाय सूर्य्यम्"–इति ( ऋ॰ सं॰ १. ५०. १. )।

एष निगमस्तत्रोदाहृतोऽमुष्य सूर्य्यस्य ( निरु॰ १२. २. ४. )।

अस्यार्थस्त्वेवं यास्कसम्मतः— 'केतवः' रश्मयः 'विश्वाय' विश्वस्य 'दृशे' दृक्शक्तिप्रसरणाय 'जातवेदसं' जातवेदःप्रधानं भूलोक मिमम्, 'त्यं सूर्य्यं देवं' प्रति 'उत्' 'वहन्ति' ऊर्द्धं प्रापयन्तीति। "रश्मयः— केतवः"–इति निरु॰ १२. २. ४। विश्वायेति षष्ठ्यर्थे चतुर्थी ( पा॰ २. ३. ६२ सू॰ १वा॰ )। "जातवेदाः कस्मात्"–इत्यादि–(निरु॰ ७. ५. १—२. )–दर्शनात् अग्नेरेव नामान्तरं जातवेदा इति स्पष्टम्। अग्नेरधीनत्वञ्चास्य भूलोकस्य "अग्निः पृथिवीस्थान."–इत्यादिना ( ७. २. १. ) विहित मेव। प्रापणार्थस्य वहधातोर्द्विकर्मकत्वन्तु लोकप्रसिद्धम्। अथैवैतद्व्याख्यान मुपसंहर्त्तुं मुक्तं निरुक्ते— "स मन्त्र मादित्यादेव मवक्ष्यत्"–इति ( १२. २. ४. )। तदेव मादित्यं प्रति वहनं विज्ञातं भवति। तच्च वहनं कस्येत्याकाङ्क्षाया मिह मन्त्रे श्रुतस्य जातवेदस इत्येव सुवचम्; जातवेदःशब्देन चेह जातवेदःप्रधानो भूलोकः; तथैव मन्त्रतात्पर्य्योपपत्तेः। एव मन्यत्रापि श्रुतं बहुत्र। तद्यथा— "आदित्यं प्राञ्चं यन्त मुन्नयामि"–इति सामारण्यकम्। सर्वे यज्ञाः पूर्वाभिमुखगामिनस्तत एव सूर्य्यः पश्चिमाभिमुखगो लक्ष्यते इति हि सर्वसम्मतं विज्ञानम्। तथाच 'प्राञ्चं यन्तम्' एतं भूलोकम्, तत्स्थं स्वात्मान मिति यावत् 'आदित्यम्'

'उत्' ऊर्द्ध्वं 'नयामि' प्रापयामीति तदर्थः। तथास्य लोकस्य सूर्यमभि रश्म्याकर्षणेन ऊर्द्ध्वतो भ्रामणमिहापि ब्राह्मणे प्रदर्शितम् (१०७ पृ०)। "दाधर्थ पृथिवीमभितो मयूखैः (ऋ० सं० ७. ९९. ३.)"–इत्यादिश्रुतयोऽप्यत्रालोच्याः। एवञ्च यथा पृथिव्यां प्रधानदेवता अग्निः प्रत्यक्षः, यथा चान्तरिक्षे वायुरिन्द्रो वा, तथैव द्युस्थोऽसौ सूर्योऽपीति ध्रुवम्।

एवं सति पुराणादावग्न्यादीनां सर्वेषामेव देवानां स्वर्गस्थत्वम्, तत्रापि पृथक्-पृथक्-लोकसंस्थत्वं यद् वर्णितम्, तदवास्तविकम्; अपि तेषां चतुर्वदनविग्रहादिमत्त्वम्, पुत्रकलत्रगोत्रादिमत्त्वम्, यानासनरागद्वेषसन्तोषादिमत्त्वञ्चैतत् सर्वं रूपकादिजं कल्पनाप्रसूतं कविकर्मैव। एवं हि यथा विष्णुमित्रकृतमित्रलाभसुहृद्भेदादिकथासु काककपोतोलूककूर्मादीनां मानुषभाषाश्रितत्वधर्मादिवर्णनं बालानां नीतिधर्मादिचरित्रगठनायैव, तथा पौराणिकदेवताकारादिकल्पनापि नूनं वेदविज्ञानग्रहणासमर्थमतीनां स्त्रीशूद्रद्विजबन्धुरूपाणां बालानामेव धर्मोपदेशादिसौकर्यायैव। किञ्च यथा बालाः ताः काकोलूकादिकथाः पठन्तस्तदानीमज्ञानतस्तत्सर्वमेव वास्तविकं मन्यन्ते, ततो वयोवृद्धिप्रभावादाप्तज्ञानाः सन्तः सदैव शिशून् पाठयन्तोऽपि तदतात्त्विकं स्वयमेव विदन्ति, न हि वाग्मिप्रवरैरपि तत्र तेषां विश्वासमानयितुं शक्यन्ते, तथैव विद्याधरपर्यायवेदाध्ययनहीना बालाः कल्पितदेवस्वरूपादौ विश्वसन्त्येव, न परं देवस्वरूपप्रत्यक्षदर्शिनो विद्वांसो वैदिकाः। तदाम्नातम्— "एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुस्तस्मादाचक्षाणमाहुरद्रागिति, स यद्यदर्शमित्याहाथास्य श्रद्दधति; यदु वै स्वयं पश्यति न बहूनाञ्च नान्येषां श्रद्दधाति"–इति (८२पृ०)।

तदत्र तत्कल्पनाप्रकार मपि किञ्चिन्निदर्शयामः— उपरिष्टाद्व्याख्यास्यमानेषु स्वर्लोकेषु अन्तरिक्षलोकोऽप्येकतमः। तत्र स्वर्गे वायुपरपर्यायस्य वर्णितपूर्वस्य इन्द्रस्य प्राधान्यात् स एव स्वराडिति व्यपदिष्टः। मेघो ह्यत्र:, अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणा वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्तीत्युक्तम् (निरु० २.५.२.)। वर्षकालेऽशनिपतनं यत् तदेवेन्द्रस्य वज्रपातः। इरेत्युदकनामेत्यप्युक्तम् (१६५ पृ०), तद्विशिष्टत्वान्मेघस्यैवैरावत इति नाम, तच्छब्दस्योच्चैः श्रूयमाणत्वाच्चोच्चैःश्रवा इति च। स एक एव मेघो नामभेदाद् द्वित्वेन इन्द्रवाहाविति वर्णितः। तत्सभायां गन्धर्वः (गायकः) ऐडः (इडाभवः), पुरूरवाः (बहुरावः) नाम सदैव विद्यते। सोऽपि पृथिव्याः धारकः, इडापरपर्यायान्नसम्भवः, स्फूर्जथुनामवज्रगर्जनकारी, मेघ एव। "पुरूरवा बहुधा रोरूयते"–इति हि निरु० १०.४.८। 'रोरूयति— स्तनयति'–इति तद्वृत्तौ दुर्गाचार्यः। इड़ा— अन्नम् (निघ० २.७.१३.)। गां पृथिवीं धारयतीति गन्धर्वः; अत एव श्रूयते—

"अभि गन्धर्वमतृणद् अबुध्नेषु रजस्स्वा।
इन्द्रो ब्रह्मभ्य इद् वृधे"–इति ऋ० सं० ८.६६.५.।

'इन्द्रः' मेघचालको वायुः 'ब्रह्मभ्यः' ब्रह्मणा मन्त्राणां 'वृधे' वर्धनाय, 'अबुध्नेषु रजःसु' 'गन्धर्वं' मेघम् 'अभ्यतृणत्' छिनत्तीति तदर्थः। उर्वशीनामाप्सरास्तत्सभायां नृत्यतीत्यादिच पौराणिकीकथा। तत्रान्यासां निरुक्ते— "उर्वश्यप्सराः"–इत्यादि (५.१.२.)। 'अप्सराः— अप्सारिणी'–इत्यादि च तत्रैव। तथा चोदकजाता विद्युदेवोर्वश्यप्सराः। तस्या विद्युतः सवितृजन्यत्वं च वैदिकविद्यामधम्य मिति पूर्वं प्रतिपादितम् "आदित्यस्य रश्मी ज्योतिः

पश्यन्ति वासरम्। परो यदिध्यते दिवि"–इति (११३ पृ०)। अपां हस्तिजलानां सारयित्रीति च भवत्यप्सारिणी। 'अप्स इति रूपनाम०—० रूपवती'–इति च तत्रैव। तस्या अप्सरसः जायते आयुर्नामा तनयः। स हि विद्युन्मेघसंयोगज आयुर्वैतुद्रव्य् दका-रूपः प्रसिद्धः, अतश्च— "विद्युत्०—० उर्वशी तिरते दीर्घ मायुः"–इति ऋ० सं० १०. ८५. १०। तनयोत्पत्त्यनन्तर मेव तयोरुर्वशीपुरूरवसोर्दम्पत्योर्मिथो विच्छेदश्च सर्वैर्दृश्यत एव। तदे-तत् सर्व मेतस्मादेकस्मादेव श्रुतिवचनात् सुव्यक्तम्— "पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसः"–इति (तै० सं० ३. ७. ८.)। शतपथब्राह्मणे तु अधरारण्युत्तरारण्योरुर्वशीपुरूरवस्त्वं परि-कल्प्य चाख्यान मिदं कल्पितम्। "अथाधरारणिं निदधाति" –इत्यादि (३. ४. १. २२), "उर्वशी हाप्सराः पुरूरवस मैडं चकमे"–इति च (११. ५. १. १.)। एवञ्चैवंविधं कविकल्पन मेव पौराणिकाना मुपन्यासश्रवणप्रियेषु स्त्रीशूद्रद्विजबन्धुषु धर्म-नीत्यादिप्रचारायाभवदवलम्बन मिति स्पष्टम्। तत एव महा-भारतेतिहासस्य च काव्यत्व मुररीकृतं स्वयं तत्कर्त्रा तत्रैव तदुपक्रमे (१अ० ७२श्लो०)— "त्वया च काव्य मित्युक्तं तस्मात् काव्यं भविष्यति'–इति। 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' –इति (२६७ श्लो०) चोक्तं तत्रैव। तदिद मेव स्मृतं वेदोप-बृंहण मिति॥

सूर्यस्याप्यन्यतम नाम इन्द्र इति। तत एतन्निरुक्तम् "इन्द्रे द्रवतीति वा, इन्दौ रमते इति वा, इन्धे भूतानीति वा"–इति (१. १. ८.)। 'इन्दवे' इन्दुं सोमं पातुं द्रवति, 'इन्दौ' सोमे रमते इति, 'भूतानि' स्थावरजङ्गमानि 'इन्धे' दीपयति चेति 'इन्द्रः' सूर्य

इति तदर्थः। अधियज्ञपक्षे इन्दुशब्देन सोमवल्लीरसोऽर्थो गृह्यते। अधिदैवतपक्षे तु इन्दुश्चन्द्रमा ग्राह्यः। अत एव श्रुतम्— "इन्दुः सोमस्य कारुका"–इति (११० पृ०), "अत्रा ह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे"–इति च (ऋ० सं० १. ८४. १५.), "सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः"–इति च वा० सं० १८. ४०। निरुक्तकारेण चैतत् स्पष्टीकृतम्— "अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्य मादित्यतोऽस्य दीप्तिर्भवतीति"–इति (२. २. २.)। अतएवेन्द्रः सहस्ररश्मिरिति सहस्राक्षोऽप्युच्यते। स चायं द्युस्थ इन्द्र उत्तमः कथ्यते, अन्तरिक्षस्थ इन्द्रस्तु मध्यमः। तदेतयोरुत्तममध्यमयोरिन्द्रत्वैकनामानुरोधादभेद उपचरितोऽपि दृश्यतेऽनेकत्र। तत एवामरसिंहेनाप्युभयेन्द्रनामान्येकपर्यायत्वेनोपवर्णितानि— "इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासन। •—•। आखण्डलः सहस्राक्ष ऋभुक्षाः"–इति (१. १. ४४—४७.)। एषु श्लोकेषु पञ्चविंशदिन्द्रनामानि ज्ञापितानि। तत्र दिवस्पतिः, वास्तोष्पतिः, सुरपतिः, हरिहयः, स्वराट्, आखण्डलः, सहस्राक्षः, इत्यादीन्युत्तमेन्द्रनामानि, मरुत्वदादीन्यपराणि तु मध्यमेन्द्रस्येति बोध्यम्।

यच्च प्रसिद्ध मिन्द्रपत्न्या नाम शचीति (अम० को० १. १. ४८.), यतश्चेन्द्र उच्यते शचीपतिरिति; तदपि कल्पितम्। अस्ति निघण्टौ वाङ्नामसु पठितं शचीति (१. ११. ४८.); "आकाशस्य सारः (शब्दः)–इत्यादि (गौ० सू०३. १. ६४.) वाचोऽन्तरिक्षस्थत्वं तया चेन्द्रमध्यधर्मित्वं भवत्येव स्वीकार्यम्; यदा चेन्द्रकृतात् मेघघातनाम्नेघविदारणाच्च वृष्टिर्जायते, तदा तदापि तत्तच्छब्द श्रूयत इति मा माध्यमिकी वाक् मध्यमस्येन्द्रस्य सहधर्मिणीत्युपपद्यते।

तथाच ऋ० सं०— "न किरस्य शचीनां नियन्ता सूनृतानाम्"– इति ८. ३२. १५। 'अस्य' वागधिपतेर्मध्यमेन्द्रस्य 'सूनृतानां' प्रियसत्यात्मिकानां 'शचीनां' वाचां नियन्ता नियोगकारी 'न किः' न कोऽप्यन्यः, यपि ता इन्द्रवाचः स्वत एव प्रवृत्ता आधिपत्यं करोतीति तदर्थः। एवञ्च वायोर्घातप्रतिघातैर्नैवाकाशाच्छब्दोत्पत्तिस्वीकारात्, वायोरन्तरिक्षस्थत्वेन मेघदारकत्वेन च माध्यमिकेन्द्रत्वमिति स्वीकाराच्च स वायुरूप इन्द्रः शचीपतिरुच्यते।

अपर मप्यस्ति तत्र निघण्टौ कर्मनामसु पठितं शचीति पदम् (२. १. २२.)। सर्वेषां च कर्मणा मधिपतिः सूर्य एव; "सविता वै प्रसवाना मीशे"–इति (ऐ० १. ३. ५.) श्रुतिः। तत्तापाभावादेव जीवशरीरं मृतं भवतीति च दृष्टं लोकवेदयोः (१०८ पृ०)। अतः सोऽप्याख्यायते शचीपतिरिति। तथा च तन्निगमः— "युमा॑ असि क्रतुमा॑ इन्द्र धीरः शिक्षा शचीवस्तव नः शचीभिः"–इति ऋ० सं० १. ६२. १२।

अन्यदप्यस्ति निघण्टौ प्रज्ञानामस्वपि पठितं शचीति पदम् (३. ९. ८.)। ततः प्रज्ञावन्तो यजमानादयोऽपि शचीपतय एव। अत एवार्भवनाम्नि मानुषरूपदेवस्तावके नाराशंसे सूक्ते द्वितीयस्या मृचि श्रुत मेवम्—

"याभिः शचीभिश्चमसा॑ अपिंशत"–इति ऋ० सं० ३. ६१. २।

अथाप्येवं शचीपतिवद्बुलेऽपीन्द्राण्या अवह्रुत्वं वेदेषु। तद्यथा—

"इहेन्द्राणी मुपह्वये वरुणानीं स्वस्तये।

अग्नायीं सोमपीतये"–इति ऋ० सं० १. २२. १२।

अत्रेन्द्राणीत्युत्तमायाः, वरुणानीति मध्यमायाः, अग्नायीति प्रथमाया एव देवतात्वेन मिष्टम्।

अत एवान्यत्रैव माम्नातम् ऋ० सं० १०, ८६, ११—

"इन्द्राणी मासु नारिषु सुभगा मह मश्रवम् ।
न ह्यस्या अपरञ्चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः"–इति ।

तदत्र सूर्यस्य चिर मेकरूपत्वेन विद्यमानत्वात् तच्छक्तेरिन्द्राण्याश्चिर मेव सुभगात्वम् । इद मेवेन्द्राण्या अवैधव्यप्रवादमूलम् । माध्यमिकेन्द्रस्य मेघवाल्कवायोर्हि वर्षे वर्षे प्रति रूपभेदात् तच्छक्तेः सुभगात्वायोगात्सौन्द्राणीति समाख्या ; विश्वस्मादिन्द्र उत्तरश्च सूर्य एव, न माध्यमिक इति च ध्येयम् ।

एव मपि यदमरसिंहेन शचीपर्यायत्वेन श्लोकित मिन्द्राणीति, तदिन्द्रशब्दार्थैकभ्रमादेव । एवं "विष्णुर्नारायणः कृष्णः"–इत्यादिषु ( १. १. १८—२३. ) विष्णुपर्यायेष्वपि विष्णुरिति सूर्यनाम, नारायण इति वायुनाम, कृष्ण इति मनुष्यनामेत्येवमादयः पौराणिककालजभ्रमा बोध्या इति दिक् ॥

नन्वेव मिन्द्रादिदैवतसम्बेषु मन्त्रेषु यत् तेषां पुरुषाकारविग्रहवत्त्वम्, हिताहितविवेकलक्षणचेतनावत्त्वम्, चेतनावत्पुरुषप्रयुक्तार्थद्रव्यान्वितत्वम् , तादृशकर्मकर्तृत्वञ्च गम्यते ; तत् कथ मुपपद्यते ? इति चेदत्र निरुक्तकारो यास्क एवाच दत्तोत्तरः ( ७. २. ३ ) । तथाहि— "अपुरुषविधाः स्युरित्यपर मपि ॥ यद् दृश्यते ऽपुरुषविधम् । तद्यथा— अग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति"–इति । तथा चैषां मन्त्रादीनां पुरुषाकारविग्रहवत्त्वं प्रत्यक्षविरोधादेवेत्र मिद्धान्तितम् । तदेवं मन्त्रेषु यदेषां पुरुषविधत्व मुपलभ्यते, तत् काल्पनिक मेवेति । अथ चेतनावत्त्ववर्णनं च तेषां तथैवेत्याह— "अचेतनान्यप्येवं स्तूयन्ते यथाक्षप्रभृतीन्योषधिपर्यन्तानि"–इति । अथायुधादिद्रव्याभिसम्बन्धञ्च अपि तेषां तथैवेत्याह— "एतदपि

तादृश मेव ; 'सुखं रथं युयुजे सिन्धुरश्विनम्'-इति नदीस्तुतिः (यथा)"-इति । तथा कर्मकर्त्तृत्व मपि तेषां तथैवेत्याह— "एतदपि तादृश मेव ; 'होतुश्चित् पूर्वे हविरद्य माशत' इति ग्रावस्तुतिः ( यथा )"-इति ।

वेदार्थमीमांसैकविनिष्ठे मीमांसादर्शनेऽप्येव मेव तद्यथा— "अग्निस्तु ०—० द्रव्यं वा स्यात् चोदनायास्तदर्थत्वात्"-इति ( जै० २, ३, २१, २२सू० ) । 'द्रव्यं वा अग्निशब्देनोच्यते । कस्माद् द्रव्यम् ? यदेतत् ज्वलनः ; अत्र होवः प्रसिद्धः'-इत्यादि तद्भाष्यम् । ततस्तत्रैव देवताधिकरणे त्रिभिः सूत्रैर्देवानां पौरुषविग्रहवत्त्वं क्रियाफलदातृत्वञ्चास्वीकृत्य कर्मजन्यसंस्काररूपस्यापूर्वस्यैकस्य सर्वत्र फलदातृत्वं प्रतिपादितम् । तथाहि— "देवता वा प्रयोजयेद्, अतिथिवद्भोजनस्य तदर्थत्वात्"-इति पूर्वपक्षसूत्रम् । "अर्थपत्याच्च"-इति तद्युक्तिसूत्रम् । "अपि वा शब्दपूर्वत्वात् यज्ञकर्म प्रधानं स्याद्, गुणत्वेन देवताश्रुतिः"-इति तत्र सिद्धान्तसूत्रम् ( ८, १, ७, ८, ९. ) । पुनस्तत्रैव तत उत्तरम्, इन्द्रस्य हरिनामकाश्ववत्त्वादिश्रवणस्यौपचारिकत्वं त्रिभिः सूत्रैः सिद्धान्तितम्— "असंयोगात् तदर्थेषु तद्विशिष्टं प्रतीयेत, कर्माभावादेव मिति चेत्, न ; परार्थत्वात्"-इति ( ८, १. ४२, ४३, ४४, ) । यच्च श्रुतावग्न्यादीनां ब्राह्मणत्वादिजातिविभागः, स चैषा मेव प्रत्यक्षाणां ज्वलनादिकर्मणा मङ्गारादिरूपाणां भौतिकाना मेवेति च स्वीक्रियते मीमांसकैः । "जातिः ( १, ४, २४. )"-इत्यादिसूत्रेषु तत् स्पष्टम् । अतएव तैर्देवाना मेषा मसम्भवादेव यज्ञादिकर्मानधिकारित्वं वर्णित मिति दिक् ॥

अथ येऽग्न्यादय इमे प्रत्यक्षाः, न त एते देवाः ; अपि त्वेषा

मभिमानिनः सन्ति तत्तद्द्रव्यादिनामतः स्वर्गस्थाः केचन ; अत एवैव मसूत्रयद् व्यासः स्वदर्शनशास्त्रे— "अभिमानिव्यपदेशस्तु"—इत्यादि। तदेतद् व्यासवचन मार्षं मपि कथं न स्यान्मन्तव्य मित्यत्र ब्रूमः । अस्त्वेतद् व्यासवचनं सत्यम् , पर मेतस्य यद्विधोऽर्थः कृतः स्वस्वसम्प्रदायमतपुष्ट्यर्थं पौराणिककालजैः शङ्करादिभिः , स त्वसत्य एवेत्यस्माकम् । न हि कस्याप्ययतनस्य स्वमतस्थापन-व्याकुलीभूतचित्तस्य लेखनीसम्भूतं सर्वं माख्यातं सत्यं भवितु मर्हति, नापि हि तादृशानां तेषां सर्वेषा मैव प्रकृतवादित्वे मियो मतपार्थक्य मुपपद्येतेति विज्ञात मेवैतद् । वस्तुतस्त्वत्र यदुक्तं व्यासेन 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्'—इति (२. १. ५.), तदर्थ-स्त्वेवम्— श्रूयन्ते हि 'मृदब्रवीत्', 'आपोऽब्रुवन्', 'फेनोऽब्रुवत्'—इत्येवमादयः (श० ६. १. ३.) । आसु श्रुतिषु श्रुतानां मृदादीनां कथ चेतनाविशिष्टत्व मुररीकार्य मित्याह—'अभिमानीत्यादि। यद्यपि विशिष्टचेतनावत्स्वेव 'अहं' शब्दीमौलैवद्वारो ऽभिमानः सम्भवति, नान्यत्र मृदादौ ; तथाप्येवमादौ तस्याभिमानिनः 'व्यपदेश.' । व्यपदेशो व्यवहारः, व्यवहारमात्र मौपचारिक मिति यावत् । कुतः ? 'विशेषानुगतिभ्याम्' । चेतनाचेतनयोर्विशेषस्तु सर्वत्रा-यत्ते लौकिकमप्यर्थयत्रियश्रादिविषयादितः ; तस्मात् मृदादिषु यदभिमानित्वं तद्व्यावहारिकं मौपचारिक मिति मन्तव्य एव । अनुगतिश्च "अहर्वै मित्रो रात्रिर्वरुणः (ऐ० ४. २. ४.)", "असौ वा आदित्यो देवः सविता ( श० ६. ३. १. १८. )", 'एष एवेन्द्रो य एष तपति: ( श० १. ६. ४.१८. )", "अयं वै वायुर्योऽयं पवते ( श० १. ५. ४. २. )"—इत्येवमादिश्रुतिष्वपेव भवेति । इतो-ऽप्यधिकं(?) तोऽवगमत्वपेदेतरेयोयापनीयभाष्ये द्रष्टव्यम् ॥

 

न चेवं "देवा ह वै सर्वचरो सत्रं निषेदुस्ते ह पाप्मानं नाप-घ्निरे"–इत्येवमाद्याख्यायिकानां का गतिरिति चेत्, "सुतयो वेताः सत्रस्य"–इत्यादि (जै० सू० १. १. ३२.) द्रष्टव्यम्। अथवा "विद्वांसो वै देवाः"–इति (श० ३, ७. ३. १०.) श्रुतेः, "अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः"–इति (श० २, ३प्र. ६. १४.) श्रुतेश्च वेदविदुषां गौणदेवत्वेऽभ्युपगते सुसङ्गतमेवैवमादिकमाख्यानम्। अतएव देवत्वमापन्नस्य यज्ञ-दीक्षितस्य यजमानस्य मनुष्यैर्वाक्यालापनिषेधेऽपि (८१ पृ०) विद्वद्भिर्वाक्यालापस्य कथा दूरे आस्ता मेकत्र वासश्च विहितः। तथाहि— "तदस्य विश्वेच देवैर्जुष्टं भवति,— ये चेमे ब्राह्मणाः शुश्रुवांसोऽनूचानाः"–इत्यादि श० ब्रा० ३. १. १. ११, १२। तथैव समाम्नानम् "एद मगन्म देवयजनम्"–इतिमन्त्रव्याख्यानपर मिति वेदविदुषां देवत्वे मन्त्रलिङ्ग मप्यस्तीति च सूचितम्। स एष मन्त्रो यजुर्वेदीयस्तस्य पाठस्त्वेवम् (४. १. १.)—

"एद मगन्म देवयजनं पृथिव्या यत्र देवा सो अजुषन्त विश्वे। ऋक्सामाभ्यां सन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेम"–इति।

श्रुतावेतैरेव चत्वारो देवगुणाः। तथाहि—

(१) "सत्यसंहिता वै देवाः (१. १. ६.)"–इत्युक्तः प्रथमः, "परोक्षप्रिया इव हि देवाः (२. ३. ८.)"–इत्युक्तो द्वितीयः, "न वै देवा अन्योऽन्यस्य गृहे वसन्ति (५. २. ४.)"–इत्युक्तस्तृतीयः, "मर्त्यान् सतोऽमर्त्यान् कृत्वा"–इति श्रुतौ (६. ३. ४.) देवाना ममरभावश्च ध्वनितः, स चतुर्थः।

तत्र देवानां सत्यसंहितात्वन्त्विदम्;— सूर्यः प्रतिदिन मुदे-त्यस्तं याति च यथाकालम्, हरति च रसानतुपच मित्यादि।

वायुः सदैवान्तरिक्षे स्थितो वाति, मेघान् सञ्चालयन् दारयति च यथाकाल मित्यादि। अग्निरप्यसति प्रतिबन्धके न कदापि पचन-दहनादिकं स्वकार्यजात मुञ्जति। तदेवं सर्व एव देवाः सदैव स्वस्वकर्मसु व्याप्रियमाणा उपलभ्यन्त इति तेषां सत्यसंहितात्वम्। मनुष्यास्तु स्वभावत एव अनृतचिन्तका अनृतवादिनो ऽनृतकारिणश्चेत्यनृतसंहिताः। तदिहाम्नातम्— "अनृतसंहिता मनुष्याः"— इति (१. १. ६.)। शिक्षादिभिरनृतभावं विहाय ऋतभाव मुपगम्य च भवितु मर्हन्ति तेऽप्यृतसंहिता इत्याम्नाताः— "विदुषा सत्य मेव वदितव्यम्"—इत्येवमादय (५. २. ८.) उपदेशाः। तदेव विदुषां देवलस्वीकारेऽप्य मेव प्रधानो हेतुर्यत्तेषा मुपजायत एव सत्यस्वभाव इति।

(२) एवं परोक्षप्रियत्व मप्यस्ति देवानाम्। तद्यथा— अनलानिलादिप्रभवाः सर्व एवैते जन्ममृत्युसुखदुःखादयो भावाः, सदैव सर्वत्रानुपलभ्यमानहेतुव्यापारका भवन्ति, कुर्वन्ति च सूर्येन्द्रादयो रसहरण-मेघसञ्चालनादीनि कर्माणि सदैव सर्वत्र, परं न खिमपि कार्यं कथं केन कदा कृत मिति कस्यापि प्रत्यक्षत उपलभ्य मस्तीति परोक्षप्रियत्व मेवावगम्यते तेषाम्। विदुषा मपि देवत्वलाभात् भवति परोक्षप्रियत्व मित्याह— "ते देवा अब्रुवन् मेदं प्रजापते रेतो दुषदिति, तस्मादुष मभवत्। तस्मादुषस्य मादुषत्वम्। मादुषं ह वै नामैतद् यन्मानुषम्। तस्मादुषं मन्मानुष मित्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः"—इति (३, ३. ८.)। मादुष इति प्रत्यक्षवचनेऽभिहितेऽश्लील मपि किञ्चित् स्यात्, तदर्थनायैव विद्वांसो पारोक्ष्येण नाम अभ्यमांनुष मिति। एवमादिकं परोक्षप्रियत्वञ्च तेषां देवत्वे बीजम्।

(३) तथान्योऽन्यगृहवासाभावोदाहरण मप्यत्र श्रुत मेवम्;— "नर्तुकर्तोर्गृहे वसतीत्याहुः"—इति (५. २. ४.)। न श्लोकः स्वतुरपरस्य ऋतोः काले उपलभ्यत इति तदाशयः। अथापरम्। अस्ति सूर्यस्य वासो द्युलोके, चन्द्रस्य वासोऽन्तरिक्षे, एतदन्यथाभावः कदाचित् केनचित् क्वचिदपि सम्भाव्यतेऽपि किम्? प्रत्युत सर्व एव ग्रहोपग्रहपृथिवीनक्षत्रादयो देवा स्वस्वकक्षायां चिरं भ्रमन्तीत्येव ध्रुवम्। तदन्तर्गतानां मग्निवाय्वादीना मप्येष नैवानन्यगृहवासत्वं सूक्ष्मविज्ञानदृष्ट्योपलभ्यत एव। ये चैवं विद्वांसो मनुष्या देवत्व मिच्छेयुः, तेषा मप्येतदनुकरणेनानन्यगृहवासित्वं स्यादभ्यसनीयम्, यथा च स्वकीयजनस्कन्धारोहित्वेन परपिण्डादत्वं दुःखायेत्युपलभ्येतेति।

(४) अप्यमरणधर्मत्वञ्च तेषा मग्न्यादीनां प्रत्यक्ष मेव; न हि कदापि क्वचिदपि केनाप्यग्न्यादेरभावो विज्ञायत इति। विद्वांसोऽपि विद्यादिप्रभावेणामरत्व मभ्युपगच्छन्त्येव; तद्यथा—वसिष्ठविश्वामित्रमान्धातृवेनकृष्णार्जुनव्यासवाल्मीकादयः। इत्थ ममरणधर्मसाम्याच्च तेषां देवत्व मव्याहत मिति।

ऋत्विजा मपि विदुषयैव सत्यभाषित्वादिना सिद्धं देवत्वम्; न चाविद्विदुषा मृत्विक्त्वं विहित मस्तीति। तथाम्नातम्— "ऋत्विजो हैव देवयजनं ये ब्राह्मणाः शुश्रुवांसोऽनूचाना विद्वांसो याजयन्ति"—इति शत० ३. १. १. ५। अनुपद मिह प्रदर्शितम् "इद मगन्म (१०७ पृ०)"—इत्यादि मन्त्रलिङ्ग मृत्विजां देवत्वख्यापनायैवाम्नातं व्याख्यातञ्च तथोपपाद मध्वर्युब्राह्मणे "एतद् यजुराह"—इत्यादिना (३. १. १. ११, १२.)। दीक्षितानां मपि यजमानानां यज्ञदीक्षा मारभ्य यज्ञसमाप्तिं यावद् भव-

परमात्मपरव्याख्यानन्तु येषां मन्त्राणा मुपयुज्यते, तेष्वेव स्यात्तदा-दरणीय मिति सर्वैरभ्युपेय मेवेति ॥

अथ यद्यपि परमात्मपरं जीवपरं शरीरपरं चेति त्रिविध मपि व्याख्यानं स्यादधिदैवतव्याख्यानान्तर्गतम्, तथापि ब्राह्मणवसिष्ठ-न्यायेनैवेह प्राधान्याभ्युपगमात् निरुक्तादौ पार्थक्येनोच्यतेऽध्यात्म मिति । तद्यथा ऋ० सं० १. १६४. १५—

"साकञ्जानां सप्तथ माहुरेकजं षडिद्यमा ऋषयो देवजा इति ।
तेषामिष्टानि विहितानि धामश स्थात्रे रेजन्ते विकृतानि रूपशः"।

"सप्तजातानां षण्णा मृषीणा मादित्यः सप्तमः ०—० इत्यधिदैवतम्; अथाध्यात्मम्— सप्तजातानां षण्णा मिन्द्रियाणा मात्मा सप्तमः"—इत्यादि तत्रैतद्व्याख्यानम् (१२. २. १८.)। अत्रात्मपदेन जीवस्य ग्रहणम्।

अथात्मपदेन परमात्मनो यथा ऋ० सं० ९. ९६. ५—
"सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः"—इति ।

"सोमः सूर्यः ०—० इत्यधिदैवतम्; अथाध्यात्मम्— सोम आत्मा"—इत्यादि चात्र निरुक्तम् (१२. २. १२.) ॥

अथापि तान्यध्यात्मादीनि नामतस्त्रिविधानि वस्तुतः पञ्च-विधानि व्याख्यानानि न हि सर्वेषा मेव मन्त्राणा मुपपद्यन्ते; प्रत्युत केषाञ्चिदेकविधम्, केषाञ्चिद् द्विविधम्, केषाञ्चिद्बहुविध मपि । तत्राधिदैवतमन्त्रा एवात्र प्रायस्त्रिभागाधिकाः स्युताः, केवलाधियज्ञार्थाः केवलाध्यात्मार्थाश्च सन्ति केचन मन्त्राः। एव मपि यदधिदैवतमन्त्राणां बहूना मेवाधियज्ञं व्याख्यानं कृतं ब्राह्मण-कारैस्तन्नमिदानीम्, अध्यात्मव्याख्यान मप्यादृत्य सायणादिभि-

उपनिषदादिषु ; तस्मात् सर्ववेदेष्वधिदैवतमन्त्राणां प्राचुर्य्येऽपि साम्प्रत मन्वेषणीयत्वं गतम्। तद्दिङ्मोदाहरणम्:—

यज्ञं ज्योतिष्टोमादिक मधिकृत्य यद् व्याख्यानम्, तदधियज्ञम्। तादृश केवलाधियज्ञव्याख्यानयोग्यमन्त्रो यथा—
“उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्”—इति वा० सं० १. २२. ६।

कपालेषु पुरोडाशप्रथने विहितः। तत्र विधानं मन्त्रव्याख्यानसहितं श्रुतं शतपथे। तथाहि— “तं प्रथयति, उरुप्रथा उरु प्रथस्वेति प्रथयत्येवैन मेतदुरु ते यज्ञपतिः प्रथता मिति ; यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदाशिष माशास्ते”—इति (१. १, ६, ८.)। अपरो दाशतय्या मपि यथा १०. ७१ ११—

“ऋचान्त्वः पोष मास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः”

—इति। “इत्यृत्विक्कर्मणां विनियोग माचष्टे”—इत्याद्यत्र नैरुक्तं द्रष्टव्यम् (१. २. १)।

केवलाध्यात्मव्याख्यानयोग्यमन्त्रो यथा १, १६४, २०—

“द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वादत्ति अनश्नन्नन्यो अभिचाकशीति”—

इति। “द्वौ द्वौ प्रतिष्ठितौ”—इत्यादि, “इत्यात्मगति माचष्टे”—इत्यन्तमेतस्याः (१३. ४. २.) व्याख्यानं द्रष्टव्यम्।

देवतां देवते देवताः वा अधिकृत्य दृष्टो मन्त्रोऽधिदैवतः। देवतास्तु पूर्वोक्तलक्षणाः सर्वविधा एवेह विज्ञायन्ते ; परापरशरीरात्मकाना मात्मनाञ्च देवत्वस्वीकारेण तत्तद्विधानमन्त्राणा मध्यात्मिकाना मप्येतदन्तर्गतत्वम्। अथवाधिदैवतमन्त्रेभ्यस्त्वात्मतत्त्वपर्य्यवसानानां पार्थिवाना मपार्थिवानाञ्च गुणरूपोप-

योगितादीनां विज्ञानं भवतीत्यधिदैवत मेव व्याख्यानं सर्वपदार्थ-विज्ञानमूलं प्रधानम्। अतो निरुक्तकृद्भिः प्रायः सर्वेषा मेव निगमाना मधिदैवतव्याख्यान मेवाश्रितम्। तद्यथा— "स न मन्येताय मेवाग्निरिति, अप्येते उत्तरे ज्योतिषी अग्नी उच्येते, ततो नु मध्यमः— 'अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम्। घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः'। ('अभिप्रवन्त') अभिनमन्त ('समनेव') समनस इव 'योषाः' 'कल्याण्यः' 'स्मयमानासः' 'अग्निम्' इति औपमिकम्। 'घृतस्य धाराः' उदकस्य धाराः 'समिधः' 'नसन्त'। नसतिराप्नोतिकर्मा वा, नमतिकर्मा वा। 'ता जुषाणो हर्यति जातवेदाः' हर्यतिः प्रेप्साकर्मा"–इति निरु० ७. ४. ४। अत्र माध्यमिकस्य विद्युदग्नेः सूर्यरश्म्याहृतोदकान्येव समिन्धनानीत्युक्तं विज्ञानम्। अत एवान्यत्रोक्त मेतयोरग्न्योः पार्थक्यम्— "यावदनुपात्तो भवति मध्यमधर्म्मैव तावद्‌ भवति— उदकेन्धनः शरीरोपशमनः; उपादीयमान एवायं (पार्थिवाग्निः) सम्पद्यते— उदकोपशमनः शरीरदीप्तिः"–इति (निरु० ७. ६. ६.)। वैद्युदग्नेरुदकजातत्व मन्यत्रापि मन्त्रे सुव्यक्तम्। तद्यथा— "आदित् प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम्। परो यदिध्यते दिवि"–इति ८. ६. ३०।

अनेकत्र तु निरुक्तकारोयज्ञानुरोधादेकस्य मन्त्रस्याधियज्ञव्याख्यान मुक्त्वापि पुनः स्वाभिमतोपायाधिदैवतमाह। तद्यथा—

"सोमं मन्यते पपिवान् यत् सम्पिंषन्त्योषधिम्।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन"–इति।

अस्य मन्त्रस्य (ऋ० सं० १०. ८५. ३.) एतदेवक्तं व्याख्यानम्— "वृथा सुतमसोम माह०—७ 'कश्चन' अयज्वा; इत्यधियज्ञम्।

-मयाधिदैवतम्॰---॰ यजुस्सुत मसोम माह, सोमं यं ब्रह्माणो विदु-
श्चन्द्रमसम् न तस्याश्नाति 'कश्चन' अदेव इति"–इति ११, १, ४।

एवम् "इषे त्वोर्जे त्वा"–इत्यस्याधिदैवतमन्त्रस्यैव यज्ञानु-
रोधाद् छिनद्मीत्यादिपदाध्याहारेणाधियज्ञं व्याख्यानं कुर्वन्नपि
शतपथप्रवक्ता वायुविज्ञानं न जहाविति पूर्वमेवोदाहृतम् (६५०)।

एव मेकस्यैव मन्त्रस्य पूर्वं मधिदैवतव्याख्यानं प्रदर्श्य ततोऽध्यात्म
मपि व्याख्यानं प्रदर्शितम्। तद्यथा ऋ॰ सं॰ ८, ८६, ४—

"सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः"–इति।

अस्य "सोमः सूर्यः प्रसवनात्॰—॰ इत्यधिदैवतम्; अथाध्या-
त्मम्— सोम आत्माप्येतस्मादेव"–इत्यादि द्विविधं नैरुक्तं व्याख्यानं
द्रष्टव्यम् (१३, २, १२,)।

एकस्य मन्त्रस्य त्रिविधं चतुर्विधं वा व्याख्यान मप्युपपद्यते।
तद्यथा ऋक्संहिताप्रथममन्त्रस्य "अग्नि मीळे पुरोहितम्"–
इत्यस्य। अधियज्ञपक्षे 'पुरः' सम्मुखे वेद्यां 'हितं' निहित मिम
मेव 'अग्निम्' पार्थिवं प्रज्वलन्त मङ्गारम्, अधिदैवतपक्षे 'अग्निम्'
'पुरः' पूर्वस्यां दिशि 'हितम्' उदितं सूर्यम्, अध्यात्मपक्षे 'पुरो-
हितम् अग्निम्' सर्वेषा मेव पुरः स्थितं परमात्मानं जीवं
वेत्यादि बोध्यम्॥

अथाधिदैवतार्थतो बहव उपदेशा अपि लक्षिता भवन्ति।
तद्यथा ऋ॰ सं॰ १, १५४, ६—

"ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः।
अत्राह तदुरुगायस्य वृष्णः परमं पद मवभाति भूरि"–इति।

"अर्थेऽपि रश्मयो गाव उच्यन्ते"–इति ब्रुवता यास्कमुनिना

तन्निगमरूपस्यास्यांशस्योपस्थेव भाषि— "('ता') तानि 'वास्तूनि' ('उश्मसि') कामयामहे 'वां' (वयम्), ('गमध्यै') गमनाय ; 'यत्र' (येषु वास्तुषु) 'गावः' (रश्मयः) ('भूरिशृङ्गाः') बहुशृङ्गाः०—० 'अयासः' अयनाः ; ('अत्र') तत्र (तेषु वास्तुषु) 'उरुगायस्य' महागतेः ('वृष्णः') विष्णोः 'तत्' परार्ध्यस्थ' 'परमं' पदम्' (आकाशं) 'अवभाति' 'भूरि' बहु"–इति निरु० २. ८. ३। इतश्चात्र वास्तुविज्ञानमुपलभ्यते। तद्यथा— येषु वास्तुषु मध्ये बहु आकाशं स्यात्, यस्मिंश्चाकाशे सूर्यरश्मीनां वायुप्रेरितं गमनागमनञ्च प्रचुरं भवेत्, तादृशानि बहुवाय्वाकाशातपालोकसमन्वितान्येव वास्तूनि विद्वद्भिर्वासायाश्रयणीयानीत्युपदेशः फलितः।

एवं गृहद्वारनिर्माणञ्च कीदृक् कर्तव्य मित्युपदेशश्चाधिदैविकार्थत एव लभ्यते यथा ऋ० सं० १०. ११०. ५—

"व्यचस्वतीरुर्विया विश्रयन्तां पतिभ्यो न जनयः शुम्भमानाः।
देवीर्द्वारो बृहतीर्विश्व मिन्वा देवेभ्यो भवत सुप्रायणाः"–इति।

अस्मिन् मन्त्रे गृहाणां द्वारः कीदृश्यो निर्मातव्या इत्युपदिष्टम्। 'द्वारः' यज्ञगृहाणां विद्वद्गृहाणां वा 'देवीः' देव्यः, दीप्तिमत्यः [ "द्वाराभिमानिन्यो हे देव्यः"–इति सा० भा० ] 'व्यचस्वत्यः' व्यञ्चनवत्यः, बहुवायुप्रवेशयोग्याः, 'उर्विया' उरुत्वेन, प्रशत्वेन 'विश्रयन्ताम्' सुयोग्याधिकप्रस्थकपाटयुक्ता भवन्त्वित्यर्थः। 'पतिभ्यो जनयः न शुम्भमानाः' कुलवध्वो यथा स्वं स्वं पतिं तोषयितुं सुन्दरवसनभूषणैः शोभन्ते, तथैव शोभिताश्च भवन्त्वित्यर्थः। अतएवोक्तमैतरेयके "विश्व मिव हि रूपं रराट्याः शुक्र मिव च कृष्ण मिव च"–इति (१. ५. ३.)। 'विश्व मिन्वाः' "विश्व

माभिरेति"–इति निरुक्तम् ( ८. २. ७. ), [ "सर्वस्य प्रीणयितारः" –इति सा० भा० ] एवं 'इहतीः' वृहत्यो दैर्घ्येण 'देवेभ्यः' ऋत्विग्यजमानेभ्योऽन्येभ्यश्च विद्वद्भ्यः 'सुप्रायणाः' सुखप्रवेशाः 'भवत' इति तदर्थः। तदेतेन विद्वद्भिः सुदैर्घ्यप्रस्थयुक्ताः प्रवहनयोग्यवायुप्रवेशाः सुचित्रिता दीप्तिमत्यो द्वारः कर्त्तव्या इति द्वारविज्ञान मुपदिष्टम्।

अन्याप्येषा द्रष्टव्या ऋ० सं० ३. १८. २—

"तपो ष्वग्ने अन्तरा॑ अमित्रा॑ तपा शंस मररुषः परस्य। तपो वसो चिकितानो अचित्तान् वि ते तिष्ठन्ता मजरा अयासः" –इत्यस्या ऋच इदं सायणीयं भाष्यम्— "हे 'अग्ने' 'अन्तरान्' अभिभावकान् 'अमित्रान्' शत्रून् 'सु' सुष्ठु यथा भवति तथा 'तपो' तपैव बाधस्व। किञ्च 'अररुषः' तुभ्यं हविरप्रयच्छतः अत एव 'परस्य' शत्रुभूतस्य त्वं 'शंसम्' अभिलाषं 'तपा' क्षपय। 'वसो' सर्वस्य वासयितः हे अग्ने ! 'चिकितानः' कर्माभिज्ञस्त्वम् 'अचित्तान्' स्वकर्मण्यनासक्तमनस्कान् पुरुषान् 'तपो' सन्तप। यस्मादेवं तस्मात् 'ते' तव रश्मयः 'अजराः' जरारहिताः अतएव 'अयासः' सर्वत्र गमनस्वभावाः सन्तो 'वि तिष्ठन्ताम्' विशेषेण तिष्ठन्तु"–इति। तदेतेन मन्त्रेणाग्निपूजाशीलाना मग्निशत्रूणां मनुष्याणां विनाशः प्रार्थित इत्येव कल्पितम्।

अस्मन्मते त्वेतन्मन्त्रस्यैवं व्याख्यानं कार्यम्— प्रथमपादस्य, हे 'अग्ने !' 'अन्तरान् अमित्रान्' गृहमध्यस्थान् शत्रुभूतान् आर्द्रभावान् 'तप उ' शोषयेति। द्वितीयपादस्य, 'अररुषः परस्य' 'अरुषीरारोचनात्'–इति हि निरुक्तम् ( १२. १. ७. ), अररुषः— अनरुषः, तथाच शत्रुभूतस्याप्रकाशस्य 'शंसम्' नाम अस्तित्व मिति यावत्, 'तपा' दह, नाशयेति। तृतीयपादस्य,

हे 'वसो' 'चिकितानः' प्रज्वलन् त्वं 'अचित्तान्' चित्तशून्यान् दंशमशकादीन् 'तप उ' तपैवेति । चतुर्थपादस्य , 'ते' तव सखि-भूताः 'अजराः' 'अयासः' पवमानाः 'वितिरन्ताम्' अत्र गृहे इति शेषः । अग्नौ ज्वलिते वायोरागमनं प्रत्यक्षम् , अत एवाग्नेर्वायु-सखेति च नाम प्रसिद्ध मिति । तदेव सार्द्रे गृहेऽग्निप्रज्वालनेन तदार्द्रभावो नश्यति, तत्र प्रकाशोऽपि भवति, तदाद्रान्धकाराश्रिता दंशमशकादिजीवा अपि विदूरिता भवन्ति, तत्र सदागतेर्गमनञ्च सिध्यतीति फलितार्थः सम्पन्नः । तदेतेन मन्त्रेण गृहस्य प्रकाश-शून्यत्वम् , तन्निबन्धन सार्द्रत्वम् , तत एव वायुप्रवाहहीनत्वम् , तदाश्रितं दंशमशकादिजीवाश्रयत्वञ्चेति चत्वारि दूषणानि विज्ञा-पितानि ; तेषां चतुर्णा मेव दूषणानां निवारणाय तादृशे गृहे अग्नेः प्रज्वालनञ्चोपदिष्टम् ।

इत्थेवं पदार्थविज्ञानशिक्षोपयोगीनि बहुपदेशपूर्णानि चैता-दृशान्युत्कृष्टतमान्यधिदैवतव्याख्यानान्यवज्ञाय , परमात्मज्ञानपिपा-सूनां तर्पणानि अध्यात्मव्याख्यानानि च विलोप्य, अधियज्ञव्याख्या-नान्येवाभायत सर्ववेदभाष्यकारः सायणाचार्यस्तथान्योऽन्योऽपि । तत्राह तेन सायणेन ऋक्संहिताभाष्ये अस्यवामीयसूक्तव्याख्याना-रम्भे— 'एव मुत्तरत्राप्यधिदैवतपरतयाध्यात्मपरतया च योजयितुं शक्यम् , तथापि स्वरसत्वाभावात् ग्रन्थविस्तरभयाच्च न लिख्यते ; यत्र द्वा सुपर्णेत्यादौ स्फुट माध्यात्मिको ह्यर्थः प्रतीयते, तत्र त मेव प्रतिपादयामः'—इति ( १. १६४. १. ) ।

वस्तुतो ध्यानाध्यात्मविज्ञानकालिकाना मशेषशेमुषीमता मपि तेषां सायणमहीधरादीना मधिदैवतार्थतोऽपि मन्त्राभिप्रेतं प्रकृत-विज्ञानं नैव स्फुरितं सम्यगिति तच्छोच्य मेवाभवत् । तद्यथा—

मेवास्मिंस्तद्दधाति"–इति ( १, ४. ३. )। "नाभिः सन्नहनात्। नाभ्या सन्नद्धा गर्भा जायन्त इत्याहुः"–इति च नैरुक्तम् (४.३.५.)। 'णह बन्धने'–इति दिवादिधातोः 'नहो भश्'–इतीञ्प्रत्यये भान्तादेशे चाद्युदात्तो नाभिशब्दोऽयं निष्पद्यते। तदेवं मध्यस्थले सति अभितः स्थितानां सन्निहितानां बन्धनरूपत्वं नाभित्व मिति सम्पद्यते नाभिलक्षणम्। अत एव शारीराणां स्नायूनां वायूनाञ्च मध्यस्थस्य बन्धनरूपस्याङ्गस्य नाभिरिति समाख्या, रथचक्रवलयगतानामराणां मध्यस्थो बन्धकोऽपि नाभिरुच्यते, सौरजगन्मण्डलस्य मध्यस्थः स्वरश्मिभिराक्षम्य सर्वेषां ग्रहोपग्रहाणां बन्धकश्चासौ सूर्योऽप्याख्यायते नाभिरिति। तद्यथा ऋ० सं० १०. १. ५. ३ — "विश्वस्य नाभिं चरतो ध्रुवस्य कवेश्चित् तन्तुं मनसा वियन्तः"–इति, "वैश्वानर नाभिरसि क्षितीनाम्"–इति च १०. ११. ७. १। एवञ्च मध्यस्थ आकर्षणहेतुर्नाभिरित्येवाभिप्रेत्येव प्रश्नोत्तरे दृष्टान्तविधया पतिसन्निहितस्याधारभूमेर्यज्ञस्य नाभित्व मुपन्यस्तम्। एतेन पृथिव्या माध्याकर्षणविज्ञान मुपदिष्ट मिति।

श्रूयते चैवं मन्त्रांश एव ऋक्संहितायां ( ७. ८८. ३. ), यजुःसंहितायाञ्च ( ५. १६. )—

"दाधर्थ पृथिवी मभितो मयूखैः"–इति।

तत्रास्येदं सायणीयं भाष्यम्— "हे 'विष्णो !'०—० 'पृथिवीं' प्रथितां इमां भूमिम् 'अभितः' सर्वत्र स्थितैः 'मयूखैः' पर्वतैः 'दाधर्थ' धारितवानसि, यथा न चलति तथा दृढीकृतवानित्यर्थ इति। तदत्र मयूखशब्दस्य अश्रुतपूर्वः पर्वतार्थः प्रकृतार्थसमन्वयासमर्थतयैव तेनाश्रित इति प्रकृतार्थसमन्वयासमर्थता च तस्य विदुषो ऽभवनूनं तत्कालाज्ञाधारस्यत एवेति च स्फुटम्।

यथास्येदं महीधरकृतं भाष्यम्— "हे 'विष्णो !'०—० 'पृथिवीं' 'मयूखैः' स्वतेजोरूपैः नानाजीवैः वराहाद्यनेकावतारैर्वा 'अभितः' 'दाधर्थ' दधर्थ, सर्वतो धारितवानसि"–इति। अत्र नानाजीवानां वराहाद्यनेकावताराणां वा तेजोरूपत्वकल्पनं तथाविधसाधनैः पृथिव्या विष्णुकर्तृकं धारणञ्चेति सर्व मेवैतद् गाढतमसाच्छन्नविज्ञानधिया मेवोपपद्यते।

तत्त्वतस्त्विह रश्मिभिः साधनैः विष्णुनामसूर्यकर्तृकं पृथिव्याः सर्वतो धारण मिति विज्ञान मेवोपदिष्टम्। एतेनाकर्षणशक्तिविज्ञानं पुरा नासीदित्यद्यतनविज्ञानविदा मास्खलितसिद्धान्तोऽपि नून मज्ञातत्वातप्रभवस्तः।

एव मन्यत्रापि यथा— "सलिलं वा इद मन्तरासीत्, यदतरन् तत् तारकाणां तारकत्वम्"–इति तै० ब्रा० १. ५. २. ५। 'द्यावापृथिव्योरन्तर्मध्ये यदिदं स्थावरजङ्गमात्मकं जगद् दृश्यते, तत् सर्वं पुरा प्रलयकाले सलिल मेवासीत्, तदानीं कृत्तिकाद्याः सलिलं तीर्त्वा लोकान्तरेषु गताः; तस्मात् तरन्तीति व्युत्पत्त्या तारकत्वं सम्पन्नम्"–इति सा० भा०। तदिदं व्याख्यानं नोपपद्यते कथ मपि; स्थावरजङ्गमात्मकजगत्त्वन्तु पार्थिवाना मेव, पौराणिकमते प्रलयकाले सलिलाप्लुतत्वञ्च तेषा मेव विवक्षितम्, अत्र पृथिव्यां कदाप्येकदा कृत्तिकादितारकाणां संस्थितिवर्णन मपि गल्पिकायुक्तनम्, तदितस्तीर्त्वा तासा मूर्ध्व-पलायनन्तु दूरपराहत मिति सुधीभिरेवाकलय्यम्।

तत्त्वतोऽस्ति हि सलिल मित्यन्तरिक्षवचनम्; 'आपः'–इत्यस्य 'समुद्रः'–इत्यस्य चान्तरिक्षनामसु पाठात् (निघ० १. ३. ८, १५.), निरुक्ते माध्यमिकत्वेन व्याख्यानात् (११,

सन्ति यजुःसंहितायां कतिचिद् ब्रह्मोद्यसञ्ज्ञका ऋङ्मन्त्राः ते सर्वे नूनं विविधविज्ञानपूर्णा अपि सायणादिभिर्न तथा व्याख्याताः। तद्यथा तत्रत्यैकस्या ऋचोऽर्द्धर्च एषः—

"पृच्छामि त्वा परमन्तं पृथिव्याः,

पृच्छामि यत्र भुवनस्य नाभिः"–इति ( वा० सं०२३. ६१. )।

एतत्पृच्छयोरुत्तरे अपि तद्द्वितीयस्या मेवर्चि श्रुते—

"इयं वेदिः परो अन्तः पृथिव्याः,

"अयं यज्ञो भुवनस्य नाभिः"–इति ( वा० सं० २३. ६२. )।

तावेतौ द्वावेवार्द्धर्चौ ऋक्संहितायामप्याम्नातौ ( १. १६४. ३४, ३५. )। तैत्तिरीयसंहितायाञ्चेमावाम्नातौ ( ७. ४. १८. ५, ६. ), तद्ब्राह्मणे चोपन्यस्तौ ( ३. ९. ५. )। तदेतयोर्व्याख्यानानि—

'हे यजमान! ०—० यत्र सर्वा पृथिवी समाप्यते, तत् पृच्छामि। तथा त्वा मन्यत् पृच्छामि। किं तदिति, उच्यते— यत्र भुवनस्य नाभिः सर्वतो बन्धनम्, यत्र सर्वं सतर्द्धं भवति त मित्यर्थः'–इति। ततः 'पृथिव्याः प्रथनवत्याः भूम्याः परो अन्तः पर-मन्तं पर्यवसान मियं वेदिः। न हि वेद्यतिरिक्ता भूमिरस्ति; "एतावती वै पृथिवी यावती वेदिः"–इति ( ब्रा० २. ८. १२, ३. ) श्रुतेः। तथायं यज्ञो भुवनस्य भूतजातस्य नाभिः सन्नहनम्; वृष्ट्यादिसर्वफलोत्पत्तेः सर्वप्राणिनां बन्धकत्वात्'–इति च। एते तयोरर्द्धर्चयोः सायणकृते ऋग्भाष्यीयव्याख्याने।

'हे यजमान्! त्वां पृथिव्याः परमन्तं पृच्छामि। यतः पर मुत्कृष्टप्रदेशो नास्ति, सोऽयं परोऽन्तः। तथा 'चक्रस्य नाभिरिव सर्वस्य भुवनस्य नाभिस्थानीयं वस्तु पृच्छामि'–इति। ततः 'येयं यागवेदिः, ता मेव पृथिव्याः परमन्तं याज्ञिका आहुः न हि वेद्या

अधिकः कश्चिद् भूप्रदेशोऽस्ति'-इत्यादि च। एते तयोरर्द्धर्चयोः सायणकृते तैत्तिरीयभाष्यीयव्याख्याने।

'यागसम्बन्धिनी या वेदिः, सा पृथिव्या मुत्कृष्टप्रदेशः; न हि ततोऽन्य उत्कृष्टदेशः कश्चिद् विद्यते'-इति, 'यथा शरीरस्य नाभिः मध्यप्रदेशः, तथा यज्ञः सर्वस्य लोकस्य मध्यस्थानीयः; कर्माधीनत्वात् सर्वजगद्व्यवहारस्य'-इति चैते तयोरर्द्धर्चयोः सायणकृते *तैत्तिरीयब्राह्मणीयव्याख्याने।*

'हे अध्वर्यो! पृथिव्याः परं अन्तं सर्वावधिभूतं पर्यन्तं त्वां अहं पृच्छामि। यस्मिन् स्थाने भुवनस्य भूतजातस्य नाभिः कारणं तदपि त्वां पृच्छामि'-इति, 'इयं वेदिः उत्तरवेदि- पृथिव्याः परः अन्तः अवधिः वेदेः सर्वपृथ्वीरूपत्वादित्यर्थः। भुवनस्य नाभिः कारणम् अयं यज्ञोऽश्वमेधः भुवनस्य प्राणिजातस्य नाभिः कारणम्; "यज्ञाद् वै प्रजाः प्रजायन्ते"-इति श्रुतेः'-इति चैते तयोरर्द्धर्चयोर्महीधरकृते यजुर्भाष्यीयव्याख्याने।

तत्त्वतस्त्विह प्रथम-पृच्छामित्येतिप्रश्नोत्तराभ्यां पृथिव्या वर्त्तुलाकारत्वं प्रतिपादितम्; वर्त्तुलस्यैव हि पदार्थस्याद्यन्तसीम्नोरैक्यदर्शनाद् यतः कुतश्च चालिता रज्जुस्तत्रैवावसीयते इति सर्व्वमेव स्थान मादिमध्यभागान्तमध्यभाक् च भवेदित्यभिप्रेत्यैवोत्तरित मियं वेदिः परो अन्त इति। एतेन पृथिव्याकृतिविज्ञान मुपदिष्टम्।

एव मपर-पृच्छामित्येतिप्रश्नोत्तराभ्यां पृथिव्या माध्याकर्षणशक्तिमत्त्वं प्रतिपादितम्; नाभिपदार्थस्य हि मध्यस्थत्वेन बन्धनरूपत्वेन *चान्यवान्वय सिद्धान्तितत्वात्। तथा चैतरेयकम्—* "अयं वै वेनोऽस्मादा ऊर्द्ध्वा अन्ये प्राणा वेनन्त्यवाङ्योऽन्ये तस्माद् वेनः प्राणो वा अयं सन् नाभेरिति तस्मान्नाभिस्तन्नाभेर्नाभित्वम् प्राण

४. ६. ), अत्रैव इद मन्तरासीदिति श्रुतेस्तथैवार्थोपपत्तेश्च। तरणं च प्लवन मेवेष्टम्; तारकासु तस्यैव सम्भवात्। अथवा अस्तु सलिल मित्युदकनाम, परं तदिह माध्यमिक मेवेष्टम्; अत्रैव इदमन्तरासीदितिश्रुतेस्तथैवार्थोपपत्तेश्चेति। 'आसीत्' –इत्यस्य अस्तीत्यर्थः, 'अतरन्'–इत्यस्य तरन्तीत्येवार्थश्च पाणिनि-सम्मतः ( पा सू० ३. ४. ६. )। तथा च 'अन्तः' द्यावापृथिव्यो-र्मध्ये 'यत्' 'इदं' 'सलिलम्' अन्तरिक्षम्, द्यावापृथिव्योः 'अन्तः' अन्तरिक्षे 'यत् इदं' 'सलिलम्' उदकं वा 'आसीत्' सदैवास्ति, एतदेव अन्तरिक्षं सलिलं वा तारकाः 'अतरन्' सदैव तरन्ति; 'तत् तारकाणां तारकत्वम्' इत्येवार्थः सम्पद्यते सङ्गच्छते चेति।

अपि तत्रैव किञ्चिदुत्तरं श्रुत मिदम्— "यानि वा इमानि पृथिव्याश्चित्राणि, तानि नक्षत्राणि; तस्मादश्लीलनामनि चित्रे नावस्येन्न यजेत"–इति ते० ब्रा० १. ५. २. ६। अत्रेदं सायणीयं भाष्यम्— 'पृथिव्याः सम्बन्धीनि चित्राणि विविधानि ग्रामनगरादीनि स्थानानि सन्ति, तानि नक्षत्रसदृशानि, यथा द्युलोके नक्षत्राणि विविधानि उपकारकानि च दृश्यन्ते तद्वद् ग्रामादीन्यपि। तस्मात् कुत्सम्बन्धिचित्ररूपनिमित्तं तत् स्थान मश्लीलनाम प्रतिकूल-नक्षत्रसदृशं निन्दितं स्थानं म्लेच्छजनभूयिष्ठम्, तस्मिन्नश्लीलनाम्नि ग्रामे निवासं यागाद्यनुष्ठानञ्च न कुर्यात्'–इति।

अत्र सुधीभिर्विचार्य मिदम्,— प्रदर्शितं सायणीयं भाष्य मेव मन्तव्य चेत्, तर्हि किं ग्रामनगरादिभिन्ने दरिये, समुद्र-गर्भे, अन्तरिक्षे वा निवसेद् यजेत चेति, अपीह नक्षत्रप्रकरणे किमेतेनाप्रसङ्गसङ्कीर्तनेनेति चेति। तत्त्वतस्त्विहैवं विज्ञान मुपदि-ष्टम्, यदद्यापि पाश्चात्यविज्ञानविद्भिरपि नाधिगतम्; किञ्चेत

एशोपदेशाद् विज्ञायते— तदानीमपि नक्षत्रादीनां स्वरूपादि-प्रत्यक्षज्ञानायासीत् किंविधमपि महद् यन्त्र मितीति ।

एवमश्विशुश्रेयसन्त्रो यस्तैत्तिरीयब्राह्मणे (२. ६. ६.) आम्नातः, संहितायाम् (३. ६. ६.), इह चैतस्यैव विहितो व्याख्यातश्च "देव्याः शमितार आरभध्व मुत मनुष्या इत्याद"–इत्याद्युक्त्या (२. १. ६.)। स हि यद्यपि यज्ञानुसृतो व्याख्यातः, परं चिकित्साविज्ञानानुगतशारीरपदार्थज्ञानार्थं एवेत्यवधेयम्; न हि जीवत्पशुघातादन्तरा शारीरसूक्ष्मातिसूक्ष्मस्नाय्वादिभावानां ज्ञानं सम्भवेन्नाम, नापि तदन्तरेण चिकित्साविज्ञानं पूर्णता मेतीति सर्वविद्यानिधानस्य वेदस्य तत्राप्युपदेशो विधेय इति ।

तथा यजुर्वेदीयाः "ब्रह्मणे ब्राह्मणम्, क्षत्राय राजन्यम्, मरुद्भ्यो वैश्यम्, तपसे शूद्रम्, तमसे तस्करम्, नारकाय वीरहणम्"–इत्येवमादिका मन्त्राश्च ('वा॰ सं॰ ३०. ५–२२.) यद्यपि नूनं तेषां ब्राह्मणादीनां कर्म-कर्मफलादिविज्ञानपराः; तथापि यज्ञानुरोधतः यज्ञीयपशुविधानपरत्वेन व्याख्याताः ।

एवं सम्भोगविज्ञानोपदेशकाः "अम्बे अम्बालिकेऽम्बिके"–इत्यु-पक्रम्य, "गणानां त्वा गणपतिं हवामहे"–इत्यादयो मन्त्राः (वा॰ सं॰ २१. १९—३१.), तैत्तिरीयब्राह्मणे (३. ८. ६, ७.) अन्यथा व्याख्याता अपीह अश्वोपचारीयत्वेन यज्ञपराः कृता अश्लीलार्थव्याख्यावद्भिरिति दिक् ।

अथाप्येवं बहूनां मन्त्राणा मधिदैवत मर्थं सोऽक्षत्य, यास्कोऽत्र स्वधिदैवतार्थं गृहीत्वा च 'यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम्'–इत्युदाहरणभूतेनैव तेन सायणाचार्येणाऽऽत्मेतिहासिकपरतया व्याख्यान मभापि च यथा—

"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढ मस्य पांसुरे"–इति ऋ॰ सं॰ १, २२, १७ ।

एवाष्टाचरपादा, त्रिपदा इति गायत्री । यद्यप्यस्या द्वितीयः पादः सप्ताचरः, तथापि गायत्रीत्व मव्याहतम् । तथा ह्यैतरेयकम्— "न वा एकेनाचरेण छन्दांसि वियन्ति, न द्वाभ्याम्"–इति (१. १, ६.) । पिङ्गलाचार्येण तु एकाचरहीनाया 'निचृत्'–इति, द्व्यचरहीनायास्तु 'विराट्'–इति विशेषनामोक्तम् । तथाचेयं निचृद्गायत्रीति सम्पन्नम् । अनयर्चा विष्णुर्देवो वर्णित इत्येषा 'वैष्णवी' ।

विष्णुशब्दो द्युस्थानदेवतासु पठितः (निघ॰ ५, ६, ११.) इति विष्णुः द्युविभागीयो देवः । मन्यते चात्र मन्त्रे प्रवल्गन मिति स एव विष्णुरादित्यः; "यत्र किञ्चित् प्रवल्हिस मादित्यकर्मैव तत्" –इत्युक्तेः (निरु॰ ७, ३, ४.) । सवित्रादिद्वादशसूर्यनामव्याख्यानप्रकरणे पूषनामव्याख्यानानन्तरं व्याख्यातं विष्णुनामेति सोऽसौ पञ्चमः सूर्य एव । तत्रैतद्वादशसूर्यद्वादशनामप्रकरणं समासतः प्रदर्शितं पुरस्तात् (१५४ पृ॰) । "अथ यद् विषितो भवति, तद् विष्णुर्भवति । विष्णुर्विशतेर्वा व्यश्नोतेर्वा"–इति तन्निर्वचनम् (निरु॰ १२, २, ७.) । "अथ 'यद्' यदा (मध्याह्ने) 'विषितः' व्याप्तोऽय मेव सूर्यो रश्मिभिः 'भवति', 'तद्' तदा 'विष्णुर्भवति' । 'विशतेर्वा' यदा (मध्याह्ने) आविष्टः प्रविष्टः सर्वतो रश्मिभिर्भवति, 'व्यश्नोतेर्वा' विपूर्वस्याश्नोतेः; यदा (मध्याह्ने) रश्मिभिरतिशयेनायं व्याप्तो भवति, व्याप्नोति वा रश्मिभिरयं सर्वम्, तदा विष्णुरादित्यो भवति"–इति तद्दौर्गी वृत्तिः । शिपिविष्ट इति चास्यैव विष्णोर्नामान्तरम् । तदाह "किमित्ते"–इत्यस्य (ऋ॰ सं॰ ७,

१००. ६.) मन्त्रस्य व्याख्यानाय यास्कः— "शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः"–इति निरु० ५. २. २। "शिपयोऽत्र रश्मय उच्यन्ते, तैराविष्टो भवति"–इति तन्निर्वचनञ्च तत्र तदुत्तरम् (२.)। तस्मात् विष्णुरिति सूर्यस्यैव नामान्तरं ध्रुवम्।

अत एवायं मन्त्रो महामुनियास्केनैवं व्याख्यातः— "यत् 'इदं' किञ्च, तत् ('विचक्रमे') विक्रमते 'विष्णुः'। ('त्रेधा') त्रिधा ('निदधे') निधत्ते 'पदम्'। पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः, समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः। ('समूढमस्य') समूढम् 'अस्य' (विष्णोः), ('पांसुरे') प्यायने, अन्तरिक्षे पदं न दृश्यते"–इति (निरु० १२. २. ८.)। सोऽयमेक एव विष्णुः, पृथिव्यां पाचक-दाहक-विद्रावक-जाठर-दाव-वाडव-गार्हपत्याहवनीयदक्षिणेत्यादिबहुविधाग्निरूपेणावतिष्ठते, अन्तरिक्षे विद्युद्रूपेण वाय्वाकारवायुरूपेण वा, दिवि सूर्यरूपेणेति। तत्राऽस्य पार्थिवं रूपं सर्वाक्षिगोचरम्, द्युस्थं सौरमपि रूपं सर्वविदितम्, माध्यमिकं विद्युद्रूपं न हि स्थिरं दृश्यमस्ति। अत एवोक्तम् "अपत्यमेतन्माध्यमिकं ज्योतिरनित्यदर्शनम्"–इति निरु० ५. १. २.। अत्र च यास्कोक्तौ "प्र मातुः प्रतरं गुह्यम्"–इति (ऋ० सं० १०. ७१. ३.) विद्युद्विज्ञानमन्त्रः प्रमाणम्। वायुरूपञ्चादृश्यम्। तथाच "त्रयः केशिनः"–इति (ऋ० सं० १. १६४. ४४.) ज्योतिर्विज्ञानमन्त्रव्याख्यायां यास्कः— "अग्निः पृथिवीं दहति सर्वमेकः, अभिविपश्यति कर्मभिरादित्यः, गतिरेकस्य दृश्यते न रूपं मध्यमस्य" –इति (निरु० १२. ३. ८.)। वैश्वानरव्याख्यायाञ्चैव अग्निविद्युदादित्यानां क्रमाद् पृथिव्यन्तरिक्षद्युस्थत्वं मध्येकायत्वं सुपपादितं द्रष्टव्यम् (निरु० ७. ६. ७.)।

तदित्थ मसावेव प्रत्यक्षः सूर्यः, त्रिलोकव्यापी ज्योतिःस्वरूपो विष्णुः ; न चास्य माध्यमिकस्य रूपस्य दर्शन मस्तीति शाकपूणि-मते सम्यक् विष्णुविज्ञानम् ।

और्णवाभमते शब्दभेदेऽप्यर्थाभेद एव। तद्यथा यदुक्तं शाक-पूणिना दिवीति, तदेवोक्तं मौर्णवाभेन समारोहण इति। तदत्र "एषांल्लोकानां रोहेण सवनानां रोह आम्नातो रोहात् प्रत्य-वरोहश्चिकीर्षितः"–इति (७. ६. ४.) नैवकं द्रष्टव्यम्। एवं विष्णुपदशब्दो "वियद् विष्णुपद मित्यमरकोषादितोऽन्तरिक्षवाची प्रसिद्ध एवेति किं तत्र प्रमाणान्वेषणप्रयासेनेति। अवशिष्टं गयशिरसीति पदम्। तत्राद्ययोः पदार्थयोरुभयोरप्याचार्ययोरेक-मत्ये सम्पन्ने अन्तिमपदार्थे कथं स्यात्तद्वैध मित्यविचारित मपि स्वीकार्यम्— पृथिव्यामिति गयशिरसीति चाभिन्नार्थ मिति। यत्यत एव निघण्टौ गृहनामसु 'गयः'–इति पदम् (३. ४. १.)। एवञ्च समारोहणं सोपानम्, तत्राव सूर्यस्योदयस्थान मस्तमय-स्थानञ्चेत्येतद्भूगोलपार्श्वद्वयम् ; विष्णुपद मन्तरिक्षम्, तस्येवाधःस्थं याम्यम् ; गयशिरसि गृहाणां मूर्द्धप्रदेशे। तथा च सूर्यो मध्याह्ने गयशिरस मागच्छन्, क्रमात् सायं समारोहण मधिरोहन्, रात्रौ विष्णुपदे तिष्ठन्, पुनरुदयात् प्राक् समारोहण मारोहतीति प्रतीयते स्फुट मौर्णवाभाशयः। तदत्र मन्त्रे सूर्यस्यैव गुणा वर्णिता इतीदं विष्णुविज्ञानं नाम सूर्यविज्ञान मेव।

तैत्तिरीयसंहितायां मप्येष मन्त्र एव मेव सूर्यवाचिविष्णु-विज्ञानपरत्वेन व्याख्यातः। तद्यथा— "स विष्णुस्त्रेधाऽऽत्मानं विन्य-धत्त,— पृथिव्यां तृतीयम्, अन्तरिक्षे तृतीयम्, दिवि तृतीयम्" –इत्यादि (२. ४. १२. ६)। वा०-रामायणेऽपि १. ३१. १८—

"एकेन हि पदा क्रान्तां पृथिवीं सो ( विष्णुः ) ऽव्यतिष्ठत ।
द्वितीयेनाव्ययं व्योम, द्यां तृतीयेन , राघव !"–इति ।

अहो पौराणिककालमाहात्म्यम् ! अहो यज्ञपरव्याख्यामात्राध्ययनाध्यापनमाहात्म्यम् ! अहो बालानां कल्पिताख्यानप्रियतानुगत्यम् ! यदत्र सर्वब्राह्मण-निरुक्तादिक मालोचयतापि सर्ववेदभाष्यकारेण सायणाचार्येण व्याख्यातोऽयं मन्त्रः— "विष्णुस्त्रिविक्रमावतारधारी"–इत्यादिनेति ; अथवा यूयत एवेतत्— "ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः । यस्तन्न वेद किं ऋचा करिष्यति य इत् तद् विदुस्त इमे समासते"–इति ऋ० सं० १. १६४. ३९ । किञ्च ये वै सर्वशक्तिमतोऽपीश्वरस्य "परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे"–इति ( भ० गी० ४, ८. ) युगे-युगेऽवतरणं भवत्येवेत्यवतारकथायां विश्वसन्ति, तै विश्वसेयुश्च बाईबेल्कथितातिथान्त्येश्वरविषयामवतारकथाया मपीत्यलं प्रासङ्गिकानल्पभाषणेनेति ॥

तदेवंविधाना मधिदेवतार्थयुक्तानां मन्त्राणा माध्यात्मिकार्थानाञ्च बहूनां प्रायशो याज्यानुवाक्यायज्ञस्तोत्रादौ व्यवहारो भवति, केवलाधियज्ञार्थयुक्तानान्तु प्रायशः प्रैषादिकर्मव्यापारेष्विति विशेषः । येषान्तु मन्त्राणां ज्योतिष्टोमाद्यामुष्मिकादृष्टफलेषु न क्वचिदप्युपयोगः, तादृशानां केषाञ्चिद् ऐहिकदृष्टफलकारीर्यादियागादौ विनियोगा भवन्ति। इतोऽन्येऽपि सन्ति ये मन्त्राः, ते ब्रह्मयज्ञपाठादौ विनियुज्यन्ते । एषा मेव केचिन्मन्त्रा औपनिषदा अपि भवन्ति । कतिचिन्मन्त्रा बहुत्र विनियुज्यन्ते चेति विवेकः ॥

अथैषां मन्त्राणां यथा अथपद्यगीतिरचनाप्रकारभेदादस्ति

ऋग्यजुस्सामेति त्रिधात्वम्, तथैवास्ति च मन्त्राधिगतक्रियापदनिबन्धनापि त्रिधात्वम्। तदाह यास्कः— "तास्त्रिविधा ऋचः,— परोक्षकृताः, प्रत्यक्षकृता आध्यात्मिक्यश्च"—इत्यादि (निरु० ७. १. १.)। तथाच यास्वृक्षु प्रथमपुरुषक्रियाः श्रूयन्ते, ताः परोक्षकृताः; यासु मध्यमपुरुषक्रियाः, ताः प्रत्यक्षकृताः; यास्तूत्तमपुरुषक्रियाः, ता आध्यात्मिक्यः। इह ऋग्इति ग्रहणं मन्त्रपरम्; यजुरादिष्वपि तथा दर्शनात्। तदेवां त्रिविधानामेव मन्त्राणां पूर्वप्रदर्शिताधियज्ञाद्यर्थत्रैविध्यं सम्भवत्येवेति मन्त्राणां नवविधत्वम्। ते पुनर्नवविधा मन्त्राः ऋग्यजुस्सामरूपरचनात्रैविध्यभेदात् विभिन्ना इति मन्त्राणां सप्तविंशतिभेदाः सम्भवेयुः। यद्यप्येवं तथापि न सर्वेषामेव मन्त्राणां सर्वविधत्वसम्भवः;— न हि परोक्षकृताः कदापि प्रत्यक्षकृता भवितुमर्हन्ति, नापि सर्वेषामर्थत्रैविध्यमस्ति, न च सर्वासामेवर्चां यजुषां साम्नां वा परोक्षकृतत्वादित्रैविध्यमुपपद्यत इति।

ऋग्यजुस्सामलक्षणैस्त्रिविधैरेव मन्त्रैर्यज्ञः सम्पाद्यो भवति। तदुक्तमापस्तम्बेन— "स (यज्ञः) त्रिभिर्वेदैर्विधीयते, ऋग्वेदयजुर्वेदसामवेदैः"—इति (प० ३, ४सू०)। तत्र "ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ, यजुर्वेदेनाग्निहोत्रम्, सर्वैरग्निष्टोमः"—इति च (प० ५, ६, ७) तद्विज्ञानाः। अप्यग्निष्टोमादौ "ऋग्वेदेन होता करोति, सामवेदेनोद्गाता, यजुर्वेदेनाध्वर्युः, सर्वैः ब्रह्मा"—इति चोक्तं तत्र तेनैव (१८, २०, २१, २२.)। तदेवात्रसमुदाम्नातम्— "ऋचैव हौत्रमकुर्वन्, यजुषाध्वर्यवम्, साम्नोद्गीथम् (औद्गात्रम्), यदेनैतत् त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमकुर्वन्"—इति (५.५.७.८.)। होत्रादयश्चैते चत्वारश्चत्वारो ऋियन्ते।

तदाश्वलायनः— "तस्यर्त्विजः, चत्वारस्त्रिपुरुषाः, तस्य तस्योत्तरे त्रयः। होता मैत्रावरुणो ऽच्छावाको ग्रावस्तुद्, अध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेता, ब्रह्मा ब्राह्मणाच्छंस्याग्नीध्रः पोता, उद्गाता प्रस्तोता प्रतिहर्त्ता सुब्रह्मण्य इति"—इति (श्रौ० सू० ४. १, ३-८.)।

ततोऽत्र ऋग्वेदीयब्राह्मणे प्रधानतो होताच्छावाकमैत्रावरुणग्रावस्तुदित्येषां चतुर्णां होतॄणां कर्माणि यंत्तनादीन्यभिहितानि, प्रसङ्गाद् ब्रह्मत्वादीन्यपि। इतोऽवशिष्टान्येतदारण्यकतोऽवगम्यानि। ततोऽप्यवशिष्टानि त्वाश्वलायनसूत्रादितोऽवगन्तव्यानि भवन्ति। नापि सर्वेषा मेवेष्टिहौत्रसोमाना मैकाहिकाहीनसत्राणां विधय इहैवैकत्र ब्राह्मणे समाम्नाताः; अपि त्वेषाश्चिदेवेति॥

एतर्हि त्वृग्वेदस्य द्वे एव ब्राह्मणे लभ्येते,— इद मैतरेयक मेक मपरन्तु कौषीतकं नामेति। तत्र कौषीतके प्रथम मेव दर्शपूर्णमासेष्टिरारब्धा; ततोऽग्निहोत्रादिकं प्रकीर्णकञ्च किञ्चिद् विधायैव क्रमेण वैश्वदेवेष्टिः, स्वस्त्ययनेष्टिः, पथिकृदिष्टिः, दाक्षायणेष्टिः, इन्द्रादयेष्टिः, सार्वसेनीष्टिः, शौनकेष्टिः, वसिष्ठेष्टिः, प्राकेष्टिः, मुन्ययनेष्टिः, तुरायणेष्टिः, आग्रयणेष्टिः, वसन्तेष्टिः, ब्रीहियवेष्टिः, चातुर्मास्येष्टयस्तत्रः, पित्रेष्टिश्चेति दर्शपूर्णमासाभ्यां सङ्कलनया एकविंशतिर्योगा आम्नाताः। ततः पुनरपि किञ्चिदानुषङ्गिकं प्रोच्य दीक्षणीयेष्टिं विधायाग्निष्टोमकाण्डस्य प्रवचनारम्भः कृतः। ततः "सोमेनेष्ट्वा सौत्रामण्या यजेत"—इत्यादि विधाय षोडश्यादिज्योतिष्टोमसंस्थादीना मपि विधान माम्नातम्। तदस्मिन् ब्राह्मणे ऐतरेयानाम्नातानां मप्यनेकयागानां स्वस्त्ययन्यादिविध्यादिकं दृश्यते, इत्यतो चैतरेयोक्ताना मप्यनेकप्रयोगानां समासत उल्लेखः। तदेतयोरङ्गाङ्गिभाव मेवोपगन्तुं युज्यते॥

अथात्रैतरेयके प्राचीनब्राह्मणकारर्षीणां क्वचित्-क्वचिन्नामोद्धृतिः, क्वचित्-क्वचिद्वचनोद्धृतिः, क्वचित्-क्वचित् सनामवचनोद्धृतिश्च दृश्यते। तद्यथा— "पूर्वां पौर्णमासी मुपवसेदिति पैङ्ग्यम्, उत्तरा मिति कौषीतकम्"–इति ७. २. १०। श्रूयते चैतत् कौषीतक्यास्तृतीयेऽध्याये। तत्र हि स्वपूर्वतनस्य पैङ्ग्यस्य मत-विमर्दनाय तथा स्वनामान्वितं कृतं तद्विधानं कुषीतकेन, तदेव मत-द्वयं यथायथ मिहोद्धृत मित्येव प्रतिभात्यस्माकम्। एवञ्च प्रथमन्त्रा-वत् पैङ्ग्यादिब्राह्मणग्रन्थेष्वेव ज्योतिष्टोमसंस्थाग्निष्टोमादयोऽन्येऽन्ये च यागा विहिताः, तद्विधिविशेषास्ततः कुषीतकादिभिः प्रोक्ताः, तच्छेष-विधय एवैतस्यैतरेयस्य विषया इति च वक्तुं युज्यते। तस्मात् कौषी-तकीब्राह्मणेऽग्निष्टोमादियागानां योऽङ्गप्रत्यङ्गविधयः समासतोऽभि-हिताः, तेषा मेवात्र विशेषतो विधान मिति त एव यागा अस्यैतरेयस्य विषय इति सिद्धम्॥

---

(८)

अथ क्रमप्राप्त मिदानी मिद मपि विचार्य मस्ति, किमु प्रयोजन मेतस्येति। सम्प्रति लोके मोक्षस्यैकस्य परमपुरुषार्थत्वेन स्वीकारात्, तदवाप्तिरेवास्य फलं मन्येत, यदि नाम वेदे तस्य स्वीकृतिः श्रूयेत? न हि संहितासु क्वापि तादृशशब्दोऽपि श्रूयते; अपुनरावृत्तिमतन्तु ब्राह्मणेषु गम्यते सत्यम्, परं न तत् पौराणिक-मोक्षपर मिति च नासत्यम्। अस्ति पुराणेषु क्वचित् चतुर्विधस्य क्वचित् पञ्चविधस्य च मोक्षस्योल्लेखः। तद्यथा भागवते—

"सार्ष्टिसारूप्यसालोक्यसामीप्यैकत्व मप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः"–इति ।

अस्मिन् श्लोके सार्ष्टीति बौद्धशास्त्रप्रसिद्धं निर्वाणम्। तत्तु नित्यस्यात्मनो नैव सम्भाव्य मस्ति, न च सुखाभिलाषिणा मस्माकं प्रार्थनायोग्यम्, नापि वेदबोधित मित्यश्रद्धेयम्। एकत्व मपि तथैव। सर्वव्यापिनोऽस्य परमेश्वरस्य सर्वलोके सर्वसमीपे च सर्वदा विद्यमानत्वात् सालोक्य-सामीप्ये त्वप्रार्थिते अपि स्त एव सर्वत्र सर्वेषा मस्माक मिति किं तयोः प्रार्थनया। सारूप्य-वादस्तु मत्तप्रलापः; ब्रह्मणो रूपाभावात्, असङ्ख्येयत्वप्रसङ्गा-च्चेति दिक्। तदेतस्य ब्राह्मणस्य स्वर्गसाधनयागविध्युपदेशा एवाभिधेया इत्यतः स्वर्ग एव प्रयोजन मिति ब्रूमः; अस्माकं स्वर्ग-फलसाधनायैवैतद् ब्राह्मणं प्रवृत्त मिति यावत्। अत एव प्रधानत उक्त मनेकत्र "स्वर्गकामो यजेत"–इति।

सोऽसौ स्वर्गः खलु लोकान्तरः। तथाहि— "परो वा अस्मा-ल्लोकात् स्वर्गो लोकः"–इति (६. ४. ४.), "आदित्याश्चैवेहा-सन्नङ्गिरसश्च तेऽग्रेऽग्निमाग्नि मयजन्त, ते स्वर्गं लोक मायन्"–इति (१. ३. ५.), "तं स्वर्गल्लोऽब्रुवम् एतत् ते ब्राह्मण! सहस्र मिति"–इति (५. २. ८.) च। स हि लोकान्तरोऽस्मा-ल्लोकादूर्ध्वतनः। तथाचाम्नातम्— "अमेदेवयोन्या आहुतिभ्यः सम्भूय हिरण्यशरीर ऊर्ध्वः स्वर्गलोक मेष्यति"–इति (२. १. ३, पुनः २. २. ४.)। तत्र पापी गन्तुं न शक्यते। तथाह— "सोऽपहतपाप्मोर्ध्व स्वर्गं लोक मेति"–इति (७. २. ११.)। अत एवेद मप्याम्नातम्— "स्वर्गो वै लोको दूरोहणम्"–इति (४. ३. ६.)। नित्याग्निहोत्रयाज्यादीनां तत्र गमनं भवतीत्यपोह

श्रूयते— "यद्वा अस्य किञ्च नश्यति, यन्म्रियते, यदपाजन्ति, सर्वं हैवैन तदमुष्मिं ल्लोके यथा बर्हिषि दत्त मागच्छेदेव मागच्छति, य एवं विद्वानग्निहोत्रं जुहोति"—इति ( ५. ५. २. )।

परलोकस्वीकाराभावे निन्दाश्रवणञ्च गम्यते। तद्यथा—"किं ते कृण्वन्ति कीकटेषु गावः"—इति ( ऋ० सं० ३, ५३, १४. ) मन्त्रस्य व्याख्याने 'प्रमगन्द'-पदस्य "प्रमदको वा योऽय मेवास्ति न पर इति प्रेप्सुः"—इत्याह यास्कः ( ६. ६. ४. )।

अथात्र विशेषतो विवेच्य मिदम्—भूर्भुवस्स्वरिति य इमे त्रयो लोकाः सर्ववेदप्रसिद्धाः, तेभ्यः सर्वेभ्य एवैभ्यः परोऽतिरिक्तः कश्चिदस्ति स्वर्गो लोकः, आहोस्वित् एषा मन्यतम एकः, उत सर्वं एवेमे स्वर्गा इति।

तत्रादौ भूरादय एवैते यथाबोधं निरूप्यन्ते। श्रूयते हि शतपथे— "भूरिति वै प्रजापति रिमा मजनयत, भुवरित्यन्तरिक्षम्, स्वरिति दिवम्; एतावद्वा इदं सर्वं यावदिमे लोकाः सर्वेणैवाधीयते"—इति ( २. १. ४. ११. )। एवमादिश्रुतिभ्यो ऽवगम्यते इयं पृथिव्येव भूलोकः, असौ द्युलोक एव स्वर्लोकः, एतयोर्लोकयोरन्तरा यदान्तं यदाकाशम्, तदन्तरिक्ष मिति। तत्रास्मिन् पृथिवीलोके पार्थिवस्याग्नेः प्राधान्यम्, असुष्मिन् द्युलोके सूर्यस्य; अन्तर्लोके त्वस्य वायोरिति। अत एव प्रदर्शितं पुरस्तात् "तिस्र एव देवताः"—इत्यादि (१४८पृ०)। द्यावापृथिवीलुक्तो द्युलोक मारभ्यैतल्लोकान्तं सर्वं मेवेदं सौरं जगत् गृह्यते। अत एवाम्नात मैतरेये— "अग्निर्वै देवाना मवमो विष्णुः ( सूर्यः ) परमस्तदन्तरेण सर्वा अन्या देवताः"—इत्यादि ( १. १. १. )। आभ्यां द्यावापृथिवीभ्यां बहिरपि अनन्ताकाश मस्ति, तत्रैतत्सौरजगन्मण्डल-

मण्डलरूपाकाशे सौरजगदन्तरागामी प्रवहो नामैष वायुर्न प्रवहति। एवं माभ्यां द्यावापृथिवीभ्यां बहिरस्ति च द्युलोकस्य विद्यमानता; तत्रैतत्सौरजगन्मण्डलमण्डनस्यास्य सूर्यस्याधिकारो न ह्येव विद्यते; प्रवहवायुहीनाकाशं तीर्त्वा सौररश्मिजालस्यैतस्य तत्र गमनानुपपत्तेः। सन्ति हि तत्रैवं बहूनि सौरजगन्मण्डलानि, सुवर्णान्यविधान्यपि बहूनि। तान्येव ध्रुवारुन्धतीसप्तर्षिमण्डलादीनि ज्योतींषि नक्षत्राण्युच्यन्ते। ज्योतीरूपाणा मप्येषा मादित्यतोऽप्यतिदूरस्थत्वेनैवाह्नि सूर्यरश्म्यभिभूतत्वात् न दर्शन मस्ति। तदुक्तं निरुक्ते— "आदत्ते भासं ज्योतिषाम्"–इति (२. ४. १.)। एवञ्चान्तरिक्षशब्दस्याकाशपर्यायत्वेऽपि "भुवरित्यन्तरिक्षम् (शत० ब्रा० २. १. ४. ११.)"–इत्येवमादौ, "वायुर्वेन्द्रो वान्तरिक्षस्थानः (निरु० ७. २. १.)"–इत्यादौ च एतज्जगत्सम्बन्ध्येवान्तरिक्षं बोध्यम्। "स्वरिति दिवः (शत० ब्रा० २. १. ४. ११.)"–इत्येव मादौ, "सूर्यो द्युस्थानः (निरु० ७. २. १.)"–इत्यादौ च एतज्जगत्सम्बन्ध्येव द्यौर्बोध्येति। तदेतेन लोकत्रयस्वरूपनिर्णयेनैव निर्णीतं स्वरिति।

स्वरिति पदं स्वर्गाभिधानं प्रसिद्धम्; सूर्यपर्यायश्च स एव स्वःशब्दः। अत एव निघण्टौ स्वरिति पदं सूर्यद्युलोकयोः साधारणनामसु पठितम् (निघ० १. ४. १.), निरुक्तावपि तथैव व्याख्यातम्— "स्वरादित्यो भवति; सु अरणः, सु ईरणः, स्वृतो भासं ज्योतिषां, स्वृतो भासेति वा"–इति (२. ४. २.)। अत्रापरञ्च श्रूयते— "स्वर्गो वै लोको ब्रध्नस्य विष्टपं, स्वर्ग मेव तल्लोकं यजमानं गमयति"–इति (४. १. ४.)। तद् ब्रध्नस्य विष्टप मपि सूर्यलोक एव। तथा ऋङ्मन्त्र एषः ८. ६८. ९—

"उद्यन् ब्रध्नस्य विष्टपं गृहमिन्द्रश्च गन्वहि।
मध्वः पीत्वा सचेवहि त्रिः सप्त सख्युः पदे"—इति।

द्युलोक एव देवलोकः ; देवानां रश्मीनां प्रधानतस्तत्र निकेतनात्। अत एव निघण्टौ द्युस्थानदेवतासु 'देवाः'—इति पदं पठितम्—(५. ६. २६.), व्याख्यातमपि तथा तन्निगमप्रदर्शनादिभिर्यास्केन। तदेवं द्युलोको देवलोको स्वर्लोक इमान्यभिन्नार्थानि पदानि। तदिदमप्याम्नातमुभयविधेऽपि यजुःसमाम्नाये—

"पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम्।
दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम्॥
स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी।
यज्ञं ये विश्वतो धारꣳ सुविद्वाꣳसो वितेनिरे"—इति
वा० सं० १७, ६७, ६८ ; तै० सं० ४. ६. ५. २, ४।

विनियुक्तावेतौ मन्त्रौ शतपथब्राह्मणेन (८. २, ३. २६, २७.), व्याख्यातौ च तैत्तिरीयशाखिकब्राह्मणेऽपि (५. ४. ७.)।

सोऽसौ द्युलोक एव महतः परलोकः। अतएवैव साक्षात् शतपथे—"तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदञ्च परलोकस्थानञ्च, सन्ध्यं तृतीयं स्वप्नस्थानम्, तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च"—इति १४. ७. १, ८।

परमलोकोऽप्यसावेव। तथाहि—"स परमं लोकमजयदुपाग्निनोः प्रियं धाम गच्छति"—इति (ऐ० ब्रा० १. ४. ४.)। अग्निनोः प्रियं धाम नूनं द्युलोक एव ; तयोर्द्युस्थेषु परिगणनात् (निघ० ५. ६. १.), "अथातो द्युस्थाना देवतास्तासामश्विनौ प्रथमागामिनौ भवतः"—इत्यादिनैरुक्ताच्च (१२. १. १.)।

अमृतलोकोऽप्यसावेव। तथा ह्याथर्वणिकाः समामनन्ति—

"सूर्यस्य भागे अमृतस्य लोके"–इति ८. १. १।

ब्रह्मलोकोऽप्यसावेव। अत एवोक्तं निरुक्तपरिशिष्टे जीवाना मूर्द्धगतिव्याख्याने— "देवलोकात् आदित्यम्, आदित्याद् वैद्युतम्, वैद्युतान्मानसम्, मानसः पुरुषो भूत्वा ब्रह्मलोक मभिसम्भवति"–इति (निरु० १४. ८.)। शतपथेऽपि श्रूयत एतत् प्राय एव मेव (१४. ८. १. १८.)। अत्र वैद्युतशब्दो ज्योतिःपरः। तथा च देवलोकं द्युस्थानं सूर्यमण्डलं वा अभिगम्य आदित्यम् आप्नुवन्ति, त मभिगम्य च तदीयज्योतिरुपलभ्य मनोमात्रसहायाः पुरुषास्त मेव ब्रह्मलोक मनुभवन्तीति तदर्थः। अत एव सुव्यक्त माम्नात मिहापि— "श्री मिति स्वर्गो लोक श्री मित्यसौ योऽसौ तपति (५. ५. ७.)"–इति।

तदित्थ मिदं निष्पन्नम्— स्वर्गो लोकः खलु नेभ्यो लोकत्रयेभ्योऽतिरिक्तः, अपि त्वस्माद् भूलोकात् पर इत्येव। अत एव श्रूयते— "त्रयो वाव लोकाः,— मनुष्यलोकः, पितृलोको देवलोक इति"–इत्यादि शत० ब्रा० १४. ४. ३. ११। अत्र त्रयो वाव लोका इति श्रूयते ह्येवावधारणम्। एव मन्यत्राप— "पृथिवीलोक मेव पुरोऽनुवाकयया जयति, अन्तरिक्षलोकं याज्यया, द्यौर्लोकं शस्यया"–इति ऐ० ब्रा० ६. १. ६। अन्यत्र च— "दक्षिणत उपसृजति, पितृलोक मेव तेन जयति; प्राची मावर्त्तयति, देवलोक मेव तेन जयति; उदीची माप्लव्य दोग्धि, मनुष्यलोक मेव तेन जयति"–इति ते० ब्रा० २. १. ८. १।

यत्रास्तु श्रुतिपूपान्तः श्रूयते पितृलोकः, स त्वन्तरिक्षलोकस्योपलक्षकः; अन्तरिक्षस्य एव हि पितृलोकः; पितृलोकमात्रस्यातात्मव्यस्थानं न सर्व मेवान्तरिक्ष मिति। तदप्याम्नातम्—

"अभिप्रेहि मध्यतो माप हास्थाः पितॄणां लोकं प्रथमो यो अत्र"

–इत्याथर्वणिकैर्मन्त्रे (१८. ४. ७३.)। अपरत्राप्यवाम्नातम्—"अथ इव हि पितृलोकः"–इति (श० ब्रा० १४. ६. १. १०)। द्युलोकस्याधस्तात् पितृलोक इत्येव तद्भावः। पुण्यलोकशब्देनाप्यन्तरिक्षस्थस्य पितृलोकस्य ग्रहणं गम्यते। तद्यथा—"तस्मादाहुः पुण्यलोक ईयान इति"–इति श० ब्रा० ३. ६. २. १५। ताण्ड्यमहाब्राह्मणेऽपि (१२. ११, १२.) द्रष्टव्य मिदम्। "कर्मणा पितृलोकः" –इति (श० ब्रा० १४. ४. ३. २४.) श्रुतेस्तत्रैव हि पुण्यात्मनां गमनं भवतीति पितृलोक एव स्यात् पुण्यलोकः। श्रूयते हि छान्दोग्यब्राह्मणे— "त्रयो धर्मस्कन्धाः,— यज्ञोऽध्ययनं दान मिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्याचार्यकुलवासो तृतीयः। ०—०। सर्व एते पुण्यलोका भवन्ति; ब्रह्मसंस्थोऽमृतत्व मेति" –इति (४. २३. १.)। तदेतत्त्रिविधपुण्यानुष्ठातॄणां पुण्यलोकापरपर्याये पितृलोके स्थानं भवति, ये तु ब्रह्मज्ञास्ते त्वमृतत्वलाभाय पूर्वनिर्दिष्ट ममृतलोकं यान्तीति तदभिप्रायः।

सोऽन्तरिक्षस्थः पितृलोको नूनं सोमलोकः, स एव चन्द्रलोकः। तथाहि— "स सोमलोकं, सोमलोके विभूति मनुभूय पुनरावर्त्तते"–इति प्र० उ० ५. ४। यः सोमः, स एव चन्द्रमाः। तथाहि यज० सं० ११. ६. ७—

"सोमो मा देवो मुञ्चतु य माहुश्चन्द्रमा इति"–इति।

अपि शतपथे—"पितृलोकाज्जीवलोक मभ्यायन्ति; पयोऽग्निः पयोऽतियोढा, स एतानतिवहति"–इति (१३. ८. ४. ६.) तदेवं पितृलोकसोमलोकायोभयतः पुनरावर्त्तनश्रुतिसाम्यादुभयोरभिन्नत्वं युज्यतम्। अथवा चन्द्रलोकात् किञ्चिदूर्ध्वं स्थितः

पितृलोकः ; तत एव "अथेनं पितरः प्राचीनावीतिनः सव्यं जान्वा-च्योपासीदंस्तानब्रवीत् ,— मासि मासि वोऽशनं स्वधा वो मनो-जवो वश्चन्द्रमा वो ज्योतिरिति"–इति ( २. ४. २. २. ) शत-पथश्रुतिः। अत एव चन्द्रमसः कृष्णशुक्लपक्षावेव पितॄणा महो-रात्राविति सिद्धान्तितम्। तथाम्नातं शतपथे — "यदेवैभ्यः ( चन्द्रः ) न पुरस्तान्न पश्चाद् ददात्येऽथैभ्यो ( पितृभ्यः ) ददाति ; स वा अपराह्णे ददाति। पूर्वाह्णो वै देवानां मध्यन्दिनो मनु-ष्याणा मपराह्णः पितॄणाम् , तस्मादपराह्णे ददाति"–इत्यादि श० ब्रा० २, ४, २, ७, )। मनुसंहितायाञ्च ( १, ६. ३, )—

"पित्रे रात्र्यहनी मासः प्रविभागस्तु पक्षयोः।
कर्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्वरी"–इति।
"मानेनानेन यो मासः पक्षद्वयसमन्वितः।
पितॄणां तदहोरात्र मिति कालविदो विदुः॥
कृष्णपक्षस्त्वहस्तेषां शुक्लपक्षस्तु शर्वरी।
कृष्णपक्षे त्वहःस्याद्' पितॄणां वर्त्तते नृप!"–इति (ह० वं० ८,)।

ज्योतिःशास्त्रेऽप्युक्त मेव मेव। तथा च सि० शि०—

"विधूर्द्ध्वभागे पितरो वसन्तः स्वाधः सुधानिधि मामनन्ति।
पश्यन्ति तेऽर्कं निजमस्तकोर्द्ध्वे दर्शे यतोऽस्माद् द्युदलं तदेषाम्।
भार्द्धान्तरत्वात् विधोरधःस्थं तथाविनोर्थः खलु पौर्णमास्याम्।
कृष्णे रविः पक्षदलेऽभ्युदेति शुक्लेऽस्त मेत्यर्थत एव सिद्धम्"–इति॥

चन्द्रलोक एव पितृलोक इति पक्षे तत्र विधूर्द्ध्वभागे इति विधु-पृष्ठे बोध्यम् ; यथा वयं भूर्द्धभागे = भूपृष्ठे वसामः , न तु खनिजहिरण्यादिवद् भूगर्भे इत्यभिप्रायः।

नन्वेव मनतिप्राचीनपुराणेतिहासज्योतिषादीन्यनार्षशास्त्राण्यपि

किम्प्रमाणानि ? वेदाविरुद्धानि तान्यपि स्वतोपकाराणि चेत् स्युः' प्रमाणानीत्येवात्र ब्रूमः । अत एवोक्तं मनुना ( २, १२. )— "स्वस्य च प्रिय मात्मनः"–इति, मीमांसाधिकरणमालायाञ्च "तेन ह्यन्तरिते तेषां प्रामाण्यं विप्रकृष्टतः"–इत्येवोक्तम् । एव मपि यत् श्रूयते ऽन्यत्र "पितृलोकाच्चन्द्रम्"–इति ( श॰ ब्रा॰ १४. ८. १. १०. ), पितृलोकचन्द्रलोकयोरेकत्वपक्षे तदेतत् कथं सङ्गच्छते ? इति, अत्र ब्रूमः— 'पितृलोकात्' पितृलोक मन्तरिक्षं चन्द्रमण्डलं वा अभिगम्य 'चन्द्रम्' आप्नुवन्तीति तदर्थः ; अन्यथा २०६पृ॰-प्रदर्शिता-थर्वणिकप्रश्नश्रुतिविरोधः स्यादनिवार्य एवेति । तस्मादेतस्याश्चो-पपद्यतेऽस्य चन्द्रलोकोर्ध्वदेशस्थपितृलोकस्यान्तरिक्षस्थत्वेनान्तरिक्ष-वाचितापीति ।

अस्ति चास्यान्तरिक्षवाचित्वेऽपरोऽपि हेतुः । स एषः— "पिता दुहितुर्गर्भ माधात् ( ऋ॰ सं॰ १. १६४. ३३. )"–इति-मन्त्रांशव्याख्यानकाले यास्काचार्य आह— "पिता दुहितुर्गर्भं दधाति, पर्जन्यः पृथिव्याः"–इति ( निरु॰ ४. ३. ५. ) । पर्जन्य-शब्दनिरुक्तिरेवं कृता— "पर्जन्यस्तृपेराद्यन्तविपरीतस्य, तर्पयिता जन्यः; परो जेता वा; जनयिता वा, प्रार्जयिता वा रसाना मिति" –इति (१०. १. १०.), अध्या इति तच्छेषः । तद्रसार्जनन्तु भवति रश्मिभिरेव । तथाचाम्नातं वृष्टिविज्ञानसूक्ते ऋ॰ सं॰ १. १६४. ४७—

"कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिव मुत्पतन्ति ।
त आववृत्रन्त्सदनादृतस्य आदिद् घृतेन पृथिवी व्युद्यते"–इति ।

"कृष्णं" ( 'नियानं' ) निरयणं, रात्रिः । आदित्यस्य 'हरयः सुपर्णाः' आदित्यरश्मयः । 'ते' यदा ( 'आ ववृत्रन्' ) अमुतोऽर्वाञ्चः पर्यावर्त्तन्ते ( 'सदनात्' ) महस्थानात् ( 'ऋतस्य' )

मुद्रकस्य 'आदित्' अनन्तर मेव 'घृतेन' उदकेन 'पृथिवी व्युद्यते'। "घृत मित्युदकनाम ; जिघर्त्तेः सिञ्चतिकर्म्मणः"—इति (७.७.१.) चास्य यास्ककृतं व्याख्यानम्। ब्राह्मणेऽप्येव मेव। तद्यथा— "अग्निर्वा इतो वृष्टिं समीरयति धामच्छद्द् दिवि भूत्वा वर्षति, मरुतः सृष्टां वृष्टिं नयन्ति यदासावादित्योऽर्म्मिं रश्मिभिः पर्य्यावर्त्ततेऽथ वर्षति"—इति (निरु० ७.७.१.)। मन्त्रे 'दिवम्' द्युलोकं प्रति 'उत्पतन्ति' उड्डीना भवन्ति, तावद्दूरगमनात् पूर्व मेव 'ऋतस्य सदनात्' मेघनिर्म्माणार्थाहृतजलराशयप्रदेशात् अन्तरिक्षात्, तं लोकं प्राप्यैवेति यावत्। ब्राह्मणे त्विह द्युशब्द उर्द्धोपलक्षकः। तथाच 'दिवि भूत्वा वर्षति' ऊर्द्धं आकाशो भूत्वा वर्षतीति तदर्थः ; अथवा इहापि पूर्ववदाकाशेऽरम् 'दिवि भूत्वा' द्युलोकमप्राप्तः सन्निति यावत्। तदेवं पितृवाचकपर्जन्यस्यान्तरिक्षस्थत्वात् सर्वस्यैवान्तरिक्षस्य पितृलोकत्वम्।

सोऽय मन्तरिक्षलोको द्युलोकादधस्थोऽप्येतस्मात्मनुष्यलोकादूर्द्ध्वस्थस्ततो मध्यलोक एव। एतदाम्नायते— "अन्तरिक्षलोक उ अन्नाल्लोकादनन्तर्हितः"—इति (श० ब्रा० ७.१.२.२३.)। यस्मिंश्च लोके प्रतिष्ठितोऽयं पितृलोकः, सोऽन्तरिक्षलोक एवेन्द्रलोकः ; तत्रैव मेघदारकवायोरिन्द्रस्य संस्थितेः। तदुक्तम्— "इन्द्रलोको वैषः"—इति (श० ब्रा० ८.५.३.८.)। वायुलोकोऽपि स एव ; वायोरन्तरिक्षचारित्वं तु लोकेषु प्रसिद्धम्, "वायुरन्तरिक्षस्थः"—इत्यादिनैरुक्तादिभ्यश्चावगम्यते, तथा श्रूयते च साङ्ख्यायनब्राह्मणे (२०.१.)। एतदेवान्तरिक्षं सन्ध्य मिति स्वप्नस्थान मिति च श्रुतम्— "तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानञ्च, सन्ध्यं तृतीयं स्वप्नस्थानम्, तस्मिन् सन्ध्ये स्थाने

तिष्ठन्नुभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च"–इति श॰ ब्रा॰ १४. ७. १. ८। एवञ्च जीवलोकादस्मात् प्रेतानां परलोकजिगमिषूणा मिहान्तरिक्षलोके किञ्चित्कालं स्वप्नावस्थानं सूचितम्; यैस्तु पितृलोक आप्तव्यः, तेषा मिह स्वप्नावस्थानं न भवतीति च।

भूलोकस्यास्य तु मन्त्रवर्णात् त्रित्व मप्यवगम्यते। तद्यथा ऋ॰ सं॰ ७.१०४. ११—

"परः सो अस्तु तन्वा॒ तना च तिस्रः पृथिवीरधो अस्तु विश्वाः।
प्रति शुष्यतु यशो अस्य देवा यो नो दिवा दिप्सति यश्च नक्तम्"

–इति। 'यः' 'नः' अस्मभ्यं 'दिवा' दिनं 'दिप्सति' करोति, 'यः' 'नक्तं च' दिप्सति; 'सः' सूर्यो देवः, 'तन्वा' स्वशरीरेण, 'परः' द्युस्थः 'अस्तु' अस्ति, 'च' अपि 'तना' स्वप्रभाविस्तृत्या 'अधः' स्थिताः 'तिस्रः पृथिवीः', ता एव 'विश्वाः' सर्वा भूलोकाः आक्रम्य 'अस्तु' अस्ति। 'अस्य' देवस्य 'यशः' कीर्त्तिं 'देवाः' तद्रश्मय एव 'प्रति शुष्यतु' प्रतिक्षणं शोषयन्ति, तद्रश्मिभिरेवेदं सर्वं सम्पद्यत इति तद्यशस्त एव हरन्तीति भावः।

सूर्याधःस्थितास्तायेमा पृथिव्यो नूनं क्रमादधोधःस्थिताः बुधशुक्रराहवः। इयं पृथिव्येव राहुरुच्यते। तथाम्नात मृक्संहितायाम् ५. ४०. ८—

"यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः।
अत्रय स्तमन्वविन्दन् नह्य१न्ये अशक्नुवन्"–इति।

तैत्तिरीया अपि समामनन्ति— "स्वर्भानुरासुरस्तमसाविध्यत्"–इति (२. १. २. ४.)। "स्वर्भानुरिति आसुरस्य कस्य चिन्नामधेयम् [ अपपाठ मिदम् ]। स्वर्गलोकगतां प्रभां नुदतीति स्वर्भानुः। स च पृथिव्या रूपं एव [ पृथिव्येवाम्नाय-

मूलम् ] कृष्णवर्णः । पृथिव्याश्च कृष्णरूपत्वं लोके बहुलं दृश्यते ; छन्दोगाश्च "यत् कृष्णं तदन्नस्य"—इत्यन्नकारणभूतायाः पृथिव्याः कृष्णरूपत्व मामनन्ति ( ६. ४. २. )। अतस्तमःपुञ्जरूपः स आसुरः [ असुः प्राणः ; स विद्यतेऽस्येति असुरः प्राणी ; असुरस्याय मिति आसुरः, प्राण्याश्रयो भूलोकः ] स्वकीयेन तमसा [ तमोरूप-च्छायया] सूर्य माच्छाद्य जगदान्ध्यं कृतवान्"—इति तत्र सायणीयं भाष्यम्। अतएवोक्तं सूर्यसिद्धान्ते ( २अ० ६श्लो० )

"दक्षिणोत्तरतो ऽप्येवं पातो राहुः स्वरंहसा ।
विक्षिपत्येष विक्षेपं चन्द्रादीना मपक्रमात्"—इति ।

"पातस्थानाधिष्ठात्री देवता राहुर्जीवविशेषः"—इत्यादि यद्व्याख्यात मिह रङ्गनाथेन, तत्तु नूनं वेदविदुषां हास्यकर मेव। दृश्यतेऽपि मनुष्यमुण्डसदृश्येव राहुप्रतिमा निर्मीयते पौराणिकै-राधुनिकज्यौतिषिकैश्च। तदित्थं सूर्यस्याधस्तो बुध एव प्रथमो भूलोकः, तदधस्तः शुक्रः खलु द्वितीयो भूलोकः, तदधस्थिता इयं पृथिव्येव तृतीया भूरूपा ;—इमा एव तिस्रः पृथिव्य स्त्रयो भूलोकाः। अतएव यूरोपीयज्यौतिषिकैरप्येमे ( Terrestrial planets ) पार्थिवपदा उच्यन्ते।

एतेषां लोकानां येऽन्तरालप्रदेशास्तेषां समुदितानां मेकरूपाणा मेकं नामान्तरिक्ष मिति। तदस्यान्तरिक्षव्याप्तस्य त्रित्वश्रवणम्, अस्ति ह्यत एव दिवस्त्रित्वश्रुतिश्च। तथाहि श्लोकत्रिष्वेव मन्त्रे लोक-त्रयाणां प्रत्येकस्य त्रित्व माम्नायते ( ऋ० सं० ४. ५३. ५. )— "त्रि रन्तरिक्षं सविता महित्वना त्री रजांसि परिभूस्त्रीणि रोचना। तिस्रो दिवः पृथिवीस्तिस्र इन्वति त्रिभिर्व्रतैरभि नो रक्षति त्मना" —इति। तदत्र श्रुतं सर्वत्रित्वं पृथिवीत्रित्वनिबन्धन मेवेति प्रतीयते

स्फुटम्; अर्थोऽप्यस्य मन्त्रस्य निगदसिद्ध एवेति। षट्त्वमपि श्रूयतेऽस्याः पृथिव्याः। तद्यथा अ० सं० १०.७.३५—

"स्कम्भो दाधार द्यावापृथिवी उभे
इमे स्कम्भो दाधारोर्वन्तरिक्षम्।
स्कम्भो दाधार प्रदिशः षडुर्वीः
स्कम्भ इदं विश्वं भुवन माविवेश"-इति।

आसु षट्सूर्वीषु सूर्यस्याधःस्थितास्तिस्रस्तिस्रस्तूपरिस्थाः। अत एव पूर्वप्रदर्शितमन्त्रे श्रुतम् "तिस्रः पृथिवीरधो अस्य विश्वाः" -इति (२१०पृ० ७पं०)। श्रूयते चान्यत्र (१०. १४. १६.)—

"त्रिकद्रुकेभिः पतति षडुर्वीरेक मिदं बृहत्।
त्रिष्टुब् गायत्री छन्दांसि सर्वा ता यम आहिताः"-इति।

त्रिष्टुबिति गायत्रीति चेह लुप्तोपमानं पदद्वयम्। 'त्रिष्टुप्' यथा त्रिभिस्त्रिष्टुब्लक्षणैः पदैर्युक्तेति व्यपदिष्टापि वस्तुतस्तिस्रः, यथा च त्रिपदा 'गायत्री', उभे च मिलितास्तत्वतः षट् 'छन्दांसि' ता इव इमा अपि 'षट्' 'उर्व्यः' पृथिव्यः 'त्रिकद्रुकेभिः' त्रिश इति यावत् (सूर्यस्योपर्यधश्च) 'पतति' विभिद्य, स्वस्वकक्षासु भ्रमति। किम्भ्रमतीत्याह— 'बृहत्' महाकारम् 'इदं' षडुर्वीभ्यः समानं दृश्यमानम् 'एकम्' एव सूर्यम्। अत आह मन्त्रदृक् 'सर्वाः ताः' षडुर्व्यः 'यमे' सर्वनियमनकर्त्तरि अतएव यमनामकेऽस्मिन् यामी तदुपलक्षितेऽन्तरिक्षे 'आहिताः' स्थापिताः, सन्तीति शेषः। अतएवैव मित्तिरेये वर्णितम्— "तस्य ये देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैरवस्तात् प्रत्युत्तम्भुवन्। ०—०। तस्य पराचोऽतिपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैः परस्तात् प्रत्युत्तम्भुवन्। ०—०। मेषु वा एष एतदा-

दित्यस्तपति। स वा एष उत्तरोऽस्मात् सर्वस्मात् भूताद् भविष्यतः। सर्व मेवेद मतिरोचते यदिदं किञ्च"–इति (४. ३. ४.)। "उत्तरः = उद्धततरो भवति"–इति च नैरुक्तम् (२. ३. २.)। "विश्वस्मादिन्द्र उत्तरः"–इति त्वेकस्मिन्नेव सूक्ते त्रयोविंशतिवारं श्रुतम् (ऋ० सं० १०. ८६. १—२३.)। इन्द्रश्चायं सूर्यपरोऽप्यस्तीति पूर्व मुपपादित मपि दार्ढ्याय पुनरुच्यते— "एष वा इन्द्रो य एष तपति"–इति श० ब्रा० २. ३. १५। "विश्वस्मादिन्द्र उत्तरः"–इत्येतन्मन्त्रभागव्याख्यानायैव यास्कोऽप्याह— "सर्वस्माद् य इन्द्र उत्तरस्त मेतद् ब्रूम आदित्यम्"–इति (१२. ३. ८.)। एवञ्च यथा सूर्यस्याधोऽधः क्रमात् बुध-शुक्र-राहुकक्षाणां स्थिति प्रतिपादिता, तथैव तस्योपर्युपरि च क्रमादस्ति मङ्गल बृहस्पति शनैश्चरकक्षाणां संस्थितिः। षड् एवैते भूलोकाः, ततोऽत्र षट्स्वेव प्राणिनः सन्तीति च गम्यते। एभ्यः षड्भ्य एव भूलोकेभ्यः ऊर्ध्व मादित्यस्तपति। एकस्यास्यैव सूर्यस्य रश्मिभिः षडेवेमे आबद्धाः भ्रमणशीलाः, प्रकाशमानाः, सृष्टिस्थितिप्रलयहेतुवायुविद्युद्वृष्ट्यादिमन्तश्चेत्यपि। चन्द्रः पृथिव्या उपग्रह इति पृथिवीप्रकरणेनैव तन्नूर्णं सिद्धम्; स्वस्वोपग्रहसहितानामेव शनैश्चरादिराह्वन्तानां ग्रहाणा मिह पृथिवीत्वेन परिगणन मिष्ट मित्येवास्याः पृथिव्या उपग्रहस्यैतस्य चन्द्रमसो न खलु पृथग् ग्रहत्व मिति सुप्रत्येतव्य मेव।

एषां तु सर्वेषां शनिगुरुकुजसूर्यबुधशुक्रराहूणां सप्तानां स्वर्गत्वेन स्तुतिरपि श्रूयते ब्राह्मणेषु। तद्यथा— "रोहति सप्त स्वर्गान् लोकान् य एवं वेद"–इति (ऐ० ब्रा० ५. २. ५.), "सप्त देवलोकाः"–इति च (ऐ० ब्रा० ४. २. ३.)। सर्व मेतदेवोपपद्यते 'देवानां' रश्मिनां सर्वत्रैव विद्यमानत्वादिति।

यद्यप्येषु सप्तसु सूर्यस्त्वेकः स्थिर इति श्रुतित एव प्रतिपादितं पुरस्तात् (१०८पृ०), तथाप्यस्य सर्वग्रहोपग्रहसमन्वितस्य सौरजगन्मण्डलाधिपस्यापि ध्रुवाद्याकर्षणबलेन भ्रमणं सम्भाव्यते ; सामवेदे "द्यौर्नौस्तस्या असावादित्य ईयते"—इत्यादिश्रवणात् (आर० गा० ६, २, २१)। वस्तुतः सौरजगन्मण्डलस्थितानां अस्मदादीनां दृष्ट्या सूर्यस्य गतिराहित्येऽपि सौरजगन्मण्डलस्य न तथात्व मिति सिद्धान्तः। अतः सर्वतोऽधिकविस्तृता भवत्यस्य कक्षा (भ्रमणमार्गः), ततो न्यूना शनैश्वरस्य, ततो न्यूना जीवस्य, ततो न्यूना मङ्गलस्य, ततो न्यूना राहोः (पृथिव्याः), ततो न्यूना शुक्रस्य, बुधस्य तु ततोऽपि न्यूनेति। अत इदं श्रूयते— "परो वरीयांसो वा इमे लोका अर्वागंहीयांसः"—इति (ऐ० ब्रा० १. ४. ८.)॥

चन्द्रकक्षा तु न सूर्यप्रक्रमणपरा, अपि त्वेतत्पृथिवीप्रक्रमणपरेति नात्र तस्याः ग्रहण मिष्टम्। किन्तु चन्द्रग्रहस्य पितृलोकत्वेन स्वीकारात, पितृणाञ्च स्वर्भोगाय तत्र गमनश्रवणाच्च तस्यापि स्वर्गत्वं मन्यते ब्राह्मणकारैः। तथाहि "तद्य ये ह वै तदिष्टापूर्ते कृत मित्युपासते। ते चान्द्रमस मेव लोक मभि जयन्ते"—इति प्र० उ० १, ९। शतपथे ऽप्येवम् (१४, ९, १, १८.), छान्दोग्ये ऽप्येव मेव (५, १०.)। वेदान्तसूत्रेष्वपीदं बहु विचारितम् (३. १. २२—२७.)। तदीयन्यायमालाया मपीह कतिचिदधिकरणान्यारचितानि (३अ० १पा०)। तत्रैक मिदम्—

"चन्द्रं याति न वा पापी ? 'न मर्त्ये' ..।
अचमाहुतिनाभावे भोगाभावेऽपि
भोगार्थं मेव गमन मनुश्रुतिर्श्रु-
पर्श्रुतिः मुक्तः

—इति वे॰ न्या॰ ३. १. २ अधि॰। अपि चन्द्रगतानां सुकृतिनां सूक्ष्मभोगपरिवमियोग्यवचित्तत्वाच्चन्द्रलोके विद्युद्वृष्टिजलान्नौषधितरुलतागुल्मादीनां नास्त्येव किञ्चित् प्रयोजन मिति तेषा मभाव एव। तस्माच्छ्रूयत एतत् ( ऋ॰ सं॰ १. १६४. ५१ )—

"भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः"—इति। तथाच यथास्मच्छरीररचनाय अन्नपानीयाद्युत्पत्त्यर्थं वृष्ट्यादीनां प्रयोजन मस्ति, न तथा तत्रत्यानाम्; किन्तु तत्राप्यस्ति रश्मिरूपाग्नीनां प्रयोजन मिति, तेषा मभावः खलु तत्रापि विश्रुत एव। "अत्राह गोरमन्वत"—इति ( ऋ॰ सं॰ १, ८५. १. ) श्रुतौ अन्यत्रान्यत्र चानेकत्र तत् स्पष्टम्।

ननु तत्र 'दिवं जिन्वन्त्यग्नयः'—इत्युक्तम्, न हि चन्द्रमा द्यौर्द्युस्थो वेति तत् कथ मिह सा श्रुतिरुपपद्येत नामेति। अत्र ब्रूमः—एतादृशश्रुतिषु श्रुतो द्युशब्दो नून मन्तरिक्षलोकस्योपलक्षकः, अत एवाग्निधूमस्यापि द्युलोकाश्रयत्वं श्रुतम्— "घृतेन त्वावर्धयन्नग्न आहुत धूमस्ते केतुरभवत् दिवि श्रितः"—इति ( ऋ॰ सं॰ ५. ११. ३. )। न ह्यग्निधूमो दिवं यातीति। "दिवि सोमो अधिश्रितः"—इत्यत्राप्येव मेवावगन्तव्य मस्ति ( ऋ॰ सं॰ १०. ८५. १. )। तत्रतः "चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि ( वा॰ सं॰ ३३. ९०. )"—इत्येवमादिश्रुतिभ्यः 'सुपर्णस्य' सूर्यस्य द्युस्थत्वम्, तदधः 'अप्सु' अन्तरिक्षे चन्द्रमसः स्थान मित्येव ध्रुवम्।

अथाप्यस्य चन्द्रमसोऽपि स्वर्गत्व मुररीकार्य मेव। अत एव "सहस्राश्वीने वा इतः स्वर्गो लोक"—इति ( ३. २. ७. ) ऐतरेयश्रुतं सङ्गच्छते। आश्वीनं नामेह मार्गस्य परिमाणम्; एकस्मिन्नहनि यावन्त मध्वान मतिक्रामत्यश्वः, तावानेवाध्वा

घास्वीन इत्युच्यते । तथा च सूत्रयदाचार्यः पाणिनिः — "यत्त-श्चैकाहगमः"—इति (५. १. ११.)। यथा द्वाह्निकं सार्द्धदियोजनगमनं सुकरं मनुष्याणाम्, तथैव षड्योजनगमन मश्वाना मिति लोकप्रसिद्ध मेव; एवञ्चैतो भूलोकात् षट्सहस्रयोजनदूरे स्वर्गस्थितिरभिप्रेतास्य श्रुतिकृत इति स्पष्टम्। स्वीकुर्वन्ति चास्मन्मतीतिपिका षष्ठ्येव मितो दूरत्वं चन्द्रमःकक्षाया इति सर्वं मवदातम् ॥

यथैव यच्छ्रूयते— "नव स्वर्गा लोकाः"—इति (४. ३. २.), तदेतत् शारीरमवप्राणाभिप्रायेणैव । एवं यदपि श्रुतम् "त्रय इम ऊर्ध्वा एकविंशा लोकाः, एकविंशत्यैवेमांल्लोकान् रोहति, स्वर्ग एव लोके चतुष्षष्ठितमेन प्रतितिष्ठति"—इति (ऐ० ब्रा० १. १. ५.), तदेतच्च स्यात् विभिन्नाभिप्रायमूलकम्। एवमादिश्रुतिवचनानां तात्पर्यादिकं वेदार्थचिन्तनपरैर्विद्वद्भिः स्वविज्ञानसाहाय्यादिभिः स्वय मेवोहनीयम्। "बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति"—इति (७. ७. २.) नैरुक्तं वा स्यात् तेषां शरणम् ॥

वस्तुतः सूर्यलोक एवैको मुख्यः स्वर्गो लोकः सर्वमन्त्रसंहितासम्मतः। तथाहाम्नात एष मन्त्रः सर्वशाखासु—

"उद् वयं तमसस्परि ज्योतिः पश्यन्त उत्तरम्।
देवं देवत्रा सूर्य मगन्म ज्योतिरुत्तमम्"—इति ऋ० शा० १. ५०. १०।

"उद् वयं तमसस्परि स्वः पश्यन्त उत्तरम्"—इत्यादि मा० शा० २०. २१; २७. १०; ३५. १४; ३८. २४।

"उद् वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम्।
देवं देवत्रा सूर्य मगन्म ज्योतिरुत्तमम्"—इति तै०शा०५. १. ७.१०।

"उद्वयाम्। तमसस्पारी२। ज्योतिःपश्यन्तउत्तरा२म्।
स्वः पश्यन्तउत्तरा२म्। देवन्देवत्रा२ सू२३४रीम्।

.- मगन्म ज्योतिरुत्तमा२म्"—इति सा० सं० आरण्यसाम।

"उद् वयं तमसस्परि रोहन्तो नाक मुत्तरम्।
देवं देवत्रा सूर्यं मगन्म ज्योतिरुत्तमम्"—इति यजु०/सं० ७.५३.७।

एवमादिश्रुतिषु उत्तरशब्दस्य स्वर्गवाचकस्तरादिशब्दविशेषणत्वेन श्रुतत्वात् अस्याः पृथिव्या अप्युत्तरो भागः स्वर्ग इति व्यपदिष्टः। तत्र श्रूयते "उत्तरो वा असावस्यै"—इति श० ब्रा० ८. ६. १. १४.। 'असौ' स्वर्गः, 'अस्यै' अस्याः पृथिव्याः 'उत्तरो वै' इति तदर्थः। अस्या इति पञ्चम्यर्थे चतुर्थी (पा० २. ३. ४२ सू०१ वा०)। आह च "स उत्तरस्मादधरं समुद्रम् ( ऋ० सं० १०. ९८, ५. )"—इति-मन्त्रभागस्य व्याख्याया यास्कः— "उत्तरः= उद्धततरो भवति, अधरः= अधो रः, अधः= न धावतीति, ऊर्ध्वगतिः प्रतिषिद्धा"—इति (२. ३. १.)। तस्मात् पृथिव्याश्च ऊर्ध्वोऽयं स्वर्गः, तद्विपरीतोऽधःप्रदेशो नरक इति चाभवत् सिद्धान्तः। पृथिव्याः सर्वोर्ध्वप्रदेशः सुमेरु, सर्वाधःप्रदेशः कुमेरु रिति च सर्वज्योतिषशास्त्रप्रसिद्ध.। तत एव सुमेरोः पुण्यात्मनिलयत्वम्, तथा कुमेरोः पापात्मालयत्वं च वर्णित मनेकत्र।

उत्तरदिङ्नामबीज मपीद मेव। पृथिव्येषा सदैव सूर्याभिमुखीत्यस्याः पुरतः सूर्यः सदैव राजते, तत एवैषा दिक् पुर इत्युच्यते, प्राचीति च। सतत सूर्याभिमुखं बभ्रमन्त्या अस्याः पश्चाद्भाग एव पश्चिमा, प्रतीचीति च। अस्याः खलु यस्यां दिशि शिरोव्यपदेशभाक् सुमेरुप्रदेशो विद्यते, सा ऊर्ध्वतमेति उत्तरा, उदीचीति च। यस्यान्तु पादतलभूत इति पातालव्यपदेशभाक् कुमेरुप्रदेशः, सैवाधोऽधरा, अवाची, दक्षिणेति च। तत्राधोभुवनरूपे कुमेरुप्रदेशे समुद्रोदकप्राचुर्यादीश्वराधीनप्रकृतिनियमाद्रक्षितैव वाडवा-

मला: प्रज्वलन्तीति तदवान्तरा दिक् आग्नेयीत्युच्यते। त एव वाड-वाग्नय: पापिनां दमनाय दहनकुण्डान्याख्यायन्ते ; अत: स एवास्य: पापलोक: । तत्र चाग्नेः प्राधान्य मिति स एव प्रदेशो यमलोक: ॥

सोऽयं लोक एव प्रथमो यमलोकः , एष पृथिवी-देवो ऽग्नि-रेवात्र यमो नाम। तदिदं श्रूयते— "अग्निर्वाव यमः, इयं यमी"–इति तै० सं० २. ३. ८. ३ ; म० ब्रा० ७. २. १. १० । इय मिह पृथिवी ।

एतावेव यमीयमाववलम्ब्य यमयमीसंवादरूपं यत् सूक्त माम्नात मार्चाभ्याम्नाये ( १०. १०. ) , तस्य समन्येषा—

"यमस्य मा यम्यं१ काम आग-
न्समाने योनौ सह शेय्याय ।
जायेव पत्ये तन्वं रिरिच्यां
वि चिद् वृहेव रथ्येव चक्रा"–इति ।

अन्तरिक्षलोकस्तु द्वितीयो यमलोकः , अन्तरिक्षदेवो वायु-रेवात्र यमो नाम। तथा ह्येष आम्नातो यमशब्दो निघण्टौ मध्यस्थानदेवतासु (५. ४. १२.)। व्याख्यातश्चैतद् यमपदम् "यमो यच्छतीति सतः"–इति यास्केन ( १०. २. ७. )। उदी-रता मिति पितृसूक्तगतमन्त्रस्य व्याख्यानकाले व्यक्त मुक्तश्चैतत्तेन— "माध्यमिको यम इत्याहु."–इति ( ११. २. ६. )। स एव यमो जनाना सङ्गमनो वायुरेव। तथाहि ऋ० सं० १० १४. १—

"परेयिवासं प्रवतो महीरनु
बहुभ्य: पन्था मनुपस्पशानम् ।
वैवस्वतं सङ्गमनं जनानां
यमं राजानं हविषा दुवस्य"–इति ।

"यो ममार प्रथमो मर्त्यानां
यः प्रेयाय प्रथमो लोक मेतम् ।
वैवस्वतं सङ्गमनं जनानां
यमं राजानं हविषा सपर्यत"
—इति च अथ० सं० १८. ३, १३ ।

विवस्वान् सविता आदित्यः ; तत्प्रसूत एव वायुर्यातीति वायोर्वैवस्वतत्वम् । तथाह्येवैष— "सवितृप्रसूतो ह्येष एतत् पवते" —इति ( १. २, १. ) । यथेहत्यानां मनुष्याणां राजा अग्निर्नाम यमः, तथैवान्तरिक्ष्याणामिति माध्यमिक एव यमो पितृराडित्युच्यते ।

अथैतत्सूक्तादनन्तरं पितृसूक्त माम्नातम् , तस्यैवादिमैषा—

"उदीरता मवर उत्परास
उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञा-
स्ते नोऽवन्तु पितरो हवेषु"—इति ।

सूर्योऽपि यम उच्यते । अत एव द्युस्थानदेवतास्वपि पठितं यम इति पदम् ( ५. ६. १७. ) । सूर्यपरो निगमश्च यमशब्दस्य प्रदर्शितोऽयं यास्केन ऋ० सं० १०. १३५. १—

"यस्मिन् वृक्षे सुपलाशे देवैः सम्पिबते यमः ।
अत्रा नो विश्पतिः पिता पुराणा अनु वेनति"—इति ।

"सङ्गच्छते यमो रश्मिभिरादित्यः"—इति च निरु० १२. ३. १० । अत एवाथर्वसंहितायां वशादायिनां यमराज्ये यत् सर्वकामावाप्तिफल माम्नातम् , तत् सूर्यलोकरूपप्रधानस्वर्गाद्दतेऽन्यतमे स्वर्गे सम्भाव्यते । तथा ह्यथर्व० ११. ४. ३५—

"सर्वान् कामान् यमराज्ये वशा प्रददुषे दुहे"—इति ॥

अथ तदपरादेवं दयाग्रायेनारीधकारिणां नरकगमनञ्चाम्नातम्—

"अथाहुर्नारकं लोकं निरुन्धानस्य याचिताम्"—इति ।

यमलोकात् पापलोकेषु पतनञ्च श्रुतम् अथ० सं० १२. ५. ६४—

"यथायाद् यमसादनात् पापलोकान् परावतः"—इति ।

लुप्तशाखीयमन्त्रश्चैकः प्रदर्शितोऽत्र यास्केन ( १. २. ६.)—

"हविर्भिरेके स्वरितः सचन्ते
सुन्वन्त एके सवनेषु सोमान् ।
शचीर्मदन्त उत दक्षिणाभि-
र्नेज्जिह्मायन्त्यो नरकं पताम"—इति ।

'एके' ज्ञानिनः 'हविर्भिः' चरुभी हविःप्रक्षेपादिभिर्नित्य-कर्मानुष्ठानमात्रैः 'इतः' अस्माल्लोकात् 'स्वः' स्वर्गं सूर्यलोकं ( ब्रह्मलोकं ) 'सचन्ते' गच्छन्ति ; 'एके' यज्वानः ज्योतिष्टोमादौ 'सवनेषु' प्रातर्माध्यन्दिनतृतीयनामकेषु 'सोमान् सुन्वन्तः', 'इतः स्वः ( चन्द्रलोकं ) सचन्ते' इत्येव; 'उत' अपि 'दक्षिणाभिः' दाक्षिण्यैः 'शचीः' कर्माणि 'मदन्तः' कुर्वन्तः , 'इतः' 'स्वः' इम मेव भूलोकं 'सचन्ते' पुनरावर्त्तन्ते । 'नेत्' नैवं चेत् , 'जिह्मायन्त्यः' जिह्मायन्तः , पापानुष्ठानं कुर्वन्तो 'नरकम् पताम' इति जानीयुरिति। तदेव मन्मार्कं चतुर्थी गतिरत्र निरूपितेति सुव्यक्तम् ।

"नरकं न्यरकं नीचैर्गमनम् , नास्मिन् रमणं स्थानमल्प मप्यस्तीति वा"—इति "पापः पाता पेयानाम् , पापत्यमानो वा, पवाटेव पततीति वा पापत्यतेर्वा स्यात्"—इति च नि० १. २. ६५ १.२. । "नाक आदित्यो भवति ; नेता भासां ज्योतिषांप्रणयः •—• क मिति सुखनाम, तत्प्रतिषिद्धम् , प्रतिषिद्धं प्रतिषिध्येत । "न वा अमुं लोकं जग्मुषे किञ्च नाकम् ( ता० ब्रा० १०. १. १८. ) न

वा यमु गतवते ('किञ्चन भकम्') किञ्चनासुखम्; पुण्यकृतो ह्येव तत्र गच्छन्ति"–इति (२. ४. २.)। "न हि तत्र गताय कस्मैचनाकं भवति"–इति च शत० ब्रा० ८. ४. १. २४। तदेवं यथा सुकृतिनां पुण्यफलपुरस्कारभोगाय भवति स्वर्गगमम्, तथैव पापिनां पापफलोपभोगाय भवत्येव नरकगमनम्॥

अथ यथा पूर्वे (६७ पृ०) सुमेरोः स्वर्गत्वं वर्णितम्, इह च कुमेरोर्निरयत्वम् (२१७पृ०), तथैवायतनार्यावर्त्तस्यास्य पश्चिमोत्तर-भूभागस्य काश्मीरादेः रमणत्वं, ततोऽप्युत्तरस्य हिमवत्पृष्ठस्य-मानससरोवरप्रदेशादेरजीवत्वादिकं ततोऽप्युत्तरस्योत्तरकुरुप्रदेशस्य च स्वर्गत्वमाहुः पौराणिकाः; अथार्यावर्त्तपादतलरूपस्याग्नेय्यां दिशि स्थितस्यातएव पातालस्य प्राग्ज्योतिषाधःप्रदेशस्य नरकत्वम्, तत्प्रदेशाधिपतेर्नरकराजत्वञ्चेति।

तदत्र मानससरोवरादिप्रशंसाकथा त्विह पूर्व मेव वर्णिता (४१, ६७—६८पृ०), रमणनामत एव च तत्प्रदेशस्य रमणीय-त्वेन स्वर्गतुल्यत्वं ज्ञापितं भवति (महा० भी० प० १०८. ६६.), सुमित्रमित्रितस्योत्तरकुरुनाममहाभूभागस्य (शान्तिपितृवर्ग-प्रभृति सुवीर्यान्तस्य) च पुण्यलोकत्वेन महाप्रशंसा कृता यथा—

"अहो सह शरीरेण प्राप्तोऽस्मि परमां गतिम्।

उत्तरान् वा कुरून् पुण्यानथ वाप्यमरावतीम्"–इति,

"नैवेशिकं सर्वगुणोपपन्नं ददाति वै यस्तु नरो द्विजाय।

स्वाध्यायचारित्रगुणान्विताय तस्यापि लोकाः कुरुषूत्तरेषु"

–इति च महा० अनु० ५० ५४. १६, ५७. ३३। एवम्—

"मुरुश्च नरकश्चैव शास्ति यो यवनाधिपः भगदत्तो नरकराट्"–इति (महा० स० प० १४. १५.) प्राग्ज्योतिषप्रदेशस्य नरकत्वञ्च।

अत्र चार्यावर्त्ते गङ्गादिनिम्नगाप्रवाहदर्शनाच्चावगम्यते अत्र-त्योत्तरप्रदेशाना सुबैत्वम्, ब्रह्मपुत्रसङ्गमादिस्थानाना मति-नीचैस्त्वञ्च; आयुराकृतिप्रकृतिबलव्यवहारादिदर्शनतोऽपि प्रतीयते कुरुपाञ्चालादीनां देवत्वं वाङ्गोत्तरवाङ्गादीना मतयात्व मिति।

तत्वतस्तु यथास्यां पृथिव्या मेवान्तरिक्षस्थितिर्द्युस्थितिश्चोप-लभ्यते, यथा चास्मच्छरीरेऽपि त्रिलोकाधिपतिदेवाना मग्निवाय्वा-दित्याना मस्ति विद्यमानतेति त्रिलोकीत्व मस्येषां वक्तुं युज्यते, एव मेव भूर्भुवःस्वरिति त्रयाणा मेव लोकानां प्रीतिहेतुत्वादस्ति स्वर्गत्व मपि, परं तत्राप्यधममध्यमोत्तमभेदो मन्तव्यः; तथा च सूर्यलोकान्तर्ब्रह्मलोक एवोत्तमः स्वर्गः। तदेतदम्नातम्—

"अष्टचक्रा नवद्वारा देवानां पूरयोध्या।

तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषावृतः॥

तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते।

तस्मिन् यद् यक्ष मात्मन्वत् तद् वै ब्रह्मविदो विदुः"

–इति अथ० सं० १०, २, ३१, ३२।

स एषः स्वर्गो दुरारोहः। तथाम्नात मिहैव— "स्वर्गो वै लोको दूरोहणम्"–इति (४, १, ६)। यागादिसाधन मन्तरा न कोऽपि तत्र गन्तुं शक्नोतीति भावः। आम्नायते चेतत्— "स्वर्ग एव तल्लोकं यजमानं गमयति"–इति (४, १, ४)। एवञ्च स्वर्जि-गमिषूणां सौरलोकाद्यन्यतमे स्वर्गे प्रवेशसामर्थ्योपपादन मेवाग्नि-ष्टोमादिफलम्, तदुपदेश एवैतस्य प्रयोजन मिद मिति शम्॥

अथेद मैतरेयालोचन मुपसंहरन्तः किञ्चिद्वदामः। ऐतरेय मालोचयितुं प्रवृत्तैरस्माभिः प्रसङ्गतो बहव एव वैदिकविषयाः समालोचिताः। तदवान्तरसमाजचित्रा अपि लिखिताः

स्युः केचन, मानुषप्रकृतिभ्रमविजृम्भिता अप्यवश्यम्भाविनः सम्भवाः स्युः केचन ; एवमादिषु 'विद्वांसो वै देवाः'–'सत्यसंहिता वै देवाः'–इत्यादिश्रुत्यर्थानुगता देवा एव भवन्तु नः शरणम्। इत्थोक्तेभ्योऽन्येऽपि सन्ति बहवः सत्यसिद्धान्ताः, तेष्वेते विशेषतोऽधिगन्तव्या वेदसत्यार्थजिज्ञासुभिर्यथा—

( १ ) यथा वेदे लेट्लकारस्य प्रयोगो न तु व्यत्ययविशेषः, तथैव अतीतानागतवर्त्तमानकालबोधका लङ्लुङ्लिटः प्रत्यया भवन्ति छान्दसाः, न च ते व्यत्ययत्वेन स्वीकार्य्याः। तथा च यत्र यत्र लङ् लुङ् लिटा मन्यतमस्य प्रयोगः श्रुतः, तत्र सर्वत्रैव सार्वकालिकोऽर्थो बोध्यो भवति प्रायः। अत एव "व्यत्ययो बहुलम्" –इत्यादि (३. १. ८५.) सूत्रजातं विदधतापि भगवता पाणिनिना सूचितम्— "छन्दसि लङ्लुङ्लिटः"–इति (३. ४. ६.)। एवञ्च "यथापूर्व मकल्पयत् ( १०. १९०. १—३. )"–इत्येतस्य 'यथापूर्वम्' पूर्ववदेव 'अकल्पयत्' सदैव कल्पयतीत्येवार्थो मन्तव्यः। एवं हि यथा ह्यः सूर्य्य उदैत्, यथा चाद्य उदेति, तथैव श्वश्च उदेष्यतीतिवत् सदैवैकरूपया सृष्टिक्रियया भवितव्य मिति तन्मन्त्राशयः। एवमेवैवमादिषु सर्वत्रैव लङ्लुङ्लिटां सार्वकालिकोऽर्थो वेदितव्यः॥

( २ ) सृष्टिकथा तु ब्राह्मणग्रन्थेष्वेव बहुधा श्रुता। तत्सर्व मेव कल्पनामूलकं किञ्चिद्विज्ञानज्ञापकं तत्तत्प्रकरणगतोपदेशसाधकञ्च ; यथा पातञ्जले महाभाष्ये सन्ति बहव एव एकदेश्युक्तयस्तथेति। अत एवोक्तं निरुक्तकारैः "बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति"–इति ( ७. ७. २. )। तदिद मार्षाभ्याम्नाये विस्पष्ट माम्नातम् ( १. १६४. ४. )—

"को ददर्श प्रथमं जायमान मस्थन्वन्तं यदनस्था बिभर्त्ति ।
भूम्या असुरसृगात्मा क्वस्वित् को विद्वांस मुपगात् प्रष्टु मेतत्"–इति ॥

( ३ ) कलिरेवाद्यं युगं, द्वापरं द्वितीयं, त्रेता तृतीयं, कृतं नाम चतुर्थम् । क्रमोन्नतितः सम्पद्यन्ते इमानि चत्वारि युगानि । तदत्र द्वापरत्रेतयोः द्वित्रिपदयोः क्रमश्रुतिरपि मानम् । स्मृतचेद-मत्रैवैतरेयके "कलिः शयानो भवति"–इत्यादि ( १०२पृ० ) । अवनतिश्चापि एव मेव भवितव्या ; चक्रनेमिभ्रमणन्यायात् । तथा च कृतादेकपादावनतः काल उच्यते त्रेतेति, ततो द्विपादावनतो द्वापरम्, ततस्त्रिपादावनत एव कलियुग मिति । पुनरेकपादा-द्युन्नत्या द्वापरादीनि युगानि भवन्तीत्येव मेव सदैवावर्त्तन्ते युगानि । एषां चतुर्णा मेव युगानां समुदयकालपरिमाणं दशसहस्र मित्येव । तत्र सहस्राब्दमितं कलियुगम्, द्विसहस्राब्दपरिमितं द्वापरम्, त्रिसहस्राब्दमितं त्रेतानाम, चतुःसहस्राब्दमितं कृतयुग मिति । तदेतदाथर्वणिकाः समामनन्ति ( ८. १. २१. )—

"शतं तेऽयुतं हायनान् द्वे युगे त्रीणि चत्वारि कृण्मः ।
इन्द्राग्नी विश्वे देवास्तेऽनुमन्यन्ता महृणीयमानाः"–इति ।

मनूक्ती सन्ध्यासन्ध्यांशावपि सहस्राब्दान्तर्गतावेव । न हि यदि दण्डात्मकस्याहोरात्रस्य सन्ध्याकालः सन्ध्यांशकालो वा ततोऽति-रिक्तः परिगण्यते । एवं मनुव्याख्याने कुल्लूकभट्टाद्युक्त-दैविकाब्द-स्वीकारोऽपि न विचारसहः ; तत्र सर्वत्रैव मानुषाब्द मनुसृत्यैव विधिविधानप्रतीतेः, इह हि तथैव व्यवहारोपपत्तेश्चेति शम् ॥

काशीधाम । सं० १९६२ । ई० १९०५ ।

प्रणयनः श्रीसत्यव्रतसामश्रमी ।
( 'सामश्रमी', सामगाचार्य्य )